नागोजीभट्टविरचितोद्योतयुतगोविन्दठक्कुरविरचित-
प्रदीपसमेतः

श्रीमम्मटभट्टविरचितः

# काव्यप्रकाशः ।



॥ श्रीः ॥

विद्याभवन प्राच्यविद्या ग्रन्थमाला

५९

नागोजीभट्टविरचितोद्द्योतयुतगोविन्दठक्कुरविरचित-

प्रदीपसमेतः

श्रीमम्मटभट्टविरचितः

# काव्यप्रकाशः ।



एतत्पुस्तकम्

अभ्यंकरोपाह्ववासुदेवशास्त्रिभिः संशोधितम् ।



चौखम्बा विद्याभवन

वाराणसी

# प्रस्तावना.

श्रीमम्मटभट्टप्रणीतः काव्यप्रकाशो नामालंकारशास्त्रीयग्रन्थेषु महानिबन्धोऽन्यान्सर्वानतिशेते । नास्य तुलामन्यः कश्चनाधिरोहतीति सार्वजनीनमेव । अलंकारशास्त्रे चालंकाराणां प्राधान्यात्प्राधान्येन व्यपदेशा भवन्तीति न्यायादलंकारशास्त्रमिति व्यपदेशः । काव्यस्य च याथार्थ्येनावबोधे सत्येव तत्फलीभूतयशोऽर्थकल्याणावाप्तिर्व्यवहारज्ञानमुपदेशलाभः परनिर्वृतिश्च जायते । स च याथार्थ्येनावबोधोऽस्मादेवालंकारशास्त्रात्संपद्यत इति तस्य याथार्थ्येनावबोधाय ध्वनिगुणीभूतव्यङ्ग्यादिभेदा दोषगुणालंकाराश्च विस्तरेणात्र ग्रन्थकृता सम्यक्प्रतिपादिताः । तेषु च तत्त्वतो ज्ञातेषु काव्यं करस्थितामलकवत्स्फुटतरं प्रकाशते । काव्यप्रकाश इति नाम्नाऽप्येतदेव सुव्यक्तं भवति । काव्यज्ञानस्य च शब्दव्यापाराधीनत्वादभिधालक्षणाव्यञ्जनारूपाणां तेषां सम्यङ्निरूपणस्यावश्यकर्तव्यतां मन्यमानेनानेनैव ग्रन्थकृता शब्दव्यापारविचाराभिधेयो ग्रन्थो निरमायि । एतत्प्रतिपादितविषयान्याथार्थ्येनावगच्छतां चेतस्ययं मम्मटः श्रीवाग्देवतावतार इति लौकिकी प्रसिद्धिर्भीमसेनोक्तिश्च सत्यतया पदं दधाति । प्रामाणिकाग्रेसरपदवीमध्यारूढोऽयं महावैयाकरणो मम्मट एकादशशतके स्वजनुषा काश्मीरदेशमलमकार्षीत् ।

टीकाश्चास्य काश्चन मुद्रिताः काश्चनामुद्रिता बह्व्यः सन्ति तथाऽपि ग्रन्थकृतो हृदयं प्रदीपकार एवाऽऽविरकरोत् । एवं वदन्नप्यहं नासत्यभाषणदोषलेशादपि बिभेमि । प्रत्युत प्रदीपमवलोकयतां सहृदयानां चित्त आविर्भूत एवायमर्थो मद्वचसा पुनरुक्तः स्यादिति पुनरुक्तिर्माद्रिरं सिस्पृक्षेत् । प्रदीपकारश्च महानैयायिको गोविन्दठक्कुरश्चतुर्दशे शतके मैथिलदेश आविरभूत् ।

अस्य च प्रदीपस्य टीकाद्वयं नागोजीभट्टविरचित उद्योतो वैद्यनाथकृता प्रभा च । तत्र प्रभा मुद्रितैव । पुस्तकदौर्लभ्यादेतावत्कालपर्यन्तमुद्द्योतो मुद्रणावस्थामप्राप्त इति महता प्रयत्नेन पुस्तकत्रयं संपाद्य यथामति संशोध्य तन्मुद्रणे प्रावर्तिषि । टीकाकाराश्च बहवः सन्ति । तेषां च मूलग्रन्थदुर्बोधस्थले विशदीकरणं मूलग्रन्थस्थसिद्धान्तोपरि समागतानामसत्याक्षेपाणां निराकरणं सत्यानां चाङ्गीकरणमेतत्त्रयमवश्यकर्तव्यम् । तत्र केचित्स्थूलबुद्धयः केवलं टीकाकारशब्दाभिलाषिण उक्तकर्तव्यत्रयं विस्मरन्तो दुर्बोधस्थले सुगममित्युक्तवन्तः सुगमस्थले चाप्रासङ्गिकमपि विचारं स्वपाण्डित्यप्रकाशनाय प्रकाशयन्ति । अभिनिविष्टबुद्धयश्च यथायथं क्वचिदसत्यानप्याक्षेपानङ्गीकुर्वन्तः सत्यानां च निराकरणे प्रयतमाना उपहासपात्रतां भजन्ते । सूक्ष्ममतयश्च पण्डिताः केचिट्टीकाकारा दुर्बोधस्थले ...ं कुर्वन्तोऽप्यभिनिविष्टबुद्धितयाऽन्यत्कर्तव्यद्वयमपश्यन्तो लोकान्भ्रामयन्ति । नागोजी...काकृत्पदमहत्त्वं जानान उक्तकर्तव्यत्रयेऽपि दिव्यचक्षुरभिनिवेशं लेशतोऽप्यस्पृ-

शान्याकरणालंकारधर्ममन्त्रशास्त्रादिषु तांस्तान्मूलग्रन्थांस्तास्ताष्टीकाश्च चकारेति प्रसिद्धमेव । तत्त्वमीश्वरो वेदेति शेखरस्था तदुक्तिरेवात्र साक्षित्वं ददाति । षोडशशतके चायमासी-दिति " शृङ्गवेरपुराधीशाद्रामतो लब्धजीविकः " इति तदुक्त्यैव ज्ञायत इत्यलम् ।

एतन्मुद्रणार्थं च यैर्महाशयैः पुस्तकानि प्रेषितानि तैर्महदुपकृतं मन्ये ।

अभ्यंकरोपाह्ववासुदेवशास्त्री

चैत्रकृ० ११ शके १८३३

———

## आदर्शपुस्तकोल्लेखपत्रिका।

अथ काव्यप्रकाशस्य काव्यप्रदीपस्योद्द्योतस्य च पुस्तकानि यैः परहितैकपरतया संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च प्रकाश्यन्ते—

### तत्र काव्यप्रकाशपुस्तकेषु—

( क. ) इति संज्ञितम्—सप्तर्षिग्रामस्थ वे० शा० रघुनाथशास्त्री अभ्यंकर इत्येतेभ्यो लब्धम्।

(ख. ग.) इति संज्ञितम्—दक्षिणापथवर्तिविद्यालयस्थग्रन्थसंग्रहालयाल्लब्धम्।

### काव्यप्रदीपपुस्तकेषु—

( क. ) इति संज्ञितम्—मुम्बापुर्यां मुद्रितम्।

( ख. ) इति संज्ञितम्—दक्षिणापथवर्तिविद्यालयस्थग्रन्थसंग्रहालयाल्लब्धम्।

( घ. ) इति संज्ञितम्—रा० वासुदेव गोपाळ सहस्रबुद्धे इत्येतेभ्यो लब्धम्।

### उद्द्योतपुस्तकेषु—

( क. ) इति संज्ञितम्—संकेश्वरग्रामस्थश्रीमच्छंकराचार्यग्रन्थसंग्रहालया-ल्लब्धम्।

( ख. ) इति संज्ञितम्—वे० शा० नारायणशास्त्री साठे इत्येतेभ्यो लब्धम्।

( ग. ) इति संज्ञितम्—डा० रामकृष्ण गोपाळ भांडारकर इत्येतेभ्यो लब्धम्।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका।

# काव्यप्रकाशस्थविषयानुक्रमः ।

## सूचना

८० पृष्ठे प्रकाशप्रदीपविभागप्रदर्शिका रेषा दशमपङ्क्तेरधः पतिता सा नवमपङ्क्तेरधो ज्ञेया।

४९३ पृष्ठे प्रदीपोद्द्योतविभागप्रदर्शिका रेषा पञ्चमपङ्क्तेरधः पतिता सा षष्ठपङ्क्तेरधो ज्ञेया।

४९६ पृष्ठे प्रदीपोद्द्योतविभागप्रदर्शिका रेषा चतुर्दशपङ्क्तेरधः पतिता सा सप्तमपङ्क्तेरधो ज्ञेया।

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीमन्मम्मटभट्टविरचितः

# काव्यप्रकाशः ।

नागेशभट्टविरचितोद्योतयुतः श्रीगोविन्दभट्टविरचितः काव्यप्रदीपश्च ।

प्रथमोल्लासः ।

ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत्परामृशति—

**नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥ १ ॥**

---

**अथ काव्यप्रदीपः प्रारभ्यते—**

सोनोदेव्याः प्रथमतनयः केशवस्याऽऽत्मजन्मा
श्रीगोविन्दो रुचिकरकवेः[1] स्नेहपात्रं कनीयान् ।
श्रीमन्नारायणचरणयोः सम्यगाधाय चित्तं
नत्वा सारस्वतमपि महः काव्यतत्त्वं व्यनक्ति ॥ १ ॥

वचनसंदर्भविशेषरूपस्य ग्रन्थस्य प्रारिप्सितत्वेन स्तोतुमुचितायाः सेव्यमानायाश्च वाग्देव्या आस्पदभूतां कविभारतीं तदभिन्नत्वेनाध्यवसितां प्रारिप्सितप्रतिबन्धकदुरितशान्तये ग्रन्थकृत्संस्तौति—**नियति॰**

---

**अथोद्योते प्रथम उल्लासः—**

याचकानां कल्पतरोररिकक्षहुताशनात् ।
शृङ्गवेरपुराधीशाद्रामतो लब्धजीविकः ॥ १ ॥
नागेशभट्टः कुरुते प्रणम्य शिवया शिवम् ।
काव्यप्रदीपकोद्योतमतिगूढार्थसंविदे ॥ २ ॥

स्तोतुमौचित्ये हेतुः—**वचनेत्यादि** । विशेषश्च तान्त्रिकाणां व्यवहारादुन्नेयः । प्रारम्भ आद्या कृतिः । सना तदव्यवहितपूर्वकालत्वं मङ्गलस्य सूचितम् । तादृश्या अपि वैरिदेवतात्वे फलादातृत्वादाह—**सेव्यमानायाश्चेति** । ग्रन्थकृत इति शेषः । कविवाण्या देवतात्वाभावादाह—**तदभिन्नत्वेनेति** । ग्रन्थकृत् । मम्मटः । कवेर्भारती काव्यं वाग्देवीरूपभारत्यभिन्नम् ।

---

१ क. °वेः प्रेमपा° । २ क. °य भक्ति न° । ३ ग. शृङ्गिवे° । ४ ग. °धीशराम° । ५ क. °मलब्धोपजी° । ६ क. ग. त्वमपि मङ्ग° ।

**नियतिशक्त्या नियतरूपा, सुखदुःखमोहस्वभावा, परमाण्वाद्युपादानकर्मादिसहकारिकारणपरतन्त्रा, षड्रसा, न च हृद्यैव तैः, तादृशी**

---

नियम्यन्ते सौरभादयो धर्मा अनेनेति नियतिरसाधारणः पद्मत्वादिरूपो धर्मोऽदृष्टं वा। ह्लादैकमयीमिति। ह्लादेनैकमयीमेकमात्रस्वभावाम्। ह्लादमात्रस्वभावामिति यावत्। अनन्यपरतन्त्रामिति। कवेस्तत्प्रतिभायाश्चान्यो य आत्मनः परस्तदायत्तत्वरहिताम्। परतन्त्रशब्द एवाऽऽयत्तवचन इति कश्चित्। नवरसरुचिरामिति कर्मधारयः। वृत्तौ 'षड्रसा न च हृद्यैव तैः' इति व्यतिरेकद्वयदर्शनात्। न चैवं 'हृद्यैव तैः' इति हेतूपदर्शनवैय-

---

निर्मितिं मुखादावनिर्वचनीयकमलादिनिर्माणं कुर्वती जयतीत्यन्वयः। (गीतिश्छन्दः।)।

**पद्मत्वादिरूप इति**। तत्कृतनियमश्च कमलादौ जलाद्ययोगव्यवच्छेदरूपः सौरभविशेषाद्ययोगव्यवच्छेदरूपश्च। नियमे तत्कृतत्वं स्वाश्रयनिरूप्यत्वेन। पद्म एव पद्मपदप्रयोगात् पद्मत्वरूपव्याप्यप्रतीतौ व्यापकीभूतसौरभविशेषावगम इत्येवंरूपश्च नियमः। तद्राहित्यं च कविनिर्मितौ। प्रियामुखसंनिधाने तेष्वपि तदभावदर्शनात्। मुखादावपि पद्मपदप्रयोगाच्च। पद्मादिसादृश्येन प्रतीतादपि सौरभविशेषावगतेश्च। कमलादौ जलाद्ययोगव्यवच्छेदरूपनियमराहित्यमपि कवेः कमलाद्यात्मकनिर्माणे मुखादावव्याहतम्। अदृष्टं वेति। व्यावहारिककमलादिहेत्वदृष्टानपेक्षत्वं बोध्यम्। पूर्वकालैकेति समासे एकह्लादेति स्यादत आह—**ह्लादेनेति**। अभेदे तृतीया। धान्येन धनमय इतिवत्। प्राचुर्ये मयट्। तत्फलितमाह—**ह्लादमात्रस्वभावामिति**। प्राचुर्यमत्रापरिच्छिन्नत्वरूपमिति भावः। मात्रपदेन दुःखमोहयोर्व्यवच्छेदः। सुप्सुपेति समासः। न च प्राचुर्ये मयटि प्राचुर्यस्य समानाधिकरणविरोध्यल्पतासापेक्षत्वेन दुःखानुवृत्तिरपि प्रतीयेतेति वाच्यम्। तदल्पत्वस्य क्वचिदेव सति तात्पर्ये पश्चात्तनमानसबोधविषयत्वेन क्षत्यभावात्। अत एव प्रचुरप्रकाशः सूर्यश्चिन्मयं ब्रह्मेत्यादौ न दोषशङ्का। अन्यपरशब्दयोः पौनरुक्त्यं परिहरन्नाह—**कवेरिति**। **आत्मन इति**। भारत्या इत्यर्थः। **तदायत्तत्वेति**। ब्रह्मनिर्मितौ यद्यदन्यपारतन्त्र्यं तच्छून्यत्वमत्रेति तात्पर्यम्। तेनान्ततः प्रतिबन्धकात्यन्ताभावादीनां हेतुत्वेऽपि न दोषः। वस्तुतः प्रतिबन्धकात्यन्ताभावादीनां प्रतिभायामेव हेतुत्वं बोध्यम्। रसादिविशेषवासनारूपा प्रतिभैव काव्यत्वेन परिणमते। अत एव शोकः श्लोकत्वमागत इति रामायण उक्तमिति बोध्यम्। **कर्मधारय इति**।

---

१ क. ख. तैः ब्र°। २ क. °रणो धर्मः पद्मत्वादिरूपोऽदृ°। ३ क. °योगः। प°। ४ ग. °च। कमला°। ५ ग. °ति। मात्रप°। ६ क. नच इत्यारभ्य न दोषशङ्का इत्यन्तो ग्रन्थो न दृश्यते। ७ क. °ल्पत्वप्रतीतेर्दुःखा°। ८ ब्रह्मेत्यारभ्य वस्तुत इत्यन्तो ग्रन्थः क पुस्तके न दृश्यते। ९ क. °नां तु प्र°। १० ख. °तुत्वमिति भावः। र°। ११ क. दिवासनाविशेषरूपा।

**ब्रह्मणो निर्मितिर्निर्माणम् । एतद्विलक्षणा तु कविवाङ्निर्मितिः ।**

---

र्थ्यम् । तैस्तिक्तादिसाधारणैः षड्रसैरुपलक्षिता यतोऽतो न च हृद्यैवेति तदर्थात् । अस्तु वा तृतीयातत्पुरुष एव । न चैवं नवरसीति रूपप्रसङ्गः । त्रिगुणसचिव इत्यादिवदुपपत्तेः । न च वृत्तिविरोधः । नवरसरुचिरत्वरूपविशिष्टधर्मव्यतिरेकस्तत्रत्यरसेषु नवत्वाभावेनायोगव्यवच्छेदिहृद्यत्वप्रयोजकत्वविरहेण चेति वृत्तिप्रतिपाद्यत्वात् । निर्मितिमादधतीति तृणोलपन्यायेन सामान्यविशेषभावेनान्वयान्न पुनरुक्तिः ।

अत्र निर्माणव्यतिरेकमुखेन चतुर्मुखात्कविभारत्या व्यतिरेकालंकारो व्यङ्ग्यः । तथा हि । नियतेः शक्त्या नियतरूपा सुखदुःखमोहात्मकसत्त्वरजस्तमोलक्षणगुणत्रयात्मकत्वाद्विश्वस्य सुखदुःखमोहस्वभावा, परमाण्वादि यत्समवायिकारणं तदीयश्च यः स्पन्दस्तत्प्रभृतिसहकारिपरतन्त्रा, मधुरादिषड्रसा च, न च मनोरमैव तैः, निर्मितत्वादिसादृ-

---

नवरसरुचिरपदयो[2]र्द्वयोर्बहुव्रीहिगर्भ[3]कर्मधारय इत्यर्थः । **तदर्थो[4]ति** । एवं चार्थहेतुत्वस्य श्लोकोक्तस्य व्यतिरेकप्रदर्शनमिति भावः । **तृतीयेति** । द्विगुपूर्वपदक इत्यर्थः । **न[5] चेति** । अकारान्तोत्तरपदद्विगोः स्त्रीत्वादिति भावः । **इत्यादिवदिति** । त्र्यवयवो गुण इतिवन्नवावयवो[6] रस इति मध्यमपदलोपी समासः । रसपदेनो[7]द्भूतावयवभेदस्तत्समुदायो विवक्षित इति भावः । **न चेति** । 'षड्रसा' इत्युक्त्येति भावः । **अयोगव्यवच्छेदीति** । तेन मधुरादिभिस्तस्या अपि हृद्यत्वमित्यपास्तम् ।

**व्यङ्ग्य इति** । निर्माणव्यतिरेको विशेषणद्वारा स्फुटव्यङ्ग्यः । अयं तु गूढव्यङ्ग्य इति भावः । नियतिनिरूप्यत्वं च नियतिव्यापकतादिनिरूप्यत्वेनेत्याह[8]—**नियतेः शक्त्येति**[10] । तृतीयार्थो नियतपदार्थैकदेशे नियमेऽन्वेति । नियतिनिरूप्यो यो नियमो जलकमलादावेव कमलसौरभादिरित्येवंरूपस्तदाश्रयस्वरूपेत्यर्थः । सुखादिजनकत्वेन सत्त्वादीनां तदात्मकत्वम्[11] । मोहो भ्रमः[12] । **तत्प्रभृतीति** । निमित्तसंग्रहः । असमवायिकारणेऽपि सहकारित्वम् । **मधुरादिषड्रसेति** । रसशब्दश्लेषमहिम्ना तेषामेषां च रसानामभेदप्रतीत्या ब्रह्मनिर्मिति[13]गतरसानां तत्रासत्त्वेऽपि नाऽऽधिक्यहानिः । न वा व्यतिरेकप्रदर्शनविरोधः । **मनोरमैवेति** । एतेन ब्रह्मनिर्मितिरपि मधुराद्यै[14]र्हृद्येति परास्तम् । ह्लादैकेत्यनेन चालंकाराधीनाह्लादजनकत्वमुक्तमिति न पौनरुक्त्यम् । **सादृश्यवती चेति** । उपमानोपमेययोरेव व्यतिरेकेऽपि नः

---

१ क. न हृद्यैव तैरिति तदर्थत्वात् । २ क. °योर्बहुव्रीहिगर्भः क° । ३ ग. °गर्भः कर्मधारय इत्यर्थः । तृतीयेति । द्विगुपूर्वपदक इत्यर्थः । इत्या° । ४ क. °दर्थादिति । ५ क. न चैवमिति । ६ क. ग. °यवको र° । ७ ग. °देन तत्स° । ८ ग. °वः । व्यापकता व्याप्यता च तन्निरूप्यात्वमत्र° । ९ इदं वाक्यं क. पुस्तके न दृश्यते । १० क °ति । नियतेरुक्तरूपायाः शक्त्या स्वभावेन कृतो यो नियमः । ११ क. °म् । मधु° । १२ ग. °म. । मधु° । १३ ख. °तिर° । १४ क. °स्तथेति° ।

**अत एव जयति । जयत्यर्थेन च नमस्कार आक्षिप्यत इति तां प्रत्यस्मि प्रणत इति लभ्यते ।**

श्यवती च ब्रह्मणो निर्मितिरिति[2] सुप्रसिद्धमेव । एतद्विलक्षणनियतिकृतनियमरहितत्वादिधर्मवत्वेन तु कविभारती[3]निर्मितिर्निर्दिष्टेति व्यक्तो व्यतिरेकः । यदेतादृशनिर्मितिशालिनी, अत एव जयत्युत्कर्षेण[4] वर्तते न तु वर्ततामित्यर्थः । तथासत्युत्कर्षस्यासिद्धत्वेन नमस्काराक्षेपकत्वानुपपत्तेः ।

नन्वेतादृशे गुरुकर्मणि प्रेक्षावतामिष्टदेवताप्रणतिरवश्यं दृश्यते युक्तिमती च । तदनेन स्तुतिमात्रमाचरता यन्न कृता तदवलेपादज्ञानाद्वा । उभयथाऽप्यनवधेयवचनता प्रसक्ता । अथ कृतैव, तत्किं स्तुतिवन्नोपनिबद्धा विशेषाभावात्सैव वा किं नोपनिबद्धेति चेत्, उच्यते—न खलु नतिमात्रोपनिबन्धे स्तुतिर्निबद्धा भवति । स्तुतिनिबन्धे स्वर्थान्नतिरपि निबद्धैव । यतो जयत्यर्थेन वक्तुर्विषयस्य च वैशिष्ट्यान्नमस्कार आक्षिप्यते । तेन तां प्रत्यस्मि प्रणत इति लभ्यते । यत्तु ' उत्तमकाव्यत्वसिद्धये व्यङ्ग्यं दर्शयति

क्षतिरिति भाव । **ब्रह्मणो निर्मितिरिति ।** उत्कर्षप्रतियोग्यनुपादानेऽपि प्रसिद्धत्वादियमेव तैद्रूपेति भावः । अत्र ब्रह्मनिर्मित्यपेक्षया भारतीनिर्मितौ यो व्यतिरेकस्तन्मूलको ब्रह्मापेक्षया भारत्यां व्यतिरेक इति लक्ष्यक्रमव्यङ्ग्यध्वनिः । कविभारतीनिर्मितिर्निर्दिष्टेति पाठः । **व्यक्त इति ।** विशेषणद्वारा स्फुटव्यङ्ग्य इत्यर्थः । **एतादृशधर्मेति ।** धर्मश्च निर्मितिरूपः । निर्मितिर्निर्माणम् । मुखपद्माद्युत्पत्त्यनुकूलो व्यापारः । आदधतीत्यस्यार्थः शालिनीति । शिल्पोत्कर्षे शिल्प्युत्कर्षस्यार्थसिद्धत्वादिति भावः । यद्वा निर्मितिरिति कर्मणि क्तिन् । **न तु वर्ततामिति ।** वर्तमाननिर्देश एवोचितो न तु विधिनिर्देश इति भावः ।

**युक्तिमती चेति ।** नतिमात्रनाश्यविघ्नस्य शङ्कितत्वेन तन्नाशार्थमवश्यापेक्षणीयेत्यर्थः । **नतिरपि निबद्धैवेति ।** जयत्यर्थ उत्कर्षः । स च विशेषानुपादानात्सर्वप्रतियोगिको लभ्यत इति भारत्यां सर्वोत्कृष्टत्वज्ञाने तुल्यवित्तिवेद्यत्वन्यायेन प्रकारान्तरेण वा भारत्यपेक्षया सर्वस्यापकृष्टत्वज्ञाने सर्वान्तःपातिनि स्वस्मिन्नप्याराध्यापेक्षयाऽपकृष्टत्वज्ञानं व्यञ्जनया वृत्तमेवेति भावः । तदेवाऽऽह—**यत इति । आक्षिप्यत इति ।** व्यज्यत इत्यर्थः । वक्तृवैशिष्ट्यं च स्वापेक्षयाऽपि भारत्युत्कृष्टत्वज्ञान उपयुक्तमिति बोध्यम् । ननु सर्वः प्रणत इति लाभेऽप्यहं प्रणत इति न लब्धम् । तथा प्रणतिरेद च सर्वैर्निबध्यतेऽत आह—**तेनेति ।** व्यञ्जनेनेत्यर्थः । प्रणत इति कर्तरि क्तदर्शनेन धातोरकर्मकत्वात्तामिति प्रतियोगे द्वितीयेत्याशयेनाऽऽह—**तां प्रतीति । लभ्यत**

१ क. प्रणतोऽस्मीति । २ क. °ति प्र° । ३ ख. °ती निर्दि° । ४ क. °र्तत इत्यर्थः । न तु ५ क. तथेति । ६ इदं वाक्यं क. ग. पुस्तकयोर्नतु वर्ततामिति प्रतीकात्प्राग्दृश्यते । ७ ख. ग. °न भा° ।

**इहाभिधेयं सप्रयोजनमित्याह—**

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**
**सद्यःपरनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥ २ ॥**

कालीदासादीनामिव यशः श्रीहर्षादेर्धावकादीनामिव धनं राजादिगतोचिताचारपरिज्ञानमादित्यादेर्मयूरादीनामिवानर्थनिवारणं सकल-

---

जयत्यर्थेन चेत्यादि ' इति वृत्त्यवतारणं तदयुक्तम् । प्रणामरूपव्यङ्ग्यस्यानतिशयित्वेन ध्वनित्वाप्रयोजकत्वात् । तदर्थं चातिशयिनो व्यतिरेकालंकारस्यैवोपन्यासौचित्यादिति ।

इहाभिधेयं ग्रन्थरूपमङ्गिनः काव्यस्य फलेन सफलमिति प्रेक्षावत्प्रवृत्त्यर्थं प्रतिपादयितुमाह—**काव्यं यशसे०**

अत्र कृत् वित् युज् शब्दा भावे क्विबन्ताः । काव्यं लोकोत्तरवर्णनानिपुणस्वरूपस्य कवेरसाधारणं तादृग्वर्णनात्मकं कर्म । तत्कवेस्तावत्कालिदासादीनामिव यशः । श्रीहर्षादेरुपादानाद्धावकादीनामिव धनं मयूरशर्मादीनामिवानर्थनिवारणं च करोति । सहृदयस्य

---

**इति** । सर्वान्तर्गतोऽहमप्यपकृष्ट एवेत्यपि व्यञ्जनयैव लभ्यत इत्यर्थः । **व्यतिरेकालंकारस्यैवेति** । आन्तरालिकव्यङ्ग्यमादायेदम् । तेन पार्यन्तिकदेवताविषयकभावेनापि ध्वनित्वे न क्षतिः ।

**अभिधेयम्** । वक्ष्यमाणमित्यर्थः । तदाह—**ग्रन्थरूपमिति** । न चेहेत्यस्यासंगतिः । इह ग्रन्थ इत्यर्थात् । अभिधेयं च तददोषावित्यारभ्य बोध्यम् । नन्वभिधेयप्रयोजनेन नाभिधायकस्य प्रयोजनवत्त्वम् । वह्निरित्याद्यभिधानस्यातत्त्वादित्यत आह—**अङ्गिन इति** ।

**क्विबन्ता इति** । तादर्थ्ये चतुर्थ्य इत्यपि बोध्यम् । व्यवहार आचारः । शिवेतरत् दुरितम् । उपदेशयुज उपदेशनिर्माणायेत्यर्थः । उपदेशश्च योग्यतावशात्सदुपदेश एव ग्राह्यः । **लोकोत्तरेति** । चमत्कारिबोधजनकेत्यर्थः । तादृग्बोधजनकज्ञानविषयतावच्छेदकधर्मवत्त्वं च वक्ष्यमाणानुपहसनीयकाव्यलक्षणस्य लक्ष्यतावच्छेदकमित्यनेन दर्शयति । **वर्णना** । मुखादेः कमलत्वादिरूपेण कथनादि । यश इत्यादिकर्मणां करोतीत्यनेनान्वयः । धावकः कविः । स हि श्रीहर्षनाम्ना रत्नावलीं कृत्वा बहुधनं लब्धवानिति प्रसिद्धम् । मयूरशर्मा सूर्यशतकेन कुष्ठान्निस्तीर्ण इति च प्रसिद्धम् । ( यशो द्रव्यं शिवेतरक्षतिश्चेत्येतत्त्रयं कवेः प्रयोजनत्वेनोक्तम् । यद्यपि काव्यज्ञपण्डितस्यापि यशः प्रसरति द्रव्यं च लभ्यते स्तोत्रपाठेन शिवेतरक्षतिश्च भवति तथाऽपि कवेः पूर्वोक्तत्रयमेव नत्वन्यत्रयमित्याशयः । कवेरेव पूर्वोक्तप्रयोजनत्रयमिति तु न प्रदीपग्रन्थाभिप्रायः । ) कारिकास्थसद्यःपदं व्याचष्टे—**श्रव**-

---

१ क. °सादेरिव । २ क. वानिष्टनि° । ३ क. ग. °ष्ट इत्य° । ४ क. °ने नाभि° । ५ क. °माणस्यानु° ।

**प्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दं प्रभुसंमितशब्दप्रधानवेदादिशास्त्रेभ्यः सुहृत्संमितार्थतात्पर्यवत्पुराणादीतिहासेभ्यश्च शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत्काव्यं लोकोत्तरवर्णनानिपुणकविकर्म तत्कान्तेव सरस-**

---

तु काव्यश्रवणानन्तरमेव सकलप्रयोजनेषूत्तमं स्थायिभावास्वादनसमुद्भूतं वेद्यान्तरसंपर्कशून्यं रसास्वादरूपमानन्दं राजादिगतपृथिवीपालनादिसमुचिताचारपरिज्ञानं रामादिवद्वर्तनमिष्टसाधनं न तु रावणादिवदित्युपदेशं निर्मिमीते। काव्यास्वादनकाले कवेरपि सहृदयान्तःपातित्वाद्रसास्वादः। ननूपदेशार्थं नीतिशास्त्राण्येव सन्ति किं तत्र काव्येनेत्यत उक्तं कान्तासंमिततयेति। शब्दस्तावत्त्रिधा—प्रभुसंमितः सुहृत्संमितः कान्तासंमितश्च। तत्राऽऽद्यः शब्दप्रधानो वेदादिः शासनाप्राधान्येन विधिलक्षणः। स हि प्रभुरिव 'त्वमेवं कुरु' इति समाज्ञापयति। ततश्च नियुक्तः संध्यावन्दनादौ निष्फलेऽपि प्रवर्तते। द्वितीयस्त्वर्थतात्पर्यवान्सिद्धार्थरूपः पुराणेतिहासादिः। स हि सुहृदिव 'एवं कृत इदमिष्टं भवति एवं च कृत इदमनिष्टम्' इत्येतावन्मात्रं बोधयति, न त्वाज्ञापयति। तृतीयस्तु ताभ्यां

---

**णानन्तरमेवेति**। न तु यागादिवद्देहान्तरापेक्षेत्यर्थः। परपदार्थमाह—**सकलेति**। तत्र हेतुमाह—**स्थायिभावेति**। आस्वादनं च विभावादिभिस्तस्य संयोजनमित्यर्थः। तावन्मात्रापेक्षित्वादेव चाविलम्ब इति भावः। शब्दार्थविषयसंबन्धव्यासङ्गाद्विलम्बः स्यादत आह—**वेद्यान्तरेति**। स्वस्वविषयातिरिक्तवेद्यान्तरेत्यर्थः। स्वस्यैव वेद्यवेदनोभयरूपत्वमिति स्पष्टं चतुर्थे। आनन्दमित्यस्य निर्मिमीत इत्यनेनान्वयः। व्यवहारविद इत्यंशं व्याचष्टे—**राजादिगतेति**। दुष्टाचारनिवृत्तये—**समुचितेति**। उपदेशयुज इति व्याचष्टे—**रामादिवदिति**। हितकर्तव्यत्वाहिताकर्तव्यत्वपरमेतत्। तेन रामकृतवालिवधसदृशस्याप्यकर्तव्यत्वं रावणकृतहरपूजादेश्च कर्तव्यत्वं बोध्यम्। नन्वेवं कवेः किं रसास्वादो नास्त्येव तत्राऽऽह—**काव्येति**। **शब्दप्रधान इति**। तत्त्वं च समीहितार्थलाभायात्यज्यमानमुख्यार्थकत्वम्। उपदेशकविधेयांशस्य लक्षणादिनाऽन्यथानयनाभावादिति भावः। आदिना स्मृतिः। **शासना**। प्रवर्तना। **निष्फलेऽपीति**। अकरणप्रसक्तप्रत्यवायपरिहारातिरिक्तफलरहितेऽपीत्यर्थः। **अर्थतात्पर्यवानिति**। नीत्यादेरुद्देश्यतया तदनुरोधेन शब्दस्य लक्षणाद्यपि तत्राऽऽश्रीयत इति भावः। **सिद्धार्थेति**। अर्थवादरूप इत्यर्थः। **इतिहासः**। प्राचीनवृत्तवर्णनम्। आदिनाऽऽख्यानादिः। वैलक्षण्ये हेतुः—**रसेति**।

---

१ ग. °सेभ्यः श°। २ क. °तितया रसा°। ३ क. °त्त्रिविधः। ४ क. °सनप्रा°। ५ क. ग. °यव्या°। ६ ग. स्ववि°। ७ इदं वाक्यं क. ग. पुस्तकयोर्न दृश्यते। ८ क. °कर्तृत्वा° ९ ग. °धस्या°। १० ग. °मू। शब्द°। ११ क. ग. °वः। इति°।

तापादनेनाभिमुखीकृत्य रामादिवद्वर्तितव्यं न रावणादिवदित्युपदेशं च यथायोगं कवेः सहृदयस्य च करोतीति सर्वथा तत्र यतनीयम् ।

एवमस्य प्रयोजनमुक्त्वा कारणमाह—

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ॥**
**काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे ॥ ३ ॥**

---

विलक्षणो रसप्रधानः काव्यलक्षणः । तत्र हि रसाङ्गभूतो यो व्यापारो विभावादिसंयोजनात्मा व्यञ्जनारूपो वा तन्निष्पाद्यरसादिव्यक्तिनिष्पादकतया शब्दार्थयोर्द्वयोरपि गुणत्वाद्रसस्यैव प्राधान्यम् । स च कान्तासंमितत्वेनोपदेशं करोति । तेनैतदुक्तं भवति—ये सुकुमारमतयोऽतिसुखिस्वभावा राजकुमारादयो नीरसे नीतिशास्त्रे प्रवर्तयितुमशक्यास्तान्काव्यं कान्तेव सरसतापादनेनाभिमुखीकृत्योपदेशं ग्राहयति । गुडजिह्विकया शिशूनिवौषधम् । यदाहुः—

स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपभुञ्जते ।
प्रथमालीढमधवः पिबन्ति कटु भेषजम् ॥

यत एवंविशिष्टं काव्यम्, अतः सर्वथा तद्धेतुरुपादेयः । नन्वेवमप्यभिधेये किमायातम् । किं च हेतुमज्ञात्वा तदुपादानं कथं स्यादित्यपेक्षायां काव्यज्ञशिक्षारूपतया काव्याङ्गत्वं ग्रन्थस्य प्रतिपादयन्नेव कारणान्तरमप्याह—**शक्तिर्निपु०**

शक्तिः कवित्वबीजभूतो देवताप्रसादादिजन्मा संस्कारविशेषः प्रतिभाव्यपदेश्यः । तस्याः

---

**अङ्गभूतः** । उपायभूतः । रसादिव्यक्तिनिष्पादकत्वं च विभावादिसंयोजनफलकविभावाद्युपस्थापनद्वारा बोध्यम् । **संयोजनम्** । मेलनम् । तस्यापि स्वतोऽसंभवादाह—**व्यञ्जनारूपो वेति** । **गुणत्वादिति** । एवं च गुणीभूतशब्दार्थोभयकत्वमेव काव्ये वैलक्षण्यमिति भावः । **अभिमुखीकृत्येति** । स्वप्रतिपाद्यार्थबोधानुकूलयत्नाश्रयीकृत्येत्यर्थः । सरसतेत्यादिना कान्तासादृश्यं दर्शितम् । **उपदेशम्** । रामादिवदिति प्रागुक्तम् । कान्ता यथा स्वाभिमुखीकृत्य स्वार्थे प्रवर्तयत्येवं काव्यमुपदेशरूपस्वार्थे प्रवर्तयतीति भावः । **एवंविशिष्टम्** । एतावदिष्टविशिष्टमित्यर्थः । साक्षात्काव्यविषयकयत्नासंभवादाह—**तद्धेतुरिति** । तस्य काव्यस्येत्यर्थः ।

**अभिधेय इति** । प्रकृतग्रन्थ इत्यर्थः । **किमायातमिति** । श्रोतॄणां प्रवृत्तिप्रयोजकं किमायातमित्यर्थः । **काव्याङ्गत्वम्** । हेतुत्वेनेत्यर्थः । **बीजेति** । जलादिकमिव व्युत्पत्त्यादिसहकार्यासाद्यव्रीह्यादिभिरङ्कुरस्येव कवित्वस्य तया जननाद्बीजत्वम् । **संस्कारवि-**

---

१ ग. °स्य क° । २ क. °म् । अस्य कार° । ख. °म् । श° । ३ क. °साभिव्य° । ४ क. °योऽपि सु° । ५ क.°जमिति । य° । ६ क. एतावदिष्टवि° । ७ क. °तादिप्र° । ८ ग. म् । मिल° । ९ क. ग. स्वस्मिन् । १० क. ग °र्थः । काव्या° । ११ क. हेतुतयेत्यर्थः ।

**शक्तिः कवित्वबीजरूपः संस्कारविशेषः[1] कश्चित् । यां विना[2] काव्यं न प्रसरेत् । प्रसृतं[3] वोपहसनीयं स्यात् । लोकस्य स्थावरजङ्गमात्मकलो[4]कवृत्तस्य शास्त्राणां छन्दोव्याकरणा[5]भिधानकोशकलाचतुर्वर्गगजतुरगखड्गादिलक्षणग्रन्थानां काव्यानां च महाकविसंबन्धिनाम्, आदिग्रहणादितिहासादीनां च विमर्शनाद्व्युत्पत्तिः । काव्यं कर्तुं विचारयितुं च ये जानन्ति तदुपदेशेन करणे योजने च[6] पौनःपुन्येन प्रवृत्तिरिति त्रयः समुदिताः, न तु व्यस्तास्तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुर्न[7] तु हेतवः ।**

---

कारणतायां किं मानमिति चेत्, निपुणतादिकारणान्तरसद्भावेऽप्यनुपहसनीयकाव्यप्रसरस्य कार्यस्य व्यतिरेकः । स च विशेषस्य काव्यप्रसरस्य, विशेषणस्यानुपहसनीयत्वस्य वा व्यतिरेकात्सर्वत्रै[8]वाविशिष्टः । न चैवं कारणान्तरं किंचिदायातु, न तु शक्तिरिति वाच्यम् । प्रसिद्धातिरेकिण्येव तद्धेतौ शक्तिव्यपदेशात् । लोकः स्थावरजङ्गमात्मकलोकस्य वृत्तम् । योगादुपचाराद्वा । धर्मिमात्रपरामर्शस्य व्युत्पत्त्यनाधायकत्वात् । शास्त्रं छन्दःशास्त्रादि । काव्यं महाकविप्रणीतं रघुवंशादि । आदिग्रहणादितिहासादि । तेषां विमर्शनाद्व्युत्पत्तिर्निपुणता । काव्यज्ञशिक्षा काव्यं कर्तुं रसानुगुणतया प्रबन्धादौ घटयितुं च ये जानन्ति तदुपदेशस्तया करणे योजने च पौनःपुन्येन प्रवृत्तिरभ्यासः । इतिशब्दो मिलितोपस्थापनाय । अन्यथा

---

**शेषः** । देवताराधनादिजन्यं विलक्षणादृष्टम् । शक्नोति काव्यनिर्माणायानयेति योगाच्छक्तिरित्युच्यते[9] । तत्तद्रसादिवासना वा । **प्रतिभाव्यपदेश्यः** । प्रतिभापदव्यपदेश्यः । **अनुपहसनीयकाव्यप्रसरस्येति** । उपहसनीयं च दोषवैशिष्ट्यादिना । ननु वक्ष्यमाणलक्षणानुसारात्तस्य काव्यत्वमेव नेति चेन्न । तददोषावित्यस्य लक्ष्यतावच्छेदकमप्येतदवेस्यदोषात् । लोक्यत इति योगस्य धर्मिसाधारणत्वादाह—**उपचाराद्वेति** । तेन वृत्तानन्त्यादनन्तवर्णनानिर्वाहः । [10]अन्यथा लोकानां नियतत्वेन पूर्वैरेव वर्णितत्वादाधुनिकवर्णनै[11]कधर्मावच्छिन्नकार्यतानिरूपितकारणत्वविषयैव स्यात् । **इतिहासादीति** । आदिना व्याकरणकोशचतुःषष्टिकलाधर्मार्थकाममोक्षाणां प्रतिपादकस्य स्त्रीपुंलक्षणादीनां च संग्रहः । **विमर्शनात्** । मुहुर्मुहुस्तत्तत्पदार्थरसादिगोचरानुसंधानात् । **व्युत्पत्तिः** । पूर्वोक्तानां[12] तात्पर्यविषययथार्थगोचरो दृढतरः संस्कारः । **तदुपदेश इति** । एतद्रूपतया च प्रकृतग्रन्थोपयोग इति बोध्यम् । **तया** । शिक्षया । **मिलितोपेति** । पूर्वोक्तसमुदायपराम-

---

१ क. ख. °षः । यां । २ ग. °ना कवित्वं न । ३ ख. °तं वा ह° । ४ ग. °त्मनो लो° । ५ ग. °रणको° । ६ ग. च पुनः पुनः प्र° । ७ ग. °नै च हे° । ८ क. °र्वत्रावि° । ९ ग. °ते । प्रति° । १० इदं वाक्यं क पुस्तके न दृश्यते । ११ ग. °र्णनान्येक° । १२ क. ग. °र्वोक्तगोचरा । तदु° ।

**एवमस्य कारणमुक्त्वा स्वरूपमाह—**

**तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि ।**

---

तद्वैयर्थ्यमेव स्यात् । तथा च काव्यस्योद्भव उत्कृष्टोत्पत्तिः । तया कार्येण मिलितानामुपधानम् । दण्डचक्रादीनामिव घटे[1]न । न तु* मिलितत्वेन कारणतैवेति भ्रमः कार्यः ।

एवं कारणमुक्त्वा काव्यस्य लक्षणमाह—**तददोषौ०** ।

निर्दोषत्वादिविशेषणविशिष्टौ शब्दार्थौ[2] काव्यमिति व्यवहर्तव्यौ । गुणस्य रसनिष्ठत्वेऽपि

---

शकत्वेनेति भावः । अन्योन्यापेक्षत्वेन मिलितत्वम् । **उत्कृष्टोत्पत्तिः** । उपहासाकरणीभूतकाव्यस्योत्पत्तिः । इदमुपलक्षणमुत्कृष्टबोधस्यापि । अत एव घटयितुं च ये जानन्तीति पूर्वोक्तस्य न वैयर्थ्यम् । शक्तिपदेन च करणशक्तिर्बोद्धृत्वशक्तिश्चोच्यते । व[3]स्तुतो बोद्धृत्वशक्तिरपि वाक्यार्थज्ञानद्वारा दोषाभावादिवैशिष्ट्यप्रयोजकतया कवित्वस्यैव बीजम् । प्रकाशे समुल्लासे चेत्यस्यानुपहसनीयत्वे चेत्यर्थः । तदुक्तमुत्कृष्टोत्पत्तिरिति । रसानुगुणतया योजयितुमुपदे[4]शस्याप्यत्रैव कारणतोक्तरीत्या । **उपधानम्** । कारणत्वेन ज्ञानम् । मिलितस्य दण्डचक्रादीनामिव कारणत्वं न तु तृणारणिमणीनामिवेति ध्वनयितुमेव हेतुरित्येकवचनम् । एकधर्मावच्छिन्नकार्यतानिरूपितकारणत्वबोधकत्वात् । मन्त्राद्यधीनकाव्येऽपि निपुणतायाः पदतदर्थादिवासनारूपायाः पदतदर्थस्मारकतयाऽस्त्येवोपयोगः । परंतु[5] तत्र जन्मान्तरीया सा । अभ्यासोऽप्यन्वयव्यतिरेकानुविधानसिद्धो जन्मान्तरीयः कल्प्य इति भावः । मन्त्राद्यनधीनशिशुकाव्ये शक्त्यंशेऽप्येवमेवेति दिक्[6] । **कारणतैवेति** । कारणतैव मिलितत्वेनेति न भ्रमः । मिलितत्वं कारणतावच्छेदकमिति न भ्रमः । **कार्य इति** । किं तु मिलितानां परस्परसहकृतानां फलोपधायकत्वमित्येवेति बोध्यम् । **लक्षणम्** । इतरभेदकम् । इष्टतावच्छेदकं च । तत्प्रकारकज्ञानस्य प्रवर्तकत्वादिति बोध्यम् ।

**शब्दार्थावि[7]ति** । अर्थाश्रयत्वाच्छब्दस्य प्रागुक्तिः । आस्वादव्यञ्जकत्वस्योभयत्राप्यविशेषात् । प्रागुक्तलक्ष्यतावच्छेदकत्वे[8]स्य व्यासज्यवृत्तित्वाच्च । काव्यं पठितं श्रुतं काव्यं बुद्धमित्युभयविधव्यवहारदर्शनाच्चेति भावः । त[10]त्काव्यमित्येकवचनेन काव्यत्वस्य व्यासज्य-

---

* कारणस्य हि कार्योत्पत्तिप्रयोजकीभूतो व्यापारोऽवश्यमस्त्येव । स व्यापारो येषामनेकेषामेक एव तत्र कारणत्वं समुदायवृत्त्येव । न तु प्रत्येकपर्याप्तम् । तत्र च मिलितत्वं कारणतावच्छेदकं मिलितवृत्तिरन्यधर्मो वा । यथा शृङ्खलाया बन्धनहेतुत्वं न तदवयवेषु प्रत्येकपर्याप्तम् । सूर्णिकास्थमेतत् ।

---

१ क. °टे न तु मिलितत्वेन कारणतेति । २ क. °र्थौ तत्काव्य° । ३ वस्तुत इत्यारभ्य उक्तरीत्येत्यन्तो ग्रन्थः क. पुस्तके न दृश्यते । ४ ग. °थित्रुप° । ५ क. ग. °तु ज° । ६ ग. °क् । लक्षण° । ७ ग. °ति । आस्त्रा° । ८ क. °कस्योभयवृ° । ९ ख. °त्वस्योभयवृ° । १० तत्काव्यमित्यारभ्य द्रष्टव्य मित्यन्तो ग्रन्थः क. पुस्तके न दृश्यते । तत्स्थाने 'तत्पदार्थः काव्यम्' इत्येतावदेव दृश्यते ।

**दोषगुणालंकारा वक्ष्यन्ते । क्वापीत्यनेनैतदाह—यत्सर्वत्र सालंकारौ । क्वचित्तु स्फुटालंकारविरहेऽपि न काव्यत्वहानिः । यथा—**

---

तद्व्यञ्जकपरं गुणपदम् । नन्वनलंकारेऽतिव्याप्तिः । सालंकारत्वविशेषणानुपादानादिति न वाच्यम् । यतः क्वापीत्यनेनैतदुक्तम् । यत्सर्वत्र सालंकारौ शब्दार्थौ काव्यम् , क्वचित्स्फुटालंकारविरहेऽपि न काव्यत्वहानिः । नञोऽल्पार्थत्वात् । अल्पत्वस्य चात्रास्फुटत्व एव विश्रमात् । नीरसेऽप्यस्फुटालंकारे काव्यत्वमिष्टमेवेति ऋजुः पन्थाः । वयं तु पश्यामः । नीरसे स्फुटालंकारविरहिणि न काव्यत्वम् । यतो रसादिरलंकारश्च द्वयं चमत्कारहेतुः । तथा च यत्र रसादीनामवस्थानं न तत्र स्फुटालंकारापेक्षा । अत एव ध्वनिकारेणोक्तम्—' अत एव रसानुगुणार्थविशेषनिबन्धनमलंकारविरहेऽपि च्छायातिशयं पुष्णाति । यथा—

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसंभवः ।
येनैकचुलके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥

अत्र ह्यद्भुतरसानुगुणमेकचुलके मत्स्यकच्छपदर्शनं छायातिशयं पुष्णाति ' इति । नीरसे तु यदि न स्फुटोऽलंकारः स्यात्तत्किंकृतश्चमत्कारः स्यात् । चमत्कारसारं च काव्यमित्यवश्यं स्फुटालंकारापेक्षा । अनलंकृती पुनः क्वापीत्यनेनाप्यस्फुटालंकारस्य क्वचिदेव काव्यत्वं यत्र रसादिः स्फुटो न तु सर्वत्रेत्येतदेव प्रतिपाद्यते । तस्मात्सालंकारत्वमात्रं न विशेषणम् । किं तु स्फुटालंकाररसान्यतरवत्त्वम् । न चैवमपि रसवत्यनलंकारे काव्यत्वप्रसङ्गो दोषाय । इष्टापत्तेः । यथोदाहृते ' मुनिर्जयति ' इत्यादौ ।

---

वृत्तितां ध्वनयति । काव्यं यशस इति सूत्रस्थकाव्यपदमनुवर्तत इति भावः । तत्पदार्थौ वा काव्यमिति । एकैकस्मिन्प्रयोगस्तु लक्षणयेति भावः । वस्तुतस्तु काव्यत्वं प्रत्येकपर्याप्तमेव । अत एवैको न द्वावितिवच्छब्दो न काव्यमित्यादिव्यवहारो नेति द्रष्टव्यम् । **तद्व्यञ्जकेति** । मूर्ध्नि वर्गान्त्यगा इत्यादिना वक्ष्यमाणवर्णघटनादीत्यर्थः । तेन नीरसेऽव्याप्तिरपि नेति बोध्यम् । **ऋजुः पन्था इति** । एवं हि सालंकारावित्येव वदेदित्यरुचिः ।

अरुच्यन्तरमप्याह—**वयं त्विति** । **चमत्कारहेतुरिति** । चमत्कारनिदानस्यैव काव्यत्वादिति भावः । **स्वत एवेति** । अलंकारनिरपेक्षमित्यर्थः । छायातिशयं पुष्णातीत्यनेनान्वेति । ' अलंकारविरहेऽपि ' इति अस्यैवार्थकथनम् । क्वचित्तु अत एवेति पाठः । मत्स्यकच्छपदर्शनं छायातिशयं पुष्णातीत्यन्तो ध्वनिग्रन्थः । छाया चमत्कारः । **रसान्यतरत्वमिति** । रसान्यतरशब्दोऽर्शआद्यजन्तः । रसपदं च भावादीनामप्युपलक्षणम् । क्वचित्तु रसान्यतरवत्त्वमित्येव पाठः । **यथोदाहृते इति** । न चात्र जयहेतोर्योगीन्द्रत्वा-

---

१ ख. °नेन नै° । २ ग. °चित्स्फुटा° । ३ क. ननु निरलं° । ४ क. विश्रामा° । ५ क. °च्छपाविल्यादौ । अ° । ६ क. °स्यात्किं° ।

**यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-**
**स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।**
**सा चैवास्मि तथाऽपि तत्र सुरतव्यापारलीलाविधौ**
**रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥ १ ॥**

---

यदि तु श्रद्धाजाड्येन तत्रापि न काव्यत्वक्षमा तदा सालंकारत्वे सतीत्यपि पूरणीयमिति । स्फुटालंकारविरहे काव्यत्वं यथा—**यः कौमार०** ।

---

देरेकत्र [3]चुल्के मत्स्यकच्छपदर्शनहेतोर्माहात्म्यादेरुपादानात्काव्यलिङ्गमस्तीति वाच्यम् । तस्याद्भुतरसानुगुणत्वात् । माहात्म्यानुपादानेऽपि तादृशदर्शनस्यैवाद्भुतरसव्यञ्जकत्वात् । योगीन्द्रो महात्मेति पदद्वयमद्भुतविरोध्येवेत्यपरे । एकचुल्के मत्स्यकच्छपयोर्विरोधाभासस्तु सन्नपि न स्फुट इत्याहुः । **यदि त्विति** । अत एव वृत्तौ क्वचित्स्फुटालंकारविरहेऽपि न काव्यत्वहानिरित्यत्र स्फुटेत्युक्तम् । चमत्कारिबोधजनकत्वे सतीत्यपि पूरणीयम् । अत एव

'अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः'

इत्यादौ न काव्यत्वं सत्यप्यनुमानालंकार इत्याहुः ।

स्वाधीनपतिका काचिदसकृदुपभुक्तेष्वपि वरोपकरणादिषूत्कटासक्त्या तेषामत्यन्तोपादेयतां सूचयन्ती सखीमाह—**यः कौमारेति** । अत्र तच्छब्दा उपभुक्तत्वार्थकाः । हिशब्दो यद्यप्यर्थकः । स च सर्वत्रान्वेति । अस्तिक्रियाध्याहारश्च । यः कौमारहरो वरो यद्यपि स एवास्ति चैत्रक्षपा यद्यपि ता एव सन्तीत्यादिक्रमेणान्वयः । कौमारं बाल्यं परमरसिकतया तत्रापि संभोगेच्छोत्पादनेन हृतवान् । कौमारमभिनवयौवनमित्यर्थो न चारुः । निषिद्धलक्षणापत्तेः । व्रियते प्रियत्वेन स्वयमङ्गी क्रियत इति वरः । एतेनोभयानुरागः । स एवोपभुक्त एव । नानुपभुक्तत्वसंबन्धवानित्यर्थः । उन्मीलिता विकसितास्तेन यौवनलाभः । कलिकावस्थायामेव शैशवात् । मालती वासन्तिकलता । न तु जातिः । चैत्रे तस्या असंभवात् । प्रौढा इत्युद्दीपनादिप्रागल्भ्यशालिनः । अतो मन्दत्वेऽप्यविरोधः । कदम्बो धूलीसमूहः । सर्वदिक्संचारित्वेन कदम्बाकारा अनिला इति वायुविशेषणं वा । तेन चैत्रक्षपा इत्यनेनाविरोधः । वसन्ते सकलपुष्पाणि वर्ण्यन्त इति कविसंप्रदाय इत्यपि कश्चित् । यत्तु भाद्रक्षपा इति पाठकल्पनं तन्निर्बीजम् । यत्तु तद्दूषणं वर्षासु नदीकच्छे रतस्यावर्णनादिति । तन्न । कच्छनिकुञ्जे तदनौचित्येऽपि तीरनिकुञ्जे तदनौचित्याभावात् ।

---

१ क. °तीत्येतदपि । २ क चुलुके । ३ क. 'तोर्महाशक्त्यादे° । ४ क. 'रसविरोधित्वात् । एकचुलके । ख. 'रसविरोधित्वात् । ५ ग. °दम° । ६ क. ख. 'म् । अलकारत्वं च चमत्कारिबोधजनकत्वगर्भमेवेत्यद्रावत्र । ७ क. ग. °मानेऽलंकारपठिते इ० । ८ क. क्त इत्यर्थः । ९ क. लीकदम्भः । तेन । ग. लीकदम्बः । सर्व° । १० वसन्ते इत्यारभ्य दीपिका इत्यन्तो ग्रन्थः क. पुस्तके न दृश्यते

**अत्र स्फुटो न कश्चिदलंकारः। रसस्य च प्राधान्यान्नालंकारता।**

अत्र रूपकादीनामसंभव एव। अस्मीत्यस्य विभक्तिविपरिणामादस्तु दीपकमिति चेन्न। अस्मीत्यस्याहमर्थकाव्ययत्वात्। अत्रास्मि करोमीतिवत्। क्रियापदत्वेऽपि न दीपकत्वम्। तदन्वयिनां सर्वेषामेव प्राकरणिकत्वात्। दीपकस्य तु प्राकरणिकाप्राकरणिकविषयत्वात्। सादृश्याप्रतीतेश्च न तुल्ययोगिता। समुच्चयोऽपि वक्ष्यमाणलक्षणो न संभवत्येव। अतादृशश्च न चारुत्वहेतुः। विशेषोक्तिविभावने विद्यमाने अपि न स्फुटे। कथमिति चेदित्थम्—विशेषोक्तिस्तावत्कारणसत्त्वेऽपि कार्याभाववचनम्। अत्र चानुत्कण्ठाकारणं वरोपकरणयोरुपभुक्तता। तत्सत्त्वे यद्यप्यनुत्कण्ठाभाव उत्कण्ठारूपो निर्दिष्ट एव तथाऽपि नानुत्कण्ठाभावत्वेन, किं तूत्कण्ठात्वेनैव। तस्मादस्फुटत्वमस्याः। यदि चेतोऽनुत्कण्ठितं नेत्यभिधीयेत तदा स्फुटत्वं भवेत्। एवं कारणाभावेऽपि कार्योत्पत्तिवचनं विभावना। अत्र चोत्कण्ठाकारणं वरोपकरणयोरतत्ता। तदभावश्च यद्यप्युक्त एव तथाऽपि नातत्ताविरहत्वेन, किं तु तत्तारूपेणैव। अभावाभावस्य तत्त्वात्। अतोऽस्या अप्यस्फुटत्वमेव। न च स एवेत्येवकारेणातत्ताभावप्रतीतेरतत्ताभावत्वेन प्रतीतौ कथमस्फुटत्वमिति वाच्यम्। विशेषणसंगतैनैवकारेण विशेष्ये विशेषणायोगस्य व्यवच्छेदो हि प्रत्याय्यते, न तु विशेषणाभावाभाव एवाऽऽहत्य।

यथा मेधैर्मेदुरमित्यादाविति दीपिका। चोऽवधारणे। त एवेत्यर्थः। अत्र प्रौढा युवान इति श्लिष्टविशेषणबलादनिलमालत्योर्नायकनायिकात्वप्रतीतिः। सुरभित्वेन चास्याः पद्मिनीत्वलाभः। चकारोऽप्यर्थोऽस्मीत्यहमर्थकाव्ययानन्तरं योज्यः। अस्मीत्यस्य तिङन्तत्वे हि सैवेत्यस्य शाब्दोद्देश्यलाभो न स्यात्। तथा चाहमपि सैव। उत्कण्ठाहेत्ववस्थान्तरं न प्राप्तेत्यर्थः। स एवेत्यादेरप्ययमेवार्थ इत्यन्ये। तथाऽपि। तत्तदसकृदुपभुक्तसकलसामग्रीसत्त्वेऽपि। तत्रेत्युपभुक्त इत्यर्थकं सुरतेत्यादिसप्तम्यन्तत्रयेऽप्यन्वेति। तेन सर्वेषामुपभुक्तत्वलाभः। तेन सुरतलीलाविधिरपि नान्यादृशो येन क्रीडास्थानैक्येऽप्युत्कण्ठा स्यादिति व्यज्यते। रेवाया नर्मदाया रोधस्तीरम्। वेतसी लता। विशालतया लतान्तराश्रयत्वेन सैव तरुस्तस्य तलमधोदेशस्तस्मिन्। सुरतहेतुर्यो व्यापारो गमनादिस्तत्संबन्धिनी लीला वेषविन्यासादिः। आत्मनः प्रकृतिविशेषो बहुकालव्यवधान वा तेषामत्यन्तोपादेयत्वं वा रत्युत्कण्ठया विभावनीयमिति विरोधमूलविभावनालंकार इति दीपिका। तत्र प्रकृतिविशेष इत्यस्य इतरजनविलक्षणः प्रकृतिविशेष इत्यर्थः। एतेन प्रकृतिविशेष इत्ययुक्तं सा चैवास्मीत्यनेन परिहृतत्वादिति परास्तम्। ( शार्दूलविक्रीडितं छन्दः। )

**अतत्ता।** अनुपभुक्तता। **विशेषणायोगस्येति।** विशेषणसंबन्धाभावस्ये-

१ क. ख. °स्य हि प्रा°। २ क °रोमि सख्य इति°। ३ क. °रनुपभुक्तता। ४ क. °पेण°अ। ५ क. अस्फु°। ६ इदं वाक्यं क. पुस्तके न दृश्यते। ७ ग वाऽत्यु°। ८ क °त्को वि°। ९ ख. °रिगणित°।

पर्यवसानं तु तत्रेत्यस्फुटत्वमेव । एवं विशेष्यसंगतेनाप्येवकारेण विशेष्यभिन्ने विशेषणाभाव एव नाऽऽहत्य प्रत्याय्यते, किं तु विशेषणयोगाभाव इति द्रष्टव्यम् । अत एव 'शङ्खः पाण्डुर[1] एव' इत्यादौ 'नापाण्डुरः' इति 'पार्थ एव धनुर्धरः' इत्यादौ च 'नान्यो धनुर्धरः' इत्यादि कदाचित्स्फुटत्वार्थं प्रयुज्यते । दण्ड्यप्याह—

'त्वन्मुखं त्वन्मुखेनैव तुल्यं नान्येन केनचित्'

इति । अन्यथा पुनरुक्तिस्तत्र स्यादिति । अनयोरस्फुटत्वे च संदेहरूपसंकरोऽप्यनयोरस्फुट इति विभावनीयम् । शृङ्गाररूपरसस्य स्फुटत्वाद्रसवदलंकारः स्फुट इति चेन्न । रसस्यात्र प्राधान्यात् । अप्राधान्य एव तस्यालंकारत्वोपगमात् ।

---

त्यर्थः । विशेषणशब्देनात्र विधेयमुच्यते । एवं विशेष्यशब्देनोद्देश्यम् । ननु स एव वर इति यथाश्रुते तत्त्वावच्छिन्नमुद्दिश्य वरत्वस्य विधेयत्वप्रतीतेर्विशेष्यसंगत एवायमेवकारः । तत्र चान्ययोगव्यवच्छेदोऽर्थ इत्युपभुक्तभेदाभावस्य वरे प्रतीत्या स्यादेव विभावना । उपभुक्तत्वाभावस्येवोपभुक्तभेदस्याप्युत्कण्ठाकारणत्वादित्यत आह—**एवं विशेष्येति** । किं[4] च नव्यमते सर्वत्रैवकारस्यान्यत्वव्यवच्छेद एवार्थः । धनुर्धरे पार्थान्यत्वव्यवच्छेदस्य शङ्खे पाण्डुरान्यत्वव्यवच्छेदस्य च प्रतीतेः । एवं च प्रकृतेऽपि वर उपभुक्तान्यत्वव्यवच्छेदस्योपभुक्ते[5] च वरान्यत्वव्यवच्छेदस्य वा प्रतीतिः शाब्दीति तत्रोपभुक्तत्वप्रतीतेरार्थिकत्वेनास्फुटत्वम् । **त्वन्मुखेनैवेति** । अत्र सादृश्यस्य विधेयत्वेन तृतीयान्तमुखपदार्थस्याप्युद्देश्यत्वमित्यभिमानः । नैव्यमते[6] तु सम्यगेवं । वस्तुतस्तु प्रमाणान्तरेण प्राप्तस्य वस्तुनः पुनः शब्देन प्रतिपादनं प्रयोजनान्तराभावादन्यव्यवच्छेदं गमयतीति न वाच्यवृत्त्या कथमप्यनुपभुक्तव्यवच्छेदप्रतीतिः । एवकारोऽप्येतदर्थद्योतक एव । न तु तत्समभिव्याहारेऽपि शाब्दबोधे तद्भानम् । तत्समभिव्याहारेण स्फुटं मनसा बुध्यमानत्वमपि द्योतकत्वमिति मञ्जूषायां परिसंख्यालंकारनिरूपणे च विस्तरः । न चेदृशमस्फुटत्वमकिंचित्करम् । फलाभावत्वकारणाभावत्वाभ्यां प्रतीतेः कल्प्यतया पुरःस्फूर्तिकत्वाभावेन चमत्कारानाधायकत्वादिति भावः । किं च विप्रलम्भे नायकादेर्गुणस्मरणस्यैवोद्दीपकत्वं न तु विशेषोक्त्यादिपर्यवसितवरोपकरणादेरुपभुक्तत्वेनाकिंचित्करत्वस्येति रसाननुगुणत्वमप्येतयोर्बोध्यम् । सदृशदर्शनाप्रयोज्यत्वात्स एव हीत्यादेः प्रत्यभिज्ञाशरीरत्वाच्च न स्मरणालंकारः । यतः सुरभयोऽतः प्रौढाः स्वकार्यसमर्था इति काव्यलिङ्गमप्यस्फुटम् । अशाब्दत्वात् । रेफवृत्त्यनुप्रासस्यापि विप्रलम्भीयमाधुर्यगुणाननुगुणाभ्यां सविसर्गतया गुरुभ्यां रेफाभ्यां घटितत्वादचमत्कारित्वमिति बोध्यम् । **शृङ्गारेति** । विप्रलम्भेत्यर्थः । **अप्राधान्य इति** । इतररसोपपादकत्व इत्यर्थः । पार्यन्तिकास्वादहेतुश्चात्र विप्रलम्भः ।

---

१ क. पाण्डर । २ क. ग. प्रतीतिः । विशेष्यसंगतश्चाय° । ३ क. ग. °कार इत्यत । ४ किंचेत्यारभ्यास्फुटत्वमित्यन्तो ग्रन्थः क. पुस्तके न दृश्यते । ५ ग. °क्ते वा व° । ६ नव्यमत इत्यारभ्य विस्तर इत्यन्तो ग्रन्थः क पुस्तके न दृश्यते । ७ ग. °व । नचेदृश° । ८ क. °न्तिकस्वा° ।

तद्भेदान्क्रमेणाऽऽह—

अर्वाचीनास्तु—यथोक्तस्य काव्यलक्षणत्वे काव्यपदं निर्विषयं प्रविरलविषयं वा स्यात्। दोषाणां दुर्वारत्वात्। तस्मात् 'वाक्यं रसात्मकं काव्यम्' इति तल्लक्षणम्। तथाच दुष्टेऽपि रसान्वये काव्यत्वमस्त्येव। परं त्वपकर्षमात्रम्। तदुक्तम्—

कीटानुविद्धरत्नादिसाधारण्येन काव्यता।
दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः॥ इति।

एवं चालंकारादिसत्त्व उत्कर्षमात्रम्। नीरसे तु चित्रादौ काव्यव्यवहारो गौण इत्याहुः।

---

स्वाधीनपतिकाया अपि गुरुसांनिध्यादिना क्रीडास्थानाप्राप्त्या खञ्जनमिथुनस्य निधिस्थानाप्राप्त्येव सुरतप्रतिबन्धे तत्संभवात्। अत एव चात्र विधेयाविमर्शादयो न दोषाः। दुःखितकविनिबद्धोक्तौ दुःखातिशयव्यञ्जकत्वेन गुणत्वादिति दिक्।

**दोषाणां दुर्वारत्वादिति**। अयं भावः। अदोषत्वं यत्किंचिद्दोषाभाववत्त्वं यावद्दोषाभाववत्त्वं वा। नाऽऽद्यः। अव्यावर्तकत्वात्। नान्त्यः। काव्यस्वस्य प्रविरलविषयत्वापत्तेः। इदं काव्यं दुष्टमिति व्यवहारानापत्तेश्चेति। **कीटादीति**। अत एव तथाभूतामित्यादेर्न्यूनपदत्वदोषेण वक्ष्यमाणदोषवतोऽपि काकुसहकृतार्थव्यङ्ग्यध्वनित्वं वक्ष्यमाणं संगच्छते। अन्यथा स्वलक्षणलक्षितकाव्यस्यैव ध्वन्यादिभेदवत्त्वेन तदसंगतिः स्पष्टैव। **इत्याहुरिति**। अत्रारुचिबीजं तु लक्षणे दोषपदं स्फुटदोषपरम्। स्फुटत्वं च रसोद्बोधविरोधित्वम्। एवं च तथाभूतामित्यादौ प्रतिपदजीवातुव्यङ्ग्यवैचित्र्यप्रतीत्या दोषज्ञानतिरोधानाद्रसोद्बोधस्य सत्त्वेन काव्यत्वं तद्विशेषध्वनित्वं चाव्याहतमेव। यस्य तु व्यङ्ग्यवैचित्र्यप्रतीतिविरहस्तं प्रति दुष्टत्वमेवेति दोषोदाहरणमप्यविरुद्धम्। एकस्यैव सामाजिकभेदेन काव्यत्वमकाव्यत्वं चेष्टमेव। यथाऽप्रतीतस्य तत्तच्छास्त्रज्ञं प्रत्यदुष्टत्वेन काव्यत्वमितरं प्रत्यकाव्यत्वं तद्वत्। वक्ष्यति हि 'वक्त्राद्यौचित्यवशाद्दोषोऽपि क्वचिद्गुणः' इति। कीटादीत्यस्याप्ययमर्थः। यथा प्रतिभातिशयेन दोषतिरोधानान्न रत्नस्वरूपभङ्गस्तथा काव्येऽपि व्यङ्ग्यवैचित्र्येणेति। वस्तुतस्त्वनुपहसनीयकाव्यत्वरूपलक्ष्यतावच्छेदकाक्रान्तस्य हीदं लक्षणम्। दोषवत्युपहसनीयत्वस्य दुर्वारत्वात्। तथाभूतामित्यादेर्दुष्टस्यापि तादृशव्यङ्ग्योदाहरणत्वे न क्षतिः। न हि तत्र ध्वन्युदाहरणप्रस्तावोऽस्ति। सामान्यकाव्यलक्षणं त्वदोषाघटितमेव। अत एव दुष्टं काव्यमित्यादेरुपपत्तिरित्याहुः।

---

१ क. °व्यलक्षणं नि°। २ क. °स्मात्काव्यं रसात्मकं वाक्यमिति काव्यलक्ष°। ३ क. °टादिवि°। ४ अत एवेत्यारभ्य वस्तुतस्तु इत्यन्तो ग्रन्थः क. पुस्तके न दृश्यते। ५ क. °त्वात्। सामान्य°। ६ क. °दोषपदाघ°। ७ ग. °मेवेत्याहुः।

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ॥ ४ ॥**

इदमिति काव्यम् । बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः । ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य । यथा—

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम् ॥ २ ॥

---

अथास्य भेदांस्तल्लक्षणानि चाऽऽह—**इदमुत्तम०** ।

इदं काव्यं वाच्यादतिशयिन्यधिकचमत्कारकारिणि व्यङ्ग्य उत्तमम् । पटादिभिः पदैः स्फोटरूपं शब्दब्रह्म व्यज्यते । तस्मादभिव्यक्तादर्थप्रत्ययः । तादृशस्य स्फोटव्यञ्जकस्य पटादिशब्दस्य ध्वनिरिति संज्ञेति वैयाकरणानां सिद्धान्तसरणिः । अतः प्रधानीभूतव्यङ्ग्यव्यञ्जकत्वसाधर्म्याद्गुणीभूतवाच्यं यद्व्यङ्ग्यं तद्व्यञ्जनक्षमस्य शब्दार्थयुगलरूपस्योत्तमकाव्यस्य बुधैर्ध्वनिपण्डितैर्ध्वनिरिति संज्ञा कृता । यथा—**निःशेष०** ।

---

**भेदानिति** । भेदो विभागः । अत्रोत्तमत्वादिना तत्समनियतध्वनित्वादिना च विभागः । शेषं लक्षणम् । ननु निःशेषेत्यादौ वक्ष्यमाणदूतीसंभोगरूपव्यङ्ग्यस्य पार्यन्तिकविप्रलम्भरूपव्यङ्ग्यापेक्षया गुणीभावादाह—**वाच्यादिति** । शक्तिलक्षणाभ्यां बोधविषयादित्यर्थः । वाच्यार्थापेक्षयाऽऽन्तरालिकव्यङ्ग्योत्कर्षानुत्कर्षाभ्यां ध्वनिगुणीभूतव्यङ्ग्यत्वव्यवस्थेति भावः । **पटादिभिः पदैरिति** । क्रमोपलभ्यमानतद्घटकैर्वर्णैरित्यर्थः । **स्फोटरूपमिति** । अखण्डमेकं वाचकमित्यर्थः । अयं भावः । एकस्मात्पदादयमर्थो बुद्ध इति व्यवहारादेकमखण्डं मध्यमावस्थं वाचकम् । परारव्यस्य ब्रह्मणो नाभौ पश्यन्त्याख्यो विवर्तस्ततो हृदयावच्छेदेन मध्यमाख्यः स एव पटादिपदात्मकवैखर्या ध्वनिरूपया स्वरूपरूपितत्वेनाभिव्यञ्जितो वाचकः । वैखर्यात्मकस्य चाऽऽशुविनाशित्वादर्थाप्रलापकत्वेन ध्वनितुल्यतेति ध्वनित्वव्यवहार इति वैयाकरणमतं मञ्जूषायां प्रतिपादितमस्माभिः । **व्यङ्ग्यव्यञ्जकत्वेति** । एतेन वैयाकरणानामपि व्यञ्जनाभ्युपगमो दर्शितः । **गुणीभूतवाच्यमिति** । बहुव्रीहिः । **निःशेषेति** । वापीस्नानव्याजेन नायकसंभोगचिह्नानि गोपयन्तीं दूतीं प्रति विदग्धोत्तमनायिकाया उदासीनप्रतारणाय स्नानकार्यत्वप्रतिपादनमुखेनैव संभोगचिह्नोद्घाटिकेयमुक्तिः ।

---

१ ख °तः । अत° । २ क. ख. ग. °गमा वा° । ३ क. °दृक्स्फोट° । ४ क. °णीकृत° । ५ क. ख. °च्यार्थरसयोरान्त° । ६ क. °मेकवा° । ७ क ग. °याऽभि° । ८ ख दृग्व्यप्रत्यायक° ।

**अत्र तदन्तिकमेव रन्तुं गताऽसीति प्राधान्येनाधमपदेन व्यज्यते ।**

अत्र तदन्तिकमेव रन्तुं गताऽसीति प्राधान्येनाधमपदेन व्यज्यते। नन्वत्र मुख्यार्थबाधाद्वि-

एतेन स्नानस्य दूत्यभ्युपगतत्वे दूतीनिवेदितयोः स्नानतदन्तिकगमनयोरन्यतरस्य सत्यत्वेऽपरस्यापि सत्यत्वापत्तौ तदन्तिकगमने मिथ्यात्वोपन्यासो निर्बीज इत्यपास्तम् । असत्येऽपि स्नाने सत्यत्वारोपस्याविदग्धजनप्रतारणोपयोगित्वात् । एवं तदन्तिकगमने मिथ्यात्वप्रतिपादनस्यापि । मिथ्यावादिनि । तदन्तिकमगत्वैव मया गत्वा बहुधा प्रसाधितोऽपि नाऽऽगत इतिवादिनि । दूति । न तु सखि । मत्प्रतारणादिकर्तृत्वात् । बान्धवजनस्य मल्लक्षणस्य पीडाजनकं तदुद्देश्यासंपादनादीति ज्ञानशून्ये । इतः । मत्सकाशात् । वापीमिति । स्नानकालातिक्रमभयात् नदीमदीयप्रिययोरन्तिकमगत्वैवेत्यर्थः । तस्य । परवेदनानभिज्ञस्य । पुनरेवार्थे । नैवेत्यर्थः । अधमस्य । बहुधा कृतापराधस्य । स्वशरणारक्षकस्य वा । स्नानोपपादकमाह—निरिति । यतस्तव स्तनयोस्तटं प्रान्तदेशः निःशेषं यथा स्यात्तथा च्युतं स्खलितं चन्दनं यस्मात्तथा । न तु उरस्स्थलं नापि संध्यादिरूपनिम्नोन्नतभागोऽपि । वाप्या गभीरजलाशयत्वात् पिच्छिलतीरत्वात् तद्गतबहुलयुवजनत्रपापारवश्यादंसद्वयलग्नाग्रस्वस्तिकीकृतभुजलतायुगलेन तटस्यैवोन्नततया परामर्शात् । अत एव च्युतं न तु च्यावितं क्षालितं वा । व्यङ्ग्यपक्षे तु तत्रैव मर्दनाधिक्यात् । संध्यादौ नायककरपरामर्शायोगाच्च । एवमुत्तानतया बहलजलासंबन्धाद्रदनशोधनाङ्गुल्यादीनामधिकसंमर्दवहनाच्चाधर एव नितरां मृष्टरागः । नत्वीषन्न तूत्तरौष्ठः । न्युब्जतया तत्संबन्धमान्द्यात् । त्वरया सम्यगक्षालनाच्च । व्यङ्ग्यपक्षे तु चुम्बनविधेः उत्तरोष्ठे तन्निषेधाच्च तत्रैव तत्कृतं तथात्वम् । नेत्रे दूरं प्रान्तभाग एवानञ्जने । स्नानकाले मुद्रणान्मध्ये जलसंबन्धाभावात् । व्यङ्ग्यपक्षे प्रान्त एव चुम्बनविधेर्मध्ये तन्निषेधाच्च तत्रैवानञ्जनत्वम् । दूरमित्यर्थमिति स्वयुक्तमेव । इयं तव तनुस्तन्वी कृशा स्नानोत्तरमभोजनात् । अत एव पुलकिता जनभयादङ्गजलादूरीकरणात् । पुलको रोमोद्गमः । व्यङ्ग्यपक्षे कार्श्यं सुरतश्रमात् । पुलकश्च तत्रानुभूताद्भुतरसस्मरणात् । असंपूर्णरतत्वाद्वा । स्नानसाधारण्यसंपादनाय वापीमित्युक्तम् । न तु गृहं सर इति वा । ( शार्दूलविक्रीडितं छन्दः । ) अत्र यदकृतज्ञायां बान्धवबुद्धिर्यच्च तस्मिन्नधमे तथा प्रेम तद्युक्तमेवमप्येवंविधवञ्चनापात्रत्वमितीर्ष्याहेतुकविप्रलम्भसंचारिनिर्वेदध्वनिः । तदनुगुणश्च दूतीभोगः । चन्दनच्यवनादीनां च वाच्यानां व्यङ्ग्यानां च परिरम्भचुम्बनाद्यनुभावानां संभोगोत्कर्षद्वारेणेर्ष्याया उत्तेजकानां निर्वेदोत्कर्षकत्वमित्यन्यत्र विस्तरः ।

**प्राधान्येति** । तृतीयार्थो वैशिष्ट्यम् । इतिपदार्थे व्यङ्ग्येऽन्वेति । प्राधान्यं चेतर-

१ ग. °सील्येव प्रा° । २ ख. °न्येन व्य° । ३ क. वापीस्नानो° । ४ क. °न्तसमदे° । ५ ग. °बहल° । ६ क. °मर्शयो° । ७ क. ग. ओष्ठे । ८ इदं वाक्यं क. पुस्तके न दृश्यते । ९ प्राधान्यतारभ्य इत्याहुरित्यन्तो ग्रन्थ क. पुस्तके न दृश्यते ।

परीतलक्षणया तदन्तिकमेव गताऽसीति लक्ष्यमेव युज्यते, न तु व्यङ्ग्यम् । अन्यथा 'साहेन्ती' इत्यादिवक्ष्यमाणलक्षणामूलव्यञ्जनोदाहरणेऽपि विपरीतलक्षणा न स्यात् । विशेषाभावादिति । अत्र केचित्—सत्यमत्र विपरीतलक्षणा । वृत्तिग्रन्थस्तु तदन्तिकमेव गताऽसीत्यत्र लक्ष्यत इति शेषकल्पनया योजनीयः । व्यज्यत इति रन्तुमित्यनेनैवान्वीयत इत्याहुः । परमार्थतस्तु न खलु मुख्यार्थान्वयायोग्यत्वं स्वरूपसल्लक्षणायां बीजम्, किंतु ज्ञातम् । तथा च यत्र सख्यादेः प्रसाध्यकामुकादिसंभोगः प्रमाणान्तरेण श्रोतुः प्रतीतिमुपगतस्तत्र मुख्यार्थबाधादस्तु लक्षणा । तदभिप्रायेणैव 'साहेन्ती सहि सुहअं', 'उपकृतं बहु नाम' इत्युदाहृतम् । यत्र तु प्रमाणान्तरं न तज्ज्ञापकमवतरति तद्वाक्यजनितप्रत्ययमाहिम्नैव तु तत्प्रत्ययस्तत्र कथं लक्षणा । बाधाभावात् । उत्पन्ने च वाक्यार्थबोधे भवन्नपि बाधोऽकिंचित्कर एव । तदभिप्रायेण वापीं स्नातुमित्युदाहृतम् । अत एवोक्तम् 'अधमपदेन व्यज्यते' इति । अत एव

---

नायिकासंभोगस्य विप्रलम्भोद्दीपकत्वेन वाच्यापेक्षयाऽतिशयितत्वात् । प्राधान्यविशिष्टेनाधमपदेनेति तु न युक्तम् । तत्कथनानुपयोगात् । अधमपदेनेत्युक्त्यैव तल्लाभाच्च । ध्वनित्वोपपादकतया व्यङ्ग्यप्राधान्यस्यैव प्रकृतत्वाच्चेत्याहुः । अधमपदेनेत्यस्यायं भावः । विदग्धाया गूढतात्पर्ययाऽनया वाचोयुक्त्या स्नानसाधारण्येनैतेष्वर्थेष्ववगतेषु वक्तृबोद्धव्यादिवैशिष्ट्यबलाद्दुःखप्रयोजककर्मशीलत्वरूपाधमपदार्थघटककर्मपदार्थो वाच्यतादशायां कर्मान्तरसाधारण्येनावस्थितोऽपि व्यञ्जनया दूतीसंभोगरूपताद्दशकर्माकारेण पर्यवस्यतीति । इदमेवाधमपदस्याधमपदेनेत्युक्तिध्वनितं प्राधान्यम् । झटितीतरानपेक्षतया व्यङ्ग्यबोधकत्वाच्च । चन्दनच्यवनादीनां तु स्नानकार्यतया निबद्धानां योग्यतया संभोगाङ्गभूताश्लेषचुम्बनादिकार्यत्वस्यापि प्रतिसंधाने सति तद्व्यञ्जनद्वारा तत्साहित्येनैव संभोगगमकत्वमिति विशेषः । एतेन नीचकर्मकारित्वस्याधमपदवाच्यस्य सोधकं व्यङ्ग्यमित्यपास्तम् । दूतीप्रेषणसापेक्षत्वेन विस्मृतप्रेमतयाऽपि तत्संभवात् । अत्र विप्रलम्भस्य प्रधानतया निःशेषेत्यादिवाक्येषु तवेत्यध्याहारेऽपि न न्यूनपदतादोषः । उक्तत्र्यसामग्र्यस्य निर्वेदातिशयव्यञ्जकत्वेन गुणत्वात् । अत एव विधेयाविमर्शोऽपि न दोष इति दिक् ।

**मुख्यार्थबाधादिति** । स्नानस्यावास्तवत्वाद्बाध इति भावः । **किं तु ज्ञातमिति** । व्यङ्ग्यार्थेऽवगते बाधज्ञानं त्वकिंचित्करम् । **बाधाभावादिति** । वाक्यार्थबोधात्प्राग्बाधानवतारादित्यर्थः । **उत्पन्ने चेति** । उत्पन्ने त्वित्यर्थः । न च तात्पर्यविषयतदन्तिकगमनान्वयानुपपत्त्या लक्षणेति वाच्यम् । विदग्धाया वैदग्ध्यरक्षायै अविदग्धजनप्रतारणाय च

---

१ क. °णाबी° । २ साधकं व्यङ्ग्यमिति । तथाच गुणीभूतव्यङ्ग्यमिदं मध्यमकाव्यमिति तेषामाशयः । ३ ग. °र्थः । नच ता° । ४ क. °न्नेऽपीति° ।

अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।

अतादृशि वाच्यादनतिशायिनि । यथा—

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥ ६ ॥

अत्र वञ्जुललतागृहे दत्तसंकेता नाऽऽगतेति व्यङ्ग्यं गुणीभूतम् । तदपे-

---

च यत्र सख्यादेस्तादृशत्वं न प्रमाणान्तरेणावगतं तत्र न 'साहेन्ती' इत्यादौ विपरीतलक्षणा, व्यङ्ग्यार्थप्रतीतिर्वा । वापीं स्नातुमित्यादौ तु बाधानवतारेऽप्यधमपदार्थपर्यालोचनया यथोक्तं व्यङ्ग्यं प्रतीयत एवेत्येवं प्राधान्यमधमपदस्य । तस्मात् 'साहेन्ती' इत्यादौ यदि व्यञ्जना तदा लक्षणामूलैव । वापीं स्नातुमित्यादौ तु न नियमः ।

अतादृ० ।

अतादृशि वाच्यादनतिशायिनि अतिशयितचमत्कारानाधायके व्यङ्ग्ये मध्यमं काव्यम् । तद्गुणीभूतव्यङ्ग्यम् । कथितमित्यनुषज्यते । अत्र व्यङ्ग्ये स्फुटव्यङ्ग्य इत्यर्थः । तेन नाध-मकाव्यातिव्याप्तिरिति केषांचिन्मतमयुक्तम् । 'अगूढमपरस्याङ्गम्' इत्यादिना गुणीभूतव्य-ङ्ग्यप्रभेदत्वेन प्रतिपादयिष्यमाणस्यास्फुटव्यङ्ग्यस्यासंग्रहापत्तेः । किं स्वस्फुटतरातिरिक्तव्य ङ्ग्यपरं व्यङ्ग्यपदम् । गुणीभूतव्यङ्ग्ये चास्फुटमात्रं व्यङ्ग्यम् । अधमकाव्ये स्वस्फुटतरम्, तद्विरह एव वेति न काचिदनुपपत्तिः । उदाहरणम्—ग्रामतरुणं० ।

अत्र वञ्जुललतागृहे दत्तसंकेता तरुणी नाऽऽगतेति व्यङ्ग्यम् । तच्च गुणीभूतम् ।

---

स्नानप्रतीतिमुखेन तत्प्रकाश एव तात्पर्यात् । **अनतिशायिनीति** । अनतिशयश्च न्यूनत्वेन तुल्यत्वेन चेति बोध्यम् । **अस्फुटमात्रमिति** । मात्रपदेनास्फुटतरमेव व्यावर्त्यत इति बोध्यम् । संकेतस्थले व्यासङ्गवशेनानागतां स्वीयतत्स्थलगमनं ज्ञापयितुं तत्र-स्थवञ्जुलमञ्जरीमादायोपस्थितं नायकं दृष्ट्वा विषण्णाया विप्रलम्भवर्णनमिदम्—**ग्रामतरुण-मिति** । ग्राम एकस्तरुणः । तेन ग्रामस्थसकलयुवतिजनप्रार्थ्यमानतया दुर्लभत्वं व्यज्यते । तरुण्या इति । द्वयोस्तरुणत्वेन परस्परानुरागोत्कर्षो व्यज्यते । नवेत्यादि मलिनीभावोपपादकं विशेषणम् । वञ्जुलोऽशोकः । नवेत्यनेन नूतनवस्तुनः करग्रहणस्यौचित्येनावितर्कणीयता । सनाथो युक्तो नाथसहितश्च[४] । तेनातिशोभाशालितया नायिकया दर्शनेऽप्यवितर्कणीयता । मुहुर्वारंवारम् । जनताभयेन दर्शने सातत्यविरहात् । पश्यन्त्या भवतीति वर्तमाननिर्देशाभ्यां दर्शनमलिनीभावयोरविरामः सूच्यते । ग्रामतरुणं मुहुः पश्यन्त्यास्तरुण्या मुख-च्छाया मलिना भवतीति संबन्धः । छाया कान्तिः । (आर्या छन्दः । ) **दत्तसंकेतेति** ।

---

१ क. तु विरोधान°। २ ग. °म् । संके°। ३ क. °ध्यम् । विषण्णाया । ४ ख. ग. °हितः । ते°।

क्षया वाच्यस्यैव चमत्कारित्वात्[1] ।

शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥५॥

चित्रमिति गुणालंकारयुक्तम् । अव्यङ्ग्यमिति स्फुटप्रतीयमानार्थरहितम्[2][3] । अवरमधमम् । यथा—

---

तदपेक्षया वाच्यस्यैव चमत्कारित्वात्[4] । यतः पश्यन्त्या नितरां मुखच्छाया मलिना भवतीत्यनेन दर्शनकाल एव तत्कार्यं मालिन्यं तस्यातिशयः संतन्यमानता चेति वाच्यं प्रतीयत इति[5] ।

शब्दचित्रं० ।

अत्र चित्रमित्यध्याहार्यम् । तेनाव्यङ्ग्यं काव्यमवरमधमम् । तच्चित्रमिति कथितमित्यर्थः । अव्यङ्ग्यमस्फुटतरातिरिक्तव्यङ्ग्यरहितम् । तादृशं चास्फुटतरव्यङ्ग्यसद्भावे व्यङ्ग्यमात्राभावे वा । चित्रं गुणालंकारयोगि ।

---

स्वयमेव संकेतं कृत्वा विफलीकृत इत्यनुतापातिशयो मालिन्यकारणम् । गुणीभूतत्वे हेतुमाह—तदपेक्षयेति । चमत्कार आस्वादः । तस्यातिशय इति । पौर्वापर्यविपर्ययलक्षण इत्यर्थः । तदुपपादकं दर्शनकाल एव तत्कार्यं मालिन्यमिति । तद्रूप इत्यर्थः । यद्वा नितरांपदप्रतिपाद्यो मालिन्यस्यातिशय इत्यर्थः । वाच्यं प्रतीयत इति । अत्र व्यङ्ग्येन संकेतभङ्गेन वाच्यमुखमालिन्यातिशयरूपानुभावमुखेनैव विप्रलम्भाभासपोषणं न केवलेन । संकेतभङ्गस्याकर्तव्यत्वबुद्ध्याऽपि संभवादिति तदनतिशायित्वं व्यङ्ग्यस्येति भावः । निःशेषेत्यत्र तु बोध्यदूतीवैशिष्ट्येनाधमपदेन च व्यक्तसंभोगेनैव निर्वेदद्वारा विप्रलम्भपोषकत्वमिति बोध्यम्[10] । पर्यन्तव्यङ्ग्यविप्रलम्भाभासेन त्वस्यापि ध्वनित्वमेव । वाक्यार्थरसयोरन्तरालभवव्यङ्ग्योत्कर्षापकर्षाभ्यामेव ध्वनिगुणीभूतव्यङ्ग्यत्वव्यवस्थितेः । पार्यन्तिकरसादिमादाय ध्वनित्वं तु सर्वत्रेष्टमेवेति दिक् । अध्याहार्यमिति । अन्यथा पूर्वयोरिवास्य संज्ञान्तराकरणान्न्यूनता स्यादिति भावः । गुणालंकारयोगीति । तन्मात्रं न तु रसादिरूप आत्मा काव्यस्यातीति भावः । तदुक्तम्—रसादिरात्मा गुणाः शौर्यादिवत्, दोषाः काणत्वादिवत्, अलंकाराः कटकादिवत्, शब्दार्थौ च शरीरमिति । अत्राऽऽहुः[11]—अर्थो ह्यन्तरङ्गं शरीरम् । तत्रैव कविसंरम्भात् । अत एव यत्र कविकल्पितो न कश्चिदंशस्तत्राकाव्यत्वं वदन्ति सहृदयाः । शब्दस्तु तेन विनाऽर्थस्य स्थापयितुमशक्यत्वादुपचरितं शरीरमिति । इदमेव च चित्रसाम्यम् । चित्रालिखिततुरगादौ तुरगबुद्धिवदस्यापि

---

१ क. °त्कारकारि° । २ ग. °मानव्यङ्ग्यार्थ° । ३ क. °म् । यथा । ४ क. °त्कारकारि° । ५ क. °रां मलिना मुखच्छाया भ° । ६ क. °दृशत्वं चा° । ७ ग. °शयः । गुणी° । ८ इदं वाक्यं क. ग. पुस्तकयोर्न दृश्यते । ९ ग. °यमु° । १० क. °मे वेति दिक् । ११ अत्राहुरित्यारभ्य चित्रसाम्यमित्यन्तो ग्रन्थः क. पुस्तके न दृश्यते ।

स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
मूर्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाऽह्नाय वः ।
भिद्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुम-
द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥ ४ ॥

---

शब्दचित्रं यथा—स्वच्छन्दो० ।

वृत्त्यनुप्रासोऽत्र शब्दालंकारः । ननु कथमेतदव्यङ्ग्यमुच्यते । मन्दाकिनीविषयायाः प्रीतेरभिव्यक्तेः । किंच नास्त्येव स काव्यार्थो यस्य न व्यञ्जकत्वमन्ततो विभावत्वेनापीति चेत्सत्यम् । किं तु तद्व्यङ्ग्यमस्फुटतरम् । यद्वा तत्र न कवेस्तात्पर्यम् । अनुप्रासमात्र एव

---

काव्यत्वबुद्धिरित्यधमत्वमिति ।

ननु व्यङ्ग्यरहितं काव्यमप्रसिद्धम् । पार्यन्तिकरसादिव्यङ्ग्यशून्यस्य प्रहेलिकात्वादत उक्तमस्फुटतरेति ईषत्त्वस्यै तत्र नञर्थत्वात् । अव्यङ्ग्यमस्फुटतरव्यङ्ग्यमित्यर्थ इत्येके । स्वच्छन्देति । मन्दाकिनी गङ्गा वो युष्माकं मन्दतामज्ञानं पापं वाऽह्नाय झटिति भिद्यादिति योजना । तीर्थान्तराद्व्यतिरेकं दर्शयितुं विशिनष्टि स्वच्छन्देति । स्वच्छन्दं स्ववशं न तु वात्यादिपरतन्त्रं यथा स्यात्तथा उच्छलदुद्गच्छत् । अम्बुविशेषणम् । तेनाम्बुबाहुल्याद्गाम्भीर्यलाभः । अच्छं निर्मलम् । कच्छस्य जलप्रायदेशस्य । कुहरे तटङ्कृताबिले । छातं दुर्बलम् । तदितरद्वेगातिशयेन बलवत् । इदमप्यम्बुविशेषणम् । अम्बुनश्छटा परम्परा तया मूर्छन्विनश्यन्मोहोऽज्ञानं येषाम् । अत एव हर्षः । स्नानेनैवाऽऽह्निकत्वेन लाभेऽपि प्राधान्यात्पृथगुपन्यासः । नद्यन्तराद्व्यतिरेकं दर्शयितुं पुनर्विशिनष्टि—उद्यन्तः प्रकाशमाना उदारा महान्तो दर्दुरा भेका यास्वेवंविधा दर्यः कन्दरा यस्यां सा तथा । दीर्घा आयता अदरिद्राः शाखादिबाहुल्येनाकृशा ये द्रुमास्तेषां मद्न्योऽपि दीर्घ इति द्रोहः पातनकारणं तेनोद्रेकं ऊर्ध्वप्रसरणं तद्युक्ता ये तरङ्गास्त एव मेदुरमदो निबिडाहंकारो यस्याः । महोर्मीति पाठे तेनोद्रिक्ता येषामीदृशा ये महोर्मय इति व्याख्येयम् । ( शार्दूलविक्रीडितं छन्दः । )

प्रीतेरभिव्यक्तेरिति । अत्र मन्दाकिन्यालम्बनम् । तद्गुणा उद्दीपनम् । स्तवोऽनुभावः । स्मृत्यौत्सुक्यादयः संचारिणः । इदमुपलक्षणम् । महर्षिसेवनादिना तीर्थान्तराद्व्यतिरेकोऽपि व्यङ्ग्यो बोध्यः । विभावत्वेनापीति । उद्दीपनविभावत्वेनापीत्यर्थः । अस्फुटतरमिति । उद्भटालंकारकृतोत्कर्षेण चित्तापकर्षात्तत्प्रतीतिव्यवहितप्रतीतिकत्वादित्यभिमानः । न चायमनुप्रासो न मन्दाकिनीविषयकभावानुगुणः । स्वच्छन्दोच्छ-

---

१ ख. ग. 'राम्भश्छटा' । २ ग. 'महोर्मि' । ३ क. 'स्त न' । ४ ग. 'नस्य प्राधान्य दाह्निकत्वेन लाभेऽपि पृथ' । ५ क. 'नः । तटभङ्गादि' । ६ ग. 'यभा' ।

वाच्यचित्रं यथा—

विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयाऽपि यम् ।
ससंभ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियाऽमरावती ॥ ५ ॥

इति श्रीकाव्यप्रकाशे काव्यस्य प्रयोजनकारणस्वरूपविशेषनिर्णयो नाम प्रथम उल्लासः ॥ १ ॥

---

तस्य संरम्भात् । तात्पर्यविषयीभूतव्यङ्ग्यविरहवत्त्वमेवं चाव्यङ्ग्यपदेन विवक्षितम् । यदुक्तं ध्वनिकृता—

रसभावादिविषयविवक्षा विरहे सति ।
अलंकारनिबन्धो यः स चित्रविषयो मतः ॥ इति ।

अत्र पक्षे मध्यमकाव्यलक्षणे व्यङ्ग्यपदं विवक्षितव्यङ्ग्यपरं द्रष्टव्यम् । अर्थचित्रं यथा—**विनिर्गतं०** ।

अत्रोत्प्रेक्षार्थालंकार इति प्राञ्च उदाहरन्ति । परं तु रसादौ कथं तात्पर्यविरहोऽस्फुट-

---

लद्दुदारदर्दुरेत्यादिश्रुतिकटुत्वपुष्टार्थपदनिष्ठत्वदिति वाच्यम् । तटभङ्गादिगम्यगङ्गानिष्ठौजः-प्रकाशकतयां श्रुतिकटुत्वपुष्टार्थपदघटितविकटवर्णदीर्घसमासादेर्गुणत्वेन तदनुप्रासस्याऽपि भावानुगुणत्वादिति दिक् । पार्यन्तिकं व्यङ्ग्यमादाय ध्वनित्वस्य सर्वत्रेष्टतया मध्यमव्यङ्ग्यमादायैव त्रैविध्यस्योपपादनीयत्वेऽपि व्यतिरेकं व्यङ्ग्यमादाय शब्दचित्रमात्रोदाहरणत्वं चिन्त्यम् ।

**विनिर्गतमिति** । यं प्रकृतं हयग्रीवं मानदं शत्रुमानखण्डकं मित्रमानदातारं विनिर्गतं न तु प्रस्थितं नाप्यमरावत्यां प्रविष्टम् । यदृच्छया । अमरावतीविजयाविषयिण्याऽपि यया कयाचिदिच्छया । उपश्रुत्य कर्णोपकर्णिकया श्रुत्वा न तु दूतमुखेन । ससंभ्रमेण सभयेनेन्द्रेणाव्याहतैश्वर्येणापि स्वयमेव । दौवारिकाह्वाने विलम्बासहत्वात् । द्रुतं शीघ्रं पातिता यथा कथंचिन्निक्षिप्ता न तु विश्रब्धं निहिता । अर्गला न तु कपाटफलके एव लापिते इति भावः । उपश्रुत्येति पातनक्रियया समानकर्तृकम् । अत्र मरावतीत्यश्लीलम् । ( वंशस्थं वृत्तम् । )

**अत्रोत्प्रेक्षेति** । नायकेन्द्रभयप्रदर्शनप्रभूतममरावतीस्त्रीभयमपि वीररसपोषकत्वादित्यस्या अलंकारत्वं बोध्यम् । एतेन संशयरूपाया उत्प्रेक्षाया अंशतो भयाभावप्रापकत्वस्यापि सत्त्वान्न वीररसानुगुणत्वमित्यपास्तम् । भावांश एवोत्कटकोटिकत्वेनादोषात् । **रसादाविति** । अत्र वीररसः । तस्य हयग्रीव आलम्बनम् । प्रतिपक्षेन्द्रभयमुद्दीपनम् । मानखण्डनमनुभावः । यदृच्छासंचरणगम्या धृतिः संचारिणी । आदिना प्राक्श्लोकीयभावपरिग्रहः ।

---

१ क. 'वा व व्य' । २ ग. 'या विकट' । ३ ग. 'पि गुण' । ४ क. 'त्वं बोध्यम् । व्यतिरेकरूपव्यङ्ग्यस्य सत्त्वाच्छब्दचित्र' ।

तरलत्वं वा तत्र ज्ञायते । हयग्रीवस्य वर्णनीयतया तत्प्रभावस्य स्फुटं प्रतीतेः । मदीयं तु पद्यमुदाहरणीयम् । यथा—

मध्ये व्योम स्फुरति सुमनोधन्वनः श्यानचक्रं
मन्दाकिन्या विपुलपुलिनाभ्यागतो राजहंसः ।
अहश्छेदे त्वरितचरणन्यासमाकाशलक्ष्म्याः
संसर्पन्त्याः श्रवणपतितं पुण्डरीकं मृगाङ्कः ॥

अथ रूपकमर्थालंकारः । तन्मात्रे तात्पर्यं न तु रसादौ ।

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे काव्यलक्षण-निर्णयः प्रथमोल्लासः ॥

---

**मध्ये व्योमेति** । व्योम्नो मध्य इत्यर्थः । सुमनोधन्वा कामः । श्यानचक्रं चक्राकारं शस्त्र-तैक्ष्ण्यसंपादकं पाषाणजयन्त्रमुच्यते । पुलिनं तीरम् । तत्राभ्यागत इत्यर्थः । अहश्छेदे सायंसमये । ( त्वरितश्चरणन्यासो यस्मिन्कर्मणि तथा संसर्पन्त्याः । ) स्त्रीत्वेन भयवशा-त्त्वरितगमनम् । ( मृगाङ्कश्चन्द्रः स एव श्यानचक्रमित्यर्थः । तथा स एव राजहंसः पुण्ड-रीकं चेत्यर्थः । मन्दाक्रान्ता छन्दः । )

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते काव्यप्रदीपोद्योते प्रथम उल्लासः ।

---

१ क. 'नो धन्विनः शाणच' । २ ग. 'कारश' ।

अथ द्वितीय उल्लासः ।

---

**क्रमेण शब्दार्थयोः स्वरूपमाह—**

**स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।**

**अत्रेति काव्ये । एषां स्वरूपं वक्ष्यते ।**

**वाच्यादयस्तदर्थाः स्युः ।**

**वाच्यलक्ष्यव्यङ्ग्याः ।**

---

अथ काव्यलक्षणपदार्थेषु स्वरूपलक्षणादिभिर्विवेक्तव्येषु शब्दार्थयोः प्राधान्यात्प्रथमं तयोः स्वरूपं निरूपयिष्यन्विभागमाह—**स्याद्वाच०** ।

शास्त्रे व्यञ्जकः शब्दो न प्रसिद्ध इत्यत उक्तमत्रेति । अत्रेति काव्ये ।

शब्दस्वरूपमप्रतिपाद्यैव लाघवार्दर्थं विभजते—**वाच्याद्य०** ।

वाच्यादयो वाच्यलक्ष्यव्यङ्ग्याः क्रमेण तेषां वाचकादीनामर्थाः स्युः । केषुचिन्न्यायादि-

---

**स्वरूपलक्षणादिभिरिति** । यथा 'योऽभिधत्ते स वाचकः' इति स्वरूपम् । तथाभिधातृत्वं लक्षणम् । एवमन्यत्राप्यूह्यम् । आदिना विभागः । **प्राधान्यादिति** । काव्यत्वाश्रयत्वेन लक्षणघटकेतरपदार्थमपेक्ष्य तयोः प्राधान्यम् । अर्थस्य व्यञ्जकत्वेऽपि शब्दसहकारितयैव तस्य तत्त्वाल्लक्षणवाक्ये शब्दस्य प्रथमं निर्देशस्तस्य प्राधान्यसूचनाय । **स्वरूपमिति** । विभागानन्तरं तन्निरूपणस्य सांप्रदायिकत्वादिति भावः । सामान्यलक्षणं तु शब्दत्वजातिमत्त्वं शब्दस्य तदभिधेयत्वं चार्थस्य प्रसिद्धमेव । एकवचनं सामान्याभिप्रायेण । सामान्यं च वाचकादिस्वरूपेष्वन्ततोऽन्यतमत्वं बोध्यम् । तत्र लाक्षणिकव्यञ्जकयोर्वाचक उपजीव्यः । व्यञ्जकस्य वाचकलाक्षणिकावित्युपजीव्यक्रमेणोपन्यासः । **त्रिधेति** । वाचकत्वाद्युपाधौ* त्रित्वं बोध्यम् । **शास्त्रे** । वैशेषिकादौ । **लाघवार्दर्थमिति** । प्रकरणलाघवानुरोधादित्यर्थः । अन्यथा प्रकरणचतुष्टयापत्तेरिति परमानन्दचक्रवर्ती ।[६]

**वाच्यलक्ष्येति** । वाचकत्वादिव्यापारेण वक्ष्यमाणवाचकादिप्रतिपाद्यत्वं च तल्लक्षणं

---

* ननु य एव शब्दो वाचकः स एवान्यत्र लक्षकः । किंच वाचकलक्षकान्यतर एव व्यञ्जकः । अतः सांकर्यात्कथमेषां भेद इत्यत आह । वाचकत्वाद्युपाधाविति । ( चू० )

---

१ क. °वायार्थे । २ ग. स्वरूपलक्षणादिभिरिति । स्वरूपं विशेषलक्षणम् । लक्षणं सामान्यलक्षणम् । आदिनोद्देशः प्राधा° । ३ क. °त्वं च ल° । ४ प्राधान्यादितीत्यारभ्य सूचनायेत्यन्तो ग्रन्थः क पुस्तके न दृश्यते । ५ एतद्वाक्यं क. पुस्तके न दृश्यते । ६ ग. °रे व° ।

तात्पर्यार्थोऽपि केषुचित् ॥ ६ ॥

आकाङ्क्षासंनिधियोग्यतावशाद्वक्ष्यमाणस्वरूपाणां पदार्थानां परस्परसमन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम् । वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिनः ।

---

नयेषु । न तु मीमांसादिमतेष्वपि । लाघवात्पदानां पदार्थमात्रे शक्तिः, न त्वन्वयांशेऽपि । गौरवादन्यलभ्यत्वाच्च । तदंशो हि तात्पर्यार्थो वाच्याद्यर्थविलक्षणशरीर आकाङ्क्षायोग्यतासंनिधिवशादपदार्थोऽपि प्रतीयते । न चापदार्थप्रतीतावतिप्रसङ्गः । स्वरूपसतः शक्यान्वयत्वस्य नियामकत्वात् । इत्यभिहितान्वयवादिनां मतम् ।

अन्वयरूपे वाक्यार्थेऽपि पदानां शक्तिः । व्यवहारेणान्वितस्यैवोपस्थापनात्तत्रैव शक्तिग्रहात । किं चान्वयभागस्याशक्यत्वेऽनुभवविषयत्वं न स्यात् । तद्विषये शक्यत्वस्य प्रयो-

---

बोध्यम् । एतेनाग्र एषां लक्षणानुक्तेर्न्यूनतेति परास्तम् । अनुमेयाद्यर्थानां स्वप्रकृतत्वान्न विभाग इति बोध्यम् । **न्यायादीति** । आदिना भाट्टमीमांसकाः । **न त्विति** । प्राभाकरेति शेषः । **तात्पर्यार्थ इति** । आकाङ्क्षादिवशाद्भासमानस्य हि तात्पर्यार्थत्वेन व्यवहारः । तस्यापि पदतात्पर्यविषयत्वात् । तदुक्तं भट्टपादैः—

'न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः ।
वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति च स्थितिः ॥
साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् ।
वर्णास्तथाऽपि नैतस्मिन्पर्यवस्यन्ति निष्फले ॥
वाक्यार्थमितये तेषां प्रवृत्त्या नान्तरीयकम् ।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥ इति ।

अभिधानापर्यवसानरूपाऽऽकाङ्क्षा । एकपदार्थेऽपरपदार्थस्य प्रकृतसंसर्गवत्त्वं योग्यता । अव्यवधानेनान्वयप्रतियोग्युपस्थितिश्च संनिधिः । **वशात्** । तद्रूपात्प्रयोजकात् । **अपदार्थः** । प्रत्येकं पदवृत्त्यविषयः । अनेन तस्य वाक्यवशत्वं सूचयति । आकाङ्क्षावशाद्धि तस्य शक्यताकल्पनम् । प्रमाणानामसंबद्धार्थबोधकत्वाभावादिति वैयाकरणाः । **अतिप्रसङ्ग इति** । अशक्यार्थान्वयभानरूप इत्यर्थः । घटवद्भूतलमित्यत्र पटीयसंयोगस्य भानापत्तिः । अस्ति हि तस्यापि संयोगत्वेन योग्यतेत्यभिमानः । **शक्यान्वयत्वस्येति** । तेषामपि नानात्व-

---

१ ग. °नां स° । २ क °दिनयेष्व° । ३ क. °तासत्तित्र° । ४ क. °पयत्वे श° । ५ इदं वाक्यं क. पुस्तके दृश्यते । ६ रः । पदस्याव्यवहितोच्चाररूपाकाङ्क्षा । ७ क ग. °त्येकप° । ८ क. ग. °यः । अतिप्र° । ९ क °यस्येति ।

**सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ।**

**तत्र वाच्यस्य यथा—**

**माए घरोवअरणं अज्ज हु णत्थित्ति साहिअं तुमए ।**
**ता भण किं करणिज्जं एमेअ ण वासरो ठाइ ॥ ६ ॥**

---

मकत्वात् । अशक्यस्याप्यनुभवप्रवेशेऽतिप्रसङ्गात् । इत्यन्विताभिधानवादिनां मतम् ।

व्यञ्जकत्वं न केवलं शब्दस्य, किं तु तदर्थस्यापि । तत्रापि नैकतरस्य, किं तु सर्वस्यापीत्यभिधादिवैधर्म्यसिद्धये प्रतिपादयति—**सर्वेषां०** ।

अत्र वाच्यस्य यथा—**माए०** ।

---

संभवे तु तात्पर्यज्ञानकारणतयाऽतिप्रसङ्गो वारणीय इति बोध्यम् । तद्धलाज्ञासमानानां संबन्धानामनेकत्वसंभवेन तज्ज्ञान एतद्वाक्यादयं संसर्गो बोध्य इतीच्छारूपतात्पर्यज्ञानस्य कारणत्वावश्यकत्वादिति भावः ।

**अतिप्रसङ्गादिति** । गोपदादश्वादेरपि बोधापत्तिरिति भावः । **अन्विताभिधानवादिनामिति** । अन्वितमेवाभिधत्त इति वादिनामित्यर्थः । अत्रारुचिबीजं तु विधिवाक्यात्कार्यान्वितत्वेन बोधेऽपि कार्यांशत्यागवदन्वयांशत्यागस्याप्यन्यलभ्यत्वन्यायेनौचित्यात् । किं चान्वितत्वेन शक्तावप्यन्वयविशेषभानायाऽऽकाङ्क्षादिकमवश्यं कारणं वाच्यम् । एवं च विशेषरूपेणाशक्यस्यैव भानमिति त्वयाऽप्यवश्यं वाच्यम् । किं च संसर्गस्यापि प्राक्पदेनोपस्थितावगृहीतग्राहिस्वरूपप्रामाण्यं शब्दस्य न स्यात् । अन्वयव्यतिरेकाभ्यां तस्यान्यलभ्यत्वाच्च । संबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति शक्यत्वस्य प्रयोजकत्वान्नातिप्रसङ्ग इति ।

**सर्वस्यापीति** । वाच्यलक्ष्यव्यङ्ग्यस्येत्यर्थः । एवं च वाच्यादिज्ञानं विना तस्या निरूपयितुमशक्यत्वात्प्रथमतो वाचकादिनिरूपणामिति भावः । **अभिधादीति** । अभिधालक्षणापेक्षया व्यञ्जनाया वैधर्म्यसिद्धय इत्यर्थः । प्रधानस्य रसादेर्व्यञ्जकत्वादाह—**प्रायश इति** । **व्यञ्जकत्वमपीति** । अपिना व्यञ्जकतादशायामपि वाच्यत्वाद्यप्रच्यवः सूचितः ।

शब्दव्यञ्जनायाः सकलसंमतत्वेनार्थव्यञ्जनायामसांदृष्टिकत्वशङ्कावारणाय शब्दव्यञ्जनामनुदाहृत्यैव तां प्रथमत उदाहरति—**माए इति** । काचिदुपनायकसंगमार्थिनी बहिर्गन्तुं मातरमाह—

मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया ।
तद्भण किं करणीयमेवमेव न वासरः स्थायी ।

---

१ क किंत्वर्थ° । २ क. तत्र । ३ क. °ध्यम् । अतिप्र° । ४ क. °जं त्वन्वितत्वेन शक्तावपि । ग. जं तु संसर्गस्यापि प्रा° । ५ क. °च्यमिति । सर्व° । ६ क. ग. °वः प्रथ° । ७ क. वाचकत्वा° ।

**अत्र स्वैरविहारार्थिनीति व्यज्यते ।**

**लक्ष्यस्य यथा—**

**साहेन्ती सहि सुहअं खणे खणे दुम्मिआसि मज्य कए ।**
**सब्भावणेह करणिज्जसरिसअं दाव विरइअं तुमए ॥ ७ ॥**

---

अत्र वाच्येनैवार्थेन वक्तुर्वैशिष्ट्यात्स्वैरविहारार्थित्वम्, गृहोपकरणत्वादिना चावश्यविधेयत्वादिकं व्यज्यते ।

लक्ष्यस्य यथा—**साहेन्ती० ।**

---

अत्र मातरित्यनेनाऽऽदेशायोग्यत्वमलङ्घनीयाज्ञत्वं च ध्वन्यते। गृहेत्यनेनाऽऽवश्यकता। उपकरणमत्रेन्धनशाकादिसामग्रीत्यर्थकम् । तेन[1] साकल्यम् । तेनान्यथासिद्धिपरीहारः। एकैकस्येन्धनादेरसत्त्वे तु पार्श्ववासिनोऽपि ग्रहणसंभवः। अद्येत्यनेनाद्यैव संपाद्यत्वम्। साधितं[2] प्रतिपादितमिति सत्त्वशङ्काराहित्यम् । त्वयेस्यनेन स्वकल्पनाराहित्यम्। तदिस्यनेन हेत्वर्थकेनावश्यवक्तव्यस्वम्। किं करणीयं कर्तव्यम्। भणेत्यनेन स्वप्रेरणम्। एवमेव। अधुना दृश्यमानावस्थ एव। तेन दिनावसाने त्वत्प्रेरणयाऽपि[4] कुलाङ्गनया मया न गन्तव्यमिति द्योत्यते। स्थायी न। स्थिरो नेत्यर्थः।

**अत्र वाच्येनैवेति** । वाच्यसंसर्गरूपेणैव वाक्यार्थेनेत्यर्थः[6]। संसर्गो वाक्यशक्य इत्याशयः। यथेष्टविहारेच्छायां वाक्यार्थग्रहोत्तरं प्रतीयमानायां शब्दस्य न व्यापारो विरतत्वात्। अर्थस्य च व्यापारान्तरासंभवाद्व्यञ्जनैवेति भावः। न च वाक्यार्थस्यैव व्यञ्जकत्वे वाच्यस्य यथेत्यसंगतम्। संबन्ध्यभाने संसर्गभानस्य वक्तुमशक्यतया तस्य व्यञ्जकत्वे पदार्थस्यापि व्यञ्जकत्वमित्यदोषात्। एवं लक्ष्यस्येत्यपि। एतेन तात्पर्यार्थस्य व्यञ्जकत्वं स्वातन्त्र्येण नोदाहृतमिति न्यूनतेत्यपास्तम्। **व्यज्यत इति** । स्वैरविहारार्थिन्येषेति सामाजिकैर्व्यञ्जनया बुध्यत इत्यर्थः।

प्रियानुनयार्थं प्रहितां तमुपभुज्याऽऽगतां दूतीं प्रति नायिकाऽऽह—**साहेन्तीति ।**

साधयन्ती सखि सुभग क्षणे क्षणे दूनाऽसि मत्कृते ।
सद्भावस्नेहकरणीयसदृशं तावद्विरचितं त्वया ॥

मत्कृते मदर्थं सुभगं सुन्दरं तं नायकं साधयन्ती अनुनयन्ती त्वं क्षणे क्षणे प्रतिक्षणं दूनाऽसि खिन्नाऽसि। त्वया तावदेवं सद्भावः साधुत्वं स्नेहो मद्विषयस्तयोः करणीयं कार्यं सदृशमुचितम्। तथा च सद्भावस्य यत्कार्यं स्नेहस्य च यदुचितं तद्विरचितमित्यर्थः[8]।

---

१ क. तेनान्यथा°। २ क. साधितं ज्ञातमिति। ३ क. स्वाप्रे°। ४ क. °रणायामपि। ५ क. °ति। संसर्गो। ६ ग. °र्थः। यथे°। ७ क. °वः। व्यज्य°। ८ क. °र्थः। तध्द्वन°।

**अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यम्। तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम्।**

**व्यङ्ग्यस्य यथा—**

**उअ णिच्चलणिप्पन्दा भिमिणीपत्तम्मि रेहइ बलाआ।**
**णिम्मलमरगअभाअणपरिट्ठिआ सङ्खसुत्तिव्व ॥ ८॥**

---

अत्रापकारिण्यां बाधावतारान्मुख्यार्थः श्रोत्रा प्रत्येतुं न शक्यत इति सद्भावस्नेहकरणीयविसदृशं मत्प्रियरमणेन शत्रुत्वाचरणरूपं विरचितमिति मुख्यविपरीतं लक्ष्यते। तेन च कामुकविषयसापराधत्वप्रकाशनं व्यङ्ग्यम्।

व्यङ्ग्यस्य यथा—**उअ०**।

---

द्वंद्वे साहित्यभानवादिमते प्रथमतः समुदायस्य समुदायेऽन्वयः। ततो यथासंख्येन बोधः पार्ष्ठिको बोध्यः। तदध्वनयन्व्याख्यास्यति—सद्भावस्नेहाकरणीयविसदृशमिति। क्वचित्तु सद्भावस्नेहकरणीयविसदृशमिति पाठः। तदा श्लोके ताभ्यां यत्करणीयं तेन सदृशं कार्यं त्वया विरचितमित्यर्थो बोध्यः। परं त्वाद्य एव युक्तः। लक्षणामूलीभूतबाधस्य झटित्युपस्थितये सद्भावस्नेहकार्यं कृतमित्यस्यैव वक्तुं युक्तत्वादिति दिक्। भम धम्मिएत्यादौ तु व्यञ्जनानन्तरमपि न विरोधप्रतीतिः। ग्रामभ्रमणनिकुञ्जभ्रमणयोरविरोधादिति दीपिकायां स्पष्टम्।

**अत्रापकारिण्यामिति**। ज्ञातापकारिण्यामित्यर्थः। **मत्प्रियरमणेनेति**। इदं न लक्ष्यान्तर्गतम्। किंतु प्रतिपाद्यसखीवैशिष्ट्यबोधनद्वारा व्यङ्ग्यप्रकटनायोक्तम्। ज्ञाप्यत्वं तृतीयार्थः। **तेन चेति**। लक्ष्यार्थघटितवाक्यार्थेनेत्यर्थः। **प्रकाशनं व्यङ्ग्यमिति**। कामुकविषयसापराधत्वमेषा प्रकाशयतीति सहृदयैर्व्यञ्जनया गम्यत इति भावः।

**उअ इति**। पश्येत्यर्थेऽव्ययमुअ इति।

पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव॥

कस्याश्चिन्नायिकाया उपनायकं प्रतीयमुक्तिः। बिसिनी पद्मिनीलता। चलनं शरीरक्रिया। स्पन्दस्त्ववयवक्रिया। स्पदि किंचिच्चलन इति धात्वनुसारात्। कर्मधारयसमासः। पुंवत्कर्मधारयेति पुंवत्। यद्वा निश्चल जनशङ्कया विहारव्यापारनिरुद्योगेति कामुकसंबोधनम्। यत्तु निश्चलाऽचला पृथ्वी तद्वन्निष्पन्देत्यर्थ इति। तन्न। अचलापदस्यैव तत्र प्रयोगात्। पृथ्वीवाचकस्य नित्यस्त्रीलिङ्गत्वेन भाषितपुंस्कत्वाभावात्पुंवद्भावानुपपत्तेश्च।

---

१ ख. ममप्रियं। २ क. °न्मुख्योर्थः। ३ क. परं त्वयमयुक्तः। ४ क. लक्ष्यवाक्यार्थेनेत्यर्थः। लक्ष्यघटितवाक्यार्थो लक्ष्य एवेति भावः। प्रका°। ५ क. ग. °जनोपरि।

अत्र निष्पन्दत्वेनाऽऽश्वस्तत्वम्, तेन च जनरहितत्वम्, अतः संकेतस्थानमेतदिति कयाचित्कंचित्प्रत्युच्यते।

अथवा मिथ्या वदसि न त्वमत्राऽऽगतोऽभूरिति व्यज्यते।

वाचकादीनां क्रमेण स्वरूपमाह—

**साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः ॥ ७ ॥**

---

अत्र निःस्पन्दत्वेनाऽऽश्वस्तत्वम्, तेन निर्जनत्वम्, अतः संकेतस्थानमेतदिति कयाचित्कंचित्संकेतस्थानाभिलाषिणं प्रति व्यञ्जनया प्रतिपाद्यते। अथवा निःस्पन्दत्वेनाऽऽश्वस्तत्वम्, तेन जनागमनाभावः, अतो न त्वमत्राऽऽगत इति मिथ्या वदसीति कयाचिद्दत्तसंकेता त्वं नाऽऽगताऽहं त्वागत इति वादिनं प्रति व्यज्यते।

एवमर्थं विभज्य वाचकादीनां स्वरूपं क्रमेणाऽऽह—**साक्षात्**०।

अभिधत्ते प्रतिपादयतीत्यर्थः। अतो न विशेषणान्तरवैयर्थ्यम्। संकेतितं गृहीतसंकेतम्[४]। इदं चेष्टायां साक्षादर्थप्रतिपादिकायामतिव्याप्तिवारणाय। माधुर्यादिव्यञ्जकस्पर्शादिवर्णेऽतिव्याप्तिवारणायं वा। न च साक्षादित्यधिकम्।

'यन्नामा यत्र चैत्यादिर्विषयोऽपि स तादृशः'

इत्यादिव्यवहितसंकेतसत्त्वेऽपि चैत्यादिनामके[६] चैत्यादियोगिनि विषये प्रतिपाद्ये चैत्यादिपदेऽतिव्याप्तिवारकत्वात्। तत्र शक्यसंकेतव्यवहितसंकेतत्वात्। न च तत्र शक्तिरेवेति सम्यक्।

---

मरकतो नीलमणिः। भाजनं पात्रम्। शङ्खशुक्तिः शुक्त्याकारं शङ्खघटितं पात्रम्[७]। न तु मुक्ताशुक्तिः। तस्या बलाकावच्छ्वेतस्वाभावात्। शङ्खशुक्तिपदस्य तत्रासामर्थ्याच्च। अत्र चाचेतनोपमया लेशतोऽपि क्षोभाभावः। तेन निर्जनत्वं गम्यते। केचित्तु 'नायिकाया विरहवेदनां कामुकं प्रति निगूढं निवेदयन्त्याः सख्या इयमुक्तिः। निस्पन्दा सा नायिका बलाकापाण्डुतातिशयाद्बलाकात्वेनाध्यवसिता बिसिनीपत्रे तापाच्छयिता राजते। अत्र निश्चल, अलसेति कामुकसंबोधनमेव। अचेतनोपमया निश्चेष्टत्वातिशयस्तेन च विप्रलम्भातिशयो व्यङ्ग्यः' इत्याहुः। संभोगाद्विप्रलम्भस्यातिमधुरत्वेन[९] तत्र योजयति- **अथवा निस्पन्देति**[१०]।

**स्वरूपमिति**। लक्षणमित्यर्थः। **अतो नेति**। अभिधया प्रतिपादयतीत्यर्थे वैयर्थ्यं स्पष्टमेव। **इदं चेष्टायामिति**। पदघटितः संकेत इत्यभिमानः। इत एव वाऽस्वरसादाह— **स्पर्शादिवर्ण इति**। माधुर्यादिनिरूपितवाचकत्वापत्तिरिति भावः। चेष्टातिव्याप्तिस्तु विशेष्यतया शब्दनिवेशाद्वारणीयेति बोध्यम्। **विषयः**। देशः। **तत्रेति**। तदीयसंकेत

---

१ ख. °न ज°। २ क °सि त्वं तत्र नाग°। ३ क. °म्। तच्च चे°। ४ क. °र्णेष्वति°। ५ क. °य च। ६ घ. चैत्रादि°। ७ क. °त्रम्। अत्र चा°। ८ क. ग. °यास्तत्वेना। ९ क. घ. °स्य मधु°। १० क °ति। अतो °।

**इहागृहीतसंकेतस्य शब्दस्यार्थप्रतीतिरभावात्संकेतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राव्यवधानेन संकेतो गृह्यते स तस्य वाचकः ।**

तद्योगिनि तत्पदप्रयोगस्य लक्षणयैवोपपत्तेः । न च साक्षात्संकेतवान्वाचक इत्येतावतैवे स्वस्थत्वेऽभिधत्त इत्यस्य वैयर्थ्यम् । संयोगादिनाऽभिधायां नियमितायां वाच्यार्थव्यञ्जकतादशायामतिव्याप्तेर्वारणीयत्वात् । न च तथाऽपि तत्रातिव्याप्तिरेवेति वाच्यम् । यस्य शब्दस्य यत्राव्यवहितसंकेतग्रहो यदर्थग्रह उपयुज्यते तत्र स तदर्थवाचक इति हि लक्षणार्थः । अथ संकेतग्रहस्य शब्दसहकारितायां किं मानमिति चेदगृहीतसंकेतस्य शब्दादर्थप्रत्ययाभावः । इदं च 'यत्राव्यवधानेन संकेतो गृह्यते' इत्यादिवृत्तिदर्शनात्संकेतविशेषणतया साक्षात्पदं व्याख्यातम् ।

वस्तुतस्तु संयोगादिनाऽभिधायां नियमितायां यत्र शक्यान्तरध्वननं तत्र वाचकत्वं मा प्रसाङ्क्षीदित्यभिधानक्रियाविशेषणं साक्षादिति । तत्र तु वाक्यार्थप्रतीतिव्यवधानेन तत्प्रतीति-

इत्यर्थः । अग्रे च व्यवहितसंकेतत्वादिति पाठः । संकेतसत्त्वादिति पाठे तु तत्रेत्यस्य देश इत्यर्थः । व्यवहितत्वं च शक्यसंकेतग्रहप्रयोज्यग्रहविषयत्वम् । स चेत्थं वृक्षविशेषश्चैत्यपदाद्बोध्यः । तद्योगी देशश्च तत्पदाद्बोध्य इति । रूढिलक्षणायाः शक्तितुल्यत्वात्संकेतस्य तत्रानुभूयमानत्वाच्च तत्रैव प्रत्युदाहृतम् । **लक्षणयैवेति** । तच्छक्यच्छेदेऽपि यथाकथंचिच्छक्यसंबन्धोऽस्त्येव । तादृशस्यैव लक्षणाप्रयोजकत्वादिति भावः । **वाच्यार्थेति** । द्वितीयवाच्यार्थेत्यर्थः । **यस्य शब्दस्य यत्रेति** । काल इति शेषः । अपभ्रंशादौ वाचकत्वस्येष्टत्वेन तत्रातिव्याप्तिर्न शङ्क्या । अन्यथा वाच्यव्यङ्ग्यतायां माए इत्यादेरनुदाहरणत्वापत्तेरित्याहुः । **संकेतो गृह्यत इति** । वृत्तौ गृह्यत इत्यस्य 'यदर्थप्रतिपत्तये' इत्यादिः । साक्षात्संकेतग्रहसहकारेण यदा यदर्थप्रतिपत्तिरिति फलितोऽर्थः । संकेतपदेन च शक्तिरुच्यते । संकेतग्राह्यत्वात्तस्याः । सा च बोधजनकत्वरूपेति पञ्चमशेषे वक्ष्यते । अत्र च वाचकव्यवहारविषयत्वं लक्ष्यतावच्छेदकम् । अतो न लक्ष्यतावच्छेदकलक्षणयोरभेदः ।

ननु लक्षणास्थले तत्तत्पदात्तत्तल्लक्ष्यार्थो बोद्धव्य इत्यादीच्छायाः संकेतत्वमेव नास्ति[10] । शक्यसंबन्धेनैव तद्बोधात् । एवं च तद्व्यावृत्त्यर्थं संकेतविशेषणं साक्षात्पदं व्यर्थमित्यरुचेराह—**वस्तुतस्त्विति** । संकेतितमिति तु साक्षादेव माधुर्यादिव्यञ्जके स्पर्शादिवर्णेऽतिव्याप्तिवारणाय । अनेनैव चैत्यादियोगिदेशबोधकचैत्यादिपदे नातिव्याप्तिः[11] । संकेतपदस्य शक्ति-

१ क. ख. ग. शब्दादर्थविशेषप्रतिपत्तेर° । २ क. °व सुस्थ° । ३ क. °ते स तत्र तद° । ४ इदं वाक्यं क. पुस्तके न दृश्यते । ५ क. व्यञ्जकतायां । ६ क. °पत्तेः । संके° । ७ क. शक्तिग्राहकः समयः । स चास्मादयमर्थो बोध्य इत्याकारः । अस्यार्थ वाच्योऽस्यायं वाचकोऽयमयमित्यादिशब्दप्रयोगरूप इत्यादि मञ्जूषायां प्रतिपादितम् । अत्र । ८ ग. °ते । द्विस्त्रिसंकेत° । ९ क. °त्यादि संकेत एव नास्ति । १० ग. °ास्ति । एवम् । ११ क. °प्तिः । उच्यत° ।

**संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।**

**यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव, तथाऽप्यानन्त्याद्व्यभिचाराच्च तत्र संकेतः कर्तुं न युज्यत इति गौः शुक्लश्चलो**

रित्यप्रसङ्गः । न च संकेतितपदवैयर्थ्यम् । लक्ष्यप्रतीतावपि वाच्यप्रतीतिव्यवधानाभावात् । स्पर्शादिवर्णानां साक्षादेव माधुर्यादिव्यञ्जकत्वाच्च ।

भास्करस्तु "लक्ष्यस्याप्यन्विताभिधाननये संकेतितत्वात्तत्रातिव्याप्तिवारणाय साक्षादिति विशेषणम् । तदनभ्युपगमे तु 'साक्षादभिधत्ते' 'संकेतितमभिधत्ते' इति लक्षणद्वयम् । न चाऽऽद्यस्य चेष्टायामतिव्याप्तिः । शब्दत्वस्य प्रकरणादेव लाभात् ।" इत्याह । तत्तु 'साक्षात्संकेतो गृह्यते' इत्यादिवृत्तौ साक्षात्त्वस्य संकेतितविशेषणतया व्याख्यानेन विरोधादुपेक्षणीयम् । किं च प्रथमे माधुर्यादिव्यञ्जकस्पर्शादिवर्णेष्वतिव्याप्तिः । तेषां साक्षादेव शृङ्गारादिव्यञ्जकत्वात् । द्वितीयं तु वाच्य एव व्यङ्ग्यतादशायामतिव्याप्तम् । न च तत्रेष्टापत्तिः । संकेतवान्वाचक इत्यस्यैव तदा सम्यक्त्वेन शेषवैयर्थ्यात् ।

**संकेतित० ।**

नन्वयं विभागोऽनुपपन्नः । जात्यादेरसंकेतितत्वात् । आद्यसंकेतग्रहस्य व्यवहारमात्राधीनतया प्रवृत्तिनिवृत्तियोग्यायां व्यक्तावेव तदौचित्यादिति । मैवम् । किं हि व्यक्तिषु सर्वासु संकेतग्रहो व्यवहाराङ्गम्, उत यस्यां कस्यांचित् । नाऽऽद्यः । आनन्त्यात् । नान्त्यः ।

परत्वात् । न च तत्र तस्य साऽस्ति । वृक्षसंबन्धेनैव तद्बोधादिति बोध्यम् । **व्यवधानाभावादिति** । गङ्गापदादपि साक्षात्तीराद्युपस्थितिरित्यभिमानः । इत एव वाऽरुचेराह— **स्पर्शादिति** । वस्तुतो न च संकेतितपदवैयर्थ्यमित्यादिस्पर्शादिवर्णानां साक्षादेव माधुर्यव्यञ्जकत्वाच्चेत्यन्तग्रन्थो बहुषु पुस्तकेषु न दृश्यते ।

**लक्ष्यस्याप्यन्वितेति** । इतरान्विते शक्तावितरत्वेन तीरस्यापि भावादिति अभिमानः । **विशेषणमिति** । अभिधानक्रियाया इत्यर्थः । साक्षात्त्वं च पदजन्यपदार्थोपस्थितिविशेष्यत्वमिति बोध्यम् । **शृङ्गारादिव्यञ्जकत्वादिति** । तद्गतमाधुर्यव्यञ्जकत्वादित्यर्थः । अतो न पूर्वविरोधः । **व्यञ्जकतादशायामिति** । तद्बोधके शब्द इति शेषः । **शेषेति** । अभिधत्त इतीत्यर्थः ।

**जात्यादिरिति** । आदिना गुणक्रियासंज्ञाः । **संकेतग्रहस्य** । तत्प्रयोज्यशक्तिग्रहस्य । **योग्यायां व्यक्तावेवेति** । नयनानयनाद्यनुमिततत्तद्गोचरप्रवृत्त्यनुमितस्वजनकव्यक्तिज्ञानजनकत्वनिर्वाहकशक्तेस्तज्ज्ञानविषयव्यक्तावेव सिद्धिरुचितेति भावः । **आनन्त्यादिति** । तथा च शक्तिग्रहासंभवः । सामान्यलक्षणा तु निरस्तैव तन्त्रान्तर इति भावः । **यतोऽनु-**

१ ख. °रात्तत्र । २ ग. न शक्यत° । ३ क. वाक्यार्थप्र° । ४ क. °तिपदम् । ५ क. °केतवि° । ६ क. व्यञ्जकता° । ७ °न विशेष्यवै° । ८ क. ग. भानादि° । ९ क. °ति भावः । १० ग. °नः । साक्षा° । ११ क. च इतरप्रतीत्यव्यवधानेन जायमानत्वम् । शृङ्गा° । १२ क. ग. °ज्ञाः । योग्यायां । १३ क. ग. °वृत्त्यानु° । १४ क. °हकश° । १५ क. °भव इति भावः ।

**डित्थ इत्यादीनां शब्दानां विषयविभागो न प्राप्नोतीति[1] च तदुपाधावेव संकेतः । उपाधिश्च[2] द्विविधः—वस्तुधर्मो वक्तृयदृच्छासंनिवेशितश्च । वस्तुधर्मोऽपि[3] द्विविधः—सिद्धः साध्यश्च । सिद्धोऽपि[4] द्विविधः—पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च[5] । तत्राऽऽद्यो जातिः । उक्तं हि वाक्यप-**

व्यभिचारप्रसङ्गात् । यतोऽगृहीतसंकेतगोपिण्ड इव घटादेरपि[6] गोपदात्प्रतीतिः प्रसक्ता । अगृहीतसंकेतत्वस्य तुल्यत्वात् । किं च न यत्र संकेतग्रहस्तस्यापि प्रतीतिरिति व्यभिचारान्न व्यक्तौ संकेतः । अपि च व्यक्तिसंकेतपक्षे गौः शुक्लश्चलो डित्थ इत्यादिशब्दानामर्थ-[7]भेदो न प्राप्नोति । किमेवमनिष्टमिति चेत्सहप्रयोगानुपपत्तिः । तस्मादुपाधावेव संकेतः ।

स च द्विविधः—स्वभावतो वस्तुवृत्तिर्घटत्वादिः, वक्तुर्यदृच्छया संनिवेशितो नामरूपः । तत्राऽऽद्यो द्विविधः–सिद्धः साध्यश्चेति । सिद्धोऽपि[8] द्वेधा–पदार्थस्य प्राणप्रदः, विशेषाधानहेतुश्च । प्राणप्रदत्वं च यावद्वस्थितिसंबन्धित्वम्[9] । यद्यपि शुक्लत्वादेर्नित्यत्वाभ्युपगमे गोत्वादिना समकालमेव संबन्धित्वम्, तथाऽपि तस्य संबन्धः कदाचिदपैत्यपि, न तु गोत्वादेरिति[10]

**हीतेति** । तद्विषयकशाब्दबोधे सामान्यतो गृहीतसंकेतपदज्ञानं[11] कारणमित्यङ्गीकार इत्यर्थः । तद्विषयसंकेतवत्पदज्ञानं कारणमित्यङ्गीकारेऽप्याह–**किं च न यत्रेति** । व्यभिचारात्[12] । तथा व्यक्तिपक्षे कार्यकारणभावस्य वक्तुमशक्यत्वात्तत्र संकेत एव नेति भावः[13] । समानप्रकारकत्वेनैव कार्यकारणभावाङ्गीकारान्नायं दोष इत्यत आह–**अपि चेति**[14] । व्यक्तावेवेति पक्षेऽयं दोषः[15] । **सहप्रयोगानुपपत्तिरिति** । इदं चिन्त्यम् । व्यक्तिविशेषोपस्थितये तेषां सहप्रयोगात् । तद्बोध्यव्यक्तिमात्रबोधकत्वस्यैव पर्यायत्वात् । विशिष्टशक्तौ तु नागृहीतविशेषणान्यायेन व्यक्तौ शक्तेर्जात्यादौ तदवच्छेदकत्वस्य च स्वीकारे गौरवेण च विशेषण एव सोचितेत्याह—**तस्मादुपाधावेवेति** । विशेषणे जात्यादावेवेत्यर्थः । व्यक्तिबोधस्त्वा[16]क्षेपादनुमानसहकृतपदेनैवेति केचित् । लक्षणयेत्यन्ये । व्यञ्जनयेति परे । विशेषणशक्तिग्रहस्यैव विशिष्टस्मृतित्वं विशिष्टशाब्दत्वं च कार्यतावच्छेदकमित्यपरे[17] ।

**संनिवेशितः** । संकेतसंबन्धेन तत्तद्धर्मिणि स्थापितः । **नामरूप इति** । डित्थडपित्थादिशब्दरूपः । संज्ञाशब्दादेव च प्रागुक्तरीत्या संज्ञाविशिष्टधर्मिबोध इति बोध्यम् । **कदाचिदपैत्यपीति** । पाकेन रञ्जनेन च[18] वर्णान्तरकरण इत्यर्थः[19] । क्रियासमवायस्य

१ ख. °ति त° । २ ख. ग. °श्च व° । ३ ख. °पि सि° । ४ ख. ग. °पि प° । ५ क ख. °श्च आद्यो । ६ क. °टादावपि । ७ क. °दिपदाना° । ८ क. °पि द्विविधः । ९ क. °वदवस्थिति° । १० क. °देरपीति । ११ क. °हीते सं° । १२ °त् । व्यक्तिपक्षे तथाकार्य° । १३ क. वः । व्यक्तावेव शक्तिरिति पक्षे दूषणान्तरमाह–अपि चेति । १४ क. °ति । विशिष्टशक्तौ जात्याद्युपलक्षणीकृत्य व्यक्तौ शक्तिरिति पक्षे च नागृहीत° । १५ ग. °षः । विशिष्टशक्तौ तु नागृहीतविशेषणान्यायेन विशेषण एव । १६ क. °धस्य तु व्यञ्जनया निर्वाहः । संनि° । १७ ग. °रे । कदाचि° । १८ क. रूपान्तर° । १९ क. °र्थः । गौः स्व° ।

दीये—'न हि गौः स्वरूपेण गौर्नाप्यगौः, गोत्वाभिसंबन्धात्तु गौः' इति। द्वितीयो गुणः। शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते। साध्यः पूर्वापरीभूतावयवः क्रियारूपः। डित्थादिशब्दानामन्त्यबुद्धिनि-

---

विशेषः। तत्र प्राणप्रदो जातिः। उक्तं हि वाक्यपदीये—'नाहि गौः स्वरूपेण गौः, नाप्यगौः, गोत्वाभिसंबन्धात्तु गौः' इति। अस्यार्थः—'गौः स्वरूपेण न गोव्यवहारस्य, नाप्यगोव्यवहारस्य विषयः, गोत्वाभिसंबन्धात्तु गोव्यवहारस्य विषयः' इति। तथा च प्राणप्रदत्वमस्य सिद्धमिति। विशेषाधानहेतुस्तु गुणः। गोत्वादिनां लब्धसत्ताकं हि वस्तु शुक्लत्वादिना विशिष्यते। साध्यस्तु पूर्वापरीभूतैकदेशत्वेन विवक्षितः क्रियारूपच्छेदनादिः। यदुक्तम्—

यावत्सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते।
आश्रितक्रमरूपत्वात्सा क्रियेत्याभिधीयते॥ इति।

वक्तृयदृच्छासंनिवेशितस्तु शब्दरूपः। डित्थादिशब्दानां प्रथमवर्णप्रतीत्या किंचित्प्रकाशितमन्त्यवर्णबुध्या निःशेषतो ग्राह्यं नानावर्णात्मकघटादिपदवद्वर्णक्रमशून्यं स्फोटाख्यं शब्द-

---

नित्यत्ववादिमते तदन्यत्वं निवेश्यम्। **गौः स्वरूपेणेति**। अज्ञातगोत्वकेन धर्मिस्वरूपमात्रेणेत्यर्थः। **नाप्यगोव्यवहारस्येति**। अभावज्ञाने प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य कारणत्वादिति भावः। **गोत्वाभिसंबन्धात्त्विति**। एवं च यावद्गोव्यवहारं तत्र पिण्डे गोत्वस्य सत्त्वात्प्राणप्रदत्वमिति भावः। **विशेषाधानहेतुरिति**। तत्त्वं च यावदाश्रयस्थिति[10]संबन्धकभिन्नत्वे सति द्रव्यक्रियान्यत्वम्। **साध्यस्त्विति**। साध्यत्वेन विवक्षितः। तदेव दर्शयति—**पूर्वापरेति**[11]। अधिश्रयणाद्यवतारणान्तव्यापारसमूहो हि पाकक्रिया। विक्लित्त्यनुकूलत्वेन तेषामनुगमान्न नानार्थता। तत्र सर्वप्रागभावे भविष्यत्त्वम्। सर्वध्वंसे भूतत्वम्। कस्यचिद्वर्तमानत्वे वर्तमानत्वम्। एवं च भासमानपौर्वापर्यकावयवकत्वसमानाधिकरणो धर्मविशेषः साध्यत्वमिति फलितम्। **क्रियारूप इति**। धातुवाच्य इति यावत्। तथा च पाचकादीनां प्रकारीभूतक्रियायां शक्तिः[15]। वैयाकरणैः कृत्स्वेव कार्याभावाङ्गीकारादिति स्पष्टमस्मत्कृतवैयाकरणसिद्धान्तमञ्जूषायाम्। **किंचित्प्रकाशितमिति**। अल्पावयवावच्छेदेन चक्षुःसंनिकर्षे पटस्येवेत्यर्थः।

---

१ क. ख. ग. ये—गौः स्वरूपेण न गौर्ना°। २ क. °ना ल°। ३ ख. विशेष्य°। ४ क. ख. °यवक्रि°। ५ ग. °यादिरू° ६। क. °रवि°। ७ क. 'ना हि लब्धसत्ताकं व °। ८ क. °न विवक्ष्यते। ९ क. नां हि प्र°। १० ग. तिकभि°। ११ क. ति। बोद्धोऽधि° १२ क. °या। तत्र। १३ क. रणमुत्पाद्यत्वरूपं साध्य°। १४ क. च पचादीनां क्रियायां। १५ क. °क्तिः। किंचि°।

ग्राह्यं संहृतक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन संनि-
स्वरूपं डित्थादिष्वर्थेषूपाधित्वेन वक्त्रा यदृच्छया कल्प्यत इति संज्ञारूपयदृच्छात्मको डित्थादिशब्दः ।

चण्डीदासस्तु—अन्त्यं स्वलक्षणं बुद्ध्या निःशेषतो ग्राह्यं यस्य तत्, जातिप्रतीत्यनन्तरं व्यक्तिप्रतीतिरिति क्रमशून्यं च डित्थादीनां शब्दानां स्वरूपं डित्थादिष्वर्थेषूपाधित्वेन पदार्थोपस्थित्यनुकूलतया संकेत्यते । उपाध्यन्तरं तेषां नास्ति । किं तु धर्मिमात्रं ततः प्रतीयत इति वृत्त्यर्थमाह ।

---

**अन्त्यवर्णबुद्ध्येति** । पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतयेत्यर्थः । **निःशेषत इति** । सर्वावयवावच्छेदेन तत्संनिकर्षे संपूर्णपटस्येवेति भावः । **घटादिपदवदिति** । मतान्तरसिद्धस्य व्यतिरेके दृष्टान्ततेति बोध्यम् । **वर्णक्रमशून्यमिति** । वर्णक्रमग्रहशून्यमित्यर्थः । यथा पटप्रत्यक्षे न तन्तुक्रमभानं तद्वदित्यर्थः । एकः पट इतिवदेकं पदमिति व्यवहारादवयवातिरिक्तोऽवयवी स्फोटाख्यः स्वी क्रियत इत्यर्थः । अत एव तत्र तन्त्विवयत्तावत्पदज्ञानेऽपि न तत्र गणनां विना वर्णेयत्ताज्ञानमिति भावः । तदाह—**स्फोटाख्यमिति** । एतेन नानावर्णतत्तद्व्यवहितोत्तरत्वादिक्रमघटितपदत्वस्य शक्ततावच्छेदकत्वे गौरवमानन्त्यं चेत्यपास्तम् । **यदृच्छयेति** । डित्थादिपदं तादात्म्यसंबन्धेन डित्थादिनामविशिष्टतत्तदर्थबोधकं भवत्वित्याकारयेच्छयेत्यर्थः । यदृच्छाकल्पितत्वाच्च यदृच्छाशब्द इति व्यवहारस्तदाह—**यदृच्छात्मक इति** । अयमेव संज्ञाशब्दो द्रव्यशब्द इति च व्यवह्रियते । श्रावणज्ञानस्य शाब्दबोधे हेतुत्वाङ्गीकारान्नाऽऽत्माश्रय इति बोध्यम् ।

**चण्डीदास इति** । अन्त्यन्दवच्छेद्यं तच्च स्वलक्षणं धर्मिस्वरूपं बुद्ध्या तद्द्वारा निर्ग्राह्यं यस्य शब्दरूपस्य । शब्दज्ञानेन धर्मिप्रत्ययनात् । गवादिपदे हि विशेषणप्रतीत्यनन्तरं व्यक्तिप्रत्यय इति क्रमस्तच्छून्यम् । आहत्यैव धर्मिप्रत्यायनादिति भावः । उपाधित्वेनेत्यस्य व्याख्या—**पदार्थोपस्थित्यनुकूलतयेति** । **संकेत्यते** । केवले धर्मिण्येवेति शेषः । अयं भावः—तदुपाध्युपलक्षिते शुक्लवासा देवदत्त इत्यादाविव शक्तिग्रह इति न तस्य बोधे भानम् । शुक्लवासस्त्ववदयं तन्निवेशस्तु निर्धर्मितावच्छेदककशक्तिग्रहासंभवात्तत्सौकर्यायैवेति । तदेवाऽऽह—**उपाध्यन्तरमिति** । पदान्निर्विकल्पकं तु आकाशादिपदादाविष्टमेव । अत एवास्य द्रव्यशब्दत्वेन व्यवहार इति तद्भावः । यद्वाऽन्त्यमन्त्यवर्णप्रत्यक्षेण ग्राह्यं स्वलक्षणं शब्दरूपं यस्यार्थस्य बुद्ध्या ज्ञानेन निःशेषतः स्वरूपतोऽर्थतश्च ग्राह्यम् । अर्थबोधकत्वं हि पदस्वरूपम् । पद्यते बोध्यतेऽनेनेति व्युत्पत्तेः । तादृशं डित्थादिपदानां

---

१ ग. °पं य° । २ क. °न तदर्थो । ३ क °रात्स्फोटा° । ४ क. र्थः । तदाह । ५ क. ग. °पदस्य । ६ ग. °वमित्य° । ७ क. ग. °दं डित्था° । ८ क. ग. °राच्च नात्मा° । ९ क. ग. °प्रत्यय° । १० क. ग. °षः । तदेवाऽऽह । ११ ग. °काश्यप° । १२ क. °ति भावः । १३ क. ग. °ध्यत इति ।

वेश्यत इति[1] सोऽयं संज्ञारूपो[2] यदृच्छात्मक इति । 'गौः शुक्लश्चलो[3] डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः' इति महाभाष्यकारः । परमाण्वादीनां[4] तु गुणमध्यपाठात्पारिभाषिकं[5] गुणत्वम् । गुणक्रियायदृच्छानां वस्तुत एकरूपाणामप्याश्रयभेदाद्भेद इव लक्ष्यते । यथैकस्य[6] मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदात् ।

---

तच्च भाष्यविरुद्धम् । तत्र शब्दस्यैवोपाधित्वेन व्यवस्थापनात् । डित्थादिशब्दाड्डित्थादिनामाऽयमिति प्रतीतेः । एवं हि 'गौः, शुक्लः, चलः, डित्थः, इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः, इति महाभाष्यकारः । नन्वेवं परमाण्वादिशब्दानां जातिशब्दत्वं स्यात् । न गुणशब्दत्वम् । परमाणुत्वादीनां प्राणपदत्वेन जातित्वादिति चेत्सत्यम् । जातिशब्दा एव ते । वैशेषिकनयानुसारेण तु तत्र गुणशब्दत्व[7]व्यवहारः । ननु पटादिनिष्ठानां शुक्लादिगुणानां गुडतण्डुलादिनिष्ठानां पाकादिक्रियाणां च भेदस्य च प्रत्यक्षतः सिद्धौ व्यक्तिसंकेतपक्षोक्तदोषः समान इति चेत् , न । गुणादीनां स्वरूपत[8] एकरूपाणामाश्रयभेदाद्भेद इव लक्ष्यते । यथैकस्यैव मुखस्य खड्गमुकुराद्यालम्बनभेदात् ।

---

स्वरूपं स्वेन डित्थादिपदेन रूप्यते बोध्यत इत्यर्थरूपं तत् । डित्थाद्यर्थेषु पदार्थोपस्थित्यनुकूलतया तादात्म्येन तदवच्छेदकतयेत्यर्थः ।

**तच्च भाष्येति** । किं च पक्षद्वयेऽप्यन्त्येत्यादि व्यर्थम् । सर्वेषामेव शब्दानां स्वज्ञानद्वाराऽर्थज्ञानजनकत्वात् । अर्थज्ञानानन्तरमेव स्वरूपतोऽर्थतो[9] बोधाच्च । अन्त्यशब्दस्य प्रागुक्तार्थे शक्त्यभावाच्च । अपि च बहुव्रीहौ बुद्धिनिर्ग्राह्यान्त्यकमिति स्यात् । विशेषणत्वात् । किं चाऽऽद्यव्याख्यायामुपाधित्वेनेत्यसमञ्जसम् । सर्वेषामेव शब्दानां तथात्वेनास्य वैलक्षण्यानापत्तेः । पक्षद्वयेऽपि लक्षणारक्तेश्चेति दिक् । तत्र डित्थादिपदं डित्थादिपदवति शक्तमित्याकारः शक्तिग्रहः । न चैतादृशशक्तिग्रहात्पूर्वं डित्थादिपदवत्त्वेनाज्ञानात्कथं तदवच्छिन्ने शक्तिग्रहे[10]: संबन्धसामान्येन वैशिष्ट्यस्यैव तत्र निवेशात् । यद्वा गुणगुणिनोरिव वाच्यवाचकयोरपि तादात्म्याङ्गीकारा[11]ददोषः । वाचकत्वाख्यसंबन्धविशेषग्रहस्तु पश्चादेवेति बोध्यम् । **चतुष्टयीति** । उपाधेर्विशेषणस्य चातुर्विध्यादित्यर्थः । प्रवृत्तिरितीत्यस्योवाचेति शेषः । प्रवृत्तिः प्रवृत्तिनिमित्तम् । **परमाण्वादीति** । आदिना परममहच्छब्दसंग्रहः । परमाणुशब्दः परिमाणविशेषे तद्वति च[12] । **गुडतण्डुलादिनिष्ठानामिति** । तन्निष्ठविक्लित्तीनां भेदे तदनुकूलव्यापाराणामपि भेद इति भावः । कारणभेदस्य कार्यभेदनियामकत्वादित्याशयः । **उक्तदोषः** । आनन्त्यव्यभिचाररूपः । **भेद इवेति** । प्रत्यभिज्ञालाघवादिभिः शुक्लादीनामैक्यसिद्धौ भेदप्रतीतिराश्रयभदौपाधिकी । तत्संबन्धस्यैव च नाशोत्पादाविति भावः । **आलम्बनम्** । प्रतिबिम्बाश्रयः ।

---

१ क. ख. ग. °ति स सं°। २ ग. °क उपाधिरिति । ३ ख. श्चलति डि° । ४ क. °नां गु°। ५ ख. °मध्ये पा°। ६ ग. °कस्यापि मु°। ७ क. °ब्दत्वव्य°। ८ क. °या स्वात्मकस्वरूपसंबन्धेन तद°। ९ क. °तो बाधा°। १० क. °हः । गुणगुणिनो°। ११ क. °राभ्रानुपपत्तिः । चतु°। १२ ख. ग. च । उक्त°।

**हिमपयःशङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्ल इत्याद्यभिन्नाभिधानप्रत्ययोत्पत्तिस्तच्छुक्लत्वादि सामान्यम् । गुडतण्डुलादिपाकादिष्वेवमेव पाकत्वादि । बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति**

---

अपरे तु—हिमपयःशङ्खादिषु शुक्लादिर्गुणः परमार्थतो भिन्न एव । पाकाच्छुक्लं रूपं नष्टं श्याममुत्पन्नमिति प्रतीतेः । न चेयं भ्रान्तिः । बाधकाभावात् । न चोत्पादविनाशौ समवायस्य प्रतीयेते इति युक्तम् । तदनुल्लेखात् । तथा चानुगतप्रत्ययानुरोधेन तत्रापि शुक्लत्वादिजातिः, लाघवाच्च तत्रैव संकेत इत्यभ्युपेयम् । एवं गुडतण्डुलपाकादिष्वपि पाकत्वादिकम् । तथा तारत्वादिविरुद्धधर्माध्यासाद्बालवृद्धाद्युदीरितडित्थादिशब्देष्विव डित्थाद्यर्थेष्वपि बालाद्यवस्थापरिणतनानापरिमाणरूपविरुद्धधर्माध्यासाद्भिन्नेषु डित्थत्वादिकं जातिः । सैव च डित्थादिपदशक्या । एकत्वात् । इत्यङ्गीकर्तव्यम् । एतेन ' बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थादित्वमस्ति ' इति व्याख्यातम् । इवार्थेन वाशब्देन चशब्दस्य स्थानविनिमयात् । यद्वा सर्वेष्वेव वाच्येषु सामान्यमस्तीत्यत्र तद्वाक्यतात्पर्यम् । अथवा भाष्यकारमते डित्थादिशब्द एवोपाधिरिति तन्मतेऽपि शब्दस्य नानात्वात्तन्निष्ठा जातिरेव शक्याऽङ्गीकार्येति तत्तात्पर्यम् । तस्मात्सर्वशब्दानां जातिरेव संकेतविषय इत्याहुः । येषां मते संज्ञाशब्दानां शब्दो नोपाधिः किं तु ततो धर्मिमात्रप्रतीतिस्तेषां मत आकाशादिशब्दानां कथं जातौ संकेत इति चिन्त्यम् ।

---

**प्रतीतेरिति** । अबाधिततारतम्यप्रतीतेश्चेत्यपि बोध्यम् । **अनुगतः** । एकाकारः । प्रत्ययेत्यभिधानस्याप्युपलक्षणम् । अभिधानं शाब्दव्यवहारः । **एवम्** । अनुगतप्रत्ययाभिधानाभ्याम् । शब्देष्वपि भेदस्य साध्यतयोपमानत्वायोगादाह—**यद्वेति** । सर्वेष्वेव वाच्येष्विति पाठः । शब्दपरेषु शब्देषु शब्दस्यैव वाच्यत्वादिति भावः । **अथवेति** । बालाद्युदीरितानां तेषामनेकत्वात्तद्भेदेन व्यङ्ग्यस्यापि भेद इत्याशयः । **शब्दो नोपाधिरिति** । किं तु निर्विकल्पक एव बोध इति भावः । **तेषां मत इति** । धर्मिमात्रस्य ततो बोधाङ्गीकर्तॄणां मते जातेर्बोधाविषयत्वादिति भावः । **आकाशादिपदानां चेति** । एकव्यक्तिमात्रवृत्तिजात्यनङ्गीकारादित्यर्थः । आनन्त्यव्यभिचाराभावेन व्यक्तावेव शक्त्यौचित्यमिति भावः । **चिन्त्यमिति** । चिन्ताबीजं तु शब्दाश्रयत्वेनैव ततो बोधस्यानुभवि-

---

१ क. °ङ्खादिषु° । २ क. °त्यादिरनुगताभिन्ना° । °त्यादिरभि° । ३ ख. °ण्डुलपा° । ४ क. ख. ग. पाकादित्वम् । ५ क. ख. ग. °ने डित्थाद्यर्थे वा डित्थादित्वमस्ती° । ६ क. °ष्टं रक्तमुत्पन्नमित्यादिप्र° । ७ घ. शुक्लादि° । ८ क. °साद्विभिन्नेषु डित्थादित्वं जा° । ९ क. °ने डित्थाद्यर्थे वा । १० क. वाक्येषु । ११ क. °तितु तात्प° । १२ घ. °पाधिस्ते° । १३ घ. दिपदानां । १४ क. अनौपाधिकतार° । १५ क. °ठः । भाष्यकाररीत्या डित्थादिशब्देषु शब्दस्य वाच्यत्वादिति भावः । शब्दो नो° । ग. °ठः । शब्दो नो° । १६ क. तु जातिपदमख° ।

**सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमित्यन्ये । तद्वानपोहो वा शब्दार्थः कैश्चिदुक्त इति ग्रन्थगौरवभयात्प्रकृतानुपयोगाच्च न दर्शितम् ।**

**स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥ ८ ॥**

**स इति साक्षात्संकेतितः । अस्येति शब्दस्य ।**

---

नैयायिकादयस्तु—' न व्यक्तिमात्रं शक्यं न वा जातिमात्रम् । आद्य आनन्त्याद्व्यभिचाराच्च । अन्त्ये व्यक्तिप्रतीत्यभावप्रसङ्गात् । न चाऽऽक्षेपाद्व्यक्तिप्रतीतिः । तस्माद्विशिष्ट एव संकेतः । न चाऽऽनन्त्यादशक्यता व्यभिचारो वा । गोत्वादिसामान्यलक्षणया सर्वव्यक्तीनामुपस्थितौ सर्वत्र संकेतग्रहसौकर्यात् , इत्यातिष्ठन्ते ।

सौगतास्तु—' व्यक्तावानन्त्यादिदोषाद्भावस्य च देशकालाननुगमाभावात्तदननुगतायामतद्व्यावृत्तौ संकेतः ' इत्यादिमतानि प्रकृतानुपयोगान्न सूत्रकृता दर्शितानि ।

ननु वाच्यलक्ष्यव्यङ्ग्याः पदार्था इति विभागोऽनुपपन्नः । मुख्यत्वेन प्रसिद्धस्य तुरीयस्यापि भावादित्यत आह—**स मुख्यो०** ।

साक्षात्संकेतित एवार्थो मुख्यत्वेन प्रसिद्ध इत्यर्थः । कथमसौ तथेत्यत आह—**तत्र मुख्यो०**।

---

कत्वेन शब्दवृत्तिजातिरेव प्रवृत्तिनिमित्तम् । न चाऽऽकाशः शब्दाश्रय इति सहप्रयोगानुपपत्तिः । पदवाच्यत्वपरतया परिहारादिति बोध्यम । केचित्तु जातिपदमखण्डोपाधिपरम् । तेनाऽऽकाशत्वाभावत्वादिपरिग्रह इत्याहुः । जातिरेवेति पक्षे शुक्लादिपदैः शुक्लत्वजात्या स्वाश्रयाश्रयत्वपरम्परया पटादेराक्षेप इति बोध्यम् । एतेन गोत्वादिभिः स्वसमवाय्यवयवाक्षेपः स्यादिति निरस्तम् । साक्षात्स्वाश्रयेऽन्वयासंभव एव परम्परयाऽऽश्रयस्याऽऽक्षेपात् । तच्छक्तपदस्य तादृशशाब्दबुद्धित्वं कार्यतावच्छेदकमिति पक्षे तु दोषशङ्कैव नेति दिक् ।

**न चाऽऽक्षेपादिति** । तथा सति वृत्त्याऽनुपस्थितत्वेन शाब्दबोधविषयत्वानुपपत्तिरिति भावः । **सर्वत्र सौकर्यादिति** । संकेतग्रहस्येत्यर्थः ।

**अनुगमाभावादिति** । क्षणभङ्गवादिनः स्थिरसामान्याभावादित्यर्थः । **प्रकृतानुपयोगादिति** । उपाधिशक्तौ हि विशेष्यस्य व्यङ्ग्यत्वसंभवात्तत्प्रकृतोपयोगि । एवमुपहितशक्त्यादिमतमिति भावः ।

---

१ क. °र्शितः । २ घ. नवाक्षे° । ३ घ. °त्र सौं° । ४ क. °लाननुगमात्त° । ५ क इति । ६ क. पक्षे स्वाश्रयस्वाश्रयान्यतरस्य व्यञ्जनया बोधस्तात्पर्यवशादिति न दोषः । न चा° । ७ ग. °र्थः । अभिधा° । ८ क मेव° ।

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया ॥ ९ ॥**

अस्य शब्दस्य तत्रार्थे योऽभिधारूपो व्यापारः स मुख्यो यत उच्यत इत्यर्थः। यद्वाऽभिधाव्यवहारस्य नाभिधा समयाभावादित्यादौ दर्शनात्तां लक्षयति—तत्र मुख्य इत्यादि। तत्र यो व्यापारः सोऽभिधेत्युच्यत इत्यर्थः। मुख्यत्वोत्कीर्तनं च वक्ष्यमाणस्य लक्षणायास्तद्बाधपुरःसरत्वस्योपपत्तये।

यत्तु—'मुख्यार्थबाधे तद्योग इत्यादिकारिकोपयुक्ततया वाच्यस्य संज्ञान्तरं करोति—स मुख्य इत्यादि' इति सूत्रावतारणं तदयुक्तम्। वाच्यार्थबाधे तद्योग इत्येवमेव तत्रोपपत्तौ तदर्थं संज्ञान्तरकरणस्य गौरवेणानौचित्यात्।

वाचकं निरूप्य लाक्षणिकं लक्षयितुं लक्षणां लक्षयति—**मुख्यार्थ०**।

रूढिः प्रसिद्धिः। प्रयोजनं व्यङ्ग्यार्थप्रतिपादनरूपम्। क्रिया व्यापारः। अत्रान्योऽर्थो यल्लक्ष्यते सा लक्षणेति लक्षणम्। लक्ष्यते प्रतिपाद्यत इत्यर्थः। अतो नाऽऽत्माश्रयः। मुख्यार्थबाधः शक्यसंबन्धो रूढिप्रयोजनान्यतरच्चेति हेतुत्रयवचनम्। व्यञ्जनायां शक्तिस्मृतौ चातिव्याप्तिवारणाय तद्योग इति लक्षणेऽपि प्रवेशनीयम्। योगस्य च हेतुत्वं विवक्षितम्। अतो न मुख्यार्थसंबन्धिव्यञ्जनायामप्यतिव्याप्तिः। मुख्यस्याप्यभिधारूपमुख्या-

**अभिधारूपो व्यापार इति**। ज्ञायमानवृत्तेर्व्यापारत्वमित्यभिमानः[1]। **सोऽभिधेत्युच्यत इति**। एवं च संकेतितार्थबोधजनकव्यापारत्वमभिधालक्षणम्। **मुख्यत्वेति**[2]। 'स मुख्योऽर्थः' 'तत्र मुख्यः' इत्यनेनेत्यर्थः। कारिकया 'संकेतग्राह्यं शक्त्याख्यपदार्थान्तरमभिधा' 'तादृशं शब्दार्थयोस्तादात्म्यमभिधा' इति मीमांसकपातञ्जलमतमुपनिबद्धमिति बोध्यम्। पातञ्जलमतं वैयाकरणसिद्धान्तमञ्जूषायामस्माभिरुपपादितम्। **तद्बाधपुरःसरेति**। अस्य मुख्यत्व एतदभावेऽन्याश्रयणमित्यर्थाल्लभ्यते[4]। लोकेऽपि ग्रामे कस्यचिन्मुख्यत्वे कृते तदभावे गौण आयाति।

**तद्योगे**। शक्यार्थयोगे[5]। **अथेति**। चार्थे। **प्रयोजनादिति**। प्रयोजनाभिसंधेरित्यर्थः। प्रयोजनाभिसंधिपूर्वकं लाक्षणिकशब्दप्रयोगे वक्तुः प्रवृत्तिर्भवतीति तस्य लक्षणाप्रयोजकत्वं बोध्यम्। **व्यञ्जनायाम्**। तज्जन्यबोधे। **शक्तिस्मृताविति**। शक्तेः शक्यार्थादन्यत्वादिति भावः। सा च न[6] मुख्यार्थसंबन्धेनेति तद्योग इत्यनेन तद्व्यावृत्तिः। **योगस्य च हेतुत्वमिति**[7]। न च संबन्धस्याव्यावर्तकतया तात्पर्यमेव तदर्थभासकमस्तु

१ क. त्तां प्रतिपादयति तत्र। २ (चू०) अभिमान इति। अत्रारुचिबीजं तु वृत्तिज्ञानस्यैव व्यापारत्वं न तु ज्ञायमानवृत्तेः। अत एव मिथ्याभूतवृत्तेर्ज्ञानाच्छाब्दबोधः। ३ क. ग. 'ति। तत्र मुख्यः स मुख्योऽर्थ इत्य°। ४ ग. °वेऽन्याश्र°। ५ क ग. °गे। प्रयो°। ६ (चू०) नमुख्यार्थेति। किंतु शक्तिसंबन्धेनैव मुख्यार्थबोध इत्याशयेन। ७ क. °ति। प्राग्गृहीत°।

र्थसंबन्धेन प्रतिपादनं संभवतीति तद्वारणायान्य इत्युक्तम् । अन्योऽमुख्यः । यदिति गुणीभूतलक्षणक्रियामात्रपरामर्शः । तेन ' शक्यसंबन्धेनाशक्यप्रतिपत्तिर्लक्षणा ' इति प्राचीनमतेनैतल्लक्षणम् । 'तद्धेतुः शक्यसंबन्धो लक्षणा' इति परमार्थः । प्रतिपत्तिहेतुर्हि वृत्तिः । न तु प्रतिपत्तिरेव । यत्तु यदित्यस्य यत इत्यर्थकतया संबन्धपरतयैव सूत्रव्याख्यानं तदयुक्तम् ।

' नाभिधा समयाभावाद्धेत्वभावान्न लक्षणा '

इत्यत्र 'मुख्यार्थबाधादित्रयं हेतुः' इति व्याख्यानविरोधात् । न हि संबन्धस्वरूपत्वे लक्षणायाः संबन्धो हेतुर्घटते ।

ननु प्रतिपादनं चेल्लक्षणा न तर्हि शब्दधर्मः । गङ्गादिशब्दानां नीरादिकमुपस्थाप्य विरामे नीराद्यर्थेनैव स्वसंबन्धेन तीराद्यर्थप्रतिपादनाल्लक्ष्यस्य पदेन संबन्धविरहाच्चेत्यत आह—आरोपिता क्रियेति । शक्यव्यवहितलक्ष्यार्थविषयत्वाच्छब्द आरोपित एव स व्यापारः ।

---

किं संबन्धज्ञानेनेति वाच्यम् । अनुपस्थिते पदार्थे तात्पर्यस्य ग्रहीतुमशक्यत्वात् । संबन्धग्रहश्च प्रागेव कदाचिज्जातः । एवं च प्राग्गृहीतसंबन्धेन पुंसा तेन संबन्धेन तटादिस्मृतौ पश्चात्तत्र तात्पर्यग्रहे तच्छाब्दबोधः । अनुपपत्तिप्रतिसंधानस्यापि तात्पर्यग्रह एवोपयोगो बोध्यः । **गुणीभूतेति** । कर्तृविशेष्यकबोधनय इदम् । क्रियाविशेष्यकबोधनये तु न कश्चिद्दोषः । **तेन शक्यसंबन्धेनेति**[3] । अननुगततज्ज्ञानहेतुकेत्यर्थः । पदाच्छक्यस्य तिस्तया च शक्यसंबन्धिलक्ष्यस्मृतिरिति तन्मतम् । अत्र नव्याः—मुख्यार्थबाधज्ञानकालिकत्वमपि शक्यसंबन्धज्ञाने देयम् । तेन मुख्यप्रवाहाद्यबाधज्ञानकालिकतीरादिस्मृतौ नातिव्याप्तिः । गुणो द्रव्यमित्यादौ गुणपदेन स्वकारणत्वेन ज्ञातगगनोपस्थितौ च नातिव्याप्तिः । वस्तुगत्या गुणस्य गुणपदशक्यत्वेऽपि शक्यत्वेन तदाऽग्रहात् । मुख्यार्थबाध इत्यस्य च तात्पर्यविषय इतरपदार्थे मुख्यार्थतावच्छेदकावच्छिन्नबाधज्ञानकालीनेत्यर्थः । तेन च्छत्रिणो यान्तीत्यादौ नाव्याप्तिः । तात्पर्यविषयेऽच्छत्रिगमने छत्रिणामन्वयबाधात् । निर्हेतुकलक्षणाभासे तिव्याप्तिवारणाय रूढित इत्यपि लक्षणे निवेश्यम् । एवं च शक्तित्वेन शक्तिज्ञानजन्यशक्यस्मृतिविषयशक्यसंबन्धज्ञानजन्या तात्पर्यविषयेतरपदार्थतावच्छेदकावच्छिन्ने मुख्यार्थतावच्छेदकरूपेण तदवच्छिन्नान्वयबाधज्ञानकालीना रूढिप्रयोजनान्यतरहेतुकाऽशक्यार्थप्रतिपत्तिस्तज्जनकज्ञानविषयशक्यसंबन्धरूपव्यापारो वा लक्षणेत्याहुः । **न तु प्रतिपत्तिरिति** । यदि त्वन्वयबोधरूपप्रतिपत्तिहेतुर्वृत्तिरियं तु स्मृतिरित्युच्यते तदा मूलोक्तमपि सम्यक् । **हेतुर्घटत इति** । शाब्दबोधजनकशक्यसंबन्धस्यैव लक्षणात्वेन तद्विशेषणलक्ष्यार्थशाब्दबोधसामग्रीप्रदर्शनपरत्वाद्धेतुपदस्य च लक्षणाविशेषणांशप्रयोजकपरत्वान्न काऽप्यसंगतिरिति चिन्त्यमेतत् ।

**प्रतिपादनं चेदिति**[11] । भावल्युडन्तं करणल्युडन्तं वा । **आरोपित एवेति** । स्वहे-

---

१ क. °शक्यार्थप्र° । २ क. °न्धस्वरूप तेन ल° । ३ क. ग. ति । तज्ज्ञान° । ४ क. °क्यबोधे शक्यसं° । ५ अत्र नव्या इत्यारभ्य चिन्त्यमेतदित्यन्तो ग्रन्थः कपुस्तके न दृश्यते । ६ क. हाबाध° । ७ ग. °णपदस्य । ८ क. तात्पर्यग्रहे । ९ क. °नशक्य° । १० ग. हुः । हेतु° । ११ क. °ति । स्वार्थणिचि भाव° ।

**कर्मणि कुशल इत्यादौ दर्भग्रहणाद्ययोगाद्गङ्गायां घोष इत्यादौ च गङ्गादीनां घोषाद्याधारत्वासंभवान्मुख्यार्थस्य बाधे विवेचकत्वादौ सामीप्ये च संबन्धे रूढितः प्रसिद्धेः, तथा गङ्गातटे घोष इत्यादेः प्रयोगाद्येषां न तथा प्रतिपत्तिस्तेषां पावनत्वादीनां धर्माणां तथाप्रतिपादनात्मनः प्रयोजनाच्च मुख्येनामुख्योऽर्थो लक्ष्यते यत्स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा ।**

---

वस्तुतोऽर्थनिष्ठ एवेत्यर्थः । तदेतदुक्तम्—'सान्तरार्थनिष्ठ' इति । रूढितो यथा—कर्मणि कुशल इत्यादौ । अत्र दर्भग्रहणायोग्यत्वान्मुख्यार्थबाधः । विवेचकत्वं च संबन्धः । एवमन्यत्राप्यूह्यम् । तथा च तैलङ्गादिजनपदशब्दा जने । त्वक्शब्दस्त्वगिन्द्रिये । प्रयोजनाद्यथा—'गङ्गायां घोष' इत्यादौ । अत्र हि गङ्गातीरे घोष इति मुख्यशब्दात्तादृशं पावनत्वं न प्रतीयते यादृशं ' गङ्गायां घोष ' इति लाक्षणिकात् ।

लक्षणा तावद्द्विविधा—शुद्धा, गौणी च । तत्राऽऽद्या द्विविधा—उपादानलक्षणा लक्षणलक्षणा च । ते अपि प्रत्येकं सारोपा साध्यवसाना चेति द्विविधे इति शुद्धाभेदाश्च-

---

तुसंबन्धप्रतियोगिशक्तत्वसंबन्धरूपपरम्परया शब्दनिष्ठत्वमात्रेणाऽऽरोपितत्वोक्तिः । तादृशसंबन्धसत्त्वात्तत्राऽऽरोप इत्यर्थो वा । **वस्तुत इति ।** साक्षात्संबन्धेनेत्यर्थः । **सान्तरार्थनिष्ठ इति ।** साक्षादर्थनिष्ठः सान्तरा परम्परया शब्दनिष्ठ इत्यर्थः । विभक्त्यर्थान्वये प्रकृतिजन्योपस्थितेर्हेतुत्वात्स्वशक्यसंबन्धेन गङ्गादिपदजन्यैव तीराद्युपस्थितिरित्येव युक्तमिति । शक्यसंबन्धस्यैव लक्षणात्वेऽपि तस्यापि परम्परयैव शब्दनिष्ठत्वं बोध्यम् । तथा च तीरादिरूपोऽर्थः स्वशक्यसामीप्यादिसंबन्धेन गङ्गापदवानिति ज्ञानमेव लक्षणाज्ञानम् । तदेव च शाब्दबोधे हेतुः । एवं च लक्षणाजन्यशाब्दबोधे तादृशज्ञानजन्योपस्थितित्वेन हेतुत्वमिति तीरं प्रवाहसंबन्धीति ज्ञानस्य न हेतुत्वं[10]न शक्तिज्ञानजन्यस्मृतित्वेन हेतुत्वं वाच्यमित्यतिगौरवम् । एवं च यत्र क्वचित्तादृशपदसंबन्धाग्रहस्तीरादौ, किंत्वर्थसंबन्धग्रह एव तत्रापि मानसतादृशग्रहोत्तरमेव लक्षणाजन्यबोध इति न व्यभिचारोऽपीत्याहुः । **विवेचकत्वमिति ।** तद्रूपं सादृश्यमित्यर्थः । विवेचकत्वं च सतो ग्रहणमसतः परित्यागरूपं कुशग्राहिणि दक्षे च वर्तत इति भावः । कर्मणि कुशलः, लावण्यं, मण्डपः, कुण्डलमित्यादौ दक्षत्वादेः प्रवृत्तिनिमित्तत्वाद्व्यु[11]त्पत्तिनिमित्तस्य च झटित्यप्रतीतेर्बाधप्रतिसंधानं विनाऽपि तत्प्रतीतेश्च कुशेः कलचि कुशलपदस्य वैयाकरणैः साधनाच्च रूढिशक्तिरेवात्रेति केचित् । इत एव वाऽस्वरसादाह—**त्वगिति ।** एवं तैलपदस्य तिलविकारे द्रवे शक्तस्य सार्षपे निरूढलक्षणा । **घोषः ।** आभीरपल्ली ।

अर्थान्तरसंक्रमितवाच्यध्वन्यादिव्यवस्थायै लक्षणां विभजते—**लक्षणेति । ते अपीति ।**

---

१ क °णायो° । २ क. °पाधिकरणत्वा° । ख. ग. °पाद्याधिकरणत्वा° । ३ ग. °मुख्यस्यार्थ° । ४ क. °र्थे बा° । ५ क. °त्यादिप्र° । ६ ख. ग. °षां तथा न प्र° । ७ ग. °ख्यो ल° । ८ क. ग. क्तिः । वस्तु° । ९ क. °तिप्रयोज्योपस्थितिर्हेतुविभक्त्यन्तस्यैव वा लक्षणेति न दोषः । विवेच° । १० ग. °त्वे शक्तिज्ञाने जन्यस्मृतिजन्यस्मृतित्वेन । ११ (वृ॰) व्युत्पत्तिनिमितस्येति । व्युत्पत्तिर्योगः । तन्मूलकं यन्निमित्तं प्रवृत्तिनिमित्तं कुशग्रहणकर्तृत्वं तस्येत्यर्थः । १२ क. ग. °कारद्र° ।

**स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।**
**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥ १० ॥**

---

स्वारः । गौणी तु द्वेधा—सारोपा साध्यवसाना च । इति षड्विधत्वं लक्षणायाः कारिकात्रयेण प्रतिपादयति—**स्वसिद्धये०** ।

स्वसिद्धये स्वार्थस्यान्वयप्रवेशासिद्धये पराक्षेपः परलक्षणम् । स्वार्थापरित्यागेन परार्थलक्षणमुपादानमित्यर्थः । अतः 'काकेभ्यो दधि रक्ष्यताम्' इत्यस्य न तृतीयभेदत्वम् । एवं परार्थं स्वसमर्पणं परस्यान्वयप्रवेशासिद्ध्यर्थं स्वसमर्पणं स्वार्थसमर्पणं स्वार्थपरित्यागः । स्वार्थपरित्यागेन परार्थलक्षणं लक्षणमित्यर्थः । एताभ्यामुपाधिभ्यां शुद्धैव द्विविधोक्ता न तु गौण्यपीत्यर्थः । एते एवान्यत्र जहत्स्वार्थाजहत्स्वार्थे इत्युच्येते ।

ननु शुद्धैवेत्यनुपपन्नम् । गौण्या अपि तथात्वसंभवात् । तथाहि—गौर्वाहीक इत्यादौ लक्षणलक्षणा तावत्स्फुटैव । उपादानलक्षणा तु गोबाहीकोभयविषये गाव एते समानीयन्तामित्यादाविति चेन्मैवम् । अत्रोपचारबीजं संबन्धः सादृश्यमन्यो वा । आद्ये शक्यसादृश्यस्य शक्यावृत्तितया कथं शक्यस्यापि लक्ष्यता । येनोपादानलक्षणा स्यात् । अन्त्ये कथं गौणी । सादृश्यसंबन्धप्रयुक्तलक्षणाया एव गौणीत्वात् ।

---

उपादानलक्षणलक्षणे इत्यर्थः । तत्रोपादानलक्षणा सारोपा यथा । कुन्ताः पुरुषाः प्रविशन्ति । साध्यवसाना यथा । कुन्ताः प्रविशन्तीति[1] कुन्तान्भोजयेति च । लक्षणलक्षणा तु तद्रूपादाहारोप्यते मूल एवेति बोध्यम् । लक्ष्यवाचकपदसत्त्वासत्त्वमात्रेणाऽऽरोपाध्यवसानव्यवहार इति बोध्यम् । स्वार्थापरित्यागश्च विशेष्यान्वयिनाऽन्वयित्वम् । स्वार्थपरित्यागश्च तस्योपस्थितिसत्त्वेऽपि शाब्दबोधेऽप्रवेशमात्रमित्याहुः ।

**शक्यावृत्तितयेति** । सादृश्यस्य भेदघटितत्वादिति भावः । **सादृश्यसंबन्धप्रयुक्तलक्षणाया एव गौणीत्वादिति** । साधारणधर्मप्रकारेणेत्यादिः । एतेन कुन्ताः पुरुषा इत्यादौ सादृश्यसंबन्धेन कुन्तपदस्य कुन्तवत्पुरुषलक्षणायां कुन्तानुप्रवेशसत्त्वादुपादानत्वं दुर्वारमित्यपास्तम् । एवं गङ्गैव घोषवतीत्यादौ शैत्यपावनत्वादिप्रकारकलक्षणायां कुन्ताः प्रविशन्तीत्यादावपि पीडाकारित्वादिना लक्षणायां च गौणत्वं संभवत्येव । लक्षणलक्षणात्वं तु गौण्या इष्टमेवेति भावः । नव्यास्तु यदा यत्किंचिद्गोसदृशत्वेन गोबाहीकसमुदायप्रतिपिपादयिषया गाव एते यान्तीति प्रयुक्तं तदा गौण्यप्याद्या दुर्वारैव । वस्तुतो रूपके भेदाघटितसादृश्यस्यैव संबन्धताया वक्ष्यमाणत्वेन सा दुर्वारैवेत्याहुः । केचित्तु पङ्कजं कुमुदमित्यादौ पङ्कजादिपदानां योगार्थमात्रे लक्षणास्थले जहदजहल्लक्षणा तृतीयाऽपि । न च योगमात्रेण निर्वाहे किमत्र लक्षणया । एकपदोपस्थाप्यत्वप्रत्यासत्त्या प्रथमं रूढ्यर्थे

---

१ ख. ग. °ति । लक्ष° । २ ग. °हुः सादृश्य° । ३ च. एतेनेत्यारभ्यान्यदेतदित्यन्तो ग्रन्थः क. पुस्तके न दृश्यते । ४(चू०)सूर्यविकासिपद्मरूपरूढ्यर्थबोधकस्य पङ्कजशब्दस्य चन्द्रविकासिकमलार्थककुमुदविशेषणत्वे पङ्कोत्पन्नत्वरूपयोगार्थे लक्षणा ।

'कुन्ताः प्रविशन्ति यष्टयः प्रविशन्ति' इत्यादौ कुन्तादिभिरात्मनः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते। तत उपादानेनेयं लक्षणा।

गौरनुबन्ध्य इत्यादौ श्रुतिसंचोदितमनुबन्धनं कथं मे स्यादिति

---

तत्रोपादानलक्षणा यथा—'कुन्ताः प्रविशन्ति, यष्टीः प्रवेशय' इत्यादौ। अत्र कुन्तादयः स्वतोऽसंभवत्प्रवेशास्तत्सिद्धये स्वसंयोगिपुरुषाँल्लक्षयन्ति। यथा च काकेभ्यो दधि रक्ष्यतामित्यादिसंग्रहस्तथोक्तम्।

अन्ये पुनर्जातिपदार्थवादिन उपादानलक्षणामन्यामुदाहरन्ति। यथा—'गौरनुबन्ध्य' इति श्रुत्या प्रतिपादितमनुबन्धनं गोपदार्थस्य जातेर्मम कथं स्यादिति जात्याऽवच्छेदकतया कथंचित्स्वान्वयसिद्धये व्यक्तिर्लक्ष्यते। ननु व्यक्तिरभिधेयैव न तु लक्ष्येति चेन्न। व्यक्तौ

---

योगार्थस्यान्वयेन जनितान्वयबोधतया निराकाङ्क्षत्वेन पुनरनुसंधानकल्पने मानाभावेन च कुमुदतात्पर्यग्रहस्य तद्बाधप्रतिसंधानपूर्वकं नियमेन ग्रहाच्च लक्षणाया एवौचित्यात्। रूढ्यर्थविशेष्यकयोगार्थबोधस्यैव व्युत्पन्नत्वाच्चेत्याहुः। वस्तुतस्तु इयं जहत्स्वार्थैव। परार्थं स्वसमर्पणमिति तल्लक्षणात्। तत्र स्वसमर्पणं स्वार्थत्यागः। स च स्वार्थत्वावच्छिन्नस्य यस्य कस्यचिदवच्छेदकावच्छिन्नस्य वेत्यन्यदेतत्।

**असंभवत्प्रवेशाः**। असंभवत्प्रवेशान्वयाः। **तत्सिद्धये**। स्वीयशक्यार्थस्य प्रवेशान्वयसिद्धये। कुन्तसंयोगित्वं लक्ष्यतावच्छेदकम्। अतिगहनत्वप्रतीतिः प्रयोजनम्। यष्टीः प्रवेशयेत्यत्र च तात्पर्यविषयीभूतभोजनाद्यर्थप्रवेशाद्यन्वयानुपपत्तिर्द्रष्टव्या। रूढौ तु श्वेतो धावतीति। येत्तु शक्त्योपस्थितकुन्तस्य लक्षणयोपस्थितसंबन्धिन्यन्वयाद्विशिष्टलाभ इति। तन्न। एकपदार्थयोर्भेदेन परस्परमन्वयस्य एवकारातिरिक्तस्थलेऽस्वीकारात्। अत एव हरिर्धावतीत्यत इन्द्रसंबन्ध्यश्वो धावतीति न बोधः। विद्वन्मानसेत्यादावभेदेन बोधश्चेत्याहुः।

**अन्य इति**। मण्डनमिश्राः। स्यादितीत्यन्तेन मुख्यार्थबाधसूचनम्। **अवच्छेदकतया**। स्वनिष्ठपरिच्छेदकतानिरूपकत्वेन। अनेन लक्षणामूलयोगप्रदर्शनम्। **कथंचित्**। परम्परया स्वान्वयिवृत्तित्वरूपया। **स्वान्वयसिद्धये**। स्वस्यानुबन्धनान्वय-

---

१ ग. °शन्तीत्या°। २ क. °त्मप्रवेशनार्थं पुरु°। ग. °त्मप्रवेशस्य सिद्ध्ये स्व°। ३ क. °इत्यत्र श्रु°। ४ क. ग. °तिचो°। ख. °तिनोदि°। ५ क. °नं मे कथं स्या°। ६ क. °त्स्वार्थस्यान्व°। ७ क. °गार्थबाध°। ८ ग. °म्। रूढौ। ९ यत्त्वित्यारभ्येत्याहुरित्यन्तो ग्रन्थः क. पुस्तके न दृश्यते। १० स्वं जातिः। स्वान्वयिनी व्यक्तिः। तद्वृत्तित्वमनुबन्धने(चू.)।

जात्या व्यक्तिराक्षिप्यते। न तु शब्देनोच्यते।

'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे'

इति न्यायात्। इत्युपादानलक्षणा तु नोदाहर्तव्या। न ह्यत्र प्रयोजनमस्ति। न वा रूढिरियम्। व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते। यथा क्रियतामित्यत्र कर्ता, कुर्वित्यत्र कर्म, प्रविश

---

हि केवलायामेवाभिधा, जातिविशिष्टायां वा। आद्य आनन्त्यव्यभिचारौ। अन्त्ये नागृहीतविशेषणान्यायेन जातावेवाभिधा। व्यक्तिप्रतीतेराक्षेपादेव संभवात्। तदुक्तम्—

'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे'

इति। तदेतदपेशलम्। प्रयोजनस्य रूढेर्वा तृतीयलक्षणाहेतोरभावात्। जातिव्यक्तिपदार्थोदासीन्येन हि लोकप्रसिद्धिमाश्रित्य रूढिविचारः। कथं तर्हि भट्टमते व्यक्तिप्रतीतिः। जात्या आक्षेपात्। व्यक्तिं विना तस्या अभावात्। यथा क्रियतामित्यत्र क्रियया कर्तुः कुर्वित्यत्र कर्मणः।

---

सिद्धये। **नागृहीतेति**। एवं च लाघवाज्जातावेव शक्तिरिति तद्भावः। **आक्षेपादेवेति**। आक्षेपोऽत्र लक्षणा। **क्षीणशक्तिर्विशेषण इति**। उभयत्रापि शक्तिरिति मत इति भावः। **तृतीयेति**। तृतीयत्व लक्षणाहेतावन्वेति। **लोकप्रसिद्धीति**। लक्ष्यार्थेन विनाकृतः शक्यार्थो यस्य तादृशे पदे यल्लक्ष्यार्थबोधकप्रयोगबाहुल्यं सा रूढिः। यथा देशमात्रे प्रयुक्तस्य कलिङ्गपदस्य तद्वासिषु। गवादिपदस्य तु व्यक्तिं विना न क्वापि प्रयोग इति भावः। **जात्याऽऽक्षेपादिति**। आक्षेपोऽत्रानुमानम्। व्यक्तिं विनेत्यनेन व्याप्तिर्दर्शिता। अनुमानसहकृतपदेनैव व्यक्तिबोधः। पदजन्यपदार्थोपस्थितिहेतुहेतुमद्भावे वृत्त्यंस्यस्य गौरवेणाप्रवेश इति भावः। प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिरपि प्रकृतितात्पर्यविषयान्वितत्वविषयेति न विभक्त्यर्थान्वयानुपपत्तिरिति भावः। एवं चान्यलभ्यत्वादपि न लक्षणेति बोध्यम्। वस्तुतो लक्षणायामपि नोपादानत्वं जातेरनुबन्धनाद्यन्वयाभावेन विशेष्यान्वयिना तथाऽनन्वयादिति तत्त्वम्। **यथेति**। कृतिः साश्रया गुणत्वात्, सविषया कृतित्वादित्यनुमानेन तयोर्लाभ इति भावः। अत्र भट्टमते कथं व्यक्तिप्रतीतिरिति वदता स्वमते व्यञ्जनया सेति सूचितम्।

---

१ ग. °इत्यु°। २ क. °ह्यस्ति प्रयोजनमत्र। ३ क. ग. °णा। तृती°। ४ क. कृते। शक्यार्थे प्रयोगो यस्य। ५ क. ता। वृत्तिप्रयोज्योपस्थितिश्च शाब्दादौ कारणम्। व्यञ्जना। आक्षेपः। यथेति। ६ घ. यथेति। कृतिर्जातिर्वा साश्रया धर्मत्वात्। इति अनुमानेन। ७ क. °वः। योग्य°। ग. °वः। श्रुता°।

पिण्डीमित्यादौ गृहं भक्षयेत्यादि च । पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र च रात्रिभोजनं न लक्ष्यते । श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वात् ।

गङ्गायां घोष इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थमर्पयतीत्येवमादौ लक्षणेनैषा लक्षणा । उभयरूपा चेयं शुद्धा । उपचारेणामिश्रितत्वात् । अनयोर्भेदयोर्लक्ष्यस्य लक्षकस्य च न भेद-

---

अपरे तु—'पीनो देवदत्तो दिवा न भुङ्क्ते इति वाक्यमभोजी पीन इतिवत्पीनत्वान्वयप्रयोजकस्य भोजित्वस्याप्रतीत्या योग्यतामलभमानमन्वयं न बोधयति । तेन तत्सिद्धये रात्रिभोजनं लक्ष्यते । तथा च दिवा न भुङ्क्ते इति मुख्यमर्थमादायैव तल्लक्षणेत्युपादानलक्षणेयम्' इत्याहुः । तदप्यसम्यक् । शब्दाध्याहारनये श्रुतार्थापत्तेः, अर्थाध्याहारनयेऽर्थापत्तेरेव रात्रिभोजनप्रत्ययेन लक्षणानङ्गीकारात् ।

लक्षणलक्षणा तु गङ्गायां घोष इत्यादौ । अत्र तटादेर्घोषाद्यधिकरणत्वसिद्धये गङ्गादिशब्दाः स्वार्थमर्पयन्ति । स्वार्थं परित्यज्य तत्रैव वर्तन्ते । उभयरूपा चेयमुदाहृता शुद्धा । न तु गौणी । उपचारमिश्रा हि गौणीत्युच्यते । उपचारश्च सादृश्यसंबन्धेन प्रवृत्तिः । सादृश्यातिशयमहिम्ना भिन्नयोर्भेदप्रतीतिस्थगनं वा । न चोक्तयोस्तत्संभवः ।

केचित्पुनराचक्षते—उपचारामिश्रत्वं न शुद्धाया मिश्रातो भेदकम् । किं तु तटस्थत्वम् । तच्च लक्षकस्य मुख्यार्थस्य लक्ष्यस्य च भेदप्रतीतिः । तथाहि—गौर्वाहीकः, गौरयमि-

---

**योग्यतामिति** । अन्वयप्रयोजकरूपवत्त्वं योग्यतेति भावः । **श्रुतार्थापत्तेरिति** । श्रुतं शब्दस्तत्कल्पकार्थापत्तेरित्यर्थः । श्रुतशब्दादन्वयबोधानुपपत्तौ शब्दकल्पनं श्रुतार्थापत्तिः । **अर्थापत्तेरिति** । प्रत्यक्षादिना प्रमितस्य दिवाऽभोजिसंबन्धिपीनत्वस्य तद्भिनाऽनुपपत्तेरिति भावः ।

**घोषाधिकरणत्वसिद्धय इति** । तदन्वयसिद्धय इत्यर्थः । **स्वार्थम्** । स्वशक्यं प्रवाहरूपम् । **अर्पयन्ति** । अन्वयबोधानङ्गमुपस्थापयन्ति । **तत्रैव वर्तन्ते** । तद्विषयमेव बोधं जनयन्तीत्यर्थः । शुद्धैवेति व्याचष्टे—**उभयेति** । गौणीभेदः साध्यः । उपचारामिश्रत्वं हेतुः । **नचोक्तयोरिति** । शक्याभेदप्रतीतावपि भेदस्थगनं नास्तीति भावः ।

**शुद्धायाः** । उक्तद्विविधायाः । **मिश्रातः** । गौणीतः । **भेदप्रतीतिरिति** । भेद-

---

१ ग. °दि । पी° । २ ग. °त्र रा° । ३ ग. °त्तेदृष्टार्था° । ४ क. ख. ग. °णतासि° । ५ ख. °स्वार्थे सम° । ग. °स्वार्थमर्पय° । ६ क. ख. ग. °मिश्रत्वा° । ७ क. °णेत्या° । ८ क. °त्तेर्वा रा° । ९ क. °णा च ग° । १० क. °चोभयो° । ११ घ. भेदाप्र° । १२ क. °शक्यम् । अर्पयन्ति । स्वं परित्यज्यान्वयबो° । ग. °शक्यम् । अर्प° ।

**रूपं ताटस्थ्यम्[1]। तटादीनां गङ्गादिशब्दैः प्रतिपादने[2] तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः। गङ्गासंबन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः।**

---

त्यादौ भेदेऽपि शक्यलक्ष्ययोरभेदः प्रतीयते न तु गङ्गायां घोष इत्यादौ। तत्र भेदमात्रप्रतीतेरिति।

अन्ये तु 'गङ्गायां घोषः, यष्टीः प्रवेशय' इत्यनयोरेव परस्परभेदहेतुस्तटस्थत्वम्। गङ्गायामित्यत्र तत्सत्त्वात्। यष्टीरित्यत्र तदभावात्' इति मन्यन्ते।

तदुभयमप्यसत्। अस्ति हि गङ्गादिपदैस्तीरादिप्रतिपादने गङ्गादिनिष्ठपावनत्वादिरूपप्रतिपिपादयिषितप्रयोजनप्रत्ययः। तत्र गङ्गात्वादिप्रतीतिरेव बीजम्। न तु तीरत्वादिप्रतीतिरेव[3]। तीरे घोष इत्यत्रापि तत्प्रतीतिप्रसङ्गात्। अथ गङ्गाशब्देन तटप्रतिपादने गङ्गासंबन्धस्तत्र प्रतीयते। तदेवं च तद्बीजमिति चेन्न। एवं हि गङ्गातटे घोष इति मुख्यशब्दप्रयोगेऽपि तत्प्रतीतिः स्यात्। तत्संबन्धप्रतीतौ विशेषाभावात्। अथ बाधे जागरूके कथं गङ्गाशब्दादिभिर्गङ्गात्वादिकं तीरे बोध्यत इति चेदुच्यते। शब्देन लक्ष्येऽर्थे प्रतिपादिते तत्र मुख्याभेदो व्यञ्जनया प्रतिपाद्यते[7]। तदेतदुक्तम्—'तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः' इति। अत्र प्रतिपादन इति सतिसप्तम्या प्रत्ययस्याऽऽनन्तर्यं बोध्यते[8]। न च व्यञ्जने बाधः प्रतिबन्धक इति काव्यविदां पन्थाः। वक्ष्यति हि—'सारो-

---

मात्रप्रतीतिरित्यर्थः[10]। **अभेदः प्रतीयत इति**। फलतयेति शेषः।

**एवं हि गङ्गातट इति**। गङ्गादिपदजन्यतटत्वादिविशिष्टशाब्दबोधत्वमेव तन्नियामकमस्तु किमभेदप्रत्ययेन[11]। त्वामस्मि वच्मि, कमलानि कमलानि, उपकृतं बहु नाम, साहेन्तीत्यादौ वाच्यार्थभेदप्रत्ययस्य प्रकृताननुगुणत्वाच्चेति नव्याः। **गङ्गादिशब्दैः**। गङ्गादिबोधकशब्दैः। **तत्त्वेति**[12]। गङ्गात्वेत्यर्थः। गङ्गाऽभेदेति यावत्। **न च व्यञ्जन इति**। [13]बाधितार्थबोधकतयैव तस्या धर्मिग्राहकमानसिद्धत्वादिति भावः[14]। येषां तु बाधज्ञानं न बोधे प्रतिबन्धकं तन्मते व्यञ्जन इत्यस्य तज्जन्यबोधे प्रामाण्यग्रह इत्यर्थः। व्यञ्जनायां बाधस्याप्रतिबन्धकत्वे संमतिमाह—**वक्ष्यति हीति**[15]। द्वितीयमपि न युक्तम्। यष्टीरित्यस्य गङ्गायामित्यैतो[16]

---

१ ख. °म्। तीरादी°। २ क. नेन त°। ३ क. °तिरपि। तीं°। ४ क. °व त°। ५ क. °के ग°। ६ क. °कं कथं तीं°। ७ °क. ते। न तु व्यञ्जने बाधः प्रतिबन्धक इतिकाव्यविदां पन्थाः। तदे°। ८ क. °सौ हि प्र°। ९ क. °ते। वक्ष्यति च सारो°। १० क. ग. र्थः एवं हि। ११ क. येनेति नव्याः। १२ क ग. र्थः। न च व्य°। १३ बाधितार्थेति (चू०)। 'योगः फलेन नो' इति वक्ष्यमाणत्वात्। १४ क. ग. वः। व्यञ्जनायां। १ ग. °ति। संक्षे°। १६ क. °लस्य विशेषाभावाच्चेति दिक्। सामाना°। द्वितीयमिति।

**सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।**

**आरोप्यमाण आरोपविषयश्च यत्रानपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते सा लक्षणा सारोपा ।**

**विषय्यन्तः कृतेऽन्यस्मिन्सा स्यात्साध्यवसानिका ॥ ११ ॥**

---

पसाध्यवसानयोर्गौणभेदयोर्भेदेऽप्यभेदावगमः सर्वथैवाभेदप्रतीतिश्च फलम् ' इति । किं बहुना बाधित एव पावनत्वादिविशेषस्तटादौ प्रतीयते । यत्सूत्रयिष्यति—'योगः फलेन नो ' इति । नन्वेवं कथं गौण्यामेवाभेदप्रत्ययं प्रयोजनं वक्ष्यति शुद्धभेदयोस्तु प्रयोजनान्तरमिति चेन्न । गौण्यां तन्मात्रस्य प्रयोजनत्वात् । शुद्धभेदयोस्तु मुख्यस्य प्रयोजनान्तरस्यापि भावात् । नतु शुद्धायामभेदप्रत्ययस्याभावादिति संक्षेपः ।

गौणीभेदौ लक्षयन्नेव विभजते—**सारोपा०।**

अन्याऽर्थाद्गौणी, आरोपाध्यवसानाभ्यां भिद्यते न तूपादानलक्षणाभ्यामिति तुशब्दार्थः । विषयी, आरोप्यमाणो गवादिर्विषय आरोपस्य वाहीकादिश्च यत्र तथा अनपह्नुतभेदौ सामानाधिकरण्येनोक्तौ शब्दप्रतिपाद्यौ सा लक्षणा सारोपा । विषयविषयिणोर्भेदेनोपन्यासस्याऽऽरोपपदार्थत्वात् ।

**विषय्यन्तः०।**

---

विशेषाभावादिति दिक् । **संक्षेप इति ।** नव्यास्तु शक्यतावच्छेदकप्रकारकलक्ष्यबोध एव लक्षणाज्ञानस्य कार्यम् । एवं च गङ्गात्वादिनैव तीरस्य बोध इति शैत्यपावनत्वादिप्रतीतये मध्ये शक्याभेदविषयकं ज्ञानान्तरं नाङ्गीकार्यम् । न चैवं प्रवाहत्वविशिष्टे घोषाभावज्ञानेन तीरादौ प्रवाहत्वाभावज्ञानेन च प्रतिबन्धात्कथं लक्ष्यार्थबोध इति वाच्यम् । बाधबुद्धेः शाब्दबोधाप्रतिबन्धकत्वात् । न चैवमपि जायमानबोधेऽप्रामाण्यशङ्काजनने ततश्चमत्कारानापत्तिरिति वाच्यम् । विषयतासंबन्धेन शक्यतावच्छेदकतासमानाधिकरणधर्मे तदन्यतरविषयकबाधग्रहजन्याप्रामाण्यज्ञानं प्रति जनकतारूपविषयनिष्ठप्रत्यासत्त्या लक्षणाज्ञानस्य प्रतिबन्धकत्वान्न दोष इत्याहुः ।

**सामानाधिकरण्येनोक्ताविति** । समानविभक्तिकपदोपस्थाप्यत्वादभेदसंसर्गकान्वययोग्यावुक्तावित्यर्थः । अतीतत्वमविवक्षितम् । तदाह—**शब्दप्रतिपाद्याविति ।** एवं च तदन्वये बाधाल्लक्षणाप्रसर इति भावः । विषयतावच्छेदकरूपेण शब्दजन्यविषयप्रतिपत्तिकालिकी विषयिणोऽसाधारणधर्मादिप्रकारिकोपस्थितिः सारोपेत्यर्थः । एवं साध्यवसाना तथाविषयप्रतिपत्त्यकालिकी सेति बोध्यम् ।

---

१ क. चेन्नौ° । २ क. °कीति ।

विषयिणाऽऽरोप्यमाणेनान्तःकृते निगीर्णेऽन्यस्मिन्नारोपविषये सति सा साध्यवसाना स्यात् ।

**भेदाविमौ च सादृश्यात्संबन्धान्तरतस्तथा ।**

**गौणौ शुद्धौ च विज्ञेयौ,**

इमावारोपाध्यवसानरूपौ सादृश्यहेतू भेदौ गौर्वाहीक इत्यत्र गौरयमित्यत्र च ।

अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि

---

विषयिणाऽऽरोप्यमाणेनान्यस्मिन्नारोपविषयेऽन्तःकृत निगीर्णे । भेदनानुपस्थित इति यावत् । विषयिमात्रं यत्र निर्दिश्यते न तु विषयोऽपि सा साध्यवसाना । विषयिणा विषयतिरोभावस्यात्राध्यवसानपदार्थत्वात् ।

एतौ भेदौ शुद्धभेदेऽपि भवत इति प्रतिपादयन्नेव शुद्धाया गौण्याश्च लक्षणमाह—**भेदाविमौ०** ।

इमावारोपाध्यवसानरूपौ भेदौ । तौ यदि सादृश्यसंबन्धात्तदा गौणौ । अथ संबन्धान्तरात्तदा शुद्धौ । तत्र सादृश्याद्यथा—'गौर्वाहीकः' इति सारोपः । 'गौरयम्' इति साध्यवसानः । यद्यपि वाहीकस्य वाहीकत्वेन, इदंतया वोपस्थितौ सारोपत्वमेवोचितम् । तथाऽपीदंत्वस्याऽऽरोप्यविशेषणतया तदुदाहरणं द्रष्टव्यम । अत एव वक्ष्यतेऽनिश्चयरूपसंकरावसरे—

'नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति'

इत्यत्रैतदिति बिम्बविशेषणतया किमियमतिशयोक्तिः किं वैतदिति वक्त्रं निर्दिश्य बिम्बमित्यारोपाद्रूपकमिति ।

अत्र केचित्—गोशब्दस्य मुख्यतो गोत्वं प्रवृत्तिनिमित्तम् । लक्षणया तु गोशब्दार्थगतं जाड्यमान्द्यादि तथा भवतीति गोशब्देन जडत्वेन रूपेण बाहीक उच्यते । तदयुक्तम् । अशक्यस्याशक्यवृत्तेश्च धर्मस्याप्रवृत्तिनिमित्तत्वात् । शक्यत्वे शक्यवृत्तित्वे स्वभिन्नशक्यानधिकरणत्वस्य तत्त्वात् ।

---

**मुख्यत इति** । शक्त्या गोत्ववदर्थप्रतिपादकत्व इत्यर्थः । लक्षणया बाहीकरूपार्थप्रतिपादने तु लक्षणयोपस्थितं गोवृत्तिजाड्यादि तथा प्रवृत्तिनिमित्तम् । **उच्यत इति** । शक्त्या बोध्यत इत्यर्थः । **अशक्यस्येति** । जाड्यस्य लक्ष्यत्वात् , बाहीके संकेतविरहेण तस्य गोपदाशक्यत्वाच्च गोवृत्तिजाड्यस्य तद्वृत्तित्वाच्चेति भावः । **शक्यत्व इति** । शक्यवृत्तिद्रव्यत्वादावतिप्रसङ्गवारणाय शक्यत्व इति । व्यक्तिमात्रबोधकाकाशादिपदबोध्याकाशादिव्यक्तावतिप्रसङ्गवारणाय शक्यवृत्तित्व इति । न च तत्र स्वभिन्नशक्याप्रसिद्ध्या तृतीयद-

---

१ क. ग. °साना । भे° । ख. °सानिका । भे° । २ ख. इमौ सारोपसाध्य° । ३ क. °हेतुकौ गौ° । ४ क. °कत्वे° । ५ ग. °र्थः । तया । ६ ख. घ. तदर्थप्र° । ७ क °द्व्यक्ता° ।

**गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्तीति केचित् । स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते न तु परार्थोऽभिधीयत इत्यन्ये । साधारणगुणाश्रयणेन परार्थ एव लक्ष्यत इत्यपरे । उक्तं चान्यत्र—**

**अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।**
**लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥ इति ।**

---

अपरे तु—'न गवादिशब्देन बाहिकादिः प्रतिपाद्यते । किं तु गवादिगतस्य जाड्यादिगुणस्याभिन्नतया बाहीकादिगता जाड्यादयो गुणा एव लक्ष्यन्ते' इत्याहुः । तदप्यसम्यक् । गौर्बाहीक इत्यादिसामानाधिकरण्यानुपपत्तेः ।

इदं पुनरत्र तत्त्वम्—साधारणं जाड्यमान्द्यादि लक्ष्यतावच्छेदकमाश्रित्य बाहीकादिर्लक्ष्यत इति । तेन जडो बाहीक इत्यादिवाक्यार्थो भवति । तदुक्तमन्यत्र—

'मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे ।
अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ॥
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता । इति ।

---

लाभावः । स्वभिन्नशक्याधिकरणं यद्यत्तद्भेदस्यैव विवक्षणात् । क्वचित्पुत्रादावाकाशादिपदसंकेते तत्प्रसिद्धेश्च । अवयवसंयोगरूपाकृतेरपि शक्यत्ववादिनां मते तत्रातिव्याप्तिवारणाय वा तत् । अवयवभूतदध्न्यतिप्रसङ्गवारणाय शक्यानधिकरणत्वे इति । तस्य शक्यत्वे स्वावयवरूपशक्यवृत्तित्वे सत्यप्यवयविरूपशक्याधिकरणत्वात् । प्रमेयपदप्रवृत्तिनिमित्ते प्रमेयत्वेऽव्याप्तिवारणाय स्वभिन्नेति । प्रमेयत्वस्यापि प्रमाविषयत्वात् । येन संबन्धेन शक्यवृत्तिता तेन संबन्धेन स्वभिन्नशक्यानधिकरणत्वस्य विवक्षणादेकार्थसमवायेन सत्पदशक्यैकत्वस्य सत्पदप्रवृत्तिनिमित्तसत्तायां सत्त्वेऽपि तत्र नाव्याप्तिः । स्वभिन्नपदेन च प्रवृत्तिनिमित्ततत्समनियतधर्मभिन्नत्वं विवक्षणीयम् । तेन प्रमेयत्वे स्वभिन्नवाच्यत्वसत्त्वेऽपि न क्षतिरित्यन्यत्र विस्तरः ।

अभिन्नतयेति । साजात्येन वेत्यपि बोध्यम् । **गुणा एवेति** । न गुणिन इत्यर्थः । तेषां बाहीकशब्दादेव लाभादिति भावः । **अनुपपत्तेरिति** । न च जातिशक्ताविवानुमानसहकृतपदेन व्यक्तिबोधान्नानुपपत्तिरिति वाच्यम् । अन्वयानुपपत्त्या प्रसरन्त्या लक्षणायाः साक्षादन्वययोग्यार्थबोधकतैवोचितेत्यभिप्रायात् ।

**अभिधेयाविनाभूतेति** । अविनाभावः संबन्धः । तद्ग्रहश्च लोके धर्मिण्येवेति

---

१ ख. ग. °श्रयेण° । २ क. °रार्थो ल° । ३ क. °त्र अभि° । ४ क. ग, °काशपद° ।

**अविनाभावोऽत्र संबन्धमात्रं न तु नान्तरीयकत्वम्। [1]तथात्वे हि मञ्चाः क्रोशन्तीत्यादौ लक्षणा न स्यात्। अविनाभावे चाऽऽक्षेपेणैव सिद्धेर्लक्षणाया नोपयोग इत्युक्तम्।**

**'आयुर्घृतम्, आयुरेवेदम्' इत्यादौ [2]च सादृश्यादन्यत्कार्यकारणभावादि संबन्धान्तरम्। एवमादौ [3]च कार्यकारणभावादिलक्षणपूर्वे[4]**

लक्ष्यमाणगुणैरिति लक्ष्यमाणा ये गुणा जाड्यादयस्तैरेव यदि योगः शक्यसंबन्धस्तदा गौणी वृत्तिरिति। अविनाभावश्चात्र संबन्धमात्रमभिमतम्। न तु व्याप्तिः। 'मञ्चाः क्रोशन्ति' इत्यादावभावात्। दशाविशेषविशिष्टस्य तत्रापि साऽस्त्येवेति चेत्तर्हि आक्षेपादेव व्यापकप्रतीतिरस्तु किं लक्षणयेत्युक्तम् 'गौरनुबन्ध्यः' इत्यत्र। संबन्धान्तरात्सारोपो यथा—'आयुर्घृतम्' इति। साध्यवसानो यथा—'आयुरेवेदम्' इति। एवमादौ सादृश्यादन्यो यः कार्यकारणभावादिः संबन्धस्तत्पूर्वके आरोपाध्यवसाने। अत्र गौणभेदे सारोपे भेदेऽपि ताद्रूप्य·

तदाशयः[5]। एतेन गौणी, अतिरिक्ता वृत्तिरित्यपास्तम्। लक्ष्यमाणगुणैरिति। लक्ष्यतावच्छेदकैरित्यर्थः। गुणलक्ष्यतावच्छेदकिका लक्षणा गौणीति भावः[6]। अनेन लक्ष्यतावच्छेदकेऽपि लक्षणां सूचयति। प्रतीतिरिति उपस्थितेर्लक्षणात्वे भावे क्तिन्। पक्षान्तरे तु करण इति बोध्यम्। **तैरेव यदि योग इति**। तद्वारको यदि योग इत्यर्थः। आह्लादयति मुखेन्दुरित्यादौ धर्मत्वेनेन्द्वादिवृत्तिधर्मस्य लक्षणान्न पौनरुक्त्यम्। धर्मत्वेन च प्रत्त्यासत्त्योपात्तधर्मस्यैव भानमित्याहुः। केचित्तु[7] सदृशत्वेनैव सदृशो लक्ष्यते। शक्यसंबन्धोऽप्येतदेव। न चैवं सादृश्यस्य शब्दोपात्तत्वे चन्द्र इव मुखमित्यादाविवोपमैव स्यादिन्दुर्मुखमित्यादौ। किं च वाहीकोऽयं न गोसदृशोऽपि तु गौरेवेत्यादौ सादृश्यव्यतिरेकमिश्रिते सादृश्यबुद्ध्ययोग इति वाच्यम्। भेदगर्भसादृश्यप्रतीतौ हि उपमा। तदेव च सदृशादिपदवाच्यम्। तदगर्भसादृश्यं च लक्ष्यतावच्छेदकम्। न गोसदृश इत्यादिना निषेधोऽपि भेदगर्भस्यैवेति न दोष इत्याहुः। **दशाविशेषेति**। क्रोशनविशेषेत्यर्थः। **आक्षेपादेव व्यापकप्रतीतिरिति**। आक्षेपोऽनुमानम्। तथा च शब्दसहकृतानुमानेनोपस्थिते तटादौ घोषाधिकरणत्वान्वयः। प्रत्ययानां प्रकृत्यर्थान्वयव्युत्पत्तिः प्रकृतिसहकृतानुमानोपस्थितार्थविषयाऽपीति बोध्यम्। व्यापकतारूपसंबन्धस्य लक्षणाबीजत्वे मानाभावाच्च। व्यापकत्वाग्रहेऽपि लक्षणाप्रसरात्। **आयुर्घृतमिति**। आयुरत्र[8] दीर्घकालजीवनम्। जनकत्वं संबन्धः। स एव च लक्ष्यतावच्छेदकम्। **भेदेऽपि ताद्रू-**

१ क. तत्वे सति म°। २ क. ख. ग. °दौ सा°। ३ ख. °दौ का°। ४ क. °णपूर्वके सारोपसाध्य°। ख. °णसंबन्धपूर्वके सारोपासाध्य°। ५ तदाशय इति। तथा च 'वाहीकादिर्लक्ष्यते' इति मतमेव युक्तं न तु 'गुणा एव लक्ष्यन्ते' इति मतमित्याशयः (चू.)। ६ क. ग. °वः। प्रती°। ७ केचित्त्वित्यारभ्येत्याहुरित्यन्तो ग्रन्थः क. पुस्तके न दृश्यते। ८ क. °यः। आयु°।

**आरोपाध्यवसाने। अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः सर्वथैवाभेदावगमश्च प्रयोजनम्। शुद्धभेदयोस्त्वन्यवैलक्षण्येनाव्यभिचारेण च**

---

प्रतीतिः साध्यवसाने सर्वथैवाभेदावगमश्च प्रयोजनम्। शुद्धभेदे तु सारोपेऽन्यवैलक्षण्येन कार्यकारित्वादेः साध्यवसाने त्वव्यभिचारेण कार्यकारित्वादेः प्रतीतिः फलम्। तदुभयं चाभेदप्रतीतिपूर्वकमित्युक्तम्।

---

**प्येति**। भिन्नधर्मप्रकारकोपस्थितावपि सादृश्यातिशयमहिम्ना ताद्रूप्यप्रत्यय इत्यर्थः। तत्र प्रथमतो जडगवोरेकशब्दबोध्यतयाऽभेदप्रतीतौ व्यञ्जनया गवाभिन्नजडाभेदस्य बाहीके प्रतीत्या तदुपपत्तिः। इयं चाऽऽहार्या। शब्दतो भेदस्याप्युपस्थितेः। वस्तुतो लक्षणया सादृश्यबोधे तन्महिम्ना गोत्वबाहीकत्वयोः सामानाधिकरण्यसंभावनया ज्ञातस्यापि भेदज्ञानस्य वाच्यबोधकालिकस्य तिरोधानादनाहार्यैव सा। तस्या वैयञ्जनिकत्वेन तस्यां बाधबुद्धेरप्रतिबन्धकत्वाच्च। **सर्वथैवेति**। वाच्यार्थबोधवेलायामपि शब्दजभेदकधर्मानुपस्थितेरिति भावः। एतेन मुख्यार्थबाधज्ञानविधया भेदस्योपस्थितिरस्त्येवेति परास्तम्। एवं च शुक्तौ रजतत्वारोपे शुक्तित्वेनेव बाहीकत्वेन तदनुपस्थितिरेवेति बोध्यम्। नव्यास्तु साध्यवसानास्थले गोत्वेनैव बाहीकस्य बोधः। शक्यतावच्छेदकातिरिक्तरूपेण शक्यबोधे लक्षणाया इव शक्यतावच्छेदकरूपेण शक्यान्यबोधेऽपि तत्प्रसरादित्याहुः। **अव्यभिचारेणेति**। कारणात्कार्यस्य भेदग्रहे सति व्यभिचारसंभावनासंभवेन सारोपायां नेदं प्रयोजनम्। साध्यवसानायां तु भेदतिरस्कारादभेदग्रहेण व्यभिचारशङ्काया अप्ययोग इति भावः। लक्षकगतधर्मप्रतीतिरेव प्रयोजनमिति त्वश्रद्धेयम्। उपक्रतमित्यादौ व्यभिचारादित्याहुः। परे तु शक्यतावच्छेदकारोपेण शक्यतावच्छेदकप्रकारक एव तीरादिबोधो लक्षणायामिति गौतमसूत्रे पुंयोगादिति सूत्रे महाभाष्ये च स्पष्टमिति निरूपितं मञ्जूषायाम्। एवं च गङ्गात्वादिनैव तीरबोधः। न चाऽऽरोपितगङ्गात्वेन बोधेऽपि तस्य ज्ञानस्य भ्रमत्वाच्छास्त्रज्ञानवतां सर्वथा तत्त्वेन ग्रहाच्च तदुत्तरं गङ्गागतशैत्यपावनत्वप्रतीतिरूपं प्रयोजनं न सिध्येत्। अत एव शुक्तिरजतज्ञाने भ्रमत्वग्रहे तत्र न प्रवर्तत इति वाच्यम्। मध्ये व्यञ्जनया मुख्यगङ्गापदार्थाभेदस्य प्रतीतेः। व्यञ्जनाजन्यज्ञाने च बाधज्ञानेन नाप्रामाण्यग्रह इति न दोषः। तदुक्तम्-तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ प्रतिपिपादयिषितप्रयोजनसंप्रत्यय इति। तत्त्वेत्यस्य मुख्यगङ्गाभेदेत्यर्थः। न च लक्षणामूलतया गङ्गासंबन्धप्रतीत्या तत्सिद्धिः। गङ्गातटे घोष इत्यतोऽपि तत्प्रतीत्यापत्तेः। तदुक्तम्-गङ्गासंबन्धमात्रप्रतीतौ तु गङ्गातटे

---

१ इयमित्यारभ्याप्रतिबन्धकत्वाच्चेत्यन्तो ग्रन्थः क. पुस्तके न दृश्यते। २ क. °दभे°। ३ नव्यास्त्वित्यारभ्य तत्प्रसरादित्याहुरित्यन्तो ग्रन्थः क. पुस्तके न दृश्यते। ४ ग. °हुः। क्वचित्प्र°। ५ क. नच गङ्गा°।

**कार्यकारित्वादि[1] प्रयोजनम् । क्वचित्तादर्थ्यादुपचारः । यथेन्द्रार्था स्थूणेन्द्रः । क्वचित्स्वस्वामिभावात् । यथा राजकीयः पुरुषो राजा । क्वचिदवयवावयविभावात् । यथाऽग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः । क्वचि-**

क्वचित्तत्प्रयोजनकत्वेनोपचारः[3] । यथेन्द्रार्था स्थूणेन्द्रः । क्वचित्स्वस्वामिभावात् । यथा राजकीयः पुरुषो राजा । क्वचिदवयवावयविभावात् । यथा कर्मधारयेऽग्रहस्त इत्य-

घोष इति मुख्यशब्दाल्लक्षणायाः को भेद इति । कुन्ताः प्रविशन्तीत्यादावपि कुन्तत्वादिना कुन्तयुक्तपुरुषप्रतीतिः । अत एवात्र न मतुप् । तेषु च मुख्यकुन्ताभेदप्रतीत्या कुन्तगततैक्ष्ण्यादिप्रतीतिरूपप्रयोजनसिद्धिः । तदुक्तम्—कुन्तादिभिरात्मनः प्रवेशान्वयसिध्द्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्त इति । आक्षिप्यन्त इत्यस्य स्वगतकुन्तत्वाद्याश्रयत्वेन बोध्यन्त इत्यर्थः । गौर्बाहीक इत्यत्र साधारणगुणरूपसादृश्याश्रयणेन बाहीकस्यैवाऽऽरोपितगोत्वेन बोधस्ततो व्यञ्जनया मुख्यगवाभेदप्रतीतिः प्रयोजनम । तत एव चमत्कारः । आद्यबोधेन तु न चमत्कारः । तस्मिन्भ्रमत्वज्ञानात् । अत एव गौर्बाहीको जड इत्यादौ न पौनरुक्त्यम् । आयुर्घृतमित्यादौ कार्यकारणभावसंबन्धादायुष्ट्वेन घृतबोधः । ततो व्यञ्जनयाऽन्यवैलक्षण्येनाऽऽयुष्कारित्वरूपप्रयोजनप्रतीतिः । तदुक्तम्—साधारणगुणाश्रयणेन परार्थो लक्ष्यत इत्यपरे । लक्ष्यमाणगुणैर्योगादवृत्तेरिष्टा तु गौणता । गौणभेदे भेदेऽपि ताद्रूप्यप्रतीतिः प्रयोजनं शुद्धभेदयोस्त्वन्यवैलक्षण्ये तत्कार्यकारित्वादिप्रतीतिरिति । लक्ष्यमाणगुणैरित्यस्य ज्ञायमानगुणैरित्यर्थः । यद्गुणज्ञानपूर्वकं बाहीके गोशब्दप्रयोगस्तद्गुणरूपात्संबन्धादिति यावत् । साधारणगुणाश्रयणेनेत्यस्य तद्रूपसंबन्धेनेत्यर्थः । अत्रत्यप्रदीपस्तु मतान्तरपरतया कथंचिन्नेयः । लक्ष्यमाणगुणैरित्यत्र प्रकृत्यादित्वात्तृतीया । अनया रीत्याऽन्योऽपि प्रकाशग्रन्थो योज्यः । एतेन रूपके न लक्षणा, समानविभक्तिकत्वेन नामार्थयोरभेदान्वयोपपत्त्या लक्षणाफलाभावादित्यादि दीक्षितादिनन्योक्तं परास्तम् । गौर्न बाहीक इत्यादिबाधकज्ञानेन तद्बोधेऽप्रामाण्यग्रहजननात्तत-श्चमत्कारानापत्तेः । मम तु तस्य बोधस्य लक्षणामूलव्यञ्जनाजन्यत्वेन तत्र बाधज्ञानेनाप्रामाण्यग्रहाजननान्न दोष इति वदन्ति । इदमेव युक्तम् । अन्यथा गङ्गादिपदजन्यतटादिशाब्दबोधस्यैव प्रयोजनप्रतीतिनियामकत्वेन गङ्गातट इत्यादितस्तदभावोपपत्तौ मध्येऽभेदप्रतीतिः प्रकाशाद्युक्ताऽसंगता स्यात् । मम तु यथा तदुपयोगस्तदुक्तं तद्बोधे भ्रमत्वग्रहादिति दिक् ।

**क्वचित्प्रयोजकत्वेनेति** । इन्द्रपूजाप्रयोजके तत्प्रयोजकत्वव्यवहारो गौणः । **स्थूणा** । स्तम्भः । **अग्रमात्र इति** । विजातीयसंयोगं प्राप्तोऽवयवपुञ्ज एवावयवीति

१ क. ग. °दि । क° । २ क. मिसंबन्धात् । ३ घ. °चित्प्रयोजक° । ४ क. °कुन्ताद्या° । ५ क. °ण्येन कार्य° । ६ क. °यः । प्रकृ° । ७ क. °धज्ञा° । ८ क. ग. °ति । अवयवपुञ्ज° ।

त्तात्कर्म्यात् । यथाऽतक्षा तक्षा ।

---

अवयवेऽग्रमात्रे हस्तोपचारः । क्वचित्तदीयकर्मशालित्वात् । यथाऽतक्षा तक्षा ।

---

मतेऽवयवान्तरव्युदासाय मात्रपदम् । एवं

गङ्गा तु हरते पापं दृष्टा पीताऽवगाहिता ।

इत्यादौ पीतेत्यंशे गङ्गापदस्य तदवयवे लक्षणा । दर्शनादिनाऽत्युत्कृष्टधर्मजनकतावच्छेदकजातेः प्रवाहमात्रवृत्तेरेव गङ्गापदशक्यत्वात् । गङ्गाजलवत्यपि नात्र गङ्गेति प्रतीतेः । गङ्गायां जल-मिति तु गवि सास्ना वृक्षे शाखेतिवद्बोध्यम् । तक्षे१ति । इदं जातिविशेषावच्छिन्ने रूढम् ।

अ२त्र वदन्ति । सारोपायां चन्द्रो मुखमित्यादौ न लक्षणा । फलाभावात् । नामार्थयोरभेदस्य वाक्यविधयैव प्रतीत्युपपत्तेः । प्रसिद्धत्वादिनोपस्थितसादृश्येन पूर्वोक्त-रीत्याऽप्रामाण्यज्ञानानास्कन्दितानाहार्यभेदबुद्ध्युपपत्तेः । बाधबुद्धिप्रतिबुध्यतावच्छेककोटा-वनाहार्यत्वस्येव शाब्दान्यत्वस्यापि निवेशाद्वा न दोषः । योग्यताज्ञानं च न शाब्दे कारण-मपि तु प्रामाण्यग्रह एवेति न दोषः । भेदकधर्मोपस्थितिकालिकाभेदप्रतीतौ रूपकमन्य-थाऽतिशयोक्तिरिति व्यवस्थासंभवेन मुखं चन्द्र इत्यादावतिशयोक्तिरेव स्यादिति निर-स्तम् । न चैवं सारोपलक्षणा किं नास्त्येव । अस्ति बाहीकोऽपरो गौरित्यादौ । तत्र ह्यपरादिपदैः प्रसिद्धगो३भेदप्रतिपादनेन विरोधान्न वाच्ययोरभेदप्रतीतिः । किं तु तत्सदृशे लक्षणैव । लक्षणायाश्च न शक्याभेदबुद्धिः फलम् । किं तु सादृश्यातिशयबुद्धिः । एवं च सकलतत्कार्यकारित्वं फलति । एवमपूर्वो गौरिति बाहीकाभिप्रायेण प्रयुक्तेऽपि बोद्धव्यम् । तत्रापि न प्रसिद्धगवाभेदो लक्षणाफलम् । अपूर्वपदेन तिरस्कारात् । बाहीक-त्वाद्यप्रतीतिकृतश्चाधिकचमत्कारः । न चैवमुपमाया अपि रूपकत्वापत्तिः । यत्र सादृश्य-प्रतीतिकृतश्चमत्कारस्तत्रोपमा, यत्र त्वभेदप्रतीतिकृतः सादृश्यातिशयप्रतीतिकृतश्च तत्र रूपकमिति स्वीकारात् । इदमेवाभिप्रेत्य गौर्बाहीक इत्यादावभेदरूपकातिशयोक्ती, बाहीकोऽय-मपरो गौरित्यादौ च ताद्रूप्यरूपकातिशयोक्ती इति कुवलयानन्दकृतः । यत्तु रूपके लक्षणायाम्—

राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् । इत्यादौ विशेषणसमासायत्तं रूपकमुप-मितसमासायत्तोपमा वेति संदेहे यद्यत्रोपमा स्यात्तर्हि नारायणसदृशो राजेत्याद्यर्थे नारायण-सदृशे लक्ष्मीकर्तृकालिङ्गनसंसर्गबाध इति रूपकमेवेत्यालंकारिकोक्तं विरुध्येत । रूपकेऽपि साधारणधर्मादिप्रकारेण लक्षणायां तद्दोषतादवस्थ्यादिति । तत्र रूपके साधारणधर्मादि-प्रकारेण लक्षणायामपि लक्ष्यार्थे व्यञ्जनया वाच्यार्थाभेदप्रतीतेस्तद्द्वारोपमेयेऽपि तत्प्रतीतेश्चादोषात् । न चैवमुपमितसमासेऽपि लक्षणायाः सत्त्वेन तत्फलतया तत्राप्यभेदप्रत्ययसत्त्वेनोपमायामपि न दोष इति वाच्यम् । तत्र निरूढलक्षणाङ्गीकारेण

---

१ क. °दम् । तक्षेति । २ अत्र वदन्तीत्यारभ्योपमानानीत्यत्र कैयट इत्यन्तो ग्रन्थः क. पुस्तके न दृश्यते । ३ ग. °गोर्भेद° ।

लक्षणा तेन षड्विधा ॥ १२ ॥

आद्यभेदाभ्यां सह । सा च

व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।

---

**लक्षणा०** ।

उपादानलक्षणरूपशुद्धभेदाभ्यां सह । रूढिप्रयोजनाभ्यां भेदे संभवत्यपि न ते विभाजकत्वेनोक्ते, किंतु हेतुत्वेनेति न तत्कृतो भेदो गणितः । अत एव पश्चात् 'व्यङ्ग्येन रहिता' इत्यादिना तत्कृतं भेदं दर्शयिष्यति । अन्यथा पुनरुक्तिप्रसङ्गात् । एवं च यथोक्तव्याख्यानेन षड्विधत्वे निर्व्यूढे यत् 'षड्विधेति रूढिप्रयोजनोपादानलक्षणारोपाध्यवसानरूपैः षड्भिरुपाधिभिः कल्पिता विधाः प्रकारा यस्यामिति षड्विधा' इति चण्डीदासव्याख्यानं तच्छुद्धैव सा द्विधा सारोपाऽन्या तु इति एवतुशब्दयोरनालोचनविजृम्भितत्वादनादेयम् ।

एवमारोपादिकृतं प्रकारषट्कं प्रतिपाद्य व्यञ्जनकृतं प्रकारत्रयमाह—**व्यङ्ग्येन०** ।

लक्षणेत्यनुवर्तते । ननु प्रयोजनस्थले कथं व्यङ्ग्यसाहित्यनियम इति चेत्प्रयोजनस्य व्यञ्जनामात्रगम्यत्वात् । तदिदमुक्तम्—'प्रयोजनं हि व्यञ्जनाव्यापारगम्यमेव' इति ।

---

प्रयोजनाभावात् । न च सदृशत्वेन रूपके लक्षणेति मते सादृश्यस्य शब्दोपात्तत्वादुपमापत्तिरिति वाच्यम् । तन्मते भेदकरम्बितत्वाकरम्बितत्वाभ्यां भेदादित्युक्तं प्राक् । अन्ये तूपमितसमासोपमानसमासयोरपि सादृश्यमूलकतयोपमानतावच्छेदकधर्मस्योपमेय आरोपेणाभेदान्वयस्वीकारे बाधकाभावेन तत्रापि रूपकेऽक्षतिरेव । यदा तु प्रयोजनवशात्तत्रापि सदृशलाक्षणिकेन समासस्तदोपमाऽपीत्याहुः । स्पष्टं चेदमुपमानानीत्यत्र कैयटे ।

**षड्विधेति** । शुद्धा—गौणी—सारोपा—साध्यवसानोपादानलक्षणैः षड्भेदेत्यर्थः । ननु गौण्यां लक्षणलक्षणात्वाङ्गीकारेण सप्तविधत्वमुचितमिति वाच्यम् । अत्रोपादानलक्षणाभ्यामर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यौ, सारोपासाध्यवसानाभ्यां रूपकप्रथमातिशयोक्ती, शुद्धाभ्यां च ताभ्यां हेत्वलंकारं निरूपयिष्यतीति षड्भेदकथनमेव सफलम् । गौण्या लक्षणायास्तु न क्वापि विशिष्य नियामकत्वमिति न तद्गणनमिति भावः । **एवं चेति** । पौनरुक्त्यप्रसङ्गेनेत्यर्थः । **अनालोचनेति** । एवतुशब्दाभ्यां गौण्या उपादानलक्षणरूपभेदद्वयाभावबोधनेन लक्षणामात्रस्य रूढिप्रयोजनवत्तद्भेदद्वयकथने तेन विरोधस्य स्पष्टत्वादिति भावः ।

**व्यञ्जनकृतमिति** । लक्षणायास्तत्फलकत्वादिति भावः ।

---

१ ग. आदिमे° । २ क. °त्वेनोक्ते इति नच त° । ३ क. व च प° । ४ क. °रा अस्या° । ५ ग. °ति । षड्भेद° । ६ क. °र्थः एवं चेति ।

1085

**प्रयोजनं हि व्यञ्जनव्यापारगम्यमेव।**

**तच्च गूढमगूढं वा,**

**तच्चेति व्यङ्ग्यम्। गूढं यथा—**

**मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितं**
**समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः।**

---

यत्तु—'ननु लक्ष्यप्रयोजनयोर्द्वयोरपि लक्षणयैव प्रतीतौ किमत्र व्यञ्जनयेत्यत आह—प्रयोजनं हीति' इति तत्फक्किकावतरणं तदज्ञानविजृम्भितम्। अत्र व्यञ्जनस्थापनस्याप्रस्तुतत्वात्। तत्प्रकरणे च 'व्यञ्जनानापरा क्रिया' इति सूत्रेणैव प्रतिपादनात्।

**तच्च०।**

तदिति व्यङ्ग्यम्। लक्षणाभेदप्रयोजक आरोपादिर्यथा भिद्यते तथा तत्प्रयोजकं[3] व्यङ्ग्यमपीति चस्यार्थः। वाशब्दः समुच्चये। काव्यभावनापरिपक्वबुद्धिः सहृदयः। तन्मात्रवेद्यं गूढम्। तत्तदितरवेद्यमगूढम्। तत्र गूढं यथा—**मुखं०।**

अत्र विकासः पुष्पधर्मः स्मितेऽनुपपन्न इति प्रसृतत्वं लक्षयता विकसितपदेन लोकोत्तररमणीयतातिशयो व्यज्यते। स च गूढः। एवं वशितसमुच्छलितापास्तसंस्थामुकुलितोद्धुरमो-

---

**तत्तदितरेति**। सहृदयासहृदयेत्यर्थः।

**मुखमिति**। इदं लक्षणामूलध्वनेरुदाहरणम्। इन्दुवदनायास्तनौ शरीरे तरुणिम्न उद्गम आविर्भावो मोदते स्फीतो भवतीत्यर्थः। उत्कृष्टवस्तुसंबन्धात्स्वयमप्युत्कर्षं प्राप्त इत्यर्थः। प्रकृत्यैवेयमिन्दुवदना तत्राप्येवंविधनवयौवनविजृम्भणमित्यतिकष्टमापतितं विदग्धयुवजनस्येत्येवं खेदे बतेति[4]। अहो रमणीयतातिशय इति विस्मये च। अहो भाग्येन संपन्नं परमोत्सवाख्यातं युवजननयनानामिति हर्षे वा।

बताऽऽमन्त्रणसंतोषखेदानुक्रोशविस्मये।

इति नानार्थकोशात्। स्फीततांचिह्नमनेकस्थानेऽनेकविधकार्यजननरूपं दर्शयति—मुखमिति। यतो मुखं विकसितं प्रसृतं स्मितं स्मितं स्यात्स्पन्दिताधरमित्युक्तलक्षणं हास्यविशेषरूपं यत्र तथाभूतम्। प्रेक्षितं वशितः स्वाधीनः कृतो वक्रिमा तिर्यग्गामित्वं येन[6]। तथा गतिर्गमनं समुच्छलिता निरन्तरमतिशयेन प्रादुर्भूता विभ्रमा यत्र तथाभूता। मतिर्बुद्धिस्त्यक्तपरिमितविषयिका[7]। उरो वक्षःस्थलं मुकुलितौ मुकुलाकारौ, ईषदुन्नतौ स्तनौ यत्र। जघनमूरुमूलभागः। अंसबन्धेनावयवानां दृढबन्धेनोद्धुरं विलक्षणरतियोग्यम्[8]। यद्वांऽसबन्धो रतिबन्धविशेषस्तत्र समर्थम्। तथा चासाधारणस्मिताद्युन्मेषः स्फुटमेव यौवनोद्गममवगमयतीति भावः। अत्र च विकासस्य पुष्पधर्मस्य स्मिते वशीकरणस्य चेतनधर्मस्य दृष्टावूर्ध्वगतिविशे-

---

१ क. °प्रकृत°। २ क. °जनकं। ३ घ. °दते स्फुरितो। ४ क. °ति। स्फीतता°। ५ घ. °तातिशयमने°। ६ क. ग. °न तथाभूतम्। तथा ग°। ७ क. ग. °वयत्विका। ८ क. °त्र योग्यत्वम्।

उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ ९ ॥

अगूढं यथा—

---

दतेशब्दैरायतत्वोल्लसितत्वानेकविषयसंचारित्वोद्भिन्नत्वयोग्यत्वानियन्त्रितत्वानि लक्षयद्भि-र्युक्तानुरागित्वसकलवशीकारित्वानुरागातिशयलिङ्गनयोग्यत्वरमणीयत्वस्पृहणीयत्वानि गूढानि व्यज्यन्ते । यथा वा मम—

चकोरीपाण्डित्यं मलिनयति दृग्भाङ्गिमहिमा
हिमांशोरद्वैतं कवलयति वक्त्रं मृगदृशः ।
तमोवैदग्ध्यानि स्थगयति कचः किं च वचनं
कुहूकण्ठीकण्ठध्वनिमधुरिमाणं तिरयति ॥

अत्र क्रियापदानामात्यन्तिकविच्छायत्वादिव्यङ्ग्यानि गूढानि ।

---

घरूपसमुच्छलनस्य मूर्तद्रव्यधर्मस्य विभ्रमे संस्थाया मर्यादायास्त्यागस्य चेतनधर्मस्य मतौ मुकुलितत्वस्य पुष्पधर्मस्य स्तनयोरुद्धुरत्वस्योत्कृष्टधुरावत्त्वरूपस्य चेतनधर्मस्य जघने मोदस्य हर्षस्य चेतनधर्मस्य यौवनोद्गमे बाधितत्वाद्विकसितादिपदैरुपदर्शितपदार्था लक्ष्यन्ते । तत्र विकासेनासंकुचितत्वसंबन्धेन सातिशयत्वं लक्ष्यम् । सौरभादि व्यङ्ग्यम् । वशीकरणेन स्वाधीनत्वं लक्ष्यते । अभिमतविषयप्रवृत्तिः संबन्धः । युक्तानुरागित्वं व्यङ्ग्यम् । समुच्छ-लनेन बाहुल्यं लक्ष्यते । प्रयोज्यप्रयोजकभावः संबन्धः । बहुलं हि समुच्छलति । सकलम-नोहारित्वं व्यङ्ग्यम् । संस्थाया असनेनाधीरत्वं लक्ष्यते । हेतुहेतुमद्भावः संबन्धः । पूर्वं मुग्धतया गुरुजनसंनिधौ प्रियतमेऽप्यङ्गीकृतमर्यादा मतिरासीत् । इदानीं तु मौग्ध्यत्यागान्न तथेत्यनुरागातिशयो व्यङ्ग्यः । मुकुलितत्वेन काठिन्यं लक्ष्यते । निबिडावयवत्वं संबन्धः । कठिनं हि तद्भवति । यद्वोद्भिन्नत्वं लक्ष्यम् । आलिङ्गनयोग्यत्वं व्यङ्ग्यम् । उद्धुरत्वेन योग्यत्वं लक्ष्यते । भारसहनक्षमत्वं संबन्धः । रमणीयत्वं व्यङ्ग्यम् । मोदेनोत्कर्षो लक्ष्यते । जन्यजनकभावः संबन्धः । स्पृहणीयत्वं व्यङ्ग्यम् । अनियन्त्रितत्वमुत्कर्ष एवेति । ( पृथ्वी छन्दः । )

**लक्षयद्भिरिति** । वशीकरणद्रवद्द्रव्योच्छलननिर्मर्यादत्वकलिकायत्तत्वोत्कृष्टधुरावत्त्व-रूपमुख्यार्थबाधादिति भावः ।

( **चकोरीति** । दृग्भङ्गिमहिमा दर्शनप्रकारमाहात्म्यम् । कवलयति ग्रसति । कुहू-कण्ठी कोकिला । शिखरिणी छन्दः । ) **आत्यन्तिकविच्छायत्वादीति** । आदिना

---

१ क. °शयत्वालि° । २ क. °ति । विच्छायत्वादीनीति । आदिना वक्त्र° ।

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ॥
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥ १० ॥

अत्रोपदिशतीत्यनायासेन शिक्षादानमभिधेयवत्स्फुटं प्रतीयते ।

तदेषा कथिता त्रिधा ॥ १२ ॥

अव्यङ्ग्या, गूढव्यङ्ग्या, अगूढव्यङ्ग्या च ।

---

अगूढं यथा—श्रीपरिचया० ।

अत्रोपदेशकत्वं शब्दविशेषप्रयोक्तृत्वं मदेऽनुपपन्नमित्याविष्कारं लक्षयतोपदिशतिपदेनानायासेन शिक्षादानमाभिव्यज्यते । तच्च सहृदयासहृदययोरुभयोरप्यभिधेयवत्प्रकाशते ।

तदेषा० ।

तत्तस्मात्त्रिधा—अव्यङ्ग्या गूढव्यङ्ग्या अगूढव्यङ्ग्या चेति ।

---

वक्त्रप्रतियोगिकसादृश्यवत्त्वस्निग्धश्यामत्वश्रुतिकटुत्वानि । श्रीपरिचयादिति । जडा अनभिज्ञा अपि जनाः श्रीपरिचयात्, प्रथमसंबन्धः परिचयः, तस्मादेव चतुरजनचरितानां ज्ञातारो भवन्ति । तत्रार्थान्तरन्यासमाह—उपदिशतीति । कामिनीनां यौवनमदः स्वयमव ललितानि उपदिशति । तथा च विदग्धजनचरितस्वरूपानभिज्ञानामपि विनैवोपदेशं सकृत्संबन्धात्तदवगमः । तत्किं वक्तव्यं तत्स्वरूपाभिज्ञानां तदभिलाषुकाणामुपदेशे तद्विज्ञानमित्यत्रेति भावः । ज्ञानानुकूलशब्दप्रयोगरूपोपदेशकर्तृत्वस्य चेतनधर्मस्याचेतने यौवनमदे बाधात्सामान्यविशेषभावसंबन्धेनाऽऽविष्कारमात्रं लक्ष्यम् । अनायासेन ललितादिज्ञानं व्यङ्ग्यम् । इदं च विदग्धाविदग्धवेद्यम् । ललितम् ।

‘ सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत् ’

इत्युक्तलक्षणलक्षितम् ।

‘ अनाचार्योपदिष्टं स्याल्ललितं रतिचेष्टितम् ’

इत्युक्तलक्षणं वा । ललितानीत्यत्र बहुवचनमाद्यर्थकम् । तेन बिब्वोकविलासादिहावसंग्रहः । तथा चामरेण ।

स्त्रीणां विलासबिब्वोकविभ्रमा ललितं तथा ।
हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः ॥

इत्यादिनैषु हावपदवाच्यत्वं प्रतिपादितम् । एतेन ललितानीति विभ्रमानीत्यर्थः ।

---

१ क ग. वा । बहु ।

तद्भूर्लाक्षणिकः,

शब्द इति संबध्यते। तद्भूस्तदाश्रयः।

तत्र व्यापारो व्यञ्जनात्मकः।

कुत इत्याह—

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥ १४ ॥

फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।

---

एवं लक्षणां निरूप्य तया लाक्षणिकं लक्षयति—तद्भू०

'स्याद्वाचको लाक्षणिकः' इतिसूत्रस्थः शब्द इत्यनुषज्यते । तद्भूस्तस्या लक्षणाया आश्रयः।

अथ व्यञ्जकशब्दलक्षणाय व्यञ्जना निरूपणीया। सा च द्वेधा—शब्दनिष्ठा, अर्थनिष्ठा च। तत्रान्त्या शब्दलक्षणेऽनुपयुक्तेत्यग्रे विवेचनीया।

आद्या तु द्वेधा—अभिधामूला, लक्षणामूला च। तत्र यद्यप्यभिधायाः प्राथम्या-दुपजीव्यत्वाच्च तन्मूला प्रथमं निरूपयितुमुचिता तथाऽपि सुप्रसिद्धत्वाल्लक्षणायाः प्रकृत-त्वाच्च तन्मूलामेव प्रथमं निरूपयति—तत्र०।

तत्र लाक्षणिकशब्दे। व्यापारो व्यङ्ग्यप्रकाशनानुकूलः।

लक्षणादिनैव तत्प्रतीतौ किं तयेत्यत आह—यस्य०।

यस्य पावनत्वादेः फलस्य प्रतीत्यर्थं लक्षणाश्रयशब्दप्रयोगस्तत्फलं तस्मादेव शब्दाद्ग-म्यते, न तु प्रमाणान्तरात्। व्याप्तिस्मृत्यादेरनपेक्षणात्। न च तत्र शब्दस्य व्यञ्जनं विनाऽ-न्या क्रिया व्यापारः। तथाहि—

---

'विभ्रमा ललितं तथेत्यमरः' इति मन्दोक्तमपास्तम्। कोशस्यान्यार्थतात्पर्यकत्वादित्याहुः।

( गाथा छन्दः। ) लक्षणामूलागूढाख्यगुणीभूतव्यङ्ग्यमिदम्।

भवतीत्यर्थासंगतिमाशङ्क्याऽऽह—आश्रय इति। अधिकरणक्विबन्तस्य तत्सत्ताश्रय इत्यर्थादिति भावः। लाक्षणिकशब्दप्रतिपाद्यत्वं च लक्ष्यस्यार्थस्य लक्षणमप्यर्थत उक्त-मेवेति बोध्यम्।

सुप्रसिद्धत्वादिति। लक्षणाया व्यङ्ग्यार्थफलकत्वादिति भावः। लाक्षणिकशब्द-प्रतिपाद्यत्वं च लक्ष्यस्यार्थस्य लक्षणमप्यर्थत उक्तमेवेति बोध्यम्। आधातुम्। जनयितुम्। समुपास्यते। सत्यपि वाचकशब्दे तं विहायाऽऽद्रियते। व्याप्तिस्मृत्या-देरिति। आदिना संनिकर्षादि।

---

१ क. °तीतयेल°। २ क. ग. स्यान्यतात्प°। ३ क. ग. °वत्सर्था°। ४ ख. ग. °त्सर्थः। सुप्र°। ५ क. °वः। आधा°।

प्रयोजनप्रतिपिपादयिषया यत्र लक्षणया शब्दप्रयोगस्तत्र नान्यतस्त-त्[1]प्रतीतिरपि तु तस्मादेव शब्दात् । न[2] चात्र व्यञ्जनादृतेऽन्यो व्यापारः । तथाहि—

नाभिधा समयाभावात्

गङ्गायां घोष इत्यादौ[3] ये पावनत्वादयो धर्मा[4]स्तटादौ प्रतीयन्ते[5] न तत्र गङ्गादिशब्दाः संकेतिताः ।

हेत्वभावान्न लक्षणा ॥ १५ ॥

मुख्यार्थबाधादित्रयं हेतुः[6] । तथा[7] च

लक्ष्यं न मुख्यं नाप्यत्र बाधो[8] योगः फलेन नो ।
न[9] प्रयोजनमेतस्मिन्न च शब्दः स्खलद्गतिः ॥ १६ ॥

यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति तद्वद्यदि

---

नाभिधा॰ ।

पावनत्वादौ फले संकेतग्रहाभावात् । अभिधा हि संकेतग्रहसहायैवोपयुज्यते, न तु स्वरूपसतीति वक्ष्यते । हेत्वभावा॰ ।

मुख्यार्थबाधस्तद्योगो रूढिप्रयोजनान्यतरादिति त्रयं लक्षणाहेतुः । तदभावमेवोपपादयति—लक्ष्यं॰ ।

यथा गङ्गाशब्दस्य तीरं मुख्योऽर्थः । तत्र च बाधः । तीरे च तत्संबन्धः । तीरस्य च लक्षणयोपस्थापने मुख्यशब्देन प्रतिपादयितुमशक्यस्य पावनत्वादेः प्रतीतिश्च प्रयोजनमिति

---

**नाभिधा समयाभावादिति** । शक्तिरतिरिक्तः पदार्थस्तद्ग्राहकः संकेत इति न साध्याविशेषो हेतोरिति बोध्यम् । **संकेतग्रहसहायेति** । अभिधाग्राहकत्वमेव सहायत्वमिति बोध्यम् । तद्दर्शयन्नाह[10]—**न स्वरूपसतीति** । ज्ञाप्यार्थबाध एव तद्बीजं स्यादत आह—**नाप्यत्रेति** । काकेभ्यो दधीत्यादाविव तात्पर्यार्थबाध एव तद्बीजमत आह—**योग इति**[11] । साक्षात्संबन्ध एव लक्षणाप्रयोजक इति भावः[12] । परम्परा[13]संबन्धोऽस्त्येवेत्यत आह—**न प्रयोजनमिति** ।

---

१ क. ख. ग. °त्प्रतिपत्तिर° । २ ग. न च व्य° । ३ ख. °दौ पा° । ४ ख. °र्मास्तीरादौ । ५ क. °न्ते तत्र नग° । ६ क. °तुः । लं° । ७ ख. °थाहि । लं° । ८ ख. बाधा यो° । ९ क. न स्व° । १० क. °ह—स्वरू° । ११ ग. °ति । परं° । १२ क. °वः । युक्त्यन्तरमाह—न प्रयो° । १३ घ. °रासंबंधमादाय लक्षणा तु दुष्टैवेति बोध्यम् । युक्त्यन्तरमाह—न प्र° ।

तटे[1]ऽपि सबाधः स्यात्तत्प्रयोजनं लक्षयेत् । न च तटं मुख्योऽर्थः । नाप्यत्र बाधः[2] । न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः संबन्धः । नापि प्रयोजने लक्ष्ये किंचित्प्रयोजनम् । नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितु[3]मसमर्थः ।

एवमप्यनवस्था स्याद्या मूलक्ष[4]यकारिणी ।

एवमपि[5] प्रयोजनं चेल्लक्ष्यते तत्प्रयोजनान्तरेण तदपि प्रयोजनान्तरेणेति प्रकृताप्रतीतिकृदनवस्था[6] भवेत् ।

ननु पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते । गङ्गायास्तटे घोष इत्यतोऽधिक[7]स्यार्थस्य प्रतिपत्तिश्च प्रयोजनमिति विशिष्टे[8] लक्षणा । तत्किं

---

गङ्गाशब्देन तटं लक्ष्यते । तद्वद्यदि तटमपि मुख्यं स्यात् । तत्र च बाधो भवेत् । प्रयोजनस्य च गङ्गादिगतपावनत्वादिविशेषस्य तटेन संबन्धः स्यात् । लक्षणया प्रयोजनप्रतिपादनस्य च प्रयोजनान्तरं[9] संभवेत् । तदा गङ्गाशब्दः प्रयोजनं लक्षयेत् । न चैतदेकमप्यत्रेत्यर्थः ।

न केवलं मुख्यार्थबाधादीनामभावमात्रम् । किं तु तेषामपेक्षाऽपि नेत्याह—**न च०** ।

मुख्यार्थबाधादित्रयमपेक्ष्य बोधकत्वं स्खलद्गतित्वम् । एवं 'नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः' इत्यादिवृत्तौ 'बाधादिकमनपेक्ष्य' इति शेषो द्रष्टव्यः । 'समर्थ' इति पाठे तु 'बाधादित्रयमपेक्ष्यैव' इति शेषः ।

नन्वस्ति प्रयोजनेऽपि लक्ष्ये प्रयोजनान्तरमिति[10] किं व्यञ्जनयेति चेद्वैयात्याद्यदि ब्रूयात्तत्राऽऽह—**एवमप्य०** ।

मूलं प्रकृतार्थप्रतीतिः ।

ननु पावनत्वादिविशिष्टमेव तीरं लक्ष्यतामिति किं व्यञ्जनया । न चैवं प्रयोजनस्यापि

---

**अनपेक्ष्येति शेष इति** । गङ्गाशब्दस्तटं यथा बाधादिकमनपेक्ष्य प्रतिपादयितुमसमर्थस्तथा प्रयोजनं नेत्यर्थः । गङ्गादिशब्दः प्रयोजनांशे तदपेक्षो नेत्यतः प्रयोजनं न लक्ष्यमिति भावः ।

**वैयात्यम्** । वैतण्डिकता । **मूलक्षयेति** । प्रयोजनपरम्परायां लक्षणास्वीकारे यल्लक्षणाप्रयोजने विषय[11]संचारादिना लक्षणानिवृत्तिस्तस्याग्रिमलक्षणानिवृत्तौ मूलभूतलक्षणाप्रयोजनप्रतीतिरपि न स्यादिति भावः । एतेन बीजाङ्कुरादिवदनवस्था[12] न दूषणमित्यपास्तम् ।

मूलक्षतिकरीं चाऽऽहुरनवस्थां हि दूषणम् ।

---

१ क. °टे स° । २ ख. बाधा । न । ३ क. ख. °यितुं स° । ४ क. ख. ग. °क्षतिका° । ५ क. ग. °मपीति । प्र° । ६ क. ख. °स्था स्यात् । ७ ख. °धिकार्थ° । ८ क. °शिष्टल° । ९ क. °रं भ° । १० क. °ति वैया° । वैयात्यं धार्ष्ट्यम्(चू.) । ११ क. °षयान्तर सं° । १२ ग. °स्थायां न° ।

व्यञ्जनयेत्याह[1]—

**प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥ १७ ॥**

कुत इत्याह—

**ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।**

**प्रत्यक्षादेर्हि[2] नीलादिर्विषयः । फलं तु प्रकटता संवित्तिर्वा ।**

लक्ष्यकोटौ प्रवेशाल्लक्षणाप्रयोजनं नास्तीति वाच्यम् । 'गङ्गातटे घोषः' इत्यतोऽधिकस्यार्थस्य[3] प्रतीतेरेव प्रयोजनत्वादित्यत आह—**प्रयोजनेन०** ।

कुत इत्याकाङ्क्षायामाह—**ज्ञानस्य०** ।

ननु विषयफलयोर्भेद इति सूत्रार्थः । स चायुक्तः । फलत्वं हि जन्यत्वं वा जन्यप्रतीतिविषयत्वं वा । आद्ये पावनत्वादौ तदभावः । तज्ज्ञाने च विषयाद्भेद एव । अन्त्ये 'प्रत्यक्षादेर्नीलादिर्विषयः' फलं तु प्रकटता संवित्तिर्वा' इतिवृत्तिविरोधः । प्रकटताज्ञानस्य प्रत्यक्षजन्यत्वाभावात् । न च जन्यज्ञाप्यसाधारणमेकं साध्यत्वमस्तीति । अत्र ब्रूमः— ज्ञानस्य जनकीभूतो विषयो यथा ज्ञानादन्यस्तथा फलमपि तस्य स्वतो भिन्नम् । कारणस्येव कार्यस्यापि भिन्नकालत्वनियमात् । शैत्यादौ तु क्वचित्फलपदमौपचारिकं[4] दृश्यते । तथा च लक्ष्यज्ञानमेव यदि शैत्यज्ञानं तदा प्रयोजनं न स्यादित्यर्थः । ननु लक्ष्यप्रतीतेर्न

इत्युक्तेः । **अधिकस्यार्थस्येति** । पावनत्वादिवैशिष्ट्यरूपस्येत्यर्थः । **प्रयोजनेनेति** । प्रयोजनीभूतज्ञानविषयेणेत्यर्थः । तथा सति लक्षणाजन्यज्ञानस्यैव फलज्ञानात्मकत्वात्तज्ज्ञानस्य[5] लक्षणाजन्यज्ञानफलत्वं न स्यादित्याह—**ज्ञानस्येति । विषयाद्भेद एवेति** । एवं चोक्तसूत्रार्थस्य न तत्र फलत्वव्याघातकतेति भावः । मृद्घटोपादानमितीश्वरगतोपादानप्रत्यक्षफले घटादौ तद्विषयभेदासत्त्वाद्व्यभिचरितश्च सूत्रार्थ इति बोध्यम् । **वृत्तिविरोध इति** । स्वजन्यप्रतीतिविषयरूपे फले स्वविषयाद्भेद इत्यत्र नियमे विशिष्टज्ञानविषये तज्जनकविशेषणज्ञानविषयभेदासत्त्वेन व्यभिचारश्चेत्यपि बोध्यम् । तत्र न्यायमते संवित्तिर्वेत्यनुव्यवसायः । प्रकटतेति मीमांसकमते । चक्षुरादीनां ज्ञानद्वारा विषये प्राकट्यजनकत्वामिति तेषां सरणिः[6] । **जनकीभूत इति** । विषयतासंबन्धेन ज्ञानं प्रति तादात्म्येन विषयस्य हेतुत्वादिति भावः । स विषयो बौद्ध इति योगवृत्तावस्माभिरुपपादितम्[7] । तदा सामानाधिकरण्येनैव हेतुत्वं बोध्यम् । **फलम्** । शैत्यादिप्रतीतिरूपम् ।

नन्वितिशङ्का न सूत्रमते, किंतु शक्यसंबन्धो लक्षणेति स्वव्याख्यातमत इति बोध्यम् ।

१ ख. ग. °ञ्जनेनेत्या°। २ क. °देर्नीला°। ३ क. °स्य पावनत्वादिविशिष्टस्य प्रतीतिरेव हि प्रयोजनमित्य°। ४ क. °कं कल्प्यते । ५ ग. °स्य फ°। ६ ग. णिः । लक्षणायास्त्वनुपपत्तिप्रसारिताया इति पाठः । नतु न° । ७ क. °तम् । न तु त° ।

शैत्यप्रतीतिः फलं किं तु शक्यसंबन्धरूपलक्षणायाः। तथा च न किंचिद्दूषणमिति।

अत्राऽऽहुः—अन्वयानुपपत्त्या हि लक्षणा प्रसरन्ती यावदन्वयोपपादकं तावदेव विषयी करोति, न त्वनुपपादकमपीति कथं तटे पावनत्वमपि विषयी कुर्यात्। नन्वन्वयानुपपत्त्या कल्प्यमानाऽपि साऽनुद्देश्यमपि शैत्यं विषयी करोति। यथा तापोपशमायोपादीयमानं चन्दनं शैत्यमपि जनयतीति चेन्न। चन्दनस्य हि संनिधिमात्रेण शैत्यजनकत्वम्। लक्षणायास्त्वनुपपत्तिप्रसारितायाः इति वैषम्यात्।

यत्तूक्तं ययाश्रुते चण्डीदासेन—'ज्ञानस्य विषयातिरिक्तं फलमात्रं विवक्षितं ज्ञेयगतं वा। आद्ये प्रकृतेऽप्यस्ति गोस्वामिगतप्रीतिः। अन्त्ये प्रयोजनज्ञान एव व्यभिचारः। तेन हि गोस्वामिसंतोषमात्रं जन्यते। न तु तद्गतं किंचिदिति। तस्माद्धेतुफलयोस्तत्प्रतीतिफलप्रतीत्योर्भिन्नकालत्वेनाभिन्नव्यापारविषयत्वमसमीचीनमेवेति व्यञ्जनासिद्धिरित्यत्र तात्पर्यम्' इति। तदबोधविजृम्भितम्। न ह्यनेन सूत्रेण यथाश्रुतेनापि ज्ञानत्वस्य विषयान्यफलकत्वव्याप्यत्वं प्रतिपाद्यते, किंतु ज्ञानफलत्वस्य विषयान्यत्वव्याप्यत्वम्। तथा च शैत्यादेर्लक्षणाजन्यप्रतीतिविषयत्वे तत्प्रयोजनं न स्यादित्यर्थे दोषानवकाशः।

वयं तु ब्रूमः—विशिष्टं लक्ष्यं तदा भवेद्यदि विशिष्टत्वं लक्ष्यतावच्छेदकं पूर्वं प्रतीतं संभवेत्। न त्वेवम्। पावनत्वादिविशेषवैशिष्ट्यस्य तटे प्रमाणान्तरागोचरत्वात्। तत्र तस्याभावात्। यदुक्तवान्—'योगः फलेन नो' इति। अथ पावनत्वादिसामान्यवैशिष्ट्यमेव लक्ष्यतावच्छेदकमस्तु, तस्य प्रतीतत्वादिति चेत्तर्हि पावनत्वादिविशेषो न प्रतीयेतेति। किं बहुना गौर्बाहीक इत्यत्र गवाभिन्नजडस्य लक्ष्यत्वे सैवान्वयानुपपत्तिः।

---

लक्षणायास्त्वनुपपत्तिप्रसारितायाः इति पाठः। **न तु तद्गतमिति**। स्वविषयगतमित्यर्थः। **दोषानवकाश इति**। त्वदुक्तविकल्पप्रयुक्तदोषानवकाश इत्यर्थः। ननु यष्टीः प्रवेशयेत्यादिवत्तात्पर्यानुपपत्तिरेव तद्बीजमस्त्वित्यत आह—**वयं त्विति**। पावनत्वं न लक्ष्यम्। किं तु तटत्वादिवल्लक्ष्यतावच्छेदकं वाच्यम्। न चैतत्संभवतीत्याह—**यदि विशिष्टत्वमिति**। सामानाधिकरण्यसंबन्धेन गङ्गागतपावनत्वादिविशिष्टतटत्वमित्यर्थः। **संभवेदिति**। बाधेन प्रत्यक्षाद्यसंभवात्तदवच्छिन्ने शक्यसंबन्धाग्रहादिति भावः। भ्रमात्मकोऽपि शाब्दबोधो वक्तुमशक्यः। बाधनिश्चयसत्त्वात्। वैयञ्जनिके तु बोधे बाधज्ञानं न प्रतिबन्धकमिति तत्त्वम्। **सैवान्वयानुपपत्तिरिति**। बाहीको न गौरिति बाधज्ञानस्य विरोधिव्याप्यदर्शनविधया गवाभिन्नजडो बाहीक इति बोधेऽपि प्रतिबन्धकत्वादिति भावः। किं च बाहीकत्वविशिष्टे गवाभेदप्रतीतेः सर्वसिद्धायास्तावताऽपि लक्षणयोपपादयितुमश-

---

१क. °रूपाया ल°। २ क. °शमनं चन्द°। ३ क. °रितयेति। ४ क. °जनत्वं न। ५ क. °शिष्टं ल°। ६ क. °तं भ°। ७ ग. व्याञ्जनिके। ८ ग. °स्य व्या°। ९ ग. °वः। बाही°।

विशिष्टे लक्षणा नैवम्[१]

निर्गदेन व्याख्यातम्[२] ।

विशेषाः स्युस्तु लक्षिते[३] ॥ १८ ॥

लक्षिते तटादौ[४] ये विशेषाः पावनत्वादयस्ते चाभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्याः । तच्च व्यञ्जनध्वननद्योतनादिशब्दवाच्यमवश्यमेषितव्यम् ।

एवं लक्षणामूलं व्यञ्जकत्वमुक्तम् । अभिधामूलं त्वाह—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।

संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥ १९ ॥

---

उपसंहरति—विशिष्टे० ।

एवमुक्तयुक्त्या ।

**विशेषाः०** ।

तदादौ लक्षिते तु सति पावनत्वादयो विशेपाः प्रतीतिविषयाः स्युः । ते च प्रसिद्धातिरिक्तव्यापारगम्या एव । स च व्यापारो व्यञ्जनध्वननादिशब्दवाच्योऽवश्यमेषितव्यः । कथमन्यथा विशेषप्रतीतिरिति । एवं लक्षणामूलव्यञ्जकत्वमुक्तम् । अभिधामूलं त्वाह—

**अनेकार्थस्य०** ।

अनेकार्थस्य शब्दस्य वाचकत्वे संयोगाद्यैर्नियन्त्रिते सत्यवाच्यार्थधीहेतुर्व्यापारोऽञ्जनम् । व्यञ्जनमित्यर्थः । अनेकार्थोऽनेकाभिधानशक्तिः । अर्थभेदेन शब्दभेद इति नये

---

क्यत्वमिति व्यन्जनैवावश्यमास्थेयेति बोध्यम् । केचित्तु लक्षणावृत्तेः फलं लक्ष्यार्थबोध एव । न तु पावनत्वादिप्रतीतिर्नापि लक्षणाज्ञानस्य । किं तु लक्षणया तीरबोधस्यैव तत्फलमिति मूलेऽपि न दोष इत्याहुः ।

**लक्षिते** । लक्षणया बोधिते । **अतिरिक्तव्यापारेति** । शक्तिलक्षणयोः प्रागेव निरस्तत्वात्तात्पर्यस्य च संसर्गबोधमात्रजनकत्वादिति भावः । एवं च लक्ष्ये तीरादौ व्यन्जनयोपस्थिताः शैत्यादयो भेदेनान्वयबोधविषयाः । व्यङ्ग्यस्य भेदेनाप्यन्वयादिति बोध्यम् । लाक्षणिकस्यैव व्यञ्जकत्वमिति भ्रमनिरासायाऽऽह- **एवमिति** । **मूलम्** । तदन्वयव्यतिरेकानुविधायि । **अभिधामूलमिति** । अस्यां च व्यङ्ग्यार्थविशिष्टोपस्थितिः शङ्कास्पदमपि नेति भावः ।

**अनेकाभिधानशक्तिरिति** । गृहीतानेकार्थप्रतिपत्तिजनकानेकशक्तिमानित्यर्थः ।

---

१ क. म् । व्यां° । २ ग. °गदव्या° । ३ क. ग. °ते । त° । ४ क. ग. °दौ वि° । ५ क. ख. °शब्दैर्वा । ६ क. ग. °मूलव्य° । ७ ग. °म् । लक्षिते । ८ ग. °नकशक्तिमानित्यर्थः । तद्वृत्तिं° ।

त्वर्थान्तराभिधानशक्तशब्देन सदृशस्तदभेदभ्रमविषयो वा । वाचकत्वमभिधा । अवाच्यार्थस्तदाऽभिधाव्यापाराविषयः । नियन्त्रणं नियमनमेकतरमात्रस्मरणानुकूलत्वम् । यदाहुः—

'शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः '

इति । एतेन ' नियमनमेतास्मिन्नेवार्थे वक्तुस्तात्पर्यमिति तात्पर्यग्रहः ' इत्यबोधप्रलापः संयोगाद्यैरित्याद्यपदसंग्राह्यं विप्रयोगादि । यदुक्तमभियुक्तैः—

---

गृहीतद्वितीयाभिधाविषय एव व्यञ्जनास्फुरणात्तत्र द्वितीयाभिधाग्रहोऽपि नियामकः । मुख्यार्थाबाधाच्च न लक्षणेति भावः । **तदभेदभ्रमेति** । तद्बीजं च सादृश्यमेव । नन्वेवं श्लेषवदभिधात एव द्वितीयार्थग्रहः स्यादत उक्तं वाचकत्व इति । अवाच्यार्थस्तदाऽभिधया प्रतिपादयितुमशक्यः । **एकतरमात्रेति** । सत्यपि संबन्धग्रहे संयोगादिज्ञानस्य तज्जनितप्रथमार्थतात्पर्यग्रहस्य वा प्रतिबन्धकत्वान्न द्वितीयार्थस्मरणमिति भावः । वस्तुतोऽनेकार्थे शक्तिज्ञानजन्यतदर्थस्मृतौ संयोगादिज्ञानजन्यतदर्थतात्पर्यनिश्चयस्य हेतुत्वात्कारणाभावमात्रेण द्वितीयार्थस्मरणाभावः । नियन्त्रणं च द्वितीयार्थस्मारकासमवधानमेव । न च संयोगादिनाऽभिधावद्व्यञ्जनमपि नियम्यताम् । संयोगादिकमतिक्रम्य बोधकत्वेनैव तत्सिद्धेः । अन्यथा सुगन्धिमांसभोजनप्रकरणे सुरभि मांसं भुङ्क्ष्व इत्यभिधाने गोमांसानुपस्थितौ विदग्धस्य जुगुप्सानापत्तेः । **अनवच्छेदः** । अनिश्चयः । स्मृतिरत्र ज्ञानमात्रम् । अत एव शब्दार्थसंदेहपराकरणद्वारा नियतार्थावसायहेतुत्वाद्विशेषस्मृतिहेतवो निर्णयहेतव इति पुञ्जराजादिभिर्व्याख्यातम् । **एतेनेति** । विशेषस्मृतिहेतव इत्यभियुक्तवाक्यविरोधेनेत्यर्थः । प्रथमार्थं प्रत्याय्य पदानां विरामेऽपि प्रथमार्थप्रतीतेरेव व्यापारत्वमाश्रित्य द्वितीयार्थधीरुपपाद्या । शब्दस्य पर्यायपरिवृत्त्यसहत्वाच्च शाब्दत्वं व्यञ्जनाया बोध्यम् । वस्तुतोऽनवच्छेदो नाम संबन्धिज्ञानाद्युगपत्स्मृतानेकार्थमध्ये कतमोऽर्थस्तात्पर्यविषय इति तात्पर्यसंदेह एव । तात्पर्यज्ञानं च शाब्दबोध एव हेतुः, न स्मृतौ । अन्यथा किंविषयं तात्पर्यं गृह्येत । अर्थानुपस्थितेः । विशेषस्मृतिपदेन प्रकृतार्थतात्पर्यनिश्चय एवोच्यते । स्मृतिविषयत्वाच्च तत्र स्मृतिपदं गौणमिति चिन्त्यमेतत् । न च नानार्थपदात्मकसंबन्धिज्ञानादापाततः स्मृतेष्वर्थेषु तात्पर्यसंदेहे तात्पर्यग्राहकसंयोगादिज्ञाने तत्सहकृतात्पुनरनुसंहितात्पदात्प्रकृतार्थस्मृतिः सैव शाब्दोपयोगिनीति तत्तात्पर्यमिति वाच्यम् । गौरवात् । मानाभावाच्च । वाचकत्वे नियन्त्रित इत्यस्यायमर्थः—शब्दस्य वाचकत्वे इतरवाच्यार्थविषयकशाब्दबोधजनकत्वे नियन्त्रित एकतरार्थमात्रविषयकतया संकुचिते सति अवाच्यार्थस्य तदा शक्त्या शाब्दबोधविषयतया बोधयितुमशक्यस्य शाब्दबोधकृद्व्यञ्जनमिति । एवं च तदाऽस्मिन्वाच्यत्वं व्यङ्ग्यत्वं चेति द्विविधोऽपि व्यवहार इति यदभिधालक्षणप्रस्तावे तदाऽस्य वाच्यत्वव्यवहारवारणाय यत्नः सोऽपि व्यर्थ एवेत्यलम् । **अभियुक्तैः** ।

---

१ ख. र्थज्ञानमि° । २ तत्सिद्धेः । एतदेव हि व्यञ्जनामाहात्म्यं यत्संयोगादीन्विशेषस्मृतिहेतूनपि अतिक्रम्यार्थं बोधयति । सुरभिः । सुगंधिः । गौश्च ( चू० ) । ३ ग. °थः । एते° । ४ ग. कत्वे स्वावा° ।

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः॥**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥**

**इत्युक्तदिशा सशङ्खचक्रो हरिः, अशङ्खचक्रो हरिरित्यच्युते। रामलक्ष्मणाविति दाशरथौ। रामार्जुनगतिस्तयोरिति भार्गवकार्तवीर्ययोः।**

---

**संयोगो०।**

तत्र संयोगः प्रसिद्धार्थस्य गुणविशेषरूपः संबन्धः। तेनाभिधानियमनम्। यथा 'सशङ्खचक्रो हरिः' इत्यत्र शङ्खादिसंयोगेनानेकार्थस्य हरिशब्दस्याच्युतेऽभिधा नियम्यते। अन्यहरिपदार्थे तत्संयोगाभावात्।

विप्रयोगस्तादृशसंबन्धध्वंसः। तेन यथा—अशङ्खचक्रो हरिरित्यच्युते। ध्वंसस्य प्रतियोगिपूर्वकत्वात्।

साहचर्यं सहचरता। तेन यथा—रामलक्ष्मणाविति रामपदस्य लक्ष्मणसाहचर्येण दाशरथौ।

विरोधः सहानवस्थानं[1] वध्यघातकभावश्च। तेन यथा—छायातपाविति छायापदस्यातपाभावे। विरोधिनोः कयोश्चि[2]त्तत्त्वोपमायां 'रामार्जुनगतिस्तयोः' इत्यत्र रामार्जुनपदयोर्भार्गवकार्तवीर्ययोः।

---

भर्तृहरिभिः। **प्रसिद्धार्थस्येति।** तदर्थमात्रवृत्तितया प्रसिद्ध इत्यर्थः। अत इन्द्रादिभिः कदाचिच्चक्रधारणेऽपि न दोष इत्याहुः[3]। **तत्संयोगाभावादिति।** तत्संयोगप्रसिद्ध्यभावात्। **ध्वंसः।** संबन्धध्वंसः। किं च सर्वाऽप्यभावप्रतीतिः प्रतियोगिसमानदेशैव। प्रतियोगिज्ञानमारोपितमनारोपितं वेत्यन्यत्। **सहचरतेति[4]।** यत्र क्वचिदेकस्मिन्नर्थे प्रसिद्धपरस्परसापेक्षत्वमित्यर्थः। वस्तुतस्तु सहचरतासादृश्यम्। सदृशयोरेव प्रायेण सहचरणदर्शनात्। शब्दयोरपि सदृशार्थयोः सहप्रयोग इत्युत्सर्गाच्च। स्पष्टं चेदं भाष्यकैयटहेलाराजीयादिषु। अत एवैतत्कारिकाव्याख्याने पञ्चम्यपाङ्परिभिः(पा० सू० २।३।१०)इति साहचर्यं उदाहृतं हेलाराजादिभिः। तत्र वर्जनार्थापसाहचर्यात्तदर्थस्यैव परेः कर्मप्रवचनीयस्य ग्रहणमिति चोक्तम्। महाभाष्यकारोऽप्येवमेवावादीत्। कान्तावपि शक्तत्वाच्छायापदं नानार्थम्। **कयोश्चिदिति।** एतेन द्वयोरपि नानार्थत्वात्परस्पराश्रयग्रस्तमिदमुदाहरणमित्यपास्तम्। प्रकरणसहकारेण रामार्जुनपदयोर्द्वयोरपि परस्परविरोधिद्वये युगपदेव तात्पर्यग्रहात्। असंकीर्णोदाहरणं तु रामरावणावितीत्याहुः।

---

१ क. °नं बाध्यबाधक°। २ क. °श्चिदुप°। ३ ग. °हुः। सह°। ४ ख. °ति। कार्यप्रसि°। ५ ग. °र्थः। कान्तावपि।

स्थाणुं भज भवच्छिद इति हरे। सर्वं जानाति देव इति युष्मदर्थे। कुपितो मकरध्वज इति कामे। देवस्य पुरारातेरिति शंभौ। मधुना मत्तः

अर्थः प्रयोजनम्। तेन यथा—'स्थाणुं भव भवच्छिदे' इत्यत्र भवच्छेदरूपप्रयोजनवशात्स्थाणुशब्दस्य हरे।

प्रकरणं वक्तृश्रोतृबुद्धिस्थता। तेन यथा—सर्वं जानाति देव इत्यत्र देवशब्दस्य राजनि। यत्तु युष्मदर्थ इति व्याख्या तस्या अपि प्रकृते राजादावित्यर्थः। किं वा संबोध्ये राजादावित्यर्थः। संबोध्यस्यैव युष्मदर्थत्वात्।

लिङ्गं संयोगातिरिक्तसंबन्धेन परपक्षव्यावृत्तो धर्मः। तेन यथा—कुपितो मकरध्वज इत्यत्र मकराकारध्वजसमुद्राभ्यां व्यावृत्तेन समवायसंबन्धवता कोपेन मकरध्वजशब्दस्य कामे। यत्तु 'लिङ्गं चिह्नम्' इति तन्न। कोपस्य कामचिह्नत्वाभावात्। असाधारणधर्मस्य चिह्नत्वात्। सशङ्खचक्र इत्यत्रातिव्याप्तिप्रसङ्गाच्च।

शब्दस्यान्यस्य संनिधिर्नियतार्थकशब्दान्तरसामानाधिकरण्यम्। अतो 'भवच्छिदे' इत्यादावप्रसङ्गः। न च 'सशङ्खचक्रो हरिः' इत्यत्रातिव्याप्तिः[1]। शङ्खचक्रसामानाधिकरण्याभावात्। यद्वा हरौ शङ्खचक्रे इति संयोगोदाहरणतात्पर्यम्। तेन यथा—'देवस्य त्रिपुरारातेः' इत्यत्र त्रिपुरारातिशब्दसामानाधिकरण्याद्देवशब्दस्य शंभुरूपेऽमरे। अन्यस्य देवशब्दार्थस्य राज्ञस्त्रिपुरारातित्वाभावात्। यत्तु 'देवतान्तरस्यातथाभावाच्छंभौ शक्तिनियमनम्' इति। तन्न युक्तम्। देवतान्तरे[2] देवशब्दस्य शक्तिभेदाभावादुदाहरणासामञ्जस्यापत्तेः।

सामर्थ्यं कारणत्वम्। तेन यथा—'मधुना मत्तः कोकिलः' इति। अत्र मधुशब्दस्य वसन्ते। अन्यस्य मधुशब्दार्थस्य कोकिलमादनासामर्थ्यात्।

औचित्यर्हता। तया यथा—'पातु वो दयितामुखम्' इति। अत्रोत्कण्ठितमनोरथसाध-

**प्रयोजनम्**। अनन्यसाध्यमित्यर्थः। हर इति। शिव इत्यर्थः। देवपदस्य राजत्वेन वृन्दारकत्वेन च शक्तेर्नानार्थत्वम्। राजा भट्टारको देव इत्यादिकोशात्। अत्र राजसंबोध्यकदूतकथारूपं प्रकरणम्। **नियतार्थकेति**। नियतत्वं च नानार्थपदार्थैकार्थमात्रसंसर्ग्यर्थवाचकत्वम्। अतो न सशङ्खचक्र इत्यादावतिव्याप्तिः। हरिपदार्थेन्द्रेणापि[3] कदाचिच्छङ्खचक्रधारणादित्याहुः। **अतः**। सामानाधिकरण्याविवक्षातः। **शङ्खचक्रेति**। तद्वाचकसामानाधिकरण्याभावादित्यर्थः[4]। निषधं पश्य भूभृतामित्यत्रापि अनेनैवाभिधानियमनं द्रष्टव्यम्। त्रिपुरारातिपदं पुरारातिपदं च शंभौ योगरूढम्। **मादनासामर्थ्यादिति**। कोकिलमादनसमर्थत्वेना-

१ क. °तिप्रसङ्गः। २ क. देवान्तरे। ३ ख. °न्द्रेण नरान्तरेण च कदा। ४ क. °र्थः। त्रिपुरा°।

**कोकिल इति वसन्ते । पातु वो दयितामुखमिति सांमुख्ये । भात्यत्र परमेश्वर इति राजधानीरूपाद्देशाद्राजनि । चित्रभानुर्विभातीति दिने**

नौचित्येन मुखशब्दस्य सांमुख्ये । न[3] तूपायादौ । यद्यप्यत्रापि सामर्थ्यं संभवत्येव तथाऽपि मधुनेत्यत्र तृतीययेव तद्बोधाभावेऽप्यौचितीमात्रज्ञानादेव शक्तिनियमनमसंकीर्णमिति ।

देशेन यथा—'भात्यत्र परमेश्वरः' इति । अत्रात्रेति राजधानीरूपाद्देशात्परमेश्वरपदस्य राजनि ।

कालेन यथा—'चित्रभानुर्विभाति' इति । अत्र चित्रभानुपदस्य दिवा दिवाकरे, रजन्यामाशुशुक्षणौ ।

प्रसिद्धत्वादित्यर्थः । **सांमुख्य इति** । असंमुखीनदयितावदनस्य वैरस्याधायकत्वेन त्राणजनकत्वौचित्याभावादिति भावः । **न तूपायादाविति** ।

मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि ।

इति कोशादुपायेऽपि मुखशब्दवृत्तेरिति भावः । परमेश्वरपदस्य विष्णुत्वेनापि शक्तेर्नानार्थत्वं बोध्यम् ।

अत्र[5] वदन्ति—यद्यपि नानार्थपदसमभिव्याहृतपदान्तरार्थस्य प्रसिद्धः संबन्धः साहचर्यम्, स चैकजन्यत्वदांपत्यजन्यजनकभावस्वामिभृत्यभावस्वस्वामिभावादिवच्चक्रादिसंयोगादिरपि ग्रहीतुमुचित इति सशङ्खचक्र इत्यादेरपि साहचर्योदाहरणतैव युक्ता, तथाऽपि यत्र शब्दोपात्तप्रसिद्धं संबन्धसामान्यं शक्तिनियामकं तत्संयोगस्य, यत्र तु द्वंद्वादिगतः संबन्ध्येव केवलस्तथा तत्साहचर्यस्येत्याशयान्न दोषः । एवं च सगाण्डीवोऽर्जुन इति संयोगस्य, गाण्डीवार्जुनाविति गाण्डीवमर्जुन इति च साहचर्यस्योदाहरणं बोध्यम् । रामरावणावित्यपि साहचर्यस्यैवोदाहरणम् । भ्रातृत्वादिसंबन्धवद्विरोधसंबन्धस्यापि लोकप्रसिद्धत्वात् । एवं स्थाणुं भज भवच्छिद इति प्रयोजनोदाहरणे यद्यपि लिङ्गादविशेषः । न च लिङ्गमनन्यसाधारणस्तद्धर्मः प्रयोजनं तु भजनादेः कार्यं न तु तद्गतो धर्म इति भेद इति वाच्यम् । भवच्छेदजनकभजनकर्मत्वस्य काष्ठावृत्तिभवधर्मत्वात् । तथाऽप्युक्तस्य विशिष्टधर्मस्य शाब्दबोधोत्तरभाविमानसबोधविषयत्वेन प्रकृतशाब्दबोधाविषयत्वाल्लिङ्गतो वैलक्षण्यमिति । एवं च नानार्थपदशक्यान्तरावृत्तिरेकशक्यगतः साक्षाच्छब्दवेद्यो धर्मो लिङ्गमिति बोध्यम् । एवं शब्दस्यान्यस्य संनिधिः नानार्थपदैकार्थमात्रसंसर्ग्यर्थान्तरवाचकपदसमभिव्याहार एव । न तु सामानाधिकरण्यनिवेशः । अत एव 'करेण राजते नागः' इत्यत्र वैयधिकरण्येऽपि करपदस्य नागपदमादाय नागपदस्य च करपदमादाय शुण्डायां गजे च शक्तिनियमनम् । अत्रैकशब्दशक्तिनियमनायापरशब्दशक्तिनियमनस्य नापेक्षा । किं तु करनागशब्दयोरर्थान्तरग्रहणेऽन्वयानुपपत्त्या युगपदेव शक्तिनियमनम् । अतो नान्योन्याश्रयः । किं च कुपितो मक-

१ क. °विराजत इत्यह्नि रवौ । २ क. नतु मुखादौ । ३ क. °नुर्भाति । ४ क. निःसार° ।
५, अत्र वदन्तीत्यारभ्येतिवदन्तीत्यन्तो ग्रन्थः क पुस्तके न दृश्यते ।

**रवौ, रात्रौ वह्नौ। मित्रं भातीति सुहृदि। मित्रो भातीति रवौ।**

व्यक्तिर्लिङ्गं पुंस्त्वादि। तथा यथा—'मित्रं भाति' इति। अत्र नपुंसकरूपालिङ्गा-

रध्वज इति लिङ्गोदाहरणेऽतिव्याप्तिः। सामानाधिकरण्यघटितस्य त्रिपुरारातेरिति प्रकाशोदाहृते त्रिपुरासुरवैरित्वस्य लिङ्गतया लिङ्गोदाहरणत्वमेवोचितम्। यदि तु यत्रैकपदार्थः कोपादिः पदार्थान्तरेणानन्वित एव यः प्रकृतशक्यधर्मतां शक्यान्तरव्यावृत्ततां च भजते तत्र लिङ्गत्वमित्युच्यते तर्ह्यस्तु यथाकथंचिदुदाहरणसामञ्जस्यम्। सामानाधिकरण्यानिवेशस्त्वयुक्त एवेति बोध्यम्। एवं च कारणतापरपर्यायसामर्थ्यमपि मधुना मत्तः कोकिल इत्यादावुदाहृतम्। तत्र लिङ्गत्वं यद्यपि वक्तुं शक्यम्, कोकिलमादनसामर्थ्यस्य वसन्तासाधारणतया लिङ्गत्वात्तथाऽपि शाब्दत्वाशाब्दत्वाभ्यामेकानेकपदार्थत्वाभ्यां वा विशेषो बोध्यः। वस्तुतः संयोगादीनामर्थान्तरसाधारणत्वे नानार्थशब्दस्यार्थविशेषे शक्तेः संकोच एव न संभवति। नियामकस्यासंकुचितत्वात्। अथ प्रसिद्धत्वादिना तेषामसाधारणताबुद्धिस्तर्हि प्रायो लिङ्गभेदा एवैते न तु सर्वथैव ततः स्वतन्त्रा इति बोध्यम्। यदप्युक्तं संयोगाद्यैरभिधानियमने सुरभि मांसं भुङ्क्ते इत्यादौ शालकादिप्रयुक्ते द्वितीयार्थबोधो व्यञ्जनयेति। तदसंगतम्। यतो नियन्त्रणं नामापरार्थस्य प्रथमतः शाब्दबोधजननं तदनन्तरमपरस्यापि शक्त्यैव। न च द्वयोर्बोधे तात्पर्यज्ञानस्य कुत्रोपयोगः। अत्रार्थेऽयं शब्दः प्रमाणमयमर्थः प्रमाणवेद्य इति निर्णयद्वारा प्रवृत्तौ तदुपयोगो न तु बोध इति गृहाण। अत एवास्मादर्थबोधद्वयं जायते वक्तुः परं क तात्पर्यमिति न विद्म इत्यनुभवः। एवं च द्वितीयार्थबोधाय व्यञ्जना नाऽऽवश्यकी। यत्र तु द्वितीयार्थस्य नैव बोधस्तत्र तदीयशक्त्यंशेऽनुद्बुद्धसंस्कारत्वान्न दोषः। किं च व्यञ्जनावादिनाऽपि सर्वस्य द्वितीयार्थबोधवारणाय वक्तृबोद्धव्यादिवैशिष्ट्यप्रतिभादीनामवश्यं व्यङ्ग्यप्रतिभाहेतुत्वमङ्गीकार्यम्। अस्माभिश्च तेषां द्वितीयार्थशक्त्युद्बोधकत्वमङ्गीकार्यमिति न दोषः। यदि तु योगरूढिस्थले रूढिज्ञाने योगापहारित्वस्य सर्वतन्त्रसिद्धतया रूढ्यनधिकरणयोगार्थालिङ्गितार्थान्तरस्य प्रतीतिर्विना व्यक्तिं दुरुपपादा। यथा—

"अबलानां श्रियं हृत्वा वारिवाहैः सहानिशम्।
तिष्ठन्ति चपला यत्र स कालः समुपस्थितः"॥

इत्यादावशक्तानां द्रव्यमपहृत्य जलवाहकैः सह पुंश्चल्योऽभिरमन्त इत्यर्थान्तरं नैतैः शब्दैर्योगरूढ्या बोधयितुं शक्यते। मेघत्वविद्युत्त्वाद्यघटितस्यैव प्रतीतेः। अन्यथा चमत्कारो न स्यात्। अत एव न योगशक्त्याऽपि केवलरूढ्यर्थासंवलितार्थबोधकत्वस्य तस्या रूढिसमानाधिकरणाया असंगतेः पुंश्चलीत्वादेः सर्वथैव तदविषयत्वाच्चेति तत्र व्यञ्जनाऽऽवश्यकीत्युच्यते। तर्ह्यस्तु तत्र तथा। न तु सर्वत्र। भद्रात्मन इत्यादेर्ध्वनित्वं तूपमानोपमेयभावं व्यङ्ग्यमादायैवेति वदन्ति।

१ क. °रूपशब्दान्मि° । २ ग. °स्तु कथं।

इन्द्रशत्रुरित्यादौ वेद एव न काव्ये स्वरो विशेषप्रतीतिकृत्। आदिग्रहणात्

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिं अच्छिवत्तेहिं ।
एद्दहमेत्तावस्था एद्दहमेत्तेहिं दिअ एहिं ॥ ११ ॥

---

न्मित्रपदस्य सुहृदि । 'मित्रो भाति' इत्यत्र पुंलिङ्गात्सूर्ये ।

स्वरस्तूदात्तादिर्वेदे बाहुल्येन तेनार्थप्रतीतिर्दृश्यते । यथा 'इन्द्रशत्रुर्वर्धस्व' इति । अत्रेन्द्रशत्रुरित्यस्यान्तोदात्तत्वे षष्ठीतत्पुरुषव्यक्ताविन्द्रस्य शातनकर्मत्वं लभ्यते । पूर्वपदान्तोदात्तत्वे चेन्द्रः शातयिता यस्येति बहुव्रीहिलाभादिन्द्रस्य शातनकर्तृत्वं लभ्यते । काव्ये तु नैवं बाहुल्यम् । ननु 'दृष्टे प्रसीद' इत्यादौ स्वरेण संबोधनं प्रकाश्यते । तेन चार्थविशेषेऽभिधा नियम्यते, न तु साक्षात्स्वरेणैव । काकुस्थले तु न नानार्थाभिधानियमनं किं त्वपदार्थस्यैव व्यञ्जनम् । यद्वा स्वरशब्देनोदात्तादित्रयं विवक्षितम् । अतः काव्ये स्वरस्याभिधानियामकत्वं नास्त्येवेति व्यर्थं बाहुल्येनेति विशेषणमिति । मैवम् ।

सुधाकरसुहृद्वक्त्रं दृष्टिः पङ्कजवैरिणी ।'

इत्यादाविन्द्रशत्रुरिति न्यायेनाभिधानियमनस्य काव्येऽपि दुर्वारत्वात् ।

स्वरादय इत्यादिग्रहणादभिनयापदेशौ गृह्येते । अन्ये चोक्तान्तर्भूताः । अभिनयश्च साक्षादिवार्थाकारादिप्रदर्शिका हस्तादिक्रिया । तया यथा—**एद्दहमेत्त०** ।

---

**अर्थप्रतीतिरिति** । बाहुलकात्करणे क्तिन् । प्रतीतिकृदिति वा पाठः । **षष्ठीतत्पुरुषेति** । इन्द्रस्य शत्रुरिति शातयितेत्यर्थकः । **नैवमिति** । काव्य उदात्तादिस्वरकृतार्थभेदे समासविषये श्लेषभङ्ग एव स्यादिति भावः । लोक ऐकश्रुत्येनैव प्रायः प्रयोगाच्चेत्यपि बोध्यम् । **सुधाकरसुहृदिति** । अन्तोदात्तत्वे षष्ठीसमासेनोपमा । अन्यथा बहुव्रीहौ प्रतीपमिति भावः । वस्तुत इदं चिन्त्यमेव । अभियुक्तैः क्वापि तथाऽकथनात् । अत एव प्रकाश इन्द्रशत्रुरित्यादौ वेद एव न काव्ये स्वरोऽर्थविशेषप्रतीतिकृदित्येव बहुषु पुस्तकेषु पाठः । बाहुल्येनेति पाठेऽपि वेद एव बाहुल्येन सोऽर्थप्रतीतिविशेषकृन्न तु लोके क्वचिदपीति व्याख्येयमिति दिक् ।

**एद्दहेति** । चिरप्रवासिनि नायके नायिकावस्थां बोधयन्त्याः कस्याश्चिदुक्तिरियम् ।

'एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥'

---

१ क. ल्येनार्थप्रतीतिकृद्दृश्य° । २ क. °शत्रो विवर्धस्वेति । अत्रेन्द्रशत्रो इत्यस्या° । ३ क. °दाद्युदा° । ४ क. °र्तृत्वम् । का° । ५ क. °हस्तक्रि° । ६ क. °ठः । शत्रुरिति शातयितेत्यर्थकम् । नैव° । ७ ग. °दे श्ले° । ८ क. °मा । बहु° । ९ ग. °वः । एद्द° ।

इत्यादावभिनयादयः। इत्थं संयोगादिभिरर्थान्तराभिधायकत्वे निवारि-तेऽप्यनेकार्थस्य शब्दस्य यत्क्वचिदर्थान्तरप्रतिपादनं तत्र नाभिधा। नियमनात्तस्याः। न च लक्षणा। मुख्यार्थबाधाद्यभावात्। अपि त्वञ्जनं व्यञ्जनमेव व्यापारः। यथा—

भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य।
यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत्॥१२॥

---

अत्र विकसितमुकुलिताभिनयविशेषसाहित्येन स्तनस्य पीनत्वमुकुलितत्वाद्यर्थविशेषेऽभिधा नियम्यते। एवं शेषपादत्रयेऽपि।

अपदेशोऽभिमतनिर्देशः। तेन यथा—

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्॥

अत्रापदेशेनेदंशब्दस्याभिधा वक्तरि नियम्यते।

इत्थं संयोगादिनाऽर्थान्तराभिधायकत्वे निवारितेऽपि यदनेकार्थशब्देन क्वचिदर्थान्तरस्य प्रतिपादनं तत्र नाभिधा शब्दस्य व्यापारः। नियमनात्तस्याः। नापि लक्षणा। मुख्यार्थबाधादिविरहात्। किं त्वञ्जनं व्यञ्जनमेव व्यापारः। यथा—**भद्रात्मनो०**।

---

परिमाणे दघ्नप्रत्ययः। अक्षिपत्राभ्यामित्युपलक्षणे तृतीया। दिवसैरिति करणे। ( गाथा छन्दः। ) **विशेषेऽभिधेति**। बुद्धिस्थतत्तदर्थशक्ततया नानार्थानामेतावन्मात्रा-दिशब्दानां शक्तिः स्तनादिगतपरिमाणविशेषरूपेऽर्थे नियम्यत इत्यर्थः। अभिनयोऽत्र स्तनप्रदर्शने मुकुलाकारः, अक्षिप्रदर्शने पद्मपलाशाद्याकारः, अवस्थाप्रदर्शन उच्चताप्रदर्शकः, दिवसप्रदर्शनेऽङ्गुल्यग्रधारणादिः।

**अभिमतनिर्देश इति**। स च हृदये हस्तनिक्षेपः। अर्थाकारप्रदर्शकत्वाभावान्नायम-नियमः। **इतः स दैत्य इति**। ( कुमारसंभवे द्वितीयसर्गे पद्यमिदम्। ) स्पष्टम्। अपदेशेन हि अत्र इतःशब्दद्वयस्यैकात्मपरता लभ्यते। **निवारितेऽपीति**। अर्थान्तरं निवार्य प्रकृतार्थबोधनेऽपीत्यर्थः। **क्वचित्**। वक्तृवैशिष्ट्यादिसाहाय्यवतीत्यर्थः।

**भद्रेति**। अत्र यच्छब्दः प्राकरणिकराजपरः। तत्पक्षे यस्य प्रकृतस्य राज्ञः करः पाणिर्निरन्तरं दानार्थं गृहीताम्बुसेकशोभनोऽभूत्। भद्रात्मनः। कल्याणरूपस्य। दुरिति। अनभिभवनीयं शरीरं यस्य। वंशः कुलं तत्रोन्नतिराधिक्यं यस्य। शिलीमुखा नाराचाः। संग्रहोऽभ्यासदार्ढ्यम्। अनुपप्लुतेति। अबाधितज्ञानस्येत्यर्थः। अवारितगतेर्वा। अदुष्टहितकर्तुर्वा।

---

१ क. °धायित्वे। २ क ख. ग. यत्किंचिद°। ३ ग. °ञ्जनमे°। ४ क. °ञ्जनमे°। ५ क. ग. °दयह°। ६ क. °वाभावान्ना°। ७ ग. °नीयशरीरस्य।

अत्र प्रकरणेन भद्रात्मन इत्यादिपदानां राज्ञि तदन्वययोग्ये चार्थेऽभिधानियन्त्रणेऽपि गजस्य तदन्वययोग्यस्य चार्थस्य व्यञ्जनयैव प्रतीतिः ।

ननूपमानोपमेयभावकल्पनाच्छब्दश्लेषतो भेदेऽपि ' योऽसकृत्परगोत्राणाम् ' इत्याद्यर्थश्लेषतः कुतोऽस्य भेदः । अर्थश्लेषे चोभयत्र शक्तिरेव न व्यञ्जनेति चेदुच्यते । यत्रोभयोरर्थयोस्तात्पर्यं स श्लेषः । यत्र त्वेकस्मिन्नेव तत्, सामग्रीमहिम्ना तु द्वितीयार्थ-

---

परेति । शत्रुनिवारकस्य । गजपक्षे भद्रजातीयस्यात्युच्चत्वाद्दुःखाधिरोह्यशरीरस्य । विशाला वंशस्य पृष्ठदण्डस्योन्नतिर्यस्य । कृतभ्रमरसंग्रहस्य । अनुद्धतधीरगमनस्य । परस्योत्कृष्टस्य वारणस्य गजस्य करः शुण्डादण्डो मदजलसेकसुभगोऽभूदिति । राजा वाच्यः । हस्ती प्रतीयमानः । ( वसन्ततिलका छन्दः । )

**अत्र प्रकरणेनेति**[3] । न चात्र विद्वन्मानसेतिवदेकशब्दोपस्थितार्थद्वयस्यान्तरङ्गत्वात्परस्परमभेदान्वयपूर्वकमेव वाक्यार्थबोध इति श्लिष्टरूपकमेवेदमिति वाच्यम् । भेदानवबोधात् । तथाहि—यत्र द्वयोरर्थयोः परस्परान्वयबोधं विनेतरान्वयानुपपत्तिर्विशेष्यमश्लिष्टं च तत्रैव श्लिष्टरूपकाङ्गीकारात् । यथा विद्वन्मानसेत्यत्र । प्रकृते तु न तथा । किं च प्रकरणेन विशेष्यपदात्प्रकृतार्थस्य तत एव विशेषणपदैरपि तदन्वययोग्यार्थस्यैवोपस्थितावाकाङ्क्षायाः सत्त्वेन वाक्यार्थबोधे प्रतिबन्धकाभावेन द्वितीयार्थोपस्थितिप्रतीक्षाया अयुक्तत्वात् । अत एव श्लिष्टपरम्परितमेव रूपकभेदेषु गणितं न तु केवलं श्लिष्टमपि । यत्र तु न विशेष्ये श्लेषो नापि द्वितीयार्थोपस्थितिं विनाऽन्वयानुपपत्तिः, तत्र प्रस्तुतान्वयबोधोत्तरं विशेषणश्लेषमात्रमाहात्म्येनाप्रस्तुतवृत्तान्त उपस्थिते व्यञ्जनया तदभिन्नप्रस्तुतवृत्तान्तारोपः प्रकृते तत्र समासोक्तिः । न चैषाऽपि रीतिः प्रकृते । द्वयोः प्रस्तुतत्वाभावाच्च न श्लेषालंकारः । अतिशयोक्तेस्तु श्लिष्ट उक्तिसंभव एव नेति भावः । **गजस्येति** । अस्य तात्पर्यविषयस्यापि तद्ग्राहकप्रकरणाद्यभावाद्व्यङ्ग्यबोधविषयत्वमेवेति बोध्यम् ।

**उपमानोपमेयभावेति** । प्रकृते भद्रात्मन इत्यत्रोक्तविशेषणविशिष्टहस्तिप्रतीतौ द्वयोरर्थयोर्मिथोऽसंबद्धत्वे वाक्यभेदापत्तेरुपमाकृतास्वादानुभवाच्च तेन सह राज्ञ उपमाया अपि प्रतीतेरित्यर्थः । **शब्दश्लेषत इति** । सर्वदो माधव इति सभङ्गश्लेषत इत्यर्थः । तत्र हि द्वयोरपि प्रकृतत्वाच्चोपमाकल्पना । **अर्थश्लेषत इति** । अभङ्गश्लेषोऽर्थश्लेष इति सर्वस्वकारादिमतेनेदम् । असकृत्परगोत्राणामित्यादौ देवेन्द्रराज्ञोरुपमाप्रतीतिरपि सर्वसिद्धेति ततोऽस्य भेदाभावात् । तत्र शक्तावत्रापि सैव स्यादिति भावः । **तात्पर्यमिति** । युगपत्तद्ग्राहकप्रकरणाद्यवतार इत्यर्थः[6] । **स श्लेष इति** । स श्लेषविषय इत्यर्थः । **एकस्मिन्नेव तत्** । तात्पर्यग्राहकं प्रकरणादि । यत्र तु क्रमेणोभयतात्पर्यग्राहकप्रमाणावगमः

---

१ क. °नाविरहाच्छ° । २ क. 'म्ना द्वि° । ३ क. °ति । यत्र द्वयो° । ४ क. ग. °न्वयं विनेत° । ५ क. °पकम् । यथा विद्वन्मानसेत्यत्र । अतो नात्र तत् । गजस्येति । ६ क. ग. °र्थः । एक° ।

तद्युक्तो व्यञ्जकः शब्दः ।

तद्युक्तो व्यञ्जनयुक्तः ।

यत्सोऽर्थान्तरयुक्तथा ।

अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥ २० ॥

तथेति व्यञ्जकः ।

इति श्रीकाव्यप्रकाशे शब्दनिर्णयो नाम द्वितीय उल्लासः ।

---

प्रतीतिः सा व्यञ्जनेति ।

एवं व्यञ्जनां निरूप्य तया शब्दं लक्षयति—**तद्युक्तो०**।

अञ्जनमिति प्रस्तुतत्वेऽप्यर्थगत्या तच्छब्देन व्यञ्जनं परामृश्यते । तेन व्यञ्जनयुक्तो व्यञ्जक इति संपद्यते । अन्यथाऽञ्जनयुक्तोऽञ्जक इति स्यात् । तदेतदुक्तम्—'व्यञ्जनयुक्तः' इति ।

ननूक्तस्थलेष्वर्थस्याव्यञ्जकत्वे कथं शब्दार्थयुगलरूपस्य काव्यस्य ध्वनित्वं स्यादित्यत आह—**यत्सो०**।

स इति शब्दः । तथेति व्यञ्जक इत्यर्थः ।

इति महोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे काव्यशरीरभूतशब्दार्थविभागो द्वितीयोल्लासः ।

---

तत्रावृत्तिरिति बोध्यम् । **सा व्यञ्जनेति** । सा तज्जन्येत्यर्थः । 'तदुक्तं तद्युक्तो व्यञ्जनयुक्तः' इति पाठः । **अर्थान्तरयुगिति** । स्वशक्यप्रकृतार्थबोधानन्तरमेव व्यङ्ग्यार्थबोधात्तस्य सहकारित्वमिति भावः । शब्दस्य परिवृत्त्यसहत्वाच्च शब्दमूलकत्वेन व्यपदेशः ।

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते काव्यप्रदीपोद्योते द्वितीय उल्लासः ।

---

१ क. °म् । अञ्जनयुक्तो व्य° । २ क. °त्वे श° । ३ क. °त्वं न स्या° । ४ क. तथा व्यञ्जकः । ५ क. °ध्यम् । तदु° । ग. °ध्यम् । अर्था° ।

अथ तृतीय उल्लासः ।

---

**अर्थाः प्रोक्ताः पुरा तेषाम् ।**

**अर्था वाच्यलक्ष्यव्यङ्ग्याः । तेषां वाचकलाक्षणिकव्यञ्जकानाम् ।**

**अर्थव्यञ्जकतोच्यते ।**

**कीदृशीत्याह—**

**वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः ॥ २१ ॥**
**प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ॥**
**योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥ २२ ॥**

**बोद्धव्यः प्रतिपाद्यः । काकुर्ध्वनेर्विकारः । प्रस्तावः प्रकरणम् । अर्थस्य वाच्यलक्ष्यव्यङ्ग्यात्मनः । क्रमेणोदाहरणानि—**

---

एवं शब्दे निरूपित उपोद्धातेन शब्दव्यञ्जनायां निरूपितायां प्रसङ्गेनार्थव्यञ्जना निरूपणीया । तत्रैतदाशङ्क्येत—शब्दे निरूपितेऽवसरोऽयमर्थनिरूपणस्य । किं चार्थे धर्मिणि निरूपिते तद्धर्मो व्यञ्जनाऽपि सुनिरूपा भवति । तत्कुतस्तदनादृत्य व्यञ्जनानिरूपणमिति । तदेनां शङ्कामपनिनीषन्नुक्तं स्मारयति—**अर्थाः०।**

अर्था वाच्यलक्ष्यव्यङ्ग्याः । अर्थस्य संनिकृष्टतरत्वेऽपि तेषामित्यनेन योग्यतया वाचकादयः शब्दाः परामृश्यन्ते ।

शिष्यावधानाय प्रतिजानीते—**अर्थ०** ।

ननु सर्वेषामित्यादिना पूर्वमर्थानां व्यञ्जकता प्रोक्तैव। तदन्या कीदृशी सेत्याकाङ्क्षायामाह—**वक्तृ०** ।

बोद्धव्यः प्रतिपादनीयो जनः । अन्तर्भावितण्यर्थत्वात् । अतो न वाच्येनाभेदः । काकुः शोकभीत्यादिभिर्ध्वनिविकारः । वाक्यवाच्याभ्यां सहितोऽन्यसंनिधिर्वाक्यवाच्यान्यसंनिधिः ।

---

प्रकृतघटकत्वं प्रकृतज्ञापकत्वं वोपोद्धातः । प्रकृते च व्यञ्जकशब्दघटकत्वं तस्यास्तज्ज्ञापकत्वं च तन्निरूपणस्येति बोध्यम् । स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । **तदन्येति** । पूर्वान्वयि । तदन्या शब्दव्यञ्जकताऽन्याऽर्थव्यञ्जकता प्रोक्तैव सा कीदृशीत्यन्वयः । कीदृशी । किंस्वरूपा । नियन्त्रितार्थधीजनकत्वं शब्दव्यञ्जनायाः स्वरूपम् । अस्यास्तु किमित्यर्थः । **वक्ता** । कविस्तन्निबद्धश्च । **ध्वनेर्विकार इति** । उच्चारयितुः शोकाद्यनुमापको जातिविशेष इत्यर्थः । **अन्यसंनिधिः** । अन्यो वक्तृबो-

---

१ ख. °शीसेत्या° । २ ख °र्ध्वनिविका° । ३ ग. ख. तः । स्मृत° । ४ ख. ग. °ङ्गः । कीदृ° ।

**अइपिहुलं जलकुम्भं घेत्तूण समागदह्मि सहि तुरिअम् ।**
**समसेअसलिलणीसासणीसहा वीसमामि खणम् ॥ १३ ॥**

**अत्र चौर्य्यरतगोपनं गम्यते ।**

अतो न द्वंद्व एकवद्भावे नपुंसकत्वप्रसङ्गः । प्रस्तावः प्रकरणम् । वैशिष्ट्यं वैलक्षण्यम् । तच्च वक्त्रादिषु प्रत्येकमभिसंबध्यते । अन्योऽर्थो वाच्यलक्ष्यव्यतिरिक्तः । व्यक्तिर्व्यञ्जना । करणव्युत्पत्तेः । अर्थस्य त्रिविधस्यापि । न तु कस्यचिदेव । प्रतिभाजुषामित्यनेन नवनवोन्मेषशालिनी प्रज्ञा प्रतिभा । या वासनेत्युच्यते । तस्यां सत्यामेव वक्तृवैशिष्ट्यादिसत्त्वेऽपि व्यङ्ग्यप्रतीतिरिति प्रतिपादितम् । अत एव वैयाकरणादीनां न तथा रसप्रतीतिः । तथा चोक्तम्—

सवासनानां नाट्यादौ रसस्यानुभवो भवेत् ।
निर्वासनास्तु रङ्गान्तर्वेश्मकुड्याश्मसंनिभाः ॥ इति ।

यथाक्रममुदाहरणानि—

**अइपिहु० ।**

अत्र वक्त्री कामिनी । तस्या दुःशीलत्वरूपवैशिष्ट्यं विजानतां चौर्यरतगोपनं व्यक्तं भवति।

द्व्यभिन्नः । देशो विजनादिः । कालो वसन्तादिः । वैशिष्ट्यादिति पञ्चम्यर्थः सहकारिस्वरूपं हेतुत्वम् । तच्च तदभावे व्यञ्जनानुदयाद्बोध्यम् । तत्रापि वक्त्रादेरन्ततः प्रस्तावाभिनयादेश्च वैशिष्ट्येनान्यार्थधीहेतुत्वसत्त्वात् । एवकारेण लक्षणादीनां निरासः । संकेताद्यभावादिति बोध्यम् । एवं च वक्त्रादिवैलक्षण्यहेतुका या प्रतिभाशालिनामन्यार्थधीस्तद्धेतुव्यापारत्वमस्याः स्वरूपमिति बोध्यम् । अर्थस्येत्यनेन शब्दव्यञ्जनानिरासः । जलाहरणवर्त्मनि नदीगहन उपनायकोपभुक्ताया घर्मजलनिःश्वासाद्युपभोगचिह्नेनोपभोगं संभावयन्तीं सखीं संबोध्य काचिदाह—अइ इति ।

अतिविपुलं जलकुम्भं गृहीत्वा समागताऽस्मि सखि त्वरितम् ।
श्रमस्वेदसलिलनिःश्वासानिःसहा विश्राम्यामि क्षणम् ॥

पिहुलमिति पाठे पृथुलमित्यर्थः । सखीत्यप्रतार्यताध्वननम् । जलकुम्भं जलपूर्णकुम्भम् । तेन दुर्वहत्वम् । गृहीत्वा समागता । तदपि त्वरितं न शनैः । तेन मध्ये विश्रमाद्यभावः । अस्मि अहमतिशयितसुकुमारतनुः । आभ्यां खेदातिशययोग्यताध्वननम् । श्रमजन्यस्वेदसलिलनिःश्वासाभ्यां निःसहा निर्बला चलितुमक्षमेति यावत् । सलिलत्वोक्त्या स्वेदबाहुल्यम् । अत्रेदृशजलकुम्भवहनजन्य एवायं श्रमो नान्यथा शङ्क्यिष्ठा इति भावः । **चौर्यरतगोपनमिति** । अत्र वाच्यघटितवाक्यार्थस्य चौर्येण कृतं रतं गोपयतीति सामाजिकान्प्रति व्यङ्ग्यमिति भावः । शब्दपरिवृत्तिसहत्वादर्थस्यैवेयं वृत्तिरिति बोध्यम् ।

१ क. °नां·सभ्यानां र° । २ क. °वैलक्षण्यं वि° । ३ क. °क्तीकरोति । ४ क. °ध्यम् । एवका° । ५ क. °ण शक्तिलक्ष° ।

ओण्णिद्दं दोब्बल्लं चिन्ता अलसत्तणं सणीससिअम् ।
मह मन्दभाइणीए केरं सहि तुहवि अहह परिहवइ ॥ १४ ॥

अत्र दूत्यास्तत्कामुकोपभोगो व्यज्यते ।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्याऽऽवासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥ १५ ॥

---

**ओण्णिद्दं०** ।

अत्र दूती प्रतिपाद्या । तस्या अन्यदोऽपि दृष्टदुष्टचेष्टया वैशिष्ट्येन तस्याः कामुकोपभोगो व्यज्यते । अत्रान्यदीयमुन्निद्रतादिकमन्यत्र बाधितमिति तत्सदृशामुन्निद्रतादिकं लक्ष्यत इति केचित् । तदबोधात् । सख्यास्तदीयोन्निद्रतान्वयस्यावाक्यार्थत्वात् ।

**तथाभूतां०** ।

---

**औन्निद्र्यमिति** । कृतकामुकसंभोगां दूतीं प्रत्युपभोगचिह्नैस्तं ज्ञातवत्या नायिकाया इयमुक्तिः ।

औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम् ।
मम मन्दभागिन्याः कृते सखि त्वामप्यहह परिभवति ॥

तु हेति द्वितीयान्तम् । तत्रापि तथाऽनुशासनात् । अन्ये तु शेषषष्ठ्यन्तमाहुः । तदा छाया तवेति । हे सखि निःश्वाससहितं गतनिद्रत्वादि कर्तृ अल्पभागधेयाया मम कृते मदर्थं त्वामपि परिभवति पीडयतीत्यन्वयः । विरहोत्कण्ठितां मां तावत्परिभवत्येव मत्कार्यार्थे गमनागमनादिना कामुकप्रसादने नत्यादिव्यापारेण त्वामपीत्यर्थः । अत एव स्वस्य मन्दभाग्यत्वोक्तिः । अन्यकृते नान्यस्य दुःखं किंतु समदुःखसुखत्वं सख्या एवेत्यतः सखीति ।

भागो रूपार्धके प्रोक्तो भागधेयैकशब्दयोः ।

इति विश्वः । **चेष्टया वैशिष्ट्येनेति** । चेष्टारूपेण वैशिष्ट्येन ज्ञातेनेत्यर्थः । **व्यज्यत इति** । तस्याः कामुकोपभोक्तृत्वमेषा प्रकाशयतीति सामाजिकान्प्रति व्यज्यत इत्यर्थः । **अन्यदीयमिति** । ममेति पदमौन्निद्र्यादावन्वेतीति तदाशयः । **तदीयोन्निद्रतान्वयस्येति** । तच्च दर्शितरीत्या स्पष्टमेव ।

**तथेति** । वेणीसंवरणे कुरुनिग्रहानुद्यमेन युधिष्ठिरमुपालभमानं भीमं प्रति सहदेवस्य आर्य कदाचित् खिद्यते गुरुरित्युपालम्भनिषेधपरे वाक्योत्तरे गुरुः किं खेदमपि जानातीत्यु-

---

१ क. °दा दृष्टदुष्टचेष्टाया । २ क. °द्रत्वादि° । ३ क. °द्रत्वादि° । ४ क. तत्त्वका° । ५ ग. °त्यप्यर्थः । ६ क. °खसत्वेन सख्या° । ७ ग. °त्वं न स° । ८ क. °मुपल° । ९ क. °परवाक्यस्योत्त° ।

**अत्र मयि न योग्यः खेदः कुरुषु तु योग्य इति काक्वा प्रकाश्यते। न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यम्। प्रश्नमा-**

खेदो मात्सर्यम्। अत्र खेदं मयि भजति नाद्यापि कुरुष्विति काकोर्वैशिष्ट्यान्मयि न योग्यं कुरुषु पुनर्योग्यं मात्सर्यमिति व्यज्यते। नन्वत्रोक्तेन काकुव्यङ्ग्येन वाच्यस्य सिद्धिः

पक्रम्य भीमसेनोक्तिः। खिन्न इत्यस्येत्थमित्यादिः। गुरुः साक्षादनभियोज्यो युधिष्ठिरः। इत्थममुना प्रकारेण खिन्ने म्लाने मयि खिद्यतेऽनेनेति खेदं मात्सर्यमप्रियत्वेन ज्ञानं भजति। कुरुषु कुर्वपत्येषु। अस्य सामान्यशब्दस्यापि विशेषसंनिधानाद्विशेषान्तरपरता। तेन दुर्योधनादिलाभः। अद्यापि एवं दुरवस्थायामपि। यद्वाऽज्ञातवासनिस्तारात्प्रत्यपकारक्षमकालेऽपि न भजतीति सोपहासः काक्वा वाक्यार्थः। तथाभूतां स्त्रीधर्मिणीं दुःशासनाकृष्टवसनकचपाशां विशिष्य भवत्संनिधावप्यकथनीयदुरवस्थाम्। नृपा एव सदः सभा तस्याम्। पाञ्चालस्य तनयाम्। न तु यस्य कस्यचित्। तेनजन्मप्रभृत्यतः पूर्वमपरिभूतत्वम्। अस्मत्संबन्धेनैव तथात्वमिति भावः। तादृशीं दृष्ट्वेति भजनक्रियायां खिन्नत्वक्रियया च समानकर्तृकम्। उषितं स्थितमिति च भावे क्तप्रत्ययसिद्धं द्वितीयान्तं दृष्ट्वेत्यस्य कर्म। तथा वल्कलधरैरस्माभिर्वने व्याधैः सार्धं न तु वानप्रस्थादिऋषिभिर्यत्सुचिरमुषितं तद्दृष्ट्वा विराटस्य राज्ञ आवासे गृहेऽनुचितस्य सूदादिकर्मण आरम्भेण निभृतं गुप्तं यथा स्यात्तथा स्थितं च दृष्ट्वेत्यर्थः। केचित्तु दृष्ट्वेत्स्यैतदुषितमित्यनेन समानकर्तृकम्। संनिधानात्। तेन पञ्चानामपि तद्दर्शनं लभ्यत इत्याहुः।

**काकोर्वैशिष्ट्यादिति।** संपूर्णचतुर्थपादव्यापित्वरूपकाकुवैशिष्ट्यस्य ज्ञानादित्यर्थः। **इति व्यज्यत इति।** इति ज्ञापनं व्यज्यत इत्यर्थः। एतेन कथं व्यङ्ग्यार्थबोधः सामाजिकानामाधुनिकानाम्। न तेषां भीमसेनोक्तिमशृण्वानानां तदीयकाकुज्ञानमित्यपास्तम्। भीमसेनपठितानुपूर्व्यनुकरणे तज्ज्ञानसंभवात्। सामाजिकानां युधिष्ठिरे भीमसेनज्ञापनरूपव्यङ्ग्यप्रतीतिश्चं मयि खेदभजनं कुरुषु तदभजनं चानुचितमिति ज्ञानादिति भीमाभिसंधिरूपभीमस्य काकुमज्ञात्वा न भवतीति काकोर्व्यञ्जकत्वं बोध्यम्। एतेन पाञ्चालीपरिभववनवासादिना भीमादेः खिन्नतारूपस्यार्थस्य भीमे कुरुषु च खेदभजनस्यानौचित्यौचित्यव्यञ्जनेन काकोरपेक्षा। तां विनाऽपि महतां खेदज्ञाने दीनविषयकत्वग्रहेऽनौचित्यप्रतीतेरनुभवासिद्धत्वात्तत्र तथात्वस्यानौचित्याद्यविनाभावादिति परास्तम्। तदविनाभूतत्वेऽपि ज्ञापनाक्विनाभूतत्वविरहात्। न हि यदनुचितं तज्ज्ञाप्यत इति नियम इति दिक्। **उक्तकाकुव्यङ्ग्येनेति।** काकुव्यङ्ग्यज्ञापनविषयानौचित्यातिशयेनेत्यर्थः। **वाच्यस्येति।** भ्रातरि खेदभजनरूपस्य कुरुषु तदभजनरूपस्य चेत्यर्थः।

१ क. °षु यो°। २ ख. °क्वा व्यज्यते। ३ क. °षु तु योग्यं। ४ ख. ग. °या समा°। ५ क. °नां सहदेवे भी°। ६ क. °श्च। भीमस्य। ७ क. °रूपेणार्थेन भी°। ८ क. °तां दीनसंबन्धिखेदेनौ°। ९ क. °त्वादिति प°। १० क. °म्। अनौचित्यातिशयस्य क्रोधप्रकर्षकस्य काक्वैव व्यञ्जनादिति। दिक्। ११ ख, ग. °क्। वाच्य°।

त्रेणापि काकोर्विश्रान्तेः ।

---

शोभनत्वनिष्पत्तिः क्रियते । तथा चापराङ्गतया व्यङ्ग्यं गुणीभूतम् । अतो न ध्वन्यङ्गं काकुरिति चेत् । उक्तव्यङ्ग्यस्य क्रोधप्रकर्षपर्यवसन्नतया वाच्यस्यैव तदङ्गत्वात् । तदेतदुक्तम्—'न च वाच्यसिध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यम्' इति । तथाऽपि काक्वाक्षिप्तव्यङ्ग्यरूपगुणीभूतव्यङ्ग्यप्रभेदता कथमपनेयेति चेन्न । अत्र नेति प्रश्नकाक्काऽपि वाक्यार्थप्रतीतिपर्यवसानात् । यां काकुं विना वाक्यार्थबोध[1] एव नोपपद्यते तयैवाऽऽक्षिप्तस्य गुणीभावात् । यथा 'मथ्नामि कौरवशतं समरे न कोपात्' इत्यादौ भीमसेनादौ तादृशे वक्तरि । तदेतदुक्तम्—'प्रश्नमात्रेणापि काकोर्विश्रान्तेः' इति ।

अन्ये तु—'कुरुषु न भजतीति नञ्काकुः किमर्था । ततः प्रश्नरूपः किमर्थ एव हठाक्षिप्त[2] इति तस्यैव गुणीभावो न्याय्यः । न तु क्रमेणापि काक्वा व्यङ्ग्यो गुणीभूतो भवति[3] । अत एव गुणीभूतविभागे काक्वाक्षिप्तमिति हठार्थगर्भाक्षिप्तपदप्रयोग.' इति तात्पर्यमाहुः।[4]

---

**शोभनत्वेति** । अनौचित्यरूपव्यङ्ग्यार्थोपस्कृतवाच्यार्थस्यैव भीमक्रोधप्रकर्षकत्वादित्यभिमानः । **उक्तव्यङ्ग्यस्येति** । तस्यैवेत्यर्थः । अनौचित्यकारिणि क्रोधप्रकर्षस्याऽऽनुभविकत्वेन[5] तत्सूचकत्वाद्वाच्यातिशार्यादं व्यङ्ग्यमिति ध्वनित्वमेवेति भावः । **नेति प्रश्नकाक्काऽपीति** । नञ्मात्रनिष्ठया प्रश्नव्यञ्जिकया काक्काऽपीत्यर्थः । अनौचित्यादिव्यञ्जककाकुस्तु खेदं खिन्ने मयि भजति नाद्यापि कुरुष्विति समुदायनिष्ठेति[6] भावः[7] । कुरुनिग्रहानुद्यमेन युधिष्ठिरमुपालभमानं भीमं प्रति सहदेवीयस्याऽऽर्ये कदाचित्खिद्यते गुरुरित्युपालम्भनिषेधपरवाक्यस्योत्तरभूताया वत्स गुरुः खेदमपि जानातीत्युपक्रम्य भीमसेनीयाया अस्या उक्तेर्मयि खेदं भजति नाद्यापि कुरुष्विति प्रश्नमात्रेणाप्युपपत्तेरित्याशयः । **यां काकुमिति** । न तथा विशिष्टकाकुरिति न तदाक्षिप्तस्य गुणीभाव इति भावः ।

**अन्ये त्विति** । सर्वथाऽपि नञ्मात्र एव काकुर्न विशिष्ट इत्येतदाशयः । नञ्काक्वैव सहदेवगुरोः सुभगं तदाशयाभिज्ञं भ्रातरं त्वां पृच्छामि गुरुर्दीने खिन्ने मयि खेदं भजति विरुद्धकारिषु कुरुषु नेत्येवं वाक्यार्थसिद्धौ तामेव प्रश्नव्यञ्जिकां काकुं सहकारिणीमासाद्य वाक्यार्थे मयि न योग्य इत्यादिरूपमनौचित्यं भीमक्रोधप्रकर्षकतया[8] वाच्यादपि चमत्कारि व्यञ्जयतीति तद्धृदयम् । तदेवाऽऽह—**क्रमेणापीति** ।

---

१ क. °बोधो नो° । २ क. °ठाद्दाक्षि° । ३ क. काकुव्यङ्ग्यो गुणी भव° । ४ क. °ति तत्तात्प° । ५ क. °र्षकस्या° । ६ ख. ग. °निष्ठेन प्रश्नव्यञ्जकेन काक्का° । ७ क. °वः । इत्यो पक्रमाया अस्य उक्ते° । ८ क. ख. °र्षतया ।

तइआ मह गण्डत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो ।
एह्निं सच्चेअ अहं ते अ कवोला ण सा दिट्ठी ॥ १६ ॥

अत्र मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यैवाभूत्, चलितायां तु तस्यामन्यैव जातेत्यहो प्रच्छन्नकामुकत्वं त इति व्यज्यते ।

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किं चैतस्मिन्सुरतसुहृदस्तन्वि ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥ १७ ॥

---

**तइआ०** ।

वाक्यमनेकं पदम् । तेनात्र तदेदानींपदात्मकवाक्यवैशिष्ट्यान्मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यादृशी । चलितायां तु तस्यामन्यादृशीत्यहो प्रच्छन्नकामुकस्त्वं तवेति व्यज्यते ।

**उद्देशो०** ।

---

**तइआ इति** । स्वनायिकाभयेन निकटवर्तिनीमन्यां प्रियतमां साक्षादपहाय स्वनायिकाकपोलगतं तत्प्रतिबिम्बं स्वनायिकामुखावलोकनमिषेण सादरं दृष्ट्वा तद्विगमे तादृशनिरीक्षणनिवृत्तं नायकं प्रति दृष्टिविकारेण ज्ञातरहस्याया इयमुक्तिः ।

तदा मम गण्डस्थलनिमग्नां दृष्टिं न नयस्यन्यत्र ।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥

तदा यदा सा कामिनी मत्संनिधावासीदित्यर्थः । निमग्नामनिमेषतया तथाभूतामिव । न तु पतिताम् । णिमिअमिति पाठे निमितां निहितामित्यर्थः । इदानीं तस्या गमनकाले सैव तदवस्थैव । सा स्निग्धाऽनिमेषा । तथा च सखीसांनिध्यातिरिक्तसकलसत्त्वे तादृशदृष्टिविरहस्तदेदानींपदात्मकवाक्यगम्यः सखीसांनिध्याभावस्य स्वप्रयोजकत्वमवगमयतीति बोध्यम् ।

**पदात्मकेति** । पदसमूहमात्रस्यैवात्र वाक्यपदार्थत्वादिति भावः । **मत्सखीमिति** । मद्द्वयाद्विम्बमपहायेत्यादिः । **अन्यादृशी** । निर्निमेषा स्निग्धा च । **अन्यादृशी** । उद्विग्ना विषण्णा च । इयत्कालं गोपनं कृतमित्याश्चर्येऽहो इति । **तवेति व्यज्यत इति** । तवेत्युपालम्भप्रकाशनं सामाजिकान्प्रति व्यङ्ग्यमित्यवधेयम् ।

**उद्देश इति** । नायिकां प्रति रत्यर्थिनः कामुकस्योक्तिरियं दूत्या वा । उद्दिश्यत इत्यु-

---

१ ख. °त् । इदानीं च चलितायां तस्यामन्यै° । क. °त् । इदानीं च चलितायां त्वस्यां त्वन्यै° । २ क. °त्वं तवेति° । ३ ग. °दलिश्रे° । ४ ग. ख. °हृदयै° ।

अत्र रतार्थं प्रविशेति व्यङ्ग्यम्।

णोल्लेइ अणद्दमणा अत्ता मं घरभरम्मि सअलम्मि।
खणमेत्तं जइ संझाइ होइ ण व होइ वीसामो॥ १८॥

अत्र नर्मदोद्देशरूपस्य तद्विशेषणीभूतवातकुञ्जादिरूपस्य च वाच्यस्य यथोक्तविशेषणस्य वैशिष्ट्यात्सुरतार्थं प्रविशेति व्यज्यते।

णोल्लेइ०।

देशस्तीरभूभागः। तथा च दूरादेतैर्व्यञ्जनैरुद्दिश्यते न त्वत्राऽऽगम्यत इति निर्जनत्वं गम्यते। ऊर्ध्वदेशत्वेनाधः संचरतां स्खलनभियाऽनवलोकनीयत्वं च व्यज्यते। सरसत्वेन शुष्कदलराहित्यात्कटुशब्दराहित्यम्। श्रेणीत्वेन वेष्टनम्। तथा च तत्पत्रावरणात्संचरतामनवलोकनीयता छाया च सूच्यते। तदीयशोभया स्थानान्तरादतिशयितशोभः कुञ्जोत्कर्षेण गुञ्जन्मधुकरकरम्बितकुसुमसमृध्यादिरूपेणाङ्कुरितोऽसन्नेवोत्पादितो रमणीविभ्रमः, चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमो मत इत्युक्तलक्षणो यत्र स इत्यनेन यासामपि न स्मरोद्भेदस्तासामप्यसौ वहतीति भवत्याः कामवैमुख्ये दुरुत्तरं व्यसनं स्यादिति भावः। यत्तु विभ्रमो विलास इति व्याख्यानं तदज्ञानविलसितम्। तयोर्भेदात्।

विलासोऽङ्गे विशेषो यः प्रियाप्तावासनादिषु।

विभ्रमस्तूक्त एव। अत एवामरोऽपि—

स्त्रीणां विलासबिब्वोकविभ्रमा ललितं तथा।

इत्यादिना हावलक्षणे[3] भेदेन तावुपनिबद्धवान्। नर्म ददातीति नर्मदा न नदीमात्रम्। न केवलमेतावदेव वैमुख्ये बाधकं किं त्वन्यदप्यस्तीत्याह—किंचेति। एतस्मिन्प्रदेशे ते मानिनीमानभञ्जनेऽतिनिपुणत्वेन प्रसिद्धाः। यद्वा ते तव सुरतस्य सुहृद इत्यर्थः। सुरतसुहृत्त्वं रतिश्रमजन्यस्वेदहरणेन पुनः पुनः प्रवर्तनया। वाताः। वान्तीति वाता इति व्युत्पन्नेनानेनैव गमनशालित्वे लब्धे पुनर्वान्तीति मन्दत्वप्रत्यायनाय। नर्मदाकुञ्जोत्कर्षसंबन्धाच्छैत्यसौगन्ध्ये उक्ते एव। तन्वीति कन्दर्पवेदनावत्त्वं श्रमापनायकसत्त्वादत्रैव रतौचित्यं च। आक्षिप्ततच्छब्दार्थमाह। येषां वातानामग्रे मनोभूः कामः कलितो धृतोऽकाण्डेऽनवसरे निमित्ताभावेऽपि कोपो येन तादृशः सरति। वायुसंबन्धतुल्यकाले कामिनीजनस्य कामपीडोदयेन कामस्याग्रेसरत्वमुत्प्रेक्षितम्। अनेनैवंविधसंभेदे सुरतवैमुख्यादतिकुपितो मकरध्वजः किं वा विधास्यतीति न ज्ञायत इति ध्वन्यते। मनोभूत्वेन सचेतसां दुष्परिहरत्वम्। **यथोक्तविशेषणस्येति**। बहुव्रीहिः। **सुरतार्थं प्रति**। सुरतार्थं प्रविशेति यन्नायिकायाः प्रेरणं तत्सामाजिकान्प्रति व्यज्यत इत्यर्थः।

**णोल्लेइ इति**। गुरुजनसांनिध्येन विशिष्य वक्तुमशक्नुवती काचित्तटस्थतयेव

१ क. °क्तवै°। २ ख ग. °तां संवलनं°। ३ ग. विहाव°। ४ क. °वभेदेषु भे°। ५ क. द्धाः सु°। ६ क. च। त°।

**अत्र संध्या संकेतकाल इति तटस्थं प्रति कयाचिद्द्योत्यते।**

**सुव्वइ समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण।**
**एमेअ किंत्ति चिट्ठसि ता सहि सज्जेसु करणिज्जम् ॥१९॥**

---

अन्यसंनिधिः संनिहितोऽन्यः। तेनात्र प्रतिवेशिनीं प्रति प्रवर्तिते वाक्ये प्रच्छन्नपुरुषरूपस्यान्यस्य संनिधेर्वैशिष्ट्यात्संनिहितं प्रति संध्या संकेतसमय इति व्यज्यते।

**सुव्वइ०।**

---

संनिहितं नायकं प्रति संकेतकालसूचनाय प्रतिवेशिनीं संबोध्य श्वश्रूपालम्भमाह।

नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले।
क्षणमात्रं यदि संध्यायां भवति न वा भवति विश्रमः ॥

अणण्णमणा इति पाठे त्वनन्यमना इति। नुदति प्रेरयति। अनार्द्रमकरुणम्। तेन श्रमादिव्याजालम्बनेनापि नावकाश इति ध्वन्यते। गृहभरो गृहकार्यनिर्वाहः। सकल इत्यनेन सार्वकालिकी व्यग्रता। यदि क्षणमात्रं विश्रमो भवति तर्हि संध्यायां तत्रैवावसरप्राप्तेरथवा न भवत्येवेति योजना। श्वश्रूरित्यनेनानतिक्रमणीयाज्ञता। **वैशिष्ट्यात्।** तद्विषयकज्ञानादित्यर्थः। **व्यज्यत इति।** संनिहितं प्रति यत्संकेतसमयबोधनं तत्सामाजिकेषु व्यज्यत इत्यर्थः। एवमग्रेऽपि बोध्यम्।

उपपतिं प्रत्यभिसर्तुं प्रस्थितां नायिकां प्रति तत्पत्यागमनवार्तां श्रुतवत्यास्तत्सख्या जनान्तरसंनिधानेऽभिसारनिवारणोक्तिः। **सुव्वेति।**

श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण।
एव मेव किमिति तिष्ठसि तत्सखि सजय करणीयम् ॥

समागमिष्यतीति श्रूयत इत्यन्वयः। अद्यैव न तु कालान्तरे। श्रूयते नतु यदा कदाचिच्छ्रुतम्। तत्रापि प्रहरमात्रेण न तु बिलम्बेन। सम्यक्पूर्णकामः, बहुतरलब्धधनः। अनेनाऽऽगमनोत्तरं झटिति पुनर्गमनम्। प्रिय इति विरोधिलक्षणया। एवमेव। तदीयभोजनाद्युपयोगिव्यापारराहित्येन। करणीयं रन्धनादिकम्। सजय सार्धयं। अत्र विदितरहस्यया सख्या कृतस्य प्रियागमनप्रस्तावस्याभिसारप्रकरणकृतस्वरूपाद्वैशिष्ट्यात्ततो निवारणव्यञ्जकत्वमित्याहुः। अन्ये त्वत्र मते श्रूयत इत्यस्य वर्तमानापदेशस्य न तथा स्वरसः। दौष्यताया अवश्यनिवर्तनाय कालाल्पत्वप्रतिपादनार्थं भूतनिर्देशस्यैव युक्तत्वात्। तस्मात्प्रियागमनश्रवणतोऽभिसारान्निवृत्तां प्रत्यवश्यमभिसरणीयमिति व्यञ्जयन्त्या दूत्या इयमुक्तिः। एवं श्रूयते प्रहरमात्रेणाऽऽगमिष्यतीति। तदधुनैवैवमेवाभिसारोद्योगरहितमेव किमिति

---

१ ग. °द्व्यञ्ज्यते। २ ख. ग. °मात्रवि°। ३ ख °रना°। ४ क. °धयेत्याहुः।

**अत्रोपपतिं प्रत्यभिसर्तुं प्रस्तुता न युक्तमिति कयाचिन्निवार्यते।**

**अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः।**
**नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः॥ २०॥**

**अत्र विविक्तोऽयं देश इति प्रच्छन्नकामुकस्त्वयाऽभिसार्यतामित्याश्वस्तां प्रति कयाचिन्निवेद्यते।**

---

अत्र प्रकरणस्य प्रस्तावस्याभिसारसंबन्धिस्वरूपवैशिष्ट्यादुपपतिं प्रत्यभिसर्तुं न योग्यमिति व्यज्यते।

**अन्यत्र०।**

अत्र देशस्यातिविविक्ततादिरूपवैशिष्ट्याद्वक्तृवैशिष्ट्यादिसहितात्सख्या प्रच्छन्नकामुको युष्माभिः प्रहेय इति प्रियसखीः प्रति व्यज्यते।

---

तिष्ठसि अत एवायेत्युक्तमित्याहुः। अपरे त्वद्य तव प्रियो रात्रौ प्रहरमात्रेणाऽऽगमिष्यति संकेतस्थानं तदेवमेवाभिसारोपयोगिव्यापारराहित्येन किमिति तिष्ठसि ततः शीघ्रमभिसारणासामग्रीं रचयेति बोद्धृवैशिष्ट्योदाहरणमेवेदमित्याहुः। एतन्मतद्वयेऽपि प्रकाशो विरुध्येत। **अत्र प्रकरणस्येति।** विदितरहस्यया सख्याऽभिसारोपयोगिवेषविन्यासादिप्रकरणे प्रियागमनकथनेनाभिसरणनिषेधं करोतीति प्रकरणं जानतां सामाजिकानां व्यङ्ग्यमित्यर्थः।

**अन्यत्रेति।** नायकसंनिधानादागतां प्रियतरसखीं दृष्ट्वा सखीः प्रत्युक्तिरियम्। भो सख्यः, अपरिहार्यप्रणयाः, अन्यत्रेतो दूरं कुसुमावचायं हस्तेनाऽऽदानम्। हस्तादाने चेरस्तेये (पा. सू. ३।३।४०) इति घञ्। यावद्धस्तप्राप्यकुसुमलाभस्तावद्दूरं गच्छतेति। सर्वथा निकटेऽसंचरणं तासां ध्वन्यते। यूयमिति बहुत्वादन्यत्र गमनेऽपि ससहायतया भयाद्यभावः। अत एवाहमित्येकवचनम्। अत्र श्रूयमाणमानवशब्दे कुञ्जादिमति च। एतेन भयाद्यभावो विजनता च। अस्मीत्यहमर्थकम्। करोमीत्यत्रापि कुसुमावचायमिति कर्म त्वमप्यस्माभिः सहैवाऽऽगच्छेति नियोगवारणार्थमनागमने हेतुमाह—नाहमिति। सर्वाभ्य एकोऽञ्जलिरसामर्थ्यात्। **विविक्तादि।** विजनतादि। **प्रच्छन्नकामुक इति।** सख्यादिवेषधारीत्यर्थः। **प्रियसखीरिति।** आश्वस्तां प्रियसखीमिति युक्तः पाठः।

---

१ ख. °पतिमभिसर्तुं प्रस्थिता न युक्तमिति निवा°। २ क. °प्रस्थिता न युक्तमिति वार्य°। ३ ग. °ति निवा°। ४ क. °दूरे भ्र°। ५ क. यं विहितो°। ६ ख. °त्र हि वि°। ७ क. या विसर्ज्य इत्याश्वस्ता कया चिन्निवेद्यत इति। ख. °या विसर्ज्य इत्याश्वस्तां प्रति कयाचिद्द्योत्यते। ग. °या विसर्ज्य इत्या°। ८ क. °ष्ट्यादि°। ९ क. °च्छन्नः का°। १० क. °ष्ठसीत्याहुः। एतन्मते प्रकाशो। ११ क. °मत°।

गुरुअणपरवस पिअ किं भणामि तुह मन्दभाइणी अहकम् ।
अज्ज पवासं बच्चसि बच्च सअं जेव्व सुणसि करणिज्जम् ॥ २१ ॥

अत्राद्य मधुसमये यदि व्रजसि तदाऽहं तावन्न भवामि तव तु न जानामि गतिमिति व्यज्यते । आदिग्रहणाच्चेष्टादेः । तत्र चेष्टाया यथा—

द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् ।
आनीतं पुरतः शिरोंऽशुकमधः क्षिप्ते चले लोचने
वाचस्तत्र निवारितं प्रसरणं संकोचिते दोर्लते ॥ २२ ॥

---

गुरुअण० ।

---

अत्राद्यपदप्रतिपाद्यमधुसमयवैशिष्ट्याद्वक्तुरवस्थाविशेषसहितादिदानीं यदि व्रजसि तदाऽहं तावन्न जीवामि, तव तु न जानामि गतिमिति प्रियं प्रत्यनुरक्तया व्यज्यते ।

आदिग्रहणाच्चेष्टादेः । तत्र चेष्टा यथा—

द्वारोपान्त० ।

---

प्रवासं गन्तुमिच्छन्तं नायकं प्रति नायिकाऽऽह—**गुरु अणेति** ।

गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिन्यहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव जानासि करणीयम् ॥

तुहेति द्वितीयान्तम् । संबन्धसामान्यषष्ठ्यन्तं वा सुणसीति पाठे श्रोष्यसीति । गुरुजनो मान्यजन एव गुरुर्जडो जनोऽविदग्धः । वसन्ते प्रवासप्रेरणात् । स एव परः शत्रुस्तदायत्तः । तेनानिवार्यत्वम् । प्रियेत्यनेन गमने दुःखौत्कट्यम् । किं भणामि । परायत्ते निरर्थकत्वात् । अत एव मन्दभागिनी । उपायाभावात् । अद्य वसन्ते । यत्र प्रवासिनोऽपि गृहमायान्ति । व्रजेति सदैन्यरोषोक्तिः । स्वयमेव करणीयं कर्तुमर्हं जानासि । तेन स्वधैर्यं बुद्ध्वैव प्रायो गच्छसीत्यभिप्रायः । करणीयमित्यस्य ममेत्यादिः । मम करणीयं त्वमेव श्रोष्यसीत्यर्थ इत्यन्ये । वैशिष्ट्यं प्रतिदिनोपचीयमानविरहिप्रमापकत्वरूपम् । **अनुरक्तयेति** । तया बोध्यत इति सहृदयेषु व्यज्यते ।

**द्वारेति** । स्वगोचरचेष्टाविशेषेण नायिकायाः स्वविषयभावमवधारितवतो नायकस्य सखायं प्रत्युक्तिरेषा । द्वारोपान्तस्य द्वारसमीपदेशस्य निरन्तरेऽव्यवहिते संनिहिते

---

१ क. अद्य । २ क. ख. ग. तदहं । ३ क. °स्तत्र नि° । ४ क. °ष्टालीलादेः । तत्र चेष्टाया य° । ५ ग. °न्तुकना° । ६ क. °सीति पाठान्तरेऽर्थः । वैशि° । ७ ग. °माथिक° । ८ क. °रे मयि ।

अत्र चेष्टया प्रच्छन्नकान्तविषय आकूतविशेषो ध्वन्यते । निराकाङ्क्ष-[2] प्रतिपत्तये प्राप्तावसरतया[3] च पुनः पुनरुदाह्रियते । वक्त्रादीनां मिथः संयोगे द्विकादिभेदेनानेन[4] क्रमेण लक्ष्यव्यङ्ग्ययोश्च व्यञ्जकत्वमुदाहार्यम् । द्विकभेदे वक्तृबोद्धव्ययोगे यथा—

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि ।
मा पहिअ रत्तिअंधिअ सेज्जाए मह णिमज्जहिसि ॥२३॥

---

अत्रोरुसमासङ्गादिचेष्टावैशिष्ट्यात्प्रच्छन्नकामुकविषय[1] आकूतविशेषो ध्वन्यते । तत्र प्रथमार्धेन स्पृष्टकमालिङ्गनम्, शिरोंऽशुकं पुरत आनीतमित्यनेन गूढमागच्छेरिति, अधः क्षिप्ते चले लोचने वाचस्तत्र निवारितं प्रसरणमित्येताभ्यां सूर्यास्तसमये कोलाहलरहिते काले समागन्तव्यमिति, संकोचिते दोर्लते इत्यनेन पारितोषिकमालिङ्गनं करोमीति च व्यज्यते । यद्यप्येकत्रैवोदाहरणे भेदान्तराण्यपि सन्तीति तदेवोदाहरणान्तरं संभवति, तथाऽपि निःसंदेह-व्युत्पत्तये प्राप्तावसरतया पुनः पुनरुदाह्रियते । वक्तृबोद्धव्यादीनां प्रत्येकमेव न व्यञ्जकत्वम्, किं तु मिलितानामपीति द्रष्टव्यम् ।

तत्र द्वयोर्व्यञ्जकत्वं यथा—अत्ता एत्थ० ।

---

वा मयि सति सौन्दर्यसारात्प्रधानसौन्दर्याच्छ्रीः शोभा यस्यास्तादृश्या कयाचित्कमनीय-तरकान्तया प्रोल्लास्य प्रसार्य समासक्तं संलग्नं समासादितं कृतम् । यद्वा भावे क्तः । संबन्धं प्रापितमित्यर्थः । आसादयतेः प्राप्त्यर्थकतया तदुत्तरणिजन्तरोपगमेन प्रापणालाभः । स्वयमेव विपरीतसुरतप्रदानमस्य व्यङ्ग्यम् । एतदेव स्पृष्टकपदेनोच्यते । आनीतमित्यादिना गूढमा-गच्छेरिति, अधःक्षिप्तेत्यादिना सूर्यास्तमयः संकेतकाल इति त्वत्कृते शरीरकार्श्यमिति वा । अधः क्षिप्ते अपि चले कटाक्षेण मदर्पिते इत्यर्थ इति केचित् । वाचस्तत्रेत्यादिना कोलाहलरहिते काले कोलाहलरहितं यथा स्यात्तथाऽऽगमनम् । वाचः प्रसरणं तारत्वं निवारितं तेन मन्दं कृतवत्येवेति भावः । संकोचिते इत्यनेन पारितोषिकमालिङ्गनम् । **प्रच्छन्नेति** । भावपरी-क्षार्थं द्वारि वेषान्तरेण स्थितेत्यर्थः । **आकूतविशेषः** । अयं मदनुरागं प्रत्येत्वित्यभिप्राया-त्मकः संभोगसंचारिलज्जालक्षणो वा । **तदेवोदाहरणं संभवतीति** । भेदान्तराणामिति शेषः । यथाऽतिपिहुलमित्यत्र पृथुलरूपवाच्यवक्तृबोद्धव्यानाम् । गुरुअणेत्यत्र, अद्याति काकु-वक्तृबोद्धव्यकालगुर्वित्यलङ्घनीयाज्ञत्ववाच्यानाम् ।

**अत्ता एत्थेति** । स्वयं दूत्या इयमुक्तिः ।

---

१ ख. °कामुकविषय आकूतविषयो ध्व° । २ क. °ङ्क्षत्वप्र° । ३ क. ख. ग. °या पु° । ४ क. °दे क्र° । ख. ग. °देनेन । ५ क. °सक्तादि° । ६ क. °व्यजयते । ७ क. °च्छेति, । ८ क. °स्तम° ।

शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥ २३ ॥

शब्देति । न हि प्रमाणान्तरवेद्योऽर्थो व्यञ्जकः ।

इति श्रीकाव्यप्रकाशेऽर्थव्यञ्जकतानिर्णयो नाम
तृतीयोल्लासः ।

---

नन्वर्थमात्रस्य व्यञ्जकत्वे शब्दार्थयुगलरूपकाव्यस्य व्यञ्जकत्वं न सिद्धमित्यत आह— शब्दप्रमाण० ।

इति श्रीगोविन्दकृते काव्यप्रदीपेऽर्थव्यञ्जकतानिर्णय-
स्तृतीय उल्लासः ।

---

श्वश्रूरत्र निमज्जति अत्राहं दिवसके प्रलोकय ।
मा पथिक राज्यन्ध शय्यायामावयोर्निमङ्क्ष्यसि ॥

अज्जेतिपाठ आर्या न विदग्धा । निमज्जति जरत्तरत्वेन निष्पन्दा शेते । तेन शङ्काराहित्यम् । अत्र ततो भिन्नस्थले । अहमहमेव । अत्र स्वापबोधकपदानुक्त्या मन्मथपीडया स्वस्य निद्राराहित्यम् । दिवसक इति कुत्सायां कः । सा चाऽऽवयोः श्रेयःप्रतिकूलत्वात् । प्रलोकय सम्यगवलोकय । पथिक राज्यन्धेति च रहस्यगोपनाय । पथिकत्वेन श्रमाद्विस्मरणयोग्यता राज्यन्धत्वेन स्वशय्यापतनप्रसक्तिद्योतना । अन्यथाऽप्रसक्तप्रतिषेधे रहस्यभङ्गापत्तेः । अत एव निमङ्क्ष्यसीत्युक्तिः । मह इत्यावयोरित्यर्थे निपातः । अन्यथा स्वमात्रोट्टङ्कने[४] रहस्यभङ्गापत्तेः । केचित्तु ममेत्येवार्थः । जरत्याः शय्यायां पाते दुःखशङ्कामात्रं स्वस्यास्तरुणीत्वादतीव शङ्केति विशिष्योट्टङ्कनमित्याहुः । अत्र गृहे श्वश्रूरहं च । श्वश्रूश्च[६] जरत्तरत्वेन बधिरा निष्पन्दा च । जनान्तरसंचारस्तु नास्तीति यथेष्टं व्यवहरेति ध्वनिः । अत्र वक्तृप्रतिपाद्ययोर्वैशिष्ट्यादात्मन एव शय्यायां पतनं ध्वन्यते । सहकारितेति । प्रत्यक्षदृष्टे कामिमिथुने तच्चेष्टयाऽनुमितरत्यादौ चाऽऽस्वादानुदयेन शब्दान्वयव्यतिरेकानुविधायित्वाच्छब्दोऽपि निमित्तम् । किं तु पर्यायान्तरेणापि तदुपस्थितौ व्यङ्ग्यप्रतीतेः[७] शब्दस्याप्रधानताऽर्थस्य च प्राधान्यमिति तन्मुखेन व्यपदेश इति भावः । एतेनार्थसहकारेणापि मनसो व्यङ्ग्यप्रमाणत्वेन तस्यापि प्रमाणान्तरत्वं स्यादित्यपास्तम् ।

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते काव्यप्रदीपोद्द्योते
तृतीय उल्लासः ।

---

१ क. ख. ग. °द्यो व्य° । २ क. °र्थनि° । ३ ख. ग. °ज्जेतिति° । ४ क. तेः । अत्र गृहे । ५ ख. ग. °ब्योपादान° । ६ क. °निः । सह° । ७ ग. °र्थव्रस° । ८ क. त्वे त ।

अथ चतुर्थोल्लासः।

---

**यद्यपि शब्दार्थयोर्निर्णये कृते दोषगुणालंकाराणां स्वरूपमभिधानीयं तथाऽपि धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायत इति प्रथमं काव्यभेदानाह—**

---

यद्यपि काव्यलक्षणं विभागं च विधाय लक्षणपदार्थेषु विवेचनीयेषु विशेष्यपदस्यार्थः शब्दार्थौ विचारितौ। इदानीं विशेषणपदार्थानां दोषगुणालंकाराणां निरूपणमुचितं, न तु काव्यभेदस्य ध्वन्यादेर्भेदानाम्। तथाऽपि ध्वन्यादेर्भेदेषु ज्ञातेषु दोषादीनां हेयोपादेयतयोरवगमो भवति। तयोर्विशेषनिष्ठत्वात्। यथा श्रुतिकटुत्वं दोषो ध्वनिविशेषे शृङ्गारादिध्वनौ हेयः, रौद्रादिरसध्वनौ चित्रभेदे वाऽहेय एव। माधुर्यादिर्गुणः शृङ्गारादिध्वनावुपादेयः, रौद्रादिध्वनौ त्वनुपादेय एव। अलंकारोऽपि यमकादी रसादिध्वनावनुपादेयः, चित्रभेदे तूपादेय एव। तथा च दोषादिनिरूपणोपयोगिषु काव्यविशेषप्रभेदेषु निरूप्यमाणेषु प्रसङ्गादनुपयोगिनोऽपि निरूपणीया इत्युल्लासत्रयेण काव्यभेदत्रयभेदो निरूपणीयः। तत्र प्रथमे ध्वनिभेदः। तत्र तावद्ध्वनिर्द्विधा—अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्च। तत्र यद्यप्यभिधायाः प्राथम्यात्तन्मूलको विवक्षितान्यपरवाच्य एव प्रथमं निरूपयितुमुचितः, तथाऽपि लक्षणामूलव्यञ्जनायाः प्राङ्निरूपणात् 'पशूननत्ति' इत्यत्रेव प्रावृत्तिकं क्रममुपादाय सूचीकटाहन्यायेन वा प्रथममाद्यमुद्दिश्य विभजते।

---

**ज्ञातेष्विति**। तेषु धर्मिषु रसध्वनित्वादिना ज्ञातेष्वित्यर्थः—**हेयोपादेयतयोरिति**। तयो रसविशेषाद्युत्कर्षापकर्षप्रयुक्तत्वादिति भावः। **विशेषनिष्ठत्वादिति**। ध्वन्याद्यवान्तरविशेषनिष्ठत्वादित्यर्थः। तदेव व्युत्पादयति—**यथेति**। **चित्रभेदे त्विति**। पद्मबन्धादौ। **काव्यविशेषेति**। काव्यविशेषाणां ध्वन्यादीनां प्रभेदेष्वित्यर्थः। **काव्यभेदत्रयभेद इति**। काव्यविशेषध्वन्यादिभेद इत्यर्थः। **प्राधान्यादिति**। लक्षणायास्तद्द्वारकत्वेनास्याः प्राधान्यम्। प्राथम्यादिति पाठेऽप्ययमेवार्थः। **आद्यम्**। लक्षणामूलमविवक्षितवाच्यम्। अविवक्षित इत्यस्य विवरणं वाच्येनेत्यादि। योऽविवक्षितवाच्यस्तत्र ध्वनौ वाच्यमर्थान्तरे संक्रमितमत्यन्ततिरस्कृतं वेति कारिकान्वयः।

---

१ क. °व्यस्य ल°। २ क. विवेचितौ। ३ क. वाऽप्युपेय। ४ क. रसध्व°। ५ क. भेदो°।

अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ ।
अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥ २४ ॥

लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्येवाविवक्षितं वाच्यं यत्र स ध्वनावि- त्यनुवादाद्ध्वनिरिति ज्ञेयः । तत्र च वाच्यं क्वचिदनुपयुज्यमानत्वादर्था- न्तरे परिणमितम् । यथा—

---

अविवक्षित० ।

वाच्यो वाच्यजात्यादिधर्माणां धर्म्यविवक्षितो वाच्येन रूपेणान्वयबोधविषयतयाऽन- पेक्षितो यत्र सः । तत्र यद्यप्यविवक्षितवाच्यमात्रस्य नायं विभागः, किं तु तद्विशेषस्य ध्वनेः । न तु शब्दात्तथाऽवगमः । तथाऽपि यत्तदोरेकार्थपरामर्शकतया तत्र ध्वनाविति तच्छ- ब्दार्थस्य ध्वन्यभेदे यच्छब्दार्थोऽपि ध्वनिरेव लभ्यते । अयं च ध्वनिभेदो लक्षणामूलगूढव्य- ङ्ग्यप्राधान्ये सति संभवति । अविवक्षितं च वाच्यस्यान्वयानुपपत्तेः । सा च वाच्यस्यानुपयु- क्तत्वेनोपयोगिनि रूपान्तरे तात्पर्याद्वा, स्वत एवान्वयायोग्यत्वाद्वा । अनुपयुक्तत्वमपि पुनरुक्तत्वात्, विशेषानाधायकत्वमात्राद्वा । तत्रोभयत्रापि वाच्यमर्थान्तर उपयोगिनि लक्ष्यतावच्छेदके संक्रमितमाश्रयत्वेन परिणमितम् । वाच्योऽप्यर्थो रूपान्तरेण लक्ष्यत इत्यर्थः । द्वितीये तु वाच्यमत्यन्तं तिरस्कृतं न केनापि रूपेणान्वयप्रविष्टम् ।

तत्रार्थान्तरसंक्रमितवाच्यं पुनरुक्तेर्यथा—

---

**वाच्येन रूपेणेति** । वाच्यजात्यादिरूपेण । कमलानीत्यादावन्येन रूपेणापेक्षायामपि कम- लत्वादिनाऽनपेक्षणादुपकृतमित्यादावुपकारत्वेनान्यापेक्षणेऽपि मुख्यतदाश्रयस्यानपेक्षेति बोध्य- मिति परे । **लक्षणामूलगूढेति** । लक्षणामूलेत्यनेन लक्षणान्वयव्यतिरेकानुविधायीत्यर्थ- केन निरूढलक्षणावत्पदघटितकाव्यीयध्वनेरस्फुटसंदिग्धप्राधान्यतुल्यप्राधान्यासुन्दराणां गुणी- भूतव्यङ्ग्यानां च निरासः । तेषु व्यङ्ग्योद्देशेन लक्षणाया अप्रवृत्तेः । काकाऽऽक्षिप्तेऽपि न लक्षणा । अनुपपत्त्यभावात् । गूढत्वेनागूढव्युदासः । प्राधान्येनापराङ्गवाच्यसिद्ध्यङ्गयोर्व्यु- दासः । **सा च** । अन्वयानुपपत्तिश्च । **अनुपयुक्तत्वेनेति** । तात्पर्यहेतुत्वेनान्वेति । वाच्य- तावच्छेदकरूपेणानुपयुक्तत्वमित्यर्थः । आद्यं पुनर्विभजते—**अनुपयुक्तत्वमपीति** । **परि- णमितमिति** । शब्देन वक्त्रेति वा शेषः । परिणामश्चात्र धर्मान्तरप्रकारकबोधविशे- ष्यीकरणमेव । तदेवाऽऽह—**वाच्योऽपीति** । **द्वितीये त्विति** । स्वत एवान्वयायोग्यत्वे त्वित्यर्थः ।

---

१ क. ख. ग. °सत्यवि° । २ क. °त्र ध्व° । ३ क. °दात्सध्वनि° । ४ ख. °ति विज्ञे° । ५ क. ख. ग. °त्र वा° । ६ क. °रेण प° । ७ क. अत्र । ८ क. °क्षितत्वं च । ९ वाच्येनेत्यारभ्य परे इत्ये- तत्पर्यन्तो ग्रन्थः 'क.' पुस्तके न दृश्यते । १० इदं वाक्यं ख. पुस्तके न दृश्यते ।

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥ २४ ॥

अत्र वचनादुपदेशादिरूपतया परिणमति ।

क्वचिदनुपपद्यमानतयाऽत्यन्तं तिरस्कृतम् । यथा—

---

ताला जाअन्ति गुणा जाला ते सहिअएहिँ घेप्पन्ति ।
रइकिरणाणुग्गहिआइँ होन्ति कमलाइँ कमलाइं ॥

अत्र द्वितीयकमलशब्दः सौरभादिगुणयुक्तत्वरूपे लक्ष्ये संक्रमितवाच्यः ।

विशेषानाधायकत्वमात्राद्यथा—त्वामस्मि० ।

अत्र वच्मीत्यनुपयुक्तार्थम् । अनुपादानेऽपि वचनक्रियाप्रतीतेः । अत्रोपदेशत्वं लक्ष्यम् । तत्र वाच्यार्थः संक्रमितः । एवं त्वामस्मीतिपदे अप्यनुपयुक्तार्थे । संबोध्यतयैव युष्मदर्थस्य वचनेकर्मतावगतेः । वच्मीत्युत्तमपुरुषेणैवास्मदर्थस्य तत्कर्तृत्वप्रत्ययात् । अतस्ताभ्यां लक्ष्ययोरुपदेश्यासत्वयोस्तद्वाच्यौ संक्रमितौ । तथाऽऽत्मीयाया एव मतेः सर्वैरास्थानादनुपयुक्तत्वेनाऽऽत्मीयशब्देन प्रमाणपरिगृहीतत्वे लक्ष्यमाणे तद्वाच्यं संक्रमितम् । 'अस्मद्युत्तमः' ( पा० सू० १।४।१०७ ) इत्यत्रार्थग्रहणादस्मियोगे वच्मीत्युत्तमपुरुषः ।

---

ताला इति ।

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ।

अत्रेति । सौरभातिशयो व्यङ्ग्यः । लक्ष्ये । लक्ष्यतावच्छेदकेऽपि लक्षणेति मत इदम् । त्वामिति । अस्मीत्यहमर्थे । यत इत्यध्याहार्यम् । यतोऽत्र विदुषामसाधारणज्ञानवतां समवाय एकवाक्यतापन्नः समुदायस्तिष्ठति तस्मादात्मीयामप्रतार्यां मतिमवलम्ब्यात्र स्थितिं सावधानस्थितिं विधेहीति त्वामुपदेशार्हमहमाप्तो वच्म्युपदिशामि । विद्वत्सभां गच्छन्तमाप्तं प्रति कस्यचिदुक्तिरियम् । लक्ष्यमिति । हितसाधनत्वं च तद्व्यङ्ग्यम् । तद्वाच्यौ । संबोध्यत्वतन्त्रोच्चारयितारौ । अत्रावश्यवाच्यहिताहितत्वानुल्लङ्घनीयाज्ञत्वे व्यङ्ग्ये । अनुपयुक्तत्वेनेति । हेतौ तृतीया । अदुष्टपक्षोद्भावनमत्र व्यङ्ग्यम् । एवं विद्वत्समवायपदयोराशुपरपराभवकर्तृत्वानभिभवनीयत्वे व्यङ्ग्ये । आस्थायेत्यस्य विपक्षच्छिद्रप्रेक्षित्वं व्यङ्ग्यं बोध्यम् ।

---

१ क. ख. ग. समुदायो° । २ क. वर्तते । ३ ख. ग. °मादाय । ४ क. ग. क्वचित्पुनरनुपपद्यमानत्वात्तदत्यन्ततिर° । ख. क्वचित्पुनरनुपयुज्यमानत्वादत्य° । ५ क. °च्यः । अविशेषाधा° । ६ क. °न कार्यता° । ७ क. °क्ष्यमानयो° । ८ क. °युक्तार्थेना° । ९ क. °गेऽपि व° । १० लक्ष्ये इत्यारभ्य इदमित्यन्तं ख ग. पुस्तकयोर्न दृश्यते । ११ ग. °वाचा हि° ।

उपकृतं बहु[1] तत्र किमुच्यते सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥२५॥

एतदपकारिणं प्रति विपरीतलक्षणया कश्चिद्वक्ति।

विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः।

अन्यपरं व्यङ्ग्यनिष्ठम्। एष च

---

अत्यन्तं तिरस्कृतं यथा—**उपकृतं०**।

अत्रापकारिण्यन्वयायोग्यैरुपकृतादिपदैः स्वार्थविपरीतं लक्ष्यते। न च तत्र वाच्यस्य कथंचित्प्रवेशः। त्वयैवमपकारेऽपि क्रियमाणे मया प्रियमेवोच्यत इति[2] स्वसाधुत्वं व्यङ्ग्यम्। तवोपकारापकारविवेको[3] नास्तीति वा। अयं च प्रभेदो न केवलविरोधिलक्षणया,[4] किं त्वन्यत्रापि। यथा मम—

आधूतसस्वेदकरोत्पलायाः स्मितावगूढप्रतिकूलवाचः।
प्रियो विहायाधरमायताक्ष्याः पपौ चिराय प्रतिषेधमेव॥

अत्र पपावित्यनेन सोत्कण्ठनिरीक्षणं लक्ष्यम्। उत्कण्ठातिशयो व्यङ्ग्यः।[5]

द्वितीयं ध्वनिभेदं कारिकार्धाभ्यामुद्दिश्य विभजते—**विवक्षितं०**।

ध्वनिरिति प्रकरणाल्लभ्यते। अन्यपरं व्यङ्ग्योपसर्जनीभूतम्। अयं भेदोऽभिधामूलगूढव्यङ्ग्यप्राधान्ये सति द्रष्टव्यः। एष तु—

---

**उपकृतमिति**। शरदां वर्षाणाम्। अत्रोपकृतादिपदानि विपरीतं लक्षयन्ति। उपकृतमपकृतम्। सुजनता दुर्जनता। सखे शत्रो। सुखितं दुःखितमित्यादि।

**आधूतेति**। सस्वेदत्वं सात्त्विकभावेन। अवगूढा प्रतिबद्धाऽत्यन्तगुप्ता वा। प्रतिषेधमेवेति तद्व्यञ्जककरशिरश्चालनादिचेष्टामित्यर्थः। यद्वाऽतिगूढनकारोच्चारणमित्यर्थः। निरीक्षणपदं ज्ञानसामान्यपरमत्र श्रवणपरम्। वस्तुतः सर्वेन्द्रियाणां बुभुक्षापिपासयोरैतरेयश्रुतावुक्तत्वात्पपाविति यथाश्रुतमेव।

**विवक्षितं चेति**। वाच्यतावच्छेदकरूपेणान्वयबोधविषय इत्यर्थः। अन्यपरमित्यस्यान्यतात्पर्यकमित्यर्थे[6]ऽतात्पर्यविषयनानार्थाभिधामूलव्यङ्ग्यकेऽव्याप्तिरत आह—**व्यङ्ग्योपसर्जनीभूतमिति**। तेनार्थचित्रगुणीभूतव्यङ्ग्यादावपि[7] नातिव्याप्तिः। **एष त्विति**। तुनाऽवि-

---

१ ग. यत्र। २ क. °ति सा°। ३ क °कोऽपि ना°। ४ क. °विरुद्धल°। ५ इदं वाक्यं क. पुस्तके न दृश्यते। ६ क. °न्यतात्प°। ७ ख. ग. °र्यमि°।

कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥ २५ ॥

अलक्ष्येति । न खलु विभावानुभावव्यभिचारिण एव रसोऽपि तु रसस्तैरित्यस्ति क्रमः । स तु लाघवान्न लक्ष्यते । तत्र

रसभावतदाभासभावशान्त्यादिरक्रमः ।

भिन्नो रसाद्यलंकारादलंकार्यतया स्थितः ॥ २६ ॥

---

**कोऽप्य०** ।

सूचीकटाहन्यायमाश्रित्यालक्ष्यक्रमव्यङ्ग्यस्य पूर्वमुद्देशः । तस्यैकत्वात् । द्वितीयस्य तु पञ्चदशभेदत्वात् । विभावादय एव न रसः, किं तु रसस्तैर्निष्पद्यत इत्यस्ति विभावादिरसप्रतीत्योः क्रमः । स तु न लक्ष्यत इति क्रमस्यालक्ष्यत्वलक्ष्यत्वकृतं भेदद्वयमित्यर्थः ।

**रसभाव०** ।

अक्रमोऽलक्ष्यक्रमः । तच्छब्देन रसभावयोः परामर्शः । आदिग्रहणाद्भावोदयभावसंधिभावशबलत्वानि । नन्वाभासवद्रसस्य शान्त्यादयः किं नोक्ताः । निरन्तरावयवस्यापरिच्छिन्नस्य निरतिशयस्य वेद्यान्तरसंपर्कशून्यस्य तदभावात् । आभासत्वं तु तिर्यगाद्यधिकरण-

---

वक्षितवाच्यस्य नैतौ भेदाविति ध्वनयति । **कोऽपीति** । अनिर्वचनीयचमत्कारकारीत्यर्थः । नन्वभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वात्पूर्वं लक्ष्यक्रमव्यङ्ग्यनिरूपणमेवोचितमत आह—**सूचीति** । **पञ्चदशभेदत्वादिति** । लक्ष्यक्रमः प्रथमतः शब्दार्थोभयशक्तिमूलत्वेन त्रिविधः । तत्र शब्दशक्तिमूलस्य द्वौ भेदौ वस्त्वलंकृतिरिति । अर्थशक्तिमूलस्य द्वादश वक्ष्यन्ते । उभयशक्तिमूल एक इति पञ्चदशेत्यर्थः । पदैकदेशादिकृतभेदास्तु सर्वेषां समाना इति न गण्यन्त इति भावः । **विभावादय एवेति** । तथा सति श्रोत्रियादीनामपि काव्यादिजन्यविभावादिप्रतीतिसत्त्वेन रसिकत्वापत्तिरिति भावः । **किं त्विति** । पूर्वं विभाववैशिष्ट्येन ततोऽनुभाववैशिष्ट्येन ततो व्यभिचारिभाववैशिष्ट्येन स्थायी गृह्यत इत्यस्त्येव क्रम इति भावः । **निष्पद्यते** । अभिव्यज्यते । **स त्विति** । रसोद्बोधेन झटिति चित्तापकर्षणेन सूक्ष्मकालघटितस्य तस्यानाकलनादिति भावः । रसोद्बोध एव चित्तापकर्षको न वस्त्वलंकारयोरित्यत्र सहृदयहृदयमेव साक्षीति वस्त्वलंकारध्वनिविषये लक्ष्यत्वं क्रमस्य बोध्यम् । तत्र च वाच्यार्थबोधव्यङ्ग्यार्थबोधयोः क्रमः स्फुट एवेति दिक् ।

अक्रम इत्यत्र मध्यमपदलोपी समास इत्यभिप्रेत्याऽऽह—**अलक्ष्यक्रम इति** । **निरन्तरावयवस्येति** । निरन्तरगृह्यमाणविभावाद्यवयवकस्येत्यर्थः । **अपरिच्छिन्नस्येति** । देशतः कालतश्चेत्यर्थः । **तदभावादिति** । अयं भावः—रसस्य विभावा-

---

१ क. ख. ग. तु न ल° । २ क. पूर्वं निर्देशः । ३ क. °सत्त्ववद्र° । ४ ग. °स्याद्यर्थं° ।

आदिग्रहणाद्भावोदयभावसंधिभावशबलत्वानि । प्रधानतया यत्र स्थितो रसादिस्तत्रालंकार्यः । यथोदाहरिष्यते । अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिस्तत्र गुणीभूतव्यङ्ग्ये रसवत्प्रेयऊर्जस्वित्समाहितादयोऽलंकाराः । ते च गुणीभूतव्यङ्ग्याभिधान उदाहरिष्यन्ते ।

तत्र रसस्वरूपमाह—

कारणान्यथ कार्याणि सहकारीणि यानि च ॥

---

तयाऽविरुद्धम् । भिन्न इति । यत्र प्रधानं रसादिस्तत्र ध्वनिः । यत्र त्वप्रधानं तत्रालंकार इति भावः ।

रसस्वरूपमाह—**कारणान्यथ०** ।

अथेति समुच्चये । कारणानि प्रमदेन्दूदयादीनि कारकोद्दीपकरूपाणि । कार्याणि

स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥

वाङ्मनोबुद्धिशरीरारम्भरूपाणि च कटाक्षभुजक्षेपादीनि । सहकारीणि तेषु जनयित-

---

दिर्जीविताबधित्वेन तदपगम एव शान्तिर्वाच्या । न च तदनुपकृतो व्यङ्ग्यो न वा व्यक्तश्चमत्कारीति । इदमेव निरन्तरावयवस्येत्यनेन बोधितम् । अपरिच्छिन्नस्य निरातिशयस्येत्यनेन च वेद्यान्तरसंपर्कशून्यत्वात्संधिशबलत्वे न संभवतः । अलंकार्यतया स्थित इति व्याचष्टे-**प्रधानमिति । यत्र त्विति** । यथाऽयं स रशनोत्कर्षीत्यादौ । तत्र हि प्रधाने करुणे वाक्योद्देश्येऽङ्गं स्मर्यमाणः शृङ्गार इति तत्र सोऽलंकार इति भावः ।

**प्रमदेति** । रामसीतादीनामन्वयव्यतिरेकाभ्यां परस्परानुरागकारणत्वस्य लोकसिद्धत्वादिति भावः । **सात्त्विका इति** । सत्त्वमत्र जीवच्छरीरम् । तस्य धर्माः सात्त्विका इत्यर्थः । तत्र स्तम्भो गतिनिरोधः । एतद्विभावा हर्षरागभयदुःखविषादविस्मयक्रोधाः । वपुषि सलिलोद्गमः स्वेदः । मनस्तापहर्षलज्जाक्रोधभयश्रमपीडाद्या अस्य विभावाः । वपुषि रोमोत्थानं रोमाञ्चः । शीतालिङ्गनहर्षभयक्रोधा अस्य विभावाः । गद्गदात्वं स्वरनिष्ठवैजात्यं स्वरभङ्गः । क्रोधहर्षभयमदा अत्र विभावाः । आलिङ्गनहर्षभीत्यन्यतमजन्यः शरीरस्पन्दो वेपथुः । मोहभयक्रोधशीततापश्रमजन्यवर्णान्यथाभावो वैवर्ण्यम् । हर्षामर्षशोकादिजन्याक्षिसलिलमश्रु । शरीरचेष्टानिरोधः प्रलय इति बोध्यम् । जृम्भा नवमः सात्त्विकभाव इति कश्चित् । सत्त्वगुणोद्रेकेण[3] जायमाना इत्यन्ये । **वाङ्मन इति** । संकल्पविकल्पात्मकवृत्त्याश्रयं मनः । निश्चयात्मकवृत्त्याश्रया[4] बुद्धिः । वाङ्मनोबुद्धिशरीरैरारम्भो येषां तद्रूपाणीत्यर्थः । **क्षेपादीनीति** । आदिना काकूक्त्यादिसंग्रहः । एषां च

---

१ °व्यङ्ग्ये उ° । २ क. ग. °रागे का° । ३ क. °केण जायमाना एवैते सात्त्विकाभावा इ° । ४ क. °द्धिः । श° ।

**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥ २७ ॥**
**विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः ।**

व्येषूत्कण्ठादीनि । विभावा आलम्बनोद्दीपनरूपाः । चेद्यदेत्यर्थः । तत्तदेत्यर्थः । यद्यप्युद्दीपकस्य स्थायिनि न कारणत्वम्, किं तूत्पन्ने तस्मिन्नीषदुत्कर्षाधायकत्वरूपमुद्दीपकत्वम् । तथाऽप्यनुद्दीपितो जातोऽप्यजातप्राय एवेत्युद्दीपकेऽपि कारकत्वोपचारात्तत्रापि विभावव्यवहारः । विभावादिसंज्ञा च विभावनादिव्यापारयोगात् । तद्यथा—वासनारूपतया स्थितान्रत्यादीन्स्थायिनो विभावयन्ति रसास्वादाङ्कुरयोग्यतां नयन्तीति विभावाः । अनुभावयन्ति च तानित्यनुभावाः । पोषकतया विशेषेणाभितः काव्ये स्थायिनं चारयन्ति, विशेषेणाऽऽभिमुख्येन चरन्तीति वा व्यभिचारिणः । व्यक्तः स इति । व्यक्तिश्चर्वणेति पर्यायः । सा च विशेष-

कार्यत्वमसति रत्यादौ तदभावादन्वयव्यतिरेकाभ्यां तेषु कटाक्षादिष्वेकरूपस्य रत्यादेस्तत्तद्विचित्रस्मितरुदितकार्यजननायोगेन सामग्रीवैचित्र्यापादकत्वात्तेषां सहकारित्वमिति भावः । अयं भावः । रतिर्नाम प्रीतिाश्रितवृत्तिविशेषः । सा च नायिकानायकयोः परस्परदर्शनादिभिर्मिथः प्रथमं युगपद्युगपद्वा जायते । जात एवेन्द्वादिदर्शनादिभिरुत्कृष्यते । उद्दीपनोत्कर्षतारतम्यं च रत्युत्कर्षतारतम्ये प्रयोजकं बोध्यम् । ततो मिथः संगमेच्छारूपोऽभिलाषो जायते । ततः कटाक्षादिना परस्परमुपचितरतिज्ञाने संगमोपायं जिज्ञासतोश्चिन्ताग्लानिनिर्वेदादयो जायन्ते । ततस्तदुन्नायिका चेष्टा । अथोपायमारूढयोर्दूतादिना सति संगमे प्रीतिरनुवर्तते चिन्तादयोऽपगच्छन्ति । अतो रतिः स्थायी । चिन्तादयो व्यभिचारिणः । स्थायिनो विषय आलम्बनम् । इन्दूदयादयो यौवनोद्भूतचेष्टाश्चोद्दीपनम् । प्रीत्यादिजनितचेष्टाश्चानुभावा इति । **अनुद्दीपितोऽपीति** । अनुद्दीपितो जातोऽपीत्यर्थः । विभावादिसंज्ञाप्रवृत्तिनिमित्तमाह—**विभावादिसंज्ञा चेति** । अत एव कारणत्वादिना ज्ञाने न रसोद्बोध इति बोध्यम् । **अङ्कुरयोग्यतामिति** । ईषत्प्रकाशितत्वादिति भावः । ईषत्त्वं च साधारण्येन प्रतीतविभाववैशिष्ट्यविषयकत्वमेव । एवमनुभावादि स्फुटतरस्फुटतमप्रकाशफलकम् । स्फुटतरत्वादि चानुभावादिवैशिष्ट्येन चर्वणाविषयत्वमेवेत्याहुः । **अनुभावयन्ति** । स्थायिभावं सूचयन्ति । **पोषकतयेति** । स्थायिन इत्यादिः । स्थायिनं परिपुष्य सर्वशरीरसंचारयोग्यं कुर्वन्तीत्यर्थः । **आभिमुख्येनेति** । विद्यमानस्यापि रत्यादेस्तत्तत्कार्याजनकतया तत्सहकारेण च तज्जनकतयैषामाभिमुख्यम् । अयं भावः । सामाजिकरत्यादिवासनाया उद्बोधो रसः । तस्याश्च रामादयो न कारणानि । असंनिहितत्वात् । न तत्कटाक्षादीनि कार्याणि । तत एव । वैयधिकरण्याच्च । न वा तल्लज्जादीनि सहचारीणि । तत एव । किं तु

१ क. ख. ग. °वास्तत्कथ्य° । २ क. °स्य न स्थायिनि कारकत्व° । ३ क. °रणत्वो° । ४ क. °न्ति तानिति ह्यनु° । ५ क. काये स्था° । ६ ग. °षो ज्ञाय° । ७ ग. °भावनादि° ।

**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥ २८ ॥**

---

णम् । तथा च व्यक्तिविशिष्ट एव स्थायी रसः । एवं च रसस्याकार्यत्ववचनं विभावादिभिः काव्योपस्थितैः स्थायिनोऽजननाद्विभावादिकार्यताया एव प्रकृतत्वाद्विशिष्टत्वस्य कार्यतानवच्छेदकत्वाद्वा । तस्मात्स्थायी न रसः, किं तु विभावादिमेलकं ब्रह्मैव वा । अन्यथा न च कार्य इत्यादिग्रन्थविरोधात्, इत्यादि प्रलपितमनादेयम् । स तैरिति । यस्य यानि कारणादीनि स तैस्तज्जातीयैरित्यर्थः । स्थायी विरुद्धैरविरुद्धैर्वा भावैरतिरस्कृतप्रवाहो भावः । यदुक्तम्—

विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः ।
आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम् ॥ इति ।

---

रामसीतादीनां रामत्वादिना काव्यादितः प्रथममवगतानां सहृदयतावशाद्व्यञ्जनया रामत्वादिपरीहाराद्रत्याद्यालम्बनविभावत्वादिनाऽभिव्यक्तौ सामाजिकनिष्ठरत्यादिवासनाया उद्बोधः । एवं च तादृशसाधारणरूपेण विभावनादिकमेव तत्तद्व्यापारो बोध्यः । सीतात्वादिज्ञाने चाऽऽराध्यत्वादिज्ञानेन तद्विषयतया सामाजिकनिष्ठरत्याद्युद्बोधाभावात् । तथा ज्ञानेऽप्युद्बोधे पातकित्वप्रसङ्गादिति । सूत्रे तैरित्यनेनैव विभावादिप्राप्तौ विभावाद्यैरिति सहार्थे तृतीया । तेन विभावाद्यैः सह तैर्व्यक्त इत्यर्थाद्रसस्य समूहालम्बनरूपतालाभः । **व्यक्तिविशिष्ट एवेति** । विभावादिवैशिष्ट्येन चर्वणाविषय इत्यर्थः । **अकार्यत्वेति** । अत्राजननं नीलघटत्ववद्विशिष्टत्वस्य कार्यतानवच्छेदकत्वं वा हेतुः । वाशब्दश्चार्थे । **अजननादिति** । तथा हि सति स्थायित्वव्याघातः स्यादिति भावः । **मेलकम्** । पानकवदेकलोलीभावकारणं विभावादि तत्समूह इत्यर्थः । **ब्रह्मैवेति** । एवकारेण पूर्वमतेऽप्यानन्दनिर्वाहाय ब्रह्मसंवलनमस्तीति ध्वनितम् । **अनादेयमिति** । विभावानुभावयोर्निर्विषयत्वाद्बाह्यत्वाच्च चिन्तादीनां तथात्वेऽपि चिरमनुवृत्त्यभावाद्धर्षादिभिर्विरोधेनानुबन्धाभावाच्च न तेषां रसत्वं नापि केवलब्रह्मणस्तत्त्वज्ञानिनोऽपि रसिकत्वापत्तेरित्याशयः । **तज्जातीयैरिति** । साक्षिभास्यैरनिर्वचनीयैरन्तःकरणपरिणामभूतैरित्यर्थः । अन्यथा साक्षिभास्यरत्या सह समूहालम्बनानुपपत्तिरिति भावः । **स्थायीति** । अस्य विवरणं प्रवाहान्तम् । **भाव इति** । अत एव तच्छून्यवीतरागादीनां न शृङ्गाराद्युद्बोधः । चित्तवृत्तिरूपस्याप्यस्या आशुविनाशित्वेऽपि वासनात्मतया सूक्ष्मरूपेणावस्थानात्स्थायित्वं बोध्यम् ।

**विरुद्धा अविरुद्धा वेति** । व्यभिचारिणः परस्परं विरुद्धा अविरुद्धा वेत्यर्थः । अत्रेदं तत्त्वम् । काव्यश्रवणादितोऽनिर्वचनीयान्तःकरणधर्मविभावादिवैशिष्ट्येन तद्धर्मरतेः साक्षि-

---

१ क. °पस्थापितैः । २ क. °भावनादि° । ३ क. °ष्टस्य । ४ क. °तमात्रम° । ५ ख. ग. °व्यादितः । ६ क. °नां रसावेशेन राम° । ७ क. °कलोलो° । ८ ग. °दिसमू° । ९ क. °वाच्च तेषां ।

**उक्तं हि भरतेन—विभावानुभावव्यभिचारिसंयोगाद्रसस्य निष्पत्तिरिति। एतद्विवृण्वते। विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः स्थायी रत्यादिको भावो जनितोऽनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतो व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपतानुसंधानान्नर्तकेऽपि प्रती-**

न चेयं स्वकपोलकल्पना सूत्रकारस्य। उक्तं हि भरतेन—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति। एतद्विवृण्वते भट्टलोल्लटप्रभृतयः—स्थायिनां विभावेनोत्पाद्योत्पादकभावरूपादनुभावेन गम्यगमकभावरूपाद्व्यभिचारिणा पोष्यपोषकभावरूपात्संयोगात्संबन्धाद्रसस्य निष्पत्तिरुत्पत्तिरभिव्यक्तिः पुष्टिश्चेत्यर्थः। तथा हि ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनितः, उद्यानादिभिरुद्दीपनविभावैरुद्दीपितः, अनुभावैः कटाक्षभुजक्षेपणादिभिः प्रतीतियोग्यः कृतः, व्यभिचारिभिरुत्कण्ठादिभिः परिपोषितो रामादावनुकार्ये रसः। नटे तु तुल्यरूपतानुसंधानवशादारोप्यमाणः सामाजिकानां साश्चर्यानुभवश्चमत्कारहेतुरिति। तदपेशलम्। सामाजिकेषु तदभावे तत्र चमत्कारानुभवविरोधात्। न च तज्ज्ञानमेव चमत्कारहेतुः। शाब्दतज्ज्ञानेऽपि तदापत्तेः। लौकिकशृङ्गारादिदर्शनेनापि चमत्कारप्रसङ्गात्। न चानुभावादिविज्ञानबलायात आरोपस्तथा न तु साक्षात्कारमात्रमिति वाच्यम्। चन्दनसुखादौ वैपरीत्यदर्शनात्। अन्यथैवोपपत्त्या तादृशकल्पनायां मानाभावाच्च।

भास्यायाश्चर्वणायामानन्दांश आवरणभङ्गे सति चैतन्यानन्दस्वरूप आत्माऽपि तत्र भासते। अखण्डेऽप्यात्मनि कल्पितमानन्दत्वं ज्ञानत्वं चास्ति। तत्र कल्पितानन्दत्वांश आवरणमिति बोध्यम्। अत्र च सर्वत्र सहृदयतासहकृतकाव्यश्रवणं नाट्यदर्शनं वा बीजम्। एवं च विभावादिसंवलितानन्दांशसाहित्येन साक्षिभास्यो रत्यादी रस इति फलितम्। अत एव शोकादिप्रकृतिके दुःखमये करुणादावपि निर्भरानन्दप्रकाशो निर्बाधः। शोकाद्यवच्छिन्नस्यानन्दांशे भग्नावरणस्य करुणादिरसत्वादिति दिक्।

**रामादाविति**। साक्षात्संबन्धेनेति शेषः। **नटे तु तुल्येति**। इदं च नाट्ये। श्रव्ये काव्यपाठक इति बोध्यम्। **आरोप्यमाण इति**। सामाजिकैरिति भावः। अत्रेदं तत्त्वम्। लौकिकसामग्रीतो रामादावेव रसोत्पत्तिः। स च रस उपनयबलाद्विभावादिविशिष्टः सामाजिकैर्नटादावारोप्यते। लोके मुखरागवति रत्याद्यनुमानदर्शनात्तदनुकारिनर्तकेऽपि तदवगमः। आरोप एव च सामाजिकानां चमत्कारहेतुरिति। न चानुभावादिविज्ञानबलायात इति पाठः। **मानाभावाच्चेति**। किं च रसप्रतीतेर्भ्रमत्वापत्तिः। भ्रमजनकत्वेन

१ क. ख. ग. °सनि°। २ क. ख. °द्रूपानु°। ३ ख. °के प्र°। ४ क. °टे तत्तुल्य°। ५ क. °नबलादा°। ६ क. °रइति। ७ क. °पत्तौ ता°। ८ क. °भावः। श्री°। ९ ग. °ते। अत्र च°। १० क. °कादेरानन्दां°। ११ क. °बन्धरूपमुख्यवृत्त्येति। १२ क. च सामा°। १३ क. °ति। सकल°।

**यमानो रस इति भट्टलोल्लटप्रभृतयः । राम एवायमयमेव राम इति, न रामोऽयमित्यौत्तरकालिके बाधे रामोऽयमिति, रामः स्याद्वा[1] न[2] वाऽयमिति, रामसदृशोऽयमिति च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या[3] ग्राह्ये नटे**

---

श्रीशङ्कुकस्तु—स्थायिनो विभावादिभिरनुमाप्यानुमापकभावरूपसंबन्धाद्रसस्य निष्पत्तिरनुमितिरित्यर्थः । तथा हि नियमविषया धीः सम्यग्बुद्धिः । 'यथा 'राम एवायम्' 'अयमेव रामः' इत्ययोगान्ययोगव्यवच्छेदविषये । अनन्तरावतीर्णबाधा तु मिथ्या धीः । यथौत्तरकालिके न रामोऽयमितिबाधे 'रामोऽयम्' इति । विरुद्धोभयकोटिका तु संशयः । यथा 'अयं रामो न वा' इति । सदृशोभयविषया धीः सादृश्यधीः । यथा 'रामसदृशोऽयम्' इति । ताभ्यो लोकप्रसिद्धाभ्यो विलक्षणया चित्रे 'तुरगोऽयम्' इतिवत् 'रामोऽयम्' इतिबुद्ध्या प्रथमं पक्षभूतो नटो विषयी क्रियते । ततस्तत्राविद्यमानमपि विभावादित्रयं लिङ्गमवगम्यते । कुतः पूर्वमेव रोमाञ्चाद्याविर्भावने गुरुशिक्षामासाद्य कृतातिशयिताभ्यासेन नटेन—

---

काव्यादीनामनुपादेयतापत्तिश्च । नटकाव्यादेरपि सकलसहृदयसंवादिरसानुभवविरोधापत्तेश्चेत्यपि बोध्यम् ।

**अनुमाप्यानुमापकभावः** । व्याप्तिः । **इत्यर्थ इति** । विभावादिभिर्नटेऽनुमीयमानोऽनुकार्यरामादिनिष्ठरत्यादिभावो रस इति प्रघट्टार्थः । अस्या अनुमितेर्लौकिकानुमितिवैलक्षण्याय कारणवैलक्षण्यमाह—**नियमेति** । **अयोगान्ययोगेति** । अयं रामो भवत्येवेत्यत्यन्तायोगव्यवच्छेदविषयाऽपीत्यन्ये । **बाध इति** । सप्तमी सामानाधिकरण्ये । तेनोत्तरकालिकबाधसमानाधिकरणा बुद्धिर्मिथ्याबुद्धिरित्यर्थः । **चित्रे तुरग इति** । बालानां चित्रतुरगबुद्धिसदृश्येत्यर्थः । यद्यप्ययं भ्रम एव तथाऽपि बाधशिरस्कस्यैवात्र भ्रमत्वेन विवक्षणान्न दोषः । अत्र च बाधानवतारः स्पष्ट एव । अन्यथा तद्रूपेण पक्षत्वमेव न स्यात् । इदमेव पातञ्जलानां विकल्पात्मकं ज्ञानम् । शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः (पा. यो. सू. १।९) इति तत्सूत्रात् । ननु सीताविषयकरतिभावकारणादिमत्त्वं नटेऽसिद्धम् । कुतो हेतुतेत्यत आह—**अविद्यमानमपीति** । **नटेन** । नटेनैव । तेन रतिव्यवच्छेदः ।

---

१ क. °स्यान्नवा° । २ ग. नवेति । ३ ग. °प्रतीत्या । ४ क. °या सा° । ५ क. °ति । बाध° । ६ ग. °रणबु° । ७ क. °ति । चित्र° ।

सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः ।
मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥२६॥
दैवादहमत्र तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥ २७ ॥

इत्यादिकाव्यानुसंधानबलाच्छिक्षाभ्यासनिर्वर्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथाऽनभिमन्यमानैर्विभावादिशब्दव्यपदेश्यैः संयोगाद्गम्यगमकभावरूपादनुमीयमा-

---

सेयं० ।
दैवाद० ।
इत्यादि काव्यानुसंधानबलादालम्बनोद्दीपनव्यक्तौ तदनुगुणस्य रोमाञ्चादेर्दर्शनीयस्याऽऽविर्भावनेन व्यञ्जनीयस्योत्कण्ठादेस्तत्कार्यप्रकटनेन च प्रकाशनात् । अथ तैः कृत्रिमत्वेनाताल्लि-

---

सेयमिति । सेयं प्राणेश्वरी मम मनसः सकाशाल्लोचनगोचरं तज्जन्यज्ञानविषयत्वं गतेत्यर्थः । सा यद्विरहानलसंतप्तेन यद्भावनयेयान्कालो नीतः। ईश्वरीतिपाठश्चिन्त्यः । वरच्प्रत्ययान्ततया ङीबभावात् । पुंयोगे त्वर्थासंगतेः । पूर्वं मनस्येवाऽऽसीदिदानीं बाहिरपि दृष्टेति भावः । अङ्गेषु । नाङ्गे । अमृतरसस्य छटा वृष्टिः । स्पर्शमात्रेणाखिलतापशान्तेः । दृशोरिति सप्तमी । शोभनपूरा शोभनसमूहास्पदा सा चासौ कर्पूरस्य शलाकिका कर्पूराञ्जनदानयोग्यतूलिका दर्शनमात्रेणातिशयितानन्दहेतुत्वात् । मनोरथस्य शरीरिणी मूर्तिमती श्रीः संपत्तिः । परीरम्भस्य चरमत्वेऽपि प्राधान्यात्प्रागुक्तिः ।

संभोगमुक्त्वा विप्रलम्भमाह—दैवादिति । दैवात् । न तु स्वेच्छया । तया । अनुभवैकवेद्यसमागमसुखया । चपले आयते नेत्रे यस्यास्तया विमुक्तः । अभूवमिति शेषः । अविरला निबिडा विलोलाः सर्वदिक्संचारिणो जलदा यत्र स कालः समय एव कालो यमः । अयं दृश्यमानप्रकर्षः सम्यक्प्रतिदिनोपचीयमानः । चाभ्यां तुल्यकालताव्यक्तिः । चपलायतनेत्रयेति सहार्थतृतीयान्तं जलदेनाप्यन्वेति । चपला विद्युत् । सैवाऽऽयतनेत्रेत्येतत्पक्षेऽर्थः । तेन प्रियतमासंयुक्तनायकान्तरदर्शनरूपमुद्दीपकान्तरमुक्तं भवति ।

अनुसंधानम् । कविविवक्षितार्थस्य साक्षादिव करणम् । तेन नटादीनामपि रसास्वाद उपपन्नः । बलात् । सहकारात् । आविर्भावेनेति । प्रकाशनादित्यत्रान्वेति । तत्कार्येति । पुलकादेरित्यर्थः । कृत्रिमत्वेन । वस्तुतोऽतद्रूपत्वेन । एवं चाव्याप्यत्वेन ज्ञानात्कथमनुमानमिति भावः । अताल्लिङ्गैरपि । सीतादिविषयकरतिभावालिङ्गैरपि ।

---

१ क. मुक्त° । २ ख. °दिकारण° । ३ क. °न नटे° । ४ क. °करू° । ५ ग. °रं गतेत्यन्वयः । गोचरं तज्ज° । ६ क. °तः । पूर्वं । ७ ग. °ति । तेन ।

**नोऽपि वस्तुसौन्दर्यबलाद्रसनीयत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन संभाव्यमानो रत्यादिर्भावस्तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः ।**

---

ङ्गैरपि कृत्रिमत्वेनाज्ञानात्स्थायी रत्यादिरनुमीयते । सैव चानुमितिः सचमत्कारप्रतीतिरूपा चर्वणा । अतस्तया विषयीक्रियमाणः स्थायी रस इत्युच्यते । चर्वणा च सामाजिकानामिति तेष्वेव रस इति व्यवहारः । ननु साक्षात्कार एव सचमत्कारः, न त्वनुमित्यादिरपि । अन्यथा सुखादावनुमीयमानेऽपि स स्यात् । न स्यात् । वस्तुसौन्दर्यबलाद्रसनीयत्वेन स्थायिनामन्यानुमेयवैलक्षण्यात् । तथाऽपि स्थायिनां नटेऽसत्त्वाद्बाधावतारे[२]ऽनुमितिरेव कथं स्यादिति चेन्न । अभावनिश्चयाभावात्स्थायितया संभाव्यमानत्वादिति ।

एतदप्यहृदयग्राहि । यतः प्रत्यक्षमेव ज्ञानं सचमत्कारं नानुमित्यादिरिति लोकप्रसिद्धिमत्यथान्यथा कल्पने मानाभावः । सूत्रस्यान्यथैव योजनासंभवात् ।

---

**अज्ञानादिति** । धूलीपटलादिवदव्याप्यत्वेनाज्ञायमानैरित्यर्थः । तथाऽज्ञानं चोपनायकविशेषमाहात्म्यादिति बोध्यम् । **अनुमीयत इति** । लोके पुलकादिना रत्याद्यनुमानादत्रापि तथेति भावः । रत्यादिरिति साध्यम् । न च लोके पुलकादिना रत्याद्यनुमाने चमत्कारापत्तिः । विभावत्वादिना ज्ञातहेतुभ्यस्तदनुमान एवाऽऽह्लादानुभवादित्याहुः । **सचमत्कारेति** । चमत्कारजनकेत्यर्थः । तथाप्रतीतौ च वासनाविशेषः सहकारीति बोध्यम् । **चर्वणा चेति** । सा च[४] पक्षभेदेन पुनः पुनरनुमानम्[५] । न चानुमितस्य कथमनुमानम् । पक्षताविरहादिति चेन्न । धारावाहीच्छारूपवासनायाः सहकारित्वेनानुमित्सासत्त्वान्न पक्षताहानिः । **वस्तुनः** । रत्यादेः । **सौन्दर्यम्** । सुखकरत्वं तद्रूपता वा । **रसनीयत्वेन** । उत्कटेष्टत्वेन निरतिशयसुखस्वरूपत्वेन वा । **संभाव्यमानेति** । नटेऽवृत्तित्वेऽपि तत्र संभाव्यमानत्वादित्यर्थः । अत्र रामत्वेन नटप्रतीतिरेव बीजम् । रामोऽयं सीताविषयकरतिमान् । सीताद्यात्मकविभावादिसंबन्धित्वात् । सीताविषयककटाक्षादिमत्त्वाद्वा । यन्नैवं तन्नैवं यथाऽहमिति प्रयोगः ।

**योजनासंभवादिति** । किं च संज्ञातबाधस्य सामाजिकस्य नटे निरुक्तानुमितिविरहेऽप्यास्वादोदयाद्रसं साक्षात्करोमीत्यनुव्यवसायानुपपत्तिश्चेत्यपि बोध्यम् ।

---

१ क. नानु° । २ क. °रेणानु° । ३ ग. °दिना ज्ञात° । ४ ग. च पुनः । ५ क. °नम् । वस्तुतो ।

**न ताटस्थ्येन नाऽऽत्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यतेऽपि तु काव्ये नाट्ये[१] चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना**

भट्टनायकस्तु—'न तावन्नटगतत्वेन न रामगतत्वेनानुमीयते, न वोत्पाद्यते, न सामाजिकगतत्वेन च व्यज्यते। आद्यपक्षयोरुक्तदोषात्। अन्यगतेनान्येषां चमत्काराभावाच्च। अन्त्ये सिद्धस्यैव व्यङ्ग्यत्वाद्रसस्य चासिद्धत्वात्। सर्वेषामेवाभिव्यक्तिप्रसङ्गाच्च। तस्माद्विभावादिभिः संयोगाद्भोज्यभोजकभावसंबन्धाद्रसस्य निष्पत्तिर्भुक्तिरिति सूत्रार्थः। न च भोगपक्षेऽपि दोषावकाशः। भोगस्यालौकिकत्वात्। तथाऽप्यन्यनिष्ठः स्थाय्यन्यनिष्ठैरेव विभावादिभिः कथमन्येन भोक्तव्यः। अन्यथाऽतिप्रसङ्गादिति चेदुच्यते—शब्दात्मनः काव्यस्य त्रयो व्यापाराः—अभिधा, भावकत्वं, भोजकत्वं[२] च। तत्राभिधा निरन्तरसान्तरार्थनिष्ठत्वेन द्विधा[३]। भावकत्वं साधारणीकरणम्। तेन हि व्यापारेण विभावादयः स्थायी च साधारणी क्रियन्ते। साधारणीकरणं चैतदेव यत्सीतादिविशेषाणां कामिनीत्वादिसामान्येनोपस्थितिः। स्थाय्यनुभावादीनां च संबन्धिविशेषानवच्छिन्नत्वेन। अन्त्यं व्यापारद्वयं नाट्येऽपि। एवं काव्ये नाट्ये च द्वितीयव्यापारेण साधारणीकृतैर्विभावादिभिस्तृतीयव्यापारसाहित्येन तथाकृत एव स्थायी भुज्यते। भोगश्च सत्त्वगुणोद्रेकात्प्रकाशते य आनन्दस्तत्स्वरूपा अनन्यालम्बना या संवित्तत्स्वरूपो लौकिकसुखानुभवविलक्षणः। सत्त्वरजस्तमसां गुणाना-

**न तावन्नटेति**। तत्रानुपलब्धिबाधात्। अरस्यत्वापत्तेश्च। अत एव न रामगतत्वेन। तेषामसंनिहितत्वाच्च। **अनुमीयत इति**। विभावादिभिः[४] सहृदयेनेति शेषः। **न वोत्पद्यत इति**। उक्तदोषात्। **सिद्धस्यैवेति**। व्यञ्जकदीपादिव्यङ्ग्यविषये तथादर्शनादिति भावः। **सर्वेषामेवेति**। इदमुपलक्षणम्। सीताद्यालम्बनकरामादिगतरत्यादेरात्मगतत्वेन प्रतीतौ सभ्यानां व्रीडापातकादिप्रसङ्गात्। रसप्रतीतेर्भ्रमत्वप्रसङ्गाच्च। सामाजिक उत्पत्तिरपि वक्तुमशक्या। आलम्बनसीतादीनामसंनिहितत्वात्। आराध्यत्वज्ञानस्य प्रतिबन्धकत्वाच्च। रसस्य कार्यत्वप्रसङ्गाच्चेति[५]। **भोजकत्वम्**। भोगजनकत्वम्। **तथाऽपीति**। असंनिकृष्टत्वाच्चेत्यपि बोध्यम्। **साधारणीकरणमिति**। नचेदं लक्षणयैवास्तु। बाधानवतारेऽपि जायमानत्वात्। **कामिनीत्वादीति**। तत्तद्रसालम्बनविभावत्वादीति वक्तुं युक्तम्। **विभावादिभिरिति**। सहयोगे तृतीया। **भुज्यत इति**। भोगविषयी क्रियत इत्यर्थः। **उद्रेकादिति**। उद्रेको रजस्तमसी अभिभूय प्रादुर्भावः[६]। **य आनन्द इति**। सत्त्वगुणकार्यश्चित्तवृत्तिविशेषरूप इत्यर्थः। **तत्स्वरूपेति**। पुरुषे वृत्तिप्रतिबिम्बेन वृत्त्यांकाराकारसुखाकारेत्यर्थः। सांख्यमते पुरुषे वृत्तिप्रतिबिम्बेन तत्समानाकारत्वमेव तद्विषयकज्ञानमिति भावः। **अनन्येति**। अन्यच्च विभावादि-

१ क °व्ये चाभि°। २ क. भोक्तृत्वं°। ३ क. द्विविधा। ४ क दिभिलिङ्गैरिति शेषः। करणस्य कर्तृत्वाविवक्षा। नवोत्पद्यत इति। विभावादिभी रामादावित्यादिः। सिद्ध°। ५ ग °ति। तथाऽपीति। असंनिकृष्टत्वात्। भुज्य। ६ ग. °वः। तत्स्व°।

**भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यत इति भट्टनायकः।**

**लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभा-**

---

मुद्रेकेण क्रमात्सुखदुःखमोहाः प्रकाश्यन्ते। उद्रेकश्च स्वेतरावभिभूयावस्थानमिति साङ्ख्यसिद्धान्तानुसारेण विवृणुते।

तदपि न सम्यक्। एतादृशव्यापारद्वयकल्पने प्रमाणाभावात्। भुक्तेर्ज्ञानातिरेकस्यानुभवबाधितत्वेन निष्पीड्यमानस्य चास्याभिव्यक्तिपक्ष एव पर्यवसानात्।

आचार्याभिनवगुप्तपादास्तु—स्थायिनां विभावादिभिः समं व्यङ्ग्यव्यञ्जकभावरूपात्संबन्धाद्विभावादीनामेव वा परस्परं संयोगान्मिलनाद्रसस्य निष्पत्तिरभिव्यक्तिः। तथाहि लोके प्रमादादिभिः कारणादिभिः स्थायिनो रत्यादेरनुमानेऽभ्यासेन यत्पाटवं झटिति प्रवृत्तिस्तद्वतां सामाजिकानां सूक्ष्मतयाऽन्तःस्थितो रत्यादिः स्थायी काव्ये नाट्ये च गुणालंकारयोगाच्चतुर्विधाभिनयेन च यथोक्तविभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यपदेशयोग्यद-

---

स्थाय्यपेक्षया बोध्यम्। अत्र येन रजस्तमसोस्तिरस्कार आनन्दांशावरणभङ्गो विषयान्तरतिरस्कारश्च स व्यापारो भोजकत्वमिति बोध्यम्। एवं च कामिनीभावनानन्तरं कामिनीभावनोपनीतो रत्यादिर्मनसोक्तरूपसाक्षात्कारविषयी क्रियते सहृदयेनेति बोध्यम्। **निष्पीड्यमानस्य चेति**। अयं भावः। रामादिरत्यादीनामननुभूतानां कथं चिन्तासंततिरूपा भावनाः। न च व्यञ्जनया। तर्हि तयैव सिद्धे किं भावनाभोगाभ्यामिति।

**विभावादीनामेव वेति** "। तेषामेव परस्परमेलनेन तद्विशिष्टस्थायिविशिष्टानन्दाभिव्यक्तिरूपरस इत्यर्थः। **यत्पाटवमिति**। व्याप्त्यादिगोचरयदुत्तरसंस्कार इत्यर्थः। यद्यप्यत्रानुमानं न प्रकृतं तथाऽपि गृहीततादृशव्याप्तिकानामेवैतद्विषयव्यञ्जनावतारो नेतरेषामित्यभिप्रेत्येदमुक्तम्। प्रागसतो नाभिव्यक्तिरत आह—**सूक्ष्मतयेति**। **चतुर्विधाभिनयेनेति**। तदुक्तम्—

'कायिको वाचिकश्चैव आहार्यः सात्त्विकस्तथा।
चत्वारोऽभिनयाः प्रोक्ता नाट्यशास्त्रविशारदैः' इति॥

**अलौकिकविभावादीति**। अस्य कारणत्वादिपरिहारेणेत्यादिः। एतेन सीतादेः

---

१ क. ग. °भिः कारणादिभिः स्था°। २ क. °तिरिक्तस्या°। ३ क. °चास्यव्यक्तिपक्ष एवान्तर्भावात्। ४ क. °नन्दाकारावृत्तिर्विष°। ५ ग. °ति। तेषा°। ६ क. °ष्टस्य स्था°। ७ क. °रूपो र°। ८ क. °र्थः। झटिति प्रवृत्तिरिति। व्या°। ९ क. °स्काराणामप्रवृत्तिरित्य°। १० क. °दिः। व्यज्य°।

**वादिशब्दव्यवहार्यैर्ममैवैते शत्रोरेवैते तटस्थस्यैवैते, न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैत इति संबन्धविशेषस्वीकारपरिहारनियमा[3]नध्यवसायात्साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः**

शाविशेषविशिष्टै[4]स्तैरेव कारणादिभिर्व्यज्यते। नन्वेवं येषां पूर्वं रत्यादिनोत्पन्नस्तेषां तद्वासनाविरहिणां किं रसाभिव्यक्तिर्नास्त्येव। कः संदेहः। अ[6]त एव शृङ्गारिणामेव शृङ्गारस्य, निर्विण्णस्वभावानामेव शान्तस्याभिव्यक्तिरित्याद्यनुभूयते। किं चापराऽपि स्वाभाविकी वासना सहकारिणी। यां विना शृङ्गारिणामपि मीमांसकवैयाकरणादीनां न रसाभिव्यक्तिः। तदुक्तम्—

'वासना चेन्न हेतुः स्यात्स स्यान्मीमांसकादिषु' इति।

ननु तथाऽप्यन्यनिष्ठैर्विभावादिभिः कथमन्यनिष्ठस्य स्थायि[7]नोऽभिव्यक्तिः। उच्यते—ममैवैते, शत्रोरेवैते, तटस्थस्यैवैत, इति संबन्धिविशेषस्वीकारनियमस्य 'न ममैवैते, न शत्रोरेवैते, न तटस्थस्यैवैत, इति संबन्धिविशेषपरिहारनियमस्य चाज्ञानात्तेषां साधारण्येन प्रतीतेः। साधारण्येन प्रतीतिश्च न सर्वसंबन्धितया प्रतीतिः। किं तु संबन्धिविशेषायन्त्रणाप्रतीतौ प्रतीतिः। यद्वा 'अमुकस्यैवैत' इत्यवधारणं विना 'अमुकस्य' इत्येवं प्रतीतिः। अत एवोक्तम्—'ममैवैत इति नियमानवसायात्' इति। तथा च स्वीयत्वासंसर्गाग्रहात्स्वीयत्वसंसर्गग्रहप्रयोजनं संपद्यते। एवं च वाक्यार्थबोधे संबन्धिविषयत्वानुभवोऽपि न विरुध्यते। संसर्गबाधे संबन्धी

सामाजिकरत्याद्यकारणत्वमित्यपास्तम्। **व्यज्यत इति**। एतद्विषयैवाभिव्यक्तिर्विभावादिसमूहालम्बनात्मकरत्यादिप्रतीत्यात्मके रस उपचर्यत इति भावः। अन्ये तु व्यज्यते स्ववैशिष्ट्येन प्रतीयत इत्यर्थः। सह प्रतीतावपि विभावादेः स्थायिव्यञ्जकत्वं विषयालोकयोरिवाविरुद्धम्। अभिव्यक्त एव रसो न तु सोऽभिव्यज्यते। रसो व्यज्यत इति तु ओदनं पचतीतिवदित्याहुः। **नोत्पन्न इति**[12]। उत्पन्नो वा ध्वस्त इत्यपि बोध्यम्। **अपराऽपीति**। या सहृदयव्यपदेशप्रयोजिका। **अन्यनिष्ठैरिति**। रामादिसंबन्धित्वेन काव्यादवगतैरित्यर्थः[13]। वेण्या रामाद्यन्तःकरणपरिणामभूतैरिति वार्थः। **ममैवेति**। आत्माऽत्र प्रियस्तेन मित्रस्य नाधिक्यम्। **तटस्थः**। उभयामित्रः। **किं त्विति**। तत्तद्रसालम्बनविभावत्वादिनेत्यर्थः। एतेन सीतात्वादिज्ञान आराध्यत्वादिज्ञानकृ[14]तोऽपि रत्याद्युद्बोधप्रतिबन्धः परास्तः। **यद्वेति**। अयं पक्षः सहृद[16]यसंवादी। तदेव ध्वनयन्नाह—**तथा च स्वीयत्वेति**। **संबन्धिविषयत्वेति**। रामसीतादिपदघटितकाव्य

१ ग. °मैते न शत्रोरेते न तटस्थस्यैत इ°। २ क ग °बन्धिवि°। ३ क ग. °नव° ४ क °ष्टैरे°। ५ क °णां रसाभिव्यक्तिः किं नास्त्ये°। ६ क अतः शृ°। ७ क. °नो व्य° ८ क °तीतिश्च। ९ क. °स्यैवेत्य°। १० क °इत्यादनि°। ११ क. °यः। नोत्प°। १२ ग °ति। न वा। १३ क. °र्थः। ममै°। १४ क. °तो र°। १५ ग. °दयासं°। १६ ग. °दी। संब°।

**स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात्तत्कालविगलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसंपर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार**

---

न विषयः, किं तु पदार्थस्मरण एवेत्यनुभवविरोधाद्विचारासहत्वाच्चानुपादेयम् । नन्वेवं विभावादीनां साधारण्यं विना तत्त्वव्याघातादस्तु साधारण्यम् । स्थायिनस्तु तत्कथं स्यात् । तस्य तत्तदात्मनिष्ठत्वात् । यद्यप्यसाधारण्येऽपि[3] तस्य न रसप्रतीतिविरोधस्तथाऽपि तदंशे सहृदयसंवादो न स्यात् । स एव चालौकिकताद्दशस्वीकारकारणमिति । उच्यते—उपायानां विभावादीनामुक्तरूपसाधारण्यबलाद्रसानुभवकाले स्थायिनां प्रमातृविशेषनिष्ठत्वलक्षणायाः परिमितप्रमातृताया यद्विगलनमज्ञानं तद्वशोन्मिषितो वेद्यान्तरसंपर्कशून्योऽपरिमितो भावो यस्य तेन प्रमात्रा सकलसहृदयसंवादकारिणा प्रमातृविशेषसंबन्धाग्रहरूपेण साधारण्येन स्थायी चर्व्यते । ननु चर्वणाविशिष्टः स्थायी रस इत्युच्यते । चर्वणया च स्थायी विषयी क्रियताम् । न तु सुखात्मक आत्मेति न रसस्य व्यक्तिरिति चेन्न । स्वप्रकाशनये

---

इत्यर्थः । अत्रेदं तत्त्वम् । शक्त्यादिजन्यबोधे प्रथमं विशिष्य प्रतीतावप्यनन्तरं व्यञ्जनया प्रागुक्तसाधारण्येनोपस्थितौ सामाजिकानां स्वस्वनिष्ठरत्यादेरेव चर्वणा । एवं च काव्यादौ यावदयं राम इयं सीतेत्यादिबुद्धिस्तावन्न चमत्कार इत्यत्र सहृदयानुभव एव प्रमाणम् । अत एव काव्यश्रवणादिदशायां स्वपरविभागानुभवो न जायत इति सहृदयसंमतम् । संसर्गबोध इत्यादि मतान्तरम्। **अनुभवविरोधादिति ।** पदार्थस्मरणस्य तत्तत्पदार्थमात्रविषयकतया क्रमेण पदानां ज्ञानादेकपदज्ञानकाले तत्स्मारकाभावाच्च पदार्थस्मरणं संबन्धिविषयकमित्यनुभवविरुद्धमिति भावः । **विचारेति ।** संबन्धिबोधं विना संसर्गत्वस्यैवाभावादिति भावः । **तत्त्वव्याघातादिति ।** विभावत्वादिव्याघातादिति व्यञ्जकत्वव्याघाताद्वेत्यर्थः । **तत्तदात्मनिष्ठत्वादिति ।** स्वस्वस्वामिमात्रविषयकत्वादित्यपि बोध्यम् । **साधारण्यबलादिति ।** साधारण्येन विभावादेरुपस्थापकबलादित्यर्थः । **विशेषनिष्ठत्वेति ।** नियतविषयकत्वलक्षणाया इत्यपि बोध्यम् । वेद्यान्तरस्य वैमुख्यापादकतया निरासः । भावो रत्यादिः । **न रसस्येति ।** आनन्दानुभवरूपस्येत्यर्थः। **स्वप्रकाशनय इति ।** ज्ञानस्य स्वप्रकाशत्वनये स्वाकारस्य ज्ञानाकारस्य यथा विषयत्वं तथेत्यर्थः । अयं घटो घटमहं जानामीति हि तेषां ज्ञानम् । ज्ञानसामान्यसामग्र्यैव परमते ज्ञानवत् । अन-

---

१ क. ख. °त्तनावशो° । २ ख. °लहृ° । ३ क. °पि न तस्यर° ४ ग. °वः तत्त°

**इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन्हृदयमिव प्रविशन्सर्वाङ्गीणमिवालिङ्गन्नन्यत्सर्वमिव तिरोदधद्ब्रह्मानन्दास्वादमिवानुभावयन्नलौकिकचमत्कारकारी शृङ्गारादिको रसः । स च न कार्यः । विभावादिवि-**

स्वाकारवदभिन्नस्याप्यात्मनो विषयीकरणात् । अभिव्यक्तिविशिष्टश्च रत्यादिः स्थायी चर्व्यमाणतैकप्राणतया चर्वणानाशे विनष्टो रस इति प्रतीतिविषयो विभावादिजीवितावधिर्त्वेनानित्यचर्वणः पुर इव परिस्फुरन्हृदयमिव प्रविशन्सर्वाङ्गीणमिवालिङ्गन्नन्यत्सर्वमिव तिरोदधद्ब्रह्मास्वादमिवानुभावयन्नत एवालौकिकचमत्कारकारी शृङ्गारादिको रस इत्युच्यते । नन्वेवं स्थायिविभावादिसमूहालम्बनात्मिका रसस्य प्रतीतिरिति पर्यवसन्नम् । तच्च न युक्तम् । विभावादीनां पार्थक्येन प्रतीतिप्रसङ्गात् । घटपटाविति समूहालम्बनवदिति चेन्न । विभावादिपरामर्शस्य पानकरसन्यायेन चर्वणात् । यथा पानके कर्पूराद्यंशो न पार्थक्येनानुभूयते

यैव सामग्र्या सुखस्वरूपात्मनोऽपि तत्र भानमिति तात्पर्यम् । अभेदेऽपि विषयविषयिभावाङ्गीकारात् । **अभिन्नस्यापीति** । ज्ञानादित्यादिः । **आत्मनः** । सुखरूपस्य । एवमेव ज्ञानरूपस्यापि रसस्य ज्ञेयत्वमुपपादनीयम् । अत्रेदं तत्त्वम् । सुखज्ञानरूप आत्मा । तत्र सुखत्वज्ञानत्वे कल्पितौ धर्मौ । तत्र कस्याश्चिदेव सामग्र्याः सुखत्वांश आवरणभङ्गकता न सर्वस्येति नातिप्रसङ्गः । नन्वभिव्यक्तिविशिष्टरत्यादेरसत्त्वे तस्य स्थायित्वात्सर्वदैव रसप्रतीतिप्रसङ्गोऽत आह—**चर्व्यमाणतैकेति** । चर्वणाविषयतैकेत्यर्थः । ननु चर्वणैव कथं निवर्ततामत आह—**विभावादीति** । विभावादिजीवितावधित्वेनेत्यर्थः । जीवितस्य चर्वणाया विभावादिरेवावधिरिति भावः । व्यासङ्गादिना विभावनादिव्यापारनिवृत्तौ विशेषज्ञानादिना साधारण्यनिवृत्तौ वाऽदृष्टवशाद्वा चर्वणानिवृत्तिरिति फलितम् । **पुर इवेत्यादि** । इवशब्दाः क्रियान्वयिनः । स्वप्नविषय इव मनोमात्रगम्योऽपीतरेन्द्रियविषयबाह्यविषयमिव स्वात्मानं परिस्फोरयन्नित्यर्थः । तर्ह्यनन्तर एवास्तु तत्राऽऽह—**हृदयमिवेति** । **सर्वाङ्गीणमिति** । परिमितोऽप्यपरिमितः । प्रत्यङ्गममृतमिव सिञ्चन्नित्यर्थः । अनेन सुखरूप एवायमिति ध्वनितम् । **अन्यत्** । स्वविषयातिरिक्तम् । **ब्रह्मास्वादमिति** । अत्रेवो यथास्थान एव । ब्रह्मास्वादे ब्रह्ममात्रम्, अत्र तु विभावाद्यपीति सादृश्यम् । **अलौकिकः** । लौकिकसामग्रीजन्यविलक्षणः । स त्वेकस्यैव सुखाय । तस्यापि पर्यन्ते वैरस्यायैवेति बोध्यम् । **पानकेति** । यथा पानकरसे कर्पूरादीनां प्रत्ये-

१ क. °ङ्गयन्न° । २ ग. °ह्मास्वा° । ३ क. °नुभवन्न° । ४ क. °दिनाशेऽपि तत्संभ° । ख. °दिना° । ५ क °स्यात्म° । ६ क चर्वणैकप्रमाणतया । ७ क °रादी र° । ८ क. °स्य व्यक्तिरि° । ९ क. °वितादिस° । १० ग. °मू । नन्व° । ११ क. °र्वणया । १२ क. °ब्दाक्रिया° । १३ क. °ति । अपरिमितः प्र° ।

**नाशेऽपि तस्य संभवप्रसङ्गात्। नापि ज्ञाप्यः। सिद्धस्य तस्यासंभवात्। अपि तु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारकज्ञापकाभ्यामन्यत्क**

---

तथात्रापि विभावाद्यंशः। ननु विभावादीनां परामर्शस्यान्वयव्यतिरेकात्तत्कार्य एव रसः किं नोच्यत इति चेन्न। विभावादिपरामर्शस्य कारणत्वं यदि स्यात्तदा निमित्तकारणत्वमेव। न च तन्नाशस्य कार्यनाशकता[3] दृष्टा। द्वित्वादीनां तथात्वानभ्युपगमात्। चन्दनादिस्पर्शजन्यसुखादिन्यायो भविष्यतीति चेन्न। न हि तत्र स्पर्शाभावेन सुखं विनाश्यते। किं तु तदभावे कारणाभावात्कार्यं[4] नोत्पद्यते। उत्पन्नस्य सुखस्य तर्हि कथं विनाश इति चेत्। विरोधिगुणान्तरात्। अत्रापि तथैवास्त्विति[5] चेन्न। रसस्य वेद्यान्तरसंपर्कशून्यतया ज्ञानान्तरादेस्तत्कालेऽभावात्। नन्वेव दोषो व्यक्तावपि समान इति चेन्न समानः। व्यक्तेर्लोकोत्तरतया दोषासंस्पर्शात्। किं च चर्वणाविशिष्टः स्थायी रसः। न च काव्याद्युपस्थाप्यो विभावादिर्विशिष्टहेतुः[6]। तर्ह्यस्तु ज्ञाप्य इति चेन्न। विभावादिपरामर्शं विना तत्सिद्धेरभावात्। न चैकैव सामग्री निष्पादिका ज्ञापिका चेति संभवति। किं च स्वभिन्नतज्जन्यज्ञानविषयो

---

कास्वादविलक्षणः कश्चन मिलितरसास्वादस्ततः सचमत्कारस्तथा प्रकृतेऽपीति तात्पर्यम्। **तत्कार्य एवेति**। लोकविलक्षणविभावस्थाय्यादिज्ञानाल्लोकविलक्षणः प्रबलानन्दो जायते स एव रसः किं नोच्यत इत्यर्थः। **निमित्तेति**। तथा च तन्नाशेऽपि रसप्रतीतिप्रसङ्गः। न चेष्टापत्तिः। विभावादिभान एव रसत्वस्य सहृदयसंमतत्वात्। सुखज्ञानसामग्र्या इतरसविषयकात्मगुणविरोधित्वेन विभावादिज्ञानाधीनसमूहविषयकरत्यादिबोधस्योपनायकस्य सुखोत्पत्तिकाले सत्त्वात्तत्साक्षात्कारेऽपनयादितोऽपि न तद्भानसंभव इति भावः। लोकविलक्षणत्वेनात्राप्रतिबन्धकत्वकल्पने रसप्रतीतेर्नित्यत्वापत्तिरेवेति भावः। तत आह—**न चेति**। ननु द्वित्वादेरपेक्षाबुद्धिनाश्यत्वादिदमयुक्तमत आह—**द्वित्वेति**। तेषां नित्यत्वाभ्युपगमादिति भावः। **लोकोत्तरतयेति**। लोकविलक्षणाया व्यक्तेर्निमित्तकारणनाशनाश्याया एव सिद्धेरित्यर्थः। **चर्वणाविशिष्ट इति**। विभावादिविषयज्ञानविशिष्ट इत्यर्थः। **न चेति**। अयं भावः। शब्दाद्विभावादिज्ञानमथ रत्यादेस्ततः सुखोत्पत्तिस्ततस्तदनुभव इति व्यवधानान्नानुभवकाले विभावादिज्ञानम्। एवं विभावादिविषयकत्वस्याप्यनुपपत्तिरित्यपि बोध्यम्। **ज्ञाप्य इति**। विभावादिभिरित्यादिः। **तत्सिद्धेः**। विशिष्टरूपरससिद्धेः। लोके प्राक्सिद्धपटादेर्हि प्रदीपज्ञाप्यत्वं दृष्टमिति भावः। **निष्पादिकेति**। अत एव न नित्योऽपि। वासनारूपतया पूर्वं स्थितिसत्त्वेऽपि रसतामापन्नस्य विशिष्टस्य पूर्वं स्थित्यभावादिति बोध्यम्। **स्वभिन्नेति**। स्वं ज्ञाप्यत्वेनाभिमतः।

---

१ ग. °तत्संभ°। २ क. ख ग. °स्याभावा°। ३ क. °र्यध्वंसकता। ४ क. °वात्सुखं नो°। ५ क. तथाऽस्त्वि°। ६ क. °शिष्टे हे°। ७ क. °तु। लोकवि°। ८ क. °क्षणेना°। ९ ग. °वः। चर्व°। १० ग. पूर्वस्थि°।

**दृष्टमिति चेत्[1] । न क्वचिद्दृष्टमित्यलौकिकत्वसिद्धेर्[2]भूषणमेतन्न[3] दूषणम् । चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम् । लौकिकप्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिपरिमितयोगिज्ञानवेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्येयोऽभिधीयताम् । तद्ग्राहकं च प्रमाणं न निर्वि-**

---

हि तज्ज्ञाप्य उच्यते । अत एव स्वप्रकाशनयेऽपि चाक्षुषादिज्ञानं न चक्षुरादिज्ञाप्यं व्यवह्रियते । न चात्र तथा[9] । स्वाभिन्नतजन्यज्ञानविषयतयैव तु तज्ज्ञाप्यत्वं न निषेधामः[10] । किं तु विभावादिभिर्व्यञ्जितश्चर्वणीयः । कारकज्ञापकाभ्यामन्यो हेतुर्न लोकप्रसिद्ध इति चेदलौकिकत्वसिद्धेर्भूषणमेतन्न[11] दूषणम् । कथं तर्हि विभावादिभिरुत्पन्नो रसो ज्ञेयो रस इत्यादिव्यवहार इति चेदाद्यस्तावच्चर्वणोत्पत्त्या तत्रोत्पत्त्युपचारात् । द्वितीयोऽपि गुणालंकाराद्यसंभिन्नरसादिविषया या लौकिकी प्रमितिर्यश्चापरिपक्वयोगिनां[12] युञ्जानपदवाच्यानां जगद्भेदविषयैकत्वशालि[13] विज्ञानं यच्च परिपक्वयोगिनां[14] युक्तपदाभिधेयानां बाह्यार्थसंस्पर्शरहितं स्वात्ममात्रविषयं संवेदनं तेभ्यो गुणालंकारयुक्तरसादिमात्रविषयतया विलक्षणं यत्संवेदनं तद्गोचरतयेति मन्तव्यम् । न केवलमसत्त्वादज्ञाप्यो[15] रसः, किं त्वितोऽपि । यतस्तद्ग्राहकं न निर्विकल्पकम्[16] । विभावादिपरामर्शस्य निर्विकल्पकजननायोग्यत्वात् । नापि स्वभिन्नसविक-

---

**स्वाभिन्नेति** । ज्ञानस्वरूपत्वाद्रसस्येत्यर्थः । विषयतयैव त्विति पाठः । **विभावादिभिरिति** । तृतीया हेतौ साहित्येऽपि बोध्या । व्यञ्जितश्चर्वणीय इत्युभयान्वयिनी च । एवंच सूत्रे व्यञ्जकत्वमेव पञ्चम्यर्थः[17] । तेन व्यञ्जितश्च चित्स्वरूपोऽनावृतानन्दांश एव भवतीति तात्पर्यम् । **ज्ञापकाभ्यामिति** । व्यञ्जकत्वातिरिक्तज्ञापकत्वमत्र विवक्षितम् । अतो व्यञ्जकस्य ज्ञापकत्वेऽपि न क्षतिः । **अलौकिकेति** । व्यञ्जकोऽप्येको हेतुरिति भावः । अलौकिकस्य कार्यस्य सिद्धेरलौकिकहेतुकत्वं भूषणमेवेत्यक्षरार्थः । वस्तुतो विशिष्टरसस्य व्यङ्ग्यत्वमपि नेत्युक्तं प्राक् । **गुणालंकारादीति** । आदिना विभावादिसंग्रहः । **जगद्भेदेति** । मिथ ईश्वराच्च भिन्नत्वेन जगद्विषयकमित्यर्थः । **विलक्षणं संवेदनम्** । स्वस्वरूपं ज्ञानम् । अभेदे विषयविषयिभावः प्रागुपपादितः । **तद्ग्राहकम्** । तद्विषयकम् । **अयोग्यत्वादिति** । रसादिज्ञाने विभावादिविषयकत्व एव

---

१ क. °चेन्न । क्व चिन्न दृष्ट° । २ ख. °कत्वसि° । ३ ख. °न्नतु दू° । ४ ख. °प्रमा° । ५ ग. °लिमि° । ६ क. ख. ग. °वद्यसं° । ७ ख. °दनागो° । ८ ख. ग. च न । ९ क. °था । स्वभिन्नतज्जन्यज्ञानाविषय° । १० क. °षेधयामः । ११ क. °कसिद्धेर्भूषणमेवैत° । १२ क. °योगानां । १३ क. °यत्व° । १४ क. °योगानां । १५ क. °मासिद्धत्वा° । १६ ग. °नत्वरू° । १७ ग. °र्थः व्य° । १८ क. °भावोऽन्यत्रोप° ।

कल्पकम् । विभावादिपरामर्शप्रधानत्वात्[1] । नापि सविकल्पकम्[2] । चर्व्यमाणस्यालौकिकानन्दमयस्य तस्य स्वसंवेदनसिद्धत्वात् । उभयाभाव[3]स्वरूप[4]स्य चोभयात्मकत्वमपि पूर्ववल्लोकोत्तरतामेव गमयति न तु विरोधमिति श्रीम[6]दाचार्याभिनवगुप्तपादाः ।

व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणाम्, अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः, चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानामिति पृथगनैकान्तिकत्वात्सूत्रे मिलिता एव निर्दिष्टाः ।

---

रूपकम् । चर्व्यमाणस्यालौकिकानन्दमयस्य तस्य स्वसंवेदनमात्रसिद्धत्वाच्चर्वणादशायां ज्ञानान्तराभावात् । स्वाभिन्नसविकल्पकविषयत्वेन ज्ञाप्यत्वमिष्टमेव । ननु निर्विकल्पकस्वभिन्नसविकल्पयोरन्यतरविषयत्वाभावोऽपरविषयत्वपर्यवसन्नः । तथा चैकविषयत्वाभावेऽपरविषयत्वप्रसक्तिरित्युभयविषयत्वाभावेऽनुभयविषयत्वं प्रसज्येतेति चेन्न । एवं ह्युभयरूपत्वमापाद्यमानं स्वाभिन्नसविकल्पकविषयतया लोकोत्तरचमत्कारमेव गमयति न पुनर्विरोधमिति । अथ विभावादयो मिलिताः किमिति व्यञ्जकत्वेन निर्दिष्टाः । एकैकस्य व्यञ्जकत्वे व्यभिचारात् । अथैकैकस्मादन्यद्वयाक्षेपात्तत्राप्यस्त्येव रसव्यक्तिरित्यव्यभिचार[12] इति चेन्न । व्याघ्रादयो हि विभावा भयानकस्येव[13] वीराद्भुतरौद्राणाम् । अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः । चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीरकरुणभयानकानाम् । इत्यन्यद्वयाक्षेपानियमात् । नन्वेवं मिलितस्यैव व्यञ्जकत्व एकैकोपस्थितौ रसव्यक्तिर्न स्यात् । दृश्यते चासौ । यथा—

---

विभावादिज्ञानोपयोगः । तादृशं च न निर्विकल्पकमिति भावः । **स्वसंवेदनेति** । स्वात्मकसंवेदनेत्यर्थः । तथा च स्वाभिन्नं तद्विषयकमप्रसिद्धमेवेति भावः । **चर्वणादशायामिति** । चर्वणाया व्यङ्ग्यत्वेन व्याञ्जनिकसामग्र्या बलवत्त्वेन चर्वणातिरिक्तज्ञानाभावादित्यर्थः । **उभयरूपत्वमिति** । उभयविषयत्वमित्यर्थः । **स्वाभिन्नसविकल्पकेति**[14] । विभावादेर्विभावत्वादिना भानात्तदंशे सविकल्पकत्वम् । अनावृतचैतन्यस्य निर्धर्मकस्य स्वरूपतो भानात्तदंशे निर्विकल्पकत्वं च तस्यास्तीति भाव इति दिक् । **निर्दिष्टा इति** । भरतसूत्रे स्वसूत्रे चेति शेषः । उत्तरमाह—**एकैकस्येति**[15] । **व्यभिचारादिति** । एकैकसत्त्वेन रसानुदयादिति भावः । **अनियमादिति** । व्याघ्राद्धि भीरूणां भयमपूर्व-

---

१ क. ग. °र्शनप्र° । २ ख °कल्पः । च° । ३ क. ख ग. °वरू° । ४ ग. °पस्योभ° । ५ क. ख. ग. °तामव° । ६ ग. °मदभिनवगुप्तपादाचार्याः । ७ क. ख. °ता नि° । ८ क. °वे उभ° । ९ क. °नं स्वभि° । १० क. °रतामेवाविगम° । ११ क. °कत्वव्य° । १२ क. °रिति क व्य° । १३ क. °व रादाद्भुतवीराणाम् । १४ क. °कल्पकनिर्विकल्पकेति । १५ ग. °ति । अनि° ।

वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः ।
धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे ॥ २८ ॥

इत्यादौ

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।

---

वियदलि० ।
इत्यादौ कामिनीगताया रतेरालम्बनमात्रस्योपस्थितौ[1] ।
एवम्—परिमृदित० ।

---

दर्शिनां विस्मयो वीराणामुत्साहो व्यापादितबन्धूनां क्रोधः । एवं संस्कारोद्बोधको ध्याना-ख्यश्चित्तवृत्तिविशेषश्चिन्ता । सा शृङ्गारे नायकरूपादिः, वीरे साहाय्यस्य, करुणे बन्धुगतो-पकारादेर्भयानके भयहेतुवृत्तिचण्डत्वादिः । एवं च परस्परप्रतिबन्धान्नैकस्यापि व्यक्तिरिति व्यभिचारः । एकानुगुणेतरद्वयसाहित्येन तदेकव्यक्तावप्यपरा व्यक्तिरित्यन्वयव्यभिचारश्चेति नैकैकमात्रस्य व्यञ्जकतेति भावः ।

वियदिति । मानिनीं प्रति सखीवाक्यमिदम् । हे मुग्धे मानभङ्गावश्यंभावेऽपि दयि-तप्रणामापेक्षणाद्विवेकरहिते[2] । प्रणतिपरे मुहुर्मुहुः प्रणामशालिनि । दयिते इति विषयस-प्तमी । प्रसीद । बहुतरोद्दीपकसंस्वादवश्यंभावी मानभङ्ग इति तव गौरवरक्षा न भविष्यतीति भावः । तामेव मानभङ्गसामग्रीमाह । वियत् । आकाशम् । अलिमलिनेत्युपमि-तसमासः । अम्बुगर्भेति व्यधिकरणबहुव्रीहिः । ततस्त्रिपदो बहुव्रीहिः । अस्तीति शेषः सर्वत्र । अम्बुगर्भत्वेनावृष्टत्वाच्चिरस्थितिः । एवं चोर्ध्वमुखी स्थातुं न शक्नोषीति भावः । मधुकरेति । प्रावृषि कोकिलकूजिताभावेऽपि मधुकरा एव सुखकरत्वात्कोकिला इति रूपकम् । वर्षास्वपि कोकिला माद्यन्तीत्यपि कश्चित् । तत्कूजितैर्दिशां श्रीः शोभा । एवं च तिर्यङ्मुखी स्थातुं न शक्नोषीति भावः । अभिनवाङ्कुरा एवाङ्क उत्सङ्गे टङ्काः पाषाणविदारका मर्मभेदित्वात्पाषाणप्रायकठिनमानभञ्जकत्वाद्वा यस्यां सा तादृशी । एतेनाधोमुखावस्थानं निराकृतम् । आलम्बनमात्रस्येति । आलम्बनपदं रत्युद्बोधजन-कोपलक्षणम्[3] । तेनोद्दीपनस्यापि संग्रहः । क्वचित्तु आलम्बनोद्दीपनविभावमात्रस्येति पाठः ।

परिमृदितेति । मकरन्दं प्रति माधवस्य मालत्यवस्थावर्णनमिदम् । अस्या अङ्गं परिमृदिता कराभ्यां शिथिलीकृता या मृणाली बालमृणालं तद्वन्म्लानम् । सर्वाङ्गाणां कृशतरत्वप्रकारैकैकबु-द्धिविषयत्वेनैकत्वादेकवचनम् । तथा क्रियासु शरीरमात्रधारणोपयोगिनीषु बह्वीषु परिवारस्य सखीसार्थस्य प्रार्थनाभिर्बह्वीभिः प्रवृत्तिः । एका उपक्रममात्रम्, न तु चेष्टादि । कथमपि ।

---

१ क. °तेर्विभावमा° । २ क. °पि न्तदत्यागाद्वि° । ३ ग. °म् तत्कू° ।

कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः ॥ २९ ॥

इत्यादौ ।

दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किंचाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ ३० ॥

---

इत्यादावङ्गम्लान्याद्यनुभावमात्रस्य ।

दूरादुत्सुकमागते० ।

---

अनिच्छन्त्या अपि बलात्कारेण । तेनालस्यातिशयः । चकारो भिन्नक्रमः । कपोल इत्येकत्वं विवक्षितम् । अभिनवस्य करिणो दन्तस्य यश्छेदश्छिन्नो भागः । कर्मणि घञ् । तद्वत्कान्तः । दन्तस्य कोमलत्वेनाऽऽशुरक्तसंबन्धाद्दुग्धालक्तकमिश्रवर्णलाभः । ईदृशोऽपि निष्कलङ्कस्य कलामात्रावशिष्टस्य विधोर्लक्ष्मीं शोभां च कलयति । अनेन क्षामतौ । विरहारम्भात्सौकुमार्यातिशयेन च सर्वतः पाण्डिमाऽनुदयादेकपार्श्वशयनाच्चैकस्यैव किंचिदवच्छेदेन रक्तता किंचिदवच्छेदेन पाण्डुतेति कपोल इत्येकवचनम् । आभ्यामपि न शोभाच्युतिरिति कान्तलक्ष्मीपदव्यङ्ग्यम् । अभिनवेति विशेषणं छेदस्य । तेन शौक्ल्याधिक्यात्पाण्डुताधिक्येन विप्रलम्भोत्कर्षः । कालिदासोऽपि सद्यः कृत्तद्विरददशनच्छेदगौरस्येति प्रायुङ्क्तेत्यन्ये । अङ्गम्लान्यादीतिपाठः ।

दूरादिति । निराकरणेन प्रसादनान्निवृत्तस्य नायकस्य पुनरागमे जातभावाया मानिन्याश्चक्षुःक्रियावर्णनमिदम् । उत्सुकमित्यादिविशेषणानि चक्षुरित्यनेनान्वियन्ति । तानि च प्रपञ्चचतुरं चक्षुर्जातमित्यस्योपपादकानि । दूराद्दृष्टे इति शेषः । सर्वसप्तम्यन्तानां प्रेयसीत्यत्र संबन्धः । उत्सुकम् । इतोऽन्यत्र यातीति शङ्कयोत्कण्ठासूचकचेष्टाविशेषशालि । आगते । समीपं प्राप्ते । विवलितम् । दूरतः पश्यन्त्या ममौत्सुक्यमनेन ज्ञातमिति लज्जया तिर्यक्कृतम् । पूर्वनिराकरणलज्जया संकुचितं वा । संभाषिणि निराकरणेऽप्यवैमुख्येनापूर्वालापेन वा हर्षोदयाद्विस्तारितं विकसितम् । संश्लिष्यति चाटु विनैवालिङ्गनेच्छया सांनिध्यं गच्छति । अप्रसाद्यैव स्पर्शमिच्छतीति क्रोधाविर्भावादरुणम् । अत एव क्रोधात्सविधं त्यक्त्वा स्थानान्तरं यान्त्या अञ्चलग्रहणम् । किं चेति समुच्चयार्थे किंचिदित्यर्थे वा । तथाभावश्च चाटुकरणं विनै-

---

१ क. ख. °दपाण्डुः क° । २ क. विचलि° । ३ क. °ने कोपाच्चि° । ४ क. °श्चमालिन्या° । ५ क. °ता । एकपा° । ६ ग. °तेत्येकव° । ७ क. °म् । अङ्गम्ला° । ८ क. ग. °गमने जा° ।

इत्यादौ च यद्यपि विभावानामनुभावानामौत्सुक्यव्रीडाहर्षकोपासूयाप्रसादानां च व्यभिचारिणां केवलानामत्र स्थितिः, तथाऽप्येतेषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैकान्तिकत्वमिति ।

---

इत्यादावुत्सुकादिविशेषणैर्व्यञ्ज्यानामौत्सुक्यलज्जाहर्षकोपासूयाप्रसादानां व्यभिचारिमात्राणाम् । यद्यप्यत्र प्रेयसीत्यालम्बनविभावोऽप्यस्ति तथाऽपि रत्यनुकूलधर्मवत्तयाऽनिर्देशादनस्तिकल्प एवेति । मैवम् । एषां विभावादीनामसाधारण्येनान्यद्वयाक्षेपकत्वेनात्रापि मिलितानामेव व्यञ्जकत्वात् । नन्वेषां चेदसाधारण्यं किमन्यद्वयाक्षेपणेन । एकैकव्यभिचारेण हि त्रयोपादानम् । अथ साधारण्यमेव, कथं तर्हि स्थायिविशेषयोग्यविभावाद्याक्षेपकत्वमिति । उच्यते—एकस्य व्यभिचारान्मिलितानां व्यञ्जकत्वे स्थितेऽसाधारणेनापीतरद्वयमाक्षिप्यते । किं च रसस्य विभावादिसमूहालम्बनरूपत्वादेकैकस्मादसाधारणादपि व्यक्त्यभावान्मिलितानामेव व्यञ्जकत्वम् । अतोऽसाधारण्येऽपीतरद्वयमाक्षिप्यते । ततो मिलितैस्तदभिव्यक्तिः, इति ।

---

वोत्तरोत्तरं तत्तच्चेष्टाप्रवृत्तिजन्यासूयया । चरणानतिः । चरणशिरःसंयोगः । तस्य व्यतिकरे समूहे । त्वयैवमाचरितं मया कठिनया तत्सोढमित्येवंरूपप्रसादोदयाद्बाष्पाम्बु । ततः पूर्वमसूयाभिः कठिने चेतसि द्रवीभावाभावात् । अम्बुपदं बाहुल्यसूचनाय । ईक्षणपदं गोलकपरम् । चक्षुष्पदं तेजःपरम् । विपरीतं वा । आद्य औत्सुक्यादीनां तेजसि सत्त्वं परम्परया बोध्यम् । अन्त्ये बाष्पाम्बुपूर्णत्वं परम्परया बोध्यम् । अतो भेदाद्बहुव्रीहेर्नानुपपत्तिः । बाष्पाम्बुपूर्णेक्षणादिति पाठस्तु सुगमः । अहो इति चातुर्यदर्शनाद्विस्मये । प्रपञ्चो विचित्रव्यापारबाहुल्यम् । तत्र चतुरं कुशलम् । जातागासि न तु कृतागासि प्रेयसि । प्रीतिपात्रे । न पतिमात्रे ।

**प्रसादानामिति** । यद्यपि प्रसादो न व्यभिचारिषु गणितस्तथाऽपि मनःप्रसादो हर्षः स्यादिति हर्ष एवात्र प्रसादो विवक्षित इत्याहुः । **अनिर्देशादिति** । जातागसीति विरुद्धधर्मतया निर्देशाच्चेत्यपि बोध्यम् । **आक्षेपः** । व्यञ्जना । अतोऽसाधारण्येऽपीति पाठः । **इतरद्वयमिति** । तत्राऽऽद्ये प्रणतिरनुभावः । प्रसादप्रार्थनोन्नेयाऽसूया संचारिणी । द्वितीये मालतीमाधवौ विभावौ प्रकरणगम्यौ । म्लानत्वादिगम्या चिन्ता व्यभिचारिणी । तृतीये मानिनीप्रेयांसौ विभावौ । चरणानतिरनुभाव इति बोध्यम् । यत्र तु मिलितानामपि साधारण्यं तत्र विरोधे न भवत्येव रसप्रतीतिरविरोधे तूभयोरपि भवत्येवेत्याहुः ।

---

१ ख. °दौ य° । २ क. ग. °वानु° । ३ ग. °डाप्रह° । ४ क. °नां व्यभिचारिणां च के° । ग. नां व्य° । ५ क. ख. °नामेवास्ति स्थि° । ग. °नामेवावस्थि° । ६ ग. °णत्वादन्य° । ७ क. °णप्रतिपायाना° । ८ क. एकैकस्य । ९ क. °यमभ्युपेयते । १० क. रणेनापीतरद्वयमपेक्ष्येत । ११ क. ग. °सादमार्थ° । १२ म् । द्वाद° ।

तद्विशेषानाह—

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ २९ ॥

---

केचिदाहुरेक एव शृङ्गारो रस इति केचिच्च द्वादशेत्यादि तन्निरासाय भेदानाह । **शृङ्गार०** ।

शान्तस्य रोमाञ्चादिविरहेणानभिनेयत्वात्काव्यमात्रगोचरत्वमित्यभिधानान्नाट्य इत्युक्तम् । यद्वा नाट्ये तावदष्टौ रसाः प्रतिपादिताः । अतः काव्येऽपि तावन्त एवेत्यर्थः । ननु रसः सुखात्मक इति प्रतिपादितम् । तत्कथं दुःखमयः करुणादिको रस इति चेन्न । लोके तथात्वेऽपि काव्यादौ पार्यन्तिकालौकिकसुखोदयात् । अन्यथा प्रेक्षावतामप्रवृत्त्यापत्तेः । शृङ्गारादीनां च लक्षणं रत्यादिप्रकृतिकत्वम् । तत्र मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं रतिः । तत्प्रकृतिको रसः शृङ्गारः । स द्वेधा संभागो विप्रलम्भश्च । तत्र—

---

**द्वादशेति** । प्रेयांसदान्तोद्धतैः सह वक्ष्यमाणा नवेत्यर्थः । तत्र स्नेहप्रकृतिः प्रेयांसः । अयमेव वात्सल्य इति बोध्यम् । धैर्यस्थायिभावको दान्तः । गर्वस्थायिभावक उद्धतः । निन्दादितः परावज्ञा गर्व इत्याहुः ।

**अष्टाविति** । एते त्रयस्तु भावान्तर्गता इति भावः । एतेनाभिलाषस्थायिको लौल्यरसः श्रद्धास्थायिको भक्तिरसः स्पृहास्थायिकः कार्पण्याख्यो रसोऽतिरिक्त इत्यपास्तम् । ते शृङ्गारशान्तिहास्यानां व्यभिचारिरूपा इत्यपि केचित् । **अनभिनेयत्वादिति** । सर्वविषयोपरमस्वरूपत्वात्तस्येति भावः । गीतवाद्यादेस्तद्विरोधित्वाच्चेत्यपि बोध्यम् । अभिमानादिति पाठः । अभिधानादिति पाठे वृद्धैरिति शेषः । **यद्वेति** । अत्र पक्षे शान्तोऽपि नवमो रस इत्येतद्वक्ष्यमाणं नाट्यकाव्यसाधारणम् । तस्याप्यभिनेयत्वस्य बहुभिरङ्गीकारादिति भावः । गीतादिकमपि तद्विषयं न तद्विरोधीत्याहुः । **तत्कथमिति** । रसत्वे सुखरूपतापत्तिः । दुःखकार्यस्याश्रुपातादेरनापत्तिश्च । अरसत्वे तु तत्काव्ये सहृदयानां प्रवृत्तिर्न स्यादिति भावः । **दुःखमय इति** । शोकाद्युद्बोधकत्वात्तत्त्वम् । **पार्यन्तिकेति** । अत्रोपपत्तिः प्रागुक्तैव । भावनया वर्णनीयमयीभावेन शोकस्य तत्कार्याश्रुपातादेश्च नानुपपत्तिः । आनन्दांशस्योत्कटत्वेनोत्कटेच्छाविषयत्वेन शोकाद्यंशे बलवद्द्वेषाभावात्प्रवृत्तेरपि नानुपपत्तिः । वर्णनीयशब्देन च लौकिकरसाश्रयादिरुच्यत इति बोध्यम् । **सुखसंवेदनम्** । सुखजनकत्वेन ज्ञानम् । तत्त्वेन ज्ञानानुकूलश्चित्तवृत्तिविशेष इति यावत् ।

---

१ क. °भिमाना° । २ क. °न्त इत्य° । ३ क. °नां लक्षणं च र° । ४ क. °म्° । अनभि° । ५ ग. °म्° । यद्वे । ६ क. °त्वे न त° । ग. °त्वेत° । ७ क. °म् । अनु° ।

तत्र शृङ्गारस्य द्वौ भेदौ । संभोगो विप्रलम्भश्चेति । तत्राऽऽद्यः परस्परावलोकनालिङ्गनाधरपानपरिचुम्बनाद्यनन्तभेदत्वादपरिच्छेद्य इत्येक एव गण्यते । यथा—

---

अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ ।
दर्शनस्पर्शनादीनि स संभोगो मुदान्वितः ॥

स च परस्परालोकनालिङ्गनादिभेदादगणेय इत्येक एव गण्यते ।

भावोपदा रतिर्नाम प्रकर्षमधिगच्छति ।
नाधिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते ॥

स च संगमपूर्वस्तदन्यश्च । तत्रान्त्योऽभिलाषहेतुक इत्युच्यते । अभिलाषपदेन तद्धेतोरनादिसंगमाभावस्य लक्षणात् । आद्यस्तु क्वचिदीर्ष्यया प्रणयेन वा मानरूपः । स ईर्ष्याहेतुक इत्युच्यते । ईर्ष्यापदेन मानहेतोरुपलक्षणात् । क्वचित्तु कार्यवशाद्देशान्तरस्थितेः । स प्रवासहेतुकोऽभिधीयते । उत्पद्यमानोत्पत्स्यमानावपि प्रवासौ स्वज्ञानद्वारा विप्रलम्भप्रयो-

---

**अनुकूलाविति** । न चेदं नायिकानायकयोरेकतरमात्रदर्शनादिरूपे व्यङ्ग्ये संभोगेऽव्याप्तम् । रतिप्रकृतिकत्वे सति विप्रलम्भभिन्नत्वे तात्पर्यात् । तत्र रसाभास एवेत्यपरे । **अगणेय इति** । संज्ञापूर्वकत्वाण्णिलोपाभावे साधु । **एक एवेति** । संयोगत्वसामान्याभिप्रायेणेदम् । तच्चानुपदाक्तम् ।

**प्रकर्षमिति** । विभावादिसंवलितत्वमित्यर्थः । नचेदं नायकप्रसाद्यमानमानिनीनायिकाविप्रलम्भेऽव्याप्तम् । रतिप्रकृतिकत्वे सति संभोगभिन्नत्वे तात्पर्यात् । तदानीं तस्मिन्विरुद्धधर्मग्रहादभीष्टत्वज्ञानाभावेन लब्धत्वज्ञानाभावेन वा न दोष इत्यन्ये । **तद्धेतोरिति** । एतेन—

श्रवणाद्दर्शनाद्वाऽपि मिथः संरूढरागयोः ।
दशाविशेषसंप्राप्तिः पूर्वरागः स उच्यते ॥

अभिलाषचिन्तास्मृतिगुणकथनोद्वेगसंलापा उन्मादो व्याधिर्जडता मूर्छेतिदशाऽत्र दशा इत्युक्तेः पूर्वरागविप्रलम्भीयदशान्तर्गतोऽभिलाषो न विप्रलम्भजनक इत्यपास्तम् । **ईर्ष्ययेति** । प्रिये सपत्नीरक्ते कोप ईर्ष्या तद्धेतुको मानः प्रणयहेतुको वा मानः । यथा भूषणा-

---

१ क. °रालोकनालिङ्गनचु° । २ ख. °नाध° । ३ ग. °बनपरि° । ४ क. °न्तरावस्थि° । ५ ग. °दे । एक । ६ क. °नजदोष ।

**शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-**
**र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।**
**विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं**
**लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥ ३१ ॥**

---

जकाविति नाव्याप्तिः । प्रवासशब्देन स्वज्ञानलक्षणाद्वा । कचिच्छापात् । स च शापहेतुक इति व्यवह्रियते । कचिदुक्तत्रितयातिरिक्ताद्गुरुलज्जादितःकारणात् । स एष विरहहेतुक इत्युच्यते । करुणशृङ्गारस्याप्यत्रैवान्तर्भावः ।

तत्र संभोगो नायिकारव्यो नायकारव्यश्च । क्रमेणोदाहरणम् ।

**शून्यं वासगृहं०** ।

आलोक्येति लज्जया समानकर्तृकम् ।

---

दिलाभेच्छायाम् । **स इति** । उभयरूप इत्यर्थः । **त्रितयम्** । ईर्ष्याप्रवासशापरूपम् । **विरहेति** । गुरुलज्जादितः संगमप्रतिबन्धो विरहः । रहःपर्यायोऽकारान्तो रहःशब्दोऽप्यस्ति । द्विरूपकोशात् । एवं च रहस्य एकान्तदेशस्य संगमयोग्यस्याभावो विरह इत्यन्ये । **अत्रैवेति** । विप्रलम्भ एवेत्यर्थः । अयं च मूर्छितनायकविषयः ।

न्यूनोरेकतरस्मिन्गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदैकस्तदा भवेत्करुणविप्रलम्भः ॥

इत्युक्तेः । शोकश्चात्र व्यभिचारी बोध्यः । अत एव संगमप्रत्याशाकालिकस्तदनुतापो विप्रलम्भ इत्याहुः ।

**शून्यमिति** । प्रथमावतीर्णमदनविकारमुग्धावर्णनमिदम् । वासगृहं शयनागारं शून्यं निर्जनं तत्त्वेन ज्ञातमपि निभृतसखीसत्त्वशङ्कया विशेषेण दृष्ट्वा किंचित् अपरकायेन न तु सर्वतो निद्राभङ्गे पार्श्वपरिवर्तनेन समाधातुं शक्यत्वात् । शनैर्वलयादिक्काणेन मिथःसंदानितोरूसंक्षोभेण वा प्रियतमनिद्राभङ्गो यथा न स्यात्तथोत्थायेति संबन्धः । अनुरागजिज्ञासया निद्राया व्याजं मिषमुपागतस्य प्राप्तस्य न तु व्याजेन निद्राम् । सर्वथा तदसंबन्धात् । सुचिरम् । यावद्बुद्धिवैभवम् । अत एव निःशेषतो वर्णयित्वा अनुरागातिशयात् । पत्युर्न तु प्रियस्य । तथाविधवर्णनायामपि निद्राव्याजसहिष्णुत्वात् । जागरणशङ्कया सुचिरमिति बहुकालमित्यर्थकमपि । विश्रब्धं विश्वस्तम् । एतावताऽप्यभङ्गेन निद्रायां वास्तविकत्वभ्रमात्परिचुम्ब्य परितः कपोलयोर्नेत्रयोश्च चुम्बनं कृत्वा पुलकस्य सर्वाङ्गीणत्वेऽपि गण्डस्थल एव दर्शनादाह——गण्डस्थलीत्यादि । गण्डस्य स्थलीत्वेन पुलकस्याङ्कुरता ।

---

१ क. (प्र)परिरभ्य । २ ख. °ता । त्वं । ग. °ता । यथा° । ३ क °पि स्व° । ४ क. °हः । अत्रै° । ५ क. °तू । सुचि° ।

तथा—

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥ ३२ ॥

---

त्वं मुग्धाक्षि० ।
वीटिका वसनग्रन्थिः ।

---

अत्र गण्डेत्यश्लीलम् । लज्जत इति लज्जा । पृथक्पदम् । पचादित्वादच् । लज्जावती । लज्जनक्रियया समानकर्तृकत्वेनालोक्येति क्त्वोपपत्तिः । अन्यानि क्त्वान्तानि तु परस्परापेक्षाणि । अत एव नम्रमुखी । लज्जाराहित्यहेतुप्रौढत्वव्यावृत्तये बालेति मुग्धेत्यर्थकम् । हसता । तव सर्वं रहस्यमवगतामिति वा पूर्वं मत्प्रार्थनयाऽपि न प्रवृत्ताऽसि इदानीं कथमिति वा व्याजनिद्राफलं झटित्येव लब्धमिति वा हासः । अत एव प्रियेण चिरं लज्जापगमः संभोगस्वीकारश्च यावत्तावत्पर्यन्तं चुम्बितेत्यर्थः । सवृद्धिकमूलधनग्रहणाय चिरमिति चक्रवर्ती । अत्र शून्यमित्यनेनोद्दीपनातिशयश्चुम्बनप्रवृत्तियोग्यता च । वासगृहमिति स्रक्चन्दनादिसंपत्तिः । पत्युरिति युक्तानुरागित्वम् । विश्रब्धमित्यनेन रागातिशयादविमृश्यकारित्वम् । नम्रेत्युक्तं न तु नामितेति । तेन लज्जया तथा विह्वलत्वं यथा नमनेऽप्यशक्तिरिति । अत्र लज्जाहासयोर्व्यभिचारिणोः स्वपदेनोपादानं चिन्त्यम् । अत्र यद्यपि परस्परस्याऽऽलम्बनत्वेनोभयोरपि रतिः प्रतीयते तथाऽपि नायकविषयिण्या नायिकारतेरुद्रेक एव चर्वणाविषय इति सहृदयसाक्षिकम् । अत्र नायक आलम्बनम् । शून्यगृहनायकनिद्राद्युद्दीपनम् । मुखनिर्वर्णनचुम्बनाद्यनुभावः । लज्जाहास्यव्यङ्ग्यहर्षादिर्व्यभिचारिभाव इत्याद्यूह्यम् ।

पूर्वं रक्ता भवेन्नारी पुमान्पश्चात्तदिङ्गितैरित्युक्तेर्नायिकारब्धमुदाहृत्य नायकारब्ध मुदाहरति—**त्वं मुग्धेति** । मुग्धाक्षि सुन्दराक्षि । चक्षुषैव जगन्मनोवशीकरणात् । अत एव कञ्चुलिकावैयर्थ्यम् । न केवलं कञ्चुलिकानपसारणे शोभानुत्पत्तिरपि तु विद्यमानशोभातिरोधानमपीत्येवकारद्योत्यम् । मनोहारिणीमिति ताच्छील्ये णिनिः । लक्ष्मीं शोभाम् । प्रियतमेऽतिशयप्रीतिपात्रे । तेनानुपेक्षणीयत्वम् । तद्वीटिका कञ्चुलिकाग्रन्थिः । मोचनाय तत्संस्पर्शे सखीसार्थाल्लज्जया शय्योपान्ते निविष्टा निबिडसंलग्ना सा चासौ स्मितवती सखी आलीजनस्य नायिकैव तस्या नेत्रोत्सव उत्फुल्लता तेनाऽऽनन्दितः । सस्मितेत्यनेन कञ्चुलि-

---

१ ग. °शि । तल्पोपा°। २ क. लज्जेति पृ°। ३ क. °न्तान्यप्येदपेक्षाण्येव । अत । ४ क. ग. °प्रौढात्व° । ५ क. °क्षिकः । अ° । ६ ग. °मू । एवं नायिकारब्धमुदाहृत्य नायकारब्धं पूर्वं । ७ ग. °त्युक्तम्मुदा° ।

अपरस्तु अभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्चविधः । क्रमेणोदाहरणानि—

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधीक्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ ३३ ॥

अन्यत्र व्रजतीति का खलु कथा नाप्यस्य ता[1]दृक् सुहृ-
द्यो मां नेच्छति नागतश्च[2] हह हा कोऽयं विधेः प्रक्रमः ।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला[3] वृत्तविवर्तनव्यतिकरा[4] नाऽऽप्नोति निद्रां निशि ॥३४॥

एषा विरहोत्कण्ठिता ।

---

विप्रलम्भे[5]ष्वभिलाषहे[6]तुको यथा—

प्रेमार्द्राः० ।

प्रेम स्नेहः । स एव[7] प्रकृष्टः प्रणयः । स एव परिचयातिशयेन [8]रञ्जनक्षमो रागः ।

---

कापसारणस्वरसः । अलीकवचनं शुकः पाठनीयः सारिका भोजनीयेत्यादि । शनैस्त्वमलीकवचनोपन्यासश्च सखीरहस्यज्ञानगोपनेन तस्या लज्जातिशयपरिहाराय । मुग्धाक्ष्यालम्बनम् । नयनसौन्दर्यमुद्दीपनम् । आभाषणवीटिकास्पर्शावनुभावौ । अभिधानवीटिकासंस्पर्शयोस्तुल्यकालस्वावतार उत्कण्ठादयश्च सचारिणः ।

प्रेमार्द्रा इति । प्रेम अयं मम अहमस्येत्याकारकः पक्षपातविशेषः । तेनार्द्राः स्निग्धाः । स एवावलोकनादिना प्रकर्षं नीतः अपराधसह[9]स्रेणापि चालितो वा प्रणयः । तद्युक्ताः । परिचयादृढासंगा[10]द्गाढो निःशेषमुत्सारितगुर्वादिपारतन्त्र्यो रागस्योदयो यासु । परिचयाति[11]शयेन रञ्जनक्षमः प्रणय एव रागः । निसर्गमधुराः स्वभावमनोहराः । यास्वाशंसया मनोरथेन कल्पितास्वपि न पुनरनुभूतासु सत्सु बाह्यकारणस्य चक्षुरादेर्व्यापारं विषयग्राहित्वं रुणद्धीति तादृशोऽन्तःकरणस्य मनस आनन्देन सान्द्रो निबिडो लयस्तन्मयत्वं भवति । मुग्धदृशस्तस्याश्चेष्टादर्शनहसितालिङ्गनादिरूपा इत्यर्थः । मालतीप्राप्त्यै श्मशानसाधने प्रवृत्तस्य माधवस्याभिलाषोऽयम् । अत्र मालत्यालम्बनम् । तद्विलासानुस्मरणमुद्दीपनम् । आशंसानुभावः । तद्व्यङ्ग्योत्कण्ठा संचारिभाव इति ।

---

१ क. (प्र) °दृग्जनो या मा । २ क. (प्र) ग. °श्च सहसा को° । ३ क. (प्र) °ल्पनामवि° । ४ क. (प्र) °रादाप्नो° । ५ क. भेऽप्यभि° । ६क. °तुर्यथा । ७ क. °व विप्र° । ८ क. रक्तलक्षणो रा° । ९ क. ग. °हस्रैरप्य° । १० ग. °द्गाढं नि.° । ११ ग. °न व्यस्त° ।

**सा पत्युः प्रथमापराधसमये सख्योपदेशं विना**
**नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।**
**स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला**
**बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥ ३५ ॥**
**प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं**
**धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।**
**यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता**
**गन्तव्ये सति जीवितप्रियसुहृत्सार्थः किमु त्यज्यते ॥ ३६ ॥**

---

ईर्ष्याहेतुको यथा—

**सा पत्युः०।**

सख्येनोपदेशः सख्योपदेशः ।

भविष्यत्प्रवासहेतुको यथा—**प्रस्थानं०।**

---

**सा पत्युरिति।** काचित्सखीवृत्तान्तं कांचित्कथयति । सा बाला पत्युर्न तु प्रियस्य तत्त्वेऽपराधायोगात् । प्रथमत्वेनात्यन्तासह्यता । द्वितीयादौ चातुर्यसंभवाद्वा तदुक्तिः । अपराधोऽन्याङ्गनासंगमरूपः । सख्येन सौहार्देन करणेनोपदेशः । तं विना तदभावात् । सख्येति कर्तरि तृतीया तु न । षष्ठ्या बाधात् । उभयोः प्रयोगाभावेनोभयप्राप्त्यभावाच्च । सविभ्रममङ्गस्य भ्रुकुट्यादेर्वलना वक्रीकरणं याश्च वक्रोक्तयस्ताभिः संसूचनमर्थान्मानस्य प्रकाशनं नो जानातीत्यर्थः । तर्हि किं करोतीत्यत्राऽऽह स्वच्छैरिति । अश्रुभिरितीत्थंभूतलक्षणे तृतीया । अश्रुज्ञाप्यं केवलं रोदनमव करोतीत्यर्थः । रोदनं ह्यश्रुजनकीभूत आन्तरो व्यापारः । शब्दप्रयोगादिज्ञापकान्तरव्यवच्छेदायाश्रुभिरिति केवलमेवेत्यव्ययसमुदाय इति दीपिका । अञ्जनपत्रावलीगमनादश्रुकपोलयोः स्वच्छता । तेन रोदनाधिक्यम् । उत्तानशयनान्मूलेन गलनम् । लुठन्तो विप्रकीर्णा लोलाश्चञ्चला येऽलकास्तैरुपलक्षिता बालेत्यर्थः । अलकलोलता सूक्ष्मत्वादसूक्ष्मत्वाद्वा पर्यस्ते । परदर्शने लज्जया परितः क्षिप्ते इत्यर्थः । यत्त्वारुण्यान्नेत्र उत्पलत्वारोप इति । तन्न । उत्पलपदस्य रक्तत्वविशिष्टेऽशक्तेः । रक्तोत्पलं कोकनदमित्यादौ रक्तपदवैयर्थ्यापत्तेरिति दिक् । पतिरालम्बनम् । अपराध उद्दीपनम् । रोदनाद्यनुभावः । तद्व्यङ्ग्यासूयाव्यभिचारिभाव इति । अत्र पत्युरन्यासङ्गाद्बालाया ईर्ष्या ।

**प्रस्थानमिति** । हे जीवित प्रियतमे यातुं गन्तुं निश्चितचेतसि न तु गन्तुमुद्यते तव सुहृदः प्रियश्च सर्वे समं प्रस्थिताः । तथाच तवापि गन्तव्ये सति

---

१ क. ख. °थमेऽप° । २ ख. °सूचितम्° । ३ क. °लपालिग° । ४ ख. लोलोदकै° । ५ ख. सर्वैः समं प्रस्थितं ग° । ६ क. ग. (प्र) °मुत्सृज्य° । क. ७ ग. °त् । सवि° । ८ ग. °गमन° । ९ क. °श्च समं ।

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥ ३७ ॥

हास्यादीनां क्रमेणोदाहरणानि—

---

भूतप्रवासहेतुर्यथा मम—

कियदम्बु भवेद्वसुंधरायां कति वा पल्लवसंचया भवेयुः
कियती च समृद्धिरम्बुजानां परितापोऽपाह्रियेत यैः कृशाङ्ग्याः ॥

सख्याः प्रवासिनं नायकं प्रतीयमुक्तिः ।

भवत्तद्धेतुको यथा ममैव—

किं मूढे परिखिद्यसे कतिपयैरेव प्रिये वासरै-
रायाता वयमेहि धेहि परितः प्रास्थानिकं मङ्गलम् ।
एवंवादिनि वल्लभे दयितया निःश्वस्य पाणौ कृतो
मङ्गल्यः कलशो विलोचनपयोधाराभिरापूरितः ॥

शापहेतुको यथा—**त्वामालिख्य०** ।

आलिख्येत्यपीच्छाविषय एव ।

---

प्रियस्य नायकस्य सुहृदां च सार्थः किमु कुतस्त्यज्यते । अवश्यमेव प्रियसुहृद्वियोगे त्वयाऽपि गन्तव्यमेवेति सार्थत्यागेन विलम्बकरणं वृथेति भावः । गन्तव्य इत्यावश्यके तव्यः । के प्रस्थितास्तत्राऽऽह—प्रस्थानं वलयैरिति । कङ्कणैरित्यर्थः । वलयानां प्रस्थानं गमनवार्तया कार्श्येन वलयभ्रंशात् । प्रियसखैरिति लिङ्गवचनविपरिणामेन सर्वतृतीयान्तान्वयि । तत्त्वं च वलयानां प्रियसंनिधानान्वयव्यतिरेकानुविधायितया । अस्राणामपि हृदयस्थत्वेन प्रियसखत्वम् । एवं धृतिचिन्तयोरपि योज्यम् । अन्ये तु अस्रेऽत्यन्ताप्रियत्वप्रतिपादनाय प्रियसखत्वोक्तिः । तच्च जीवितनाशकदुःखोपस्थितावपि तदुद्गमात्किंचिद्दुःखोपशमेन जीवितरक्षकत्वाद्वेत्याहुः । सार्थशब्दश्च यद्यपि जन्तुसमूह एव प्रयुज्यमानो दृष्टस्तथाऽपि चैतन्यारोपात्संगमनीय इत्याहुः । अत्र प्रिय आलम्बनम् । तत्प्रयाणादि उद्दीपनम् । कार्श्यादयोऽनुभावाः । तद्व्यङ्ग्या चिन्ता व्यभिचारिभाव इति ।

**त्वामिति** । कुपितस्य लौहित्योचित्यात् । धातुरागैरिति सामान्यनिर्देशेऽपि विशेषपरताऽस्येति बोध्यम् । शिलायामिति । तदा भूमिशयनोत्कठिनचित्तत्वाच्चेत्याहुः । अर्थान्तरं

---

१ क. वृत्तप्र° । २ क. °वत्प्रवासहेतु° ।

विरहहेतुको यथा—**अन्यत्र व्रजतीति०** ।

एषा विरहोत्कण्ठितेत्यभिलापहेतुकादेर्भिद्यते ।

व्यङ्गव्रीडादिभिश्चेतोविकासो हास उच्यते ।

---

न्यस्यति क्रूर इति । तस्मिन्नपि । प्रतिकृतावपि । प्रकृतौ न सहत एव, प्रतिकृतावपि न सहत इत्यतिक्रूरत्वम् । क्रूरः परश्रे[1]योविघटने जागरूकः । नौ आवयोः । कृतान्तो दैवम् । श्लेषमूलकोऽयमभेदाध्यवसायः । अत्र यद्यपीच्छासमय एव स्मरणोद्रिक्तविरहजनिताश्रुणा दृष्टिलोपाल्लिखनमेवासंभावितं तथाऽपि लिखनमपीच्छाविषयतयैव नेयं न तु निष्पन्नतयेति । यद्यप्यत्र पद्ये प्रबन्धालोचनादुन्मादः प्रधानतया प्रतीयते तथाऽप्यापाततो न तथा प्रतीतिरिति रसोदाहरणमिदमिति दीपिकाकृतः । नायिकाऽऽलम्बनम् । तत्प्रणयकोप उद्दीपनम् । चरणपातेच्छाद्यनुभावः । कृतान्तेऽसूया व्यभिचारिणी । यद्यप्यत्र शठेन विधिनेतिवत्क्रूरपदेनासूया प्राधान्येन गम्यते तथाऽपि प्रतिकूलकर्तर्यसूयालम्बने तत्र शठत्वोक्तिवदिह प्रतिकूलकर्तृत्वेनोक्तस्त्रिगुक्रूरत्वाद्यनुक्तेर्नासूया प्राधान्येन व्यज्यते । दृष्टिरालुप्यते म इत्यन्तेन विप्रलम्भावगमेऽनन्तरं प्रतीयमानाया असूयायास्तदङ्गत्वमेवोचितम् । शठेनेत्यत्र तु यावत्तावत्पदाभ्यामेकवाक्यताभ्युपगमेन विशेषादित्याहुः । अत्र कुबेरशापस्तदनुचरस्य प्रियावियोगहेतुः ।

**अन्यत्रेति** । अन्यत्र प्रवासे नायिकान्तरगृहे वा । तत्कथाऽपि प्रवादोऽपि का कुत्सिता अलीका, कुतः पदार्थसत्तेति भावः । अनेन स्वतोऽन्यत्र प्रवृत्तिर्निवारिता । न च तादृङ्गित्रसंगत्या गच्छेत्तत्राऽऽह नाप्यस्येति । अस्य तादृगन्यत्र गमनशीलः सुहृन्मित्रमपि न । न च त्वय्यपि विरक्त इत्यत्राऽऽह यो मामिति । काकुरयम् । मां नेच्छति इति नापि तु इच्छत्येव । यः स सहसाऽऽगमनकारणसत्त्वेऽपि अनागमनकारणासत्त्वेऽपि नाऽऽगतः । अयं विवेकः । प्रक्रम आरम्भः । कारणसत्त्वे कार्यानुत्पादः कारणासत्त्वे तदुत्पादश्चेत्याशयः । इति एवं प्रकारेणाल्पेतराभिर्बह्वीभिः कल्पनाभिः कवलितं स्वान्तं यस्याः सा बाला निशान्तं गृहं तन्मध्ये । वृत्तेति । संजातपार्श्वपरिवर्तनसमूहा निद्रां निशि नाऽऽप्नोतीत्यर्थः । **विरहोत्कण्ठितेति** । प्रवासहेतुकविप्रलम्भवती च प्रोषितभर्तृकेत्युच्यते । तत्र च प्रवासशब्देन भिन्नदेशस्थत्वं विवक्षित[2]म् । एतेनेदमपि प्रवासहेतुकस्यैवोदाहरणमित्यपास्तम् । न च प्रवासो भिन्नदेशत्वाघटित एव निरुच्यताम् । भरतस्वीकृतषोडशनायिकाभेदासंगत्यापत्तेः । संगमानुत्पादकतावच्छेदकभेदेन भेदस्य दुरपह्नवत्वाच्चेत्यलम् । **चेतोविकास इति** । तज्जनकश्चित्तवृत्तिविशेष इति बोध्यम् ।

---

१ ग. °योधिघट° । २ क. °तम् । अत एव भरतस्वीकृतषोडशनायिकाभेदसंगतिः । चेतो° ।

आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
तारस्वरं प्रथितथूत्कमदात्प्रहारं
हाहा हतोऽहमिति रोदिति विष्णुशर्मा ॥ ३८ ॥

हा मातस्त्वरिताऽसि कुत्र किमिदं हा देवताः क्वाऽऽशिषो
धिक्प्राणान्पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ ।
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-
श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥ ३९ ॥

---

व्यङ्गं वैकृतम् । तेन हासप्रकृतिको हास्यः । यथा—**आकुञ्च्य पाणि०** ।
अत्र ताड्यमानो विष्णुशर्मा तत्क्रन्दनं च विभावौ । रसाश्रयस्यैतद्वाक्यमनुभावः । चापलादिर्व्यभिचारीति ।

इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक् ।

आदिग्रहणादनिष्टाप्तिः । शोकप्रकृतिकः करुणः । यथा—**हा मातः०** ।
अत्र विपन्ना काचिदीश्वरी संबोध्या, तदङ्गदाहश्च विभावौ ।

---

**आकुञ्च्येति** । वेश्या मम मूर्ध्नि प्रहारमदात् । हा हा हतोऽहमिति शब्दमुच्चार्य रोदितीत्यन्वयः । आकुञ्च्य संकुचितं कृत्वा अशुचिमुच्छिष्टाद्युपहतं पाणिं हस्तं मन्त्रपूतानामम्भसां पृषतैर्बिन्दुभिः प्रतिपदं आपो हि ष्ठादिमन्त्राणां प्रतिपदोच्चारणेन कृतसंस्कारे मूर्ध्नि मस्तके तारस्वनं दीर्घस्वनं प्रहितो विस्तारितो थूदिति शब्दो यत्र तदिति दानक्रियाविशेषणं प्रहारविशेषणं वा[2] । शर्मान्तं नामग्रहणं हासपरिपोषाय । अत्र विष्णुशर्मा आलम्बनम् । रोदनमुद्दीपनम् । स्मितातिहसितरुदितादयो द्रष्टृपूत्तममध्यमाधमेष्वनुभावाः । द्रष्टुरावेगचापल्यादयो व्यभिचारिणः । **रसाश्रयस्येति** । एतद्वाक्यमित्यनेनान्वेति । यद्यप्यत्र काव्ये रत्याद्याश्रय इव हासाश्रयो न निबद्धस्तथाऽपि द्रष्टृपुरुषविशेषस्य तस्याऽऽक्षेपो विभावादिसामर्थ्यादित्याहुः[3] । उक्तं च—

यस्य हासः स चेत्क्वापि साक्षान्नैव निबध्यते ।
तथाऽप्येष विभावादिसामर्थ्यादवसीयते ॥ इति ।

**चापलादिरिति** । अत्रापि रसाश्रयस्येत्यादिः ।

**चेतोवैक्लव्यमिति** । तज्जनकश्चित्तवृत्तिविशेष इति यावत् ।

**हा मातरिति** । विपन्नामीश्वरीं प्रति तत्परिजनविलापोऽयम् । पौराङ्गनानामित्यमेतत्प्रकारा गिर उच्चै रोदनाद्घर्घरस्वराश्च ताः श्रमाद्बाष्पबाहुल्येन मध्येऽन्तराले

---

१ क. °क्ने प्रद° । ग. °क्ने सुद° । २ क. °ति प्रहारविशेषणम् । श° । ३ क. °र्थ्यात् चाप° ।

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ ४० ॥

---

प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते।
तत्प्रकृतिको रौद्रः। यथा—कृतमनुमतं०।

---

रुद्धाश्च विच्छिन्नाश्चेति कर्मधारयोत्तरं करुणापदेन कर्मधारयः। करुणाः सस्नेहाः कातरा वा। नातो रसस्य शब्दवाच्यता दोष इति शङ्कनीयम्। चित्रस्थानपि। अचेतनानपि। शतधा शतखण्डाः। किंरूपा गिर इत्यपेक्षायां पूर्वार्धम्। हा मातः कुत्र गन्तव्ये त्वरिताऽसि। येनास्मानपि नापेक्षितवतीत्यर्थः। किमिदम्। आकस्मिकोत्पातरूपम्। विविधबलिदानपूजास्तुतिनतिभिरप्यरक्षणात्। हा इति धिगर्थेन देवताक्षेपः। आशिषः। अर्थाद्दानादितुष्टद्विजानाम्। क्व कुत्र गता इत्यर्थः। प्राणान्। आस्माकीनान्। धिक्त्वदभावेऽपि स्थिरत्वात्। तेऽङ्गेषु अवयवेषु। अशनिस्तत्तुल्यो हुतवहः। यज्ञादिषु तर्पितस्य[1] पातात्पूर्वकृतोपकारविस्मरणाच्चाशनितुल्यता। पतितः स्वयमेव। सचेतनैरर्पयितुमशक्यत्वात्[2]। अन्ये तु पतितोऽशनिरित्येकं वाक्यम्। वज्रपात एवायं यत्तव विपत्तिरित्यर्थः। हुतवहस्तेऽङ्ग इति द्वितीयम्। पतित इत्यपकृष्यत इत्याहुः। यद्यपि सर्व एवावयवा दग्धास्तथाऽपि दृशोर्लीलाविशेषस्य विश्वविलक्षणस्य पूर्वमनुभवाद्दग्धे दृशाविति विशेषतो दाहनिर्देशः। यद्वाऽशुभदर्शित्वादस्माकं दृशौ दग्धे इति लोकोक्त्येदम्। अत्र मृतनायिकाऽऽलम्बनम्। तद्दाहाद्युद्दीपनम्। रोदनमनुभावः। दैन्यग्लानिमूर्छादयः संचारिणः।

**तैक्ष्ण्यस्य प्रबोध इति**। तज्जनकश्चित्तवृत्तिविशेष इति यावत्।

**कृतमिति**। गुरोर्द्रोणस्य वधरूपं पातकमेव गुरु महत्पातकम्। अत एव दण्डनक्रमेण निर्दिशति कृतमित्यादि। तत्र कर्ता धृष्टद्युम्नः। अनुमन्तारः सात्यक्यादयः। अनिराकर्तारः सन्तो द्रष्टारोऽन्ये। मनुजा एव पशवः। धर्माधर्मापरिज्ञानात्। अत एव निर्मर्यादाः। उदायुधैरित्यनेन प्रतीकारशक्तत्वेऽपि तथाऽकरणादतिदण्ड्यताध्वननम्। नरकरिपुः कृष्णः। अनुमन्तुरप्यस्य क्रोधात्क्रमविस्मृत्या प्रागुक्तिः। असृग्रक्तम्। मेदो वसातैलम्। धातुविशेष इत्येके। अयमहम्। अनन्यसहायः। दिशाम्। लक्षणया तद्देवतानाम्। पशुभिरित्यनेन बलिदानयोग्यता। सार्धमिति संबन्धिनि साहित्यं न बलिकर्तरीति बोध्यम्। वीरादविवेचकत्वेन रौद्रस्य भेदः। अत्र पद्ये रौद्ररसव्यञ्जनक्षमा वृत्तिर्नास्तीति केवरशक्तिर्बोध्या।

---

१ ग. °र्थदाना°। २ क. °स्य पतनात्पू°। ३ क. °तः। यथ°। ४ ग. °ण्डक°।

क्षुद्राः संत्रासमेते विजहित हरयः क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥४१॥

---

कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते ।

तत्प्रकृतिको वीरः । स च त्रिधा—युद्धवीरो दानवीरो दयावीरश्च । तत्राऽऽद्यो यथा—

**क्षुद्राः संत्रास०** ।

अपरावूहनीयौ ।

---

अत्रापकारिणोऽर्जुनादय आलम्बनम् । पितृहन्तृत्वमस्त्राद्युद्यमनमुद्दीपनम् । प्रतिज्ञाऽनुभावः । अन्यनैरपेक्ष्यगम्यगर्वः संचारी ।

**कार्यारम्भेष्विति** । एतेन विभावादिसाम्ये वीररौद्रयोः कथं भेद इत्यपास्तम् । स्थायिभेदात् । विवेचकत्वतदभावाभ्यां भेदाच्च । क्षुद्रान्विहाय राममात्रान्वेषणेन विवेकस्य स्फुटत्वात् । रौद्र उदाहृते कर्त्तुरनिराकर्तुरनुमन्तुश्च क्रोधविषयत्वतारतम्यलब्धक्रमोपन्यासमपहाय व्युत्क्रमोपन्यासेन सर्वेषां वधोद्यमेन चाविवेकस्य स्फुटत्वात् । संरम्भस्त्वराजनकश्चित्तवृत्तिविशेषः । **त्रिधेति** । धर्मवीरेण चतुर्धेत्यन्ये । तत्र दानवीरो बल्यादिः । धर्मवीरो युधिष्ठिरः । दयावीरो जीमूतवाहनः । यो दयया पक्षिणे स्वदेहमर्पितवान् । केचित्तु निरुपपदवीरपदस्य युद्धवीर एव प्रयोगः । अतो नैतौ वीररसौ । अन्यथा पलायनवीरादिभेदेनाऽऽनन्त्यं स्यात् । दानाद्युत्साहस्तु भाव एवेत्याहुः ।

**क्षुद्रा इति** । एते क्षुद्राः । जात्या पराक्रमाभावेण वा इति स्वज्ञानोल्लेखः । हे हरयः संत्रासं भयं विजहित त्यजतेत्यन्वयः । हरय इति हनूमदादय इत्यर्थकम् । भिन्नौ शक्रारूढस्येभस्य कुम्भौ यैस्ते । सायका इति दन्त्यपाठे स्यन्ति प्राणांस्ते सायकाः । षोऽन्तकर्मणि । ण्वुल् । तालव्यादिपाठे तु शाययन्ति दीर्घनिद्रां प्रापयन्तीति व्याख्येयम् । ते रामाद्युद्देशेन पात्यमाना अपि दैववशाद्युष्मद्देहेषु पतन्तो लज्जां दधति । क्षुद्रकार्यकरणाल्लज्जिता इव मां नाऽऽनन्दयन्तीत्यर्थः । सर्वथा मद्बाणानुद्देश्यत्वाद्भयं त्यजतेत्यर्थः । लक्ष्मणं प्रत्याह—सौमित्र इति । मातृसंबन्धोल्लेखान्निर्वीर्यत्वम् । लक्ष्मणेत्यन्ताप्रयोजकत्वप्रतिपादनायैकवचनम् । रुषां पात्रं विषयः । मेघनादः । तत्त्वेन प्रसिद्धः । इन्द्रजिदिति नोक्तम् । तत्त्वस्याप्यनुत्कर्षकत्वात् । किंचित् । ईषत् । भ्रूभङ्गलीलया नियमितो बद्धः । यत्तु राममनुलक्षीकृत्याहमेषयामीत्यन्वयः । अन्यथाऽन्वेषणस्य पलायन एव संभवात् । रामस्य वीरचरितस्य प्रभो-

---

१ क. ख. ग. °रयो भिन्नश° । २ ग. °ष्मद्गात्रेषु । ३ क. ग. निःपत° । ४ क. स त्रि° । ५ क. °श्च आद्यो° । ६ ग. भिन्नाः श° । ७ ग. कुम्भा यै° ।

**ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः**
**पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।**
**दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा**
**पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥४२॥**

---

रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम् ।

तत्प्रकृतिको भयानकः । यथा—**ग्रीवाभङ्गाभिरामं०** ।

जुगुप्सा गर्हणार्थानां दोषमाहात्म्यदर्शनात् ।

---

र्हनूमताऽपकर्षवर्णनानापत्तेरिति । तन्न । हनुमता प्रतिपक्षवाक्यानुवादेन तद्वचोत्कथनस्य युक्तत्वात् । किंचिद्भ्रूभङ्गलीलानियमितजलधिरपि मां दृष्ट्वा पलायित इति । अत्र राम आलम्बनम् । तत्समुद्रबन्धनमुद्दीपनम् । नीचेषूपेक्षा रामे प्रतिस्पर्धा चानुभावौ । ऐरावतकुम्भस्थलचूर्णनस्मृतिर्लज्जां दधतीति गम्यगर्वश्च संचारिणौ ।

**चित्तवैक्लव्यदम्** । तज्जनकश्चित्तवृत्तिविशेष इत्यर्थः ।

**ग्रीवेति** । पश्येत्यस्य वाक्यार्थः कर्म । उदग्रप्लुतत्वात् । उत्कटोत्फालत्वात् । वियति । आकाशे । बहुतरमधिकम् । उर्व्यां भूमौ स्तोकमल्पं प्रयाति । अयं पुरो दृश्यमानो मृगः कर्ता । कीदृशो मृगः । अनु पश्चात्पतति गच्छति स्यन्दने रथे ग्रीवावक्रीभावेनाभिरामं यथा स्यात्तथा मुहुः वारंवारं बद्धदृष्टिर्दत्तदृष्टिः । गम्यदेशवैषम्यावैषम्यज्ञानस्य परिवृत्त्या रथदर्शने विच्छेदाद्भयाच्च वारंवारं तथा दर्शनम् । भूयसा स्थूलेन । पश्चार्धेनापरार्धेन । अपरस्यार्धं इति पश्चभावः । पूर्वकायं प्रविष्टः प्रवेष्टुमारब्धः । आदिकर्मणि क्त इति कश्चित् । अन्ये तु भूत एव क्त उचितो भयातिशयायेत्याहुः । स्थूलं कृशे प्रवेश्य गमनाद्भयातिशयः । श्रमविकासितमुखाद्भ्रष्टैरर्धास्वादितैर्दर्भैर्व्याप्तमार्गः । वियति राजस्वाम्याभावाद्बहुतरं भूमौ तत्सत्त्वादल्पमिति बोध्यम् । अत्र रथानुपातादेव वा भयं स्थायिभावो न शरपतनादिति न तस्य शब्दवाच्यता दोषः । पश्चाद्गच्छत्स्यन्दनो राजा वाऽऽलम्बनम् । शरपतनभयमनुसरणं चोद्दीपनम् । ग्रीवाभङ्गपलायनादयोऽनुभावाः । शङ्कात्रासश्रमादयो व्यभिचारिणः ।

**दोषमाहात्म्यम्** । दोषाधिक्यम् । गर्हणा । नासावदनसंकोचादिजनकश्चित्तवृत्तिविशेषः ।

---

१ क. ख. ग. °ने बद्धदृ° । २ °म् । शष्पैर° । ३ ख. °प्लुतित्वा° । ४ क. °ष्टः । भूते क्तः । तेन स्थूलं । ५ क. ग. °पाद्वा भयमेव स्था° ।

**उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-**
**न्यंसस्फिक्पृष्ठपिण्ड[2]याद्यवयवसुलभान्युग्र[3]पूतीनि जग्ध्वा ।**
**आ[4]र्तः पर्यस्तनेत्रः[5] प्रकटितदशनः प्रेतरङ्कः करङ्का-**
**दङ्कस्थादस्थि[6]संस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ ४३ ॥**
**चित्रं महानेष[7] बतावतारः क्व कान्तिरेषाऽभिनवैव भङ्गिः ।**
**लोकोत्तरं धैर्यमहो प्रभावः काऽप्याकृतिर्नूतन एष सर्गः ॥ ४४ ॥**

---

तत्प्रकृतिको बीभत्सः । यथा—**उत्कृत्योत्कृत्य कृत्तिं**० ।
स्थपुटं निम्नं विषमम् ।

विस्मयश्चित्तविस्तारो वस्तुमाहात्म्यदर्शनात् ।

तत्कृतिकोऽद्भुतः । यथा—**चित्रं महानेष**०

---

**उत्कृत्येति** । मालतीमाधवे श्मशानवर्णनमेतत् । प्रेतरङ्कः प्रेतकृपणः प्रेतदरिद्रो वा । प्रथममादौ कृत्तिं चर्म । उत्कृत्योत्कृत्येति वीप्सया यावत्कृत्तिसत्त्वमुत्कर्तनं सूचितम् । अथानन्तरं पृथुना महतोत्सेधेनोच्छूनतया, भूयांसि बहुलान्यंसौ स्कन्धौ स्फिगूरुमूलं कटिसंधिभागश्च । पृष्ठपिण्डी जङ्घोर्ध्वभागः । पिण्ड इति पाठेऽपि तदाकारत्वात्स एव । एव[8]माद्यवयवेषु सुलभानि उग्रपूतीनि उत्कटदुर्गन्धानि मांसानि जग्ध्वा अङ्कस्थात्करङ्कात्प्रेतशरीरादस्थिशेषात्तन्मस्तकाद्वाऽस्थिसंबद्धम् । स्थपुटं निम्नोन्नतविषमभागः । तत्र स्थितमपि क्रव्यमपक्वं मांसम् । अत एव रङ्कता । अव्यग्रं शनैर्यथा भवति तथाऽत्तीत्यन्वयः । भोजनसमाप्तिभयाच्छनैरि[10]ति । तेन क्त्वाप्रत्ययप्रथमाथशब्दानां नासंगतिः । कीदृशः प्रेतरङ्कः । आर्तः क्षुत्पीडितः परितः क्षिप्तनेत्रः बलवत्पिशाचान्तरापहरणशङ्कया । दै[11]न्यात्स्थपुटगतमांसग्रहणाय च प्रकटितदन्तः । आत्तस्नाय्वन्त्रनेत्र इति पा[12]ठे स्नाय्वन्त्रादीनि गृहीतानि येनेत्यर्थ इत्येके । आत्तानि प्रकटानि स्नाय्वादीनि यस्येत्यर्थः । पिशाचत्वेन निःसारत्वा[13]दित्यन्ये । अत्र शव आलम्बनम् । तत्कर्तनं मांसाद[14]नं चोद्दीपनम् । तद्द्रष्टुर्नासाकुञ्चनवदनविधूननविवर्तननिष्ठीवनादयोऽनुभावाः । उद्वेगादिः संचारी । यद्वा प्रेतरङ्क आलम्बनम् ।

**चित्तविस्तारः** । तज्जनकश्चित्तवृत्तिविशेषः ।

**चित्रमिति** । इयं वामनमुद्दिश्य बलेरुक्तिः । अत्र चित्रादिशब्दाः समभिव्याहृतपदार्थस्य तदवच्छेदकस्य वा लोकोत्तरमहिमत्वप्रतिपादकाः । न तु विस्मयार्थाः । तस्यात्र

---

१ ख. °थूच्छोफभू° । २ क. ख. ग. °पिण्डाद्य° । ३ क. °प्रगन्धीनि । ४ क. ख. आत्तस्नाय्वन्त्रने° । ५ क °त्रः पृथुतरजठरः प्रे° । ६ क. °स्थिशेषं स्थ° । ७ ख. °ष तवाव° । ८ ख. एव स° । ९ क षमं वा । १० क. °ति । कीदृ° ११ ग. दैन्यात्स्थ° । १२ क. पाठ आत्ता° । १३ क. °त्वात् । अत्र । १४ क. ग. °दनमुद्दी° ।

एषां स्थायिभावानाह—

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।**

**जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥ ३० ॥**

स्पष्टम् ।

---

एषां भेदो वचनमात्रान्न सिध्यतीत्येषां विचित्रानुक्तरूपान्स्थायिभावानाह—**रति-हासश्च०** ।

तत्र—

विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः ।

आनन्दाङ्कुरकन्दोऽसौ भावः स्थायिपदास्पदम् ॥

इति पूर्वाचार्योक्तं सामान्यलक्षणम् । अवस्थितिश्चैषां स्रक्सूत्रन्यायेन, फेनबुद्बुदन्यायेन तु व्यभिचारिणामित्यनयोर्भेदः । विशेषलक्षणान्युक्तानि । अष्टावेव चेत्स्थायिनोऽतो न्यूनाधिकत्वशङ्का[2] रसे निरस्तेति ।

---

स्थायितया वाच्यतादोषापत्तेः । अवतारत्वेन सदाचारप्रवर्तकत्वम् । बतेति हर्षे । एषा दृश्यमाना कान्तिः क । न क्वापीति भङ्ग्यन्तरेण लोकोत्तरेत्युक्तम् । भङ्गिर्गमनोपवेशन-दर्शनादिगतप्रकारविशेषः । अभिनैवव । एवकारेण वैलक्षण्यं व्यङ्ग्यम् । धैर्यं विरोधिसह-स्थैर्य्यचलचित्तत्वम् । अहो अलौकिकः प्रभावः सामर्थ्यम् । काऽपि अनिर्वाच्या । आकृतिरवयवसंस्थानम् । एष सर्गः निर्माणं नूतनः प्रसिद्धब्रह्मसर्गविलक्षणः । अत्र वामन आलम्बनम् । कान्तिगुणातिशयादि[3] उद्दीपनम् । स्तवादयोऽनुभावाः । मतिधृतिहर्षादयो व्यभिचारिणः ।

**वचनमात्रादिति** । किं तु स्थायिभावव्यभिचारिभाववैलक्षण्यादित्यर्थः । **रति-हास इति** । एते च चित्तवृत्तिविशेषवासनारूपा इति बोध्यम् । **स्रक्सूत्रेति** । स्रजि सूत्रेत्यर्थः । फेनश्च बुद्बुदश्चेति द्वंद्वः । **न्यूनाधिकत्वशङ्केति** । न्यूनाधिकसंख्याविष-यिण्याशङ्केत्यर्थः ।

---

१ क. 'यश्चाद्यो स्था' । २ क. 'धिक्यश' । ३ ग. कीर्तिगु' । ४ क. दयः 'संचा' ।

व्यभिचारिणो ब्रूते—

निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ ३१ ॥

---

यद्यपि विभावानुभावभेदमप्रतिपाद्य व्यञ्जकत्वपुरस्कारेण व्यभिचारिभेदोपदर्शने न कश्चिन्न्यायस्तथाऽपि व्यङ्ग्यविवेचनाय निर्वेदस्य स्थायित्वव्यवस्थापनाय च व्यभिचारिभेदानाह—**निर्वेदग्लानि०** ।

नामत एव समाख्याता न तु लक्षणतः । लक्षणानामन्यैरेव सप्रपञ्चं दर्शितत्वात् । तद्यथा—

तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् ।
तत्र चिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वासदीनताः ॥
चित्तस्य खेदो निर्वेदस्तत्त्वज्ञानादयादिभिः । इति केचित् ।
रत्यायासकलाभ्यासाद्ग्लानिर्निष्प्राणतेव या ।
तस्यां वैवर्ण्यकम्पानुत्साहकार्श्यादयो मताः ॥
अनर्थप्रतिभा शङ्का परक्रौर्यात्स्वदुर्नयात् ।
वैवर्ण्यकम्पवैमुख्यपार्श्वालोकास्यशोषकृत् ॥
परोत्कर्षाक्षमासूया गर्वदौर्जन्यमन्युजा ।
दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादयः ॥
संमोहानन्दसंभेदः स्खलदङ्गवचोगतिः ।
मधुपानादिजो ज्ञेयो मदो विविधभावकृत् ॥
उत्तमसत्त्वः प्रहसति गायति तद्वच्च मध्यमप्रकृतिः ।
परुषवचनाभिधायी शेते रोदित्यधमसत्त्वः ॥
श्रमः खेदोऽध्वरत्यादेः श्वासनिद्राभरादिकृत् ।
श्रमग्लान्योर्विभेदं तु चक्रे कारणकार्यता ॥
श्रमस्यातिशयावस्थामथवा ग्लानिमूचिरे ।
बलस्यापचयो ग्लानिराधिव्याधिप्रकर्षभूः ॥ इत्येके ।

---

**निर्वेदग्लानीति** । एतेऽपि चित्तवृत्तिविशेषा एवेति बोध्यम् । **तत्त्वज्ञानम्** । नित्यानित्यवस्तुविवेकः । आदिना दैन्यसंग्रहः । तत्र तत्त्वज्ञानजन्यः शान्तः स्थायी ।

---

१ ग. मोहो धृतिः स्मृतिः । २ क. °ङ्ग्यभाववि° । ३ क. °वैस्वर्यपा° ।

**व्रीडा चपलता हर्ष आवेगो जडता तथा ।**

---

आलस्यं श्रमगर्भादेर्जैह्म्यं जृम्भाक्रियादिकृत् ।[1]
दौर्गत्यादेरनोजः स्याद्दैन्यं कार्श्यामृजादिकृत् ॥
ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत् ।
प्रयत्नपूर्विकान्वेष्यस्मृतिश्चिन्तेति केचन ॥[2]
मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः ।[3]
घूर्णनाज्ञानपतनभ्रमणादर्शनादिकृत् ॥[4]
सदृशज्ञानचिन्ताद्यैः संस्काराज्जायते स्मृतिः ।
भ्रूसमुल्लासकरजवादनादिस्तदुद्भवः ॥[5]
अभीष्टार्थस्य संप्राप्तौ स्पृहापर्याप्तता धृतिः ।
सौहित्यवदनोल्लाससहासप्रतिभादिकृत् ॥
दुराचारादिभिर्व्रीडा धाष्ट्र्याभावोऽभिधीयते ।
वक्त्राङ्गुलीयकस्पर्शभूरेखाधोमुखादिकृत् ॥
चेतोनिमीलनं व्रीडा न्यङ्गरागस्तवादिभिः । इति केचित् ।
मात्सर्यद्वेषरागादेश्चापलं त्वनवस्थितिः ॥
आत्मप्रकाशनपरा चेष्टा चपलतोच्यते ॥ इति केचित् ।
तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ।
मनःप्रसादो लाभादेर्हर्षोऽश्रुस्वेदगद्गदाः ॥
आवेगो राजविद्रावरत्यादेः संभ्रमो मतः ।
तत्र विस्मरणं स्तम्भः स्वेदः कम्पः स्खलद्गतिः ।
अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ॥
अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र ।
क्रियास्वपाटवं जाड्यं चिन्तोत्कण्ठाभयादिभिः ॥ इत्येके ।[6]

---

स्थिरत्वात् । इतरो व्यभिचारीति बोध्यम् । **जैह्म्यम्** । कार्येष्वनादरः । **अमृजा** । मालिन्यम् । **प्रयत्नेति** । स्मृतिस्तज्जनको ध्यानाख्यश्चित्तवृत्तिविशेष इत्यर्थः । **स्पृहाऽपर्याप्तता** । संतोषः—**धाष्ट्र्याभावः** । चेतसः संकोचः । रागादव्रीडा यथा संभोगविशेषे । **अनवस्थितिः** । अविमृश्यकारिता । **आत्मप्रकाशनम्** । आप्तगुणप्रकाशनम् । **लाभा-**

---

१ क. °जैह्म्यजृम्भासितादि° । २ क. °पूर्वकार्येषु स्मृ° । ३ क. °खरोगानु° । ४ क. °र्णताज्ञ° । ५ क. °द्भवैः । अ° । ६ क °इत्येके । ७ क. °ता । इच्छानिवृत्तिः । धा° ।

**गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥ ३२ ॥**
**सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।**

गर्वोऽभिजनलावण्यधनैश्वर्यादिभिर्मदः ।
सविलासाङ्गवीक्षाऽविनयावज्ञादिकृत्तु सः ॥
प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्त्वसंक्षयः ।
निःश्वासोच्छ्वासंसंतापसहायान्वेषणादिकृत् ॥
कालाक्षमत्वमौत्सुक्यं रम्येच्छारतिसंभ्रमैः ।
तत्रोच्छ्वासत्वराश्वासहृत्तापस्वेदविभ्रमाः ॥
निद्रा व्यापारवैमुख्यमिन्द्रियाणां श्रमादिभिः ।
तत्र जृम्भाङ्गभङ्गाक्षिमीलनोच्छ्वसनादयः ॥
आधिश्चात्यन्तदुःखादेरपस्मारस्तथाविधः ।
मनःक्षेपस्त्वपस्मारो ग्रहावेशादिसंभवः ॥ इति केचित् ।
विरोधिभावात्पूर्वस्य प्रस्मृतिर्विस्मृतिर्भवेत् ।
ध्यानजाड्यप्रमोहाधिपरितापादिकृत्तु सा ॥
स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः ।
कोपावेगभयग्लानिसुखदुःखादिकारकः ॥
निद्रापगमहेतुभ्यः प्रबोधश्चेतनागमः ।
जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत् ॥
अधिक्षेपापमानादेरमर्षोऽभिनिविष्टता ।
तत्र स्वेदशिरःकम्पनेत्ररागाङ्गविक्रियाः ॥
लज्जाद्यैर्विक्रियागोपोऽवहित्थास्मन्यविक्रिया ।
व्यापारान्तरसक्तित्ववदनानमनादयः ॥
दुष्टेऽपराधदौर्मुख्यचौर्यैश्चण्डत्वमुग्रता ।
अत्र स्वेदशिरःकम्पताडनातर्जनादयः ॥

**देरिति** । आदिना स्तवः—**सत्त्वसंक्षयः** । उत्साहनाशः । आधेश्चेति पाठः । मनःक्षेप इति अस्य व्याधित्वेन प्राप्तावपि पुनरुपादानं बीभत्सभयानकयोरस्यैव नियमाय । इतरो व्याधिस्तु विप्रलम्भादावपि । क्वचित्तु अपस्मारस्थाने विस्मृतिः पठिता । तां व्याचष्टे—**विरोधिभावादिति** । **प्रस्मृतिः** । प्रगता स्मृतिः । **अभिनिविष्टता** ।

१ क. निन्दाप° । ख. निद्राविस्मृतिरेव च । २ क. स्वप्नं प्रबो° । ख. °सुप्तं विबो° । ३ क. °सकृत्तापसहायान्वेषणादयः । ४ क. °सज्वरा° । ५ क. दुष्टे° ।

**मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ ३३ ॥**

**त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ॥**

**त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ ३४ ॥**

---

भ्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मतिः ।
स्मेरता धृतिसंतोषौ बहुमानस्तथाऽऽत्मनि ॥
व्याधयः संनिपाताद्यास्तेषामन्यत्र विस्तरः ।
प्रस्वेदकम्पतापाद्या अनुभावतयोदिताः ॥
उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविप्लवः ।
तस्मिन्नस्थानरुदितगीतहासासितादयः ॥
जीवस्योद्गमनारम्भो मरणं परिकीर्तितम् ।
संमोहेन्द्रियसंग्लानिगात्रविक्षेपणादिकृत् ॥

अत्र च मरणस्थाने केचित्करुणां पठन्ति । सा च परदुःखप्रहाणेच्छारूपत्वाच्चित्तवैक्लव्यमयाच्छोकान्नातिरिच्यत इति तद्गणनमत्रानुचितमित्येके । अन्ये तु तस्या दयावीरस्थायित्वमित्यत्र तद्गणनानौचित्यमित्याहुः । न चान्यत्र संचारित्वाद्गणनं फलवदिति वाच्यम् । स्थाय्यन्तरसाधारणत्वात् । तेऽपि हि क्वचन संचारिणः । तदुक्तम्—

शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः ।
शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः ॥
इत्याद्यन्यत्समुन्नेयं स्वयं भावितबुद्धिभिः । इति ।
गर्जितादेर्मनःक्षोभस्त्रासोऽत्रोत्कम्पितादयः ।
ऊहो वितर्कः संदेहाद्भ्रूशिरोऽङ्गुलिनर्तकः ॥[3]
ऊहो वितर्क इत्युक्तः पदार्थेषु यथामति । इति केचित् ।

---

स्थिरः क्रोधः । अवहित्थं तु लज्जाद्यैर्हर्षाद्याकारगोपनमिति पाठः । **चित्तविप्लवः** । चित्तविभ्रमः । **हासासितेति** । आसितमवस्थानम् । **जीवस्योद्गमनारम्भ इति** । मुख्यमरणस्याऽऽलम्बनोच्छेदेन भावत्वायोगादिति भावः । मूर्छाऽत्र मरणमित्यन्ये । संदेहे भ्रूशिर इति पाठः ।

तत्र १ संभोगशृङ्गार आलस्योग्रताजुगुप्सावर्ज्याः सर्वे व्यभिचारिणो बोध्याः । विप्रलम्भे तु आलस्यग्लानिनिर्वेदश्रमशङ्कानिद्रौत्सुक्यापस्मारसुप्तविबोधोन्मादजाड्यासूयाः । २ हास्येऽवहित्थालस्यनिद्राप्रबोधासूयाः । ३ करुणे मोहनिर्वेददैन्यजाड्यविषादभ्रमापस्मारोन्मा-

---

१ क. °कान्न भिद्यते । २ क. °स्त्रास उत्क° । ३ क. °देहो भ्रूशि° । ° । ४ ग. °धः । चित्त° । ५ क. °ठः । अमङ्गले° ।

निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपादानं व्यभिचारित्वेऽपि स्थायिताभिधानार्थम्। तेन

निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः।

यथा—

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित्पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः॥ ४५॥

---

निर्वेदस्यामङ्गलप्रायस्य पश्चान्निर्देश्यत्वेऽपि प्राङ्निर्देशो मुख्यत्वप्रकाशनेन स्थायित्वप्रतिपादनाय। तेन—निर्वेद०।

तत्प्रकृतिकत्वात्। यथा—अहौ वा हारे वा०।

---

दव्याध्यालस्यस्मृतिवेपथुस्तम्भस्वरभेदाश्रूणि। ४ रौद्रे स्मृतिस्वेदावेगामर्षरोमाञ्चचञ्चलतोग्रत्वस्वरभेदकम्पाः। ५ वीरे धृतिमतिगर्वावेगामर्षहर्षोग्रतारोमाञ्चाः। ६ भये स्तम्भस्वेदगद्गदतारोमाञ्चवैवर्ण्यशङ्कामोहवेगदैन्यचापलत्रासापस्मारप्रलापमूर्छाः। ७ बीभत्सेऽपस्मारमतिव्याधिमोहावेगगर्ववैवर्ण्यानि। ८ अद्भुते स्तम्भरोमाञ्चस्वेदगद्गदनाश्रुविभ्रमाः। एवं स्थायिनोऽपि व्यभिचरन्ति। हासः शृङ्गारे वीरे च। रतिर्हास्यकरुणशान्तेषु क्रोधो वीरे। भयं शोकशृङ्गारयोः। जुगुप्सा भयानके शान्ते च। विस्मयः सर्वरसेषु। उत्साहो रौद्रहासयोरिति।

**अमङ्गलेति**। सर्वत्र हेयत्वबुद्धिरूपतया वैराग्यप्रवर्तिततया चामङ्गलत्वम्। ईर्ष्याजन्यस्यातत्त्वात्प्रायेति। रसान्तराननुगुणत्वममङ्गलत्वम्। तेषामीहामयानामनीहामयेनानेन विरोधादित्यन्ये। **स्थायित्वेति**। तदुक्तम्।

स्थायी स्याद्विषये द्वेषस्तत्त्वज्ञानाद्भवेद्यदि।
इष्टानिष्टवियोगासक्तिकृतस्तु व्यभिचार्यसाविति॥

**अहाविति**। अहिः सर्पः। हारो मुक्ताहारः। दृषत् शिला। लोष्टं मृत्खण्डः। स्त्रैणं स्त्रीसमूहः। अहिहारादयोः समा, उपादेयत्वानुपादेयत्वाभानेनोदासीना वैषम्यरहिता दृक् दृष्टिर्यस्य। जगतो मिथ्यात्वेन रागद्वेषयोरभावात्। अहिरिव हारोऽपि हेयः। न तूपादेय

---

१ ग. °यित्वाभि°। २ क. ख. °भावाख्यः शा°। ग °भावोत्र शा°। ३ क. ख. ग. यान्तु। ४ क. ग. °त्पुण्यार°। ५ ख. °ग्वग°। ६ ग. उत्साहविस्मयौ। ७ ग. °नेनावि°।

स्त्रैणं स्त्रीसमूहः । वाशब्दाभ्यां द्वयोर्द्वयोस्तुल्यता द्योत्यते । अत्र वदन्ति—शान्तो नाम रसस्तावदनुभवसिद्धतया दुरपह्नवः । न चैतस्य स्थायी निर्वेदो युज्यते । तस्य विषयेष्वलंप्रत्ययरूपत्वादात्मावमाननरूपत्वाद्वा । शान्तेश्च निखिलविषयपरिहारजनितात्ममात्रविश्रमानन्दप्रादुर्भावमयत्वादनुभवात् । तदुक्तम्—

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ इत्यादि ।

अत एव 'सर्वचित्तवृत्तिविरामोऽस्य स्थायी' इति निरस्तम् । अभावस्य स्थायित्वायोगात् । तस्माच्छमोऽस्य स्थायी । निर्वेदादयस्तु व्यभिचारिणः । स च

शमो निरीहावस्थायामानन्दः स्वात्मविश्रमात् । इति ।

---

इति । शान्तस्योपादेयकोटेरभावादित्यन्ये । क्वचिदमेध्ये मेध्ये वा । प्रलपतः प्रयोजनाभावाच्छिवशब्दोच्चारणस्यापि प्रलापरूपत्वेन तत्राप्युद्विग्नत्वद्योतनम् । दिवसा यान्त्वित्यर्थः । यान्तीति पाठे जीवन्मुक्तेन विद्यमानायाः स्वावस्थायाः परामर्शो बोध्यः । वस्तुतो यान्त्विति पाठोऽयुक्त एव । तादृशदिनगमने रतेः प्रतीयमानत्वेन तत्प्रधानभावध्वनित्वापत्तेः । अत्र क्वचिदित्यनेनामेध्ये मेध्ये वेत्यर्थकेन शान्तपरिपोषसंभवे पुण्यारण्य इत्यधिकं प्रतिकूलं चेत्याहुः । अत्र मिथ्यात्वेन परिभाव्यमानं जगदालम्बनम् । तपोवनाद्युद्दीपनम् । अहिहाराद्योः समदर्शनमनुभावः । मतिधृतिहर्षाः संचारिणः ।

**द्वयोस्तुल्यतेति** । अनुपादेयत्वेन सा बोध्या । **विषयेष्विति** । स्वस्मिन्स्वातिरिक्ते च । **अलंप्रत्ययः** । हेयत्वप्रत्ययः । **आत्मावमाननम्** । देहाद्यवच्छिन्न आत्मनि तुच्छत्वबुद्धिः । तथा च सुखरूपत्वाभावान्न तत्स्थायिकस्य रसत्वमिति भावः । शोकवत्समाधानादिदं चिन्त्यम् । **निरीहा** । निस्तृष्णता । स्वात्मेति स्वात्मविश्रमजं सुखमित्यर्थः । वस्तुतो रत्यादिमुपजीव्य हर्षादेरिव तत्त्वज्ञानजनिर्वेदमुपजीव्य शमादिप्रवृत्तेः स एव स्थायी न शमः । न च क्वचिच्छम इति मुन्युक्तिविरोधः । शम्यते यत इति व्युत्पत्त्या तस्य निर्वेदपरत्वात् । तृष्णायाः क्षयो यत इति व्युत्पत्त्या तृष्णाक्षयोऽपि निर्वेद एव । अत एवैकोनपञ्चाशद्भावा इति मुन्युक्तिः संगच्छते । अष्टौ स्थायिनोऽष्टौ सात्त्विकास्त्रयस्त्रिंशद्व्यभिचारिण इत्येवं गणनया हि तत्त्वम् । शमस्यापि भावत्वे त्वाधिक्यापत्तिरित्याहुः । यत्तु मिथ्यात्वेनागृहीतमिथ्यावासनास्थायिकः सांसारिकभोगजनकधर्माधर्मालम्बनविभावकः पुत्रकलत्रादावुपादेयत्वबुद्ध्यनुभावकः प्रागुक्ता-

---

१ क. °विश्रामा° । २ क. °त् । यदु° । ३ क. तथाच शमो° । ४ क. °म् । यान्तीति पाठः । जीव° । ५ क °र्शोऽत्र । यान्त्वितिपाठस्त्वयुक्त । ६ ग. °नेन शा° । ७ क. °णः । विषये° । ८ क. °हुः । स्थायि° ।

**रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः ॥ ३५ ॥**
**भावः प्रोक्तः ।**

**आदिशब्दान्मुनिगुरुनृपपुत्रादिविषया । कान्ताविषया तु व्यक्ता शृङ्गारः । उदाहरणम्—**

**कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम् ।**
**अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते ॥४६॥**

---

रसवद्भावोऽप्यलक्ष्यक्रमेषु । पठितः । स किंरूपः । रत्यादीनां रसरूपत्वात् । व्यभिचारिणां रसाङ्गतानियमेन प्राधान्याभावात् । सात्त्विकानामव्यङ्ग्यत्वादित्यत आह—**रतिर्देवादि०** ।

तथा चार्थः। रतिरिति स्थायिभावोपलक्षणम् । देवादिविषयेत्यप्यप्राप्तरसावस्थोपलक्षणम् । तेन देवादिविषया सर्वा कान्तादिविषयाऽप्यपुष्टा रतिर्हासादयश्चाप्राप्तरसावस्थाः प्राधान्येन व्यञ्जितो व्यभिचारी च भाव इत्यवधातव्यम् । यदुक्तम्—

रत्यादिश्चेन्निरङ्गः स्याद्देवादिविषयोऽथवा ।
अन्याङ्गभावभाग्वा स्यान्न तदा स्थायिशब्दभाक् ॥ इति ।

तदेतदाह वृत्तिकारः—कान्तादिविषया तु व्यक्ता शृङ्गारः ।

तत्र देवविषया रतिर्यथा—**कण्ठकोणेति**

---

ष्टरसस्थायिव्यभिचारकः संसाररसोऽप्यधिको दुरपह्नव इति । तन्न । पूर्वोक्तमुनिवचनविरोधात् । तत्प्रधानकाव्यस्य स्वभावोक्त्यलंकारान्तर्भूतत्वाद्धाऽकाव्यस्वाचेत्याहुः ।

**तथाचार्थ इति** । सूत्रस्थस्तथाशब्दश्चार्थ इत्यर्थः । **स्थायिभावोपलक्षणमिति** । देवादिविषयेत्यप्यप्राप्तरसावस्थोपलक्षणं बोध्यम् । **व्यक्तेति** । प्राधान्येन विभावादिभिः पुष्टेत्यर्थः । तेनाङ्गभूताया अनुभावादिभिरपुष्टायाश्च न रसत्वम् । किं तु भावत्वमेवेति भावः । यत्र पुनरनुभावव्यभिचारिणौ न निबद्धौ तत्राऽऽक्षेप इत्युक्तं प्राक् ।

**कण्ठेति** । कण्ठस्य कोण एकदेशः । विनिविष्टम् । गलितभेदप्रतीति यथा तथा संबद्धं कालकूटमपि विषमपि मे मम महामृतम् । उपात्तमपि मूर्ध्ना धृतमप्यमृतं चन्द्रकलारूपं यदि भवद्वपुषो भेदेन वर्ततेऽवभासते तदा मह्यं न रोचते । अन्यस्य यथा तथा भवतु मम तु न रुचिविषय इत्यर्थः । महादेव आलम्बनम् । ईशपदप्रतिपाद्याव्याहतैश्वर्यमुद्दीपनम् । स्तवोऽनुभावः । धृतिमाहात्म्यस्मरणादयः संचारिणः । अत्रैतैरनुमितस्तावकर्तीनां सामाजिकानां तैरेव विभावादिभिर्व्यञ्जिता रतिर्भाव एवेति बोध्यम् । न चास्याः कुतो न रसत्वम् । मुनेः स्वतन्त्रेच्छत्वात् । फलबलकल्प्यसामग्रीवैलक्षण्येन सहृदयसंवादेन चोत्कटानन्दांशाप्रकाशाच्च ।

---

१ क. °रणं यथा । २ ख. °प्युदात्त° । ३ क. ग. °दि रोचते न मे । ४ ग. °त्वाद्भावका° ।

हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥ ४७ ॥

एवमन्यदप्युदाहार्यम्[1] । अञ्जितव्यभिचारी यथा—

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः ।
नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥ ४८ ॥

अत्र विधिं प्रत्यसूया ।

---

मुनिविषया यथा—हरत्यघं० ।
एवमप्राप्तपरिपोषा पुत्रादिविषया रतिः स्थाय्यन्तरं चापुष्टमुदाहार्यम् ।
व्यभिचारी प्राधान्येन वर्णितो यथा—जाने कोपपराङ्मुखी० ।

---

हरतीति । नारदं प्रति श्रीकृष्णोक्तिरियम् । दर्शनं कर्तृ । तद्भवदीयस्य यस्य कस्यापि तथागुणविशिष्टं किं पुनर्भवत इति द्योतयितुं भवदीय इति । शरीरभाजाम् । प्राणिनाम् । योग्यताम् । दुरदृष्टराहित्यशुभादृष्टादिमत्त्वरूपाम् । व्यनक्ति । प्रकटी करोति । संप्रति उत्पद्यमानं जातं च अघं हरति । तेनाशुभाभावात्त्वदालापादिशुभसत्त्वाच्च तद्योग्यताध्वननम् । एष्यत आगमिष्यतः शुभस्य हेतुः संपादकम् । तत्त्वं चादृष्टद्वारा बोध्यम् । पूर्वमाचरितैः पूर्वजन्मार्जितैः शुभैः सुचरितैः कृतं जनितम् । सूचकत्वं चाद्ययोर्जनकतयाऽन्त्यस्य जन्यतया ।

जान इति । कश्चित्स्वमित्रं प्रत्याह । कोपपराग्वलितवदना प्रियतमा मां मा संस्पृशेति पाणिना हस्तेन ज्ञापयित्वेत्यर्थः । कोपे भाषणस्यापि त्यागात् । रुदती रोदनं कुर्वती पुरोऽग्रे गन्तुं प्रवृत्ता । ईदृशी अद्य स्वप्ने दृष्टा । एतावत्कालं तु तत्रापि दर्शनाभावः । स्वप्नाभाव एव वा । ततस्तदवस्थां तामालिङ्ग्य प्रियवाक्यशतैर्यावदाश्वासयामि तावच्छठेन वञ्चकेन विधिना दैवेन निद्रादरिद्रस्तद्रहितः कृत इति जाने निश्चिनोमि । जाने शठेत्यनेन निर्णीतापकारित्वेनासूयाप्रकर्षः । तदुद्दीपकं तद्दौर्जन्यम् । शठत्वोक्तिरनुभावः । नो यावदिति लोकोक्तिः । अव्ययानामनेकार्थत्वाद्वितर्के वा । ननु नायिकालम्बनस्य तत्कोपोद्दीपितस्य स्वप्नादिदृष्ट्यनुभावितस्य विप्रलम्भस्य सत्त्वात्तध्वनित्वमेव स्यादत आह ।

---

१ ग. ॰न्यदुदा॰ । २ क. ख. ग. ॰म् । व्य॰ । ३ क. मा मा सं॰ । ४ क. ॰द्रिः कृ॰ । ५ क. मां ।

तदाभासा अनौचित्यप्रवर्तिताः ।

तदाभासा रसाभासा भावाभासाश्च । तत्र रसाभासो यथा—

स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान्रणमखमुखे यं मृगयसे ॥
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बला-
त्तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥ ४९ ॥

---

अत्र विधिं प्रत्यसूया प्राधान्येन प्रतीयते । यथा वा मम—विधातुः किं वाच्यमित्यादि ।

**तदाभासा०** ।

अनौचित्येन प्रकर्षविरोधिना रूपेणेत्यर्थः । तच्चैकाश्रयत्वे तिर्यगादिविषयतायां बहुविषयत्वे व्यभिचारिणामाभासाङ्गतायां वा द्रष्टव्यम् । एकविषया रतिरेव नेति तु प्रलापः । बन्दीकृत्य नृपद्विषामित्यादावुदाहरिष्यमाणत्वात् ।

रसाभासो यथा—स्तुमः कमिति ।

---

**असूयाप्राधान्येनेति** । पानकरस उद्भटमरीचादिरूपयत्किंचिदङ्गस्येव विधिविषयायाः शठपदगम्याया असूयायाः पुरःस्फूर्तिकत्वेन शठोक्तिरूपानुभावव्यङ्ग्यत्वकृतचारुत्वेनाऽऽपाततः प्राधान्यमिति भावः । पर्यन्ते तु रसस्यैव तत्त्वम् । मध्यमव्यङ्ग्यमादायैव ध्वनित्वादिव्यवस्थितेरिति बोध्यम् । तत्पदेन रसभावयोः परामर्शो न तु संनिहितत्वेन भावस्यैवेत्याह—**रसाभासा इति** । अनौचित्यं च सहृदयव्यवहारतो ज्ञेयम् । यत्र तेषामनुचितमिति धीः । तदुक्तम्—

उपनायकसंस्थायां मुनिगुरुपत्नीगतायां च ।
बहुनायकविषयायां रतौ तथाऽनुभयनिष्ठायाम् ॥
आभासत्वं कथितं तथैव तिर्यगादिविषयतायामिति ।

**आभासाङ्गतायां वेति** । वाशब्दश्चार्थे । एवं वीरादीनामपि गुर्वादिविषयत्व आभासत्वं द्रष्टव्यम् ।

**स्तुम इति** । वामं सुन्दरम् । जितेन्द्रियाणामपि वशीकरणात् । रण एव मखो यागः । स्वत्कर्तृकान्वेषणरूपस्वर्गफलकत्वात् । तन्मुखे कः प्राणान्विलेभे दत्तवान् । अर्थाज्जन्मान्तरे । सुलग्ने जीवादियुक्तलग्ने । अत्र शशिमुखीत्यनेनाङ्गीकृतापरित्यागस्य युक्तता ध्वन्यते[2] । तपःसंपत्त्यैव राज्यलाभ इत्याह—मदननगरीति । अत्र स्थितस्यैव मदनस्य प्रभुत्वात् । तपःश्रीः, तपोजन्या श्रीः । स्वत्कर्तृकध्यानरूपा । नगरीत्वेनानेकविषयमदनाश्रयत्वसूचनम् । तस्या अनेका-

---

१ ख. °गरी ध्या° । २ क. °ते । नग° ।

**अत्रानेककामुकविषयमभिलाषं तस्याः स्तुम इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति। भावाभासो यथा—**

**राकासुधाकरमुखी तरलायताक्षी**
**सस्मेरयौवनतरङ्गितविभ्रमास्या।**
**तत्किं करोमि विदधे कथमत्र मैत्रीं**
**तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः॥ ५०॥**

---

अत्र बहुषु व्यापारोपादानेन बहुविषया रतिर्व्यज्यते।

नन्वत्र व्यापारस्य बहुविषयत्वमसिद्धम्। एकत्रापि तादृशानेकव्यापारसंभवात्। यत्तु—'अनेककर्मपदोपादानमनेकविषयत्वं क्रियाणां प्रकटयति। एकविषयत्वाभिप्राये स्वेकमेव कर्मपदमुपाददीत' इति तत्तुच्छम्। स्तुमो विलेभ इत्यादीनां भिन्नवाक्यस्थानामेकविभक्त्यन्तपदोपस्थापितेनानन्वये तदन्वयिनोऽभिन्नस्यापि कं क इत्यादिभिन्नपदैरुपस्थापने भिन्नकर्मपदैरेवोपस्थापनार्हणात्। अत्र ब्रूमः—तुशब्देन व्यवच्छेदार्थेन व्यापारस्यानेकविषयत्वं लभ्यते। एवमेकत्र भेदाभिप्रायेऽवगतेऽन्यत्रापि तथैवावगम्यते। बहुपदमनेकपरं वा।

भावाभासो यथा—राकासुधाकरेति॥

---

श्रयस्वभावत्वात्। **तादृशेति**। तादृशानेकेत्यर्थः। **भिन्नवाक्यस्थानामिति**। भिन्नत्वं विजातीयत्वम्। तच्च कर्तृकर्मप्रत्ययान्तत्वेन बोध्यम्। अनन्वय इति सप्तम्यर्हणेऽन्वेति। **तदन्वयिनेति**। एकक्रियान्वयिनेत्यर्थः। **अभिन्नस्यापीति**। अपिर्भिन्नक्रमः। कं क इत्यादिपदैरेकस्योपस्थानेऽपीत्यर्थः। **अन्यत्रापि तथैवेति**। इदमुपलक्षणं मदननगरीत्वेनानेकसंचारणीयत्वावगमेनापि तत्त्वम्। किं च वर्तमानरमणान्वेषणालिङ्गनध्यानरूपव्यापाराणां नैकस्मिन्संभवः। अत्र बलादालिङ्गनगम्यात्नुभयनिष्ठत्वेनापि रतेराभासत्वं बोध्यम्। अनौचित्यप्रतीतिरेवात्राऽऽभासताबीजम्। अत एव पाण्डवेषु द्रौपद्या रतिर्न तथा। स्वकान्तायामपि शोकाद्यवस्थायां रतिवर्णनं तथा। ग्रीवेत्यादौ तिर्यङ्निष्ठभयानकस्य मित्रे क्वापि गत इत्यादौ तिर्यङ्निष्ठविप्रलम्भस्य च न तत्त्वमिति बोध्यम्। रसानौचित्यस्य रसावगमोत्तरमेवावगमादाभासताप्रयोजकतैव न वाच्यवाचकानौचित्यवद्रसभङ्गहेतुतेति बोध्यम्। अत्र साधारणीकरणोपायेन सामाजिकस्य वर्णनीयमखीभावात्सामाजिकनिष्ठरतेरप्याभासत्वं बोध्यम्।

**राकेति**। सीतामुद्दिश्य रावणोक्तिः। पूर्णचन्द्रवदना चञ्चलदीर्घनयना ईषत्प्रकाशितनवयौवनेन तरङ्गितैः पूर्वपूर्वेणोत्तरोत्तरारम्भात्तरङ्गायितैर्विभ्रमैर्युक्ताङ्गी। विभ्रमास्येति पाठे विभ्रमयुक्तमुखीत्यर्थः। दर्शनादिक्रमेण मुखादिगतप्रकर्षविभावनम्। तत्तस्मात्। अनुपेक्षणीयगुणवत्त्वात्। किं करोमि तल्लाभाय किमाचरामीत्यर्थः। न च मैत्री कार्येत्यत्राऽऽह—

---

१ क. ग. 'नुचितं। २ क. 'क्षी सा स्मे'। ३ क. 'मि कथमत्र तनोमि मै°। ४ क. °यिनोऽभि°।

अत्र चिन्ता, अनौचित्यप्रवर्तिता । एवमन्येऽप्युदाहार्याः ।

भावस्य शान्तिरुदयः संधिः शबलता तथा ॥ ३६ ॥

क्रमेणोदाहरणानि—

तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
संश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥ ५१ ॥

---

अत्र रतेर्व्यभिचारिभूता चिन्ता अनौचित्यप्रवर्तिता । नायिकाया अननुरक्ततया रतेरनुत्कृष्टत्वेन तद्व्यभिचारिणोऽपि तथात्वात् । एवमन्येऽप्युदाहार्याः ।

भावशान्त्यादिरक्रम इत्यत्र भावशान्त्यादिपदप्रतिपाद्यमाह—**भावस्य०** ।

संधिरेककालमेव तुल्यकक्षयोरास्वादः । शबलता तु कालभेदेन निरन्तरतया पूर्वपूर्वोपमर्दिनाम् । न च भावस्य शबलतायाः शान्त्युदयाभ्यामविशेषः । शान्तेरुदयस्य वैकैकस्याऽऽस्वादे तद्भेदद्वयोपगमात् ।

तत्र भावस्य शान्तिर्यथा—**तस्याः सान्द्र०** ।

---

विदधे कथमिति । मैत्रीकरणे न कश्चिदुपाय इत्यर्थः । एवं सति तया मम स्वीकृतिर्ममायमिति बुद्धिविषयीकरणम् । तस्य व्यतिकरे संबन्धे क इवोपायो न कोऽपीत्यर्थः । मैत्रीं कथं करोमीत्युक्त्या मैत्र्यभावलाभादनौचित्यप्रवर्तिता चिन्ता । एवं तत्स्वीकृतेर्विशिष्टोऽतिकरोऽभावः । तत्स्वीकाराभावे सति तल्लाभाय क उपाय इत्यप्यर्थादनौचित्यप्रवर्तिता चिन्तेति बोध्यम् । तदाह—**नायिकाया इति** । **अन्येऽपीति** । रसान्तराभासा भावान्तराभासाश्चेत्यर्थः ।

**भावस्येति** । जातावेकवचनम् । अत्र यद्यपि शान्तेर्भावान्तरोदय एव चमत्कारित्वम् । उदयस्य च शान्तिपूर्वकत्व एव चमत्कारित्वम् । अत एव भावाद्भावोदयः पृथग्गणितः । एवं चैतद्भेदद्वये शबलताऽऽवश्यकी तथाऽपि तदनुभावाद्यनुपादानादस्वाद्यत्वाच्च न सा । पूर्वपूर्वोपमर्दन परोदयस्याऽऽस्वाद्यत्व एव तत्स्वीकारात् । तदेवाऽऽह—**न च भावस्येत्यादिना** । एवं शान्त्युदयावुत्पत्तिकालावच्छिन्नावेव चमत्कारिणाविति बोध्यम् । स्थायिनां त्वेते न संभवन्ति । तेषां संततमविच्छेदात् ।

**तस्या इति** । खण्डितस्वनायिकाकोपवृत्तान्तं कथयतो धृष्टनायकस्यैवमुक्तिः । तस्याः सपत्न्याः । असूयातिशयान्नामानिर्देशः । निबिडश्रीखण्डादिलेपनयुतस्तनतटस्य तत्पर्यन्त-

---

१ क. ख. °नतटप्र° । २ ग. गोपाय्यसे । ३ क. °त्तस्याश्च त° । ग. °त्तस्यास्तु त° । ४ क. °मदन । न । ५ क. °विषयः । शा० । ६ क. °स्य चैकै° । ७ क. °न्ता तदाह । ८ ग. °कस्येयमु° ।

अत्र कोपस्य ।

एकस्मिञ्शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं
मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ ५२ ॥

अत्रौत्सुक्यस्य ।

---

अत्र कोपस्य शान्तावेव चमत्कारविश्रामः ।

उदयो यथा—एकस्मिञ्शयने० ।

अत्रौत्सुक्योदयः ।

---

समदेशस्यात एव प्रकृष्टः श्लेषः परीरम्भस्तेन स्वीयताद्योतकं मुद्राकारं यच्चिह्नं तद्युक्तं वक्षश्चरणानतेर्व्यतिकरो नैरन्तर्येण पौनःपुन्येन वा संबन्धस्तन्मिषेण किं गोपाय्यते गुप्तं क्रियत इति तयोक्ते सति तत् । मुद्राङ्कनं संप्रमार्ष्टुं विलोपयितुं सहसाऽप्रसाद्यैव क्व तदित्युदीय रभसेन त्वरया साऽऽश्लिष्टा, आलिङ्गिता । तत्सुखवशात् । आलिङ्गनानन्दपारवश्यात् । तन्व्या चेति चकारेणाऽऽलिङ्गनविस्मृत्योरेककालता । अपीति पाठेऽपि स एवार्थः । **कोपस्येति** । कोपभावस्येत्यर्थः । **शान्तावेवेति** । न तु विद्यमानेऽपि प्रसादोदये । तदनुभावाद्यनुल्लेखादिति भावः ।

**एकस्मिन्निति** । विपक्षरमणी सपत्नी । तन्नाममात्रग्रहणेऽर्थान्नायकेन कृते सति सद्यस्तत्कालमेव मानस्य परिग्रहोऽङ्गीकारस्तेन ग्लपितया खिन्नया मुग्धया स्वाधैर्यमजानन्त्या चाटूनि प्रमादात्तन्नामग्रहणं न तु मे तस्यामासक्तिरित्यादिप्रियभाषणानि कुर्वन्नपि । आवेगात् । कोपावेशात् । अवधीरितोऽवज्ञातः प्रियतमस्तूष्णीं स्थित आलापरहितः स्थितः प्रसादज्ञानाय न तु निद्रितः । तत्क्षणं तूष्णींस्थितिक्षण एव स्वापस्य सर्वथा दुर्लभत्वेन सुप्त इव मा भूदित्यौत्सुक्येनातिशयितवक्रीकृतग्रीवं यथा तथा पुनर्वीक्षितानन्तरं वीक्षित इत्यर्थः । तत्क्षणादितिपाठेऽपि तथैव । कोपपराङ्मुखग्लपितयेति पाठे कर्मधारयः । **अत्रौत्सुक्यस्येति** । सुरतविषयस्येत्यर्थः । न तु सत्या अपि कोपशान्तेः । तदनुभावानुपादानादिति भावः ।

---

१ क. ख. °पराङ्मुखग्ल° । २ क. ख. °त्क्षणान्मा भू° । ३ क. °र्थः । शान्ता° । ४ ग. °ति । न तु ।

उत्सिक्तस्य तपःपराक्रमनिधेर[1]भ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ॥
वैदेहीपरिरम्भ एष[2] च मुहुश्चैतन्यमामीलय-
न्नानन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्यतः ॥५३॥

अत्राऽऽवेगहर्षयो[3]ः संधिः ।

क्वा[4]कार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां[5] प्रशमाय नः[6] श्रुतमहो कोपेऽपि कान्तं मुखम् ॥
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्यो[7]ऽधरं धास्यति ॥ ५४ ॥

---

संधिर्यथा—उत्सिक्तस्य०

अत्र पूर्वार्धे संभ्रमात्मक आवेगः । उत्तरार्धे हर्षः । अनयोस्तुल्यमेवाऽऽस्वादः ।

शबलता यथा—क्वाकार्यं शशलक्ष्मणः० ।

---

**उत्सिक्तस्येति** । परशुरामागमने रामवच एतत् । उत्सिक्तस्य ख्यातस्याहंकृतस्य चेत्यर्थः । तपःपराक्रमयोर्निधेः स्थानभूतस्येदृशस्याभ्यागमादगमने[9]नैकत एकस्यां दिशि सतः समीचीनस्य परशुरामस्य सङ्गे या प्रियता प्रेम तत् । वीरस्य रभस उत्साहः । तस्योत्फाल उद्रेकः । वीरोचितोत्साहोद्रेक इत्यर्थः । एतौ द्वावपि मां कर्षतः । अत्र चकारद्वयं द्वयोः प्राधान्यसूचनाय । अन्यतोऽन्यस्यां दिशि एषोऽनुभूयमानो विदेहो जनकः स एव विदेहः कामः । तदीयायास्तस्यास्तद्विजये सहायत्वात् । तस्याः परिरम्भ आश्लेषो मां रुणद्धि च । मुनिपार्श्वगमनं प्रतिबध्नातीत्यर्थः । चकारः पूर्वोक्ततुल्यकालत्वसूचनाय । ननु एकपरीरम्भकार्यस्य द्वाभ्यां सत्सङ्गप्रेमवीरोत्साहाभ्यां जन्यमानकार्यस्य तुल्यकालत्वं तस्य ताभ्यां तुल्यतां विनाऽनुपपन्नमित्यतस्तत्संपादके विशेषणे आह— मुहुरित्यादि । आमीलयन् । विषयान्तराद्व्यावर्तयन् । हरिचन्दनेन्दुवच्छिशिरः शीतलः स चासौ स्निग्धश्च प्रेमसंवलितश्चात एव रुणद्धीति युक्तम् । स्निग्धेन[10] युद्धान्निवर्तनात् । स्पर्श इति पाठान्तरम् । अत्र मुनावत्यादरणीयत्वज्ञानजन्यत्वराविशेषः पूर्वार्धगम्यः । हर्षस्तूत्तरार्धगम्यः । **अनयोरिति** । अत्र परिरम्भकृतहर्षेण सत्सङ्गप्रियतोत्साहोभयकृतत्वादावेगस्तुल्य इति बोध्यम् ।

**क्वाकार्यमिति** । पुरूरवस उर्वशीं प्रत्युक्तिः । अकार्यम्[11] । उत्तमजायां देवकन्यायामासक्तिरूपम् । क्वद्वयेन ज्ञानद्वयस्य सहानवस्थानप्रतिपत्तिः । तेनात्यनौचित्यं

---

१ क. रभ्युद्गमा° । २ क. °ष बहुशश्चै° । ३ क. ग. °योः । क्वा° । ४ क. क्वाकृत्यं श° । ५ क. °षाणामुपशान्तये श्रु° । ६ क. ख. ग. मे । ७ क. °न्यो धुरं धास्य° । ८ क. °माद्रावे० । ९ क. ख. °गमने° । १० क. °ग्वे यु° । ११ क. °मू । देव° ।

**अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता।**

**भावस्थितिस्तूक्ता। उदाहृता च जाने कोपपराङ्मुखीत्यादिना।**

**मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन।**

**ते भावशान्त्यादयः। अङ्गित्वं राजानुगतविवाहप्रवृत्तभृत्यवत्।**

---

अत्र क्वाकार्यमित्यादौ वितर्कः, भूयोऽपीत्यौत्सुक्यम्, दोषाणामिति मतिः, कोपेऽपीति स्मृतिः, किं वक्ष्यन्तीति शङ्का, स्वप्नेऽपीति दैन्यम्, चेतः स्वास्थ्यमिति धृतिः, कः खल्विति चिन्ता स्फुटं पूर्वपूर्वोपमर्देन प्रतीयमाना शबलता चमत्कारभूमिः।

ननु भावस्य शान्त्यादिवत्स्थितिरपि प्रकारः संभवत्येव। तत्कथं नोक्त इति चेन्न। भावोक्त्यैव तदुक्तेः। भावस्थितेर्भावाभिन्नत्वात्।

ननु व्यभिचारिस्थले नियमतो मुख्यस्य रसस्यावस्थानं तत्कथं भावोदाहरणमेतत्। कथं वा भावध्वनित्वम्। रसाङ्गत्वेन तेषां गुणीभावादित्यत आह—**मुख्ये रसे०।**

ते भावशान्त्यादयः। कदाचन। यदा त एवाङ्गित्वेन विवक्ष्यन्ते। विवहनप्रवृत्तराजानुगम्यमानभृत्यवत्।

---

व्यज्यते। अत्र शान्तसंचारिवितर्कावगमः। अत्र शशलक्ष्मण इत्यनुचितम्। भूयोऽपीत्यादिव्यङ्ग्येन शृङ्गारसंचार्यौत्सुक्येन शान्तसंचारिवितर्कबाधनम्। एवमग्रेऽपि संगमनीयम्। अपिना संभावनौत्कट्यम्। श्रुतं शास्त्रश्रवणम्। दोषाः प्रमादादयः। प्रशम आत्यन्तिकनाशः। इतो मतिः। कोपेऽपीत्यादितः स्मृतिः। कान्तम्। अर्थात्तस्याः। कृते सदाचारे धीर्येषां ते पण्डिता अपकल्मषास्तिरस्कृतपापकर्माणः। इतः शङ्का। स्वप्नेऽपि अदृष्टाश्रुता पूर्वघटकेऽपि। इतोऽभिमताप्राप्तिप्रयुक्तदैन्यम्। चेत इत्यतो धृतिः। क इत्यादितश्चिन्ता। धन्यः, नाहमिव मन्दभाग्यः। धास्यति पास्यति। वितर्कमतिशङ्काधृतीनां शान्तसंचारिता। इतरेषां शृङ्गारसंचारिता। **शबलतेति।** अत्र पार्यन्तिकचिन्तया शान्तोपमर्देन शृङ्गारस्य विश्रान्तिः। सा च शत्रुविजयपूर्वकराज्यलाभ इव प्रकर्षनिदानम्। **भावाभिन्नत्वादिति।** प्रशमाद्यवस्थाचतुष्करहितो भाव एव भावस्थितिरिति भावः।

**व्यभिचारिस्थल इति।** प्राधान्येन व्यञ्जितव्यभिचारिक इत्यर्थः। **रसाङ्गत्वेनेति।** एवं भावशान्त्यादेरपि रसानुभावत्वेन तदङ्गत्वं बोध्यम्। भावशान्त्यादय इति द्वंद्वः। **अङ्गित्वेन।** प्राधान्येन। **विवक्ष्यन्त इति।** एवं च यत्र विभावादिव्यक्तस्थाय्यंशोद्रेककृत आस्वादस्तत्र रसध्वनित्वम्। यत्र स्वानुभावव्यक्तव्यभिचार्याद्युद्रेककृतस्तत्र भावादिध्वनित्वम्। यत्र व्यङ्ग्यीभूतमपि व्यभिचारिणमनपेक्ष्य विभावानुभावोद्रेककृतस्तत्र वस्त्वलंकारध्वनित्व-

---

१ क. ख. ग. °न्तानाम्। भा°। २ क. °तिश्चोक्ता। ग. °स्निरुक्ता। ३ ख. ग. च। मु°। ४ ख. त्वं च रा°। ५ क. यदैवा°। ६ ग. °मः। भूयो°। ७ ग. °चारिके।

**अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ॥ ३७ ॥**
**शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ।**

**शब्दशक्तिमूलानुरणनरूपव्यङ्ग्योऽर्थशक्तिमूलानुरणनरूपव्यङ्ग्य उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति त्रिविधः । तत्र**

**अलंकारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ॥ ३८ ॥**
**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ।**

---

एवमसंलक्ष्यक्रमव्यङ्ग्यभेदं विचार्य संलक्ष्यक्रमव्यङ्ग्यप्रभेदानाह—**अनुस्वानाभ०** ।

घण्टायां हन्यमानायां मुख्यशब्दानन्तरं यथा क्षोदीयानपरोऽनुरणनरूपः शब्दः प्रतीयते तद्वत्संलक्ष्यक्रमा व्यङ्ग्यस्य स्थितिर्यत्र सः । शब्दश्चार्थश्चोभयं चेति द्वंद्वः । तेन शब्दशक्तिमूलव्यङ्ग्यः, अर्थशक्तिमूलव्यङ्ग्यः, उभयशक्तिमूलव्यङ्ग्यश्चेति त्रिधेत्यर्थः । शब्दशक्तिमूलत्वं चैतदेव यत्तेनैव शब्देन तदर्थप्रतीतिर्नतु पर्यायान्तरेणापि । एतद्वैपरीत्यं चार्थशक्तिमूलत्वम् । न त्वभिधया तत्प्रतीतिरिति । एतेन अभिधाया यत्र न नियमनं तत्रैष भेदो द्रष्टव्यः । तन्नियमने तु नाभिधामूलत्वम् । किं तु व्यञ्जनामूलत्वमेव 'भद्रात्मन'—इतिवद्भवेत्, इति यत्केनचिदुक्तं तन्नाऽऽदेयम् । भद्रात्मनः—इत्यादेरप्येतद्भेदत्वेनेष्टत्वात् । अन्यथा तस्य सर्वभेदबहिर्भावापत्तेः । किं च प्रथमोदाहरणे प्राकरणिकाप्राकरणिकयोरिति व्याख्यानेन, द्वितीये भवानित्यनेन, तृतीयेऽसीत्यनेन प्रकरणस्याभिधानियामकस्यं स्पष्टत्वात्तेषामुदाहणत्वं विरुध्येत । तस्माद्यथोक्तमेवं न्याय्यम् ।

तेषु मध्ये—**अलंकारोऽथ०** ।

---

मिति भावः । रससंपर्केनोद्भटस्य भावशान्त्यादेरापातत एव चमत्कारित्वम् । पर्यन्ते तु रसस्यैवेति बोध्यम् । यथा हस्त्यश्वादिभिरलंकृतो भृत्य आपाततः प्रेक्षकाणामुत्पादितविस्मयोऽपि दृष्टे राजन्येवमनुग्राहकोऽयं राजा यदुपकरणीभूय भृत्यं विवाहयतीति राजोत्कर्ष एव पर्यवसानमिति दिक् ।

**संलक्ष्यक्रमव्यङ्ग्येति** । व्यञ्जकेन सह संलक्ष्यः क्रमो यस्य तादृशव्यङ्ग्यकस्येत्यर्थः । **अनुस्वानाभः** । प्रतिध्वनिसदृशः । शब्दार्थयोरेकव्यङ्ग्यस्यापरव्यङ्ग्यत्वानियमादाह—**शब्दशक्तिमूलत्वं चेति** । अवच्छेदकभेदेनोभयान्वयव्यतिरेकानुविधायित्वादुभयसंबन्धसंवलने तूभयशक्तिमूलत्वं द्रष्टव्यम् । **अलंकारोऽथेति** । अथेति विकल्पे ।

---

१ क. ग. त्रिधा । २ क. °ङ्ग्यभेदमाह । ३ क. °ङ्ग्यस्थि० । ४ क. °ञ्जनमू० । ५ क. °स्य सत्त्वा° । ६ क. °व ज्यायः । ते० । ७ क. °धाने वृभ ।

वस्त्वेवेत्यनलंकारं[1] वस्तुमात्रम् । आद्यो यथा—

उल्लास्य कालकरवालमहाम्बुवाहं देवेन येन जरठोर्जितगर्जितेन ।
निर्वापितः सकल एव रणे रिपूणां धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥५५॥

अत्र वाक्यस्यासंबद्धार्थाभिधायकत्वं[2] मा प्रसाङ्क्षीदित्यप्राकरणि-[3]कप्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्रोपमालंकारो व्यङ्ग्यः ।

---

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यो द्विधा । अलंकृतस्यानलंकृतवस्तुमात्रस्य वा प्राधान्येन प्रकाशादित्यर्थः ।

तत्राऽऽद्यो यथा—**उल्लास्य कालकरवाल०** ।

कालो वैरिसंहर्ता यः करवालः स एव महदम्बु धाराजलं वहतीति महाम्बुवाहः । यद्वा मह उत्सवः[4] स एवाम्बु तद्वाहः । गर्जितं सिंहनादः । अत्र करवालमुल्लास्य एतावन्मात्रे वक्तव्ये यदेतादृशशब्दप्रयोगस्तस्यासंबद्धार्थकता मा प्रसज्यतामित्यप्राकरणिकैरिन्द्रवारिवाहादिभिः प्राकरणिकानां राजकरवालादीनामुपमानोपमेयभावे कवेस्तात्पर्यमित्युपमालंकारो व्यङ्ग्यः । स च शब्दशक्तिमूलः । पर्यायान्तरेण भूपादिना तदर्थोपस्थितौ तदप्रतीतेः । एवमग्रेऽप्यूह्यम् ।

---

वस्तुत्वस्य केवलान्वयित्वादाह—**अनलंकृतेति** । गुणीभूतव्यङ्ग्यवारणायाऽऽह—**प्राधान्येनेति** ।

**उल्लास्येति** । अत्र वाच्यपक्षे येन प्रकृतेन देवेन राज्ञा जरठं कठोरमूर्जितं बलवत् । गर्जितं सिंहनादो यस्य तथाविधेन कालो वैरिसंहर्ता यः करवालः खड्गस्तत्र यन्महदम्बु धाराजलं तस्य वाहः[5] प्रसरणं तदुल्लास्य तीक्ष्णीकरणेनाधिकं कृत्वा धाराजलैः खड्गधाराकान्तिभिः । खड्गरत्नादिकान्तौ लोके पानीयादिपदप्रयोगात् । पानीयपर्यायस्य च कान्तिवाचकत्वात् । रणे सङ्ग्रामे रिपूणां शत्रूणां त्रिजगति ज्वलितोऽतिप्रसिद्धिं प्राप्तः सकल एव प्रतापो निर्वापितः शमितः । व्यङ्ग्यपक्षे तु येन देवेन मेघाधिपतिनेन्द्रेण कालकरं कृष्णरश्मि वालं नवीनम् । वबयोरैक्यात् । जरठोर्जितगर्जितेन विशिष्टं महाम्बुवाहं मेघमुल्लास्य प्रकाश्य रणे । अङ्गारादिषु जले पात्यमाने जायमानः शब्दो रणः । तस्मिन्सति धाराकृतिभिर्जलैस्त्रिभुवने रिपूणामर्थाज्जलशत्रूणां तेजसां सकलः प्रकृष्टस्तापो निर्वापितः शमितः ।

**धाराजलमिति** । जलं तैक्ष्ण्यमापश्च । जल घातन इति धातौ घातनं तैक्ष्ण्यमिति व्याख्यानात् । **असंबद्धार्थकत्वम्** । अविवक्षितार्थत्वम् । तथा सत्यपुष्टार्थतापत्तिरिति भावः । **अलंकारो व्यङ्ग्य इति** । अत्र व्यङ्ग्यार्थाभिन्नत्वेनाध्यवसिताश्लिष्टशब्दोपात्त-

---

१ ख. °त्यलंकारभिन्नं व°। २ क. °धायित्वं । ३ ग. °दिति प्राकरणिकाप्राकरणिकयो°। ४ क. उद्धवः । ५ क. °हः संप्रसार°।

**तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः ।**
**मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥ ५६ ॥**
**अत्रैकैकस्य पदस्य द्विपदत्वे विरोधाभासः ।**

---

एवमलंकारान्तराण्यपि । यथा—**तिग्मरुचिरप्रतापो०** ।
अत्र तिग्मरुचिः, अप्रताप एवं क्रमेणैकैकपदस्य द्विपदत्वे विरोधाभासः ।

---

विशेषणकृतं सादृश्यं प्रतीयते । उक्तयुक्तेः । परं तु द्वितीयार्थप्रतीतिमन्तरा नोपमावगमः । तदवगमे च शब्दशक्तिर्मूलमिति तद्यपदेशः । यद्यप्युपमानभूतद्वितीयोर्थस्य वस्तुभूतस्यापि व्यङ्ग्यत्वमस्ति तथाऽप्युपमामुखेनैव तेषामुपमेयोत्कर्षकत्वादलंकारध्वनित्वम् । प्रकरणेनाभिधानियमनाच्छिलष्टशब्दोपात्तद्वितीयार्थस्यापि व्यङ्ग्यत्वमेवेति भावः । तदुक्तं प्राकरणिकानामिति[2]। ननु नृपमहेन्द्रादे रूपकमेव व्यङ्ग्यमस्तु । एवं च करवाल एवाम्बुवाह इत्यर्थसाम्राज्यात्तद्याख्यानक्लेशोऽपि नेति[3]। तन्न प्रकरणाद्वर्ण्यस्य राज्ञः प्रतीतौ श्लिष्टशब्दमहिम्ना देवेन्द्रस्यापि प्रतीतौ परस्परं तयोरसंबन्धे वाक्यभेदापत्त्या द्वितीयार्थस्य वर्णनीयोत्कर्षानाधायकत्वे तादृशशब्दविन्यासरूपकविप्रयासानर्थक्यापत्त्या चाङ्गाङ्गिभावः कार्यः । तत्रेन्द्रसंबन्ध्यम्बुवाहस्य राजसंबन्धिकरवालं प्रति विशेष्यत्वादिन्द्रस्यापि राजविशेष्यत्वापत्त्या राजैव महेन्द्र इत्यर्थप्राप्तावविवक्षितमहेन्द्रप्राधान्यात्तद्रतेरेव व्यङ्ग्यत्वापत्तावसंबद्धार्थकत्वं तदवस्थमेव स्यात् । उपमायां तु महेन्द्र इव राजेत्यर्थे राजगतोत्कर्षप्राधान्यात्तद्गतरतिलाभरूपेष्टसिद्धिः । यद्वा रूपकस्यापि सादृश्यमूलकत्वात्प्रथमोपस्थितसादृश्यस्यैव संबन्धत्वमित्यभिप्रायः ।

**तिग्मेति** । हे विभो स्वामिन्भवान्विभाति शोभत इत्यन्वयः । तद्विशेषणानि । खलेषु तिग्मः सुजनेषु रुचिरः प्रतापो दण्डादिजनितं तेजो यस्य सः । तथा विधुराणां शत्रूणां निशेव निशा मरणं तत्कर्ता । मधुरा मनोज्ञा लीला चेष्टा यस्य सः । मतिः शास्त्रादितात्पर्यनिर्णायिका बुद्धिः । मानश्चित्तसमुन्नतिः । तयोस्तत्त्वेन याथार्थ्येन वृत्तिर्यस्य सः । प्रतिपदं प्रतिस्थानं पक्षाणामात्मीयानामग्रणीरित्यविरोधः । विरोधपक्षे तु तिग्मस्तीक्ष्णः । अथ च रुचिरः । यद्वा तिग्मरुचिः सूर्यः । अप्रतापः प्रतापरहितः । विधुश्चन्द्रोऽनिशाकृद्रात्रिकृन्न । मधुर्वसन्तोऽलीलो लीलारहितः । मतिमान्, अतत्त्ववृत्तिः । तत्त्वे ब्रह्मणि न वर्तते । अतत्त्वेऽवस्तुभूते वर्तत इति वा । प्रतिपत्प्रथमा तिथिः । अपक्षाग्रणीः पक्षस्याऽऽदिभूता नेति । विभः, विगतकान्तिर्विभाति शोभते । **द्विपदत्व इति** । सामाजिकानां वासनाबलाद्द्विपदत्वज्ञानेऽपि अप्रकृततया द्वितीयार्थस्य तत्संबद्धविरोधस्य व्यङ्ग्यत्वमक्षतमिति बोध्यम् ।

---

१ ग. °यार्थेऽस्य । २ क. °ति । यद्यप्यत्र रूपकमपि संभवति तथाऽपि रूपकस्यापि सादृश्यमूल° । ३ ग. °ति चेन्न । प्र° । ४ ग. °वः कल्प्यः । ५ ग. °प्राप्त्या तद्र° । ६ ग. °र्थेत्र सः । ७ क. ग. °स्य च व्य° ।

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो ।
अहितः सहितः साधुयशोभिरसतामसि ॥ ५७ ॥

अत्रापि विरोधाभासः ।

निरुपादानसंभारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥ ५८ ॥

---

पदाभेदेऽपि विरोधाभासो यथा—**अमितः समितः०** ।

ननु विरोधस्य किं सर्वत्र व्यङ्ग्यत्वमेव । नेत्युच्यते । तत्कियती सीमा । अपिशब्दादेर्विरोधव्यञ्जकस्य भावे वाच्यत्वं तदभावे व्यङ्ग्यत्वमिति—

**निरुपादान०** ।

चित्रं नानाकारमालेख्यं च । कला चन्द्रस्य षोडशो भागः कौशलं च । अत्रोपादानैर्भित्त्यावालेख्यकारिभ्यः कलावद्भ्यः शूलिनो व्यतिरेको व्यङ्ग्यः । तस्य चित्रकलाशब्दयोः परिवृत्त्यसहत्वेन शब्दशक्तिमूलता ।

---

**अमित इति** । हे हर्षद शत्रुहर्षखण्डक मित्रहर्षदायक प्रभो त्वं समितः सङ्ग्रामात्प्राप्तैरुत्कर्षैरमितः परिच्छिन्नत्वरहितः साधुभिर्यशोभिः सहितः, असतां खलानां अहितः । यद्वाऽमित इति क्विबन्तम् । अमितात्सङ्ग्रामाल्लब्धैरुत्कर्षैर्हर्षदेत्यादि पूर्ववत् । विरोधपक्षेऽमितः मितं मानं तद्रहितः । समितो मानसहितः । अहितो हितरहितो हितसहितश्च । अत्राप्यप्रकृतत्वाद्द्वितीयार्थस्य विरोधो व्यङ्ग्य इत्याहुः । **विरोधव्यञ्जकस्येति** । एतेन निपातानां द्योतकत्वं ध्वनयति । **भावे वाच्यत्वमिति** । स्फुटद्योतितस्य विरोधस्य तदाक्षिप्तद्वितीयार्थस्य च वाच्यकल्पत्वादिति भावः । **व्यङ्ग्यत्वमिति** । द्वयमपि सामानाधिकरण्यसत्त्व एवेत्यपि बोध्यम् । शनिरशनिश्चेत्यत्र प्रदीपस्वरसात् । अन्ये तु सामानाधिकरण्यमपि वाच्यत्व एव नियामकमित्याहुः ।

**निरुपादानेति** । उपादानसंभार उपकरणसमूहस्तूलकादिकम् । तद्रहितं यथा स्यात्तथाऽभित्तावेव शून्य एव चित्रं नानाकारं जगत्तन्वते कुर्वते तस्मा अनिर्वचनीयस्वरूपाय कला चन्द्रस्य षोडशो भागस्तेन श्लाघ्याय शूलिने महादेवाय नमः । पक्षे चित्रमालेख्यम् । कला, आलेख्यक्रियाकौशलम् । **अत्रोपादानैरिति** । अप्रकृततया व्यङ्ग्येनाऽऽलेख्येनानुभावेन व्यङ्ग्यात्स्वकर्तुरप्रकृताच्छूलिनो व्यतिरेको व्यङ्ग्य एवेति भावः । न चास्य कविगतशिवविषयरतिं प्रति गुणत्वम् । वाच्यापेक्षया प्राधान्यमात्रेण तद्ध्वनित्वाक्षतेः ।

---

१ क. °र्षदः प्र° । २ क. °तः असि । विरोधपक्षे । ३ ग. °वान्न क° ।

अत्र व्यतिरेकः। अलंकार्यस्यापि ब्राह्मणश्रमणन्योयनालंकारता। वस्तुमात्रं यथा—

पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे।
उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु ॥ ५९ ॥

अत्र यद्युपभोगक्षमोऽसि तदाऽऽस्स्वेति व्यज्यते।

---

ननूदाहृतेषूपमादीनां प्राधान्यं न वा। आद्ये कुतस्तेषामलंकारत्वम्। अन्यानलंकरणात्। द्वितीये कुतोऽस्य काव्यस्य ध्वनित्वम्। व्यङ्ग्यस्याप्राधान्यादिति चेन्न। पूर्वमयमलंकार आसीदित्येतावताऽलंकारव्यपदेशात्। यथा ब्राह्मणपूर्वबौद्धसंन्यासिनि ब्राह्मणव्यपदेशः। नन्वेवं व्यपदेशसमर्थनेऽप्यलंकारध्वनित्वं न समर्थितमिति चेन्न। अलंकारपदेन तद्योग्यताया विवक्षितत्वात्। न चैवं रसादिध्वनावप्यलंकारध्वनित्वप्रसङ्गः। संलक्ष्यक्रमस्यैव तादृशस्य तथाभिप्रेतत्वात्। वस्तुतस्तु प्राधान्याप्राधान्ये व्यङ्ग्यस्य वाच्यापेक्षयैव न तु रसापेक्षयाऽपि। तदपेक्षया सर्वत्र गुणीभावात्। तथा चोपमादीनां रसाङ्गतयाऽलंकारत्वं वाच्यापेक्षया प्राधान्यं चेति न दोषलेशावकाशः।

वस्तुमात्रं यथा—**पन्थि अ०**।

अत्र पथिकेन प्रावृडारम्भे ग्रामणीवध्वाः सत्थरमेत्थात्थि इति पदेन संभवव्याजेन स्रस्तरं पृष्टायाः कस्याश्चित्समुचितोत्तररूपे वाक्ये यद्युपभोगक्षमोऽसि तदाऽऽस्स्वेति

---

**पूर्वमयमिति**। वाच्यतादशायामित्यर्थः[३]। **न चैवमिति**। तेषामपि रसवदाद्यलंकारत्वयोग्यत्वादिति भावः।

स्वयं दूती द्व्यर्थैः पदैराच्छाद्य रहस्यं कथयति—**पन्थि अणेति**।

पथिक नास्ति स्रस्तरमत्र मनाक्प्रस्तरस्थले ग्रामे।
उन्नतपयोधरं दृष्ट्वा यदि वससि तदा वस ॥

पथिक प्रस्तराणां पाषाणानां स्थले तन्मयेऽस्मिन्ग्रामे न तु नगरे मनागल्पमपि स्रस्तरं कटाद्यास्तरणं नास्ति तच्छयनसामग्र्यभावेऽपि उन्नतपयोधरं मेघं दृष्ट्वा यदि तत्प्रतिबन्धाद्वससि तदा वसेत्यापाततो वक्त्र्यभिप्रायः। पाषाणबाहुल्येन तृणदौर्लभ्यम्। व्यञ्जनया तु पाषाणानां तत्त्वेनाध्यवसितानां मूर्खाणां स्थले तन्मये ग्रामे सत्थरं शास्त्रं मनागीषदपि नास्ति। तथा चाऽऽकारेङ्गितज्ञानाधिकरणे ग्रामे सति चैवंविधे उद्दीपने मेघे श्लेषमर्यादयोन्नतस्तनदर्शने च को नामोपभोगक्षमोऽन्यत्र गन्तुमर्हतीति वक्त्र्यभिप्रायः प्रकाशते।

---

१ क. अन्यस्यान°। २ क. °धान्यं व्य°। ३ ग. °र्थः। स्वयं।

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
यंत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥ ६० ॥
अत्र विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति ध्वन्यते ।

---

व्यज्यते । तच्चे पओहरेति शब्दशक्तिमूलमिति तथा—शनिरशनिश्च० ।

अत्र प्रथमार्धे शनिरशनिश्चेत्यनेन विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति वस्तु ध्वन्यते । न तु विरोधालंकारः । शनिरशनिरित्यनयोः सामानाधिकरण्याभावात् । विरोधस्य च तत्रैव विश्रान्तेः । द्वितीयार्धं तु नोदाहरणम् । तत्र चशब्दस्याप्यर्थत्वे विरोधस्य वाच्यत्वात् । समुच्चयमात्रार्थत्वे तु विरोधस्यैव व्यङ्ग्यत्वादिति ।

---

**तच्च पओहरेति** । तस्य परिवृत्त्यसहत्वादिति भावः । एवं सत्थरपदमपि बोध्यम् । सत्थरं शास्त्रमास्तरणं च । शास्त्राभावोन्नतमेघस्तनादिदर्शनहेतुकता वसेत्यादिगम्यायां गतिनिवृत्तौ । शब्दान्वयाद्यनुविधानस्य स्फुटत्वात् । एतेन कुलजोक्तावुक्तार्थानवभासाद्वक्तृप्रतिपाद्यौचित्याद्यपेक्षणेन नास्य केवलशब्दशक्तिमूलत्वम् । अर्थव्यञ्जकतायामिव तेषां सहकारित्वोक्तेरिति परास्तम् । अर्थव्यञ्जकतायां तेषामावश्यकत्वमात्रं न तु शब्दव्यञ्जनायां सर्वथाऽनुपयोगस्तत्र प्रतिपादितो मानाभावात् । अत एव गुर्वादिं प्रत्युक्तात्सुरभि मांसं भुङ्क्ष्व इत्यादितो न द्विती[illegible]र्थप्रतीतिः । अस्ति हि शब्दव्यञ्जना क्वचित्तत्साहाय्येन विनाऽपीत्यन्यदेतत् । न चात्र पयोधरादिपदादुपस्थितार्थद्वयस्य परस्परमसंबन्धाद्वाक्यभेदापत्तिः । इष्टत्वात् । न च वाच्यव्यङ्ग्ययोरसंबन्धेऽसंबद्धार्थकत्वापत्तिरिति वाच्यम् । ग्राम्यतापरिहाराय संगोपनाय च वाच्यार्थाच्छादितव्यङ्ग्यार्थस्य प्रतिपाद्यतयाऽऽच्छाद्याच्छादकरूपसंबन्धस्य विवक्षितस्य सत्त्वेनाक्षतेरित्याहुः ।

**शनिरिति** । शनिर्ग्रहः । अशनिर्वज्रम् । पुनस्त्वर्थे । उदार उद्भटः । अनुदारः, अनुगतदारः । पदत्तैश्वर्येणाप्रवासात् । नोदारो यस्मादिति वा । पक्षेऽशनिः शनिविरोधी । नञोऽसुरादाविव विरोध्यर्थकत्वात् । अनुदारः उदारादन्यः । **विरुद्धावपीति** । नञत्र विरोध्यर्थक इति भावः । **सामानाधिकरण्याभावादिति** । एकधर्मिगतत्वेन शनित्वतद्भिन्नत्वयोरप्रतिपादनादिति भावः । नञो भिन्नार्थत्व एव विरोध इत्यपि बोध्यम् । अत्र सामामाधिकरण्याभावेन चस्य समुच्चयार्थत्वादप्यर्थत्वाभावेन च विरोधस्यावाच्यत्वेऽपि

---

१ क. यस्मै प्र° । २ क. ति व्यत्ययेन व्यज्यते । ३ क °च श° । ४ क. तथा वा । ५ क. °त्वात् । वक्तृवैशिष्ट्यादेः शब्दशक्तिमूलेऽपि क्वचित्सहकारित्वात् । अत्र पयोधरादिपदादुपस्थितार्थद्वयस्य ग्राम्यतापरिहाराय संगोपनाय च वाच्यार्थाच्छादितव्यङ्ग्यार्थस्य प्रतिपाद्यता । आच्छाद्याच्छादकरूपसंबन्धस्य विवक्षितस्य सत्त्वेन नासंबद्धार्थता । वाक्यभेदस्त्वत्रेष्ट एव । शनिरिति । ६ ग. °म् । केचित्तु शनिरशनिश्चेत्यत्र सामा° ।

अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः संभवी स्वतः ॥ ३९ ॥
प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा ।
वस्तु वाऽलंकृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ॥ ४० ॥
वस्त्वलंकारमथवा तेनायं द्वादशात्मकः ।

अर्थो द्विविधः । स्वतः संभवी इदंप्रथमकल्पितश्चेति । तत्र स्वतः संभवी न केवलं भणितिमात्रनिष्पन्नो यावद्बहिरप्यौचित्येन संभाव्यमानः । कविनां प्रतिभामात्रेण बहिरसन्नपि निर्मितः कविनिबद्धेन वा वक्त्रेति द्विविधोऽपर इति त्रिविधः । वस्तु वाऽलंकारो वाऽसाविति षोढा व्यञ्जकः । तस्य वस्तु वाऽलंकारो वा व्यङ्ग्य इति द्वादशभेदोऽर्थशक्त्युद्भवो ध्वनिः । क्रमेणोदाहरणानि—

---

अर्थशक्तिमूलानुरणनरूपं व्यङ्ग्यं विभजते—अर्थशक्त्युद्भवो० । स्वतः संभवी न केवलं भणितिनिष्पन्नशरीरः । अपि तु बाहिरप्यौचित्येन संभाव्यमानः। प्रौढोक्तिमात्रात्सिद्धः । बहिरसन्नपि वक्तृप्रतिभामात्रेण तथा निर्मितः । अयमर्थः—व्यञ्जकोऽर्थस्त्रिधा । स्वतः संभवी, कविप्रौढोक्तिमात्रसिद्धः, कविनिबद्धनायकादिवक्तृप्रौढोक्तिमात्रसिद्धश्च । स त्रिविधोऽपि वस्तुमात्रमलंकृतिर्वेति षड्विधो व्यञ्जकः । षण्णां व्यङ्ग्यमपि प्रत्येकं वस्तु वाऽलंकृतिर्वेति द्वादश भेदा भवन्ति ।

---

व्यङ्ग्यत्वमस्त्येव । परं तु वस्तुन एव राजोत्कर्षकतया प्राधान्याद्वस्तुध्वनित्वेन व्यवहार इत्याहुः ।

तेनोम्भितस्येति । कविनिबद्धस्येत्यर्थः । वृद्धोक्तिविषयाच्छिशूक्तिविषय इव कव्युक्तिविषयात्तन्निबद्धोक्तिविषयश्चमत्कारीति भावः । इतः परं च प्रणिधानप्रतीतिकतया चमत्कारस्य स्थगनान्न कविनिबद्धनिबद्धवक्त्रादेः पृथग्गणनमिति बोध्यम् । भणितिनिष्पन्नेति । अत्यन्तासत्यप्यर्थे शब्दस्य ज्ञानजनकत्वादिति भावः । बाहिरिति । लोकेऽपीत्यर्थः । प्रौढोक्तिः । चमत्कारानुगुणोक्तिः । मात्रपदेन बहिःसंभववारणम् । व्यङ्ग्यस्य स्वतः संभविनोऽचमत्कारित्वात्तत्कृता भेदा नोक्ता इति बोध्यम् ।

---

१ ख. °द्भवेऽप्यर्थे व्य° । ग. °द्भवेऽप्यर्थो व्य° । २ °मात्रसिद्धो । ३ ख. °कः। स्वतः संभवीदंप्रथमकल्पितश्चेति द्विविधोऽर्थः । तत्र । ग. °कः । इदं प्रथमकल्पितः स्वतः संभवी चेति द्विविधोऽर्थः । तत्र । ४ ग. °प्योयद्° । ५ क. °हिरौचि° । ६ ग. °ना प्रौढोक्तिमात्रेण नि° । ७ क. °भानमा° । ८ ग. °रोवेति । ९ क. प्रौढिमा° । १० क. °पि वस्तुमात्रं प्रत्येकमलं° । ११ ग. मू। बहि° । १२ ग. °मू । भलसे° ।

अलससिरोमणिधुत्ताणमग्गिमो पुत्ति धणसमिद्धिमओ ।
इअ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ ॥ ६१ ॥

अत्र ममैवोपभोग्य इति वस्तुना वस्तु व्यज्यते ।

धन्याऽसि या कथयसि प्रियसङ्गमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किंचिदपि स्मरामि ॥ ६२ ॥

---

तत्र स्वतः संभविन्यर्थभेदचतुष्टये वस्तुना वस्तुनो व्यक्तिर्यथा—अलसशिरो० ।

अलसत्वेनान्यत्र गन्तुमनिच्छुः । धूर्तत्वेन रतेष्वनादृतगुणः । धनसमृद्धिमत्तया कृपण इति निर्धार्य यत्प्रफुल्लनयनत्वं वस्तु तेनान्यासामनाकर्षणीय इति ममैवोपभोगयोग्य इति वस्तु व्यज्यते ।

वस्तुनाऽलंकारस्य यथा—धन्याऽसि या० ।

---

अलसेति ।

अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि धनसमृद्धिमयः ।
इति जल्पितेन नताङ्गी प्रफुल्लविलोचना जाता ॥

पतिंवरां प्रति धात्र्याः प्ररोचनायोक्तिः पूर्वार्धम् । उत्तरार्धं तु कवेर्वाक्यम् । हे पुत्रि अयं वरोऽलसानां निरुद्योगानां शिरोमणिः श्रेष्ठो धूर्तानां चाग्रिमः श्रेष्ठः प्रचुरधनसमृद्धिः । प्राचुर्ये मयट् । इति भणिते भाषिते लज्जया नताङ्गी काचित् प्रफुल्ले हर्षविकसिते लोचने यस्यास्तादृशी जातेत्यन्वयः । अन्यत्रेति । प्रवासे नायिकान्तरगृहे च । रतेष्विति । रतिकाले नायिकया दर्श्यमानगुणेष्वनादरवानित्यर्थः । इदमुपलक्षणं संभोगेष्वतृप्तत्वस्यापि । नताङ्गीत्वेन स्वस्या मानिनीत्वं नमस्कारद्वारा बोध्यते । ममैवेति । नाविदग्धाया इत्यर्थः । तद्विषयकं च कुमार्या ज्ञानं तदलसशिरोमणित्वादिश्रवणाविशिष्टेन प्रफुल्लनयनत्वेन वस्तुना स्वहेतुहर्षव्यञ्जनद्वारेण तत्कारणीभूतं सामाजिकेषु व्यज्यते ।

धन्याऽसीति । रतिकथापरासु सखीषु मध्ये रतिकालीनं स्वप्रियालापं कथितवतीं कांचिदुपहसन्त्यास्त्वमिदानीं स्वरतिवार्तां कथयेति सखीभिः प्रेरितायाः कस्याश्चिदुक्तिरियम् । हे सखि या त्वं प्रियसंगमे रतान्तरेष्वपि रतिमध्येष्वपि विश्वासयुक्तानां चाटुकानां प्रियवाक्यानां शतानि कथयसि सा त्वं धन्याऽसीत्यन्वयः । प्रथमतः प्रियसंगम एव विलक्षणानन्दमन्थरतया तत्कथनमशक्यम् । तत्रापि रते । तत्रापि नाऽऽदौ नान्ते किं तु मध्ये । तस्य च पुनरिदानीं स्मरणमित्याश्चर्यभूतं तव सावधानत्वमिति भावः । भोः सख्यः प्रियेण नीवीं वसनग्रन्थिं प्रति करे प्रणिहिते करोऽर्पितव्य इति संकल्पविष-

---

१ क. °मैव भो° । २ ग. °टुवचनानि । ३ क. °मयतया । ४ क. ग. °चनोक्तिः । ५ ग. °या दृश्यमा° । ६ क. ग. °युक्तचा° ।

अत्र त्वमधन्याऽहं[1] तु धन्येति व्यतिरेकालंकारः[2]।

दर्पान्धगन्धगजकुम्भकपाटकूट-[3]
संक्रान्तनिघ्नघनशोणितशोणशोचिः[4]।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः॥ ६३ ॥

---

अत्र वाच्येन वस्तुना त्वमधन्या, अहं तु धन्येति स्वस्य व्यतिरेकालंकारो व्यज्यते। ननु व्यञ्जकोऽत्र धन्याऽसीति त्वत्पदार्थस्य व्यतिरेकालंकार एव। तत्कथं वस्तुव्यञ्जकतोदाहरणमेतदिति चेन्न। संबोध्यव्यतिरेकस्तावन्न वाच्यः। आत्मनि कथनाभावस्याशाब्दत्वात्। व्यङ्ग्यस्तु यद्यपि भवत्येव, तथाऽपि तमनपेक्ष्यैव वाच्येन वस्तुमात्रेण यथोक्तव्यतिरेकव्यञ्जनादिति।

अलंकारेण वस्तुनो यथा—दर्पान्धगन्ध०।

---

यीकृते सतीति यावत्। न त्वर्पित इत्यर्थः। अवाचकत्वापत्तेः। अभिप्रायस्य लघुत्वापत्तेश्च। यदि किंचिदपि स्मरामि तदा शपामि शपथं करोमीत्यन्वयः। भवतीनां शपथोऽहं तु न किंचिदपि स्मरामीत्यर्थः। यद्यपि शप उपलम्भन इत्यात्मनेपदं प्राप्नोति तथाऽपि शपथकरणकप्रकाशनविवक्षाभावान्न तत्प्रवृत्तिरिति स्पष्टमस्मत्कृतशब्देन्दुशेखरे। यदि किंचिदपि स्मरामीति वाक्यमध्ये सख्यः शपामीति गर्भितोऽपि गुणः। विवक्षितार्थस्य सत्यत्वप्रत्यायनार्थत्वात्। अत्र पूर्ववाक्ये सोल्लुण्ठोक्तावेकस्या एव सौभाग्यगर्वितायाः संबोध्यत्वाद्धन्याऽसीत्येकवचनम्। स्वोत्कर्षसूचने तु बह्वीनां संबोध्यत्वात्सख्य इति बहुवचनमिति नासंगतिः। अत्र च रतकालेऽपि विषयान्तरवेदनेन रागस्य कृत्रिमतामावेदयता चाटुकथनेन त्वमधन्येति व्यज्यते। अन्तरापिशब्दाभ्यामत्यन्तानौचित्यप्रकाशनद्वारा तदतिशयः। एवं बहुवचनस्यापि प्रतिरतिसमयं तथाभावसूचनद्वारा तद्व्यञ्जकत्वम्। एवं शपामीति प्रातिपदिकवचनयोश्चेति। तथोत्तरार्धेन प्रियकरस्पर्शमात्रेण संमोहानन्दमन्थरत्वेनाकृत्रिमरागातिशय विषयान्तरानुभवाभावं च सूचयताऽहं धन्येति व्यज्यते। तथा चोभयसंवलनेन व्यतिरेकालंकार इति ध्येयम्। यत्त्वत्र सखीं प्रति धन्यत्वोक्तिर्विप्रलिप्सया। तेन विवक्षितान्वयानुपपत्त्या धन्याऽसीत्यत्राधन्यत्वे लक्षणेति। तन्न। विप्रलिप्सयाऽपि सखीं प्रति कपटवचनानौचित्येन संबोध्यायां धन्यत्वस्यैव विवक्षितत्वात्। **अत्र वाच्येनेति**। सखीं प्रति धन्यत्वोक्तिरूपेणेत्यर्थः। **संबोध्यव्यतिरेक इति**। संबोध्यसखीनिष्ठो व्यतिरेक इत्यर्थः।

**दर्पेति**। यस्य राज्ञः करे कृपाणः खड्गो युधि युद्धे वीरैः कोपेन कषायाऽतिशयरक्ता कान्तिर्यस्य तादृशः काली दुर्गा तत्कटाक्ष इव व्यलोकि दृष्टः। कीदृशः। दर्पेण

---

१ क. °हं ध°। २ क. °रेकोऽलं°। ३ ख. °टकोटिसंक्रान्तनि°। ४ क. °क्रान्तनि°। ५ क. °णरोचिः। ६ क. व काव्येव°। ७ क. ग. °सति न त्व°। ८ क. अभिप्रा°। ९ ग. °पामीत्य°। १० क. ग. °न्न प्रवृ°। ११ क. °यम्। अत्र।

अत्रोपमालंकारेण सकलरिपु[1]बलक्षयः[2] क्षणात्करिष्यत इति वस्तु।

गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम्॥ ६४॥

अत्र विरोधालंकारेणाधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता, मम क्षत्याऽप्यन्यस्य क्षतिर्निवर्तता[3]मिति तद्बुद्धिरुत्प्रेक्ष्यत इत्युत्प्रेक्षा च। एषू[4]दाहरणेषु[5] स्वतः संभवी व्यञ्जकः।

---

अत्र कालीकटाक्ष इव कृपाणो व्यलोकीत्युपमा। न पुनरुत्प्रेक्षा। संभावनाविरहात्। त[7]या च सकलरिपुबलक्षयः क्षणात्करिष्यत इति वस्तु प्रकाश्यते।

अलंकारेणालंकृतेर्यथा—**गाढकान्तदशन०।**

अत्र निजाधरदशनवै[6]रिवधूर्जनोष्ठ[8]दशनव्यथामोचनयोः[9] कारणकार्ययोः पौर्वापर्याभावलक्षणयाऽतिशयोक्त्याऽलंकारेण दशनसमकालमेव शत्रवो व्यापादिता इति 'समुच्चयोऽसौ स त्वन्यो युगपद्या गुणक्रिया' इत्युक्तलक्षणसमुच्चयालंकारो द्योत्यते। एष एव च

---

मदेनान्धस्य गन्धगजस्य। यस्य गन्धं समाघ्रायान्ये गजाः पलायन्ते स गन्धगजः। तस्य कुम्भयोर्गण्डस्थलयोः कपाटं मध्यभागः। विशालतया तदाकारत्वात्। तस्य कूटमग्रं तदेव कूटं दुर्भेदत्वात्। तत्र संक्रान्त्या संबन्धेन निघ्नं दृढसंबद्धं घनं निबिडं यच्छोणितं तेन शोणं शोचिर्यत्र। **कालीकटाक्ष इवेति।** अत्र शोणशोचिः कषायकान्त्योर्बिम्बप्रतिबिम्बभावेन समानधर्मता। इयं चोपमा स्वतः संभविनी। सादृश्यस्य बहिरपि सत्त्वात्। **संभावनाविरहादिति[10]।** संभावनायामनुगतधर्मस्यैव प्रयोजकत्वं न बिम्बप्रतिबिम्बभावापन्नस्येति भावः। **तया चेति।** अत्र निर्दिष्टसाधारणधर्मेण सादृश्यपर्यवसानान्नोक्तव्यङ्ग्यस्य वाच्याङ्गतेति बोध्यम्।

**गाढेति।** यो राजा युधि युद्धे रुषा क्रोधेन निजाधरं दशन्नरीणां शत्रूणां वधूजनस्य स्त्रीसमूहस्यौष्ठरूपाणि विद्रुमस्य प्रवालस्य दलानि पत्राणि गाढस्यातिदुःसहस्य कान्तदशनक्षतस्य व्यथा पीडा तद्रूपात्संकटादमोचयत्। क्रोधाद्वैरिवधे तद्वधूनां रतिक्रीडाविरहाद्दन्तक्षताभाव इत्यर्थः। **अतिशयोक्त्येति।** एषैव प्रकाशे विरोधपदेनोच्यते। **एष एवेति।** प्रकृतानामप्रकृतानां वैकधर्मसंबन्धरूपतुल्ययोगितायाः प्रकृतेऽसंभव इति भावः। योगिता योगः। केचित्तु वीरानुभावत्वेन प्रकृतयोः स्वाधरदशनशत्रुव्यापादनयोरैककालिकत्वरूपैकधर्मसंबन्धात्तुल्ययोगिताऽत्र[11]। न च तत्र धर्मो गुणक्रियान्यतर एवेत्यत्र

---

१ ख. °पुक्ष°। २ ग. क्षयं क्ष°। ३ ग. वर्त्यतां°। ४ ख. °एषु स्व°। ५ ग. षु चतुर्धा स्व°। ६ क. वनावि°। ७ क. तथा च। ८ क. जनौष्ठ°। ९ क. °योः पौ°। १० क. °ति। करवृत्तित्वरूपविरुद्धधर्मदर्शनात्तदभाव इति भावः। ११ क. ग. °कालरूपैकधर्मसंबन्धेन मुख्याऽपि तुल्य°।

कैलासस्य प्रथमशिखरे वेणुसंमूर्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् ।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥ ६५ ॥

अत्र वस्तुना येषामप्यर्थाधिगमो नास्ति तेषामप्येवमादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्तिरिति वस्तु ध्वन्यते ।

---

तुल्यकालं योगितेति व्युत्पत्त्या तुल्ययोगितेति कैश्चिदुच्यते । मम क्षत्याऽप्यन्यस्य क्षतिर्निवर्ततामिति बुद्धेरुत्प्रेक्षणादुत्प्रेक्षाऽप्यत्र व्यङ्ग्या । एषु व्यञ्जकोऽर्थः स्वतः संभवी ।

कविप्रौढोक्तिसिद्धे व्यञ्जकेऽर्थे भेदचतुष्टये वस्तुना वस्तुनो व्यक्तिर्यथा—कैलासस्य० ।

अत्र यद्यपि बिसिनीकाण्डसंजातशङ्का इति भ्रान्तिमान्ससंदेहो वाऽलंकारो व्यञ्जक इति वस्तुमात्रव्यञ्जकत्वेनोदाहरणमयुक्तं तथाऽपि तद्भागानपेक्ष्येणापि किंचिच्छुक्लं कर्णे प्रविशतीत्येतावताऽपि श्रवणे हस्तावर्तलक्षणेन वस्तुमात्रेण येषामप्यर्थाधिगमो नास्ति तेषामप्येवं श्वैत्यमूर्तत्वादिबुद्धिजननेन त्वत्कीर्तिश्चमत्कारं करोतीति व्यक्तिसंभवाद्वस्तुमात्रोदाहरणत्वमुक्तम् । अत्र च कीर्तिश्रवणानन्तरं कर्णे हस्तावर्तनं हस्तिनो न स्वतः संभवि । किं तु कविसंप्रदायात्कविना वर्णितमिति कविप्रौढोक्तिसिद्धत्वम् । एवमग्रेऽपि द्रष्टव्यम् ।

---

मानमस्ति । काष्ठोपाधेरपि सूर्यक्रियारूपत्वाच्चेत्याहुः । **बुद्धेरिति** । नृपबुद्धेरित्यर्थः । **उत्प्रेक्षाऽपीति** । अपिना तयोः संसृष्टिः सूच्यते ।

**कैलासस्येति** । प्रथमशिखरे मूलशिखरे वेणुसंमूर्छना वेणूत्थापितरागः । तदुक्तम्—

स्वरः संमूर्छितो यत्र रागतां प्रतिपद्यते ।
मूर्छनामिति तां प्राहुर्गीतितत्त्वविदो जनाः ॥ इति ।

विबुधानां देवानां रमणीभिर्गीयमानां यदीयां यस्य प्रकृतस्य राज्ञः कीर्तिं श्रुत्वा सरसस्य स्निग्धस्य बिसिनीकाण्डस्य कमलिनीमृणालस्य संजाता शङ्का संदेहो भ्रान्तिर्वा येषाम् । स्रस्तास्तिर्यग्भूता अपाङ्गा नेत्रप्रान्ता येषां तादृशा दिग्गजाः श्रवणयोः कर्णयोः पुलिने समीपे हस्तं शुण्डाम् । आवर्तयन्ति चालयन्ति । आवर्तने शङ्कैव हेतुः । तामाहर्तुमिति शेष इति कश्चित् । धवलत्वस्य श्रोत्राग्राह्यत्वात्स्रस्तापाङ्गा इति । अत्र समीपदेशस्य पुलिनत्वेन श्रवणस्य सरस्त्वम् । तथा च मृणालभ्रमस्य युक्तत्वम् । **एतावताऽपि** । एतावज्ज्ञानमात्रेणापि । **वस्तुमात्रेण** । श्रवणे हस्तावर्तलक्षणेन ।

---

१ ख. °नां त्वदी° । २ ग. °मर्थाभिग° । ३ क. °कतोदाहरणत्वम० । ४ क. °णादन° । ५ क. °मस्तीत्याहुः । ६ ग. देवतानां । ७ क. °तुः । धव° ।

केसेसु बलामोडिअ तेणअसमरम्मि जअसिरी गहिआ ।
जह कन्दराहिँ विहुरा तस्सदढं कण्ठअम्मि संठविआ ॥ ६६ ॥

अत्र केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान्कण्ठे गृह्णन्तीत्युत्प्रेक्षा, एकत्र सङ्ग्रामे विजयदर्शनात्तस्यारयः[1] प्रपलाय्य गुहासु तिष्ठन्तीति काव्यहेतुरलंकारो[2] न प्रपलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं संभाव्य तान्कन्दरा न त्यजन्तीत्यपह्नुतिश्च ।

---

अत्रैव वस्तुनाऽलंकारस्य यथा—केसेसु० ।

अत्र तेन तथा समरे केशेषु जयश्रीर्गृहीता यथा तस्यारयः कन्दराभिः कण्ठे स्थापिता इति वस्तुनैकत्रैव सङ्ग्रामे विजयदर्शनात्तस्यारयः पलाय्य गुहासु तिष्ठन्तीति काव्यलिङ्गम्, न पलाय्य गतास्तद्वैरिणः[3], अपि तु ततः पराभवं संभाव्य कन्दरा एव न तांस्त्यजन्तीत्यपह्नुतिश्च व्यज्यते । यत्तु केशग्रहावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान्कण्ठे गृह्णन्तीत्युत्प्रेक्षा[4] व्यज्यत इति तद्भवेदेवम्, यदि पूर्वं कन्दरादीनां नायिकात्वाद्यारोपः[5] स्यात् । अन्यथा केशग्रहणस्य मदनोद्दीपकत्वायोगात् । तदभ्युपगमे च न वस्तुमात्रस्य व्यञ्जकत्वम् । किं तु समासोक्तेरलंकारस्य ।

---

केसेसु इति ।

केशेषु बलामोडिअ तेन समरे जयश्रीर्गृहीता ।
यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे स्थापिताः ॥

बलामोडिअशब्दो बलात्कारे देशी । बलात्कारेणामोट्येत्यर्थ इत्यपरे । जयश्रीरित्यनन्तरं तथेति पूरणीयम् । विधुरा वैरिणः कण्ठे स्वसंनिवेश इत्यर्थः । त्वया पराजिताः शात्रवो गुहास्वेव तिष्ठन्तीति तात्पर्यम् । अपह्नुतिश्चेति । चेन तयोरेकव्यञ्जकानुप्रवेशसंकरः सूच्यते । केशग्रहणेति । नायककर्तृकनायिकाकेशाकर्षणदर्शनादपरस्याः कामोद्रेकस्य लोके दर्शनादिति भावः । तदभ्युपगमे चेति । एककर्तृककेशाकर्षणदर्शनेनापरयाऽपरस्य दृढकण्ठस्थापनरूपश्लिष्टविशेषणैः[6] कन्दरादिभिरिति स्त्रीलिङ्गेन समासोक्त्या कन्दराणां नायिकात्वारोपाभ्युपगमे चेत्यर्थः । अलंकारस्येति । समासोक्त्यलंकारसहितवस्तुन इत्यर्थः ।

---

१ ग. °रयो गु° । २ ख. ग. °हेतुः न । ३ क. °णः किं तु । ४ क. °क्षाऽत्र व्य° । ५ क. °त्वारो° । ६ ग. °णैः स° ।

गाढालिङ्गणरहसुज्जुअम्मि दइए लहुं समोसरइ ।
माणंसिणीण माणो पीलणभीरु व्व हिअआहिं ॥ ६७ ॥

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तत्र विजृम्भत इति वस्तु ।

जा ठेरं व हसन्ती कइवअणम्बुरुहबद्धविणिवेसा ।
दावेइ भुअणमण्डलमण्णं विअ जअइ सा वाणी ॥ ६८ ॥

---

अत्रैवालंकारेण वस्तुनो यथा—गाढालिङ्गन० ।

अत्र पीडनभीत इवेत्युत्प्रेक्षयाऽलंकारेण प्रत्यालिङ्गनादि तत्र जृम्भत इति वस्तु ध्वन्यते ।

अत्रैवालंकारेणालंकारस्य यथा—जा ठेरं व० ।

---

मानवतीं प्रति काचित्तद्भङ्गायापरमानवतीवृत्तान्तमाह—गाढेति ।

गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति ।
मनस्विनीनां मानः पीडनभीत इव हृदयात् ॥

गाढालिङ्गनाय रभसेन हर्षेण वेगेन वा दयिते प्रिय उद्यत एव सति न त्वाचरितवति मनस्विन्या वशीकृतमानसाया अपि मानः पीडनाद्भीत इव हृदयाल्लघु शीघ्रं गुप्तं वा सम्यङ्निःशेषतोऽपसरतीत्यन्वयः । एवं च तादृश्याः स्वाधीनचित्ताया अपि मानो यदि तावन्मात्रेणैव गतस्तर्हि अतादृश्यास्तव गमिष्यतीति किं वक्तव्यमिति । अवश्यंभाविनि मानभङ्गे किमित्यात्मानं वञ्चयसीति भावः । वस्तु ध्वन्यत इति । प्रत्यालिङ्गनादीनां मानापसरणरूपवाच्यात्संभोगं प्रत्यासन्नत्वेन न वाच्याङ्गता । गाढालिङ्गनमात्रेणैव पीडनभयसिद्धेर्न वाच्यसिद्ध्यङ्गता । पीडनभीत इवेत्युत्प्रेक्षया यादृक्संभोगनिर्भरारम्भः प्रतीयते न तादृग्गाढालिङ्गनोद्यते मानोऽपसृत इत्यनेनेत्यलंकारस्य व्यञ्जकत्वमिति भावः ।

जाठेरमिति ।

या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।
दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ॥

या वाणी वाग्देवताभिन्नत्वेनाध्यवसिता काव्यरूपा कविवाक्स्थविरं वृद्धमर्थाद्ब्रह्माणम् । भुवनान्यत्वप्रदर्शनेन तस्यैवोपहसनीयत्वात् । हसन्तीव । वैदग्ध्यात् । कवेर्वदनमेवाम्बुरुहं पद्मं तत्र बद्धो रचितो विनिवेशः स्थितिर्यया तादृशी भुवनमण्डलमन्यादिव

---

१ ख. °दिकं जृ° । २ ख. ग. °त्र जृ° । ३ क. तत्रै° । ४ ग. °स्विन्या मा° । ५ क. ग. °तमनसोऽपि । ६ क. °रमव° । ७ ग. °द्धो वि° ।

**अत्रोत्प्रेक्षया चमत्कारैककारणं नवं नवं जगदजडासनस्थां निर्मिमीत इति व्यतिरेकः । एषु कविप्रौढोक्तिमात्रनिष्पन्नो व्यञ्जकः ।**

**जे लङ्कागिरिमेहलासु खलिआ संभोगखिण्णोरई**
**फारुप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणम् ।**
**ते एण्हिं मलआणिला विरहिणीणीसाससंम्पक्किणो**
**जादा झत्ति सिसुत्तणे विबहला तारुण्णपुण्णा विअ ॥ ६९ ॥**

---

अत्र जा ठेरं व हसन्तीत्युत्प्रेक्षालंकारेण चमत्कारैककारणं नवं नवं जगदनम्बुजासना निर्मिमीत इति वाण्या ब्रह्मणो व्यतिरेकः प्रकाश्यते । यद्यप्युत्प्रेक्षां विनाऽपि व्यतिरेकोऽयं प्रकाशते नियतिकृतनियम इत्यादिवत्, तथाऽपि न स्फुटो भवतीति । यद्वा तावन्मात्रस्य व्यञ्जकत्वेऽप्युत्प्रेक्षौव्यञ्जकत्वं न विहन्यत इति ।

कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धव्यञ्जकार्थस्य ध्वनेर्भेदचतुष्टये वस्तुना वस्तुनो व्यक्तिर्यथा—**जे लङ्कागिरि०** ।

---

विलक्षणमिव दर्शयाति सा जयति सर्वोत्कर्षेण वर्तते । अत्र वदनेऽम्बुजत्वारोपो ब्रह्मणः पद्मासनत्वेन वाण्या अपि तत्संपादनार्थः । अत एव हसन्ती । तदीयासनानुकरणात् । अत्र हसन्तीवेत्युत्प्रेक्षया चमत्कारैककारणत्वांशलाभः । अन्यादिवेत्युत्प्रेक्षया नपतो नवनवत्वलाभः । अत्र हसन्तीवान्यदिवेत्युत्प्रेक्षाभ्यां भारतीतन्निर्माणयोः ब्रह्मतन्निर्मितिभ्यां व्यतिरेकस्य व्यक्तिः ।

**अनम्बुजासनेति** । लोकप्रसिद्धाम्बुजासनत्वाभाववर्तीति तदर्थः । **न विहन्यत इति** । तत्साहित्येनापि तद्व्यञ्जकत्वावगतेरित्यर्थः । अत्र हसनादिकं न लोकसिद्धं नापि कविवाणी जगदन्यथा दर्शयतीति ।

**जे लङ्कागिरीति** ।

ये लङ्कागिरिमेखलासु स्खलिताः संभोगखिन्नोरगी—
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् ।
त इदानीं मलयानिला विरहिणीनिःश्वाससंपर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥

मानिनीं नायिकां प्रति वत्सरव्या इयमुक्तिः । लङ्कागिरिर्हेमकूटः । ये तु लङ्कागिरिर्लङ्कासंनिहितो गिरिर्मलय इति व्याचख्युस्तेषां ते एर्ह्हि मलयानिला इत्यसंगतं स्यात् । तस्य मेखलासु

---

१ ग. 'स्थापि नि॰ । २ क. ग. ष्पन्नः । ख. ॰ष्पन्नशरीरो व्य॰ । ३ क. 'क्षाया अपि व्य॰ । ४ ग. ॰तीत्यर्थः ।

**अत्र निश्वासैः प्राप्तैश्वर्या वायवः किं किं न कुर्वन्तीति वस्तुना वस्तु व्यज्यते।**

**सहि विरइऊण माणस्समज्झ धीरत्तणेण आसासम्।**
**पिअदंसणविहलंङ्खलखणम्मि सहसत्ति तेण ओसरिअम् ॥७०॥**

---

अत्र यथोक्तेन वस्तुना निःश्वासेन प्राप्तैश्वर्याः किं किं न कुर्वन्तीति वस्तु व्यज्यते। तारुण्णपुण्णा विअ इत्यस्य व्यक्तावनुपयोगात्। न चैवमस्याप्रयोजकत्वम्। उक्तिविशेषपरिपोषकत्वात्। निःश्वाससंपर्कस्य बहलत्वहेतोरुपादानात्काव्यलिङ्गस्यैव व्यञ्जकतेति चेन्न। तस्य हेतुत्वाविवक्षयाऽपि तथा व्यक्तेः।

तत्रैव वस्तुनाऽलंकारस्य यथा—**सहि०**।

---

नितम्बेषु स्वभोक्तृसर्पत्रासात्स्खलिताः। स्त्रीणामाहारद्वैगुण्याद्गुरगीति। क्षुदतिशयाय संभोगखिन्नेति। तासां स्फारा वितता उत्फुल्लोर्ध्वप्रसृता ईदृशी या फणापङ्क्तिः। आभ्यां फणाविशेषणाभ्यां कवले स्थौल्यम्। तया कवलने भक्षणे दरिद्रत्वं क्षीणत्वं प्राप्तास्त इदानीं मलयसंबन्धान्मलयानिला विरहिणीनिश्वासैः संपर्किण ईषत्संबन्धा एव न तु सम्यक्संवलिताः। शिशुत्वेऽपि तारुण्येन पूर्णा इव बहलाः पुष्टावयवा विरहिजनहृदयपीडने समर्था जाता इत्यर्थः। अनिलानां लङ्घातो मलयागमने समुद्रलङ्घनाच्छैत्यं मलयसंबन्धात्सौगन्ध्यं स्खलनादिना मान्द्यं च ध्वन्यते। **निःश्वासेनेति**। निःश्वाससंपर्कपर्यन्तवाक्यार्थरूपेण वस्तुना बहिरसंभाव्यमानेनेत्यर्थः। **प्राप्तैश्वर्या इति**। अस्य[3] निःश्वास इत्यादिः[4]। यद्वा निःश्वासेनेति परनिःश्वासेनेत्यर्थकं व्यङ्ग्यघटकम्। **विएत्यस्येति**। उत्प्रेक्षारूपस्येत्यर्थः। **तथा व्यक्तेरिति**। एवं च तस्यैव प्राधान्यादलंकारसत्त्वेऽपि तेनैव व्यपदेश इति भावः।

**सहीति**।

सखि विरचय्य मानस्य मम धीरत्वेनाऽऽश्वासम्।
प्रियदर्शनविशृङ्खलक्षणे सहसेति तेनापसृतम्॥

प्रियदर्शनविह्वलत्वक्षण इति वा। अत्र पाठे बहुव्रीहिः। हे सखि मम धीरत्वेन धैर्येण मानस्याऽऽश्वासं तवोपद्रवेऽहं सहायो भविष्यामि स्थिरो भवेति समाश्वासं विधाय प्रियदर्शनेन। विशृङ्खलेति भावप्रधानम्। विशृङ्खलत्वं कौतुकोत्तरलत्वमेव क्षण उत्सवस्तस्मिन्सतीत्यर्थः। शृङ्खलापदं श्लिष्टम्। तेन धैर्येण। सहसेति सहसा कर्म मया कृतामिति वाक्यैकदेशानुकरणम्। इति एवम्। उक्त्वेति शेषः। अतिसंभ्रमवशाद्वाक्यैकदेशप्रयोगः।

---

१ क. ख. °श्वर्याः किं किं न कुर्वंत इति। ग. °श्वर्याः किं। २ ग. °स्तु व्य°। ३ क. ग. °स्यतिः स्वा इ°। ४ ग. °दिः। वि°। ५ ग. °र्म क्व°। ६ ग. °ति उ°।

अत्र वस्तुनाऽकृते[1]ऽपि प्रार्थने प्रसन्नेति विभावना प्रियदर्शनस्य सौभाग्यबलं धैर्येण सोढुं न शक्यत इत्युत्प्रेक्षा[2] वा ।

ओल्लोल्लकरअरअणक्ख एहिँ तुह लोअणेसु मह दिण्णम् ।
रत्तंसुअं पसाओ कोवेण पुणो इमे ण अक्कमिआ ॥ ७१ ॥

अत्र[3] किमिति लोचने[4] कुपिते वहसि, इत्युत्तरालंकारेण न केवलमार्द्र-नखक्षतानि गोपयसि यावत्तेषामहं प्रसादपात्रं जातेति वस्तु ।

---

अत्र प्रियदर्शनविह्वलत्वक्षणे धीरत्वेनापसृतमिति वस्तुनाऽकृतेऽपि प्रार्थने सा प्रसन्नेति विभावना, नूनं प्रियदर्शनसौभाग्यबलं धैर्येण सोढुं न शक्यत इत्युत्प्रेक्षा च व्यज्यते ।

अत्रैवालंकारेण वस्तुनो यथा—**ओल्लोल्लकर०** ।

अत्र किमिति कुपिते लोचने वहसीति प्रश्नोन्नयनादुत्तरालंकारेण कोवेण इमे ण अक्कमिआ इत्यपह्नुत्यलंकारसहितेन न केवलमार्द्रक्षतानि गोपयसि किं तु तेषामहं प्रसादपात्र-मपि जातेति वस्तु व्यज्यते ।

---

किमिति मया मानसहायार्थं धैर्य आहितेऽपि मानं त्यक्तवती भवतीति वदन्तीं सखीं प्रति तदाहितधैर्यस्याततिुच्छत्वबोधिकेयमुक्तिः । **सा** वक्त्री । **उत्प्रेक्षा चेति** । चेन संकरः संगृह्यते । **व्यज्यते** । सहृदयस्येति शेषः ।

**ओल्लोल्लेति** ।

आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तम् ।
रक्तांशुकं प्रसादः कोपेन पुनरिमे नाऽऽक्रान्ते ॥

क्रुद्धां नायिकां किमिति कुपिते लोचने वहसीति पृष्टवन्तं सापराधनायकं प्रति तस्या इयमुक्तिः । तवेत्यनन्तरमङ्गे विद्यमानैरिति शेषः । तवाङ्गे विद्यमानैरार्द्रादप्यार्द्रैरन्यनायि-काकृतैः क्षतैर्मम लोचनयो रक्तांशुकं प्रसादो दत्त इति संबन्धः । अत्राऽऽर्द्रार्द्रक्षतैरित्यने-नागोप्यत्वं स्वस्य रक्तत्वेन रक्तांशुकप्रसाददानौचित्यं च व्यज्यते । रक्तांशुकमित्यनेनैक-जातीयमेव रक्तत्वमिति ध्वनिः । प्रसाद इत्यनेन करजादिक्षतेषु माहात्म्यं सूचयता तत्कर्तृकभूतायां नायिकायां नायकप्रेमातिशयपात्रताध्वननम् । **उत्तरालंकारेणेति** । उक्तप्रश्नोन्नायकेन प्रकृतवाक्यरूपोत्तरेणेत्यर्थः । **अपह्नुत्यलंकारसहितेनेति** । अप्रसक्त-निषेधानुपपत्त्या प्रश्नाक्षेपकत्वादपह्नुतिरियमुत्तरालंकारगुणीभूतेति सूचयितुं सहितेनेत्युक्तम् । **किं तु तेषामिति** । न प्रसिद्धानामार्द्रक्षतानामगोपनं किं तु गुप्तस्थानामपि यथा दर्श-नविषयता भवति तथा यतस इति तात्पर्यम् ।

---

१ क. °ते प्रा° । २ क. ख. °क्षा चेति । ग. °क्षा च । ३ ख. °त्र लोचने किमिति वहसि कुपिते इत्यु° । ४ क. °ने व° । ५ क. °त्तेषां प्र° । ६ क. °ना प्रि° । ७ क. तत्रै° । ८ क. °धिकास-ख्येतस्थइयमुक्तिः । उत्पेक्ष्य सा व° । ९ ग. °र्दभू° । १० ग. °क्तप्रतिषे° ।

महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती ।
अनुदिणमणण्णकम्मा अङ्गं तणुअं वि तणुएइ ॥ ७२ ॥

अत्र हेत्वलंकारेण तनोस्तनूकरणेऽपि तव हृदये न वर्तत इति विशेषोक्तिः । एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो व्यञ्जकः । एवं द्वादश भेदाः ।

शब्दार्थोभयभूरेकः ।

यथा—

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥ ७३ ॥

---

अत्रैवालंकारेणालंकारस्य यथा—महिलासह० ।

अत्र महिलासहस्रभरितत्वात्तव हृदि स्थानं न लभते ततोऽङ्गं तन्वपि तनयतीति हेत्वलंकाराभ्यां तनोस्तनूकरणेऽपि तव हृदये न वर्तत इति विशेषोक्तिः । अत्र कविनिबद्धा सखी वक्त्री । एवमर्थशक्त्युद्भवस्य द्वादश भेदाः ।

शब्दार्थो० ।

यथा—अतन्द्रच० ।

---

महिलेति । विरहकृशां नायिकां नायकायाऽऽवेदयन्त्याः सख्या इयमुक्तिः ।

महिलासहस्रभरिते तव हृदये सुभग सा[3] अमान्ती ।
अनुदिवसमनन्यकर्मा अङ्गं तन्वपि तनयाति ॥

हे सुभग सौभाग्ययुक्त स्त्रीसहस्रव्याप्ते तव हृदयेऽवकाशमलभमाना साऽनुदिवसं दिवसं व्याप्य प्रतिदिनं चान्यत् तनुतासंपादकातिरिक्तं न कर्तव्यं यस्यास्तादृशी कृशमप्यङ्गं कृशयति । अत एव सुभगेति संबोधनम् । अमान्तीत्यत्र महिलासहस्रभरितत्वं हेतुः । त[4]नुतनूकरणे चामान्तीत्वं हेतुः । अत्र सुभगेत्यनेन नायिकाया एवानुरागविषयत्वं न तु सा तवेति व्यज्यते । एवं महिलासहस्रेत्यादिना त्वदनुरागविषया एव ताः । न तु त्वं तासामित्यपि ध्वन्यते । हेत्वलंकाराभ्यामिति । काव्यलिङ्गालंकाराभ्यामित्यर्थः । हेतुगर्भत्वात्तस्यापि तेन शब्देन व्यवहारः । विशेषोक्तिः । कारणसत्त्वेऽपि कार्यानुत्पत्तिरूपा ।

भूरेक इति । वस्तुनाऽलंकाररूप इत्यर्थः ।

अतन्द्रेति । अतन्द्रो मेघाघनावृततया स्फुरद्रूपश्चन्द्रमा आभरणं यस्याः साऽत एव सम्यगुद्दीपितो मन्[6]मथः कामो यया सा तारका नक्षत्राणि तरलान्यल्पानि यस्यां सा

---

१ क. ख. °मू । भे° । २ क. °कारेण त° । ३ क. ग. सानमा° । ४ क. क. ग. तनू° । ५ ग. °घाना° । ६ ग °न्मथो य° ।

**अत्रोपमा व्यङ्ग्या ।**

**भेदा अष्टादशास्य तत् ॥ ४१ ॥**

**अस्येति ध्वनेः ।**

**ननु रसादीनां बहुभेदत्वेन कथमष्टादशेत्यत आह—**

**रसादीनामनन्तत्वाद्भेद एको हि गण्यते[3] ।**

---

अत्र श्यामारूपकामिनीविशेषरजन्योरुपमा व्यङ्ग्या । सा चातन्द्रचन्द्रेत्यादेः परिवृत्त्यसहतया समुद्दीपितेत्यादेस्तु तत्सहतया उभयस्यापि व्यञ्जकत्वेन शब्दार्थोभयशक्तिमूला ।

**भेदा० ।**

अस्य ध्वनेः । न तु शब्दार्थोभयभुवः ।

ननु रसभावादीनां बहुत्वादष्टादशत्वमनुपपन्नमित्यत आह—**रसादीना० ।**

---

श्यामा रात्रिः । विशेषणबलात्तस्या ज्यौत्स्नीत्वलाभः । कं सानन्दं न करोति । श्यामा षोडशवार्षिकी । अतन्द्रा सुरतादावालस्यरहिता । चन्द्रः कर्पूरमाभरणं यस्याः सा । चन्द्रः शिरोभूषणविशेष इति केचित्[4] । बहुव्रीह्युत्तरपदकः कर्मधारयो वा । सम्यगुद्दीपितो मन्मथो यया तारकाऽक्षिकनीनिका तरला चञ्चला यस्याः सा । तारकावद्दीप्रस्तरलो हारमध्यमणिर्यस्या इति वा । इति प्रतीतौ स्त्रीविशेष इव रात्रिरित्युपमा ज्योत्स्नी रात्रिरिव नायिकेति वोपमाप्रतीतिः ।

**उभयस्यापि व्यञ्जकत्वेनेति[5]** । एतेन पथि अणेत्यादौ पथिकग्रामादिपदानां पर्यायपरिवृत्तिसहत्वादुभयशक्तिमूलत्वं स्यात् । एवं च वस्तुनोऽप्युभयशक्तिमूलत्वेन, एक इत्यसंगतमित्यपास्तम् । तत्र परिवृत्त्यसहसत्थरपओहरशब्दयोरेव व्यङ्ग्यव्यञ्जकत्वं नेतरेषामपीत्यदोषात् । एवं च प्राधान्येन विवक्षितव्यङ्ग्योपयोगिपदानां परिवृत्तिसहत्वासहत्वाभ्यामर्थशब्दयोः प्राधान्यमिति फलितम् । अतन्द्रेत्यादौ तु सर्वैरपि साधारणधर्मैरुपमायाः कवितात्पर्यविषयत्वात्सर्वेषां व्यञ्जकत्वमक्षतमेव । चन्द्रतारकाश्यामापदानां परिवृत्त्यसहत्वमाभरणादिपदानां च तत्सहत्वम् । किं च रहस्ये वस्तुनि व्यङ्ग्य एव गोपनाय नानार्थपदोपादानम् । तद्गोपने च शब्दशक्तय एव प्रभवन्तीति न वस्तुन उभयशक्तिमूलता । एतेन शब्दार्थयोरन्यतरस्य व्यञ्जकत्वेऽपरस्यापि सहायत्वेनोक्तत्वात्सर्वत्रैवोभयमूलत्वमित्यपास्तम् । योऽर्थो व्यञ्जकस्तद्बोधकशब्दस्य यः शब्दो व्यञ्जकस्तद्बोध्यार्थस्यापि व्यञ्जकत्वमिति तदाशयादिति दिक् ।

**अष्टादशेति** । अर्थान्तरसंक्रमितात्यन्तातिरस्कृतवाच्यालक्ष्यक्रमव्यङ्ग्यास्त्रयः । शब्द-

---

१ ग. अस्य ध्व° । २ क. °भेदे कथमष्टादशेतल्य° । ख. °भेदकत्वे क° । ग. °भेदत्वे क° । ३ ग. °ते । तथा° । ४ क. °त् । सम्य° । ५ क. °ति । पथि अणेत्यादौ परिवृत्त्यसहसत्थरपओहरशब्दयोरेव व्यङ्ग्यव्यञ्जकत्वं नेतरेषां पथिकग्रामादिशब्दानां परिवृत्तिसहानामिति नोभयशक्तिमूलत्वम् । एवं च प्राधा° ।

अनन्तत्वादिति । तथाहि । नव रसाः । तत्र शृङ्गारस्य द्वौ भेदौ । संभोगो विप्रलम्भश्च । संभोगस्यापि परस्परावलोकनालिङ्गनपरिचुम्बनादिकुसुमोच्चयजलकेलिसूर्यास्तमयचन्द्रोदयषड्ऋतुवर्णनादयो बहवो भेदाः । विप्रलम्भस्याभिलाषादय उक्ताः । तयोरपि विभावानुभावव्यभिचारिवैचित्र्यम् । तत्रापि नायकयोरुत्तममध्यमाधमप्रकृतित्वम् । तत्रापि देशकालावस्थादिभेदा इत्येकस्यैव रसस्याऽऽनन्त्यम् । का गणना त्वन्येषाम् । असंलक्ष्यक्रमत्वं तु सामान्यमाश्रित्य रसादिध्वनिभेद एक एव गण्यते ।

वाक्ये द्व्युत्थः ।

---

कथमनन्तत्वम् । इत्थम्—नव रसाः । तत्र शृङ्गारस्यैव द्वौ भेदौ संभोगविप्रलम्भौ । तत्र संभोगस्यापि परस्परालिङ्गनादयो बहवो भेदाः । विप्रलम्भस्याभिलाषादय उक्ताः । तयोरपि विभावानुभावव्यभिचारिवैचित्र्यम् । तत्रापि नायकयोरुत्तममध्यमाधमप्रकृतित्वम् । तत्रापि देशकालावस्थाभेद इत्येकस्यैव रसस्याऽऽनन्त्यम् । का गणना सर्वेषाम् । कुतस्तर्हि एकत्वेन गणनम् । असंलक्ष्यक्रमत्वरूपमेकं सामान्यमाश्रित्य ।

**वाक्ये द्व्युत्थः०।**

शब्दार्थोभयशक्तिमूलो ध्वनिर्वाक्य एव । ननु नायं नियमः । शिशुपालवधे तद्दूतोक्तौ प्रबन्धेऽपि दर्शनादिति चेन्न । तत्रोभयशक्तिमूलत्वेऽपि ध्वनित्वाभावात्तुल्यप्राधान्य-

---

शक्तिमूलव्यङ्ग्ये वस्त्वलंकृती द्वौ । अर्थशक्तिमूलस्य द्वादश । उभयशक्तिमूलश्चैक इत्यष्टादशेत्यर्थः ।

**अधमप्रकृतित्वमिति** । बहुव्रीहेस्त्वप्रत्ययः । प्रकृतिः स्वभावः । उत्कृष्टानुरागित्वादि चोत्तमस्वभावत्वादि । देशो विजनादिः । कालो वसन्तादिः । अवस्था नवोढात्वादयः । **सर्वेषामिति** । रसभावतदाभासानामित्यर्थः । **सामान्यमिति** । तच्चाखण्डोपाधिरिति भावः ।

**वाक्य एवेति** । वाक्यमत्र पदसमुदायः । तेन नानार्थानानार्थपदघटितसमासगतत्वेऽपि न क्षतिः । एवेन चासमस्तैकपदव्युदासः । एकपदेऽस्यासंभवात् । एकस्यैव परिवृत्तिसहत्वतदसहत्वयोर्वक्तुमयोग्यत्वाच्च । तद्दूतोक्ताविति पाठः । **प्रबन्धेऽपीति** । न च तस्य पद-

---

१ क. °म्भश्चेति । २ ख. ग. °स्परदर्शनालि° । ३ क. °यर्तुषट्कव° । ४ क. ख °स्याप्यभि° । ५ ख. °भावादिवै° । ६ ग. °कनायिकयो° । ७ ख. °तिकत्व° । ८ ख. °स्था इ° । क. ग. °स्याभे° । ९ क. °नान्ये° । १० ख. °त्वं सा° । ११ क. °निरेकभेद एव । क. °निरेक° । १२ क. °रस्य द्वौ । १३ क. °भोगो विप्रलम्भश्च । त° । १४ क. °लावव° । १५ क. °धान्याभा° । १६ ग. °मुले व° । १७ ग. °गत्वे° । १८ ग. °त्वात् ।

व्युत्थ इति । शब्दार्थोभयशक्तिमूलः ।

पदेऽप्यन्ये ।

अपिशब्दाद्वाक्ये ऽपि । एकावयवस्थितेन भूषणेन कामिनीव पदद्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्याऽपि भारती भासते । तत्र पदप्रकाश्यत्वे क्रमेणोदाहरणानि—

यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ।

---

भावात् । ब्राह्मणातिक्रमत्याग इतिवत् । अन्यत्राप्येवं संभाव्यत इति चेत्संभाव्यताम् । न तु क्वापि निश्चीयते येन तदादाय विभागः स्यादिति ।

पदेऽप्यन्ये ।

अन्ये सप्तदश ध्वनिभेदा वाक्ये पदेऽपि । ननु पदस्य व्यञ्जकत्वे किमायातं वाक्यरूपस्य काव्यस्य ध्वनित्वे । कथं वा पदमात्रस्य व्यञ्जकत्वे वाक्यस्यैव समस्तस्य चारुतेति चेदुच्यते । पदप्रकाश्यत्वं न पदमात्रस्य व्यञ्जकतया । किं तु तस्य प्राधान्येन । अविवक्षितवाच्ये पदमात्रस्य व्यञ्जकत्वेऽपि यद्वाक्यवर्तिशब्दस्यार्थस्य वा कस्याप्यतिशयितार्थव्यञ्जकत्वं तद्वाक्यस्यैव ध्वनित्वमित्युपगमान्न कश्चिद्दोषः । एकदेशस्थितेन च तादृशपदेन समस्तमेव वाक्यं चारुतामुपगच्छति कामिनीवैकावयवस्थेन भूषणेन । तदुक्तं ध्वनिकृता—

एकावयवसंस्थेन भूषणेनेव कामिनी ।
पदव्यङ्ग्येन सुकवेर्ध्वनिना भाति भारती ॥ इति ।

तत्र वाक्यव्यङ्ग्यमुदाहृतम् । पदव्यङ्ग्यमुदाह्रियते । तत्राविवक्षितवाच्यभेदयोरर्थान्तरसंक्रमितवाच्यं यथा—यस्य मित्राणि० ।

---

समुदायरूपवाक्यत्वाक्षतिः । क्रियाकारकभावापन्नस्यैव पदसमुदायस्य वाक्यशब्देन विवक्षितत्वादित्याहुः ।

सूत्रस्थापिना पदांशादिसमुच्चयं वारयति—**वाक्य इति** । अलंकारादीनां पदांशादिव्यङ्ग्यत्वाभावादिति भावः । **प्राधान्येनेति** । यत्रैकस्य पदस्य शक्तेः प्राधान्यमन्येषामानुगुण्यमात्रं तत्र पदाश्रयता । यत्र तु नानापदानां शक्तेस्तुल्यता तत्र वाक्याश्रयतेति भावः ।

**एकेति** । पदव्यङ्ग्येनेत्यस्य तदर्थव्यञ्जकपदेनेत्यर्थः । प्रकाशे वाक्यव्यङ्ग्याऽपि भारतीत्यस्य श्रोत्रग्राह्यवाक्यव्यङ्ग्या स्फोटरूपा भारतीत्यर्थो बोध्यः । सुकवेर्भारती काव्यम् । भाति चमत्कुरुते ।

**यस्येति** । यस्य पुरुषविशेषस्य मित्राणि मित्राणि आश्वस्तरूपाणि । तथा शत्रवो निःशे-

---

१ क. ख. ग. 'क्ये । ए' । २ ख. 'क्रमयोत्थापि । ३ ग. अत्र । ४ क. वा पाद' । ५ क. 'तिपदस्या' । ६ ग. 'दः । सुकवे' ।

अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥ ७४ ॥ ( १ )

अत्र द्वितीयमित्रादिशब्दा आश्वस्तत्वनिर्यन्त्रणीयत्वस्नेहपात्रत्वादिभिरर्थान्तरसंक्रमितवाच्याः ।

खलववहारा दीसन्ति दारुणा जहवि तहवि धीराणम् ।
हिअववअस्सबहुमआ णहु ववसाआ विमुज्झन्ति ॥ ७५ ॥ (२)

अत्र विमुह्यन्तीति ।

---

अत्र द्वितीयो मित्रशब्द आश्वस्तत्वे, शत्रुशब्दो निर्यन्त्रणत्वे, अनुकम्प्यशब्दः स्नेहपात्रत्वे संक्रमितवाच्यः । नायकस्य दृढप्रकृतित्वं व्यङ्ग्यम् । ननु 'त्वामस्मि वच्मि' इति वाक्यप्रकाश्ये पूर्वमुदाहृतम् । तस्मादस्य पदप्रकाश्यस्य को भेद इति चेन्न । अनवबोधात् । तद्धि प्रत्येकपदव्यङ्ग्यभिन्नं समस्तपदवाक्यव्यङ्ग्यम् । तस्मादत्र सर्वथा सावधानेन भाव्यमित्येवंरूपं यत्तत्परम् । इदं तु केवलमित्रादिपदव्यङ्ग्याभिप्रायमिति ।

अत्यन्ततिरस्कृतवाच्यं यथा—**खलववहारा०** ।

अत्र विमोहेनाप्रवृत्तिर्लक्ष्यते । न च तत्र वाच्यस्य कथमपि प्रवेशः । इष्टकार्यकारित्वं

---

षतो यन्त्रणीया दमनीयाः । यस्येत्यस्यात्राप्यनुषङ्गः । अनुकम्पा दया । तद्योग्यस्तद्विषय इति यावत् । अनुकम्प्यः स्नेहपात्रम् । स जातः शोभनजन्मा स एव जीवति श्लाघ्यजीवनवानित्यर्थः । अत्रार्थान्तरसंक्रमितवाच्यैर्मित्रादिशब्दैराश्वासादेर्यावज्जीवस्थायित्वरूपतदतिशयव्यञ्जनद्वारा नायकस्य दृढप्रकृतिकत्वं व्यङ्ग्यमिति । **निर्यन्त्रणत्व इति** । निःशेषयन्त्रणापात्रत्व इत्यर्थः । लक्षणायां पादत्रयेऽपि सामान्यविशेषभावः संबन्धः । **इदं त्विति** । इह तद्वद्वाक्यव्यङ्ग्याभावादिति भावः ।

**खलेति** ।

खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथाऽपि धीराणाम् ।
हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति ॥

दारुणा इष्टप्रतिबन्धकाः । सदर्थग्राहितया हृदयमेव वयस्यो मित्रम् । तेन बहुमता अनुमोदिता धीराणां व्यवसाया उद्योगा न विमुह्यन्ति न प्रतिबद्धा भवन्ति । **विमोहेनेति** । कार्यकारणभावः संबन्धः । **इष्टकार्यकारित्वमिति** । अस्य सर्वं

---

१ क. ख. ग. °न्त्रणत्व° । २ ख. °त्र मु° । ३ क. भेदः । तत्र वाक्यार्थानां प्रत्येकमविश्रान्तत्वेनैकवाक्यतेति वाक्यप्रकाश्यत्वम् । अत्र तु वाक्यार्थानां प्रत्येकविश्रान्तत्वेन नैकवाक्यतेति पदप्रकाश्यता । अत्यन्त° । ४ क. °त्वं च व्य° । ५ क. °तित्वं व्यङ्ग्यम् । निर्य° । ६ ग. °ग्यम् । निर्य° ।

लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः ।
तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥ ७६ ॥

अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रकाश्यन्ते । यथा वा—

मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ।

---

व्यङ्ग्यम् । यद्यपि व्यवसाये विमोहाभावो नान्वयायोग्य इति कुतो लक्षणा, तथाऽपि धीराणामधीरेभ्यो वैलक्षण्यं प्रतिपाद्यम् । न च तल्लक्षणां विना संभवति । अधीरव्यवसायेऽपि मोहाभावादित्यवश्यं लक्षणा स्वीकार्या ।

अलक्ष्यक्रमव्यङ्ग्यं यथा—**लावण्यं तदसौ०** ।

अवयवस्य संस्थानसौष्ठवं रूपम् । अवयविनस्तदेव लावण्यम् । कान्तिरुज्ज्वलता । अत्र विप्रलम्भार्थे वाक्येऽनुभवैकगोचरमर्थं प्रकाशयतां तत्पदानां प्राधान्यम् । एवमग्रेऽपि । न केवलं सर्वनामपदानामेव रसादिव्यञ्जकता किं त्वन्येषामपि । यथा—**मुग्धे मुग्धतयैव०** ।

---

थेत्यादिः । **विमोहाभावः** । तदत्यन्ताभावः । **विमोहाभावात्** । तदत्यन्ताभावसत्त्वादित्यर्थः । **अवश्यमिति** । विमोहाभावशब्देन प्रतियोगिसमानदेश उत्पादविनाशशाली, अभाव उच्यत इत्यर्थः ।

**लावण्यमिति** ।

मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमुदाहृतम् ॥

कान्तिरुज्ज्वलता । रूपं संस्थानसौष्ठवम् । वचःक्रमो वचःपरिपाटी । तच्छब्दास्तु अनिर्वचनीयानुभवैकगोचरत्वबोधकाः । तदा तत्संविधानेनानुभवदशायाम् । सुधास्पदम् । सर्वाङ्गीणसाहित्यसंपादकत्वात् । अधुना तद्वियोगात्स्मृतिदशायां सर्वाङ्गीणतापहेतुत्वाज्ज्वर इव ज्वरोऽतिशयितपीडाजनकः । **विप्रलम्भार्थे वाक्य इति** । विप्रलम्भव्यञ्जकवाक्य इत्यर्थः । तत्पदानामित्युपलक्षणमसावधुनेत्यस्यापि । **प्राधान्यमिति** । लावण्यादेरनुभवैकगोचरत्वादिना स्मरणस्य विप्रलम्भपोषकत्वादिति भावः । अत्र तदादेर्बुद्धिविषयतावच्छेदकवति शक्त्या तत्पदानामनुभवैकगोचरत्वेन लावण्यादिबोधकता द्रष्टव्या ।

**मुग्ध इति** । मुग्धे उपदेशाग्राहिणि अखिलोऽतीतो वर्तमानो भविष्यंश्च कालो मुग्धतयैव यथोचितानाचरणेनैव नेतुं यापयितुं किं किमित्यारभ्यते । तर्हि

---

१ क. °रोपमम् । २ ग. °रार्थाः । ३ क. ग. दूरीकु° । ४ क. °नस्तु तदे° । ५ क. °र्थः । लाव° । ६ ग. °ञ्जके वा° । ७ क. °षये शक्त्या । ८ क. °रला° ।

सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥७७॥ (३)

अत्र भीताननेति । एतेन हि नीचैःशंसनविधानस्य युक्तता गम्यते । भावादीनां पदप्रकाश्यत्वेऽधिकं न वैचित्र्यमिति न तदुदाह्रियते ।

रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघः ।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि नृपभीम ॥७८॥ (४)

---

अत्र भीताननेति पदं नीचैःशंसनविधानस्य योग्यतां प्रकाशयत्प्राधान्येन रागातिशयं व्यञ्जयति ।

भावादीनां तु वाक्येऽपि न तादृशं चारुत्वम् । पदप्रकाश्यत्वे सुतराम् । अतस्तत्प्रभेदा नोदाह्रियन्ते ।

लक्ष्यक्रमव्यङ्ग्यध्वनिप्रभेदेषु शब्दशक्तिमूलेऽलंकारव्यक्तिर्यथा—**रुधिरविसर०** ।

---

किमारम्भणीयं तदाह । मानं धत्स्व बलाद्धारय । धृतिं धैर्यं बधान । बन्धनेनापसरणाशक्यता व्यज्यते । प्रेयसि प्रियतमविषये । एतच्च वाक्यचतुष्टयेऽप्यन्वेति । ऋजुतां सरलताम् । इत्येवं सख्या प्रतिबोधिता मुहुर्मुहुर्बोधिता नायिका भीतानना भयजनितवैक्लव्यवद्वदना सती तां सखीं प्रतिवच उत्तरमाहेत्यन्वयः । वस्तुतस्तु वचो वचः प्रति भीतानना भयजन्यविच्छायत्ववद्वदना तामाहेत्यन्वयः । पूर्वव्याख्यायां हि प्रतिवच इत्यस्य वैयर्थ्यापत्तेः । एतेन वीप्साव्ययीभावपक्षे प्रतिबोधितेत्यस्यासंगतिः । प्रतिबोध्यमानेति हि तदोचितमिति मन्दोक्तमपास्तम् । मतिबुद्धीति सूत्रेण वर्तमाने क्तसत्त्वात् । किं च प्रतिवचो विच्छायत्वदर्शनेनैव प्रतिबोधनान्निवृत्त्यौचित्येऽपि सखीत्वात्प्रतिबोधिता तामाहेत्यन्वयेनादोषाच्च । उत्तरमाह नीचैरिति । प्राणेश्वरः प्राणानां तदायत्तत्वाज्जीवितसर्वस्वायमानः । अत एव हृदि स्थितः श्रोष्यति । ननु शङ्कायाम् । अत्र सख्या अपरिहार्यवाक्यतया नीचैःशंसनस्य विधानं कृतम् । मैवं शंसेति च नोक्तम् ।

**योग्यतां प्रकाशयदिति** । नीचैःशंसनमेव योग्यमिति प्रकाशयदित्यर्थः । आननगतविच्छायत्वाद्युन्नीतभयेन हि तत्प्रकाश्यते । **प्राधान्येनेति** । भयप्रतिपाद्याकृत्रिमानुरागेण च संभोगः प्रकृष्यत इति तस्य भीताननेतिपदमूलतेति भावः । **रागातिशयम्** । संभोगातिशयम् । **तादृशम्** । रससदृशम् ।

**रुधिरेति** । हे नृपभीम भयंकर त्वं भासि शोभसे । कीदृशस्त्वम् । रुधिरस्य विसरो धारा तया प्रसाधितोऽलंकृतो यः करवालः खड्गस्तेन करालो भयजनकः स चासौ रुचिरश्च ।

---

१ क. (प्र) °तोऽतिचतुरप्रा° । २ ग. अनेन । ३ क. ख. ग. °तकरालकरवालरु° । ४ क. °स्तद्भेदा । ५ क. ग. वदानना । ६ ग. °ना तां । ७ ग. वदानना । ८ क. नापि ता° । ९ क. °यः । उत्तरमाह । १० क. ख. °ति त° । ११ क. °शयम् । रवि° ।

**अत्र भीषणीयस्य[1] भीमसेन[2] उपमानम्।**

**भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः।**

**कस्य नाऽऽनन्दनिस्यन्दं[3] विदधाति सदागमः[4] ॥ ७९ ॥ (५)**

**काचित्संकेतदायिनमेवं मुख्यया वृत्त्या शंसति।**

---

अत्र भीमेति भीषणीयार्थेन नृपसंबोधनविशेषणेन भीमसेनोपमा व्यज्यते।

अत्रैव वस्तुनो व्यक्तिर्यथा—**भुक्तिमुक्ति०**।

काचित्संकेतदायिनमेवं मुख्यया वृत्त्या शंसति। तत्र सदागमपदेन स्तुतिर्व्यज्यते। उभयोश्चैतयोः शब्दप्राधान्यम्। परिवृत्त्यसहत्वात्।

---

शत्रुमित्रभेदेन करालत्वरुचिरत्वे। ईदृशो भुज एव परिघः शत्रुजयलक्ष्मीनिरोधकत्वादर्गला यस्य तादृशः। एवं भ्रुकुट्या भ्रूभङ्गेण। विटङ्कः कपोतपालिका। तदाकाररेखान्वितं यल्ललाटं तदेव विस्तीर्णत्वात्पट्टो यस्य सः। भीमसेनो व्यङ्ग्यः। **भीषणीयेति**। **बाहुल**कात्कर्तर्यनीयः। **उपमा व्यज्यत इति**। विभासीति मध्यमपुरुषानन्वयान्न रूपकम्। तत्र विधेयप्राधान्येनैवान्वयात्। अत एव मुखचन्द्रो हसतीत्यत्र हसनस्य रूपके बाधकत्वमुपमायां साधकत्वं वक्ष्यतीत्याहुः।

**भुक्तीति**। जनान्तरसंनिधावुपनायक आगतेऽप्रस्तुतवेदप्रशंसाव्याजेन तदागमनाधीनहर्षं[6] व्यञ्जयन्त्या इयमुक्तिः। सदागमः सन्नागमो वेदः। भुक्तिः स्वर्गादिभोगः। मुक्तिः कैवल्यम्। तत्कृत्। कर्मकाण्डवेदान्ताभ्यामुभयोपायबोधनात्। एकान्तेन नियमेन यजेतेत्यादिविध्यादिभिः करणैः समादेशने हितोपदेशने तत्परः। अप्रतारकत्वात्। कस्य विज्ञस्य। व्यङ्ग्यपक्षे सतः सुन्दरस्य वल्लभस्याऽऽगमः। भुक्तिः सुरतादिभोगः। मुक्तिर्विरहादिदुःखत्यागः। एकान्तस्य संकेतस्थानस्य समादेशने तत्परः। कस्य रमणीजनस्य। अत्र मुख्यतया विवक्षितोऽपि द्वितीयार्थो गोपनायाप्राकरणिकीकृतो भवतीति बोध्यम्। **एवम्**। प्रकृतार्थस्य सकलजनसंवेदने रहस्यभङ्गभिया प्रथमं प्राकरणिकीकृताप्रकृतार्थप्रतीतिपूर्वकमित्यर्थः। **मुख्ययेति**। व्यञ्जनयेत्यर्थः। शक्यस्याप्यर्थस्याप्राकरणिकीकृतत्वेन व्यङ्ग्यत्वं बोध्यम्। अत एवानयोर्नोपमा। व्यङ्ग्यार्थ एव प्रधानभूते प्रतीतिविश्रान्तावुपमाकल्पकाभावात्। संगोपनार्थमेव प्रथमार्थोपादानात्। **शंसति**। स्तौति। **सदागमपदेनेति**। यद्यपि भुक्तिमुक्तिएकान्तपदानामपि तत्त्वमस्ति तथाऽपि सदागमपदमात्रं व्यङ्ग्यव्यञ्जने प्रभवति न त्वेतद्रहितानि तानीति सदागमपदस्य प्राधान्यमिति भावः। **परिवृत्त्यसहत्वादिति**। पूर्वत्र भीमपदस्यात्र सदागमपदस्येत्यर्थः।

---

१ ग. 'यभी°। २ क. °म उ°। ३ क. °निःष्यन्दं। ४ ख. समाग°। ५ क. °षणार्थे°। ६ ग. °धीनं ह°।

सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विश्रब्धमत्राऽऽगतिः।
आश्चर्यं तव सौकुमार्यमभितः क्लान्ताऽसि येनाधुना
नेत्रद्वंद्वममीलनव्यतिकरं शक्नोति ते नाऽऽसितुम् ॥ ८० ॥ (६)

अत्र वस्तुना कृतपरपुरुषपरिचया क्लान्ताऽसीति वस्त्वधुनापद-द्योत्यं व्यज्यते ।

---

अर्थशक्त्युद्भवेषु स्वतःसंभविन्यर्थे व्यञ्जके वस्तुना वस्तुनो व्यक्तिर्यथा—**सायं स्नान०** ।

अत्र तव सौकुमार्यमाश्चर्यं येनाधुना क्लान्ताऽसीति वस्तुना कृतपरपुरुषपरिचया क्लान्ताऽसीति वस्त्वधुनापदप्राधान्येन व्यज्यते ।

---

**सायमिति** । उपपतिं संभुज्य तज्जनितश्रमापनयनाय स्नानादि कृतवतीं प्रति ज्ञात-रहस्यायाँ विदग्धाया इयमुक्तिः । सायं रवावस्तोन्मुखे । अनेन स्नानोत्तरमितरकार्याकरणं ध्वन्यते । ननु दिनकृतगृहकृत्येनेदृशः श्रम इत्यत आह । स्नानम् । अङ्गप्रक्षालनम् । उपा-सितं यत्नाच्चिरकालं कृतम् । तथा च दिनकृतगृहकर्मश्रमस्य तेनैव निवृत्तिर्जातेति भावः । सायं स्नानस्य श्रमनिवृत्तिमात्रफलत्वात् । समालेपितं सम्यगासमन्ताल्लेपितं न तु लिप्तम् । तथा च चन्दनलेपकरणकृतोऽपि न श्रम इति भावः । अम्बरमणिः सूर्यः । अस्ताचलस्य मौलिमुल्लङ्घ्य यात इत्यर्थः । क्वचित्तु मूलमिति पाठः । तदा मूलं पश्चिममूलं गत इत्यर्थः । चूलमिति पाठेऽपि स एवार्थः । तेन रात्रिर्जातेति भावः । अत एव सायमित्यनेन न गता-र्थता । तेन लेशतोऽप्युष्णाभावो व्यज्यते । अत्र कुञ्जादिना घनच्छायमार्गे देशे । विस्रब्धं मन्थरमभीतं च । तेन मार्गे त्वरया चलनकृतोऽपि न श्रम इति भावः । अभितो बहिरन्तश्चे-त्यर्थः । अधुना श्रमसामग्र्यभावे तन्निवर्तकसामग्रीसमवधाने च नेत्रद्वंद्वं न विद्यते मीलनस्य व्यतिकरः पौनःपुन्येन प्रवृत्तिर्यत्र तादृशमासितुं न समर्थं भवति । तथा च मीलनपौनःपुन्यं सर्वाङ्गीणश्रमं कथयतीति भावः । स च सामग्र्यन्तराभावेन केवलसौकुमार्यकृत एवेति अहो जगद्विलक्षणमाश्चर्यभूतं तव सौकुमार्यमित्यर्थः । अत्र प्रत्येकपदव्यङ्ग्यानि सौकुमा-र्याश्चर्यत्वोपपादकानि[7] । अत्र प्रकृतपरपुरुषपरिचया क्लान्ताऽसीति युक्तः पाठः । **अधुना-पदप्राधान्येनेति** । अधुनैवायं क्रमो नान्यदा कदाऽपि दृष्ट इति परपुरुषकृतनिर्दयोपभो-गादेवेति गम्यत इति तस्य प्राधान्यं बोध्यम् ।

---

१ ग. °मन्दा ग° । २ ग. °या स्नाताऽसी° । ३ क. ग. °या इय° । ४ ग. °नमुपा° । ५ क. निकृतिर्जा° । ६ ग. °ता । एते° । ७ ग. °नि । अधु° ।

तदप्राप्तिमहादुःखविलीनाशेषपातका।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा॥ ८१॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका॥ ८२॥ (७)

अत्र जन्मसहस्रैरुपभोक्तव्यानि दुष्कृतसुकृतफलानि वियोगदुःखचिन्ताह्लादाभ्यामनुभूतानीत्युक्तम्। एवं चाशेषचयपदद्योत्ये अतिशयोक्ती।

क्षणदाऽसावक्षणदा वनमवनं व्यसनमव्यसनम्।
बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम्॥८३॥(८)

---

वस्तुनाऽलंकृतेर्यथा—**तदप्राप्ति०।** (युग्मम्)

अत्र जन्मसहस्रैरुपभोग्यानि दुष्कृतसुकृतयोः फलानि वियोगदुःखचिन्ताह्लादाभ्यां कयाऽप्यनुभूतानीत्युक्तम्। एवं च दुष्कृतसुकृतराशिफलतादात्म्येनाध्यवसितौ भगवद्वियोगदुःखचिन्ताह्लादौ प्रतीयेते इति निगीर्याध्यवसानरूपातिशयोक्तिद्वयमशेषचयपदाभ्यां द्योत्यते।

अलंकारेण वस्तुनो यथा—**क्षणदा०।**

---

**तदप्राप्तीति।** जगत्सूतिं श्रीकृष्णम्। तत्संभोगाप्राप्त्या महादुःखम्। तच्चिन्तया विपुलाह्लादः। निरुच्छ्वासतयेति। नास्य प्राणाः समुत्क्रामन्ति अत्रैव समवलीयन्त इति श्रुतेर्मोक्षकाले निरुच्छ्वासता। **कयाऽप्यनुभूतानीत्युक्तमिति।** अशेषपातकपुण्यचययोर्भगवदप्राप्तिदुःखतच्चिन्ताह्लादनाश्यत्वोक्तेरिति भावः। **एवं चेति।** तयोः फलभोगनाश्यत्वादिति भावः। **अशेषचयपदाभ्यामिति।** ननु वियोगदुःखचिन्तासुखाभ्यां कथमशेषपापपुण्यनाशस्तेषां स्वस्वफलभोगनाश्यत्वादित्यनुपपत्तेरशेषदुष्कृतसुकृतफलराशितादात्म्याध्यवसायेनैव परिहार इति वाच्यसिद्ध्यङ्गमेतदिति चेन्न। भगवन्माहात्म्यातिशयमादायापि तदुपपत्तेः।

**क्षणदेति।** बतेति खेदे विस्मये वा। भो वीर तव द्विषतां त्वयि पराङ्मुखे सर्वं पराङ्मुखं विपरीतं जातमिति शेषः। तदुपपादयति—क्षणदा रात्रिः। अक्षणदा तद्भिन्ना, अनुत्सवदा च। वनमरण्यम्। अवनं तद्भिन्नं रक्षकं च। व्यसनं व्यस्यति बहुलं भवति तद्द्यूतादि। अव्यसनं तद्भिन्नमवीनां मेषाणामसनं प्रेरणम्। व्यसनं कालक्षेपकं च। तवेति

---

१ क. ख. ग. °विमला°। २ क. सती। ३ ख. ग. °गद्योनि प°। ४ ग. °भोग्यानि सुकृतदुष्कृतफ°। ५ ग. °चिन्तनाल्हा°। ६ ख. एवमशे°। ७ क. ग. °यशब्दद्यो°। ८ क. °गमकम्। ९ क. °तफलराशि ता°।

अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन विधिरपि त्वामनुवर्तत इति सर्वपदद्योत्यं वस्तु ।

तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदलो ।

इअ णववहुआ सोऊण कुणइ वअणं महीसँमुहम् ॥ ८४ ॥ (९)

अत्र रूपकेण[1] त्वया[2]ऽस्य मुहुर्मुहुः परिचुम्बनं[3] तथा कृतं येन म्लानत्वमिति मिलाणा[4]दिपदद्योत्यं काव्यलिङ्गम् । एषु[5] च स्वतःसंभवी व्यञ्जकः ।

---

अत्र पराङ्मुखे त्वयि पराङ्मुखं सर्वमित्यर्थान्तरन्यासेन विधिरपि त्वामनुवर्तत इति वस्तु सर्वपदप्राधान्येन व्यज्यते । ननु नायमर्थान्तरन्यासः । वनं रक्षकमित्यादेर्वाच्यस्यार्थस्यानुपपादकत्वादिति चेन्न । शब्दशक्त्या व्यङ्ग्यस्य क्षणदा क्षणदाभिन्नेति विरोधस्योपपादकत्वेन तथात्वात् ।

अलंकारेणालंकारस्य यथा—**तुह वल्लहस्स०** ।

अत्राधरो म्लानकमलदलमिति रूपकेणालंकारेण त्वयाऽस्य मुहुँश्चुम्बनं कृतं तेन तस्य म्लानत्वमिति काव्यालिङ्गं मिलाणकमलदलपदप्राधान्येन द्योत्यते ।

---

संबन्धसामान्ये षष्ठी । द्वेषकर्मणि द्विषः शतुर्वेति वा षष्ठी । **विधिरपि त्वामिति ।** अर्थान्तरन्यासस्थसर्वपदस्य प्रकृतपरतया पर्यवसितस्यापि व्यञ्जनायामसंकोचेन विधेरप्याक्षेपादिति भावः । अत एव सर्वपदमेतास्मिन्व्यङ्ग्येऽपि प्रधानम् । **तथात्वादिति ।** एतेन शब्दशक्तिमूलो विरोधोऽपि व्यञ्जक इत्यपास्तम् । तस्यार्थान्तरन्यासोत्थापकत्वेन तदङ्गत्वादित्याहुः । अत्र व्यञ्जकस्य सर्वपदस्य नानार्थत्वाभावाद्वस्तुनोऽर्थशक्तिमूलालंकारव्यङ्ग्यता बोध्या ।

**तुहेति ।**

तव वल्लभस्य प्रभाते आसीदधरो म्लानकमलदलम् ।

इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम् ॥

गोसम्मि इति प्रभाते देशी । दलो इति पुंस्त्वं प्राकृते लिङ्गानियमात् । रात्रावतिशयचुम्बितदयिताधरां वधूं प्रति कस्याश्चिदुक्तिः । तव वल्लभस्य दयितस्य प्रातःकालेऽधरो म्लानं यत्कमलदलं तद्रूप आसीदिति सखीवचनं श्रुत्वा नवा वधूर्वदनं मुखम् । लज्जयेति शेषः । तव वल्लभस्येत्यनेन नायकस्य नववधूवशीकारकत्वेनातिचातुर्यं व्यज्यते । प्रभात आसीदित्यनेन तावत्कालं चुम्बनाविरामः । चुम्बनं कृतं येन तस्येति पाठो युक्तः ।

**काव्यलिङ्गमिति ।** म्लानत्वे परिचुम्बनस्य हेतुत्वात् ।

---

१ क. °ण तथा त्व° । २ ग. °या मु° । ३ क. ग. °नं कृ° । ४ ग. °लाणप° । ५ ख. ग. °षु स्व° । ६ क. °पकालं° । ७ क. °हुर्मुहुश्चु° । ८ क. °ङ्ग्ये प्र° । ९ क. पूर्व° । १० ग. °मः । काव्य° ।

राईसु चन्दधवलासु ललिअमप्फालिऊण जो चावम् ।
एकछत्तं विअ कुणइ भुअणरज्जं विजम्भन्तो ॥ ८५ ॥ ( १० )

अत्र वस्तुना येषां कामिनामसौ राजा स्मरस्तेभ्यो न कश्चिदपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैरेव तैर्निशाऽतिवाह्यत इति भुअणरज्जपदद्योत्यं वस्तु प्रकाश्यते ।

निशितशरधियाऽर्पयत्यनङ्गो
दृशि सुदृशः स्वबलं वयस्यराले ।
दिशि निपतति यत्र सा च तत्र
व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥ ८६ ॥ ( ११ )

---

अथ कविप्रौढोक्तिमात्रनिष्पन्नशरीरे व्यञ्जकार्थे वस्तुना वस्तुव्यक्तिर्यथा—**राईसु०** ।

अत्र वस्तुना येषामसौ स्मरो राजा तेषु मध्ये न कश्चिदपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैर्निशाऽतिवाह्यत इति वस्तु त्रिभुवनराज्यपदेन प्राधान्येन व्यज्यते । अखण्डाज्ञाविषयो हि राज्यम् । इवार्थो न व्यञ्जनोपयोगी । प्रत्युत तत्परित्यागेऽतिशयो गम्यते ।

वस्तुनाऽलंकृतेर्यथा—**निशितशरधि०** ।

---

**राईस्विति** । मानिनीं प्रति माननिर्वाहः कठिन इत्येतद्बोधिका सख्युक्तिरियम् ।

रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।
एकच्छत्रमिव करोति त्रिभुवनराज्यं विजृम्भमाणः ॥

य इति प्रकृतः स्मरः । चन्द्रेण धवलासु रात्रिषु ज्योत्स्नीषु ललितं सुकुमारमेव । न तु कमठपृष्ठकठोरम्, आस्फाल्यैव न तु बाणादि संधाय । त्रयाणां भुवनानां राज्यमेकमेव च्छत्रं यत्र तथाभूतमद्वितीयमिति यावत् । अत एव विजृम्भमाणो विस्फुरमाणः । अतिसाहंकारतया वर्तमान इत्यर्थः । **अत्र वस्तुनेति** । चापास्फालनेनैकच्छत्रमिव त्रिभुवनराज्यं करोतीत्यनेनेत्यर्थः । इदं च कविप्रौढोक्त्यैव सिद्धम् ।

**निशितेति** । अनङ्गोऽयं मम निशितः शर इति दृग्विषयया बुद्ध्या सुदृशः शोभनदृशः कामिन्या दृशि स्वबलमर्पयति । कदाऽराले सर्वकामिजनहिंसकत्वात्कुटिले वयसि यौवन उद्धते सति । अत एव स्वार्पितबला दृग्यत्र दिशि लक्षणया तत्संबन्धिनि

---

१ °जा कामस्ते° । २ ग. °स्तेषां न । ३ ग. °रैरेतै° । ४ ख. ग. भुवनराज्यप° । ५ क. °ति त्रि° । ६ क. अत्र वस्तुनेति । पराङ्मुख इत्यन्तेनेत्यर्थः । येषामिति । कामिपदार्थानामित्यर्थः । उपभोगेति । उपभोगपरैरेव तैरित्यर्थः । इदं च कविप्रौढोक्त्यैव सिद्धम् ।

**अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि[1] प्रभवन्तीति व्यतिकरपदद्योत्यो विरोधः ।**

**वारिज्जन्तो वि पुणो सन्दावकदत्थिएण हिअएण ।**
**थणहरवअस्सएण विसुद्धजाई ण चलइ से हारो ॥ ८७ ॥ (१२)**

**अत्र विशुद्धजातित्[2]वलक्ष[3]णहेत्वलंकारेण हारोऽनवरतं कम्पमान एवाऽऽस्त इति ण[4]चलइपदद्योत्यं वस्तु ।**

---

अत्र व्यतिकरमेत्यावस्थाः समुन्मिषन्तीति वस्तुना परस्परविरुद्धा अपि निर्वेदोन्मादादयोऽवस्था भवन्तीति विरोधालंकारो व्यतिकरपदेन प्राधान्येन[5] व्यज्यते ।

अलंकारेण वस्तुनो यथा—**वारिज्जन्तो०** ।

अत्र स्तन[6]भारवयस्येन विशुद्धजातित्वाद्धारो न चलतीति हेत्वलंकारेणानवरतं कम्पमान एव हारोऽस्तीति वस्तु न चलतीति पदेन व्यज्यते ।

---

युवजने तत्रावस्था हसितरुदितप्रलपितमूर्छादयो व्यतिकरं मिश्रीभावमेत्य प्राप्य समुन्मिषन्ति पुनः पुनरुत्पद्यन्त इत्यर्थः । एवं च तत्कृता एता ममावस्था इति कस्यचिन्मित्रं प्रत्युक्तिरियम् । **विरुद्धा अपीति** । युगपदिति शेषः । शनिरशनिरित्यादाविव सामानाधिकरण्याभावात्कथं विरोधालंकार इति चिन्त्यम् । विरुद्धा इत्यस्य कार्यकारणभूता इत्यर्थः । व्यतिकरः पौर्वापर्यविपर्ययः । एवं च विरोधशब्देनात्र तन्मूलातिशयोक्तिरित्यन्ये ।

**वारिज्जेति ।**

वार्यमाणोऽपि पुनः संतापकदर्थितेन हृदयेन ।
स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥

काचित्कांचिदन्यनायिकाव्यवहारकथनेनोपदिशति । हारस्य गाढालिङ्गनान्तरायतया तेन सह तथाऽऽलिङ्गने च स्तनभररूपवयस्यपीडाशङ्कया च यः संतापोऽर्थाद्धृदयस्य तेन कदर्थितेन पीडितेन हृदयेन वार्यमाणोऽप्यस्या नायिकाया हारो न चलति । यतो विशुद्धजातिर्निर्दुष्टमुक्ताजातिमान्श्लेषेण विशुद्धजन्मा च । विशुद्धजातयो हि दुःखिता अपि नाऽऽश्रयं त्यजन्ति । स्तनभरवयस्यत्वेनेति पाठेऽचलनेऽयमपि हेतुः । विपरीतरतावस्थेयम् । **हेत्वलंकारेण** । काव्यलिङ्गेनेत्यर्थः । अत्र ग्रन्थे काव्यलिङ्गस्यैव हेत्वलंकारत्वकथनात्तत्त्वेन व्यवहार इति भावः । **इति वस्त्विति** । तेन च विपरीतरतिचातुर्यातिशयो नायिकाया ध्वन्यते ।

---

१ क. °पि भ° । २ ग. °तिल° । ३ क. ख. °क्षणेन हे° । ४ क. ख. ग. °न चलतीति पदव्यङ्ग्यं । ५ क. °न प्रकाश्यते । ६ क. °नभर° ।

सो मुद्धसामलङ्गो धम्मिल्लो कलिअललिअणिअदेहो।
तीए खन्धाहि बलं गहिअ सरो सुरअसंगरे जअइ ॥८८॥ (१३)

अत्र रूपकेण मुहुर्मुहुराकर्षणेन[1] तथा केशपाशः स्कन्धयोः प्राप्तो यथा रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति[2] खन्धपदद्योत्या विभावना। एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीरः।

णवपुण्णिमामिअङ्कस्स सुहअ को तं सि भणसु मह सच्चम्।
का सोहग्गसमग्गा पओसरअणिव्व तुह अज्ज ॥ ८९ ॥ ( १४ )

---

अलंकारेणालंकारस्य यथा—सो मुद्धसा०।

अत्र सुरतसंगरे धम्मिल्लः स्मर इति रूपकालंकाराभ्यां[3] तथा केशपाशः स्कन्धे[4] पतितो यथा रतिविरतावप्यनिवृत्तेच्छः[5] कामुकोऽभूदिति विभावना स्कन्धपदप्राधान्येन व्यज्यते।

अथ कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरव्यञ्जकार्थध्वनिभेदेषु पदप्राधान्येन वस्तुना वस्तुनो व्यक्तिर्यथा—णवपुण्णिमा०।

---

सोमुद्धेति।

स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः।
तस्याः स्कन्धाद्बलं गृहीत्वा स्मरः सुरतसंगरे जयति ॥

सो सुद्धेति पाठे स शुद्ध इति बोध्यम्। धम्मिल्लः केशपाशः स्मर इति रूपकम्। स्कन्धोंऽसः सेनानिवेशश्च। बलं सामर्थ्यं सैन्यं च। इमे द्वे श्लिष्टरूपके। मुग्धः सुन्दरः। कलितललितेति आसादितमनोहरस्वशरीरः। तादृशस्य हि महापुरुषबुद्ध्या स्वकीयबलदानेन साहायकमाचरन्ति लोकाः। सुरतसंगर इति रूपकम्। जयति सर्वोत्कर्षेण वर्तते। यथा युद्धान्निवर्तमानमपि कंचित्कश्चिन्मित्रभूतोऽन्यतः स्कन्धावाराद्बलं लब्ध्वा तं प्रोत्साहयति तथाऽस्याः पूर्वसुरतवेलायां मुहुर्मुहुः कर्षणेन स्कन्धपतितकेशपाशः साक्षात्स्मर एव स्कन्धाद्बलं लब्ध्वा सुरतभोगनिवृत्तमपि मां मनःप्रोत्साहनेन सुरते प्रवर्तयतीत्यर्थः। अत एवेतरेभ्यः सर्वेभ्यस्तदङ्गेभ्योऽन्येभ्यश्च सुरतोपकरणेभ्य उत्कर्षेण वर्तत इत्युक्तम्। अत एव च स्मरत्वेन रूपणम्। साक्षात्स्मरवत्सुरतप्रवर्तकत्वादिति बोध्यम्। तस्याः स्कन्धाद्बलं गृहीत्वेत्यनेन स्कन्धसंबन्धेनातिशयितशोभालाभ उक्तः। **केशपाशः स्कन्ध इति**। मुहुर्मुहुः कर्षणेनेत्यादिः[6]। स्कन्धयोरित्यर्थः। जात्यभिप्रायेणैकवचनम्। **पतितः**। संबद्धः। **स्कन्धपदेति**। अभिलाषनिवृत्त्या रतिनिवृत्तौ हि बन्धने केशानां स्कन्धसंबन्धो न स्यादिति भावः।

नवेति।

नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि[7] भण मम सत्यम्।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥

---

१ क. ख. ग. °हुराकर्षणे त°। २ ख. ग. °ति स्कन्धप°। ३ क. °कारेण त°। ४ क. स्कन्धयोः प°। ५ क. °वृत्ताभिलाषः का°। ६ ग. °दिः। स्कन्धपदे°। ७ ख. ग. °सि मम भण स°।

**अत्र वस्तुना मयीवान्यस्यामपि प्रथममनुरक्तस्त्वं न तत इति णवे-त्यादि—पओसेत्यादिपदद्योत्यं वस्तु व्यज्यते ।**

**सहि णवणिहुवणसमरम्मि अङ्कवाली सहीएँ णिबिडाए ।**
**हारो णिवारिओ व्विअ उच्छेरन्तो तदो कहं रमिअम् ॥९०॥(१५)**

---

अत्र यथोक्तेन वस्तुनाऽन्यस्यामपि प्रथममनुरक्तस्त्वमभूर्न तत इति वस्तु णवपुण्णिमामि-अङ्कपओसरअणीपदप्राधान्येन द्योत्यते । अत्र प्रदोषरजनीवेत्युपमानैरपेक्ष्येण कथं व्यञ्जक-त्वमिति चिन्त्यम् ।

अत्रैव वस्तुनाऽलंकारस्य यथा—**सहि णवणि०** ।

---

खण्डिताया वृद्धपरवच्चनुरक्तं स्वामिनं प्रतीयमुक्तिः । नवः प्रथमोदितः पूर्णिमासंबन्धी मृगाङ्कश्चन्द्रस्तस्य त्वं कः सखा भ्राता वाऽसि तत्सत्यं भण । तत्संबन्धि त्वं विना क्षणि-कानुरागित्वस्य तत्स्वभावस्य त्वय्यनुपपत्तेः । तथा चन्द्रस्य प्रदोषरजनीव तव का नायिका सौभाग्यं नायकानुरागादि समग्रं संपूर्णं यस्यां तथाभूता । प्रदोषो रजनीमुखम् । प्रदोष एव यथा रजन्यां चन्द्रानुरागसामग्र्यं तथा तव तस्यामित्यर्थः । नवत्वेन चाञ्चल्यं क्षणानुरागि-त्वम् । पूर्णिमाचन्द्रः प्रदोषे रज्यतेऽनन्तरं तु विरज्यते । एवं पूर्णिमामृगाङ्कत्वेन नायिकान्तरानुरागित्वं कलङ्कित्वम् । प्रदोषपदेन प्रकृष्टदोषवत्त्वम् । यत्तु नवः प्रतिपदुदित इति व्याचक्षते तेषां पूर्णिमापदासंगतिः स्पष्टैव । **अन्यस्यामपीति** । मयी-वेत्यादिः ।

**सहीति ।**

सखि नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया ।
हारो निवारित एवोच्छिद्यमाणस्ततः कथं रमितम् ॥

उच्चेरन्तो इति पाठे उच्चलन्नित्यर्थः । सख्या नायिकां प्रतीयमुक्तिः । हे सखि नवसुरत-रणे निबिडया दृढया, अङ्कपाली, आलिङ्गनं सैव सखी, इष्टविधायित्वात् । तयोच्छिद्य-मानो द्वयोस्तृतीयतयाऽधिको भवन्द्वितीयपाठे चलनव्यापारेण निधुवनान्तरायं हृदयाभिघातं कुर्वन्हारो निवारित एव भग्न एव ततस्त्वया नवोढया इतरनवोढाङ्गनारताद्विलक्षणं प्रौढाङ्गनारतादपि वा विलक्षणं कथं रमितमित्यर्थः । अत्र निबिडतयेत्यनेन निवारणसामर्थ्य

---

१ ग. °दोषे य° । २ क. ग. क्षणिकानु° । ३ क. °मू । अन्य° । ४ ग. °रेकपा° । ५ क, °रप्रो° ।

अत्र[1] वस्तुना हारच्छेदानन्तरमन्यदेव रतमवश्यमभूत्तत्कथय कीदृगिति व्यतिरेकः कहंपदगम्यः[2]।

पविसन्ती घरवारं विवलिअवअणा विलोइऊण पहम्।
खन्धे घेत्तूण घडं हाहा णट्ठोत्ति रुअसि सहि किं ति॥ ९१॥

अत्र हेत्वलंकारेण संकेतनिकेतनं गच्छन्तं दृष्ट्वा यदि तत्र गन्तुमिच्छसि तदाऽपरं घटं गृहीत्वा गच्छेति वस्तु किंतिपदद्योत्यम्[3]।

---

अत्र निधुवनसमर इति रूपकस्य व्यञ्जनायामप्रयोजकतया वाच्येन वस्तुमात्रेण हारच्छेदानन्तरं प्रौढाङ्गनारताद्विलक्षणं नवोढायास्ते रतमभूत्तत्कथय कीदृगिति व्यतिरेकालंकारः कहंपदप्रकाश्यः[4]।

अलंकारेण वस्तुनो यथा—पविसन्ती०।

अत्र नष्ट इति रोदिषीति हेत्वलंकारेण संकेतनिकेतनं गच्छन्तं कामुकं दृष्ट्वा यदि गन्तुमिच्छसि तदाऽपरं घटं गृहीत्वा गच्छेति वस्तु किंतिपदप्राधान्येन प्रकाश्यते।

---

रण इत्यनेन दुरवगाहत्वं व्यज्यते। प्रौढाङ्गनारताद्विलक्षणमिति। ततोऽपीत्यर्थः[5]। अत एव नवोढाया ईदृशं रतमिति विस्मयः। कहंपदेति। तस्य विस्मयार्थत्वादिति भावः। नवोढास्वभावविरुद्धगाढालिङ्गनाज्ज्ञायते तद्रतं विलक्षणमिति। अत एव समरपदम्। द्वयोस्तुल्यव्यापारे हि समरो भवतीति। वस्तुनो व्यन्जकत्वं तु तद्भेदैरपेक्ष्येणापि व्यङ्ग्यव्यञ्जनं संभवतीत्येतावन्मात्रेणेत्याहुः।

पवीति।

प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम्।
स्कन्धे घटं गृहीत्वा हा हा नष्ट इति रोदिषि किमिति॥

जलानयनव्याजेन संकेतस्थानं गत्वा शून्यं तद्विलोक्य जलघटं स्कन्धे गृहीत्वा गृहद्वारपर्यन्तं समागतां पश्चात्संकेतस्थानयायिनं स्वप्रियमवलोक्य पुनर्जलानयनव्याजात्संकेतस्थानं गन्तुं विवलितं वदनं कृत्वा द्वारस्खलनव्याजेन घटं क्षिप्त्वा लोकवञ्चनायै रुदतीं सखीं प्रतीयमुक्तिश्चतुराया अपरं घटं गृहीत्वा गच्छाहं सर्वं समाधास्य इत्यभिप्रायगर्भा। हे सखि गृहद्वारं प्रविशन्ती त्वं स्कन्धे घटं गृहीत्वा परावर्तितवदना सती पन्थानं दृष्ट्वा घटो नष्ट इति किमिति रोदिषीत्यन्वयः। रोदने नष्टत्वं हेतुः। घटध्वंसे च विवृत्य पथो विलोकनं हेतुः। किंतिपदेति। हेतुप्रश्नेन हेतुं विना रोदनस्याहार्यत्वलाभा-

---

१ ग. ॰त्र हारच्छेदादनन्तरमेव। २ ख. ग. कथंप॰। ३ क. ग. ख. ॰द्व्यङ्ग्यम्। ४ क. कथंप॰। ५ क. ॰र्थः। अभूदित्यस्यावश्यमित्यादिः। नवो॰।

यथा वा—

विहलङ्खलं तुमं सहि दट्ठूण कुडेण तरलतरदिट्ठिम्।

वारप्फंसमिसेणअ अप्पा गुरुओत्ति पाडिअ विहिण्णो॥९२॥(१६)

अत्र न[1]दीकूले लतागहने कृतसंकेतमप्राप्तं गृहप्रवेशावसरे पश्चादागतं दृष्ट्वा पुनर्नदीगमनाय [3]द्वारोपघातव्याजेन बुद्धिपूर्वकं व्याकुलया त्वया घटः स्फोटित इति[5] मया[6] चिन्तितं तत्किमिति नाऽऽश्वासिषि तत्समीहितसिद्धये व्रजाहं ते श्वश्रूनिकटे सर्वं समर्थयिष्य इति द्वारस्पर्शनव्याजेनेत्यपह्नुत्या वस्तु।

---

यथा वा—विहलङ्खलं०।

अत्र नदीकूले लतागहने कृतसंकेतमप्राप्तं गृहप्रवेशसमये पश्चादागतं कामुकं दृष्ट्वा पुनर्नदीगमनाय बुद्धिपूर्वं द्वारस्पर्शव्याजेन त्वया घटः स्फोटित इति मयावगतम्। तत्समाश्वासं विधाय समीहितसिद्धये व्रज। अहं तव श्वश्रूनिकटे सर्वं समर्थयिष्य इति वस्तु द्वारस्पर्शमिषेणत्यपह्नुत्त्या वारप्फंसमिसेणेति प[10]देन द्योत्यते।

---

दिति भावः। गन्तुमित्यस्य तमित्यादिः। नन्वयं स्वतः संभवी न कव्युक्तिसिद्धोऽत आह। **यथा वेति।**

**विहलेति।**

विशृङ्खलां त्वां सखि दृष्ट्वा कुटेन तरलतरदृष्टिम्।

द्वारस्पर्शमिषेणाऽऽत्मा गुरुक इति पातयित्वा विभिन्नः॥

नदीकूले लतागहने कृतसंकेतमप्राप्तं गृहप्रवेशसमये प[12]श्चादागच्छन्तं कामुकं दृष्ट्वा पुनर्नदीगमनाय बुद्धिपूर्वं द्वारस्पर्शव्याजेन घटं स्फोटितवतीं नायिकां प्रति सख्यास्त्वदभिप्रायोऽवगतो मया तत्समाश्वासं विधाय समीहितसिद्धये व्रजाहं त्वच्छ्वश्रवादिनिकटे सर्वं समाधास्य इत्यभिप्रायगर्भाऽविदग्धजनप्रतारणायेयमुक्तिः। हे सखि विशृङ्खलामतिभारवशाद्विकलामत एवातिशयिततरलदृष्टिं त्वां दृष्ट्वा कुटेन घटेनाऽऽत्मा गुरुर्गरीयांस्त्वादृश्या अपि कष्टदायक इति दुःखेन द्वारस्पर्शमिषेण पातयित्वा विभिन्नो विभेदित इत्यर्थः। अन्तर्भावितण्यर्थोऽयम्। नायं द्वारस्पर्शाद्घटनाशस्त्वया कृतः किं तु गुरुतया परपीडकत्वाद्घटेनैव स्वात्मा विभेदित इत्यपह्नुतिरत्रालंकारः। विशृङ्खलां कामपरवशामिति हृदि स्थितोऽर्थः[13]। **त्वया घट इति।** व्याकुलयेत्यर्थः। **अपह्नुत्येति।** अचेतने चेतनत्वारोपमूलिकयेत्यर्थः।

---

१ क. °दीतीरे ल°। २ ख. °गच्छन्तं दृ°। ३ क. ख. ग. द्वाराघा°। ४ क. ख. ग. °पूर्वं व्या°। ५ ग. °ति तव चेष्टितं मया ज्ञातं। ६ क. ख. °या चेतितं। ७ ख. °टे सम°। ८ ग. °स्तु व्यज्यते। ९ क. °ममाव°। १० क. पदप्राधान्येन। ११ ग. °वः। नच°। १२ ग. °श्चाद्गच्छ°। १३ ग. °र्थः। जो°।

जोह्लाइ महुरसेण अ विइण्णतारुण्णउस्सुअमणा सा ।
वुड्ढावि णवोढव्विअ परवहुआ अहह हरइ तुह हिअअम् ॥ ९३ ॥

अत्र काव्यलिङ्गेन वृद्धां परवधूं त्वमस्मानुज्झित्वाऽभिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेपः परवहुपदप्रकाश्यः । एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः । वाक्यप्रकाश्ये तु पूर्वमुदाहृतम् । शब्दार्थोभयशक्त्युद्भवस्तु पदप्रकाश्यो न भवतीति पञ्चत्रिंशद्भेदाः ।

प्रबन्धेऽप्यर्थशक्तिभूः ॥ ४२ ॥

---

अलंकारेणालंकारस्य यथा—जोह्लाइ० ।

अत्र परवधूत्वेन सा तव हृदयं हरतीति काव्यलिङ्गालंकारेणास्मानुज्झित्वा वृद्धां परवधूमभिलषसीति त्वदाचरितं वक्तुं न शक्यत इत्याक्षेपालंकारः प्राधान्येन परवधूपदद्योत्यः प्रकाश्यते ।

शब्दार्थोभयशक्तिमूलस्तु पदप्रकाश्यो न भवति । तत्र वाक्यस्यैव प्राधान्यात् । एवं पञ्चत्रिंशद्भेदाः ।

प्रबन्धे० ।

---

जोह्लेति ।

ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा ।
वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम् ॥

तरुण्या वृद्धपरवधूरक्तं नायकं प्रतीयमुक्तिः । अहहेति खेदे । वृद्धाऽपि सा नायिका ज्योत्स्नया मधुरसेन वसन्तरसेन मद्यस्याऽऽस्वादेन च वितीर्णे दत्तं तारुण्याय तरुणधर्माय सुरतायौत्सुक्यं मनसि यस्यास्तादृश्यपि यतः परवधूरतो नवोढेव तव हृदयं हरति । परवधूत्वेनैव तव चित्तं सा हरति न तु सौन्दर्यादि निमित्तान्तरमस्तीति भावः । परवधूत्वं हृदयहरणे हेतुरिति काव्यलिङ्गालंकारः । परवधूरित्यनेन त्वमेव तस्यामनुरक्तो न तु तादृश्यपि सा स्वत इति सूच्यते । **आक्षेपालंकारः** । नायकचरितस्याशक्यवक्तव्यत्वरूपः । **पदप्रकाश्यो नेति** । एकस्यैव पदस्य परिवृत्त्यसहत्वतत्सहत्वे वक्तुमशक्ये इति भावः । **पञ्चत्रिंशदिति** । अर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यालक्ष्यक्रमास्त्रयः । लक्ष्यक्रमेषु वस्त्वलंकारभेदेन शब्दशक्तिमूलो द्विविधः । अर्थशक्तिमूलो द्वादशधा । एषां सप्तदशानां वाक्यपदमूलत्वेन द्वैविध्ये चतुस्त्रिंशत् । उभयशक्तिमूल एक इति पञ्चत्रिंशदित्यर्थः ।

---

१ क. ख. °धूं चास्मा° । ग. °धूमस्मा° । २ ख. °क्यत इत्या° । ३ ख. ग. °रवधूप° । ४ ख. °न संभ° । ५ क. °वधूं चाभि° । ६ क. त्वदीयच° । ७ क. °रः । आक्षे° ।

यथा गृध्रगोमायुसंवादादौ । तथा च—

अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसंकुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयंकरे ॥ ९४ ॥
न चेह जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥ ९५ ॥

इति दिवा प्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम् ।

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥ ९६ ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः ॥ ९७ ॥

---

अर्थशक्तिमूलः पदवाक्ययोः प्रबन्धे च । प्रबन्धश्च संघटितनानावाक्यसमुदायः । स च ग्रन्थरूपस्तदवान्तरप्रकरणरूपश्चेति । तत्र पदवाक्ययोरुदाहृतम् । प्रबन्धे यथा गृध्रगोमायुसंवादादौ । तथाहि—अलं स्थित्वा० ।

इति दिवा प्रागल्भ्यवतो गृध्रस्य मृतावेक्षकपुरुषविसर्जनपरं वाक्यमेलकम् ।

आदित्योऽयं० ।

---

अलमिति । दिवा प्रगल्भस्य गृध्रस्य मृतबालावेक्षकपुरुषविसर्जनपरमिदं श्लोकद्वयम् । गृध्रगोमायुसंकुले तैर्व्याप्ते कंकालबहुलेऽस्थिप्राये । अत एव घोरे दारुणे सर्वप्राणित्रासजनके । एवं च निष्प्रयोजना संभावितानिष्टा चैवंविधस्थले स्थितिरनुचितेति भावः ।
ननु बालकोजीवनं संभाव्यते तत्राऽऽह—न चेहेति । इह संसारे कालधर्मो मृत्युस्तं प्राप्तः कश्चित्प्रियद्वेष्यान्यतरोऽपि न जीवितः । अद्य यावदिति शेषः । तथा च तदसंभावितमिति भावः । समाधानायाऽऽह प्राणिनामीदृशी मरणानन्तरमपरावृत्तिरूपा गतिः स्वभावः । तथा च स्वभावस्य दुरतिक्रमत्वात्खेदो न कार्य इति भावः ।
वाक्यमेलकम् । वाक्यसमुदायः ।

आदित्य इति । निशि प्रगल्भस्य गोमायोस्तव्द्यावर्तनपरमिदं श्लोकद्वयम् । हे मूढा अयमादित्यः स्थितोऽस्ति । तथा च न रात्रिचरेभ्यो भयमधुनाऽस्तीति भावः । अतः सांप्रतमधुना स्नेहमर्थान्मृते बाले समीपावस्थितिरूपं कुरुत । मृतस्य जीवनासंभवादफलमवस्थानमत आह—बहुविघ्न इति । राक्षसवेलात्वाद्भूतावेशादिरूपग्रहग्रस्तश्चेत्तदैतन्मुहूर्तापगमे तद्विघ्ननाशोपशान्तावेशो बालः कदाचिज्जीवेदित्यर्थः । अपिः संभावनाद्योतकः । एवं जीवनसंभावनामुत्पाद्य मोहयितुमाह—अमुमिति । अविशङ्किता लोकापवा-

---

१ ख. 'मुपेयिवान् । प्रि' । २ क. वा दुष्टः प्रा' । ३ ग. 'थं बालास्त्य' । ४ क. 'धर्मं मृत्युं प्रा' । ५ ग. 'वः ' आदि' ।

**इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्तननिष्ठं[1] च वचनमिति प्रबन्ध एव प्रथते। अन्ये त्वेकादश भेदा ग्रन्थविस्तरभयान्नोदाहृताः[2]। स्वयं तु लक्षणतोऽनुसर्तव्याः[3]। अपिशब्दात्पदवाक्ययोः।**

**पदैकदेशरचनावर्णेष्वपि रसादयः।**

**तत्र प्रकृत्या यथा—**

**रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स।**
**रुद्दस्स तइअणअणं पव्वईपरिचुंबिअं जअइ॥ ९८॥**

---

इति निशि प्रगल्भस्य गोमायोस्तद्व्यावर्तनपरं श्लोकद्वयमिति प्रबन्ध एव व्यञ्जकः[4] प्रथते। अत्र स्वतःसंभविना वस्तुना गमननिवर्तनरूपवस्तुव्यक्तिः। एवमन्येऽप्येकादश[5] प्रभेदा द्रष्टव्याः।

**पदैकदेश०।**

रसादयो लक्ष्यक्रमाः पदैकदेशे रचनायां वर्णेषु। अपिशब्दात्प्रबन्धे। पदवाक्ययोस्तु 'पदेऽप्यन्ये' इत्यनेनैव प्रतिपादिताः। पदं तावद्द्विविधम्[6]। सुबन्तं तिङन्तं च। तदेकदेशो नाम धातुस्वरूपप्रकृतिभागः प्रकृत्येकदेशः सुप्तिङ्स्वरूपविभक्तिभाग उपसर्गादिरूपश्च[7]। तत्र पदवाक्ययोरुदाहृतं प्राक्। पदैकदेशादिपूदाहियते।

तत्र धातुरूपप्रकृत्यात्मकपदैकदेशे रसादिव्यक्तिर्यथा—**रइकेलि०।**

---

शङ्कारहिता गृध्रस्य मांसलुब्धस्य वाक्यान्मूढाः कथमकस्मादीदृशोऽयं बालस्त्याज्य इति विचाररहिता अमुं कनकवर्णाभं न तु कनकाभम्। तद्गतकाठिन्यस्यापि प्रतिपत्त्यापत्तेः। अनेन मृत्युचिह्नवैवर्ण्याद्यभावः। बालम्। तेन मृत्युकालाभावः। अप्राप्तयौवनम्। तेन परदारगमनादिराहित्येनाऽऽयुःसत्त्वं सूच्यते। ईदृशं कथं त्यजध्वम्। आर्षमात्मनेपदम्। **गमननिवर्तनेति**। द्वंद्वः। **प्रकृत्येकदेशः**। प्रकृतेरेकदेशः। यथाङ्कैरित्यत्र क उदाहरिष्यते। **उपसर्गादीति**। स्वातन्त्र्येणैषामर्थाप्रत्यायकत्वादेकदेशत्वं बोध्यम्। आदिना पुरुषव्यत्ययपूर्वनिपाताद्यः।

**रईति।**

रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति॥

रतिकेलौ हृतं निवसनमर्थाद्गौरीसंबन्धि येन। करकिसलयाभ्यां रुद्धमर्थात्पार्वत्या नयनयुगलं यस्येति बहुव्रीहिद्वयगर्भकर्मधारयः। चण्डीदासस्तु रतिकेलिहृतनिवसनया करकि-

---

१ क. ख. ग. °ष्ठं चेति प्र°। २ ग. °रभिया नोदा°। ३ ग. लक्ष्यतो°। ४ क. °कः। प्रथमतोऽत्र स्व°। ५ क. °श भे°। ६ क. °म्। तिङन्तं सुबन्तं च। ७ क. °रूपः प्र°। ८ ग. प्रतीत्या°।

**अत्र जयतीति न तु[3] शोभत इत्यादि, समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव[2] व्यापारेणास्य पिधानमिति तदेवोत्कृष्टम्[4]। यथा वा—**

**प्रयान्सोऽयमपाकृतः सशपथं पादानतः कान्तया**
**द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः।**
**तावत्प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृतो**
**धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः॥९९॥**

---

अत्र रतिव्यक्तौ ' जि ' धातुरूपप्रकृतेः प्राधान्यम् । यतः स्थगनव्यापारसाम्येऽप्यन्यनेत्रयोः कराभ्यां पिधानमस्य तु लोकोत्तरेण कर्मणेति तदेवोत्कृष्टं धन्यजीवितमिति रत्युत्कर्षप्रयोजकमनया व्यज्यते । अत एव जयतीत्युक्तं नतु शोभत इत्यादि । एवमग्रेऽपि प्रकृत्यादे रसादिव्यञ्जने प्राधान्यं तत्तदर्थव्यञ्जकतयाऽवगन्तव्यम् । नामरूपतदेकदेशे तद्व्यक्तिर्यथा—**प्रयान्सो०** ।

---

सलयाभ्यां रुद्धं नयनयुगुलं यस्येति विग्रहमाह । तत्र निवसनेत्यत्र ह्रस्वश्चिन्त्यः । ईदृशस्य रुद्रस्य पार्वतीपरिचुम्बितं तृतीयं ललाटलोचनं जयति । **जिधातुरूपेति** । प्रकृत्यन्तरस्य सत्त्वेऽप्यव्यञ्जकत्वादिति भावः । उत्कर्षे हेतुमाह । **यत इति** । स्थगनमाच्छादनम् । **लोकोत्तरेणेति** । पिधानोपकरणत्वेनादृष्टत्वात्क्रीडापिधानोभयकारित्वाद्रागातिशयलज्जाहर्षादिसंपद्द्वारा रत्यतिशयपोषकत्वाच्च तत्त्वमिति भावः । **तदेव** । तादृशपिधानवत्तृतीयनयनमेव । **उत्कर्षप्रयोजकमिति** । वास्त्विति शेषः । **अनया** । जिरूपप्रकृत्या । **न तु शोभत इति** । जयतेरेवोत्कर्षे शक्तेः । स च विशिष्य प्रतियोग्यनुपादानात्सर्वप्रतियोगिक एवेति करपिहितापेक्षया चुम्बनपिहित उत्कर्षः प्रतीयत इति भावः ।

**प्रयानिति** । सशपथमित्युभयान्वयि । सोऽयमिति प्रियतरत्वेन प्रसिद्धः प्रेयान् । शपथेन सहितं यथा स्यात्तथा पादयोरानतः कान्तया च सशपथं निराकृतः सन्नुन्मना उत्सुकमना वासगृहात्क्रीडागृहाद्द्वित्राण्येव नाधिकानि पदानि न द्वाराणि यावन्न याति न तु यातस्तावत्कृतप्रणामकं यथा स्यात्तथा धावित्वैव धृतः स्थापितः । धृङ् अवस्थाने । अस्मादन्तर्भावितण्यर्थात्कर्माणि क्तः । अत्र यातीत्युक्तं नतु यात इत्युक्तम् । तेन गमनानुकूलव्यापारदशायामेव तथाभाव इति ध्वन्यते । धावित्वैवेत्यनेन धावनाविषयेऽपि तथाभावकरणादौत्सुक्यातिशयो ध्वन्यते । पाणिसंपुटे प्रणामार्थं कृताञ्जलौ गलन्नीवीनिबन्धो यस्यां क्रियायां तद्यथा भवति तथेति धारणक्रियाविशेषणम् । रागौत्कण्ठ्यात्स्खलतो नीवीबन्धस्य प्रणामाञ्जलिनैवावलम्बनात्तदेवोपायनस्थानीयं कृतमिति भाव इति केचित् ।

---

१ क. न शो°। २ क. ग. °व रूपेणास्यापि°। ३ ख. °रेण स्थगन°। ४ क. ख. ग. °म् तथा-प्रेया°। ५ क. ख. ग. °टलसन्नी°। ६ ख. °नितम्बं धृ°। ७ ग. °जिरू°। ८ क. भावः। पूर्वे हि।

**अत्र पदानीति न तु द्वाराणीति । तिङ्सुपोर्यथा—**

**पथि पथि शुकचञ्चूचारुराभाऽङ्कुराणां**
**दिशि दिशि पवमानो वीरुधां लासकश्च ।**
**नरि नरि किरति द्राक्सायकान्पुष्पधन्वा**
**पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥ १०० ॥**

**अत्र किरतीति किरणस्य साध्यमानत्वं निवृत्तेति निवर्तनस्य सिद्धत्वं तिङा सुपा च । तत्रापि क्तप्रत्ययेनातीतत्वं द्योत्यते । यथा वा—**

---

अत्र द्वारादिपदं परिहृत्य पदानीत्युक्तम् । तेन द्वारपर्यन्तगमनेऽप्यसहिष्णुतयोत्कण्ठातिशयो व्यज्यते ।

तिङ्सुपोर्यथा—**पथि पथि०** ।

अत्र किरतीति तिङा किरणस्य साध्यता । तिङ्योगे साध्यतयैव धात्वर्थोपस्थितेः । निवृत्तेति सुप्प्रत्ययेन निवृत्तेः सिद्धता । सुप्प्रयोगे तथैव प्रकृत्यर्थप्रतीतेः । तत्रापि क्तप्र-

---

त्वरातिशयद्योतनाय धावनक्रियाविशेषणमित्यन्ये । पूर्वं हि कृतप्रणामकस्यापाकरणमधुना प्रणतिपूर्वकं धारणमिति वैपरीत्यं प्रस्युतपदगम्यम् । लसन्नीवीति पाठे गलनमार्थिकम् । अर्थान्तरं न्यस्यति—अहो प्रेम्ण इति । गतिः स्वभावः । प्रियान्कान्तयेत्याभ्यां परस्परं विरहाक्षमत्वं ध्वन्यते । **असहिष्णुतयेति** । व्यङ्ग्ययेति शेषः । **उत्कण्ठातिशय इति** । तेनात्र संभोगपोष इति भावः ।

**पथि पथीति** । आद्यवाक्ययोरस्तीत्यध्याहारः । प्रतिमार्गमङ्कुराणामाभा कान्तिः शुकचञ्चूचारुरस्ति । एवं प्रतिदिशं वीरुधां लतानां लासको नर्तकः पवमानो वायुश्चास्ति । आभ्यां च वाक्याभ्यां नूतनाङ्कुरशोभाशालिवसन्तर्तुसर्वदिक्संचारिमन्दमारुतयोरुद्दीपकयोः संपत्तिरुक्ता । नरि नरि पुरि पुरीत्येतयोः स्थानाख्यप्रमाणेनैकैकस्यां पुरि एकैकस्मिन्नरि सायकपातेन संपूर्णनगरे त्रासात्सर्वासां मानभङ्गः । तथा पुरुषेषु बाणपातेन मानधनाभिः स्त्रीभिरपि मानस्त्यक्त इत्यतीवाखण्डाज्ञाशालित्वं मन्मथस्य द्योत्यते । किरति क्षिपतीत्यर्थः । मानचर्चा मानवार्ता । मानवार्ताऽपि गता किं पुनर्मानो गत इति वक्तव्यमिति भावः । अत्र कार्यकारणयोः पौर्वापर्यविपर्ययरूपा कारणकार्ययोरसामानाधिकरण्येऽपि कार्योत्पत्तिरूपा वाऽतिशयोक्तिरलंकारः ।

**किरणस्येति** । क्षेपणस्येत्यर्थः । औणादिकक्युप्रत्ययान्तः । किरति तमांसीति व्युत्पत्त्याऽस्य मयूख एव शक्तत्वाच्चिन्त्यः किरणपदप्रयोगः । विकरणस्येति वक्तुं

---

१ क. ख. ग. न द्वारादीनीति । २ ग. °हरम्भाङ्कु° । ३ क. ग. °रि च नि° । क. ४ ग. °पि क्तप्रत्य° । ५ क. सुब्योगे । ६ क. °म् । अर्था° । ७ क. ग. °स्परवि° । ८ क. तेन च संभोग इति ।

**लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो**
**निराहाराः सख्यः सततरुदितोच्छूननयनाः।**
**परित्यक्तं सर्वं हसितपठितं पञ्जरशुके-**
**स्तवावस्था चेयं विसृज कठिने मानमधुना ॥ १०१ ॥**

---

त्ययेनातीतता प्रकाश्यत इति विकरणनिवृत्त्योः कारणकार्यभूतयोः पौर्वापर्यविपर्ययरूपातिशयोक्तिप्रकाशो रसोत्कर्षे पर्यवस्यति।

यत्तु 'लटा साध्यत्वं, क्तप्रत्ययेन भूतत्वम्' इति व्याख्यानम्। तदयुक्तम्। सुप्तिङ्भ्यां सिद्धत्वसाध्यत्वव्यक्तिमभिधाय 'तत्रापि क्तप्रत्ययेनातीतत्वम्' इत्यनेन वृत्तिव्याख्यानेन विरोधात्।

अथ सुप्तिङ्विशेषेषु यथा—**लिखन्नास्ते०**।

---

युक्तम्। अत्रायं भावः—तिङः क्रियागतवर्तमानत्वद्योतनद्वारा तद्वृत्तोत्पाद्यमानत्वरूपसाध्यत्वव्यञ्जकत्वम्। एवं निवृत्तपदं निवृत्तिकर्त्रर्थकम्[2]। तदनुवादकेन तदुत्तरसुपा स्वप्रकृत्यर्थविशेषणनिवृत्तौ सिद्धत्वं व्यज्यते। इतरासमभिव्याहृतसुपो निवृत्तिरित्यादौ तद्व्यञ्जकत्वस्य दृष्टत्वात्। निवृत्तिर्भविष्यति निवृत्तः स्यादित्यादौ तथाऽप्रतीतेरितरासमभिव्याहृतेति। **विकरणनिवृत्त्योरिति**। कारणकार्यभूतयोरित्यर्थः[3]। **अतिशयोक्तिप्रकाश इति**। अयं व्यङ्ग्य एव। **रसोत्कर्ष इति**। निवृत्तेः शीघ्रत्वबोधनद्वारा वसन्तस्योद्दीपकत्वातिशयाभिव्यक्तेरिति भावः।

**लिखन्निति**। बहुदिनव्यापिमानवतीं प्रति सख्या इयमुक्तिः। प्राणानां दयितः प्राणदयितः। तेन दयितदुःखेन त्वत्प्राणा अपि दुःखिता भविष्यन्तीति भावः। यद्वा तव प्राणा इव सोऽस्माकं दयित इत्यर्थः। तथा च त्वत्प्राणा इव सोऽपि अस्माकं रक्षणीय इति भावः। ईदृशोऽपि भूमिम्। न तु भूमौ। तेनाऽऽकाङ्क्षितस्य कर्मणोऽनुद्देश्यत्वं ध्वन्यते। लिखन्। न तु लिखतीति। तेन लिखनस्याबुद्धिपूर्वकत्वरूपमप्राधान्यं ध्वन्यते। बहिः। न तु मध्ये। तेन नायकस्यात्युद्वेगः। आस्ते। न त्वासीत्। तेनैवमवस्थानस्य प्रसादपर्यन्तता ध्वन्यते। पञ्जरशुकैर्हसितं पठितमन्यच्च सर्वं परित्यक्तम्। अज्ञानामपीदृश्यवस्था किं पुनरस्माकमिति भावः। पञ्जरेत्यनेनान्यत्र गमनासामर्थ्यम्। शुकेनेत्येकवचनं तु न कृतम्। एकस्य शिक्षादिनाऽपि तथाज्ञानसंभवात्। सर्वमित्यस्य शरीरधारणोपयोगि भोजनादिकमपीत्यर्थः। अत एव कठिने। इयमुत्तरोत्तरवर्धमानासह्यपीडाजनिकाऽधुना

---

१ ग. °द्वृतसाध्य°। २ क. °म्। तत्त्वं क्तेन शक्त्या बोध्यते। तेनोत्पन्नत्वरूपं सिद्धत्वं व्यङ्ग्यम्। तेन च स्वसमानाधिकरणमानचर्चाऽसमानकालिकत्वरूपमात्यन्तिकत्वापरपर्यायमतीतत्वं निवृत्तिगतं व्यङ्ग्यमिति। विकरण°। ३ क. °र्थः। रसो°।

**अत्र लिखन्निति न[1] तु लिखतीति, तथाऽऽस्त इति नत्वासित इति अपि तु प्रसादपर्यन्तमास्त इति, भूमिमिति न तु भूमाविति न[2] हि बुद्धिपूर्व-[3] कमपरं किंचिल्लिखतीति तिङ्सुब्विभक्तीनां व्यङ्ग्यम्[4]। संबन्धस्य यथा—**

**गामारुहम्मि गामे वसामि णअरट्ठिइं ण आणामि ।**
**णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥ १०२ ॥**

---

अत्र लिखन्नित्युक्तम् । न तु लिखतीति । तेन शत्रा लिखनस्याप्राधान्यमबुद्धिपूर्व-कत्वरूपम् । आस्त इत्युक्तम् । न त्वासीदिति । तेन तथाऽवस्थानस्य प्रसादपर्यन्तता तिङ्विभक्त्या व्यज्यते । यद्यपि शतृप्रत्ययः सुपः प्रकृतिरेव तथाऽपि तिङादेशिलङ्कृतितया तिङ्स्त्वेनोदाहृतः[5] । भूमिमित्युक्तम् । न तु भूमाविति । तेन बुद्धिपूर्वकं भूमौ न किंचि-ल्लिख्यत इति सुब्विभक्त्या व्यज्यते ।

**गामारु० ।**

---

वसन्तचन्द्रिकादिभिरुद्दामे मन्मथविलसिते सतीत्यर्थः । मानं विसृज निःशेषेण त्यजेत्यर्थः ।

**शत्रेति ।** आख्यातान्तक्रियाविशेषणत्वे शत्रेतरक्रियेष्टसाधनत्वज्ञानाधीनकृतिसा-ध्यत्वपर्यवसितनान्तरीयककृतिसाध्यत्वरूपमप्राधान्यं स्वप्रकृत्यर्थगतं बोध्यते । अत एव गच्छन्नित्युक्ते किं करोतीति प्रधानक्रियाप्रश्नः संगच्छत इति बोध्यम् । वर्तमानत्वस्य प्रत्ययवाच्यत्वमतेऽपि व्यङ्ग्यमाह । **न त्वासीदिति[6]** । न त्वासिष्टेति पाठो युक्तः । एवं च स्थित्यतीतत्वव्यवच्छेदो व्यङ्ग्य इति भावः । तत्राप्यसमाश्वासादाह—**तेनेति । तेन बुद्धिपूर्वकं भूमाविति।** भूमावित्युक्त आकाङ्क्षितस्य कर्मण उद्देश्यत्वं प्रतीयते । न चात्र तथेति भावः ।

**गामरुहेति ।**

ग्रामरुहाऽस्मि ग्रामे वसामि नगरस्थितिं न जानामि ।
नागरिकाणां पतीन्हरामि या भवामि सा भवामि ॥

गामरि[7] अम्मीति पाठे ग्रामीणाऽस्मीति बोध्यम् । प्रणयकलहे का त्वमस्मदग्र इति वदन्तीं नागरिकां प्रति ग्राम्यस्त्रिया इयमुक्तिः । ग्रामरुहा ग्रामजाता । ग्रामे वसामि । अतो नगरस्थितिं नगरमर्यादां वैदग्धीं न जानामि । उत्पत्तिमारभ्याद्य यावद्ग्राम एवाविरतं वासान्नगरस्थितिगन्धोऽपि न ज्ञायत इति भावः । नागरिकीणामिति[8] शेषे षष्ठी । तत्संबन्धेन तत्पतिषूत्कर्षो व्यङ्ग्यः । यद्वा नागरिकीणामिति षष्ठी, अनादरे । ताः पश्यन्तीरनादृत्य

---

१ क. ख. ग. न लिखतीति अपि तु प्रसादपर्यन्तमास्ते इति तथाऽऽस्त इति न त्वासित इति भू° । २ ख. न बुद्धिपूर्वकं किं° । ३ क. °पूर्वं रूपकं किं° । ग. °पूर्वकं रूपकं किं बिलिख° । ४ ख. व्यञ्जकत्वम् । ५ क. °त्वेनैवोदा° । ६ क. °षणेन श° । ७ ग. °ति । एवं । ८ ग. गामारि° । ९ ग. °ति षष्ठ्यनादरे ।

अत्र नागरिकाणामिति षष्ठ्याः ।

रमणीयः क्षत्रियकुमार आसीदिति कालस्य । एषा हि भग्नमहेश्वर-कार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः । वचनस्य यथा—

ताणँ गुणग्गहणाणं ताणुक्कंठाणँ तस्स पेम्मस्स ।
ताणँ भणिआणँ सुन्दर एरिसिअं जाअमवसाणम् ॥ १०३ ॥

अत्र गुणग्रहणादीनां बहुत्वं प्रेम्णश्चैकत्वं द्योत्यते । पुरुषव्यत्य-यस्य यथा—

---

अत्र नागरिकाणामिति षष्ठ्या पतिपदार्थे तादृशकलाभिज्ञतादिरूप उत्कर्षः प्रकाश्यते । 'रमणीयः क्षत्रियकुमार आसीत्' इत्यत्र लब्धाऽतीतकालविहितेनोचितं तदीयहिंसायाः सुकरत्वं व्यञ्जयता प्राधान्येन धूर्जटिधनुर्भङ्गजन्मा भार्गवक्रोधः प्रकाश्यते ।

वचनविशेषो यथा—ताणँ गुण० ।

अत्र गुणग्रहणादीनां प्रेमहेतूनां नानाप्रकारत्वेऽपि कार्यं प्रेमैकजातीयमेव न कदा-

---

तासां पतीन्हरामीत्यर्थः । अत्र नागरिकानित्यपहाय नागरिकीणां पतीनित्युक्त्या तेषु चातुर्यातिशयो द्योत्यते । तेन च स्वस्यातिचातुर्यं व्यङ्ग्यम् । अपरे तु तद्भर्तृ-भिस्ता अनादृत्य तत्पतीन्हरामीत्यर्थः । पतिकर्तृकेऽनादरेऽस्याः प्रयोजककर्तृत्वमित्याहुः । **षष्ठ्येति** । नगरभवत्वेनातिचतुराणां पतीनित्यर्थबोधनद्वारेत्यर्थः । तेन च स्वोत्कर्षो व्यङ्ग्यः । पश्यन्तीरनादृत्येति व्यङ्ग्यमित्यन्ये । पर्यन्ते सर्वव्यङ्ग्यो रस इति बोध्यम् । लब्धाऽतीतकालेति पाठः । लुङेति अयुक्तः पाठः । **सुकरत्वं व्यञ्जयतेति** । स्वक्रोधकलि-तस्य स्थितौ वर्तमानकालभविष्यत्कालसंबन्धव्यवच्छेदव्यञ्जनद्वारेति भावः ।

**ताणेति** ।

तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।
तासां भणितीनां सुन्दरेदृशं जातमवसानम् ॥

एआरिसमिति पाठ एतादृशमित्यर्थः । पूर्वं बहुतरगुणश्रवणादिभिरनुरागातिशयं प्रक-टयति अनन्तरमन्यत्राऽऽसक्ते नायके कस्याश्चिदुक्तिः । तच्छब्दा विशिष्यानिर्वचनीयार्थाः । उत्कण्ठानां मम सांनिध्ये जातानामित्यर्थः । भणितीनां त्वमेव जीवितसर्वस्वमित्यादीनाम् । प्रेम्णस्तादृशत्वकर्तृकगुणग्रहणादिजन्यस्य मद्वृत्तेस्त्वद्विषयस्य प्रेम्ण इत्यर्थः । ईदृशमेवं-विधापराधकलुषितम् । अवसानं परिपाकः । **एकजातीयमेवेति** । सततमविच्छेदेन

---

१ क. ग. °भ्रमाहे° । २ क. °तेनाचिरं त° । ३ क. प्रकाश्यते । ४ क. °म् । षष्ठ्ये° । ५ ग. ममाऽऽसां° । ६ ग. °नां सैव जी° । ७ क. °ति । प्रक° ।

रे रे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिर-
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि।
किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमा-
मेषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ ॥१०४॥

अत्र प्रहासः। पूर्वनिपातनस्य यथा—

---

चिदन्यथाभावं प्राप्तमिति बहुवचनैकवचनाभ्यां व्यज्यते।

पुरुषव्यत्ययस्य व्यञ्जकत्वं यथा—रे रे चञ्चल०।

अत्र त्वं मन्येऽहं विहरिष्यसे इति 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच' (पा० सू० १।४।१०६) इतिसूत्रेण युष्मदस्मदोर्योग उत्तममध्यमयोर्विपर्ययेण विधानं प्रहासमभिव्यनक्ति।

---

प्रकर्षनिकर्षराहित्यात्परमोत्कृष्टमित्यर्थः।

**रे रे इति**। साक्षेपसंबोधनमिदम्। चञ्चललोचनायामञ्चिता गमिता रुचिरभिलाषो येन तथाभूतः। यद्वा चञ्चलाभ्यां लोचनाभ्यामञ्चिता प्रकटीकृता, अर्थान्नायिकया रुचिरभिलाषो यत्र तत्। तेन चञ्चलप्रकटीकृताभिलाषस्यास्थिरत्वम्। अत एव तत्प्रतियोगितया स्थिरप्रेमाण-मिति वक्ष्यति। स्थिरं प्रेम यत्र तं महिमानं विषयानासक्त्यादिना लब्धमुत्कर्षं प्रमुच्य त्यक्त्वा, एणनयनां तत्सदृशनयनामालोक्य किं कस्मान्नृत्यसि नृत्यप्रेक्षितृजनानवलोक्य नर्तक इव किं हर्षादुल्लोलं भवसीत्यर्थः। अत्रैणीमिति विहायैणेति पुंलिङ्गेन यथा त्वयि नयनव्यापारादि करोति एवमन्यत्रापि पुरुषे यथा वा त्वं नयनयोर्व्यापारमस्यां करोष्येवम-न्येऽपि पुमांस इति नास्यां साधारण्यामनुराग उचित इति सूचयति। त्वं मन्ये विहरिष्यसे। अहं विहरिष्य इति किं त्वं मन्यस इत्यर्थः। प्रहासे च मन्योपपदे (पा० सू० १। ४।१०६) इति मध्यमोत्तमयोर्व्यत्यासः। बतेति खेदे। हतां निन्दिताम्। अन्तराशा-मन्तर्विद्यमानामाशां विहरणविषयिणीमित्यर्थः। एषा स्त्रीरूपा संसारवारांनिधौ मज्जनायेति शेषः। कृता विधात्रेति शेषः। एवं च परिणामविरसत्वाद्धर्षो न युक्त इति भावः। **प्रहासमभिव्यनक्तीति**। प्रहासे च नोत्तमपुरुषस्य शक्तिः। ततस्तदप्रतीतेः। तस्मा-द्व्यञ्जकानुशासनमेव तादिति भावः। तेन च शान्तरसः प्रकृष्यते। अत एव प्राक्पदैकदे-शादीनामसंलक्ष्यक्रमव्यञ्जकत्वमेवोक्तं संगच्छते। एवं सर्वत्र बोध्यम्।

---

१ क. त्वं। २ ग. °वलोकनेन नर्त°। ३ क. °मस्याः क°। ४ क. °क्तिः। प्रहासे चोत्य इति व्याख्यानात्। तस्मा°। ५ ग. °व्यञ्जकत्व°।

येषां दोर्बलमेव दुर्बलतया ते संमतास्तैरपि
प्रायः केवलनीतिरीतिशरणैः[1] कार्यं किमुर्वीश्वरैः ।
ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमा-
स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥१०५॥

अत्र पराक्रमस्य प्राधान्यमवगम्यते[2] । विभक्तिविशेषस्य यथा—

प्रधनाध्वनि धीर धनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् ।
दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥ १०६ ॥

---

पूर्वनिपातादयः पदैकदेशधर्मत्वात्पदैकदेशा एव गण्यन्ते । पूर्वनिपातस्य यथा—**येषां दोर्बल०** ।

अत्र[3] चाटुके पराक्रमनयेत्यत्र नयस्याल्पाच्तरत्वेन पूर्वनिपातमविधाय पराक्रमस्य तथा-भावोऽभ्यर्हितत्वं द्योतयति ।

उपपदविभक्तिविशेषस्य यथा—**प्रधनाध्वनि०** ।

---

**येषामिति** । येषां राज्ञां दोर्बलमेव बाहुबलमेव । एतेन नयव्यवच्छेदः । ते दुर्बल-तया संमताः । नीतिज्ञानां वृद्धानामिति शेषः । प्रमादादिसंभवात् । ननु किं तर्हि केवलनीतिविद एव समीचीनाः । नेत्याह—तैरिति । तैरप्युर्वीश्वरैः किं कार्यम् । न किमपीत्यर्थः । तैः कैः । प्रायो बहुधा केवलं नीती राजधर्मादिशास्त्रं रीतिस्तत्प्रतिपादितो वृत्तिप्रकारस्तन्मात्रशरणैः । बलवद्भिस्तत्कालं झटित्येव धर्षणादिति भावः । के तर्हि समी-चीनास्तत्राऽऽह—य इति । हे क्ष्माशक्र ये पुनः पराक्रमनययोः स्वीकारेण कान्तः सुन्दरः क्रमः पूर्वं पराक्रमस्ततस्तदाच्छिन्न एव नय इत्याचारक्रमो येषां ते । तर्हि तानेवाऽऽश्रयस्वे-त्यत्राऽऽह—ते स्युरिति । त्रिजगति भुवनत्रयेऽपि न स्युरेव । यदि वा स्युर्द्वित्रास्तथाऽपि भवादृशाः पवित्रा नैवेत्यर्थः[4] । अत्र स्युरित्यत्र काकुः । नेति शेषस्याध्याहारो वा बोध्यः । **चाटुके** । राजस्तुतौ । **अभ्यर्हितत्वम्** । प्राधान्यरूपम् । वस्तुतोऽभ्यर्हितस्य हि पूर्वनि-पातो विधीयते न तु तत्र तद्विधानमिति भावः ।

**प्रधनेति** । वीरधनुःसंबन्धिध्वनियुते रण एव मार्गः प्रवेशनिःसरणहेतुत्वात्तस्मिन्वि-धुरैः शत्रुभिर्दिवसं व्याप्यायोधि । अत्यन्तसंयोगे द्वितीया । तव शत्रूणां युद्धेन नेष्ट-प्राप्तिरिति भावः । हे नररक्षक भवान्दिवसेन विधिसिद्धयोरीश्वरसिद्धयोः साधुवादस्य विधिसिद्धस्यानाहार्यस्य वा साधुवादस्य पदं स्थानं यथा तथाऽयुद्ध । अपवर्गे[5] द्योत्ये

---

१ क. °तिकुशलैः का° । २ क. ख. ग. °धान्यं ग° । ३ क. °त्र प° । ४ क. °र्थः । चाटु° । ५ ग. °र्गे तृ° ।

**अत्र दिवसेनेत्यपवर्गे[1] तृतीया फलप्राप्तिं[2] द्योतयति ।**

**भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं**
**दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।**
**साक्षात्कामं नवमिव रतिर्मालती माधवं**
**यद्गाढोत्कण्ठा[3]ललितलुलितैरङ्गकैस्ताम्यतीति ॥ १०७ ॥**

---

अत्र वीररसात्मनि भवान्दिवसेनायुद्धेति 'अपवर्गे तृतीया'। अपवर्गश्च फलप्राप्तौ क्रियापरित्यागः । अतो भवत्पदार्थस्य युद्धरूपक्रियाया यत्फलं विजयस्तत्प्राप्तिस्तृतीयया द्योत्यते । यस्तु 'युद्धविधीत्यादि क्रियाविशेषणम्' इति व्याख्यातवान्स च्छन्दोभङ्गमपि नाज्ञासीदिति ।

प्रत्ययरूपस्य प्रकृत्येकदेशस्य यथा—**भूयो भूयः०** ।

---

तृतीया[4] । अयुद्धायोधीति तिङ्प्रक्रमभङ्गोऽप्येतदनुकूल एव । **फलप्राप्ताविति** । फलसिद्धावेवोपायेच्छानिवृत्तेरिति भावः । एवं च नेदमपवर्गशरीरघटकम् । किं तु तदुपपादकम् । अत एवाग्रेऽस्य व्यङ्ग्यतोक्तिः—तृतीयया द्योत्यत इति । यद्वा, एषां प्रत्ययादीनां तत्तदर्थपुरस्कारेणानुशासनविहितानामपि न तत्तदर्थवाचकत्वं गौरवादन्यलभ्यत्वाच्चेति व्यङ्ग्यत्वम् । एवं च व्यङ्ग्यार्थबोधकमेवानुशासनम् । अत एव तत्र तत्र द्योत्यत इति वृत्तिकृतो व्याचख्युः । इदमुपलक्षणम्[5] । अत्यन्तसंयोगविहितद्वितीययाऽपि शत्रूणां फलप्राप्तिर्व्यज्यते । अत्यन्तसंयोगस्य तावत्येव पर्याप्तेः फललाभे क्रियानाचरणादिति । **छन्दोभङ्गमपीति** । भवानित्यस्यायोधीत्यनेनानन्वयायोग्यत्वमप्यर्थः ।

**भूय इति** । मालतीमाधवे 'कथितं च नो मालतीधात्रेय्या लवङ्गिकया' इति चूर्णकमुपन्यस्य कामन्दकीवचनमिदम् । भवनवलभी गृहाच्छादनवक्रदारु । तत्र तुङ्गं महदुच्चं च यद्वातायनं गवाक्षं तत्र स्थिता रतिरिव मालती भूयो भूयो वारं वारं सविधयाऽर्थान्मालतीतातगृहसंनिहितया नगरीसंबन्धिरथ्यया राजमार्गेण पर्यटन्तं माधवं नवं काममिव । साक्षात् । न तु चित्रादौ । तेन रागौत्कट्यम् ।

इन्द्रजाले च चित्रे च साक्षात्स्वप्ने च दर्शनम् ।

इत्युक्तेः । दृष्ट्वा दृष्ट्वा पुनः पुनर्दृष्ट्वा ललितैः सुन्दरैः, लुलितैः स्विन्नैरत एवाङ्गकैरल्पैरनुकम्प्यैर्वाऽङ्गैस्ताम्यति[6] ग्लायतीत्यर्थः । नवं काममिति प्रसिद्धकामापेक्षया व्यतिरेकः । दृष्ट्वा दृष्ट्वेति वीप्सया रागौत्कट्यम् । ललितललितैरिति पाठेऽतिमनोरमैरित्यर्थः । लुलितलुलितैरिति पाठेऽतिस्विन्नैरित्यर्थः । अत्रानुकम्पाव्यङ्ग्येन सौकुमार्येण दुःखासहिष्णुत्वाभिव्यक्तिद्वारा विप्रलम्भोत्कर्षः । वलभी गृहाच्छादनवक्रदारु । सज्जेति प्रसिद्धम् । वलभी

---

१ क. °नेति ह्यप° । २ क. °प्तिं दर्शय° । ३ क. ग. °ण्ठालुलितललि° । क. °ण्टाल. लित° । ४ क. °या । फल° । ५ ग. °वः । इदमुप° । ६ ग. °रङ्गैस्ता° ।

अत्रानुकम्पानुवृत्तेः करूपतद्धितस्य ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥ १०८ ॥

अत्र प्रशब्दस्योपसर्गस्य ।

कृतं च गर्वाभिमुखं मनस्त्वया
किमन्यदेवं निहताश्च नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमा-
न्न यावदायात्युदयाद्रिमौलिताम् ॥ १०९ ॥

---

अत्राङ्ककैरिति कस्वरूपतद्धितेनाल्पार्थकेनानुकम्पातिशयो व्यज्यते ।

उपसर्गरूपस्य तदेकदेशस्य यथा—**परिच्छेदातीतः०** ।

अत्र प्रध्वंसादिति प्रशब्दः प्रकृत्येकदेशः प्रकर्षद्योतकः । उपसर्गाणामवाचकत्वात् ।

निपातरूपपदैकदेशस्य यथा—**कृतं च गर्वा०** ।

---

छादने वक्रदारुणीत्यमरादित्याहुः । **अल्पार्थकेति** । तस्यैव झटिति प्रतीतेरिति भावः । अनुकम्पार्थकत्वेऽपि व्यङ्ग्यमुक्तमेव ।

**परिच्छेदेति** । तत्रैव मकरन्दं प्रति माधवस्य स्वावस्थाकथनमेतत् । परिच्छेद इयत्तामतिस्तद्रहित इत्यर्थः । सकलानां सामान्यविशेषशाक्तलाक्षणिकव्याञ्जनिकानां वचनानामविषयः । तैर्निर्वक्तुमशक्य इति भावः । पुनरन्यदा कालान्तरेऽस्मिञ्जन्मन्यनुभवपथं तद्विषयत्वं यो न प्राप्त इत्यर्थः । विवेकप्रध्वंसादिति । विवेको दोषगुणविभागः । प्रशब्देन समूलोन्मूलनलक्षणः प्रकर्षस्तेन मोहप्रकर्षस्तेन च रागातिशयस्तेन च विप्रलम्भातिशयो व्यङ्ग्यः । तद्धेतुकामुपचितिं वृद्धिं प्राप्तो यो महामोहः सकलविषयाणामज्ञानं विपरीतज्ञानं वा यत्र तादृशश्चासौ गहनश्च । दुर्लङ्घ्य इत्यर्थः । ईदृशः कोऽप्यनिर्वचनीयो विकारोऽन्तरन्तःकरणं जडयति विषयग्राहिवृत्तिविषये स्तब्धं करोतीत्यर्थः । **प्रकर्षद्योतक इति** । प्रकर्षश्च समूलोन्मूलनरूपः ।

**कृतमिति** । त्वया गर्वाभिमुखमहंकाराभिमुखम् । न त्वहंकारवत् । मनः कृतम् । नोऽस्माकं द्विषश्च निहताः । न तु निहनिष्यन्ते । एवमेवं सति अन्यत् शस्त्रादिग्रहणं युद्धादिकं नीत्यादि वा किमफलमित्यर्थः । तत्र व्यतिरेकेण दृष्टान्तमाह—तमांसि तावत्तिष्ठन्ति यावदंशुमान्सूर्य उदयाद्रेर्मौलितां मस्तकतामित्यर्थः । उदितसूर्य विनोदयाद्रि-

---

१ ख. °पदं यो । २ च. तनुते । ३ क. °स्य पदैक° । ४ क. °गः । उपचि° ।

अत्र तुल्ययोगिताद्योतकस्य 'च' इति निपातस्य ।

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
गस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।
वन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥ ११० ॥

---

अत्र चद्वयेन मनोगर्वाभिमुखीकरणशत्रुहननयोरेककालतारूपः समुच्चयो द्योत्यते[1] । यद्यपि चेति भिन्नमेव पदं न त्वन्यस्यैकदेशस्तथाऽपि केवलस्य तस्यासाधुत्वात्पदैकदेशोपचा[2]रेणोदाहरणम् । अत्रैवोक्तं भोजराजेनोपमाप्रकरणे—'न हीवादेः सार्थकत्वेऽपि पृथक्पदतामनुशास्ति' इति । एतेन तिङन्तसमभिव्याहृता उपसर्गा अपि व्याख्याताः ।

अथ बहूनां यथा—रामोऽसौ भुवनेषु० ।

---

रप्यमौलिजनवन्न शोभत इति भावः । एतेन त्वां विनाऽयं लोकोऽपि तथा न शोभत इति ध्वनितम् । तथाभूते तु तस्मिन्न तिष्ठन्तीत्यर्थः । **चद्वयेनेति** । यद्यप्येकश्चोऽपि समुच्चयद्योतकस्तथाऽपि प्रकृताभिप्रायमेतत् । **समुच्चय इति** । अयमेव तुल्यकालं योगितेति व्युत्पत्त्या तुल्ययोगिताशब्देनोक्तः । तेन वीरप्रकर्षः । न चैवं समुच्चयालंकारस्य वाच्यत्वं न स्यात् । व्यञ्जकचादिसत्त्वे वाच्यत्वं तदभावे व्यङ्ग्यत्वमिति विशेषात् । विरोधवत् । प्रकृते च नैतदादाय ध्वनित्वं किंत्वेतद्व्यङ्ग्यवीरप्रकर्षमादायेति बोध्यम् । वीरप्रकर्षोऽपि समुच्चयव्यङ्ग्यतुल्ययोगिताद्वारा पौर्वापर्यविपर्ययरूपातिशयोक्तिद्वारा वेत्याहुः । तिङन्तसमभिव्याहृता इति पाठः ।

**राम इति** । रावणमुद्दिश्य बिभीषणोक्तिः । रामः सकलभुवनजनमनोरमणः । एतेन सर्वे तद्धितकारिण इति व्यज्यते । असौ खरदूषणादिहन्तृत्वेनातिप्रसिद्धो विलक्षणधैर्यगाम्भीर्यादिशाली च भावनया प्रत्यक्षायमाणश्च । विक्रमगुणैरिति । केवलं प्रसिद्धिं प्राप्त इत्युक्तौ सदोषगुणैरपि प्रसिद्धिसंभवः । यथा संबोध्य रावणस्य । तन्निवृत्त्यर्थं गुणैरिति । न केवलं गुणैरपि तु विक्रमजैः । एतेन सीतादानस्याऽऽवश्यकत्वं व्यज्यते । साऽपि न ग्रामे न नगरे नापि भुवने किं तु भुवनेषु । तेष्वपि न कृशाम् । किं तु पराम् । तेनाज्ञातत्वनिरासः । यद्वा विक्रमगुणैः प्रकृष्टां सिद्धिं जयलक्षणां भुवनेषु प्राप्त इत्यर्थः । एतेन सर्वथाऽपि युद्धेऽजेयत्वं ध्वन्यते । तमपि यद्देवो न जानाति तदस्मद्भाग्यविपर्ययादेव न तु त्वद्भाग्यविपर्ययात् । त्रैलोक्यनाथतादृशमहापुरुषहस्तेन मरणेऽपि मोक्षलक्ष्मीविलासलाभेन तस्यापि भाग्यफलत्वात् । अस्माकं पुनश्चिरकालजीविनां त्वादृशप्रभुविपद्-

---

१ क. व्यज्यते । २ क. देशत्वोप° । ३ क. एवं च ति° । ४ ग. °र्थः । समुच्चय इति । तेन वीर° । ५ क. °ग्यपौ° । ६ क. °द्वारेत्याहुः । सार्थकत्वेऽपीत्यस्यार्थद्योतकत्वेऽपीत्यर्थः । तिङन्त° ।

**अत्रासाविति भुवनेष्विति गुणैरिति सर्वनामप्रातिपदिकवचनानां न त्वदिति न मदित्यपि त्वस्मादित्यस्य सर्वाक्षेपिणो व्यञ्जकत्वं भाग्यविपर्ययादित्यन्यथासंपत्तिमुखेन, न त्वभावमुखेनाभिधानस्य ।**

**तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे ।**
**अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥ १११ ॥**

---

अत्रासाविति सर्वनाम्नः । भुवनेष्विति न तु देशेष्विति । भुवनेष्विति भुवनरूपप्रातिपदिकस्य बहुवचनस्य च विक्रमगुणैरिति न तु गुणेन दोर्षैर्वेति प्रातिपदिकवचनयोर्व्यञ्जकत्वम् । किं चास्मद्भाग्येत्यत्र न त्वद्भाग्येति न वा मद्भाग्येति कृतम् । तेनास्मदित्यस्य बहुवचनसिद्धतया सर्वाक्षेपकत्वम् । तथा भाग्यविपर्ययादित्यन्यथासंपत्तिमुखेनोक्तम् । न त्वभाग्यादित्यभावमुखेन । अतस्तथाविधानेनाभाग्यविरहेऽपि भाग्यान्येव तादृशत्वेन परिणतानीति व्यज्यते ।

**तरुणिमनि०**

---

र्शनात्त्वद्वियोगाच्च निरन्तरदुःखदावानलपच्यमानानां परं भाग्यविपर्यय इति भावः । यदि परमिति निपातसमुदायोऽवधारणार्थः । देवो दिव्यज्ञानवानपीत्यर्थः । अत्र भाग्यविपर्ययादित्युक्तं न तु अभाग्यादिति । तेन त्वादृशप्रभुलाभात्सार्वदिकातिशयसुखलाभेनाभाग्यविरहेऽनुमितेऽपि भाग्यान्येव विपरीतफलदत्वेन परिणतानीति ध्वनिः । अस्मद्भाग्येत्यनेन समस्तरक्षःकुलस्यैव तथात्वं प्रतीयते । प्रसिद्धिहेतुभूतं विक्रमगुणोदाहरणमाह—बन्दीति । बन्दी वैतालिकः । एकबाणहत्या जातानि यानि श्रेणीभूतविशालतालानां विवराणि तदुद्गीर्णैरित्यर्थः । एकबाणाहतेति पाठः स्पष्टः । रामेण किल सुग्रीवप्रत्ययाय सप्ततालवृक्षा एकबाणेन भिन्ना इति प्रसिद्धिः । **सर्वनाम्न इति** । षष्ठ्यन्तानां व्यञ्जकत्वमित्यनेनान्वयः । **दोर्षैर्वेति** । यथा रावणस्येत्यर्थः । **व्यञ्जकत्वमिति** । तच्च यथा तथोक्तमेव । **सर्वाक्षेपकत्वमिति** । समस्तरक्षःकुलबोधकत्वमित्यर्थः । आक्षेपोऽत्र व्यञ्जना । तेन चाज्ञाने सकलरक्षःकुलक्षयो भावीति ध्वन्यते । **अन्यथासंपत्तीति** । विद्यमानैव संपत्तिरनिष्टेन[3] निवृत्तिमत्त्वेन प्रतीयत इत्यर्थः । **अभावमुखेनेति** । तथोक्तौ हि भाग्यस्य सार्वदिकाभावप्रतीतौ संपत्तेरपि तथाऽभावः प्रतीयेतेति भावः ।

**तरुणीति** । एषा चकितहरिणचञ्चलनयना । चकितो भीतः । तेन चक्षुषोश्चाञ्चल्यातिशयः । सकलललनामौलिमधिवसति । कस्मिन्सति । तरुणिमनि कलां कटाक्षविक्षेपाद्युपचयरूपां कलयति शिक्षयति सति । अर्थान्नायिकायै । यद्वा तरुणिमनि कलामुपचयं कलयति प्राप्तवति सतीत्यर्थः । पुनः कस्मिन्सति । शिष्यभूतभ्रुवोरग्रे गुरोर्मदनधनुषः समीपे पठति सति । अर्थात्कलाः । अत्रेमनिचा प्रकृत्यर्थस्य नवत्वम् । पूर्वपदार्थप्रधानाव्ययी-

---

१ ख. °पिणा भा° । ग. °पिणो भा° । २ क. °नेति° । ३ ग. °निष्टनि° ।

**अत्रेमनिजव्ययीभावकर्मभूताधाराणां स्वरूपस्य, तरुणत्व इति धनुषः समीप इति मौलौ वसतीति त्वादिभिस्तुल्येऽप्येषां वाचकत्वेऽस्ति कश्चित्स्वरूपस्य विशेषो यश्चमत्कारकारी स एव व्यञ्जकत्वं प्राप्नोति। एवमन्येषामपि बोद्धव्यम्।**

**वर्णरचनानां व्यञ्जकत्वं गुणस्वरूपनिरूपण उदाहरिष्यते। अपिशब्दात्प्रबन्धेषु नाटकादिषु। एवं रसादीनां पूर्वगणितभेदाभ्यां सह षड्भेदाः।**

**भेदास्तदेकपञ्चाशत्।**

---

अत्र तरुणिमनीतीमनिचस्तरुणत्वपदेनानुमदनधनुरित्यव्ययीभावस्य धनुःसमीप इत्यनेन मौलिमधिवसतीति कर्मभूताधारस्य मौलौ वसतीत्यनेन तुल्येऽपि वाचकत्वेऽस्ति कश्चित्स्वरूपस्य विशेषो यश्चमत्कारकारी स एव व्यञ्जकः। तत्र त्वशब्देन प्रकृत्यर्थस्य प्रौढत्वं व्यज्यते। इमनिचा तु तद्व्यतिरेको नवत्वम्। धनुषः समीप इत्यत्र धनुषोऽत्यन्तं गुणीभावः। अव्ययीभावे तु पूर्वपदार्थप्राधान्येऽप्युत्तरपदार्थस्य किंचिदेवाप्राधान्यम्। कर्मभूताधारस्थले तु व्याप्तिरवगम्यत इत्यवसेयम्। एवमन्येषामपि बोद्धव्यम्।

वर्णरचनयोर्व्यञ्जकत्वं गुणस्वरूपनिरूपण उदाहरिष्यते। प्रबन्धे तु नाटकादौ रसादिव्यञ्जकत्वं द्रष्टव्यम्।

यत्तु—'पूर्वं प्रबन्धशब्देन संघटितावान्तरवाक्यसमूहोऽभिहितः। इदानीं तु संघटितमहावाक्यमित्यपौनरुक्त्यम्' इति कश्चिदाह। तदज्ञानात्। पूर्वं ह्यर्थशक्तिमूलमात्रस्य प्रबन्धविषयत्वमुक्तम्, अत्र त्वसंलक्ष्यक्रमव्यङ्ग्यस्येति पौनरुक्त्यभावात्।

**भेदा०**

---

भावेन च धनुषो गुणतां प्रकाशयता ततोऽप्यतिशयितवशीकारकौशलं भ्रूलताग्रस्य प्रत्याय्यते मौलिमिति कर्मणा व्याप्तिसूचनद्वारा सौन्दर्यातिशय इति ज्ञेयम्। तुल्येऽपीति तौल्येऽपीति पाठे स्वार्थेऽण्। **चमत्कारकारीति**। तथा च चमत्कार एव तादृशविशेषे मानमिति भावः। **प्रौढत्वमिति**। त्वस्य श्रुतिकटुत्वादिति भावः। **किंचिदेवेति**। तेन तद्गतनिखिलवक्रतादिगुणाग्रहणद्वारा सौन्दर्यातिशयो व्यज्यते। किंचित्प्राधान्यं च स्वाभेदेन प्रत्ययजनकत्वम्। तत्रापि व्यञ्जनैव। **व्याप्तिरवगम्यत इति**। तेन सौन्दर्यातिशयः। अत्र सर्वत्र सहृदयतासहकृतशब्दस्वभावो बीजमित्याहुः। **उदाहरिष्यत इति**। तेषां रसनिष्ठमाधुर्यादिगुणव्यञ्जकत्वेन गुणज्ञाने सत्येव तद्व्यञ्जकत्वज्ञानसंभवादत्र नोदाहृतमिति भावः। इमनिजादीनां तु स्वबोध्यनिष्ठतत्तद्विशेषव्यञ्जकत्वमित्यत्रैवोदाहृताः।

---

१ क. ख. ग. °तीत्यत्र त्वा°। २ क. °पवि°। ३ ख. °ञ्जकः। ए°। ४ ग. °निर्णय उ°। ५ क. °धनुषः स°। ६ क. कर्मी भू°। ७ ग. °वः। व्याप्तिरवगम्यत इति। अत्र।

व्याख्याताः ।

तेषां चान्योन्ययोजने ॥ ४३ ॥

संकरेण त्रिरूपेण संसृष्ट्या चैकरूपया ।

न केवलं शुद्धा एवैकपञ्चाशद्भेदा भवन्ति यावत्तेषां स्वप्रभेदै-रेकपञ्चाशता संशयास्पदत्वेनानुग्राह्यानुग्राहकतयैकव्यञ्जकानुप्रवेशेन चेति त्रिविधेन संकरेण परस्परनिरपेक्षरूपयैकप्रकारया संसृष्ट्या चेति चतुर्भिर्गुणने ।

वेदखाब्धिवियच्चन्द्राः ( १०४०४ )

---

तथा हि—अविवक्षितवाच्यस्य द्वौ भेदौ । तौ च प्रत्येकं पदवाक्ययोरिति चत्वारो भेदाः । विवक्षितान्यपरवाच्येषु मध्येऽलक्ष्यक्रमव्यङ्ग्यः पदवाक्यतदेकदेशघटनावर्णप्रबन्धभेदेन षड्विधः । लक्ष्यक्रमेषु शब्दशक्तिमूलस्य द्वौ भेदौ । तौ च प्रत्येकं पदवाक्ययोरिति तस्य चत्वारो भेदाः । अर्थशक्तिमूलस्य द्वादश भेदाः । ते च प्रत्येकं पदवाक्यप्रबन्धेष्विति षट्त्रिंशदस्य भेदाः । उभयशक्तिमूलस्तु वाक्य एवेति ।

**तेषां०**

संशयेनाङ्गाङ्गिभावेनैकव्यञ्जकानुप्रवेशेन चेति त्रिविधः संकरः । उक्तप्रकारत्रयं विना संयोगः संसृष्टिः । एवमेकपञ्चाशतो भेदानामेकपञ्चाशता भेदैर्योजनमिति तावतां तावद्गुणनेन सहस्रद्वयमेकाधिका षट्शती च । संयोजनं च संसृष्ट्यादिचतुष्प्रकारैरिति तावतां चतुर्भिर्गुणने दशसहस्राणि चतुरधिकानि चत्वारि शतानि च संपद्यन्ते ।

न चानुग्राह्यानुग्राहकभावेन संकरस्थलेऽनुग्राहकस्याङ्गाङ्गतया गुणीभाव इति न ध्वनिसंकरत्वमिति वाच्यम् । तत्र हि स्वतश्चमत्कारिण एव तस्य किंचित्परोपकारतामात्रम् । न तु शेषशेषिभाव एवेति । नन्वस्त्वेकपञ्चाशद्भेदेष्वेकतराणां पञ्चाशता योजनम् । स्वस्य तु स्वेन कथं योजनेति चेन्न । व्यक्तिभेदमादाय विजातीयवत्सजातीयेनापि संकरादिसंभवादिति सूत्रकर्तुराशयः ।

---

**तदेकदेशः** । पदैकदेशः । **घटना** रचना ।

अथ संकीर्णभेदानाह—**तेषां चेति** । वेद ४ ख० अब्धि ४ वियत्० चन्द्र १ । अङ्कानां च वामतो गतिः । **संशयेति** । साधकबाधकमानाभावे संशयविषयता । उपकार्योपकारकत्वेऽङ्गाङ्गिभावः । एकव्यञ्जकव्यङ्ग्यत्वे तृतीयः । **संकर इति** । परस्परसापेक्षत्वं हि संकरः । तच्चोक्तत्रयेषु व्यक्तमेव । एकं विनाऽपरस्य तद्रूपताविरहात् । **संयोग इति** । एकत्र काव्ये परस्परनिरपेक्षतयाऽवच्छेदकभेदेनोभयसत्त्वमित्यर्थः । **परोपकारतामात्रमिति** । एवं चानुग्राहकस्य नाङ्गत्वमित्यर्थः । **एकतराणामिति** । स्वस्य स्वेतरपञ्चाशद्भिरित्यर्थः । रस ६ दस्र २ अग्नि ३ मेदिनी १ वेद ४ अभ्र० दहन ३ इषु ५ ।

---

१ क. ग. °जनम् । २ क. एक° । ३ क. °न त्रि° । ग. न च त्रि° । ४ ख. °क्षस्वरूपयैकरूपया । ग. °क्षस्वरू° । ५ क. ख. °तुर्गु° । ६ क. °क्यपदैक° । ७ क. °णि चत्वारि शतानि च चतुरधिकानि । ८ क. °व । संयो° । ९ क. एवमनु° ।

शुद्धभेदैः सह ।

शरेषु युगखेन्दवः ( १०४३५ ) ॥ ४४ ॥

तत्र दिङ्मात्रमुदाह्रियते—

छणपाहुणिआ देअर जाआए सुहअ किंपि दे भणिआ।
रुअइ पडोहरवलहीधरम्मि अणुणिज्जउ वराई ॥ ११२ ॥

---

अत्रार्वाचीनाः—'गणनेयमयुक्ता । अग्रिमाग्रिमभेदस्य योजने एकैकभेदह्रासात् । तथा हि—अर्थान्तरसंक्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्येन योजने यो भेदः स एवात्यन्ततिरस्कृतवाच्यस्यार्थान्तरसंक्रमितवाच्येन योजनायाम् । एवमन्यत्रापि । तस्मात्—

एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु ।
समार्धेनासमो गुण्य एतत्संकलितं[२] लघु ॥

इत्युक्तदिशा द्विपञ्चाशदर्धेन षड्विंशत्यैकपञ्चाशतं गुणयेत् । तथा च 'रसदस्राग्निमेदिन्यः' इति त्रयोदश शतानि षड्विंशत्यधिकानि जायन्ते । योगश्चतुष्प्रकारक इति तेषु चतुर्भिर्गुणितेषु 'वेदाभ्रदहनेषवः' इति पञ्च सहस्राणि चतुरधिकं शतत्रयं संकीर्णभेदा इत्येव ज्यायः' इति वदन्ति ।

अत्र ब्रूमः—अनुभवसिद्धौ तावत्पुण्ड्रकादीक्षुरसेष्विव ध्वनिष्वपि हृद्यत्वातिशयानतिशयौ । तथा चार्थान्तरसंक्रमितवाच्यस्य यत्रातिशयस्तत्रात्यन्ततिरस्कृतवाच्येन तद्योजनम् । यत्र तु तद्वैपरीत्यं तत्रात्यन्ततिरस्कृतवाच्यस्येतरेण योजनमिति व्यपदेशः । एवमन्यत्राप्यूह्यम् । एतदेव प्राधान्यमादायैव गणना सौत्री । नन्वेवं यत्रोभयोस्तुल्यमेव चारुत्वं तत्र भेदान्तरं स्यादिति । मैवम् । अपकर्षाभावस्यातिशयपदेन विवक्षितत्वात् । तत्रोभयभेदसंकरस्वीकारात् । एतादृशे चास्थाने पदालम्बनमात्रमेव महत्पौरुषमिति सहृदयभावमास्थायाऽऽलोचनीयमिति ।

शुद्धभेदैः सह—**शरेषुयुगखेन्दवः** ।

तेषु दिङ्मात्रमुदाह्रियते—**छणपाहुणि०** ।

---

**उभयभेदसंकरेति** । अर्थान्तरसंक्रमितवाच्यसंकरत्वेनात्यन्ततिरस्कृतवाच्यसंकरत्वेन च तद्व्यवहार इति नाऽऽधिक्यमिति भावः । **शुद्धभेदैः** । प्रागुक्तैकपञ्चाशद्भिः । शर ५ इषु ५ युग ४ ख० इन्दु १ ।

**क्षणेति** ।

क्षणप्राघुणिका देवरजायया सुभग किमपि ते भणिता ।
रोदिति गृहपश्चाद्भागवलभीगृहेऽनुनीयतां वराकी ॥

---

१ क °दस्य ह्रा° । २ क. °तं विदुरित्यु° । ३ क. °वत्खण्डका° । ४ क °य सौत्री गणना । ५ क. तस्य भे° ।

अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे संक्रमितः किमनुरणनन्यायेनोपभोग एव व्यङ्ग्ये व्यञ्जक इति संदेहः। तथा

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥११३॥

अत्रानुनयतेर्वाच्योऽनुनयः किमुपभोगलक्षणे लक्ष्ये संक्रमित आहोस्विद्विवक्षित एवोपभोगस्य व्यञ्जक इति, अविवक्षितवाच्यविवक्षितान्यपरवाच्ययोः संदेहः संकरः।

स्निग्धश्यामलकान्ति०।

देवरानुरक्तामुपनायिकामुत्सवगतां तत्पत्न्या कटूक्तामनुनेतुं देवरं प्रति कस्याश्चिदुक्तिरियम्। पँडोहरशब्दो गृहपश्चाद्भागे देशी। त्वजाययाऽतिदुरुक्तिभिः पीडिताया अपि त्वय्यनुरागदर्शनेन हे सुभग हे देवर ते तव यः क्षण उत्सवस्तत्र क्षणमात्रं वा प्राघुणिका अतिथिः सा ते तव जायया न तु प्रियया किमपि अवाच्यं भणिता गृहपश्चाद्भागवलभीगृहे रोदिति। अतो वराकी उत्तराशक्तत्वात्त्वय्यासक्तत्वाच्च दीना अनुनीयताम्। अत्रानुनयो रोदननिवर्तको व्यापारः। तेन संभोगो व्यङ्ग्यः। गृहपश्चाद्भागेत्यनेन विजनता। क्षणप्राघुणिकेत्यनेन दुःखातिशयौचित्यम्। स्वगृह उत्सवसत्त्वेन सर्वेषां जनानां व्यासक्तचित्तत्वं च। **अनुनय इति।** रोदननिवर्तकव्यापाररूप इत्यर्थः। **विवक्षित एव।** अर्थान्तरासंक्रमितो वाच्यतावच्छेदकरूपेणैव प्रतीतिविषयः। **अविवक्षितवाच्येति।** अर्थान्तरसंक्रमितवाच्यरूपाविवक्षितवाच्येत्यर्थः। तात्पर्यानुपपत्त्या किमत्रोपभोगगतातिशयप्रतिपत्तये लक्षणयाऽनुनयतेरुपभोग एवार्थ उत रोदननिवर्तकानुनय एवार्थ उपभोगो व्यङ्ग्य इत्यत्र साधकबाधकमानाभावात्संदेहः। स चैकस्यैवोपभोगस्योद्देश्यत्वान्न दोषाय।

**स्निग्धेति।** स्निग्धा श्लक्ष्णा श्यामला या कान्तिस्तया लिप्तं निबिडसंबद्धं वियदाकाशं यैः। वेल्लन्त्यो बद्धपङ्क्तितया बहुतरं शोभन्त्यः सविलासं खेलन्त्यो वा बलाकानां पक्षिविशेषाणां पङ्क्त्यो येषु तथाभूता घना मेघा एव घना निबिडाः कामं यथेष्टं सन्तु। तथा शीकरिणोऽम्बुकणशालिनः। तेन शैत्यमान्द्ये। तादृशा वाता अपि सन्तु। एवं पयोदो मेघः सुहृत्केकाजनकाह्लादजनकतया मित्रं येषां तेषां केकापदसांनिध्यान्मयूराणां कला अव्यक्तमधुरा आनन्दजन्या वाण्यः सन्तु। आनन्देन कण्ठजाड्याद्व्यक्तता। यद्वा पयोदस्य सुहृदां तदुदयोल्लासिनामित्यर्थः। अत एवाऽऽनन्दकेकाः। पयोदोल्लासे तत्सुहृदा-

१ क. ख. °हः। स्नि°। २ क. °ताः सीक°। ३ क. संक°। ४ क. ग. पलोहर°।

**अत्र लिप्तेति पयोदसुहृदामिति चात्यन्ततिरस्कृतवाच्ययोः संसृष्टिः । ताभ्यां सह रामोऽस्मीत्यर्थान्तरसंक्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसंक्रमितवाच्यरसध्वन्योः**

---

अत्र मुख्यार्थबाधाल्लिप्तपदं संपर्कं लक्षयदतिशयं व्यनक्ति । पयोदे चाचेतने सौहृदाभावात्सुहृत्पदमुपकारित्वं लक्षयत्तदतिशयं प्रतिपादयति । पयोदानां मयूरनिष्ठकेकाद्युपकारशीलत्वात् । रामपदं च सर्वसहत्वानुपयुक्तशक्यार्थतथा सकलदुःखभाजनत्वं लक्षयत्सीतां विनोऽपि जीविष्यामीति व्यञ्जयदेव विप्रलम्भं व्यनक्ति । तदत्र लिप्तेति पयोदसुहृदामित्यनयोरत्यन्ततिरस्कृतवाच्ययोः संसृष्टिः । ताभ्यां सह राम इत्यर्थान्तरसंक्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन संकरः । तयोरुद्दीपकत्वात् । रामपदेन चैकव्यञ्जकानुप्रवेशे वाऽर्थान्तर-

---

मानन्दौचित्यात् । शेषं प्राग्वत् । कामं सन्तु तावता न मे क्षतिरिति भावः । तदेवाऽऽह—दृढमतिशयेन कठोरहृदयोऽहं रामः सकलदुःखपात्रत्वेन प्रसिद्धोऽस्मि । अत एव सर्वमुक्तोद्दीपकातिशयजनितक्लेशं सहे । उत्तमपुरुषैकवचनमेतत् । अत्रैतादृशदुःखजनकसमाजेऽपि प्राणधारणादात्मन्यक्कारो व्यङ्ग्यः । वैदेही विदेहराजपुत्री तु राजापत्यत्वात्स्त्रीत्वाच्च सुकुमारतया दुःखाक्षमा विदेहस्य कामस्याऽऽश्रया च कथं भविष्यति कथं जीविष्यति । तज्जीवनं न संभाव्यत इत्यर्थः । हहाहेति समुदायः खेदातिशये । भावनोपनीतां संबोध्य हहाहा देवि धीरा भव । देवत्वेन धैर्यौचित्यम् । कश्चित्तु हे सर्वसहे वसुधे देवि धीरा भव । दुहितृशोकेन त्वं मा विदीर्णा भवेत्याह । अत्र रामपदेन दुःखपात्रतालक्षणया व्यज्यमानस्य राज्यत्यागजटावल्कलधारणपितृशोकाद्यधिगतदुःखसहनातिशयस्यावगमे व्यञ्जनयाऽवगतैः शोकावेगधैर्यनिर्वेदादिभिः परिपुष्टो विप्रलम्भः प्रकाश्यत इति बोध्यम् ।

**मुख्यार्थेति** । द्रवद्द्रव्यस्य सर्वावच्छेदेन संयोगो हि लेपनम् । संपर्को दृढसंबन्धः । **पयोदे चेति** । सौहृदं चित्तवृत्तिविशेषः । पयोदाः सुहृदो येषामिति बहुव्रीहिरिति भावः । तद्ध्वनयन्नाह—**पयोदानामिति** । **अत्यन्ततिरस्कृतेति** । लेपनसुहृत्त्वयोः सर्वथाऽनन्वयादिति भावः । **संसृष्टिरिति** । त्रिरूपसंकराभावादिति भावः । **अर्थान्तरेति** । दुःखसहिष्णुत्वेन वाच्यस्य रामस्यैवान्वयादिति भावः । **संकर इति** । पूर्वोक्तात्यन्ततिरस्कृतवाच्याभ्यां सहेत्यर्थः । **तयोरुद्दीपकत्वादिति** । तद्व्यङ्ग्ये विप्रलम्भ इति भावः ।

---

१ ग. °न वाच्यार्था° । २ क. °यद° । ३ क °हनत्वा° । ४ क. °ना जी° । ५ क. °रः विप्रलम्भे तद्व्यङ्ग्य उद्दीपनार्थतमा तयोः सुचारुत्वविश्रान्तिस्थानयोरेकार्थग्राहकत्वात् । राम इत्येकार्थप्रवेशे° ।

**संकरः । एवमन्यदप्युदाहार्यम् ।**

**इति काव्यप्रकाशे ध्वनिनिर्णयो नाम चतुर्थ उल्लासः समाप्तः ।**

---

संक्रमितवाच्यरसध्वन्योः संकरः । रामोऽस्मीत्यनेनैव लक्षणामूलस्य विप्रलम्भस्य च व्यञ्जनाद्विप्रलम्भे वाच्यव्यङ्ग्येऽप्यस्य प्राधान्यात् । एवमन्यदप्युदाहार्यम् ।

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे ध्वनिप्रभेदविभागश्चतुर्थ उल्लासः ।

---

**रामोऽस्मीत्यनेनैवेति ।** रामपदलक्ष्येण विप्रलम्भव्यञ्जनेऽपि रामपदस्य सहकारित्वादिति भावः । सीतां विना न जीविष्यामीतिलक्षणमूलवस्तुनश्च वाच्यतः प्राधान्येनैव ध्वनिप्रयोजकत्वं बोध्यम् ।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते काव्यप्रदीपोद्द्योते चतुर्थ उल्लासः ॥ ४ ॥

---

१ क. °स्य व्य° । २ क. वाक्यव्य° । ३ क. °न्यदुदा° ।

अथ पञ्चमोल्लासः ।

---

एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यस्य प्रभेदानाह—

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
संदिग्धतुल्यप्राधान्ये काक्वाऽऽक्षिप्तमसुन्दरम् ॥ ४५ ॥
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः[2] स्मृताः ।

कामिनीकुचकलशवद्गूढं[3] चमत्करोति । अगूढं तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव । अगूढं यथा—

---

एवं ध्वनौ भेदप्रभेदाभ्यां निर्णीते गुणीभूतव्यङ्ग्यस्य भेदानाह—अगूढ० ।

वाच्यापेक्षयाऽचमत्कारकारित्वेन व्यङ्ग्यस्य गुणीभावः । तच्च स्वत एवासुन्दरतया सुन्दरत्वेऽप्यगूढत्वादिविशेषणसप्तकेन चेत्यर्थः । अगूढं चासहृदयैरपि वेद्यम् । तादृशं च वाच्यायमानतया न तथा चमत्करोति यथा कामिनीकुचकलशवद्गूढम् । एवमन्येष्वपि भेदेष्वनुभव एव साक्षी । अपरस्याङ्गमपरस्य रसादेः स्वनैरपेक्ष्येण लब्धसिद्धेरुपकारकम् । वाच्यसिध्यङ्गं वाच्यस्य सिद्धिरेव यदधीना तत् । अस्फुटं सहृदयानामपि दुःखसंवेद्यम् । संदिग्धतुल्यप्राधान्य इति । संदिग्धप्राधान्यं तुल्यप्राधान्यं चेति द्वयमित्यर्थः । काक्वाऽऽक्षिप्तं यया काक्वा विना वाक्यार्थ एव नाऽऽत्मानं लभते तया प्रकाश्यम् । काक्वा हठेनोपस्थापितमिति वा । असुन्दरं स्वभावादेव वाच्यापेक्षयाऽचारु ।

---

भेदानाहेति । अवसरसंगत्येति भावः । व्यङ्ग्यमिति । अस्य गुणीभूतव्यङ्ग्य इति शेषः । अष्टाविति । एतेनाप्रधानं संदिग्धतुल्यप्राधान्यं चेति मध्यमकाव्ये व्यङ्ग्यं त्रिविधमिति परास्तम् । रसादेरिति । रसपदमलक्ष्यक्रमोपलक्षणम् । आदिना लक्ष्यक्रमस्य वाच्यवस्तुनश्च संग्रहः । उपकारकम् । उत्कर्षकम् । वाच्यस्य सिद्धिरेवेति । कुतोऽपि वैगुण्यादविश्रान्तस्य यतो विश्रान्तिरित्यर्थः । अत्राङ्गं निदानम् । संदिग्धप्राधान्यमिति । चमत्कारजनने वाच्यव्यङ्ग्ययोः संदिग्धं तुल्यं वा प्राधान्यं यत्र तत् । वाच्यकृतो व्यङ्ग्यकृतो वा चमत्कार इति संदेहः । चमत्कारजनने वाच्यव्यङ्ग्ययोर्द्वयोरपि क्षमत्वेन तुल्यता बोध्या । काकुर्ध्वनेर्विकारः ।

---

१ ग. °ङ्ग्यप्र° । २ क. भिदा मताः । ३ ग. °द्गूढमेव च° । ४ °तव्यङ्ग्यमे° । ५ क. यत्र का° । ६ क एवात्मानं न ल° । ७ क. °क्वा कण्ठेनो° । ८ ग. °वः । अष्टा° ।

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन्न संप्रति भवामि किमावहामि ॥ ११४ ॥

अत्र जीवन्नित्यर्थान्तरसंक्रमितवाच्यस्य ।

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥ ११५ ॥

---

तेष्वगूढं यथा—यस्यासुहृत्० ।

अत्र जीवन्नित्यभिमतकार्याशक्तत्वं संक्रमितवाच्यम् । तस्य च मरणमेव श्रेय इति व्यङ्ग्यमसहृदयैरपि वाच्यवत्प्रतीयत इति गुणीभूतम् ।

उन्निद्रकोक० ।

---

यस्येति । अर्जुनस्य बृहन्नलादशायां स्वाभ्युदयाय किमिति न चेष्टस इति केनापि पृष्टस्य वाक्यमिदम् । यस्य ममासुहृच्छत्रुः कृता स्वस्य तिरस्कृतिर्येनेदृशः स्वयमेव मां शरणमेत्य स्वस्यैव कर्णौ तप्तसूचीव्यधस्य यो व्यतिकरः पौनःपुन्यं तेन युनक्ति संबध्नाति शरणागतस्य शत्रोस्तप्तलोहशलाकया कर्णवेध इति देशाचार इति चण्डीदासः । यस्य प्रागीदृशः प्रभाव आसीद्यन्नामश्रवणमात्रेण शत्रवः स्वमुखेनैवाऽऽत्मानं धिक्कुर्वन्तः स्वहस्तेनैव कर्णकृततप्तलोहशलाकावेधा यं शरणमायान्ति स संप्रति काञ्चीगुणस्य ग्रथनं काञ्च्या गुणेन ग्रथनं तद्रूपस्य कर्मणो भाजनं तत्र नियुक्त ईदृशो जातोऽस्मि । अतो जीवन्नपि न भवामि न जीवामि । अतः किमावहामि किं करोमि । अत्रैवं वदतो जीवनाभावस्य बाधात्क्रियापदस्थ-जीवपदं प्रकृष्टजीवनं लक्षयति । तदभावबाधे चानुतापादेव जीवनं निन्दतीत्यनुतापाति-शयो व्यङ्ग्यः । स च सर्वजनवेद्यत्वादगूढः । यत्तु कष्टजीवितत्वं लक्ष्यतावच्छेदकमिति तन्न । नञो वैयर्थ्यापत्तेः । तात्पर्यग्राहकतया सार्थकत्वमिति चेत् । उक्तार्थलक्षणया सार्थ-कत्वमेव युक्तम् । जीवन्नेति कार्याशक्तत्व इति च पाठः । नञो द्योतकत्वान्न समुदायल-क्षणाशङ्का । जीवन्नित्यभिमतकार्यशक्तत्व इति वा पाठः । वाच्यवदिति । एवंवि-धेऽर्थ ईदृशप्रयोगप्राचुर्यादिति भावः । गुणीभूतमिति । अगूढाख्यमित्यर्थः ।

अगूढमेवात्यन्ततिरस्कृतवाच्य उदाहरति—उन्निद्रेति । नायकेन सह सुप्तां रतिश्रमा-लसतयाऽनाकलितप्रबोधसमयां सखीं प्रति तत्सूचनाय सख्या इयमुक्तिः । उन्निद्रं विकसितं

---

१ क. °मेव सा° । २ ग °मि कमा° । ३ क. °दः । जीवन्ने° । ४ ग. °वित्वं । ५ क. °न्न । वे° ।

**अत्र चुम्बनस्यात्यन्ततिरस्कृतवाच्यस्य ।**

**अत्राऽऽसीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे**
**गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राऽऽहृतः ।**
**दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः**
**केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥ ११६ ॥**

---

अत्र चुम्बतेर्वक्त्रसंयोगो मुख्योऽर्थोऽचेतने बाधित इति संयोगमात्रं लक्षयतोऽस्यात्यन्ततिरस्कृतवाच्यत्वम् । व्यङ्ग्यश्चास्योषःकालो वाच्यायमानतया गुणीभूतः । नन्वत्र लक्ष्यतावच्छेदकस्य संयोगत्वस्य वक्त्रसंयोगेऽपि सत्त्वात्कथमत्यन्ततिरस्कृतवाच्यत्वमिति चेल्लक्ष्यतावच्छेदकस्य सत्त्वेऽपि वाच्यस्य संयोगविशेषस्यान्वयाप्रवेशात् ।

**अत्राऽऽसीत्० ।**

---

यत्कोकनदं रक्ताब्जम् ।

रक्ताब्जे रक्तकुमुदे बुधैः कोकनदं स्मृतमिति ।

अथ रक्तसरोरुहे । रक्तोत्पलं कोकनदमित्यमरश्च । तद्रेणुनाँ तत्परागेण पिशङ्गितानि रक्तकृष्णयोर्मिश्रणात्पिशङ्गवर्णान्यङ्गानि येषां ते तथा भूता मधुपा भ्रमरा गृहदीर्घिकासु गृहवापीषु मञ्जु मनोहरं यथा स्यात्तथा गायन्ति । मधुपा इत्यनेन मत्ता अपि जागृता इति ध्वनिः । गृहेत्यनेन निकटस्थतया गानश्रवणसुगन्धाघ्राणादिरूपायाः कोकनदेतियोगोपस्थाप्यचक्राह्वशब्दादिरूपायाश्च जागरणसामग्र्याः संनिहितत्वं ध्वन्यते । ननु सूर्योदयो मया प्रतीक्ष्यत इत्यत आह—एतद्रवेर्बिम्बं मण्डलं चकास्ति । कीदृक् । उदयाचलचुम्बि । तत्संयुक्तम् । अत एँवेषदुदितत्वान्नवस्य नूतनस्य बन्धुजीवपुष्पच्छदस्य पुष्पपत्रस्य, आभा यस्मिस्तत् । रक्तत्वात् । **अचेतने बाधित इति** । तेन रूपेण मुख्यार्थस्य तत्रानन्वयादिति भावः । **अत्यन्तेति** । संयोगत्वस्य लक्ष्यतावच्छेदकस्य मुख्यार्थसाधारणत्वेऽपि प्रकृते तेन रूपेण मुख्यार्थस्याचलेऽनन्वयात्तत्त्वम् ।

तदेवार्थशक्तिमूलव्यङ्ग्य उदाहरति । **अत्राऽऽसीदिति** । रावणं हत्वा विमानमार्गेणायोध्यामागच्छतो रामस्य सीतां प्रतीयमुक्तिः । एकस्या एव समरभुवस्तत्तत्कर्माधारतया नवनवायमानाद्भुतरसालम्बनत्वेन पुनः पुनरत्रेत्यस्योपादानम् । यद्वा भिन्नान्येव स्थानान्यत्रपदैरुक्तानि । फणिपाशो नागपाशस्तेन बन्धनमर्थादावयोस्तस्य विधिरिति विधेर्दुर्लङ्घ्यत्वात्स्वपराभवगूहनम् । शक्त्याऽऽयुधविशेषेण भवत्या देवरे लक्ष्मणे वक्षसि गाढं दृढं ताडिते सति हनुमता द्रोणादिर्न तु तद्वर्त्यौषधमात्रम् आहृत आनीत इति तत्पराक्रमप्रकाशनम् । भवद्देवर इति सर्वनाम्नो वृत्तिमात्र इति पुंवद्भावः । सीतासंबन्धप्रदर्शनं च

---

१ क. °रं लम्भितः । २ ग. °ण्ठावली । ३ क. °कसं° । ४ क. °चेन्न । °लक्ष्य । ५ क. ग. °ना परा° । ६ ग. °म्बं च° । ७ क. एव नवस्य । ८ ग. °स्यानन्व° ।

**अत्र केनाप्यत्रेत्यर्थशक्तिमूलानुरणनरूपस्य[1]। 'तस्याप्यत्र' इति युक्तपाठः।**

**अपरस्य रसादेर्वाच्यस्य[2] वा ( वाक्यार्थीभूतस्य[3] ) अङ्गं रसादि[4], अनुरणनरूपं वा।**

---

अत्रानुनायकोपनायकप्रतिनायकेषु निर्दिष्टेषु चतुर्थवाक्येऽनुक्तोऽपि नायको राम एवार्थशक्त्या प्रतीयते । स च केनापीत्युपादानेन वाच्यायमानतयाऽगूढः कृतः । 'तस्याप्यत्र' इति पाठे गूढतया ध्वनित्वमव्याहतमेव । अत्र श्लोके प्रतिवाक्यमत्रेत्युपादानं प्रत्येकमेवाद्भुतत्वं व्यनक्ति ।

अपरस्य रसादेर्वाच्यस्य वा प्रधानस्याङ्गमलक्ष्यक्रमः, अनुस्वानाभलक्ष्यक्रमो वेति

---

वात्सल्योत्पादनया पराभवज्ञानतिरोधानायोपकारप्रकाशनाय च । इन्द्रजित्, रावणपुत्रो दिव्यैर्लक्ष्मणशरैर्लोकान्तरं प्रापितः । दिव्यानां तत्प्रापकत्वस्योचितत्वात् । इन्द्रजिदित्युक्त्या इन्द्रोऽपि येन जितः सोऽपि येन जित इति प्रतीत्या लक्ष्मणपराक्रमप्रकर्षः । अत एवात्र लक्ष्मणत्वेन लक्ष्मणग्रहणम् । लक्ष्मणशरैरिति शराणां कर्तृत्वप्रदर्शनेन लक्ष्मणस्य तत्रावहेला सूचिता । मृगाक्षीति सर्ववाक्यार्थान्वयि । केनापीत्यपिर्हेलायाम् । राक्षसपते रावणस्य कण्ठरूपाऽटवी केनापि च्छिन्ना । छिन्नस्य पुनः पुनरुद्गतस्य च्छेदनादटवीत्युक्तम् । अहंकारप्रकटनभिया धीरोदात्तेन रामेण मयेत्यपहाय केनापीत्युक्तम् ।

**केनापीत्युपेति** । अनिर्धारितविशेषत्वेन किमः शक्तौ, मयेति व्यङ्ग्यम् । तच्च प्रसिद्धिवशाद्वाच्यायमानमित्यगूढमिति भावः । यद्वा, अनिर्वचनीयगुणगरिम्णेत्यर्थकेन रामरूपः कर्ता स्फुटं व्यज्यत इत्यर्थः । एकेनेति पदान्तरोपादानेऽपि तत्प्रतीतिरर्थशक्तिमूलत्वं बोध्यम् । **तस्यापीति** । अतिशयितप्रभाववत्त्वेन ख्यातस्येत्यर्थः । एवं पाठे लक्ष्मणशरैः कृत्तेत्यापाततोऽन्वयभ्रमे पश्चादत्युत्कटप्रभावशालिलङ्केशहन्ता राम एवेति पर्यालोचनेन गूढतया रामरूपः कर्ता द्योत्यत इत्यर्थः । तेन च तस्योत्कर्षातिशयः । एतेन कृत्तेत्यस्य कर्तृसापेक्षतया मयेति पदाध्याहार आवश्यकः । इत्थं च स्फुटत्वं तदवस्थं न्यूनपदत्वं चाधिकमिति[5] परास्तम् । तादृशरणस्मृत्या सीतालापेन च हर्षयुक्ते वक्तरि न्यूनपदत्वस्य गुणत्वाच्च । स्ववीर्यसंगोपकत्वेन धीरोदात्तत्वप्रकटकतया गुणत्वाच्चेत्याहुः । प्रकृतवाक्यार्थप्रतीतिव्यवधानेन प्रतीयमानस्य[6] शब्दशक्तिमूलवस्तुरूपव्यङ्ग्यस्यालंकारस्य वा झटित्यसंवेद्यत्वेन नागूढत्वसंभव इति तत्रानुदाहृत्यार्थशक्तिमूल एवोदाहृतम् । रसादीनामगूढत्वं तु वचनस्याप्यनर्हमित्याहुः । **अपरस्य रसादेरिति** । रसादेरलक्ष्यक्रमो वाच्यस्य लक्ष्यक्रम[7] इति

---

१ क. °नुस्वान° । २ ग. °स्य । अप° । ३ ग. °क्यार्थभू° । ४ क. °दिरनु° । ५ क. ग. °मिति । ६ क. °यः । प्रकृत° । ७ ग. °तरसा° ।

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥ ११७॥

अत्र शृङ्गारः करुणस्य।

कैलासालयभाललोचनरुचा निर्वर्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम्।
स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते॥ ११८॥

---

द्विविधः। तत्र प्रथमे रसस्याङ्गभावेन गुणीभूतत्वं यथा—**अयं स०**।

अत्र भूरिश्रवसश्छिन्नं हस्तमासाद्य तद्वधूनां प्रलापे शृङ्गारः करुणस्याङ्गम्। निष्पन्नस्य रसस्यापराङ्गत्वाभावाद्रसपदेनात्र स्थायिभावो द्रष्टव्यः।

रसस्यैव भावाङ्गता यथा—**कैलासालय०**।

---

यथासंख्येनान्वय इति प्राञ्चः। अन्ये तु द्वयोर्द्वयमप्यङ्गम्। न च रसस्य वाच्याङ्गत्वासंभवः। तादिदमरण्यं यत्र दशरथवचनानुपालनव्यसनी रामो रक्षांसि जिगायेत्यादौ रामगतवीरस्य वाच्यारण्योत्कर्षकत्वेन तत्संभवात्। अत एव महतां चोपलक्षणमित्युदात्तालंकारे महतां रसादीनामप्युपलक्षणमङ्गभाव इति व्याचख्युः। अत एव रसस्य वाच्याङ्गत्वमत्र नोदाहृतम्। तत्रोदात्तालंकारस्य वक्ष्यमाणत्वात्। न चैवमनुग्राह्यानुग्राहकलक्षणध्वनिसंकरेऽनुग्राहकस्याप्यपराङ्गत्वापत्तिः। यत्र साक्षादङ्गत्वं तत्र स रसनेत्यादावपराङ्गत्वम्। यत्र परम्परया तत्र स इति भेदादित्याहुः।

**अयमिति**। समरभूमिपतितं भूरिश्रवसो हस्तमालोच्य तद्वधूनां प्रलापोऽयम्। अयं दृश्यमानदुखस्थः। सोऽनुभूतरशनोत्कर्षणादितत्तच्छृङ्गारावस्थः। उत्कर्षी, आकर्षकः। **शृङ्गारः**। नायिकाविषयो नायकाश्रयः। तस्यैव नायिकाशोकप्रकर्षकत्वात्। **करुणस्य**। नायिकाश्रयस्य। अयमेव प्रधानम्। शोकस्योल्बणतया करुणस्यैवाऽऽस्वादगोचरत्वात्। शृङ्गारस्त्वङ्गम्। प्राग्वृत्तशृङ्गारोचितरशनाकर्षणादिविलासस्मरणस्य शोकपोषकत्वात्। अतिप्रियनाशे शोकातिशयदर्शनात्। एवं च करुणमादायास्य काव्यस्य ध्वनित्वम्। शृङ्गारस्थायिनमादाय गुणीभूतव्यङ्ग्यत्वमिति बोध्यम्। शोकावेशादेव शृङ्गारोऽपुष्टः। एवमग्रेऽपि।

**कैलासेति**। कैलासालयस्य शंभोर्भालसंबन्धिनो लोचनस्य वह्निरूपस्य रुचाऽरुणकान्त्या निर्वर्तिता निष्पादिताऽलक्तकस्य व्यक्तिः प्रकटता यस्याम्। मानिन्याः पाद-

---

१ क. °नीविवि°। २ क. °समिद्ध°। ३ क. °कारिस°। ४ क. भावं प्रत्यङ्ग°। ५ क. °श्वः। रसस्य वाच्याङ्गत्वे तूदात्तालंकारस्य वक्ष्यमाणत्वात्। अयमिति। अयं दृश्यमान°। ६ ग. °स्य छत्र°। ७ ग. °म्। एव°।

**अत्र भावस्य रसः ।**

**अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-**
**स्तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः ।**
**आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-**
**स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥ ११९ ॥**

**अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य ।**

---

अत्र वक्तुर्देवीविषयकरतिरूपभावे देवयोः शृङ्गारोऽङ्गम् ।
भावे भावस्याङ्गत्वं यथा——**अत्युच्चाः परितः०** ।
अत्र भूविषयो रतिभावो राजविषयस्य रतिभावस्याङ्गम् ।

---

पतने सांनिध्येन लाक्षारुणललाटनेत्रप्रभासंपर्कात् । तेन शिवस्य गिरिजापादपतनं ध्वन्यते । तादृशी गिरिभुवः पार्वत्याः सा पादनखद्युतिर्वो युष्मान्सदा त्रायतां रक्षत्वित्यर्थः । सा का । यया द्युत्या सुदृढं यथा स्यात्तथा रूढा प्रवृद्धा कोकनदस्य रक्तोत्पलस्य रक्ताब्जस्य वानुकारः सादृश्यं यस्यां तादृशी । कोकनदसदृशीत्यर्थः । अत एव सरसातिशया नेत्रयोः कान्तिः कोपजनिता शोणद्युतिः सद्यस्तत्क्षणं समुत्सार्यते निःशेषं दूरी क्रियते । पादपतन-गतस्योत्सारणकर्तृत्वस्य तदनुभावरूपायां तादृशद्युतावुपचारो वक्ष्यमाणोत्प्रेक्षार्थः । अत्र गिरिभुवः कोपान्नेत्रयोः शोणा कान्तिरासीत्सा पादप्रणते शिवेऽपगतेति तत्त्वम् । तत्रेदमु-त्प्रेक्षते—स्पर्धेति । स्पर्धाया विजिगीषाया बन्धेन सातत्येन समृद्ध्याऽतिदीप्तयेव । अत्र भाललोचनरुचिसंपर्ककृते स्वभावशोणनखद्युतेर्दीप्तत्वे स्पर्धाबन्धो हेतुत्वेनोत्प्रेक्ष्यते । एवं च कैलासालयत्वादिगम्यपरमैश्वर्योऽपि अतिप्रियतमलोचनपीडामगणयन्नेव पादप्रत्यन्त एव यां प्रसादाय नमस्करोति तस्यां भक्तिरुचितैवेति तस्य शृङ्गारस्य भावप्रकर्षार्थमेवोपादानात्पुष्ट-विभागाद्यप्राप्त्याऽपुष्टत्वाच्च रसस्य भावाङ्गतेति भावः ।

**अत्युच्चा इति** । राजानं प्रति कवेरुक्तिः । हे पृथ्वीति संबोधनपदाध्याहारः पूर्वार्धे । अत्युच्चाः परितः सर्वतः स्फुरन्ति समन्ताद्व्याप्य तिष्ठन्ति । स्फारा अतिविस्तृताः । अपि-भिन्नक्रमः । एतान्बिभ्रत्यपि किमपि, ईषदपि न क्लान्ताऽसि, इति धरण्याः स्तुतिमाश्चर्येण, एवंविधगिर्यादिधारणेऽप्यक्लमादाश्चर्यम्, यावत्प्रस्तौमि करोमीत्यर्थः । तावदिमामेतद्विशिष्टां बिभ्रत्पालयन्नेव धारयंस्तव भुजः, न तु भुजौ । ततो भुजस्मरणाद्वाचः पृथ्वीस्तुतिरूपा मुद्रिताः संकुचिता इत्यर्थः । अत्र भूविषयो भाव आहार्यः । नृपवर्णनार्थमारोपित-त्वात् । अत एवापुष्ट इत्याहुः । **राजविषयस्येति** । तदुत्कर्षकत्वात्तस्येति भावः । वक्तु-रित्यत्रापि अपेक्ष्यम् । एवमग्रेऽपि ।

---

१ ग. °षयर° । २ ग. °यभा° । ३ ग. °शयिता ने° । ४ ग. °रणाक° । ५ क. °स्य ताद्द° । ६ ग. °नाद्रसस्य । ७ ग. °त्वादित्वा° ।

बन्दीकृत्य नृपद्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः[1]।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥१२०॥

अत्र भावस्य रसाभासभावाभासौ प्रथमद्वितीयार्धद्योत्यौ।

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥१२१॥

अत्र भावस्य भावप्रशमः।

---

आभासस्याङ्गत्वं यथा—बन्दीकृत्य०।

अत्र प्रथमार्धे शृङ्गारोऽननुरक्तविषयतया, द्वितीयार्धे तु रतिरूपो भावः शत्रुविषयतयाऽऽभासः। तौ च राजविषयकरतिभावस्याङ्गम्।

भावशान्तेर्यथा—अविरल०—

अत्र वैरिणो गर्वरूपो भावः। तस्य शमो राजविषयैकरतिभावेऽङ्गम्।

---

**बन्दीति**। हे नृपते तव सैनिका येषां द्विषां शत्रूणां कातरतया मृगसदृशदृशः स्त्रियो बन्दीकृत्य हठादाहृत्य पश्यतां प्रेयसां पश्यतस्तत्प्रियतमाननादृत्य ताः श्लिष्यन्ति आलिङ्गन्ति हठाश्लेषजनितकोपस्य शान्तये प्रणमन्ति लान्ति आत्मसात्कुर्वन्तीत्यर्थः। परितः कामशास्त्रानुक्तस्थलेऽपि चुम्बन्ति। मत्तत्वात्। त्वरावेशाच्च। इत्थमनुचितप्रवर्तयिताऽपि त्वं तैः प्रत्यर्थिभिरिति स्तूयसे। तत्प्रकारमाह—हे औचित्यवारांनिधेऽस्माकं सर्वेषां सुकृतैः पुण्यैर्दृशो गोचर इति शेषः। निपतितोऽसि। तत्तस्मात्त्वद्दर्शनादखिला विपदोऽस्माकं ध्वस्ता इति। मृगतुल्येष्वपराक्रमिषु प्रियेषु दृशो यासामित्यर्थान्तरगर्भीकरणाय मृगेति पुंस्त्वम्। **अननुरक्तेति**। परस्त्रीविषयतयेत्यपि बोध्यम्। **शत्रुविषयतयेति**। एवं चानौचित्यप्रवृत्तत्वादुभयोराभासत्वम्।

**अविरलेति**। हे राजन्निरन्तरखड्गकम्पनैर्भ्रुकुटीकरणैस्तर्जनैश्छिन्धि भिन्धीत्यादिवाक्यरूपैर्हुंकारसिंहनादरूपैर्गर्जनैः। अभेदे तृतीया। तद्रूपस्तव वैरिणां यो मदो मदकार्यमस्माभिर्ददृशे दृष्टः स मदस्तवेक्षणे त्वत्कर्तृके त्वद्विषयके वा दर्शने सति क्षणात्क्वापि गतः पलायितः। **तस्य शम इति**[5]। न च मदो गत इत्यनेन स वाच्य एवेति वाच्यम्। अभेदार्थकतृतीयाभ्यां कम्पनाद्यात्मको मद इत्यर्थे मदपदस्य गर्वाख्यभावकार्यपरत्वाद्गर्वप्रशमो व्यङ्ग्य एवेति भावः[6]। ददृश इत्यतीतार्थकोपादानादपुष्टत्वम्। आहार्यत्वाद्वा। एवमग्रेऽपि बोध्यम्।

---

१ क. °वस्य प्र°। ख. °वप्र°। २ क. तत्र। ३ क.—°बद्र°। ४ ग. °दोऽस्मा°। ५ क. °ति। मदपदस्य। ६ ग. °वः। साक°।

साकं कुरङ्गकदृशा मधुपानलीलां[1]
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो गृहीतं
केनापि तत्र विषमामकरोदवस्थाम् ॥ १२२ ॥

अत्र त्रासोदयः[2] ।

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात्कपटबटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः[3] स्मरहरः ॥ १२३ ॥

---

भावोदयस्य यथा—**साकं कुरङ्गक०** ।

अत्र विषमावस्थाव्यङ्ग्यस्य त्रासस्वरूपभावस्योदयो राजविषयरतिभावस्य ।

भावसंधेर्यथा—**असोढा०** ।

---

**साकमिति** । हे विभो प्रभो तव वैरिणि कुरङ्गकदृशा बालमृगनेत्रया कान्तया सुहृद्भिरपि साकं मधुपानाद्या लीलाः कर्तुं प्रवृत्ते सति अन्याभिधायि अनेकार्थतयाऽन्यस्यापि अभिधायि तव नाम केनापि जनेन जलानयनादिहेतुना वा गृहीतं कर्तृ विषमां कम्पादिकर्त्रीं दशामकरोत् ।

**असोढेति** । तपः कुर्वतीं पार्वतीं बटुवेषेण च्छलयतो महादेवस्य वर्णनमिदम् । कपटेन च्छलेन यो बटोर्ब्रह्मचारिणो वेषस्तस्यापनयने[4] मोचने युगपत्समकालमेव त्वराशैथिल्याभ्यामभियुक्त आक्रान्तः स्मरहरो वो युष्माकं प्रमोदं दिश्याद्दद्यात् । त्वराशैथिल्ययोर्हेतुगर्भे विशेषणे क्रमेणाऽऽह—असोढेत्यादि । तत्काले पार्वत्या बालत्वकाले उल्लसन्प्रादुर्भवन्नसहभावो दुःसहत्वमर्थात्, दुर्बलत्वेन गौर्या यस्य तादृशस्य तपसोऽसोढा सोढुमसमर्थः । फलदाने विलम्बयितुमक्षम इति यावत् । तपस इति कर्मणि षष्ठी । अथ चेत्यव्ययसमुदायः समुच्चये । शैलदुहितुः पार्वत्याः कथाविश्रम्भेषु विश्वस्ततया क्रियमाणकथास्विति यावत् । यद्वा कथानां विश्रम्भेषु प्रणयेषु गौर्याः कथाज्ञाप्यस्वविषयकप्रणयेष्वित्यर्थः । विश्रम्भः प्रणयेऽपि च । समौ विश्रम्भविश्वासावित्यमरात् । तेषु रसिकः प्रीतिमान् । शैलदुहितुरपीदृश्यः सरसाः कथा इति तासु अत्यन्तसादरता । स्मरहरेत्यनेन स्मरजेताऽपि यां दृष्ट्वा यत्कथयाऽऽकृष्टचित्तः कृत इति पार्वतीसौन्दर्यातिशयश्चातुर्यातिशयश्च । उल्लसदसमभावस्येतिपाठ उल्ल-

---

१ ग. °लीलाः क° । २ क. ग. त्रासस्योद° । ३ क. °भिभूतः स्म° । ४ क. °ने त्यागे यु° ।

**अत्राऽऽवेगधैर्ययोः संधिः।**

पश्येत्कश्चिच्चल चपल रे का त्वराऽहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि।
इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः
कन्या कंचित्फलकिसलयान्याददानाऽभिधत्ते ॥ १२४ ॥

**अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता।**

**एते च रसवदाद्यलंकाराः। यद्यपि भावोदयभावसंधिभावशबल-**

---

अत्र स्मरहरगतयोरावेगधैर्ययोः संधिः शिवविषयरतिभावस्याङ्गम्।

भावशबलताया यथा—**पश्येत्कश्चित्०**।

अत्र पश्येत्कश्चिदिति शङ्का। चल चपल रे इत्यसूया। का त्वरेति धृतिः। अहं कुमारीति स्मृतिः। हस्तालम्बं वितरेति श्रमः। हहहेति दैन्यम्। व्युत्क्रम इति विबोधश्चैतन्यागमरूपः। क्वासि यासीत्यौत्सुक्यम्। एषां शबलता नृपविषयरतिभावेऽङ्गम्।

एते च गुणीभूता रसादयो रसवदाद्यलंकारव्यपदेशं लभन्ते। ननु गुणीभूतो रसो

---

सन्नसमभावो निरुपमत्वं यस्येत्यर्थः। **आवेगधैर्ययोः**। त्वरापदशैथिल्यपदगम्ययोः। आहार्यत्वाददुष्टत्वम्।

**पश्येदिति**। हे पृथ्वीपरिवृढ पृथ्वीप्रभो, अरण्यवृत्तेस्तव द्विषः कन्याऽऽलंकरणाद्यर्थं कोमलपल्लवादीनाददाना गृह्णती कंचित्कामुकं जातानुरागा इत्थमभिधत्ते। तदेवाऽऽह। कश्चिज्जनः पश्येदिति शङ्का। तद्धेतुश्च व्यङ्ग्या संगोपनीयपुरुषचेष्टा। रे चपल स्वच्छन्दाचरणशील चलापसर। इतः काकुविशेषसहकाराद्रागानुविद्धासूया। का त्वरेति सत्वरं जिगमिषावारणायेदं वचनमिति। अनेन धृतिः। अहं कुमार्यस्मि। तेन कुमार्या मम नैवंविधं स्वातन्त्र्यमुचितमिति स्मरणम्। हस्तरूपमवलम्बं वितरेति श्रमः। हहहेति वाक्यप्रयोगजनकभावजं दैन्यम्। व्युत्क्रमो विपरीताचरणं जायत इति शेषः। सोऽयं विबोधः। असीति त्वमित्यर्थे। त्वं क्व यासि गच्छसि, इत्यौत्सुक्यम्। **चैतन्यागमेति**। अकार्यत्वनिर्णयजनकेत्यर्थः। **शबलता**। पूर्वपूर्वोपमर्देनोत्तरोत्तरोदयरूपा। एषां तिलतण्डुलवत्समप्राधान्येन चर्व्यमाणतारूपेत्यन्ये। सा च राजपराक्रमप्रयोज्यारण्यगमनमूलिका राजपराक्रमाभिव्यक्तिद्वारा राजविषयां रतिमुद्दीपयन्ती तदङ्गमिति बोध्यम्। एवं सर्वत्र प्रायश उद्दीपनविधयैवाङ्गत्वं बोध्यं रसादेरित्याहुः।

---

१ क. ख. °यसंधिश°। २ क. °गतावे°। ३ क. °भावाङ्ग°। ४ क. स्मृतिरौत्सुक्यं च। ह°। ५ क. °पतिवि°। ६ ग. °योः। पश्ये°। ७ क. °पा सा च।

त्वानि नालंकारतयोक्तानि तथाऽपि कश्चिद्ब्रूयादित्येवमुक्तम्। यद्यपि स नास्ति कश्चिद्विषयो यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह संकरः संसृष्टिर्वा नास्ति तथाऽपि प्राधान्येन व्यपदेशा भवन्तीति क्वचित्केनचिद्व्यवहारः।

---

रसवत्, भावस्तु प्रेयः, रसभावाभासावूर्जस्वि, भावशान्तिः समाहित इत्यस्त्येव पूर्वेषामलंकारव्यवहारः, न पुनर्भावोदयादिषु। तत्कथमेतदुच्यत इति चेत्। यद्यन्यवचनं विना मद्वचसि नाऽऽदरस्तर्हि कश्चित्प्रेक्षावानवश्यं ब्रूयात्। 'रसादिना तुल्यन्यायत्वात्' इति।

ननूदाहृतेषु ध्वनिगुणीभूतव्यङ्ग्ययोर्भेदेषु ध्वनिभेदैर्गुणीभूतव्यङ्ग्यभेदैरलंकारभेदैर्वाऽवश्यं संकरः संसृष्टिर्वा वर्तते। तत्कथं क्वचिद्ध्वनिरिति क्वचिद्गुणीभूतव्यङ्ग्य इति। तत्रापि क्वचिदलंकारध्वनिरिति क्वचिद्रसादिध्वनिरित्यादि। एवं तद्गुणीभूतव्यङ्ग्य इत्यादिव्यपदेशानां नियम इति चेत्, प्राधान्यात्। यत्र हि यत्प्रधानं तत्र तेन व्यपदेशः। प्राधान्यं चातिशयितश्चमत्कारः। स च सहृदयहृदयैकवेद्य इति नासिद्धः।

---

**तुल्यन्यायत्वादिति**। परोत्कर्षकत्वस्यालंकारत्वव्यवहारबीजस्य गुणीभूतरसादाविव भावोदयादावपि सत्त्वादनुक्तिर्विरुद्धैवेति भावः। उक्ताश्चालंकारसर्वस्वकृता तन्नामान एव ते पृथगलंकाराः। न चैषां कथमलंकारत्वम्। अङ्गद्वारा रसाद्युत्कर्षका हि ते। एतेषां च गुणानामिव साक्षादेव रसाद्युपस्कारकत्वमिति वाच्यम्। स्वविभावाद्युपस्कृतस्य प्रधानविभावाद्युपस्कारकत्वेनैव तदुपस्कारकत्वात्। यथा स रसनेत्यत्र पूर्वदशाविशिष्टत्वेन स्मृतस्य प्रकृतदशावत्त्वेनानुभूयमानस्य शोकावेगातिशयजनकत्वम्। यत्र त्वचेतनादेर्वाक्यार्थत्वं तत्र चेतनत्वारोपाद्रसवदलंकारः। रत्यादीनां हि ज्ञानमात्रमपेक्षितं न वास्तवसत्ताऽपीत्याहुः। **संकर इति**। सर्वत्र रसध्वनौ भावध्वनेः सत्त्वेन तयोरुपकार्योपकारकतया संकरापत्तिः अवान्तरध्वनीनां प्रधानध्वनिरूपेतराङ्गतया गुणीभूतव्यङ्ग्यत्वस्य चाऽऽपत्तिरिति भावः। एवमन्यदप्यूह्यम्। **नासिद्ध इति**। यत्र यन्मुखेन चमत्कारस्तत्र तेनैव व्यवहारः। अयं स रसनेत्यादौ करुणध्वनावपि गुणीभूतव्यङ्ग्यशृङ्गारेणैव चमत्कार इति तेनैव व्यवहार इति भावः।

---

१ क. °त्येवोक्त°। २ क. °भिः सं°। ३ क. °न्यायादिति ४ क. °राः। अलंकारत्वं चैषां स्वविभा°।

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृताऽलंकाभर्तुर्वदनपरिपाटीषु घटना
मयाऽऽप्तं रामत्वं कुशलवसुता न त्वधिगता ॥ १२५ ॥

अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानोपमेयभावो वाच्याङ्गतां नीतः ।

---

अथ वाच्याङ्गभावेन शब्दशक्तिमूलस्य लक्ष्यक्रमस्य गुणीभावो यथा—जनस्थाने० । अत्र पादत्रयद्योत्याऽपि रामेण सहोपमा मयाऽऽप्तं रामत्वमित्यनेन वाच्यतां नीता ।

---

जनेति । कस्यचिद्राजसेवानिर्विण्णस्य कवेरुक्तिः । मया । रामत्वं रामधर्मः । तत्प्राप्तम् । कुशलं परिणामसुरसमुद्वेगनिरासनिपुणं वा वसु धनं यस्य तद्भावः कुशलवसुता सैव कुशलवौ सुतौ यस्या इति व्युत्पत्त्या सीता सा तु नाधिगता । रामत्वं कथं प्राप्तं तदाह—कनकस्य मृगो मार्गणं प्रार्थना वा । तत्र या तृष्णा कनके वा या मृगतृष्णा निष्फलाशा सैव कनकमृगे मारीचे तृष्णा तयाऽन्धिता धीर्यस्य तादृशेन मयेत्यर्थः । यद्वाऽन्धितया धिया करणया जनानां स्थाने ग्रामनगरादौ भ्रमणमेव दण्डकारण्ये भ्रमणं तत्कृतम् । वै निश्चयेन देहीति वचनमेव वैदेहीति सीतासंबोधनवचनम् । तत्प्रतिपदं प्रतिस्थानमुद्गतमश्रु यत्र तद्यथा भवति तथा प्रलपितम् । भर्तुर्भरणकर्तुर्धनिकस्य परिपाटीषु सेवारचनासु अलमत्यर्थं का घटना न कृता वद । अथ वा काभर्तुः कुत्सितभर्तुर्वदनपरिपाटीषु मिथ्याभाषणप्रकारेषु घटनोपपत्तिर्वदनपरिपाटीषु मुखविवलनादिषु तदाशयाद्युन्नयनार्थं घटनोपायो वा स एव लङ्काभर्तू रावणस्य वदनपरिपाट्यां पङ्क्त्यामिषुघटना साऽलमत्यर्थं कृतेति श्लेषोपस्थितानामभेदारोपाद्रामत्वोपपत्तिः ।

सहोपमेति । उपमा सादृश्यम् । वाच्यतां नीतेति[2] । कथमन्यस्य धर्मोऽन्यत्रेति निदर्शनालंकारविधया वारणेन्द्रलीलामित्यादाविव रामत्वपदं रामसादृश्ये लाक्षणिकमिति भाव इति केचित् । अपरे तु जनस्थाने भ्रान्तमित्यादिपदैरुपस्थितरामधर्माणां श्लेषमूलकाभेदाध्यवसायेन निर्विण्णगतधर्माभेदमापन्नानां रामत्वपदेनोपात्तानां रामनिर्विण्णयोः सादृश्यरूपाणां वाच्यत्वादिति[3] तेषामन्वययोग्यत्वेन लक्षणाया अयोगः । यत्तु यथेवादिरूपवाचकाभावात्तादृशधर्मप्रतीतिव्यङ्ग्या रामनिर्विण्णयोरुपमा रामसदृशो निर्विण्ण इत्याकारा । न चेयं रामत्वं प्राप्तमित्यस्य वाच्या । तद्वृत्तिधर्मप्रतीतिमात्रस्योपमात्वाभावात् । किं तूपमेयविशेषणतया प्रतीयमानसादृश्यमेवोपमा । अन्यथा मुखे चन्द्रसादृश्यमित्यादावप्युपमा स्यात् । एवं च सा व्यङ्ग्यैव । सा च कुशलवसुता न त्वधिगतेति प्रतिपाद्य दुःखित्वातिशय-

---

१ क. ख. ग. °मूलोऽनुण । २ क. °ति जनस्थाने° । ३ क. °ति भावः । शब्द° ।

आगत्य संप्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥ १२६ ॥

---

तदङ्गं च शब्दशक्तिमूलानुरणनरूपो द्वितीयोऽर्थः ।

वाच्य एवार्थशक्तिमूलस्याङ्गभावो यथा—**आगत्य संप्रति०** ।

---

रूपाधिक्येन प्रतिपाद्यमानस्य निर्दिष्णे रामव्यतिरेकस्योत्कर्षिका । यत्किंचिद्धर्मलब्धोपमानभावादाधिक्यमपेक्ष्य बहुविशेषणसमर्पितोपमानभावादाधिक्यस्य प्रवृत्तत्वात् । प्रतिपिपादयिषितदुःखित्वस्य कुशलवसुताया अप्राप्त्यैवाऽऽधिक्येन तेन विशेषणेन न्यूनत्वप्रतीतिरिति न वाच्यम् । न च कुतो रामत्वं प्राप्तमित्याकाङ्क्षानिवर्तकस्य साध्यस्य वाच्यसिध्द्यङ्गत्वमेव नापराङ्गत्वमिति वाच्यम् । जनस्थानभ्रमणादिना वाच्यार्थेनापि शब्दशक्तिमूलव्यङ्ग्यात्प्रागवगतेन रामत्वसिद्धेः । संमुग्धप्रतीतवाच्यार्थानुपपत्तिवारकस्यैव वाच्यसिद्ध्यङ्गत्वात् । किंच रामत्वरूपवाच्यासिध्यङ्गत्वेऽपि प्रधानीभूतकुशलवसुताप्राप्तिरूपस्य स्वसिद्धावन्यानपेक्षस्य व्यङ्ग्योपमोत्कर्षिकेति व्यङ्ग्यस्य साम्यस्य वाच्याङ्गत्वमिति । तन्न । चमत्कारितद्धर्मप्राप्तेरेवोपमात्वात्प्रागुक्त उपमेष्टैव । अन्यथा तत्रालंकाराभावापत्तेः । सा च वाच्यैवेति प्रदीपकृतामाशय इत्याहुः । **शब्दशक्तिमूलेति** । शब्दानां परिवृत्त्यसहत्वात्तत्त्वम् । द्वितीयार्थस्याव्यङ्ग्यत्ववादिनां मते तु सर्वविशेषणव्यङ्ग्यदुःखित्वातिशयो वाच्योपमाङ्गमिति बोध्यम् ।

**आगत्येति** । मौग्ध्याद्विनैवानुनयं त्यक्तमानां प्रति सख्या इयमुक्तिः । वियोगो द्वीपान्तरे सूर्यस्य संचारेण यस्तेन संबन्धाभावः स एव वियोगो विरहस्तेन विसंष्ठुलाङ्गीं संकुचिताङ्गीमिव संतापकार्श्यादिना विषमाङ्गीमम्भोजिनीं कमलिनीं क्वचिद्द्वीपान्तर एवं न नायिकान्तरगृहे क्षपितरात्रिः शनैरतिभीत इवातिलज्जित इव मन्दं मन्दं पादपतनेन किरणसंयोगेनैव चरणपतनेन सहस्ररश्मिः सूर्यः प्रसादयति तदैवानुनयति एतत्पश्य । अत्र सहस्ररश्मिरिति बहुनायिकावत्त्वं ध्वन्यते । अम्भोजिनीमित्यनेनं स्वव्यापकन्यात्वं वर्ण्यायाः पद्मिनीत्वं च । क्वचिदेवेत्यनेनन नायिकागृह एवेति निश्चयाभावः । तत्रापि यामत्रयमेव नाधिकम् । एवं चेदृशोऽपि ईदृशीं स्वयमेवाऽऽगत्य पादपतनेनानुनयति । एवं हि कामिनोर्व्यवहारः । त्वं पुनर्बहुतरकालं परनायिकासक्ते धूर्ते विनैवानुनयं मानं त्यक्तवतीत्युपालम्भः । यत्तु अम्भोजिनीमिति पद्मिनीतिपरिभाषितनायिकामिति । तन्न । तस्यां पद्मिनीपदस्य पर्यायपरिवृत्त्यसहत्वादित्याहुः ।

---

१ क. °विंग्णरा° । २ क. °म् । आग° । ३ क. °व नायि° । ४ क. ग. °कासत्त्वं । ५ क. °न वर्ण्या° ।

**अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपणेनैव स्थितः । वाच्यसिद्ध्यङ्गं यथा—**

---

अत्रार्थशक्तिमूलो नायकनायिकावृत्तान्तो वाच्यरविकमलिनीवृन्तान्ताध्यारोपेण तदङ्गतयैव स्थितः । समासोक्तौ 'उपोढरागेण विलोल—' इत्यादौ सर्वत्र प्रतीयमानार्थोपस्कृतवाच्यस्यैव प्राधान्यात् । अयं च पादपतनेनेति श्लिष्टशब्दसद्भावेऽपि न शब्दशक्तिमूलत्वेन व्यपदेश्यः, किं स्वर्थशक्तिमूलत्वेन । प्रधानेन व्यपदेश इति न्यायात् । तद्व्यतिरेकेणापि नायकनायिकावृत्तान्तव्यक्तिसंभवाच्च । न चोपमाऽत्र व्यङ्ग्या । 'उल्लास्य काल'—इत्यादिवच्छ्लेषाभावात् । न च वाच्यसिध्यङ्गत्वम् । रविकमलिनीवृत्तान्तस्यैतन्नैरपेक्ष्येणैव सिद्धेरिति ।

---

**कमलिनीवृत्तान्ताध्यारोपेणेति** । कमलिनीवृत्तान्तेऽध्यारोपेणेत्यर्थः । **तदङ्गतया** । रविकमलिनीवृत्तान्तोत्कर्षकतया । वृत्तान्तो व्यवहारः । अत्र प्रकृतवृत्तान्तवाचकैः पदैः प्रसिद्धिवशाद्व्यञ्जितानामप्रकृतवृत्तान्तानामाश्रयानुपादानादपर्यवसितानां प्रकृतवृत्तान्ते वाच्यभूत आरोप्यमाणानां वाच्योत्कर्षकतैवेति भावः । **समासोक्तौ** । प्रकृतव्यवहारेऽप्रकृतव्यवहारारोपरूपायाम् । **प्रतीयमानः** । व्यङ्ग्यः । **श्लिष्टशब्दः** । परिवृत्त्यसहशब्दः । स च पादशब्द इति बोध्यम् । **प्रधानेन व्यपदेश इति** । परिवृत्तिसहशब्दबाहुल्यात्तेषां प्राधान्यम् । पादपतनशब्दं विनाऽपि नायकनायिकावृत्तान्तप्रतीतेश्च न तस्य प्राधान्यमिति भावः । तदेवाऽऽह—**तद्व्यतिरेकेणापीति** । वस्तुतोऽङ्घ्रिपतनशब्दोपादानेऽपि तत्संभवेनास्यापि परिवृत्तिसहत्वम् । न **चोपमाऽत्रेति** । नायकसूर्ययोरित्यर्थः । **श्लेषाभावात्** । विशेष्यवाचकपदश्लेषाभावादित्यर्थः । यत्र स्वातन्त्र्येण धर्मिद्वयमवगम्यते तत्रैकधर्मान्वये सत्युपमाङ्गीकृतेरिति भावः । धर्मिद्वयावगतावेव तादात्म्यारोपे रूपकाङ्गीकारान्न रूपकमपीति बोध्यम् । **न च वाच्येति** । प्रकृताप्रकृतवृत्तान्तयोरभेदो वाक्यार्थः । स चाप्रकृतवृत्तान्तोपस्थितिं विना न पर्यवस्यतीति शङ्काशयः । वृत्तान्त एव वाक्यार्थः । स च विनाऽप्यप्रकृतवृत्तान्तोपस्थितिं पर्यवस्यतीति न वाच्यसिद्ध्यङ्गत्वम् । यद्व्याङ्ग्योपस्थितिं विना वाक्यार्थ एव न पर्यवस्यति तस्यैव वाच्यसिध्यङ्गत्वादित्युत्तरम् ।

---

१ क. °रोपेणैव । २ क. इलत्र स° । ३ क. °देशः । किं° । ४ ख. प्राधान्येन । ५ क. °क्ष्येण सि° । ६ क. °तन्नै त° ।

**भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तमः शरीरसादम् ।**
**मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥१२७॥**

**अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृत ।**

**यथा वा—**

---

वाच्यसिद्ध्यङ्गं द्विधा—एकवक्तृकपदवाच्याङ्गमन्यवक्तृकपदवाच्याङ्गं च । तत्राऽऽद्यं यथा—**भ्रमिमरति०** ।

अत्र हालाहलरूपो विषशब्दार्थो व्यङ्ग्यः । जलेऽभिधानियमनात् । स च जलदभुजगेति रूपणस्य वाच्यस्य सिद्धिं करोति । अन्यथोपमासंदेहसंभवात् । यथा वा मम—

तादृग्भूतरसप्रसादकतकक्षोदाम्बुधारायिता
जीयासुः कविरत्नखान भवतस्तास्ता वचोभङ्गयः ।
अर्थान्विग्रहिणः पुरातनतरान्सद्यो नवान्कुर्वती
याभिः कल्पमहौषधीभिरगदंकारायते भारती ॥

अत्र रसप्रसाद इत्यत्र जलप्रसादरूपोऽर्थो व्यङ्ग्यः । स च वाच्यायाः कतकक्षोदाम्बुधारोपमाया अङ्गम् ।

---

**भ्रमिमिति** । सख्या नायिकावस्थां नायकाय बोधयितुं सामान्यतो वर्षावर्णनमिदम् । जलदो मेघ एव त्रासकत्वाद्भुजगः सर्पः, तज्जं विषं जलमेव विषं हालाहलं तद्वियोगिनीनां भ्रमिं भ्रमणं दिग्भ्रमणमिव दर्शयन्तं मूर्छादिविकारकारिणं कंचिदान्तरविकारं चेतसोऽनवस्थां वाऽरतिं विषयानभिलापम् । अलसं हृदयं यासां तत्ता प्रलयं नष्टचेष्टताम् । मूर्छां बाह्याभ्यन्तरेन्द्रियचेष्टाविरहो मूर्छा । चित्तस्य बहिरिन्द्रियासंबन्ध इत्येके । तमस्तमोगुणोद्रेकेणान्ध्यम् । मूर्छैव तम इति रूपकमिति कश्चित् । शरीरस्य सादं पीडां मरणम् । जीवस्योद्गमनारम्भो मरणं परिकीर्तितमित्युक्तलक्षणम् । न तु प्रसिद्धं मुख्यं मरणम् । तस्यामङ्गलरूपाश्लीलत्वात् । आलम्बनोच्छेदकत्वाच्चेति बोध्यम् । एतानि कुरुते । **जलेऽभिधेति** । प्रकरणेनेति भावः । यद्यपि प्रकरणात्प्रसिद्धिर्बलवती । अत एव निहतार्थस्य दोषत्वं वक्ष्यति । एवं च प्रसिद्धत्वाद्गरलस्योपस्थितौ कथं व्यङ्ग्यत्वं तथाऽपि जलदभुजगेत्यत्र भुजगाभिन्नजलदेत्यर्थके प्रधाने जलदे तदन्वयानुपपत्तिसहकृतप्रकरणेन प्रसिद्धिर्बाध्यत इति भावः । **वाच्यस्य सिद्धिमिति** । गरलात्मकजलोद्गारित्वसाधर्म्येण जलदे भुजगतादात्म्यारोपरूपरूपकोपपत्तेरिति भावः । नन्वनुपात्तधर्मेणैव वाच्यस्य रूपकस्य सिद्धिरत आह—**अन्यथेति** । तथा सति सामान्याप्रयोगसत्त्वेनोपमितसमासोऽपि

---

१ ग. °ङ्ग्यं मूर्छातमोरू° । २ क. °पणस्य । ३ क. °ककर्तृक° । ४ क. °न्यकर्तृक° । ५ क. °ति । जलदभुज° । ६ ग. °पि । °गच्छा° । ७ क. °बाधितेति ।

गच्छाम्यच्युत दर्शनेन भवतः किं[1] तृप्तिरुत्पद्यते
किं[2] त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा—
माश्लिष्यन्पुलकोत्कराञ्चिततनुर्[3]गोपीं हरिः पातु वः ॥१२८॥
अत्राच्युतादिपदव्यङ्ग्यमामन्त्रणे[4]त्यादिवाच्यस्य ।

---

अन्यवक्तृकशब्दवाच्यस्य सिद्ध्यङ्गं यथा—**गच्छाम्यच्युत०** ।

अत्राच्युतेत्यनेन सोल्लुण्ठेन त्वं मद्विषये न च्यवस इति व्यर्थमेवावस्थानमिति । यद्वाऽच्युतो धैर्यादस्खलितस्त्वमतो व्यर्थमवस्थानमिति । दर्शनेनेत्यादिना संभोगेनैव तृप्तिरिति । किं त्वेवमित्यादिना द्वयोरकीर्तिर्जातैव तद्वृथैवाऽऽत्मानं वञ्चयाव इति खेदश्च व्यज्यते । तच्च 'इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसाम्' इत्येतद्वाच्यस्य सिद्धिकृत् । तद्व्यक्तिं विनैतद्विशेषणपदार्थस्य शरीरालाभात् ।

---

संभाव्येतेति भावः । भ्रमाद्यष्टविधकार्यस्य रूपकसाधकतया विषपदेन गरलोपस्थितौ तदभेदे जले गृहीते विषाभिन्नजलजनकत्वेन भुजगाभेदस्य यत्संबन्धिनि यत्संबन्ध्यभेदस्तस्मिंस्तदभेद इति न्यायेन सिद्धौ वाच्यरूपकसिद्धिरिति तत्त्वम् ।

**गच्छामीति** । हेऽच्युत तन्नामक कृष्णाहं गच्छामि । कुत इत्यत्राऽऽह—भवतो दर्शनेन किं तृप्तिरुत्पद्यतेऽपि तु न । तथा च निष्फलमवस्थानमिति भावः । अवस्थाने बाधकमप्याह—किं त्विति । एवं विजनस्थयोरेकान्तगतयोरावयोः सतोर्हतो जनः कुत्सितो जनोऽन्यथा संभावयति । रत्यर्थं समागताविति संभावयतीति वाच्योऽर्थः । व्यङ्ग्यस्तु हेऽच्युत विजनेऽस्मद्विधनायिकादर्शनेऽपि च्युतिरहित भवतो दर्शनेन न तृप्तिरुत्पद्यतेऽपि तु संभोगेनैव । किं चान्यथा संभावनमावश्यकं तद्वृथैवाऽऽत्मानं वञ्चयाव इति वृथाऽवस्थानसहितः खेद इति पूर्वार्धोक्तमामन्त्रणं संबोधनमच्युतेति[5]। तस्य या भङ्गिः स्वरविशेषेणोक्तिस्तयाऽस्खलितत्वसूचनद्वारा व्यञ्जितं यद्वृथाऽवस्थानं तेन यः खेदस्तेनालसाम् । यद्वाऽऽमन्त्रणभङ्गिभ्यां सूचितौ यौ वृथावस्थानखेदौ ताभ्यामलसामित्यर्थः । अत्र भङ्गिर्दर्शनेन भवतः किं त्वेवं विजनस्थयोरित्यादिरूपोक्तिरचने[7]त्यन्ये । तत्रोत्पद्यत इत्यन्तेन वृथाऽवस्थानं किं त्वेवमित्यादिना खेद इति बोध्यम् । **सोल्लुण्ठेन त्वं मद्विषय[8] इति** । येनेदृशैकान्तेऽपि न रतिं करोषीति भावः । साक्षान्नायकनामग्रहणमेव सोल्लुण्ठत्वम् । यद्वेति पक्षे योगार्थमर्यादयाऽर्थलाभ इति विशेषः । इत्यामन्त्रणेत्यस्य कविप्रयुक्तेत्यादिः । तद्व्यक्तिं विना इतिपदार्थस्य विशेषणस्य शरीरालाभादिति भावः ।

---

१ ख. ग. किं प्रीतिरु° । २ क. किं चैवं । ३ क. तनुं गोपीं । ४ क. °त्यादौ वा° । ५ क. °नापकौ° । ६ ग. °तिरूपं तस्य । ७ °नेत्येके । त° । ८ ग. ममविषय° ।

एतच्चैकत्रैकवक्तृगतत्वेनापरत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः। अस्फुटं यथा—

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥ १२९ ॥

अत्रादृष्टो यथा न भवसि वियोगभयं च यथा नोत्पद्यते तथा कुर्या इति क्लिष्टम्। संदिग्धप्राधान्यं यथा—

हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥१३०॥

अत्राधरं परिचुम्बितुमैच्छदिति किं प्रतीयमानं किं वा विलोचनव्या-

---

अस्फुटं यथा—अदृष्टे०।

अत्रादृष्टो यथा न भवसि वियोगदुःखं च यथा नोत्पद्यते तथा कुर्या इति व्यङ्ग्यं सहृदयस्यापि न स्फुटमवभासते।

संदिग्धप्राधान्यं यथा—हरस्तु०।

अत्र चुम्बितुमैच्छादिति व्यङ्ग्यम्। युगपल्लोचनत्रयव्यापारणं वाच्यम्। तयोश्च प्राधान्ये साधकबाधकमानाभावेन संदेहः। वाच्यस्याप्यलौकिकत्वेन चमत्कारकारित्वादुत्कण्ठातिशयव्यञ्जकत्वाच्च।

---

**अदृष्ट इति**। कस्याश्चित्प्रियं प्रत्युक्तिः। त्वयि अदृष्टे कदा दर्शनादि भविष्यतीत्युत्कण्ठा। दृष्टे सति विश्लेषो वियोगस्तद्भयम्। इत्थमदृष्टेन दृष्टेन वा भवता सुखं न लभ्यते मयेति शेषः। भवतेति हेतौ तृतीया। **न स्फुटमिति**। व्युत्पन्नानामपि विलम्बवेद्यत्वादिति भावः।

**हर इति**। चन्द्रोदयारम्भेऽम्बुराशिरिव किंचिदीषत्परिवृत्तं च्युतं धैर्यं यस्य स हरस्तु विम्बफलमधरयति यत्तादृगोष्ठवति बिम्बफलसदृशाधरोष्ठवति वोमामुखे विलोचनानि व्यापारयामास संचारयामास। लोचनानीति बहुवचनेनोत्कण्ठातिशयो व्यज्यते। **तयोः प्राधान्य इति**। चमत्कारप्रयोजकत्वरूप इत्यर्थः। अत्र लोचनत्रयव्यापारणं धैर्यपरिवृत्तिश्चानुभावौ वाच्यौ। तौ यदि औत्सुक्यादीन्व्यभिचारिणोऽभिव्यज्य स्थायिचर्वणायां पर्यवस्यतस्तदा व्यङ्ग्यस्य प्राधान्यम्। व्यङ्ग्यीभूतेच्छामभिव्यज्यैवौत्सुक्यादेर्व्यञ्जनात्। यदि तु रतिकार्यत्वादाहत्यैव स्थायिचर्वणायां पर्यवस्यतस्तदा वाच्यस्य। न चात्र विनिगमकम्। उभयोरपि प्रधानप्रत्यासन्नत्वाद्भावत्वाच्च। न च तुल्यप्रधानता। पृथग्विश्रमाभावादिति भावः।

---

१ क. ग. विश्लेषभी°। २ क. °ष्टो न। ३ क. ग. अत्र प°। ४ ख. ग. °नं वि°। ५ क. किं वि°। ६ क. तयोःप्रा°। ७ ग. °ति ताह°। ८ ग. °ङ्ग्यप्रा°।

पारणं वाच्यं प्रधानमिति संदेहः। तुल्यप्राधान्यं यथा—

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते॥ १३१॥

अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामिव रक्षसां क्षणात्क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च दुर्मनस्त्वस्य समं प्राधान्यम्। काक्काऽऽक्षिप्तं यथा—

मथ्नामि कौरवशतं समरे न कोपा—
द्दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन॥ १३२॥

---

तुल्यप्राधान्यं यथा—ब्राह्मणातिक्रम०।

अत्र जामदग्न्यः क्षत्राणामिव रक्षसामपि क्षयं करिष्यतीति व्यङ्ग्यमिव वाच्यमपि प्रधानमेव। दुर्मनायत इति गम्भीरोक्त्या चमत्कारित्वात्, विग्रहवत्संधेरपि विवक्षितत्वाच्च।

काक्काऽऽक्षिप्तं यथा—मथ्नामि०।

---

**ब्राह्मणेति**। रावणं प्रति परशुरामदूतोक्तिः। ब्राह्मणानामतिक्रमोऽवमानस्तस्य त्यागो भवतामेव भूतये कल्याणाय भवति। न तु ब्राह्मणानाम्। जामदग्न्ये जीवति तेषामनिष्टस्यासंभवादिति भावः। भवतामिति बहुवचनेन सकलसभाक्षेपः। अन्यथा तदत्यागे। तथा तादृशं जन्मप्रभृतिसकलरहस्यवेदि मित्रं जामदग्न्यः, अत्यन्तं साधुजनातिक्रमासहनशीलः दुर्मनायते क्षुब्धान्तःकरणो भवतीत्यर्थः। सामीप्याभिप्रायेण वर्तमाननिर्देशः। तथा च तत्क्षोभे सकलराक्षसकुलक्षयरूपोऽनर्थो दुवारः स्यादिति व्यङ्ग्यम्। **व्यङ्ग्यम्**। दण्डरूपम्। **वाच्यमपीति**। भूत्युपदेशो मित्रत्वाभिधानरूपं च सौम्नेत्यर्थः। **विवक्षितत्वाच्चेति**। अनर्थनिवारकत्वेनेति भावः।

**मथ्नामीति**। संधिश्रवणकुपितस्य भीमस्येयमुक्तिः। अत्र प्रतिज्ञातकुरुकुलक्षयस्य न मथ्नामीति उक्तिर्विरुद्धेति ततः काक्का नञर्थान्तरं प्रतीयमानं प्रकृतनञर्थान्वयि, इत्यभावाभावरूपं मथ्नाम्येवेत्यवधारणं गम्यते। एवं सर्वत्र। उरस्तो हृदयात्। भवतां नृपतिः। न तु मम प्रजानां वा। स्वबुद्ध्या राज्यत्यागात्। संधिं मैत्रीम्। पणेन ग्रामपञ्चकरूपेण। अत्र क्रोधातिशयान्मथनादौ वर्तमानव्यपदेशः। वर्तमानसामीप्ये वा लट्। दुःखेन योधनीयत्वाभावाभिप्रायेण सुयोधनपदप्रयोगः। कौरवशतमिति शतशब्दोऽनन्तवाची।

---

१ क. ग. °णं वा वा°। २ ग. °सां स क्ष°। ३ ख. ग. च स°। ४ ग. सामेत्य°। ५ क. नञार्थो°।

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम् ।

असुन्दरं यथा—

वाणीरकुडंगुड्डीणसउणि कोलाहलं सुणन्तीए ।
घरकम्मवावडाए वहुएसीअन्ति अङ्गाइं ॥ १३३ ॥

अत्र दत्तसंकेतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात्सीदन्त्यङ्गानीति वाच्यं सचमत्कारम् ।

---

अत्र मथ्नामीति व्यङ्ग्यम् । तच्च वाच्यस्य निषेधस्य सहभावेनैव व्यवस्थितम् । तादृशकाकुं विना वाच्यस्य बाधितत्वेनाप्रादुर्भावात् । हठेनैव तदाक्षेपाद्वेत्युक्तं प्राक् ।

असुन्दरं यथा—**वाणीर०** ।

अत्र दत्तसंकेतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यम् । तस्माद्वाच्यं चमत्कारकारि । शब्दश्रवणसमकालमेव सर्वाङ्गावसादसंतन्यमानतारूपस्य तस्यातिसौन्दर्यादुत्कण्ठातिशयपर्यवसन्नत्वात् ।

---

**मथ्नामीति व्यङ्ग्यमिति** । मथ्नाम्येवेत्यर्थः । प्रतिज्ञातविरुद्धाभिधायिषु नञ्सु काकुर्निषेधान्तराक्षेपिका । अभावाभावश्चावधृतभावात्मक इति भावः । ननु मथ्नाम्येवेति व्यङ्ग्यस्य चमत्कारित्वे ध्वनित्वमेव स्यादत आह—**तच्चेति । सहभावेन** । तुल्यवत्प्रतीयमानत्वेन । काकुव्यङ्ग्यनिषेधं विना वाच्यार्थस्यापर्यवसानादिति भावः । यत्र तु काकोर्विलम्बेन प्रतीतिर्गुरुः खेदं खिन्न इत्यादौ तत्र ध्वनित्वमेवेति दिक् ।

**वाणीरेति** ।

वानीरनिकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥

गृहपार्श्ववर्तिवेतसनिकुञ्जे दत्तसंकेतायास्तत उड्डीनपक्षिकोलाहलतर्कितनायकप्रवेशाया गुरुजनपारतन्त्र्येण गृहकर्मव्यापृततया च तत्र गन्तुमशक्नुवन्त्या अवस्थावर्णनमिदम् । सीदन्तीति वर्तमाननिर्देशादवसादस्याविरामः । वर्तमानप्रत्ययाभ्यां श्रवणावसादरूपयोः कारणकार्ययोः पौर्वापर्यविपर्ययरूपातिशयोक्तिरलंकारः । तेन चोत्कण्ठातिशयो व्यङ्ग्यः । **तस्माद्वाच्यमिति** । अत्र शरीरावसादरूपं वाच्यं कार्यमेवानुभावभूतमौत्सुक्यावेगसंवलितानुरागोद्रेककृतमदनपारतन्त्र्यबोधकम् । व्यङ्ग्यं तु तन्मुखप्रेक्षीति बोध्यम् ।

---

१ क. °च्यस° । २ क. °द्वेत्याद्युक्तं । ३ क. °तागृहं प्र° । ४ ग. °वश्च । ननु । ५ ग. °स्थानव° । ६ ग. °र्थमे° ।

एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥ ४६ ॥

यथायोगमिति।

व्यज्यन्ते वस्तुमात्रेण यदाऽलंकृतयस्तदा।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥

---

एषां भेदा०।

पूर्ववद्ध्वनेरिव। चकारो भिन्नक्रमः। पूर्ववच्चेत्यर्थः। यथायोगं यथासंभवम्। तेनायमर्थः—न केवलमेत[1] एव गुणीभूतव्यङ्ग्यस्य भेदाः किंत्वर्थान्तरसंक्रमितवाच्यत्वादिभिर्यथा ध्वनेर्भेदास्तथाऽसंभविनो विहायास्यापि तैरुपाधिभिः शुद्धभेदाः। संकरसंसृष्टिभ्यां योजने च तेषामिमेषां[2] च संकीर्णभेदा अपि बोद्धव्याः। असंभविनश्च वस्तुमात्रेणालंकारव्यक्तिनिबन्धनाः। तदुक्तं ध्वनिकृता—**व्यज्यन्ते०**।

अत्र ध्वन्यङ्गता व्यङ्ग्यतया ध्रुवं ध्वन्यङ्गता ध्वनिनैव ता व्यज्यन्ते। तद्व्यञ्जकस्य ध्वनित्वमेवेत्यर्थः। कुतः। काव्यवृत्तेस्तदाश्रयात्काव्यवृत्तेस्तदभिसंधानपूर्वकत्वात्। वस्तुमात्रापेक्षयाऽलंकारस्य चारुतानियमादित्यर्थः।

ननु यद्यलंकारापेक्षया वस्तुमात्रस्य नातिशयानियमस्तदा कथमलंकारेण वस्तुमात्रव्यञ्जने ध्वनित्वमिति चेदुच्यते। स एवार्थो वाच्यः सन्न तथा चमत्करोति यथा व्यङ्ग्यतापन्न

---

**एषाम्**। उक्तप्रकारगुणीभूतव्यङ्ग्यानाम्। तेषामिमेषां चेति पाठः। **वस्तुमात्रेणेति**। वाच्यालंकाररहितेनेत्यर्थः। तत्सहितवस्तुनाऽलंकारव्यञ्जने तु यत्र वाच्यालंकारापेक्षया व्यङ्ग्यस्य तस्य चारुत्वं तत्र ध्वनित्वमेव। यथा चतुर्थ उदाहृतेषु। यत्रालंकारव्यङ्ग्यालंकारस्य न चारुत्वं तत्र गुणीभूतव्यङ्ग्यत्वमेव। यथा—

नैसर्गगुणविनीतं जनयति कापिञ्जलो वंशः।
आजन्मनो ह्यपूर्वं सूते रत्नाकरो रत्नम् ॥

इत्यत्र प्रतिवस्तूपमाव्यङ्ग्यायामगूढायामुपमायाम्। तथा च वस्तुव्यङ्ग्यालंकृतिभेदहीनैः पञ्चचत्वारिंशत्प्रकारः शुद्धो गुणीभूतव्यङ्ग्यभेद इति भावः। **ध्वन्यङ्गता**। ध्वनिव्यवहारप्रयोजकता। **काव्यवृत्तेरिति**। काव्यपदप्रवृत्तेरित्यर्थः। सालंकारत्वस्य काव्यलक्षणाघटकत्वादिति भावः। यद्वा कार्व्यवृत्तेः काव्यनिष्पत्तेरित्यर्थः। अलंकारकृतचारुत्वे-

---

१ क. 'मेते गु°। २ क. तेषां च। तेषामेषां च। ३ क. 'रुत्वनि°। क. °त्रस्यानति°। ५ क. °स्य चा°। ६ क. 'हीनो द्विचत्वा°। ७ क. ग. °क्षणत्वे°। ८ क. ग. °व्यप्रवृ°।

इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालंकारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वम् ।

**सालंकारैर्ध्वनेस्तैश्च योगः संसृष्टिसंकरैः ।**

सालंकारैरिति तैरेवालंकारैरलंकारयुक्तैश्च तैः । तदुक्तं ध्वनिकृता—

---

इत्यनुभवसिद्धम् । अतो वाच्यताऽपकर्षहेतुः, व्यङ्ग्यता तूत्कर्षायेति स्थितम् । यत्र चालंकारेण वस्तुमात्रं व्यङ्ग्यं तत्रालंकारस्य वाच्यत्वेन किंचिदपकर्षात् । वस्तुमात्रस्य च व्यङ्ग्यत्वेन किंचिदुत्कर्षाद्युज्यत एव ध्वनित्वम् । यत्र तु वस्तुनाऽलंकारो व्यज्यते तत्र वस्त्वलंकारयोर्वाच्यत्वव्यङ्ग्यत्वाभ्यामतिशयेनैवोत्कर्षापकर्षाविति कुतो गुणीभूतव्यङ्ग्यत्वावकाशः । इदं तु चिन्त्यम् । एवं चारुत्वाभावनिबन्धनं गुणीभूतत्वं मा भूत् । अगूढत्वादिनिबन्धने तु तस्मिन्को वारयितेति । यत्पुनरष्टानामेव भेदानां संकीर्णत्वमात्रातिदेशकमिदं सूत्रमिति व्याख्यानं तदबोधात् । तथा सति हि यथायोगमित्यनेन वस्तुव्यङ्ग्यालंकाररूपभेदपर्युदासवैयर्थ्यम् । संकरादीनां तथाऽप्यव्याहतेः ।

पूर्वं सजातीययोगो ध्वनेरुक्तः । इदानीं विजातीययोगमाह—

**सालंकारै० ।**

सालंकारैरिति विभिन्नार्थैकरूपनानाशब्दैकशेषः । एकत्रालंकारपदस्य भावप्रधानत्वात् । तथा च तैरेवालंकारैरलंकारसहितैश्च तैरित्यर्थः । तेन ध्वनिना गुणीभूतव्यङ्ग्येन वाच्यालंकारेण च ध्वनेर्योग इति पूर्वापराभ्यामुक्तं भवति । तदुक्तं ध्वनिकृता—

---

नैव शब्दार्थयोः काव्यत्वनिर्वाहादिति भावः । **अतिशयेनैवेति** । तत्कृतातिशयेनापीत्यर्थः । **यत्पुनरिति** । मतान्तरम् । **पर्युदासवैयर्थ्यमिति** । तत्र प्रसक्तेरेवाभावादिति भावः । ननु योगं द्वयोः संबन्धमनतिक्रम्येत्यर्थकतया संकराद्युपस्थापकमिदमित्यत आह—**संकरादीनामिति । तथाऽपि** । यथायोगमिति पदाभावेऽपि । पूर्वेषां ध्वनीनां यथा भेदाः संकरादिभिस्तथैषामपीत्येतावतैव तत्सिद्धेरिति भावः । तथाऽप्यव्याहतेरिति पाठः ।

**पूर्वम्** । चतुर्थोल्लासे । **तैरेवालंकारैरिति** । समासोक्तिरसवदादिरूपैर्गुणीभूतव्यङ्ग्यैरेवालंकारैरित्यर्थः । आगत्य संप्रतीत्यादौ गुणीभूतव्यङ्ग्यस्य नायिकानायकवृत्तान्तस्य रविकमलिनीवृत्तान्तोत्कर्षकस्य समासोक्त्यलंकाररूपत्वादिति भावः । **अलंकारसहितैश्च तैरिति** । अलंकारसहितैर्वस्तुरूपगुणीभूतव्यङ्ग्यैरित्यर्थः । अलंकारश्चात्र वाच्य एवेत्याहुः । फलितमाह—**तेनेति । पूर्वापराभ्याम्** । चतुर्थोल्लासस्थग्रन्थात्रत्यग्रन्थाभ्याम् ।

---

१ एतावत्पर्यन्तमेव ख. पुस्तके वर्तते । २ क. °न्नार्थरू° । ३ क. °तैरि° ।

स गुणीभूतव्यङ्ग्यैः सालंकारैः सह प्रभेदैः स्वैः ।
संकरसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा ॥ इति ।
अन्योन्ययोगादेवं स्याद्भेदसंख्याऽतिभूयसी ॥ ४७ ॥

एवमनेन प्रकारेणावान्तरभेदगणने[1]ऽतिप्रभूततरा गणना । तथा हि । शृङ्गारस्यैव भेद[2]प्रभेदगणनायामानन्त्यं का गणना[3] तु सर्वेषाम् । संकलने[4]न पुनरस्य ध्वनेस्त्रयो भेदाः । व्यङ्ग्यस्य त्रिरूपत्वात् । तथा हि । किंचिद्वाच्यतां सहते किंचित्त्वन्यथा । तत्र वाच्यतासहं[5]मविचित्रं विचित्रं चेति । अविचित्रं वस्तुमात्रम् । विचित्रं त्वलंकार[6]रूपम् । यद्यपि प्राधान्येन तदलंकार्यं तथाऽपि ब्राह्मणश्रमणन्यायेन तथोच्यते । रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः । स हि रसादिशब्देन शृङ्गारादिशब्देन वाऽभिधीयेत न[7] चाभिधीयते । तत्प्रयोगेऽपि विभावाद्यप्रयोगे

**स गुणीभूत० ।**

स ध्वनिः सालंकारैर्गुणीभूतव्यङ्ग्यैः स्वैः प्रभेदैः सह संकरसंसृष्टिभ्यां बहुधा पुनरप्युद्द्योतत इत्यन्वयः ।

**अन्योन्य० ।**

एवं ध्वन्यादिभेदैस्तत्प्रभेदैश्च योजनेऽतिप्रभूता संख्या भवतीत्यर्थः । एतैः प्रभेदैरुपनिबध्यमानः पुरातनोऽप्यर्थो नवनवी भवतीति सप्रयोजनं ध्वनिभेदोपदर्शनम् ।

यदुक्तं ध्वनिकृता—

ध्वनेर्यः स गुणीभूतव्यङ्ग्यस्याऽऽत्मा निदर्शितः ।
एतेनाऽऽनन्त्यमायाति कवीनां प्रतिभागुणः ॥ इति ।

तदेवमनन्तानां ध्वननव्यापारयोगिनां ध्वनीनां गुणीभूतव्यङ्ग्यानां च काव्यभेदानामनुगतोपाधिना संकलने त्रयो भेदाः । व्यङ्ग्यस्य त्रिरूपत्वात् । तथा हि—किंचिद्व्यङ्ग्यं वाच्यत्वसहं किंचिच्च तदसहम् । वाच्यत्वसहत्वं त्वभिधया प्रतिपाद्यमानस्यापि चमत्कारकारित्वम् । तयोराद्यं वस्तुमात्रमलंकारश्च । अलंकारस्य प्राधान्येऽपि यथालंकारत्वं तथोक्तं प्राक् । रसादिलक्षणस्त्वर्थो न कदाचिदपि वाच्यत्वं सहते । स हि सामान्यतो रसभावादिपदैर्विशेषतः शृङ्गारनिर्वेदादिपदैर्वाऽभिधीयमानश्चमत्कारकारी स्यात् । न त्वेवम् । अभिधानेऽपि

**सालंकारैरिति ।** वाच्यालंकारसहितैरित्यर्थः । **स्वैः प्रभेदैः ।** अर्थान्तरसंक्रमितवाच्यादिभिः । **आत्मा ।** भेदप्रकारः । **त्रिरूपत्वादिति ।** वस्त्वलंकाररसादिरूपत्वादित्यर्थः । **तथोक्तं प्रागिति ।** ब्राह्मणश्रमणन्यायादिनेति भावः ।

१ ग. °रेण भेदप्रभे° । २ ग. °दग° । ३ क. ग. °ना स° । ४ ग. °ने पु° । ५ क. °सहं विचित्रमविचित्रं चे° । ६ ग. °कारः । य° । ७ क. नाभि° । ८ क. °हुधोद्यो° । ९ क. °चिद्वाच्य° ।

तस्याप्रतिपत्तेस्तदप्रयोगेऽपि विभावादिप्रयोगे[1] तस्य प्रतिपत्तेश्चेत्यन्वय-व्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयत इति निश्चीयते। तेनासौ व्यङ्ग्य एव। मुख्यार्थबाधाद्यभावान्न[2] पुनर्लक्षणीयः।

अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययो[3]र्वस्तुमात्र[4]रूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक्प्रतिपादितम्। शब्दशक्तिमूले[5] त्वभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य, तेन सहोपमादेरलंकारस्य च निर्वि-

---

विभावाद्यप्रतीतौ चमत्काराभावात्। विभावादिप्रतीतौ त्वनभिधानेऽपि व्यक्तस्य चमत्कार-कारित्वादित्यन्वयव्यतिरेकाभ्यां विभावादिमुखेनैव प्रतीयमानस्तथेति निर्णीयते। तेनासौ व्यङ्ग्य एव चमत्कारी। ननु विभावादिवाचकपदैर्लक्ष्य एवास्तु रसादिः। न हि विभावादिवाचि पदं विना तत्प्रतीतिरिति चेन्न। मुख्यार्थबाधादिविरहात्।

ननु व्यञ्जनायाः शशविषाणायमानत्वात्कुतो व्यङ्ग्यत्रैरूप्यकृतो भेद इति चेदुच्यते। लक्षणामूले वस्तुमात्रं व्यङ्ग्यं विना लक्षणैव न संभवतीति प्राक्प्रतिपादितम्। अभिधामूलेऽप्यपि शब्दशक्तिमूले द्वितीयोऽर्थस्तेन सममुपमा वा व्यङ्ग्यैवेति निर्विवादम्। अभि-

---

**अनभिधानेऽपि व्यक्तस्येति**। अभिधानस्य च तादृशे विषये दोषतां वक्ष्यतीत्यपि बोध्यम्। पूर्वं विभावादिभिर्व्यञ्जितस्य रसस्य क्वचिद्रसादिपदेनानुवादे तु न दोषः। यथा शृङ्गारस्योपनतमधुना राज्यमेकातपत्रमित्यादौ। यद्यपि वस्त्वलंकारयोरपि वस्त्वलंकारपदाभ्यामभिधानेऽपि न चमत्कारस्तथाऽपि पदसमन्वयबलेन प्रतीतानां चमत्कारित्वमस्त्येव। रसादीनां तु नैवम्। विभावादिमुखेन प्रतीतानामेव चमत्कारित्वादिति भावः। **मुख्यार्थबाधेति**। ननु यष्टीः प्रवेशयेत्यादाविव तात्पर्यविषयानुपपत्त्या लक्षणाऽस्त्वित्यत आह— **आदीति**। अतात्पर्यविषयस्यापि रसस्य प्रत्ययाद्रसस्य स्वप्रकाशानन्दमयसंविद्विश्रान्तिरूपत्वेन तस्मिँल्लक्ष्ये प्रयोजनान्तरासंभवाद्विभावादिवाचकेषु पदेषु कुशलादिपदवत्प्रसिद्ध्यभावेन रूढ्यसंभवेन च न लक्षणेति भावः। प्रयोजनादिकं विना तु न लक्षणा। तस्या हेतुत्रयसापेक्षत्वनियमात्। तदन्तरेण भवन्ती वृत्तिस्तु व्यञ्जनैव। मात्सर्यमात्रात्तु लक्षणेत्युच्यत इति दिक्।

**ननु व्यञ्जनाया इति**। वस्त्वादिविषयाया इत्यर्थः। **प्राक्प्रतिपादितमिति**। प्रयोजनवत्यां रूढ्यभावेन प्रयोजनान्तरकल्पने चानवस्थापत्तेरित्याद्येवमप्यनवस्था स्यादित्यादिना प्रपञ्चितमित्यर्थः। **उपमा वेति**। वाशब्दश्चार्थे। प्रकरणादिनाऽभिधाया निय-

---

१ क. ग. °गे प्र°। २ ग. °न्न लक्ष°। ३ क. °योस्तु वस्तु°। ४ ग. °रूपव्य°। ५ क. °ले तु नि°। ६ ग. °धानि°। ७ क. °नाऽपि त°। ८ क. °ति। उच्य°। ९ क. °मा व्य°। १० क. °म्। मुख्या°।

**वादे व्यङ्ग्यत्वम् । अर्थशक्तिमूलेऽपि, विशेषे संकेतः कर्तुं न युज्यत इति सामान्यरूपाणां पदार्थानामाकाङ्क्षासंनिधियोग्यतावशात्परस्परसंसर्गो यत्रापदार्थोऽपि विशेषरूपो वाक्यार्थस्तत्राभिहितान्वयवादे का वार्ता व्यङ्ग्यस्याभिधेयतायाम्।**

---

धाया नियमनात् । अर्थशक्तिमूलेऽप्येवमङ्गीकर्तव्यम् । यतः पदेभ्यः प्रथमं पदार्थस्मृतिः । अथ पदार्थविशेषाणामन्वयविशेषरूपस्य वाक्यार्थस्य प्रत्ययः । ततो व्यङ्ग्यप्रतीतिरिति तृतीयकक्षायां कुतोऽभिधायाः प्रसरणम् । द्वितीयकक्षायामेव तदनपेक्षणात् । यतोऽभिहितान्वयवादेऽशक्य एवान्वय आकाङ्क्षादिवशेन प्रतीयते । शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति च सर्वसिद्धम् । येऽप्यन्विताभिधानवादिनः—'देवदत्त गामानय' इत्यादि प्रयोजकवृद्धवाक्यं श्रुत्वा तदनन्तरं प्रयोज्यवृद्धेन सास्नादिमन्तमर्थमानीयमानमालोक्य अयमेतद्विषयकैतत्क्रियागोचरकार्यताज्ञानवांस्तद्विषयकचेष्टावत्त्वात्तद्विषयकप्रवृत्तिमत्त्वाद्वा मद्वदिति प्रयोज्यवृद्धस्य ज्ञानमनुमिमीते । ततः कारणं विना कार्यानुपपत्त्याऽखण्डवाक्यस्यान्वयव्यतिरेकाभ्यां तज्ज्ञानेन कार्यत्वकारणत्वरूपां शक्तिमवधारयति । अथ ज्ञेयसंबन्धं विना वाक्यस्य सा शक्तिरनुपपन्नेत्यर्थापत्त्याऽखण्डवाक्यार्थेनाखण्डवाक्यस्य वाच्यवाचकभावरूपं संबन्धमवधारयति ।

---

न्त्रणात्तया बोधयितुमशक्यस्यार्थान्तरस्य वस्तुरूपस्योपमादेरलंकारस्य चाभिधावृत्त्यविषयस्य व्यङ्ग्यत्वमेव । शब्दबोध्यस्य वृत्तिविषयत्वनियमादिति भावः । **विशेषरूपस्य** । गवान्वितकर्मत्वादिरूपस्य । **तदनपेक्षणादिति** । वाक्यार्थस्यापदार्थसंसर्गरूपस्यापूर्वत्वेनानभिधेयत्वे कथं व्यङ्ग्यस्याभिधेयत्वमिति भावः । तदेवोपपादयति—**यतोऽभिहितेति** । एवं चापूर्वत्वाद्वाक्यार्थ इव व्यङ्ग्यार्थेऽपि संकेतग्रहो न संभवतीति भावः । **येऽपीति** । प्राभाकरा इत्यर्थः । **आलोक्येति** । एतेन प्रयोज्यप्रयोजकवृद्धप्रयुज्यमानशब्दानयनादिक्रियाणां प्रत्यक्षविषयत्वमुक्तम् । **कार्यताज्ञानम्** । कृतिसाध्यताज्ञानं कृत्युद्देश्यत्वज्ञानं वा । **चेष्टयेति** । तत्र चेष्टया प्रवृत्तिस्तयेच्छा तया ज्ञानानुमानम् । कदाचिच्चेष्टयैव ज्ञानानुमानम् । **कार्यत्वकारणत्वरूपाम्** । तज्ज्ञाननिष्ठकार्यत्वनिरूपितजनकत्वरूपां शक्तिमखण्डवाक्यनिष्ठामवधारयतीत्यर्थः ।

---

१ क. ग. °ङ्क्षायोग्यतासांनिधिव° । २ क °यरूपविशेषस्य । ३ क. °लोच्य बालोऽय° । ४ क. °ज्ज्ञानकार्यत्वनिरूपककार° । ५ क. °वाक्यस्यार्थेऽव° । ६ ग. °त्वेनाभि° । ७ क. व्यङ्ग्येऽर्थे । ८ ग. °ज्ञानम् । चेष्ट° ।

येऽप्याहुः ।

शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥
अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम् ।
अर्थापत्त्यावबोधेत संबन्धं त्रिप्रमाणकम् ॥

इति प्रतिपादितदिशा देवदत्त गामानयेत्याद्युत्तमवृद्धवाक्यप्रयोगाद्देशाद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सत्यनेनास्माद्वाक्यादेवंविधोऽर्थः प्रतिपन्न इति तच्चेष्टयाऽनुमाय तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणसंबन्धमवधार्य बालस्तत्र व्युत्पद्यते । परतश्चैत्र गामानय देवदत्ताश्वमानय देवदत्त गां नयेत्यादिवाक्यप्रयोगे तस्य तस्य शब्दस्य तं तमर्थमवधारयतीत्यन्वयव्यतिरे-

---

यदुक्तम्—

शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥
अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम् ।
अर्थापत्त्याऽवबुध्येत संबन्धं त्रिप्रमाणकम् ॥ इति ।

त्रिप्रमाणकमिति जात्यपेक्षया त्रित्वं न तु व्यक्त्यपेक्षया । एवमखण्डयोः संबन्धमवधार्य विशेषतो व्युत्पद्यते । कथम् । इत्थम्—अनन्तरं तेनैव प्रयोजकेन 'चैत्र अश्वमानय' 'देवदत्त गां नय' इत्यादिवाक्येषु कस्यचिदन्यस्य पदस्याऽऽवापे कस्यचिदुद्धारे च सति यस्य वाक्यभागस्यान्वयव्यतिरेकाभ्यां यस्य वाक्यार्थभागस्यान्वयव्यतिरेकावुपलभते तत्र तस्य शक्तिमवधारयति । तच्च शक्त्यवधारणमन्वित एव पदार्थे । प्रथममन्वय एव वाक्यस्य

---

**प्रतिपन्नत्वम्** । प्रतिपत्तिर्ज्ञानमिति यावत् । बुध्येतेत्यग्रिमेणान्वयः । **अनुमानेन चेष्टयेति** । चेष्टारूपानुमितिजनकज्ञानविषयहेतुनेत्यर्थः । **अन्यथानुपपत्त्या** । कारणं विना कार्यानुपपत्त्येत्यर्थः । **बोधे** बोधनिष्ठकार्यतानिरूपितां **द्वयात्मिकां** द्वयं कार्यं कारणं च आत्मा प्रतियोगि यस्यास्तां कारणत्वरूपां शक्तिं बुध्येतेत्यग्रिमेणान्वयः । बोधेदितिपाठे ज्ञाननिरूपितामिति शेषो बोध्यः । संबन्धम् । वाच्यवाचकभावरूपम् । एवं शक्तिग्रहं त्रिप्रमाणकमाहुरित्यर्थः । **जात्यपेक्षयेति** । अर्थापत्तित्वजात्यपेक्षयेत्यर्थः । अनुपपत्तिरप्यर्थापत्तिरेव । **उद्धारः** । त्यागः । **प्रथममन्वय एवेति** । अन्वयविशिष्ट एवेत्यर्थः ।

---

१ ग. °तु बाधे° । क. तु बुद्ध्येच्छ° । २ क. °पत्या च बुध्यन्ते सं° । ग °पत्यैव बुध्यन्ते सं° । ३ क. °त्यादावुत्त° । ४ क. ग. °योगे देशा° । ५ क. °वृद्ध आन° । ६ धोऽर्थो ज्ञात इ° । ७ क. °कलक्षणं सं । ग. °कसं° । ८ क. °बुध्यन्ते सं° । ९ क. °पितं द्व° ।

काभ्यां प्रवृत्तिनिवृत्तिकारि वाक्यमेव प्रयोगयोग्यमिति वाक्यस्थितानामेव पदानामन्वितैः पदार्थैरन्वितानामेव संकेतो गृह्यत इति विशिष्टा एव पदार्था वाक्यार्थो न तु पदार्थानां वैशिष्ट्यम्। यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्त इति पदार्थान्तरमात्रेणान्वितः पदार्थः संकेतगोचरस्तथाऽपि सामान्यावच्छादितो विशेषरूप एवासौ प्रतिपद्यते, व्यतिषक्तानां पदार्थानां तथाभूतत्वादित्यन्विताभिधानवादिनः। तेषामपि मते सामान्यविशेषरूपः

---

शक्तिग्रहात्। पदार्थमात्रशक्तावुपजीव्यविरोधात्। व्यवहारेणान्वितज्ञानस्यैवोपस्थापनाच्च। न च वाक्यं विना क्वचिदाद्यव्युत्पत्तिः। व्यवहारेणैवाऽऽद्यव्युत्पत्तेः। व्यवहारस्य च प्रवृत्तिनिवृत्तिरूपस्य पदमात्रेण कर्तुमशक्यत्वात्। अतो वाक्यस्थितानामेव पदानामन्वितेष्वेव पदार्थेषु संकेतग्रहादन्विता एव पदशक्याः। त एव च वाक्यार्थमिति न वाक्यार्थबोधे शक्तेर्विरामः। न त्वभिहितानां पदार्थानामन्वयोऽशक्य एव प्रतीयते योग्यतादिवशादिति युक्तम्। ननु तथाऽपि संसर्गविशेषोऽशक्य एव। पदार्थसामान्यान्वित एव शक्तिग्रहात्। अन्यथा 'गामानय' इति पदं श्रुत्वा 'अश्वमानय' इत्यादिवाक्ये तदेवेदमानयपदमित्यादि प्रत्यभिज्ञा न स्यात्। पूर्वस्य गवान्वितानयनपदस्याश्वान्वितानयनेऽशक्तत्वेनार्थभेदेन भेदादिति चेन्न। पदार्थत्वेन सामान्येन विशेषाणामन्वये[3] शक्तिग्रहात्। न हि निर्विशेषं सामान्यमिति। अन्वितानां च विशेषरूपत्वात्। इत्याहुः। तेषामपि मते सामान्यैनैव रूपेण

---

**उपस्थापनादिति।** जननादित्यर्थः। **पदानामिति।** परस्परसाकाङ्क्षाणामिति विशेषणं देयम्। अत एव दण्डेन गामभ्याजेत्यादौ करणत्वान्वितगवि गोपदस्य न शक्तिः। प्रत्ययस्य प्रकृत्यैव कारकस्य क्रिययैव च साकाङ्क्षत्वादित्याहुः। **अन्वितेष्वेवेति।** इतरपदार्थस्य कर्मत्वादेरितरपदशक्यत्वेनान्यलभ्यतया तत्रापरपदशक्त्ययोगादन्वयविशिष्ट एव संकेतग्रह इति भावः। **त एवेति।** परस्परं संसृष्टाः पदार्था एव वाक्यार्थो न तु पदवृत्तिविषयाणां पदार्थानां तद्वृत्त्यविषयोऽन्वयो वाक्यार्थ आकाङ्क्षादिवशाद्भासत इति भावः। **न त्विति।** अशक्यभानेऽतिप्रसङ्गादन्वित एव व्यवहाराच्चेति भावः। **पदार्थसामान्यान्वित एव शक्तिग्रहादिति।** पदार्थसामान्यनिरूपितान्वयविशिष्ट एवेत्यर्थः। उक्तयुक्त्याऽन्वयत्वावच्छिन्नविशिष्ट एव संकेतसत्त्वादिति भावः। **विशेषाणामेवान्वये।** विशेषसंबन्ध्यन्वये। **अन्वितानाम**न्वयप्रतियोगिनां पदार्थत्वावच्छिन्ननिरूपितान्वयत्वेन[4] विशेषपदार्थनिरूपितान्वयविशेषविशिष्टे शक्तिग्रहादित्यर्थः। **सामान्यैनैव रूपेणेति।** तदादाविव कारकान्वितानयनत्वादिरूपेण क्रियान्वितगोत्वादिसामा-

---

१ क. एव निश्चीयते। व्य०। २ क. 'नस्या'। ३ क. 'णामेवान्व०। ४ क. 'न पदर्थाविशेषनिरू०।

पदार्थः संकेतविषय इत्यतिविशेषभूतो वाक्यार्थान्तर्गतोऽसंकेतितत्वादवाच्य एव यत्र पदार्थः प्रतिपद्यते तत्र दूरेऽर्थान्तरभूतस्य निःशेषच्युतेत्यादौ विध्यादेश्चर्चा। अनन्वितोऽर्थोऽभिहितान्वये। पदार्थान्तरमात्रेणान्वितस्त्वन्विताभिधाने। अन्वितविशेषस्त्ववाच्य एवेत्युभयनयेऽप्यपदार्थ एव वाक्यार्थः।

यदप्युच्यते नैमित्तिकानुसारेण निमित्तानि कल्पन्त इति। तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वं वा। शब्दस्य प्रकाशकत्वान्न कारकत्वम्। ज्ञापकत्वं त्वज्ञातस्य कथम्। ज्ञातत्वं च संकेतेनैव। स चान्वितमात्रे।

---

विशेषः शक्यो न तु विशेषरूपेण। तथा च पदार्थान्तरसामान्यान्विते पदानां शक्तिः। गवादिविशेषान्वितस्तु विशेषोऽवाच्य एव। तस्मादभिहितान्वयवादेऽनान्वित एव, अन्विताभिधाननये तु पदार्थसामान्यान्वितः स्वार्थः संकेतविषयः। गवादिविशेषान्वितानयनादिरूपस्त्वसंकेतित एवेत्यवाच्य एव वाक्यार्थः।

यदपि कैश्चिदुच्यते—'शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तत्र सर्वत्रापि शब्द एव निमित्तम्। यतो नैमित्तिकानुरोधेन निमित्तानि कल्प्यन्ते' इति। तदप्ययुक्तम्। शब्दस्यार्थे निमित्तत्वं कारकत्वं ज्ञापकत्वं वा। न प्रथमम्। शब्दस्यार्थानुत्पादकत्वात्। चरमं पुनरनुमन्यते, परंतु संकेतवत्त्वेन ज्ञातस्य। अज्ञातस्य स्वरूपमात्रेण ज्ञातस्य वा ज्ञापकत्वेऽतिप्रसङ्गात्। न चान्वयविशेषे संकेतग्रहः। अस्तु विशेष एव संकेतग्रह इति चेत्।

---

न्यरूपेणैव शक्तेरिति भावः। **विशेषोऽवाच्य एवेति**। गोकर्मकानयनादिविशेषोऽवाच्यः समभिव्याहृतपदानां परस्पराकाङ्क्षावशादेव भासत इति भावः। अत्रारुचिबीजं तु व्यवहारेण गोकर्मकानयनादिविशेष एव प्रथमं शक्तिग्रहात्सामान्यान्वितशक्तिग्रह उपजीव्यविरोधस्य तवापि सत्त्वेन लाघवादनन्वित एव शक्तिरन्वय आकाङ्क्षालभ्य इत्येवोचितामिति। **अनन्वित एवेति**। अस्य स्वार्थसंकेतविषय इत्यनेनान्वयः। **असंकेतित एवेति**। सामान्यलक्षणाया अभावेन विशेषस्याप्रत्यासन्नत्वेन संकेतग्रहाविषयत्वादित्यर्थः। एवं च तदनन्तरमवगम्यमानस्य व्यङ्ग्यस्य सर्वथा तदविषयत्वमिति भावः।

**शब्द एव निमित्तमिति**। उपस्थितत्वादित्यर्थः। एवं च शब्दस्य पुनः पुनरनुसंधानं कल्प्यत इति वाच्यार्थ इव व्यङ्ग्यार्थेऽपि न वृत्त्यन्तरकल्पनमिति भावः। तदेवाऽऽह—यत इति। **अतिप्रसङ्गादिति**। सर्वदाऽर्थप्रतीतिप्रसङ्गात्। अव्युत्पन्नस्यापि शब्द-

---

१ ग. °रस्य°। २ ग. °न्वितार्थो°। ३ ग. °न्विता°। ४ क. °त्वं सं°। ५ क. °केतः। अ°।

एवं च निमित्तस्य नियतनिमित्तत्वं यावन्न निश्चितं तावन्नैमित्तिकस्य प्रतीतिरेव कथम् । इति नैमित्तिकानुसारेण निमित्तानि कल्प्यन्त इत्यविचारिताभिधानम् ।

ये त्वभिदधति सोऽयमिषोरिव दीर्घदीर्घतरो व्यापार इति, यत्परः शब्दः स शब्दार्थ इति च विधिरेवात्र वाच्य इति । तेऽप्यतात्पर्यज्ञा-

---

लोष्टाद्यन्वितानयनादेर्विशेषस्योपस्थापकान्तराभावेन शब्दादेवोपस्थितिर्वाच्या । तथा च तत्र संकेतग्रहे शब्दात्तदुपस्थितिः शब्दाच्च तदुपस्थितौ संकेतग्रह इत्यन्योन्याश्रयात् । तस्मान्नैमित्तिकानुरोधेन निमित्तानि कल्प्यन्त इत्यविचारिताभिधानम् ।

अथ ' सोऽयमिषोरिव दीर्घदीर्घतरो व्यापार इति यत्परः शब्दः स शब्दार्थ इति च निःशेष इत्यादौ विधिरेव वाच्यः ' इति भट्टमतोपजीविनः । अस्यार्थः—यथा बलवता प्रेरित इषुरेकेनैव वेगाख्येन व्यापारेण वर्मच्छेदमुरोभेदं प्राणहरणं च रिपोर्विधत्ते तथैक एव शब्द एकेनैवाभिधाख्यव्यापारेण पदार्थस्मृतिं वाक्यार्थानुभवं व्यङ्ग्यप्रतीतिं च विधत्ते । अतो व्यङ्ग्यत्वाभिमतस्यार्थस्य वाच्यत्वमेव । किं च यत्र शब्दस्य तात्पर्यं स शब्दार्थ इति ' निःशेष ' इत्यादौ तात्पर्यविषयतया विधिर्वाच्य एवेति । ते तात्पर्यवाचोयुक्तेस्तात्पर्यमजानन्तः पशवः । तद्वाक्यवर्त्तिपदोपस्थापित एव हि तात्पर्यमुच्यते न प्रतीतमात्रे । तथा हि ।

---

श्रवणमात्रेणार्थप्रतीतिप्रसङ्गाच्चेत्यर्थः । प्रत्यक्षान्यप्रमाणस्य ज्ञातस्यैव करणत्वनियमाच्चेत्यपि बोध्यम् । **उपस्थापकान्तराभावेनेति** । इतरव्यवहारदर्शनेनैव व्युत्पन्नस्य लोष्टान्वितानयनव्यवहारं कदाऽप्यदृष्टवतोऽपि लोष्टमानयेति वाक्याद्बोधस्थल इत्यर्थः । व्यञ्जनायास्तु स्वरूपसत्या एवोपयोगो धर्मिग्राहकमानसिद्धः । अतिप्रसङ्गस्तु वक्त्रादिवैशिष्ट्यापेक्षणान्नेति भावः ।

**विधिः** । नायकान्तिकगमनरूपः । **एक एवेति** । सुकविप्रयुक्त इत्यर्थः । न चैकार्थप्रतीतौ शब्दस्य विरामः । विवक्षितार्थप्रतीत्युत्तरमेव विरामाङ्गीकारादिति भावः । **तद्वाक्यवर्तीति** । यत्परः शब्द इत्यस्य हि उपात्तशब्दैः प्रतिपाद्येष्वर्थेषु यदंशे विधेयत्वं तत्र वाक्यतात्पर्यं यत्र तात्पर्यं स शब्दार्थस्तदंशे शब्दस्यानधिगतार्थगन्तृत्वरूपं प्रामाण्यमित्यर्थः। न तु यत्तात्पर्यकतया शब्दः प्रयुज्यते स शब्दार्थ इत्यर्थ इति भावः । एवं हि तात्पर्यस्यानियतत्वेन शक्तेरप्यनियतत्वापत्तिरिति बोध्यम् । ननु विधेयत्वं प्रवर्तनारूपविधिविषयत्वम् । तच्च क्रियाया एव न द्रव्यादेरिति दध्ना जुहोतीत्या-

---

१ ग. °कार्थानु° । २ क. ग. °दीर्घो व्या° । ३ ग. °ति वि° । ४ क. °दीर्घो व्या° । ५ क. °ण मर्म° । ६ क. शक्तिरूपो व्यापारः पदार्थवाक्यार्थज्ञानानि करोति । यत्र च शब्दस्य ।

स्तात्पर्यवाचोयुक्तेर्देवानांप्रियाः। तथा हि। भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियानिर्वर्तकस्वक्रियाभिसंबन्धात्साध्यायमानतां प्राप्नुवन्ति। ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते। यथा ऋत्विक्प्रचरणे प्रमाणान्तरात्सिद्धे 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यत्र लोहितोष्णीषत्वमात्रं विधेयम्। हवनस्यान्यतः सिद्धेर्दध्ना जुहोतीत्यादौ दध्यादेः कारणत्वमात्रं विधेयम्। क्वचिदुभयविधिः। क्वचित्त्रिविधिरपि। यथा रक्तं पटं वयेत्यादावेकविधिर्द्विविधिस्त्रिविधिर्वा। ततश्च यदेव विधेयं

---

भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत इति सिद्धान्तः। अस्यार्थः—भूतं सिद्धम्। भव्यं साध्यम्। तयोः समभिव्याहारे भूतं सिद्धं भव्याय साध्यायोपदिश्यत इति। कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः सिद्धा अपि प्रधानक्रियानुकूलया साध्यीभूतया स्वक्रियया योगात्साध्यायमानतामाप्नुवन्ति। स्वरूपेण सिद्धा अपि साध्यक्रियाविशिष्टतया साध्या इव भवन्ति। ततश्च यथा दहनेनादग्धमात्रं दह्यते न तु दग्धमपि तथा यावदेवाप्राप्तं तावदेव शब्देन विधीयते न तु प्राप्तमपि। यथा ऋत्विक्प्रचरणेऽन्यतः प्राप्ते 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यनेन लोहितोष्णीषत्वमात्रं विधीयते न तु ऋत्विक्प्रचरणम्। उष्णीषस्यापि प्राप्तौ तु लौहित्यमात्रम्। हवनस्यान्यतः सिद्धौ च 'दध्ना जुहोति' इत्यनेन दध्नः करणत्वं न तु दधि हवनं वा। एवं 'रक्तं पटं वय' इत्यादौ रक्तत्वपटवयनानां मध्य एकस्य द्वयोस्त्रयाणां वाऽसिद्धावेकविधिर्द्विविधिस्त्रिविधिर्वा। ततश्च यावदेव

---

देर्दध्यंशे प्रामाण्यं न स्यादत आह—**भूतेति**। सिद्धं साध्यार्थतयोपादिश्यतेऽज्ञातं ज्ञाप्यत इति तदर्थः। नन्वेवमप्यक्रियारूपत्वात्कथं प्रवर्तनाविषयत्वमत आह—**कारकपदार्था इति**। यथा दध्ना जुहोतीत्यादौ प्रधानक्रियाया होमस्यानुकूला दधिक्रिया पूर्वदेशसंयोगध्वंसहेतुविभागजनकः स्पन्दो ग्रहणाख्यस्तद्योगात्स्वतः सिद्धस्यापि दध्नः साध्यतेति स्वरूपतस्तस्याविधेयत्वेऽपि तादृशक्रियोपरागाद्विधेयतेति भावः। नन्वेवं स्वतः क्रियारूपस्य होमस्यैव विधेयता स्यादत आह—**ततश्चेति**। होमस्याग्निहोत्रं जुहोतीति वाक्यात्प्राप्तेरिति भावः। **शब्देन प्रतीयत इति**। विधीयत इत्यर्थः। न तु प्राप्तमपीति भावः। श्येनप्रकरणस्थं वाक्यमुदाहरति—**लोहितेति**। अध्वर्युं वृणीत इत्यादिभिर्वाक्यैर्ऋत्विजां प्राप्तत्वात्ते न विधेया इत्यत आह—**नत्विति**। ननु सोष्णीषा निवीतवसना ऋत्विजः प्रचरन्तीति वाक्यादुष्णीषोऽपि प्राप्त इत्यत आह—**उष्णीषस्यापीति**। **न तु दधीति**। साधनद्रव्यत्वेनापेक्षतस्ततप्राप्तेरिति भावः। **हवनं वेति**। अग्निहोत्रं जुहोतीति

---

१ क. ग. °याभिनि°। २ ग. °देः कर°। ३ क. °लतया। ४ क. °समिति। य°। ५ क. °द्धत्वेन स्वरू°। ६ ग. °वः। न तु द°। ७ ग. °त्वेन तस्यापि

**तत्रैव तात्पर्यमित्युपात्तस्यैव शब्दस्यार्थे तात्पर्यं न तु प्रतीतमात्रे । एवं हि पूर्वो धावतीत्यादावपराद्यर्थेऽपि क्वचित्तात्पर्यं स्यात् । यत्तु विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्था इत्यत्रैतद्गृहे न भोक्तव्यमित्यत्र तात्पर्यमिति स एव वाक्यार्थ इति । उच्यते—तत्र चकार एकवाक्यतासूचनार्थः । न चाऽऽख्यातवाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेनाङ्गता कल्पनीयेति विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति**

विधेयं तावत्येव तात्पर्यम् । विधेयं च शब्दोपात्तमेवेति सुष्ठूक्तं 'शब्दोपात्त एव तात्पर्यम्' इति । यदि च प्रतीतमात्रे तात्पर्यं तदा 'पूर्वो धावति' इत्यादौ पूर्वादिसमानसंवित्संवेद्यतया प्रतीतेऽपराद्यर्थेऽपि कदाचित्तात्पर्यं स्यात् । ननु तद्वाक्यवर्तिपदोपस्थापित एव तात्पर्यमिति न व्याप्तिः । विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्था इत्यत्र विषं भुङ्क्ष्वेति वाक्यस्य मा चेत्यादिवाक्यार्थे तात्पर्यादिति । मैवम् । यत एतदेकमेव वाक्यम् । चकारस्यैकवाक्यतासूचकत्वात् । अन्यथा तद्वैयर्थ्यप्रसङ्गात् । न चाऽऽख्यातवाच्यक्रिययोः साक्षादन्वयः संभवति । 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्' इति न्यायात् । सुहृद्वाक्यं चैतत् । अतो भवितव्यमत्रान्वयेन । ततो विषभक्षणादप्येतद्गृहभोजनमनिष्टहेतुरतः

वाक्येन तस्यापि प्राप्तत्वादिति भावः । **शब्दोपात्त एवेति** । शब्दोपात्तविधेय एवेत्यर्थः । **तात्पर्यम्** । प्रागुक्तप्रामाण्यनियामकम् । एवं च व्यङ्ग्यस्य शब्दोपात्तत्वाभावात्सर्वत्र विधेयत्वाभावाच्च न तत्र प्रागुक्तप्रामाण्यनियामकं तात्पर्यं नापि शक्तिरिति भावः । **तात्पर्यमिति** । शक्तिश्चेत्यपि बोध्यम् । **समानसंविदिति** । तस्य प्रतियोगिनि नित्यसाकाङ्क्षत्वादिति भावः । **तात्पर्यं स्यादिति** । एवं चान्यलभ्यत्वेनापदार्थे तत्रापि पूर्वशब्दस्य शक्तिसाधकं तात्पर्यं स्यादिति भावः । **तात्पर्यादिति** । एवं च तद्वाक्यवर्तिपदोपस्थापितातिरिक्तेऽपि तात्पर्यदर्शनाद्व्यङ्ग्यार्थेऽपि स्यादिति भावः । **एकमेवेति** । सुहृदुक्तस्य विषं भक्षयेत्यस्य स्वार्थेऽविश्रान्तस्य साकाङ्क्षतयेत्यर्थः । **न्यायादिति** । एवं च समत्वेन यथा गुणयोरसंबन्ध एवं प्रधानयोरपि समत्वेनैव परस्परमनन्वयः स्यादित्यर्थः । **भवितव्यमत्रेति** । स चान्वयो न साक्षात्कर्तृकर्मभावादिना । बाधात् । नापि मुख्यार्थमादाय परस्परोपपादकतया । तत्र विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेन मुख्यार्थे बाधात् । अतस्तस्यैवाङ्गता लक्षणाश्रयणेन कल्प्येति तत्र विषं भक्षयेत्यस्य विषभक्षणाधिकबलवदनिष्टानुबन्धित्वविशिष्टैतद्गृहभोजने लक्षणा । तस्य च मा चास्येत्यादिवाक्यार्थे सर्वथेत्यर्थसंवलिते हेतुत्वेनान्वय इत्याशयेनाऽऽह—**तत इति** । ततश्च यत्र

१ क. तीतिमा° । २ क °रार्थे क्व° । ३ क. °षं भक्षय मा चास्य गृहे भुङ्क्ष्वेत्य° । ४ क. °योर° । ५ क. °वः समा° ।

**सर्वथा माऽस्य गृहे भुङ्क्था इत्युपात्तशब्दार्थ एव तात्पर्यम् ।**

**यदि च शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते तावति शब्दस्याभिधैव व्यापारस्ततः कथं ब्राह्मण पुत्रस्ते जातो ब्राह्मण कन्या ते गर्भिणीत्यादौ हर्षशोकादीनामपि न वाच्यत्वम् । कस्माल्लक्षणा । लक्षणीयेऽप्यर्थे दीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः । किमिति च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वपूर्वबलीयस्त्वम् । इत्यन्विताभिधान-**

---

सर्वथा नास्य गृहेऽभुङ्क्था इति वाक्यार्थः । तथा च तद्वाक्यस्य पदोपस्थापित एव तात्पर्यमिति सिद्धम् । तस्मात् ‘ यत्परः शब्दः ’ इत्यादि यदुक्तं तत्तात्पर्याज्ञानात् ।

यदपि ‘ सोऽयमिषोरिव ’ इति तदप्ययुक्तम् । यतः शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तावति सर्वत्र यदि शब्दस्याभिधैव स्यात्तदा ‘ चैत्र पुत्रस्ते जातः कुमारी ते गर्भिणी ’ इत्यादिवाक्यानन्तरं हर्षविषादयोः प्रतीतेस्तयोरपि तद्वाक्यस्याभिधा स्यात् । अथ तच्छब्दप्रतिपाद्ये सर्वत्राभिधा । हर्षादयस्तु न तत्प्रत्याय्या इत्युच्यते तर्हि लक्षणीयेऽप्यभिधैव स्यादिति लक्षणोच्छेदः । किमिति च ‘ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ’ इति सूत्रेण भगवाञ्जैमिनिः श्रुत्यादिषु पूर्वबलीयस्त्वं प्रतिपादयांबभूव । सर्वत्रैवाभिधाप्रसङ्ग उत्तरस्य दौर्बल्ये बीजाभावात् ।

सूत्रं तु प्रकृतार्थविच्छेदकत्वेऽपि बहूपकारकत्वाद्गुरूहत्वाच्च व्याक्रियते । श्रुतिलिङ्गादयः षडिह विनियोजकाः । तत्र विरुद्धयोरेकत्रोपनिपाते समुच्चयो न संभवतीत्येकेनापरस्य बाधो वक्तव्यः । स च बलवता दुर्बलस्येति स्थिते दौर्बल्यप्रतिपादकं सूत्रं श्रुतिलिङ्गेत्यादि । अस्यार्थः—श्रुत्यादीनां समवाय एकत्रोपनिपाते तेषां मध्ये यदपेक्षया यत्परं तदपेक्षया तद्दुर्बलम् । कुतः । अर्थविप्रकर्षात् । पूर्वापेक्षया विलम्बेनार्थप्रत्यायकत्वात् । यथा चैतत्तथोदाहरणे स्फुटी करिष्यते ।

---

वाक्यं स्वार्थे न विश्राम्यति यथाऽत्रैव सुहृद्वक्तृकत्वात् , तत्रामुख्यार्थे तात्पर्याल्लक्षणा । यत्र तु स्वार्थबोधोत्तरमितरत्प्रतीयते तत्र व्यञ्जनैवेति प्रघट्टकार्थः ।

**न तत्प्रत्याय्या इति** । किं तु मुखप्रसादाद्यनुमेया इति भावः । **अभिधैव स्यादिति** । दीर्घदीर्घाभिधाव्यापारेणैव तत्प्रतीतिसिद्धेरिति भावः । **बीजाभावादिति** । विलम्बेनार्थबोधकत्वं हि तद्बीजम् ।

**तत्र विरुद्धयोरिति** । यत्रैकस्यैव पदार्थस्य प्रमाणाभ्यां पदार्थद्वयसंबन्धो बोध्यते तत्र तयोर्विरोध इति भावः ।

---

१ क. भुङ्क्ष्वेत्यु° । २ क. ग. °र्थोऽवगम्यते । ३ क. ग. °स्ततत्कथं । ४ क. ग. ‘दीर्घाभि° । ५ क. भुङ्क्ष्वेति । ६ क. °क्यस्थशब्दोपस्था° । ७ एतदुत्तरं श्रुतिलिङ्गादिसूत्रव्याख्यानं क. पुस्तकेनास्ति । ८ क. तत्र मु° । ९ ग. °वः । बीजा° । १० ख. ग. °जम् । वैष्णवः । उपांशुयागः । अन्विताभिधानवादेऽपि ।

तत्र निरपेक्षो रवः श्रुतिः—'व्रीहीनवहन्ति' इति। अत्र क्रियाफलभागित्वं कर्मत्वं बोधयन्ती द्वितीया निरपेक्षैव व्रीहीणामवघातशेषित्वं प्रतिपादयति। अर्थविशेषप्रकाशनसामर्थ्यं लिङ्गम्। यथा—'बर्हिर्देवसदनं दामि' इति। अत्र लवनार्थप्रकाशकतया बर्हिर्लवने विनियोगः। परस्पराकाङ्क्षावशात्क्वचिदेकस्मिन्नर्थे पर्यवसितानि पदानि वाक्यम्। यथा—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' (तै॰ सं॰ १। १। ४) इत्यत्र लिङ्गेन निर्वापे विनियुज्यमानस्य समवेतार्थभागस्यैकवाक्यताबलेन 'देवस्य त्वा' इत्यादिभागस्यापि तत्र विनियोगः। लब्धवाक्यभावानां पदानां कार्यान्तरापेक्षावशाद्वाक्यान्तरेण संबन्ध आकाङ्क्षापर्यवसन्नं प्रकरणम्। यथा—'समिधो यजति' (तै॰ सं॰ २। ६। १) इत्यादौ। अस्य हि दर्शपौर्णमासकथंभावाकाङ्क्षायां पाठवशाच्छेषत्वम्। स्थानं क्रमः। स चानेकस्याऽऽम्नातस्य संनिधिविशेषाम्नानम्। यथा—'दब्धिरसि' (तै॰ सं॰ १। ६। २) इत्यत्राऽऽग्नेयाग्नीषोमीयोपांशुयागाः क्रमेण ब्राह्मणेषु पठिताः। मन्त्रभागेऽपि क्रमेणानुमन्त्रणत्रयं पठितम्। तत्राऽऽग्नेयाग्नीषोमयोर्लिङ्गेनैव द्वयोर्विनियोगसिद्धिः। 'दब्धिरसि' इत्यत्र तु न लिङ्गादि विनियोजकम्। किं तु यस्मिन्प्रदेशे ब्राह्मण उपांशुयागविधानं तस्मिन्नेव प्रदेशे मन्त्रेऽप्यस्य पाठ इति क्रमादुपांशुयागानुमन्त्रणेऽस्य विनियोगः। समाख्या योगबलम्। यथा—हौत्रमौद्गात्रमित्यादि। तत्र हि होतुरिदं हौत्रमित्यादियोगबलेन हौत्रादिसमाख्यातानि कर्माणि होत्रादिभिरनुष्ठेयानि।

---

**एकस्मिन्नर्थे**। विशिष्टेऽर्थे। एतदुत्तरत्रोपपादयिष्यामः। **कार्यान्तरापेक्षेति**। कार्यान्तरमितिकर्तव्यता। एवं च संनिध्याम्नातपदार्थसंबन्धापादकेतिकर्तव्यताकाङ्क्षावत्प्रधानवचनं प्रकरणम्। इदं कर्मप्रकरणासाधारणं प्रकरणलक्षणम्। सर्वसाधारणं त्वाकाङ्क्षायामितिकर्तव्यताविशेषणरहितमेतत्। तत्र क्वचिदाकाङ्क्षावशेन संनिहितवाक्यान्तरसंबन्धः प्रकरणमिति व्यवहारः। क्वचिदाकाङ्क्षैव प्रकरणमिति व्यवहार इति बोध्यम्। **दर्शपौर्णमासकथंभावेति**। षष्ठीतत्पुरुषः। इदमुपलक्षणम्। तेषामपि फलाकाङ्क्षायां संनिहिते बुद्धिस्थे फले तत्फलवदुपकारद्वारा संबन्धे संभवति फलान्तरकल्पनाया अयुक्तत्वेन तेषां संबन्ध इत्यपि बोध्यम्। **स चानेकस्येति**। अयं यथासंख्याम्नानक्रमः। संनिधाम्नानमपि क्रमत्वेन व्यवहरन्ति। स च विरोधोदाहरणे स्पष्टः। अत एवाग्रे स्थानपर्यायतयाऽऽसत्तिं वदिष्यति। **उपांशुयागः**। वैष्णवः। **समाख्या योगबलमिति**। इदमुपलक्षणम्। प्रदेशद्वयाम्नातयोः संबन्धनिमित्तं संज्ञैक्यमपि समाख्या। समा आख्येति योगात्। यथाऽतिमुक्तहोमानामग्निर्यज्ञं नयतु प्रजानन्नित्यादिमन्त्राणां च संबन्धनिमित्तमाध्वर्यवसंज्ञैक्यम्। यथा वोपसर्जनमहासंज्ञा व्याकरणान्तरसंज्ञया समेति तदभिप्रेतार्थस्य पाणिनीयेऽपि ग्रहणमित्यपि बोध्यम्।

अथैषां विरोधोदाहरणानि । तत्र श्रुतिलिङ्गयोर्विरोधे लिङ्गस्य दुर्बलत्वं यथा—'कदा चन स्तरीरसि नेन्द्र सश्चसि' ( तै० सं० १।४।२२ ) इत्यादिकाया ऋचो विनियोजिका श्रुतिः 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति। अत्र चेन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गादिन्द्रोपस्थापने विनियोगः प्रतिभाति । अन्यप्रकाशस्यान्यत्र विनियोगायोगात् । श्रुत्या गार्हपत्योपस्थापने स प्रतीयते । गार्हपत्यमिति द्वितीया हि कर्मविभक्तितया काम‌पि क्रियामपेक्ष्य प्रकृत्यर्थस्य शेषित्वं बोधयति । क्रियाजन्येष्टफलभागित्वस्य तदर्थत्वात् । एवमैन्द्र्येति तृतीया प्रकृत्यर्थस्य शेषत्वम् । क्रियां प्रति साधकतमत्वरूपकरणत्वस्य तदर्थत्वात् । तदत्र श्रुतिलिङ्गयोर्विरोधः । न च वाच्यं निरपेक्षया द्वितीयया शेषित्वमात्रं प्रतीयते न त्वैन्द्रीमृचं प्रति । तच्चाऽऽग्नेयीमृचं प्रत्यपि संभवतीति कुतो विरोधः । ऐन्द्र्येति पदमपेक्ष्य विशेषबोधनाद्विरोध इति चेन्न तर्हि श्रुतेर्विरोधः । किं तु वाक्यस्य । तच्च लिङ्गापेक्षया दुर्बलमेवेति । यतः शेषशेषिभावः सामान्यतः श्रुत्यैवावगम्यते । पदान्तरप्रेक्षया तु विशेषे व्यवस्थाप्यते । विशेषसंबन्धमात्रस्य पदान्तरसंबन्धात्प्रतीतेः । तस्माच्छ्रुत्या सामान्यतः प्रतिपाद्योऽसौ वाक्यलभ्यं विशेषमपेक्ष्य लिङ्गप्रतिपाद्येन विरुध्यते । तत्रायं पूर्वपक्षः—सामर्थ्यज्ञानमपेक्ष्य श्रुतिर्विनियोजिका । न ह्यसमर्थं श्रुतिसहस्रेणापि विनियोक्तुं शक्यते । यथा वह्निः प्रसेके । जलं वा दाहे । अतो लिङ्गस्य बलवत्त्वादिन्द्रस्योपस्थानेऽस्या विनियोगः । तदनुरोधितया द्वितीया सप्तम्यर्थतया व्याख्येया । गार्हपत्यसमीपेऽनयेन्द्र उपस्थातव्य इत्यर्थः पर्यवस्यति । सिद्धान्तस्तु—श्रुतिः स्वरूपसत्सामर्थ्यमपेक्षते न तु

---

**कुतो विरोध इति** । एवमैन्द्र्येति तृतीययैन्द्र्या ऋचः कंचित्प्रत्यङ्गत्वरूपं शेषत्वं बोधितं तदिन्द्रोपस्थानं प्रति तत्त्वेऽप्यविरुद्धमिति बोध्यम् । **यतः शेषेति** । क्रियां प्रति कर्मणः शेषित्वं करणस्य शेषत्वमित्येव विनियोगः । स हि पदान्तरनिरपेक्षाभ्यामेव द्वितीयातृतीयाश्रुतिभ्यां बोध्यत इत्यर्थः । नन्वेवं तर्हि वाक्येन किं बोध्यतेऽत आह—**विशेषसंबन्धमात्रस्येति** । यदैन्द्र्याः करणत्वं तद्गार्हपत्यकर्मकोपस्थाननिरूपितं यच्च गार्हपत्यस्य कर्मत्वं तदैन्द्रीकरणकोपस्थाननिरूपितमित्येवंरूपेत्यर्थः । **विशेषमपेक्ष्येति** । न चैवं वाक्यार्थस्यैव लिङ्गेन विरोधः । श्रौतस्य शेषशेषिभावस्य विशेषसमर्पणेन वाक्यस्य गुणतया श्रुतेः प्रधानतया प्रधानेन च विरोध इति श्रुतिलिङ्गविरोधोदाहरणमित्याशयात् । यद्वा बलीयसा लिङ्गेन यस्य बाधस्तल्लिङ्गेन निरुध्यते । न चात्र तेन वाक्यं बाध्यम् । किं तु द्वितीयाश्रुतिः सामीप्यलक्षणया बाध्या । वाक्यं तु तथैव । नहि वाक्यलिङ्गविरोधोदाहरणे लिङ्गबाध्यस्य स्योनं त इत्यादेः सुमनस्यमान इत्यन्तवाक्यस्येवोदाहृतवाक्यस्य लिङ्गेन बाधे वाक्यद्वयकल्पनेत्याशयः । **उपस्थातव्य इति** । प्रकाशयितव्य इत्यर्थः । उपपूर्वात्तिष्ठतेर्मन्त्रकरणकेऽर्थे वर्तमानादुपान्मन्त्रकरणे [पा०सू०१।३।२५] इत्यनेनाऽऽत्मनेपदम् । मन्त्रकरणकोऽर्थश्च न प्रकाशनातिरिक्त इति बोध्यम् । वस्तुतस्तु श्रुत्या

तद्बोधमपि । येन लिङ्गं बलवद्भवेत् । तस्य च पूर्वं सत एव ज्ञानं विनियोगान्यथाऽनुपपत्त्या पश्चादुपजायते । लिङ्गं तु विनियोजने श्रुतिमपेक्षते । न ह्यनेनेन्द्र उपस्थातव्य इति लिङ्गात्स्वरसतः प्रतीयते । किं त्वीदृगिन्द्र इत्येतावन्मात्रम् । तथा च प्रकरणाम्नानसामर्थ्यादिन्द्रप्रकाशनसमर्थाया ऋचोऽन्यथानुपपत्त्या विनियोगः कल्पनीयः । तथा चार्थविप्रकर्षः । तथा हि—श्रुतार्थापत्तिसाधकन्यायेन शब्दोपस्थापितेनैव शाब्ध्याकाङ्क्षा पूर्यत इति लिङ्गेनानयेन्द्र उपस्थातव्य इति श्रुतिः कल्पनीया । ततस्तया विनियोगो भवेत् । ततो यावल्लिङ्गं श्रुतिकल्पनायै प्रक्रान्तव्यापारं तावत्प्रत्यक्षया श्रुत्या गार्हपत्ये विनियोगः सिद्ध एवेति प्रकरणे निराकाङ्क्षे कयाऽनुपपत्त्या श्रुतिः कल्पनीया । तस्माच्छ्रुतेर्बलवत्त्वात्तदनुगुणतया सामर्थ्ये नीयमान इन्द्रपदं परमैश्वर्यवाचकतया गार्हपत्यतात्पर्यकमित्यवधार्यते ।

लिङ्गवाक्ययोर्यथा—पुरोडाशस्य स्थानकरणस्थापनस्वरूपयोः सदनसादनयोः प्रकरणे 'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेधः सुमनस्यमानः' इति मन्त्रः पठितः । तत्र कल्पयामीत्यन्तः पूर्वभागः सदने, शेषभागस्तु सादने प्रयोक्तव्य इति लिङ्गात्प्रतिभाति । अयं मन्त्र एकं वाक्यम् । यत्पदाक्षेपेण यत्कल्पयामि तस्मिन्सीदेत्येकार्थावच्छिन्नत्वाद्विभागे साकाङ्क्षत्वाच्च । ततश्चे-

---

क्वचिद्विनियुक्तस्य लिङ्गेनान्यत्रापि विनियोगोऽस्त्वित्येव पूर्वः पक्षः । यथा ब्रह्मवर्चसकामो बृहस्पतिसवेन यजेतेति वाक्येन फलार्थतया विहितोऽपि बृहस्पतिसवो वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति वाजपेयप्रकरणात्तदङ्गत्वेन बोध्यते । वाक्यं प्रबलमपि न संनिधिं बाधते । विरोधाभावात् । न हि बलवानेव साधून्बाधत इति बोध्यम् । **अन्यथानुपपत्त्या** । असमर्थे तदन्यथानुपपत्त्या । यथा दाहे जाते वन्हेर्दाहशक्तिर्ज्ञायते न दाहकत्वं वह्नेः शक्तिज्ञानापेक्षम् । तथा श्रुतेः शेषत्वे ज्ञातेऽनन्तरमर्थे तादृशी शक्तिरस्तीति ज्ञायते । तेनार्थगतसामर्थ्यज्ञानं विनियोगकारणमित्यर्थः । **उपजायत इति** । प्रतीयत इत्यर्थः । वह्निना सिञ्चतीत्यादौ तु सामर्थ्यबाधादप्रामाण्यमिति भावः । **प्रकरणेति** । अग्निचयनप्रकरण इत्यर्थः । **अन्यथानुपपत्त्या** । इन्द्ररूपाभिधानान्यथानुपपत्त्या । **श्रुतार्थेति** । शाब्द्या आकाङ्क्षाया यथाकथंचिदुपस्थितार्थेनानिवृत्तेरिति भावः । **प्रक्रान्तव्यापारमिति** । अस्य प्रतिपन्नेति शेषः । **प्रकरणे** । प्रकरणाम्नाने । **कया** । किंसंबन्धिन्या । कस्यानुपपत्त्येति युक्तः पाठः । **श्रुतेर्बलवत्त्वादिति** । अस्य तद्बोधितविनियोगोपपत्त्या इति शेषः । **परमैश्वर्येति** । इदि परमैश्वर्ये इति धात्वनुसारात् । अतावैन्द्र्येत्यस्य चेन्द्रप्रकाशिकयेत्यर्थो न त्विन्द्रोपस्थानविनियुक्तयेत्यर्थः । तद्विनियोगबुद्ध्यभावात् । अतो न श्रुत्यर्थे विरोध इति दिक् ।

**सदनं करोमीति** । कृणोमीति श्रुतिपाठो भामत्याम् । मेध इति च सविसर्गपाठस्तत्र । **सदने** । सदनकरणे । **सादने** । पुरोडाशस्थापने । **यत्पदाक्षेपेणेति** । अयं विभाग-

कवाक्यत्वात्समस्त एवोभयत्र विनियोक्तव्यः 'देवस्य त्वा' इत्यादिवत्। इति वाक्याद्वगम्यते। तदनयोर्विरोधः। अत्र पूर्वपक्षः—अस्यैकवाक्यत्वे निश्चिते पश्चात्तदुपपत्तयेऽभिधानसामर्थ्यं कल्पनीयम्। यत्कल्पितया श्रुत्या विनियोगो भवेत्। यथा 'देवस्य त्वा'—इत्यादिमन्त्रे 'अग्नये निर्वपामि' इति पदयोः समवेतार्थयोरेकवाक्यतयाऽताद्दशां पदान्तराणां सामर्थ्यकल्पना। तथा चैकवाक्यत्वनिर्वाहाय क्लृप्तं सामर्थ्यं न तद्व्याहन्तुमर्हति। किंतु विनियोजिकां श्रुतिं कल्पयत्समस्तमन्त्रविनियोजिकामेव कल्पयतीति वाक्यस्योपजीव्यत्वेन बलवत्त्वात्समस्तस्यैवोभयत्र विनियोग इति। सिद्धान्तस्तु—यद्येकवाक्यतामवगम्यैव सामर्थ्यमवधार्येत तदोपजीव्यत्वाद्वाक्यं बलवद्भवेत्। न त्वेवम्। प्रत्युतावधृतसामर्थ्यानां संनिहितपठितानां पदानां सामर्थ्यवशेन प्रयोजनैकतया चैकवाक्यत्वावधारणम्। यावन्ति पदानि प्रधानमेकमर्थं प्रतिपादयितुं समर्थानि विभागे साकाङ्क्षाणि भवन्ति तावन्त्येकं वाक्यं भवति। अनुष्ठेयश्चार्थो मन्त्रे प्रकाशमानः प्रधानम्। सदनसादने चात्र तथाभूते। तथा च सदनप्रकाशनसमर्थः पूर्वभागः सादनप्रकाशनसमर्थः शेषभाग इति प्रतीताभ्यां तत्सामर्थ्याभ्यां क्लृप्तेन श्रुतिद्वयेन द्रागेव तद्भागयोः प्रत्येकं विनियोगे सिद्धे तावतैव प्रकरणपाठोपपत्तौ समस्तमन्त्रस्यैकवाक्यताबुद्धिरुत्पन्नाऽप्याभासी भवति। लिङ्गेन बाधात्। तथा क्लृप्तमपि

---

कालिकसाकाङ्क्षत्वे हेतुः। तदेकार्थावच्छिन्नत्वं चैकवाक्यत्वे हेतुः। प्रकृतिप्रत्यययोरेकवाक्यतावारणाय विभाग इति। नहि तयोर्विभागोऽस्ति। भगो वां विभजत्वर्यमा वां विभजत्वित्यादौ निरपेक्षे वाक्यत्ववारणाय साकाङ्क्षमिति। इदमर्थैकत्वादित्यस्य प्रत्युदाहरणमित्यन्ये। विभज्यमानसाकाङ्क्षत्वं तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षेत्यत्रोत्तरवाक्ये तत्पदसत्त्वेन विभागे साकाङ्क्षत्वादतिव्याप्तमिति एकार्थावच्छिन्नत्वादिति बोध्यम्। **सामर्थ्यकल्पनेति**। निर्वापान्वययोगितत्प्रशंसाभिधानसामर्थ्यकल्पनेत्यर्थः। एवं कृत्स्नमन्त्रस्य यदा सदनकरणे विनियोगस्तदोत्तरभागस्य प्रतिष्ठापनार्थस्वरूपतद्विशेषाभिधानसामर्थ्यकल्पनेति बोध्यम्। **प्रयोजनैकतयेति**। विशिष्टैकार्थप्रतीतिश्च प्रयोजनम्। एकवाक्ये पदानां बहुत्वादेकार्थत्वमयुक्तमित्याशङ्क्य प्रधानमिति विशिष्टार्थाभिप्रायम्। तथा चात्र वाक्यभेद एवेति भावः। ननु भावनैव प्रधानमिति कथं सदनादेः प्राधान्यमत आह—**अनुष्ठेयश्चेति**। **तथाभूते**। प्रधाने। मिलितयोरेकार्थप्रकाशकत्वासिद्धेर्देवस्य त्वेत्यादाविव नैकवाक्यतावशेन सामर्थ्यकल्पनमिति भावः। **क्लृप्तेन श्रुतिद्वयेनेति**। पूर्वेण सदनं कुर्यादुत्तरेण पुरोडाशं स्थापयेदित्येवंरूपेणेत्यर्थः। **तावतैव**। लिङ्गकल्पितश्रुतिद्वयेनैव। **एकवाक्यताबुद्धिः**। तत्पदप्रयुक्ता। **आभासी भवतीति**। तथा च वाक्यभेद एवात्रेति बोध्यम्। तया कल्प्यमपीति पाठः। तयैकवाक्यताबुध्द्या। यतो यावत्तया सामर्थ्यं कल्प्यं तावत्क्लृप्तलिङ्गेन श्रुतिः कल्पिता यावत्तच्छ्रुतिं कल्पयेत्तावत्क्लृप्तश्रुत्या

सामर्थ्यं न श्रुत्यन्तरं कल्पयितुमर्हतीत्यर्थविप्रकर्षाद्वाक्यं दुर्बलम्। तस्माद्यत्रावान्तरवाक्यविरोधि लिङ्गं नास्ति तत्र समवेतार्थकेनैकेन पदेन द्वाभ्यां त्रिभिर्वा सहैकवाक्यता पदान्तराणामपि सामर्थ्यं विनियोजकश्रुतिकल्पनानुकूलं कल्पयति। यथाऽत्रैव 'स्योनं ते' इत्यादिभागानाम्।

वाक्यप्रकरणयोर्यथा—दर्शपौर्णमासप्रकरणे 'इदं द्यावापृथिवी भद्रमभूत्' [तै० ब्रा० ३।५।९] इत्यादिकः सूक्तवाकनिगदः पठितः। तत्र च 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायो ऽक्राताम्, अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायो ऽक्राताम्' इत्यवान्तरवाक्यद्वयं श्रूयते। तत्र 'पौर्णमास्यामिन्द्राग्नी न देवते इति लिङ्गात्तत्पदमपनीयते। अमावास्यायां तु समवेतार्थत्वात्तत्प्रयुज्यते। तत्रैवं संदिह्यते—इन्द्राग्निपदैकवाक्यतापन्नानि अवीवृधेतामित्यादिपदानि तत्रापनेयान्यथवा प्रयोक्तव्यान्येवेति। तत्र प्रकरणात्प्रयोगः प्रतिभाति। असमवेतार्थतया देवतामात्रस्यापनयनात्। वाक्यात्तु तान्यपनेयानीति प्रतीयते। येन सह यदेकवाक्यतापन्नं तेन सहैव तदपनयनौचित्यात्। तदनयोर्विरोधः। तत्र प्रकरणमेवाङ्गसंबन्धप्रतिपादकम्। अतस्तस्य बलवत्त्वाच्छेषभागः प्रयोक्तव्य एवेति पूर्वपक्षे सिद्धान्तः। प्रकरणं विनियोज्यस्वरूपसामर्थ्यमनपेक्ष्य न विनियोजकम्। येनैवं भवेत्। किंतु तदपेक्षमेव। कथमन्यथा 'पूष्णोऽहं देवयज्यया प्रजया पशुभिश्च जनिषीय' इति पूषानुमन्त्रणमन्त्रं तद्देवताविरहिणोर्दर्शपौर्णमासयोर्न विनियुङ्क्ते। 'तिस्र एवोपसदः साह्नस्य द्वादशाहीनस्य' [तै० सं० ६।२।५] इत्यत्र चैकाहविधेयसोमयागस्वरूपे साह्ने ज्योतिष्टोमादौ द्वादशोपसत्तां न बोधयति। सा पुनर्बहुदिवसविधेया सोमयागरूपाहीननाम-

---

विनियोगः क्लृप्त इति सैकवाक्यतैव विलीयत इति भावः। नन्वेवं सत्यत्र समवेतार्थसदनाद्यतिरिक्तपदानामेकवाक्यता न स्यादत आह—**यत्रावान्तरेति**। विरोधि लिङ्गं कर्मसमवेतभिन्नार्थप्रकाशनसामर्थ्यम्। तत्र समवेतार्थैकपदेन द्व्यादिपदैर्वैकवाक्यता साऽसमवेतार्थपदान्तराणां वैयर्थ्यपरिहाराय स्वानुसारेण सामर्थ्यं कल्पयतीत्यन्वयः। कल्पयतीत्यनन्तरं च भवति तत्र वाक्यस्य विनियोजकत्वमिति शेषः।

**निगद इति**। देवतासंबन्धबोधकः पदसमूहो निगदः। परसंबोधनार्थलोडन्तपदयुक्तपदसमूहो निगद इत्यन्ये। **अमावास्यायां त्विति**। तत्र ह्यसोमयाजिनो दधिपयसोरभावमुक्त्वा ऐन्द्राग्नः पुरोडाशस्तस्य विहित इति भावः। **अवीवृधेतामित्यादीति**। इदं हविरजुषेतामित्यस्याप्युपलक्षणम्। **प्रकरणादिति**। फलवती प्रधानभावना संनिधिपठितस्येतिकर्तव्यतात्वमापादयतीत्यर्थः। **प्रकरणं विनियोज्येति**। तद्धि न श्रुतिरिव विनियोगमभिधत्ते किं तु प्रमाणान्तरप्रमितां विनियोज्यपदार्थशक्तिमपेक्षते। एवं च विनियोज्यस्य मन्त्रवाक्यशेषस्य वाक्येनान्यत्र विनियुक्तत्वान्न प्रकरणेन विनियोग इति भावः। **साह्ने ज्योतिष्टोमादाविति**। साहाख्ये तस्मिन्नित्यर्थः। **प्रकरणे**

कक्रतुविशेषं नीयते । ' अहः खः क्रतौ ' इत्यनुशासनात् । स्वरूपालोचनायां तु श्रुत्या लिङ्गेन वाक्येन वा झटितिप्रवृत्तिकेन यद्रूपमपनीयते यद्वाऽन्यत्र नीयते तद्विहायावशिष्टेन प्रकरणाकाङ्क्षा पूर्यते । यत्र तु विरोधि श्रुत्यादिकं नास्ति तत्र प्रकरणं विनियोजकम् । यथा—'समिधो यजति' इत्यादि बोधितस्य समिधादेः । अत्र तु यथा लिङ्गेनेन्द्रादिभागोऽपनीयते तथा वाक्येन तच्छेपभागोऽपीति क्व पश्चात्प्रवृत्तिकस्य प्रकरणस्यावकाशः । न च तथात्वमस्यासिद्धम् । यतो वाक्ये पदानां संबन्धः प्रत्यक्षसिद्धः । प्रकरणे त्वाकाङ्क्षावशात्कल्पनीयः । तथा च वाक्येन प्रथममेवाभिधानसामर्थ्यं कल्प्यते, ततस्तेन श्रुतिस्तया विनियोग इति तृतीयः कालो विनियोगस्य । प्रकरणेन तु प्रथमं वाक्ययोः संबन्धः कल्प्यते । ततः सामर्थ्यमथ श्रुतिरथ विनियोग इति चतुर्थः कालः । ततो वाक्यात्प्रथमं शेषभागस्यापनयने सिद्धे क्लृप्ताऽपि श्रुतिरकिंचित्करी । वाक्यविरोधादिति ।

प्रकरणस्थानयोर्यथा—राजसूयस्य प्रधाननानाकर्मात्मकस्य प्रकरणे प्रधानादभिषेचनीयादनन्तरं शौनःशेपोपाख्यानमाम्नातम् । तत्र किं समस्तराजसूये तदङ्गमाहोस्विदभिषेचनीयमात्र इति संदेहः । तत्र प्रकरणस्य बलवत्त्वात्सर्वाङ्गताऽवगम्यते । स्थानस्य तु बलवत्त्वेऽभिषेचनीयाङ्गता । तदनयोर्विरोधः । यद्यप्याकाङ्क्षासत्त्योरुभयोरपि तुल्यबलता 'अयमेति पुत्रो राज्ञः' इत्यादौ 'गामानय' 'प्रासादं पश्य' इत्यादावुभयविरहेणान्वयाबोधात् । तथाऽपि विनिगमनाविरहादुभयोस्तुल्यबलत्वाच्च विकल्पेनाङ्गताऽस्त्विति पूर्वपक्षे सिद्धान्तः । आका-

---

**त्वाकाङ्क्षावशादिति** । स्वार्थपूर्णानां वाक्यानामुपकार्योपकारकभावेनाऽऽकाङ्क्षावशादित्यर्थः। **वाक्येनेति**। स्वस्येति शेषः। **क्लृप्ताऽपि श्रुतिरिति** । प्रकरणेनेति शेषः । फलस्यान्येन लाभाद्विलीयत इति तात्पर्यम् ।

**प्रधाननानाकर्मेति** । संनिहितसकलेष्टिपशुसोमरूपेत्यर्थः । **अभिषेचनीयः** । सोमयागविशेषः । शौनःशेपोपाख्यानं बह्वृचब्राह्मणे प्रसिद्धम् । **गामानय प्रासादं पश्येति**। अत्र गामित्यस्य पश्येत्यनेनान्वयवारणायाऽऽसत्तेरपि हेतुत्वमावश्यकमिति भावः । **विकल्पेनेति** । संदेहेऽभिषेचनीयमात्र इति तु प्रदर्शनमुपक्रममात्रमिति भावः । समुच्चयस्तु न संभवति । संनिधिबोध्यस्याभिषेचनीयाङ्गत्वस्य पवित्रादारभ्य बोधयता प्रकरणेनैव बोधितत्वमिति तदसंभव इति तात्पर्यम् । यद्यपि राजसूयान्तर्गतेष्ट्यादीनां विहितत्वेन क्लृप्तोपकारप्राक्ताङ्गादेकलप्रधानाङ्गत्वं ससंबन्धेन नैराकाङ्क्ष्यं तथाऽपि न दोषः । इष्ट्याद्यात्मना नैराकाङ्क्ष्येऽपि राजसूयात्मनाऽस्त्याकाङ्क्षा । पवित्रादारभ्य क्षत्रस्य धृतिं यावद्धि राजसूयः । ननु प्रकरणाद्राजसूयाङ्गत्वेऽप्यभिषेचनीयाङ्गत्वमस्त्येवेति कथं वैकल्पिकत्वमिति चेन्न । विकल्पोक्तेरभिषेचनीयातिरिक्तपवित्रादिप्रधानान्तरविषयत्वात् । चिन्ताप्रयोजनं तु पूर्वपक्षेऽभिषेचनीयायां नित्या तत्प्राप्तिरन्येष्टिपश्वादिषु वैकल्पिकी । सिद्धान्ते तु सर्वेषु नित्या तत्प्रा-

ङ्क्षासंनिधी द्वे अपि विनियोगप्रयोजिके इत्युभयसंमतम्। राजसूये च कथं स्यादित्याकाङ्क्षा क्षत्रियस्य धृतिं यावदनुवर्तते। संनिधानं च प्राकरणिकत्वेन सर्वदा बुद्धिसंनिहितत्वादस्त्येव। अभिषेचनीये च सत्यपि संनिधान आकाङ्क्षा उत्थाप्या। तथा च यदोत्थिताकाङ्क्षेन प्रकरणेनैकवाक्यत्वं कल्पनीयं तदा संनिधानादाकाङ्क्षोत्थापनम्। तथा चैकत्र सामर्थ्यकल्पनं श्रुत्युन्नयनं विनियोगः। अपरत्रैकवाक्यताकल्पनं सामर्थ्योन्नयनं श्रुतिकल्पनं विनियोगश्चेत्यर्थविप्रकर्षात्स्थानस्य दुर्बलत्वात्प्रकरणेन सर्वत्र राजसूये शौनःशेपोपाख्यानस्य विनियोगो न तु विकल्प इति।

स्थानसमाख्ययोर्यथा—दर्शपौर्णमासप्रकरणे पौराडाशिकसमाख्याते काण्डे सांनाय्यक्रमे 'शुन्धध्वं दैव्याय कर्मणे' (तै० सं० १।१।३) इति मन्त्रः श्रूयते। स च प्रकरणाद्दर्शार्थः। तथात्वं च तस्य समवेतार्थत्वेनौचित्यात्कस्यचिच्छुन्धने विनियोगाद्भवेत्। शुन्धनीयं चात्र द्वयमुपस्थितम्। सांनाय्यपात्रं पुरोडाशपात्रं च। तत्र समाख्यावशात्पुरोडाशपात्रशुन्धने विनियोगः प्रतिभाति। स्थानवशात्तु सांनाय्यपात्राणाम्। तदनयोर्विरोधः। तत्र पूर्वपक्षः—पौराडाशशब्देन पुरोडाशसंबद्धान्युच्यन्ते। तान्यधिकृत्य प्रवृत्तं काण्डं पौराडाशिकमिति। अतः समाख्या श्रुतित एव साक्षाद्विनियोजिका। क्रमस्तु प्रकरणाद्युन्नयनद्वारा तथेति समाख्या बलवतीति। सिद्धान्तस्तु—पौराडाशिकपदं न पुरोडाशमन्त्रविशेषयोः संबन्धमाह। किं तु पुरोडाशविशिष्टं काण्डम्। वैशिष्ट्यानुपपत्त्या तु संबन्ध-

---

प्तिरिति बोध्यम्। क्षत्रस्य धृतिः। यज्ञविशेषः। इष्टिरित्यन्ये। पवित्रः सोमयागविशेषः। **कथं स्यादित्याकाङ्क्षा**। इतिकर्तव्यताकाङ्क्षा। **सर्वदेति**। राजसूयस्य साकाङ्क्षा पवित्रादारभ्य प्राक्सिद्धाऽनुवर्तते। अभिषेचनीयसंनिधिना तूत्थाप्या। तदानीं तेन सह प्रस्थितयो राजसूयाकाङ्क्षाभिषेचनीयसंनिधानयोराद्या शीघ्रं विनियोगफलं लभत इति भावः। **उत्थाप्येति**। स्ववाक्योपात्तपदार्थैस्तस्य निराकाङ्क्षत्वादिति भावः। केचित्त्वभिषेचनीयप्रकरणमध्येऽस्योपाख्यानस्य पाठेन महाप्रकरणादवान्तरप्रकरणस्य बलीयस्त्वेनाभिषेचनीयाङ्गताया एवात्रोपाख्याने प्राप्तिरिति कृत्वा चिन्तयेदमत्रोदाहरणमित्याहुः।

**दर्शार्थ इति**। सांनाय्यस्य दर्शार्थत्वात्। सांनाय्यं दधिपयसी। **पुरोडाशसंबद्धानीति**। इदमर्थेऽणेति भावः। **तान्यधिकृत्येति**। यद्यपि पौरोडाशपुरोडाशात्ष्ठन् (पा० सू० ४। ३।७०) इति तस्य व्याख्यान (पा० सू० ४। ३।६६) इत्यधिकारे पठितं तथाऽपि मण्डूकप्लुत्या अधिकृत्य कृते (पा० सू० ४। ३। ८७) इत्यत्रानुवर्त्य व्याख्येयमिति भावः। प्रवृत्तमपि कृतं भवत्येव। कृधातोः सर्वधात्वनुस्यूतत्वात्। वस्तुतः शैषिकेऽर्थेऽध्यात्मादित्वाट्ठञि बोध्यम्। **श्रुतित इति**। अस्यैकश्रुतित इत्यर्थः। न पौरोडाशमन्त्रेति पाठः। किं तु पौरोडाशेति च पाठः। **वैशिष्ट्यान्यथेति**। पदार्थान्तररूपेण संबन्धोऽनुमेय इत्याशयः। नन्वतिरिक्तवैशिष्ट्यकल्पने मानाभावेन संबन्धिनमेवाऽऽह

स्तत्र कल्प्यते । सोऽपि न शेषशेषिभावः । किं तु संबन्धमात्रम् । तद्वारेण तु मन्त्रभेदस्यापि तदनुमानम् । तथा च समाख्ययाऽपि क्रमादिकमुन्नीय विनियोगो न तु श्रुत्यैव । एवं समाख्यया क्रमोऽनुमेयस्तेन प्रकरणं तेन वाक्यं तेन लिङ्गं तेन श्रुतिस्तया विनियोग इति समाख्यायां षष्ठः कालो विनियोगस्य । स्थाने तु क्रमः प्रत्यक्ष एवेति न कल्पनीयः । तथा च तेन प्रथमत एव प्रकरणमनुमेयं तेन च वाक्यं तेन लिङ्गं तेन श्रुतिस्तया विनियोग इति पञ्चमः कालः । तस्मादर्थविप्रकर्षात्समाख्या स्थानतो दुर्बलेति न पुरोडाशपात्रशुन्धनेऽस्य विनियोगः । कथं तर्हि काण्डस्य पौरोडाशिकसंज्ञा । पुरोडाशसंबन्धिबहुमन्त्रघटितत्वादित्यवेहि । तदयं निर्गलितोऽर्थः—

एकद्वित्रिचतुष्पञ्चवस्त्वन्तरपकारितम् ।
श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते ॥ १ ॥
बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा ।
मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया ॥ २ ॥

इत्यलमतिविस्तरेणेति ।

---

तत्राप्याह । **सोऽपीति** । तद्वाचकत्वपक्षेऽपि संबन्धसामान्यमेव श्रुत्या लभ्यते न तु विनियोगाख्यशेषशेषिभावरूप इत्यर्थः । संबन्धोऽपि काण्डेनैव न मन्त्रविशेषस्य साक्षात्कर्मविशेषणेत्याह—**तद्द्वारेणेति** । **तदनुमानम्** । संबन्धसामान्यानुमानं न तु विशेषानुमानमिति भावः । **क्रमादिकमिति** । समाख्या हि संबन्धनिबन्धनाऽसंनिहितेन संबन्धायोगात्तत्सिध्यर्थं संनिधिरूपं क्रमं कल्पयतीत्यर्थः । ननु समाख्यया संनिध्याम्नानरूपक्रमकल्पनमयुक्तम् । अन्यत्राऽऽम्नातानामन्यसंनिधावाम्नानकल्पनस्याशक्यत्वात् । तथा संनिधिनाऽऽकाङ्क्षाकल्पनमपि न युक्तम् । संनिध्यभावेऽपि पुरोडाशपात्रशुन्धनस्यानुष्ठानाय स्मृतिजनकाकाङ्क्षासत्त्वात् । तथाऽऽकाङ्क्षयैकवाक्यताकल्पनं च न युक्तं शुन्धनप्रकाशकमन्त्रविनियोजकविध्येकवाक्यत्वापेक्षणेऽपि विनियोज्यपदार्थरूपमन्त्रेणैकवाक्यत्वानपेक्षणात् । वाक्येन सामर्थ्यकल्पनमपि न युक्तम् । शुन्धनप्रकाशनसामर्थ्यस्य स्फुटतरत्वादिति चेन्न । क्रमशब्देनानुष्ठानसंनिधेर्विवक्षितत्वात् । अन्यत्राऽऽम्नातस्याप्यन्यत्रानुष्ठानाविरोधात् । तेन च संनिध्यनुष्ठीयमानमन्त्रविशेषाकाङ्क्षारूपप्रकरणकल्पनम् । तस्य प्रागसिद्धेः । तेन च पुरोडाशपात्रशुन्धनविधेः प्रकाश्यप्रकाशकभावाख्यमन्त्रसंबन्धमात्ररूपमेकवाक्यत्वं कल्पनीयम् । ततस्तत्प्रकाशकत्वनिर्वाहाय शुन्धनसामान्यप्रकाशकस्य मन्त्रस्य पुरोडाशपात्रशुन्धनप्रकाशनसामर्थ्यं कल्प्यमित्यदोषात् । **प्रत्यक्ष एवेति** । वैदिक एवेत्यर्थः । समाख्या तु पाठककृतेति भावः । **प्रकरणम्** । सांनाय्यपात्रविषयाकाङ्क्षा । अधिकरणपञ्चकार्थं स्वोक्त्या संकलयति—**एकेति** । लिङ्गस्यैकया श्रुत्या श्रुत्यर्थे विनियोगं प्रत्यन्तरायो व्यवधानं तत्कारितं वैषम्यं प्रतीयते । वाक्यस्य द्वाभ्यां लिङ्गश्रुतिभ्याम् । प्रकरणस्य वाक्यलिङ्गश्रुतिभिस्तिसृभिरित्यादिक्रमेणेत्यर्थः । सौकर्याय बाध्यबाधकभावं वृद्धोक्तं दर्शयति—**बाधिकैवेति** । बाध्यत्वं पूर्वापेक्षया

वादे[1]ऽपि विधेरपि सिद्धं व्यङ्ग्यत्वम् । किं च कुरु रुचिमिति पदयो-र्वैपरीत्ये काव्यान्तवर्तिनि कथं दुष्टत्वम् । न ह्यत्रासभ्योऽर्थः पदार्थान्त-रैरन्वित इत्यनभिधेय एवेत्येवमाद्यपरित्याज्यं स्यात् ।

यदि च वाच्यवाचक[2]त्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते तदाऽसाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति विभा-गकरणमनुपपन्नं स्यात् । न चानुपपन्नम् । सर्वस्यैव विभक्ततया प्रतिभा-

---

प्रकृतमनुसरामः । पूर्वोक्त इषुदृष्टान्तो वैधम्यादनुपपन्नः । तथा हि । तत्र वेगव्यापारस्य स्वरूपसत एव जनकतया दीर्घदीर्घ[3]तरत्वं संभवति । अभिधायास्तु ज्ञाताया एवानुकूल-त्वाद्व्यङ्ग्यनिष्ठतया चाज्ञानादित्यन्विताभिधानवादेऽपि 'निःशेष'—इत्यादौ विधेर्व्यङ्ग्यत्व-मेवेति स्थितम् । किं च यदि वस्तुगत्या पदार्थान्तरेण योऽन्वितः सोऽभिधयोपस्थाप्यत इत्यन्विताभिधानं तदाऽवश्यं व्यञ्जना स्वीकार्या । अन्यथा 'रुचिं कुरु' [4]इत्यादिशब्दस्य दुष्टत्वं न स्यात् । दुष्टिहेतोरसभ्यार्थोपस्थितेस्तत्राभावप्रसङ्गात् । तदर्थस्यो[5]न्यानन्वितत्वात् । किं च वाच्यवाचकभावातिरेकी व्यङ्ग्यव्यञ्जकभाव इत्यवश्यं काव्यज्ञदृष्ट्याऽपि स्वीकर्तव्यम् । अन्यथा कष्टत्वादयोऽनित्यदोषा असाधुत्वादयो नित्यदोषा इति विभागो न स्यात् ।

---

बाधकत्वमुत्तरापेक्षया । अयं चाप्राप्तबाध एव । पूर्वप्रमाणेन कृते विनियोग उत्तरप्रमाण-स्याप्रसक्तेः । प्राप्तबाधस्तु वैकृतविधिवाक्यशेषेणातिदेशेन कृष्णलादिप्राप्तस्यैवावहननादे-र्द्वारलोपादिना यो बाधः स इति मीमांसकमर्यादा । वस्तुतः सर्वोऽप्यप्राप्तबाध एवेति प्रप-ञ्चितमन्यत्रास्माभिरित्यलं पल्लवितेन ।

**अन्विताभिधानवादेऽपि** । तद्वाद्येकदेशिमतेऽपि । ननु निःशेषेति विधौ शक्तिरेव । तस्याप्राप्तत्वेन विधेयतया तात्पर्यविषयत्वात् । प्राथमिकार्थबोधाद्वाक्यस्य विरामस्तु न । विवक्षितार्थाबोधात् । अन्यथाऽवान्तरवाक्यार्थबोधे महावाक्यार्थबोधो न स्यात् । एवं शब्द-श्रुतेरनन्तरं यावानर्थः प्रतीयते न स केवलयाऽभिधया प्रतिपाद्यते किं स्वाकाङ्क्षादिसापेक्षयेति श्रुत्यादेः पूर्वपूर्वसहकारेणोत्तरोत्तरस्य बोधकत्वमिति सूत्रविरोधोऽपि न । वक्त्रादिवैशिष्ट्य-सहकारेण क्वचिदभिधाया अज्ञाताया अप्युपयोगोऽस्त्वित्यत आह—**किं चेति । दुष्टत्वं न स्यादिति** । तदर्थस्यान्यानन्वितत्वेनाशक्यतया व्यञ्जनानङ्गीकारे तदनुपस्थित्या तस्य परि-त्याज्यत्वं काव्ये न स्यादिति भावः । चिङ्कुर्योन्यन्तर्वर्त्यङ्कुरः । नन्वानुभविकी शक्तिरेवा-न्विते स्मारिका त्वनन्वितेऽपीति चिङ्कादिपदस्यासभ्यार्थस्मारकत्वाद्दुष्टत्वं स्यादत आह—**किं चेति** । काव्यज्ञदृष्ट्या स्वीकर्तव्यमिति पाठः । अपिः प्रक्षिप्तः । कष्टत्वप-

---

१ क. °दे वि° । २ क. °कव्य° । ग. °कभावव्य° । ३ क. °र्घत्वसंभवात् । अ° । ४ क. इति श° । ५ क. °स्यानन्यान्वि° ।

सात्। वाच्यवाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकताश्रयणे तु व्यङ्ग्यस्य बहुविधत्वात्क्वचिदेव कस्यचिदेवौचित्येनोपपद्यत एव विभागव्यवस्था।

द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः।

इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वम्। अपि च वाच्योऽर्थः सर्वान्प्रतिपत्तॄन्प्रत्येकरूप एवेति नियतोऽसौ। न हि गतोऽस्तमर्क इत्यादौ वाच्योऽर्थः क्वचिदन्यथा भवति। प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया

---

वाच्यस्या[3]विशेषेण कष्टादीनामपि सर्वत्र दुष्टत्वस्यादुष्टत्वस्य वा प्रसङ्गात्। व्यञ्जनाभ्युपगमे तु व्यञ्जनीयस्य बहुविधत्वेन रौद्रादौ व्यङ्ग्येऽनुकूलत्वं शृङ्गारादौ तु दुष्टत्वमिति युज्यते विभागव्यवस्था। एवं पर्यायेषु मध्ये कस्यचिदेव क्वचित्काव्यानुगुणत्वमित्यपि व्यवस्था न स्यात्। वाच्यार्थस्याविशेषात्। दृश्यते चासौ। यथा—'**द्वयं गतं**०।

इत्यादौ न पिनाक्यादिपदमनुकूलम्। किं तु जुगुप्साव्यञ्जकतया कपा[4]लिपदमेव। ननु द्वयमप्येतदयुक्तम्। व्यङ्ग्यत्वेनाभिमतस्य वाच्यत्वस्वीकार एवानुकूलत्वप्रतिकूलत्वयोर्व्यवस्थोपपत्तेरिति चेन्न। अभिधास्वीकारे संकेतग्रहं विना तदनुपस्थितिप्रसङ्गस्योक्तत्वात्[5]। किं च काव्ये शास्त्रे वा वाच्यव्यङ्ग्ययोः प्रतिपत्तिहेतुव्यापारभेदनिबन्धनो भेदोऽवश्यं स्वीकर्तव्यः। वैधर्म्यदर्शनात्। वाच्यो ह्यर्थः सर्वैरेक एव प्रतीयत इति नियतः। व्यङ्ग्यस्तु वक्तृप्रकरणादिवशादनियतः। तथा हि 'गतोऽस्तमर्क' इति वाक्ये राज्ञः सेनापतीन्प्रति शत्रूणां हठे-

---

देनात्र श्रुतिकटुत्वम्। **प्रसङ्गादिति**। असाधुत्वज्ञानवद्यदि श्रुतिकटुत्वादेरपि वाक्यार्थज्ञानविघटकता तदा सर्वत्र चमत्कारस्य वाक्यार्थज्ञानाधीनत्वात्तदभावे चमत्काराभावेन नित्यदोषत्वमेव। तदविघटकत्वे तु दोषत्वमेव न स्यादिति भावः। **अनुकूलत्वमिति**। तद्वतोजोगुणव्यञ्जकत्वेनोत्कर्षकत्वाच्छृङ्गारे तद्विरोध्योजोगुणव्यञ्जकत्वेनापकर्षकत्वादिति भावः।

**द्वयमिति**। संप्रति द्वयं पूर्वमेकमेवेत्यर्थः। **न पिनाकयेति**। वीरद्योतकत्वादिति भावः। **किं त्विति**। न च कपालसंबन्धबोधकत्वाद्विशेषः। तत्संबन्धमात्रबोधस्य विशेषकत्वाभावात्। व्यञ्जनोपगमे तु कपालसंबन्धकृतसकलामङ्गलनिधानत्वदुराचारत्वस्पर्शसंभाषणाद्यनर्हत्वाद्यवगमेन भगवतो बीभत्सालम्बनत्वेन निन्दातिशयबोधनात्तत्सङ्गार्थिनां शोच्यतातिरेकद्वारेण तत्र पार्वत्या भावनिवृत्तौ तत्पदं प्रभवतीति तस्य काव्यानुगुणतेति भावः। **सर्वैः**। विदग्धाविदग्धैः। **एक एवेति**। शक्यतावच्छेदकस्य नियतत्वादिति भावः। **अनियत इति**। व्यङ्ग्यतावच्छेदकानैयत्यादिति भावः। राज्ञ इत्यादि षष्ठ्यन्तानां वाक्य

---

१ ग. 'एवेयं वि॰'। २ '॰नाक्रिप॰'। ३ क. स्यार्थस्यावि॰'। ४ क. '॰पाल्यादिप॰'। ५ क. 'च्यत्वात्। किं च'।

**नानात्वं भजते । तथा च गतोऽस्तमर्क इत्यतः सपत्नं प्रत्यवस्कन्दनावसर इति, अभिसरणमुपक्रम्यतामिति, प्राप्तप्रायस्ते प्रेयानिति, कर्मकरणान्निवर्तामह इति, सांध्यो विधिरुपक्रम्यतामिति, दूरं मा गा इति, सुरभयो गृहं प्रवेश्यन्तामिति, संतापोऽधुना न भवतीति, विक्रेयवस्तूनि संह्रियन्तामिति, नाऽऽगतोऽद्यापि प्रेयानित्यादिरनवधिर्व्यङ्ग्योऽर्थस्तत्र तत्र[१] प्रतिभाति ।**

---

नामर्दमावसर इति, दूतीनामभिसारिकाः प्रत्यभिसरणमुपक्रम्यतामिति, सख्या वासकसज्जां प्रति प्राप्तप्रायस्ते प्रेयानिति, कर्मकरस्य सह कर्म कुर्वतः प्रति कर्मकरणान्निर्वर्तामह इति, भृत्यस्य धार्मिकं प्रति सांध्यो विधिरुपक्रम्यतामिति, आप्तस्य कार्यवशेन बहिर्गच्छतः प्रति दूरं मा गा इति, गृहिणो गोपालकं प्रति सुरभयो गृहं प्रवेश्यन्तामिति, दिवसेऽतिसंतप्तस्य बन्धून्प्रति संतापोऽधुना न भवतीति, आपणिकानां भृत्यान्प्रति विक्रेयवस्तूनि संह्रियन्तामिति, नायकागमनप्रस्तावे प्रोषितभर्तृकायास्तत्कथकं प्रति नाऽऽगतोऽद्य प्रेयानिति, एकस्यैव वा वक्तुर्बहून्प्रति तत्तत्प्रकरणवशादेवमादिरनवधिर्व्यङ्ग्योऽर्थः प्रकाशते । वाच्यस्तु सर्वान्प्रत्यविशिष्ट एव । ननु नैतद्वाच्यवैधर्म्यम् । नानार्थसैन्धवादिपदे नानार्थावगतिदर्शनादिति चेन्न । एकवाक्यवर्तिनस्तस्याप्यर्थैक्यनियमात् । यदग्रे वक्ष्यति—लक्षणीयार्थस्य नानात्वेऽप्यनेकार्थपदाभिधेयवन्नियतत्वमेवेति । तथाऽपि यत्र लवणाद्यधिकारिणः प्रति सकलस्वामिनः सैन्धवमानयेति पदप्रयोगस्तत्रानियतत्वं दुर्वारमिति चेन्न । तात्पर्याज्ञानात् । न ह्यत्र सर्वैर्वाच्यैः समं सर्वव्यङ्ग्यानां भेदः प्रतिपाद्यते । किं तु 'गतोऽस्तमर्कः' इत्यस्य वाच्यव्यङ्ग्ययोः । तथा च तद्वाच्यस्य नियतत्वम् । तदर्थपुरस्कारेणैव सर्वेषां व्यङ्ग्यस्यापि प्रतीतेः । तदयं नियतत्वानियतत्वरूपविरुद्धधर्मसंसर्गोऽभिहितः । एवं विलक्षणस्वरूपकालादिभेदोऽपि भेदको द्रष्टव्यः । वैधर्म्यसत्त्वेऽपि यद्यभेदः स्यात्तदा नीलानीलादेरपि न क्वचिद्भेदः स्यात् । वैधर्म्यस्याविशेषात् । यदुक्तम्—

अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति ।

---

इत्यपकृष्टेनान्वयः । सेनापतीन्प्रतीत्यादेश्च । **तत्तत्प्रकरणवशादिति** । अनेन सर्वान्प्रति सर्वबोधापादनं निरस्तम् । प्रकरणेत्युपलक्षणं वक्तृबोद्धव्यवैशिष्ट्यादीनामपि । **अयमेवेति** । ज्ञातवैधर्म्यमेवान्योन्याभाव इति मतेनेदम् । कारणभेदश्च विरुद्धधर्मरूपभेदस्य हेतुरिति भावः ।

---

१ ग. °तोऽद्य प्रे° । २ क. °त्र भा° । ३ क. °नापम° । ४ क. °र्म कु° । ५ क °वर्तध्वमिति धार्मि° । ६ क. °व ध° । ७ क. °गस्तदाऽनियतत्वं तत्र दु° । ८ क. °च्यैः सर्वेषां समं व्य° । ९ क. तदा च । १० क. °यः । तत्त° ।

वाच्यव्यङ्ग्ययोः, निःशेषेत्यादौ निषेधविध्यात्मना,

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः[1] किमु भूधराणामुत[2] स्मरस्मेरविलासिनीनाम् ॥१३४॥

इत्यादौ संशयशान्तशृङ्गार्यन्यतरनिश्चयरूपेण,[3]

कथमवनिप दर्पो यन्निशातासिधारा—
दलनगलितमूर्ध्नां विद्विषां स्वीकृता श्रीः ।
ननु तव निहतारेरप्यसौ[4] किं न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥ १३५ ॥

---

सुप्रसिद्धश्च तत्र तत्र स्वरूपभेदे भेदः[5] । तत्र 'निःशेष'—इत्यादौ,

**मात्सर्यमुत्सार्य०** ।

**कथमवनिप दर्पो०** ।

---

**मात्सर्यमिति** । मात्सर्यमेकतरपक्षपातेनेतरत्रासूयामुत्सार्य त्यक्त्वा मयि वा प्रश्नादिना क्लेशदानान्मात्सर्यं परगुणद्वेषस्तत्त्यक्त्वा विचार्य न त्ववहेलनया समर्यादं प्रमाणमर्यादासहितं यथा तथा सप्रमाणमिति यावत्कार्यं कर्तव्यमुदाहरन्तु सयुक्तिकं कथयन्त्विति प्रश्न आर्याणामुत्तररूपमुत्तरार्धमेते वा सेव्या एते वेति । किमु उतेति च संशयार्थकम् । पश्चान्नितम्बः स्त्रीकट्याः, कटकोऽस्त्री नितम्बोऽद्रेरिति चामरः । अत्राऽऽपाततः संशयरूपेणोत्तरेण शान्तैः पर्वतनितम्बा एव सेव्याः शृङ्गारिभिर्विलासिनीनितम्बा एव सेव्या इति निश्चयमुत्तरं ध्वन्यते ।

**कथमिति** । हेऽवनिप । अवति रक्षतीत्यवनिस्तस्या अपि रक्षक[6] या तीक्ष्णासिधाराछेदनपतितमस्तकानां शत्रूणां श्रीः स्वीकृता तत्तस्माद्दर्पो गर्वः कथं युक्त इति शेषः । दर्पोऽयमिति च्छेदे स्वीकृतेत्ययं दर्पः कथमिति संबन्धः । कथमयुक्तो दर्पस्तत्राऽऽह—ननु इति । इदं च यत इत्यर्थ । यतो निहतारेरपि तव वल्लभा प्रियाऽसौ प्रसिद्धा कीर्तिरेभिरपगताङ्गैर्हीनाङ्गैरपि वैरिभिः किं त्रिदिवं स्वर्गं न नीता । अपि तु नीतैव । तथा च जीवत्येव रक्षणसमर्थे च त्वयि स्वत्प्रियाया हीनाङ्गैः शत्रुभिरपहरणात्मृतानां श्रीहरणे गर्वोऽनुचितस्यापाततः प्रतीयमानया निन्दया सकलशत्रुविनाशनेन त्रैलोक्यविश्रुतकीर्तिस्त्वमिति

---

१ ग. °म्बाः खलु भूधराणां किमु स्म° । २ क. °राणां किमु स्म° । ३ क. ग. °श्चये शृ°
४ क. निहिता° । ५ क. °रूपादेर्भेदः । ६ क. ग. °क यत्तीक्ष्णा° ।

इत्यादौ निन्दास्तुतिवपुषा स्वरूपस्य, पूर्वपश्चाद्भावेन प्रतीतेः कालस्य, शब्दाश्रयत्वेन शब्द[1]तदेकदेशतदर्थवर्णसंघटनाश्रयत्वेन चाऽऽश्रयस्य, शब्दा[2]नुशासनज्ञानेन प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन[3] तेन चावगम इति निमित्तस्य, बोद्धृमात्रविदग्धव्यपदेश्ययोः प्रतीतिमात्रचमत्[4]कृत्योश्च करणात्कार्यस्य, गतोऽस्तमर्क इत्यादौ प्रदर्शितनयेन संख्यायाः,

---

इत्यादौ च स्वरूप[5]भेदः । प्रथमे हि वाच्यो निषेधरूपो व्यङ्ग्यस्तु विधिरूपः । द्वितीये वाच्यः संशय[6]रूपो व्यङ्ग्यस्तु शान्ते शृङ्गारिणि वा वक्तरि तदुचितैककोटिनिश्चयः । तृतीये वाच्यो निन्दारूपः प्रतीयमानस्तु स्तुतिरूपः । कालभेदस्तु सर्वत्र । पूर्वं हि वाच्यः प्रतीयते पश्चात्तु व्यङ्ग्य इति । वाच्यस्य शब्दमात्रमाश्रयः प्रतीयमानस्य तु पदशब्दैकदेशभूतकाकादितदर्थवर्णसंघटनेत्याश्रयभेदः । वाच्यस्य व्याकरणकोशादिमात्रेणावगमः । प्रतीयमानस्य तु प्रतिभानैर्मल्येनाप्यधिकेनेति ज्ञापकभेदः । वाच्येन व्युत्पन्नमात्रस्य प्रतीतिमात्रम्, अन्येन तु विदग्धपदवाच्यस्य सहृदयस्य चमत्कृतिरिति कार्यभेदः । गतोऽस्तमर्क इत्यादौ दर्शितनयेन वाच्य एकः प्रतीयमानस्तु नानेति संख्याभेदः ।

---

स्तुतिर्व्यज्यते । **संशयरूप इति** । किमादिपदाभिधेयत्वादिति भाव[7]ः । नच संशयो ज्ञानम् । तदेतद्वाक्यजन्यम् । न तु तदस्य वाच्यमिति वाच्यम् । संशय्यत इति संशय इति विषयस्यैव संशयपदेनोक्तेरदोषात् । एवं निश्चीयत इति व्युत्पत्त्या निश्चयपदेनापि विषय एवेति ज्ञेयम् । अत एव ज्ञानरूपसंशयस्य लक्षणभूते गौतमीये सूत्रे तद्वार्तिककृता संशय्यते विषयोऽनेनेति संशयपदव्युत्पत्तिर्दर्शिता । स्थाणुर्वा पुरुषो वेति ज्ञानेन हि धर्मी विकल्पितरूपत्वरूपसंशयत्ववान्क्रियते । तद्रूपं संशयत्वमेव च सर्वत्र वाशब्दार्थ इति दिक् । **तदुचितैकेति** । सेवाद्वय एकाधिकारिकत्वासंभवादैच्छिकविकल्पानुपपत्त्यां शान्तशृङ्गारिभेदेन व्यवस्थितविकल्पे पर्यवसानम् । स च व्यापारान्तराविषयत्वाद्व्यङ्ग्य इति भावः । **निन्दारूप इति** । उक्तरूपः । **स्तुतिरूपः** । सकलशत्रुविनाशेत्यादिरूपः । **पूर्वं हीति** । वाच्यप्रतीतेर्व्यङ्ग्यप्रतीतिकारणत्वादिति भावः । **शब्दैकदेशभूतकाकादीति** । ध्वनिविकारस्य काकुत्वादिति भावः । आदिना पदैकदेशप्रकृतिप्रत्ययादि । **तदर्थः** । त्रिविधोऽपि । **संघटना** । रचना । **कोशादिमात्रेणेति** । तज्जन्यबोधकत्वज्ञानमात्रेणेत्यर्थः । **कार्यभेद इति** । वाच्यबोधेन बोद्धृव्यपदेशः । व्यङ्ग्यबोधेन विदग्धव्यपदेश इत्यपि कार्यभेदो द्रष्टव्यः ।

---

१ क. ग. °ब्दशब्दैक° । २ क. ग. °ब्दार्थशा° । ३ क. °न चा° । ४ क. °त्कृतस्य च क° । ५ क. °पस्य भे° । ६ क. °रूपः प्रतीयमानस्तु । ७ ग. °वः । तदुचितै° । ८ ग. °त्या व्यव° ।

कस्स व ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं ।
सभमरपडमग्घाइणि वारिअवामे सहसु एण्हिं ॥ १३६ ॥

इत्यादौ सखी तत्कान्तादिगतत्वेन विषयस्य च भेदेऽपि यद्येकत्वं तत्कचिदपि नीलपीतादौ भेदो न स्यात् । उक्तं हि—अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति । वाचकानामर्थापेक्षा व्यञ्जकानां तु न तदपेक्षत्वमिति न वाचकत्वमेव व्यञ्जकत्वम् ।

किं च वाणीरकुडङ्गेत्यादौ प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूप

---

कस्स व ण० ।

इत्यादौ वाच्यार्थस्य संबोध्या सखी विषयः । तत्र हि वाच्योऽर्थः श्रोतुर्व्यवतिष्ठते । प्रतीयमानस्य तु भ्रमरेणास्या अधरः खण्डितो न तूपपतिनेति तत्कान्तः । ममैवं वैदग्ध्यमित्यस्य प्रतिवेशिनी । इदं मया समाहितं पुनरेवं त्वया न विधेयमित्यस्योपपत्तिः । एवं सपत्न्यादिर्विषयोऽपीति विषयस्य भेदः । एवं स्वरूपादिभेदादवश्यमङ्गीकर्तव्यो वाच्यव्यङ्ग्ययोर्भेदः । किं च वाचकव्यञ्जकयोरपि वैधर्म्याद्भेदो वक्तव्यः । यतो वाचकस्य संकेतितार्थापेक्षा । संकेतित एव ह्यर्थेऽभिधा प्रवर्तते । न त्वेवं व्यञ्जकः । अन्यत्रापि व्यञ्जनया प्रत्ययजननात् । यच्चोक्तम्—तात्पर्यविषये शब्दः प्रमाणमिति तदितोऽप्यनुपपन्नम् । यतो व्यङ्ग्यस्य वाच्यताभ्युपगमेऽपि नानार्थन्यायेन तात्पर्यादेव नियमो वाच्यः । अन्यथा सर्वत्र सर्वव्यङ्ग्यप्रतीतिप्रसङ्गात् । तथा च यत्र वाणीरकुडङ्ग—इत्यादौ व्यङ्ग्यप्रतीतावपि

---

कस्स वेति ।

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम् ।

स्वकान्ताया उपपतिदष्टमधरं वीक्ष्य रुष्टे प्रोषितागते पत्यौ सख्या निरपराधत्वबोधनाय तत्प्रतारणोक्तिरियम् । अधरदशनपर्यवसायि सभ्रमरपद्माघ्राणं तत्त्वेनाध्यवसितषिङ्गानिधुवनं च मा कृथा इति वारितेऽपि वामे विरुद्धाचरणात्प्रतिकूले । सहस्वेत्यस्य रुष्टपतियन्त्रणमिति शेषः । **श्रोतुः** । संबोध्यनायिकायाः । एवं च वाच्यार्थस्ताद्विषय एवेति भावः । **तत्कान्त इति** । बहुव्रीहिः । **एवं सपत्न्यादिरिति** । प्रियाया एवं दर्शने रोषो नाप्रियाया इति त्वयाऽऽनन्दो न विधेय इत्यस्य सपत्नी । मयैवं समाहितमतो मय्येव विदग्धायां समाश्वसिहीत्यस्य नायिकेत्यादि बोध्यम् । **संकेतिते** । गृहीतसंकेते । **अन्यत्रापि** । अगृ-

---

१ ग. नीलानीलादौ । २ क. °दो हि न । ३ क. °व भे° । ४ क. ग. तु तदनपेक्षत्वमपीति । ५ क. वाक्यार्थ° । ६ क. °दिविष° । ७ °दो द्रष्टव्यः । ८ क. °ञ्जणामि° । ९ क. हितमय्येव ।

**एव यत्र विश्राम्यति तत्र गुणीभूतव्यङ्ग्येऽतात्पर्यभूतोऽप्यर्थः स्वशब्दा॰ नभिधेयः प्रतीतिपथमवतरन्कस्य व्यापारस्य विषयतामवलम्बतामिति ।**

**ननु रामोऽस्मि सर्वं सह इति, रामेण प्रियजीवितेन तु कृतं प्रेम्णः**

---

वाच्य एव चारुत्वविश्रामस्तत्र तात्पर्याविषयो व्यङ्ग्योऽर्थः कथं प्रतीयेत । यत्परः शब्द इत्युक्तमते तु सुतराम् । एतेन तात्पर्यमेव व्यङ्ग्यप्रतीतौ व्यापार इत्यपि निरस्तम् । तस्मात्तात्पर्यमभिधा वा न प्रतीयमानेऽर्थे व्यापारः । नन्वस्तु लक्षणा । न हि वाच्यवल्लक्ष्योऽपि व्यवस्थितो विशेषव्यपदेशाहेतुर्वा । यतः ' रामोऽस्मि सर्वं सहे ' इत्यत्र रामपदेन सर्वदुःखभाजनत्वम् ।

प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः ।
व्यर्थं संप्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम् ॥

---

हीतसंकेतेऽपि। **चारुत्वविश्राम इति** । व्यङ्ग्यमनपेक्ष्यैव विप्रलम्भपोषकत्वादिति भावः । **तात्पर्याविषय इति** । वाच्यस्यैव प्राधान्येन तात्पर्यविषयत्वादिति भावः । **सुतरामिति** । तात्पर्यविषयस्यैवाभिधेयत्वेन तद्व्यङ्ग्यस्य शब्दानभिधेयत्वापत्तिरिति भावः । **तस्मादिति** । क्वचित्सहायत्वं तु तात्पर्यस्य न वार्यते । ननु वक्त्राद्यौचित्यसहकारेणाभिधैव तत्तदर्थोपस्थापिकाऽस्तु इति चेन्न। अभिधायास्तत्सहकारकल्पनस्य क्लृप्तत्वात् । किं चैवं एकशक्यार्थबाधसहकारेणाभिधात एव लक्ष्यत्वाभिमतार्थस्याप्युपस्थितिलक्षणाया अप्युच्छेदापत्तिरिति दिक् । ननु व्यङ्ग्येषु नानात्वमर्थान्तरसंक्रमितवाच्यध्वनित्वादिव्यपदेशहेतुत्वम् । शब्दार्थान्वयव्यतिरेकानुविधायित्वं प्रकरणादिसापेक्षत्वमिति धर्मास्ते च लक्ष्येष्वपीति व्यङ्ग्या लक्ष्या एवेति शङ्कते—**नन्विति** ।

**प्रत्याख्यानेति** । सीतां प्रति रामस्योक्तिः । हे प्रिये इति भावनोपनीतासंबोधनम् । प्रत्याख्याने निराकरणे रुचिर्यस्यास्तत्परायास्तव क्रूरेण रक्षसा रावणेन समुचितं स्वक्रौर्यस्य योग्यं कर्म कृतं तच्च त्वया तथा सोढं यथा कुलजो जन उच्चैरुन्नतं शिरो धत्ते । श्लाघनीयत्वात् । अन्यथा लाञ्छनेन नम्रीभावापत्तेः । रामेण तु मया प्रेम्ण उचितं योग्यं न कृतम् । किंभूतेन । प्रियं जीवितं यस्य तथाभूतेन । पुनः कीदृशेनास्यां दशायामपि त्वादृशप्रियासंरक्षकत्वाद्व्यर्थमिदं धनुर्बिभ्रता धारयता । प्रतीकारासमर्थत्वात् । तथा

---

१ क. ग. ताम् । न° । २ क. °स्तत्रातात्पर्यवि° । ३ क. °मानार्थे । ४ क. °देशहे° । ५ क. ग. धाद्यां त° । ६ क. ग. °नस्याक्ल° ।

प्रिये नोचितमिति, रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परामित्यादौ लक्षणीयोऽप्यर्थो नानात्वं भजते । विशेषव्यपदेशहेतुश्च भवति । तदवगमश्च शब्दार्थायत्तः प्रकरणादिसव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम । उच्यते । लक्षणीयस्यार्थस्य नानात्वेऽप्यनेकार्थशब्दाभिधेयवन्नियतत्वमेव । न खलु मुख्येनार्थेनानियतसंबन्धो लक्षयितुं शक्यते । प्रतीयमानस्तु प्रकरणाविशेषवशेन नियतसंबन्धोऽनियतसंबन्धः संबद्धसंबन्धश्च द्योत्यते । न च

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअंपलोएहि ।
मा पहिअ रतिअन्धअ सेज्जाए मह णिमज्जहिसि ॥ १३७ ॥

---

इत्यत्र कातरत्वं ' रामोऽसौ भुवनेषु विक्रमगुणैः—इत्यत्र खरदूषणादिहन्तृत्वं च लक्ष्यते । अतो रामपदस्य लक्ष्य एवानेको भवति । अर्थान्तरसंक्रमितवाच्यादिविशेषव्यपदेशहेतुश्च भवति । एवमन्यत्रापि स्यात् । तदुक्तम्—भाक्तमार्गस्तदन्यः, इति । लक्षणीयविशेषावगमश्च प्रकरणादिसापेक्षेण शक्यार्थेन स्यात् । अतो नास्त्यतिरिक्तः प्रतीयमानः । मैवम् । लक्षणीयस्य नानात्वेऽपि हि नानार्थसैन्धवादिपदाभिधेयस्येव नियतत्वमेव । न खल्वनियतसंबन्धो मुख्येनार्थेन लक्षयितुं शक्यते । प्रतीयमानस्तु प्रकरणादिवशेन नियतसंबन्धोऽनियतसंबन्धः संबद्धसंबन्धश्चेति तत्स्वरूपं सोदाहरणमग्रे दर्शयिष्यते ।

किं च ' अत्ता एत्थ णिमजइ ' इत्यादौ विवक्षितान्यपरवाच्ये कथं लक्षणा । मुख्या-

---

तव व्यापदां विपत्तीनां साक्षिणा द्रष्ट्रा । स्नेहातिशयेन तन्मयीभावादिति भावः । **कातरत्वम्** । इदं निःस्नेहत्वस्याप्युपलक्षणम् । **अर्थान्तरेति** । अभिधा तु नेदृशव्यपदेशहेतुरित्यप्यभिधातो व्यञ्जनाया वैधर्म्यमुपदर्शितम् । हेतुः । तद्विषयः । **तत्** । व्यङ्ग्यस्वरूपमन्ये भाक्तं लाक्षणिकमाहुरित्यर्थः । भाक्तमार्गस्तदन्य इति पाठान्तरम् । तदन्यः शक्यान्यो भाक्तमार्गो लाक्षणिकमार्ग इत्यर्थः । **लक्षणीयेति** । स च लक्षणया शब्देन प्रतिपाद्यमानत्वाच्छब्दायत्तो मुख्यार्थबाधतत्संबन्धज्ञानसापेक्षत्वेन शक्यार्थायत्तश्च तात्पर्यानुपपत्तेर्लक्षणाबीजत्वात्तात्पर्यज्ञानसापेक्षश्चेति तद्ग्राहकप्रकरणादिप्रतिमानैर्मल्यादिसापेक्षश्चेति प्रागुक्तवैधर्म्याभावात् । किमतिरिक्तव्यङ्ग्यस्वीकारेणेति भावः । **शक्यार्थेनेति** । संबन्धोपस्थित्यादिद्वारा तदुपयोग इति भावः । **न खल्विति** । किं तु सामीप्यादिलक्षणो नियतसंबन्धिन्येव लक्षणासत्त्वादिति भावः । नन्वनियतसंबन्धस्य व्यङ्ग्यत्वेऽतिप्रसङ्गः स्यादत आह—**प्रकरणादिवशेनेति** । नन्वेवं लक्ष्योऽपि नियतानियतसंबन्धोऽस्तु प्रकरणादित एवानतिप्रसङ्गादत आह—**किं चेति** ।

---

१ क. °योऽर्थो । २ क. °णीयार्थ° । ३ क. °माहुस्तमन्ये इति । ४ क. °म् । तत् ।

इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ न मुख्यार्थबाधः । तत्कथमत्र लक्षणा । लक्षणायामपि व्यञ्जनमवश्यमाश्रयितव्यमिति प्रतिपादितम् । यथा च समयसव्यपेक्षाऽभिधा तथा मुख्यार्थबाधादित्रयसमयविशेषसव्यपेक्षा लक्षणा । अत एवाभिधापुच्छभूता सेत्याहुः ।

---

र्थबाधाभावात् । ननु तत्रापि तात्पर्याधीनान्वयानुपपत्तिः ' छत्रिणो यान्ति ' इत्यादाविवेति चेत् । न । लक्षणायां प्रयोजननियमात् । तस्य च व्यापारान्तरागम्यत्वात् । तदर्थं व्यञ्जनास्वीकारे किं प्रथमतोऽपि लक्षणया । अथ निरूढलक्षणायामिवान्यत्राप्यस्तु प्रयोजनानपेक्षेति चेन्न । यथा हि संकेतग्रहसापेक्षाभिधा तथा मुख्यार्थबाधतद्योगरूढिप्रयोजनान्यतरस्य मुख्यार्थसंकेतग्रहस्य च सापेक्षा लक्षणा । तत्कथं रूढेः प्रयोजनस्य वा भावे भवेत् । यतः संकेतग्रहसापेक्षाऽत एवाभिधापुच्छभूता सेत्याहुः ।

---

**मुख्यार्थसंकेतग्रहस्य चेति** । मुख्यार्थबाधादिप्रतिसंधानद्वारैव चास्योपयोग इति बोध्यम् । **पुच्छभूतेति** । तत्पृष्ठलग्नेत्यर्थः । शक्यसंबन्धस्य लक्षणात्वेन तन्निरूप्येति भावः । एवं च मुख्यार्थबाधादिसापेक्षत्वरूपाद्वैधर्म्याद्यथाऽभिधातो लक्षणाया भेदस्तथा मुख्यार्थबाधाद्यनपेक्षस्वरूपवैधर्म्याल्लक्षणातो व्यञ्जनाया भेद इति बोध्यम् । ननु यष्टीः प्रवेशयेत्याद्यनुरोधात्तात्पर्यविषयार्थान्वयानुपपत्तिरेव तद्बीजम् । लक्षणाबीजत्वं च लक्षणाजन्यशाब्दबोधे लक्षणया जननीये सहकारित्वम् । एवं च लाघवात्तात्पर्यानुपपत्तिरेव तद्बीजमस्तु । तात्पर्यानुपपत्तिश्चानुपपद्यमानतात्पर्यम् । तज्ज्ञानं च लक्ष्यार्थबोध इव व्यङ्ग्यार्थबोधेऽप्यवश्यं कारणं वाच्यम् । अत एव गंगायां घोष इत्यत्र शैत्यपावनत्वस्यैव प्रतीतिर्न केशवालुकादिमत्त्वस्येति संगच्छते । अत एव चाननुगतानां प्रकरणादीनां व्यङ्ग्यबोधे सहकारित्वमुपपद्यते । तात्पर्यग्राहकत्वेनानुगमात् । वस्तुतस्तात्पर्यग्रह एव व्यङ्ग्यबोधे सहकारी । तानि तु तात्पर्यनिर्णायकान्येव । एवं च लक्ष्य एव व्यङ्ग्यार्थोऽस्तु । गच्छ गच्छसीत्यादौ तात्पर्यानुपपत्तिसत्त्वात् । वाणीरकुडङ्गेत्यादावचारोरपि व्यङ्ग्यस्य कवितात्पर्यविषयत्वे क्षत्यभावात् । न च लक्ष्यत्वे व्यङ्ग्यस्य न रूढिर्न प्रयोजनमिति वाच्यम् । लक्ष्यप्रतीतिरेव प्रयोजनत्वात् । लक्षणा हि प्रयोजनेन नियता । न तु लक्ष्यप्रतीत्यतिरिक्तप्रयोजनेन । गौरवादप्रयोजकत्वाच्च । पदतदेकदेशादीनामर्थविशेषतात्पर्यग्राहकत्वं न तु प्रतिपादकत्वमिति नाऽऽश्रयभेदादपि भेद इति चेदत्राहुः । इदं पदमेतदर्थस्य न वाचकं न लाक्षणिकं किं तु व्यञ्जकमिति प्रामाणिकव्यवहारादेव व्यञ्जनासिद्धिः । अन्यथैकयाऽभिधयैव सिद्धे लक्षणाऽप्युच्छिद्येत ।

---

१ क. °श्रयणीयमि° । २ क. °रावग° । ३ क. °स्य चाभा° । ४ क. °म् । इदं पदमेतदर्थस्य न वाचकं न लाक्षणिकं किं तु व्यञ्जकमिति प्रामाणिकव्यवहाराद्व्यञ्जनासिद्धिः । लक्षणामुपजीव्येति । ५ ग. च व्यङ्ग्यस्य लक्ष्यत्वे न रू° ।

**न च लक्षणात्मकमेव ध्वननम् । तदनुगमेन तस्य दर्शनात् । न च तदनुगतमेव । अभिधावलम्बनेनापि तस्य भावात् । न चोभयानुसार्येव । अवाचकवर्णानुसारेणापि तस्य दृष्टेः । न च शब्दानुसार्येव । अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य प्रसिद्धेरित्यभिधातात्पर्यलक्षणात्मकव्यापारत्रयातिवर्ती ध्वननादिपर्यायो व्यापारोऽनपह्नवनीय एव ।**

**अत्रात्ता एत्थेत्यादौ नियतसंबन्धः । कस्स व ण होइ रोसो इत्यादावनियतसंबन्धः ।**

---

किं च न लक्षणाव्यञ्जनयोरभेदः । लक्षणामुपजीव्य तद्व्यापारात् । नापि लक्षणानुगतमेव ध्वननमिति ध्वनेस्तल्लक्षणमिति वाच्यम् । अभिधोपजीवनेनापि भावात् । न च लक्षणाभिधोभयानुसार्येव । वर्णमात्रानुसारेणापि हि दृश्यते रसादिव्यञ्जना । न च वर्णमात्रेऽभिधा लक्षणा वा । नापि शब्दानुसार्येव । विकसन्नर्तकीनेत्रत्रिभागौलोकनादावपि प्रसिद्धेः । तस्मादभिधालक्षणातात्पर्यविलक्षणस्तुरीयो ध्वननव्यञ्जनद्योतनप्रकाशनादिपर्यायो व्यापारोऽनपह्नवनीय एव । तत्र ' अत्ता एत्थ णिमज्जइ ' इत्यादौ व्यङ्ग्योऽर्थो नियतसंबन्धः । ' कस्स व ण होइ रोसो ' इत्यादावनियतसंबन्धः । ' नियतसंबन्धत्वं च वाच्यव्यङ्ग्यप्रती-

---

किं चानेकविधशक्यसंबन्धानां प्रयोजकत्वमपेक्ष्यैकस्या व्यञ्जनाया एव तत्त्वमुचितम् । तेषां तत्त्वं सिद्धमिति चेत् । तदन्तःपातिनामेव प्रयोजनान्तराद्यनियतानां चमत्कारप्रतीतिजनकानां व्यञ्जनासंज्ञाऽस्तु । लक्षणा च रूढ्यतिरिक्ता लक्ष्यप्रतीत्यतिरिक्तप्रयोजननियतैव । अन्यथा लक्ष्यप्रतीतिरूपप्रयोजनस्य सर्वत्र सत्त्वेन दुष्टलक्षणोच्छिद्येत । वस्तुतस्तु संबन्धज्ञानाभावेऽपि व्यङ्ग्यार्थबोधदर्शनेनातिरिक्तैव सा । सा च स्वरूपसत्येव हेतुः । वक्त्राद्यौचित्यज्ञानसहकाराच्च नातिप्रसङ्गः । अभिधालक्षणे तु ज्ञाते एवेति वैषम्यम् । किं च वक्तृतात्पर्याविषयकव्याञ्जनिकबोधस्तु दृश्यत एव । वस्तुतस्तु प्रसिद्धार्थविषयबोधकत्वविशेषः शक्तिः । मुख्यार्थबाधादिसापेक्षाऽप्रसिद्धार्थविषयकबोधकत्वविशेषो लक्षणा । तन्निरपेक्षप्रसिद्धाप्रसिद्धार्थविषयः शब्दतदर्थतदेकदेशकटाक्षादिनिष्ठो बोधकत्वविशेषो व्यञ्जनेत्यस्मत्कृतवैयाकरणसिद्धान्तमञ्जूषायां विस्तरः । **लक्षणामुपजीव्येति** । लक्ष्यार्थं प्रत्याय्य विरतायां लक्षणायां व्यञ्जनाप्रवृत्तेर्न तयोरैक्यमित्यर्थः । लक्षणानुगमोऽपि क्वचिन्नास्तीति सुतरां भेद इत्याह—**नापीति** । नापि लक्षणानुगतमेव ध्वननमित्येव पाठः । एतदुत्तरमिति ध्वनेस्तल्लक्षणमिति वाच्यमिति ग्रन्थः प्रक्षिप्तः । **रसादिव्यञ्जनेति** । गुणव्यञ्जनद्वारेति भावः । **विकसन्नर्तकीति** । अनया कटाक्षेणाभिलाषो व्यञ्जित इति सर्वसाधारणप्रसिद्धेरिति भावः । संबन्धानियमं सिंहावलोकितन्यायेनाऽऽह—**तत्रेति** ।

---

१ क. °गमनेन । २ क. °पि व्यङ्ग्यस्येष्टेः । ३ क. तत्रा° । ४ क. °णार्थ ग° । ५ क. °गावलोकनादिगतत्वेनापि । ६ क. °र्यायव्वा° । ७ क. °ङ्ग्यो नि° ।

**विपरीअरए लच्छी बह्मं दट्ठूण णाहिकमलट्ठम् ।**
**हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ ॥ १३८ ॥**

**इत्यादौ संबद्धसंबन्धः । अत्र हि हरिपदेन दक्षिणनयनस्य सूर्यात्म-कता व्यज्यते । तन्निमीलनेन सूर्यास्तमयः । तेन पद्मस्य संकोचः । ततो ब्रह्मणः स्थगनम् । तत्र सति गोप्याङ्गस्यादर्शनेनानिर्यन्त्रणं निधुवनविलसितमिति ।**

---

त्योरेकविषयतात्मकम् । प्रथमे तस्य भावः । पथिकरूपैकविषयकत्वात् । द्वितीये तु तद-भावः । सखीतत्कान्तादिविषयभेदादिति केचित् । तन्न सम्यगाभाति । लक्ष्यस्य नियतसं-बन्धत्वमेव, व्यङ्ग्यस्य तु तथात्वमन्यथात्वं चेति पूर्वप्रतिपादितस्य चेदमुदाहरणमिति लक्ष्यसाधारणं नियतसंबन्धत्वं वाच्यम् । न चोक्तं तथा भवति ।

अन्ये तु प्रथमे सर्वेषामेव सत्यताप्रतीतिः । द्वितीये तु कान्तस्यैव सत्यतयाऽन्येषां त्वसत्यतयेति नियतानियतसंबन्धत्वमित्याहुः । तदपि न मनोरमम् । यत एवं वाच्य-प्रतीतेरेव सत्यत्वासत्यत्वप्रतीतिविषयत्वरूपं वैलक्षण्यमात्रमुच्यते । न तु व्यङ्ग्यप्रतीतेः । तस्मान्नियतसंबन्धत्वं तेन वाक्येन सह ज्ञाप्यत्वरूपसंबन्धानियम इति युक्तमुत्पश्यामः ।

संबद्धसंबन्धो यथा—**विपरीअरए०** ।

अत्र हरिपदेन दक्षिणनयनस्य सूर्यात्मकत्वम् । तन्निमीलनेन सूर्यास्तमयः । तेन पद्मसं-कोचः । ततो ब्रह्मणः स्थगनम् । तस्मिन्सति गोपनीयस्याङ्गस्यादर्शनेनानिर्यन्त्रणं निधु-वनविलसितमिति संबद्धसंबन्धानि द्योत्यन्ते ।

---

**एकविषयतेति** । एकोद्देश्यकत्वमित्यर्थः । **न चोक्तमिति** । लक्ष्यप्रतीतिस्थले वाच्यस्या-प्रतीतेरिति भावः । **यत एवमिति** । पूर्वोक्तप्रकारेणेत्यर्थः । **नियम इतीति** । तच्चात्ता एत्थेत्यादौ व्यङ्ग्यार्थस्यैकत्वादक्षतम् । कस्स वेत्यादौ तु न तथा । व्यङ्ग्यस्यानेकत्वाद्बोद्धृ-भेदाच्चेति भावः ।

**विपरीति** ।

विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥

रसेन सुरतावेशेनाऽऽकुला सुरतान्निवर्तितुमक्षमा हरेः परमेश्वरस्य दक्षिणं नयनं स्थगयति आच्छादयति । शेषं स्पष्टम् । **सूर्यात्मकत्वमिति** । हरेर्दक्षिणवामनयनयोः सूर्यचन्द्रा-त्मकत्वेन प्रसिद्धत्वादिति भावः । **तन्निमीलनेन** । तदाच्छादनेन । **अस्तमयः** । अप्रकाशः । **स्थगनम्** । पिधानम् । **अनिर्यन्त्रणम्** । अप्रतिबन्धम् ।

---

१ क. °त्मता । २ क. °ने सू° । ३ क. °चनम् । तेन च ब्र° । ४ क. °ति । पूर्वं ल° । ५ क. संबन्धसंबन्धा द्यो° । ६ क. °षयेति । ७ क. °था । बोद्धृभेदादिति । ८ क. ग. °त्मत्व° ।

**अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यो वाक्यमेव[1] च वाचकमिति येऽप्याहुस्तैरप्यविद्यापदपतितैः पदपदार्थकल्पना कर्तव्यै[2]वेति तत्पक्षेऽप्यवश्यमुक्तोदाहरणादौ[3] विध्यादिर्व्यङ्ग्य एव। ननु वाच्यादसंबद्धं तावन्न प्रतीयते। यतः कुतश्चिद्यस्य कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात्। एवं च संबन्धाद्व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धेऽवश्यं न भवतीति**

वेदान्तिनस्तु—'क्रियाकारकादिपुरस्कारेण शब्दानां प्रवृत्तिर्धर्मधर्मिभावमपुरस्कृत्य न संभवति। धर्मधर्मिभावश्च प्रपञ्चगोचरो वा स्याद्ब्रह्मगोचरो वा। नाऽऽद्यः। प्रपञ्चस्य बाध्यत्वात्। नान्त्यः। ब्रह्मणो धर्मशून्यत्वात्। अतः पदपदार्थविभागमन्तरेणैव 'सत्यं विज्ञानम्' इत्यादिवाक्यमखण्डमेवाखण्डब्रह्मवाचकमित्यातिष्ठन्ते। अतस्तन्मतानुसारेण प्रतीयमानेऽपि वाक्यस्य शक्तिरेवेत्यपि न वाच्यम्। यतो व्यवहारमार्गे तैरपि पदपदार्थकल्पनाऽवश्यमङ्गीकर्तव्या। व्यवहारे तेषां भट्टनयस्वीकारात्। यदि च पदपदार्थकल्पनाऽविद्यादशायामपि नाङ्गी क्रियते कुतस्तर्हि व्युत्पन्नाव्युत्पन्नविभागः। वाक्यार्थ एव वाक्यस्य संकेतग्रहमाश्रित्येति चेत्। न। वाक्यार्थस्यापूर्वत्वेनाऽऽनन्त्याच्च तत्र संकेतग्रहस्याशक्यत्वात्। अविद्यामार्गतिरस्कारे च कथमखण्डयोरपि वाच्यवाचकभावः। पारमार्थिकभेदाभावात्। तस्मात्तन्मतेऽपि विध्यादिर्व्यङ्ग्य एव।

महिमभट्टास्तु न तावदसंबद्ध एव वाक्यात्प्रतीयते। सर्वस्मात्सर्वोपलब्धिप्रसङ्गात्। संबद्धाच्च व्यङ्ग्यव्यञ्जकभावो भवन्नानियताद्भवतीति प्रतिबद्धरूपादेव भवतीत्युपेयम्। प्रतिबद्धोऽप्यर्थो न स्वाधिकरणत्वेनाज्ञातो व्यङ्ग्यं प्रतिपादयति। सर्वत्र तत्प्रतीतिप्रसङ्गात्। एवं च व्यङ्ग्यव्यञ्जकभावोऽनुमेयानुमापकभाव एव पर्यवसन्नः। यतो व्याप्तत्वेन सकलप-

**बाध्यत्वादिति**। तथा च सत्यं विज्ञानमित्यादितस्तथा बोधानापत्तिरिति भावः। **अखण्डमेवेति**। क्रियाकारकभावानापन्नमेव प्रकारसंसर्गाद्यनवगाहि ब्रह्मविषयकबुद्धिजनकम्, तद्विषयश्च निर्धर्मकमखण्डं ब्रह्मैवेत्यर्थः। एवं घटमानयेत्यादौ घटकर्मत्वादेः पृथगुपस्थितस्य वैशिष्ट्यविषया बुद्धिः सखण्डा। अपृथगुपस्थितयोर्वैशिष्ट्यविषयाऽखण्डा बुद्धिः। तद्विषयश्चापृथगुपस्थितपरस्परसंसृष्टो वाक्यार्थ एव वाच्यः। तद्वाक्यं वाचकमिति तन्मतप्रीत्यभिमानः। **व्युत्पन्नाव्युत्पन्नेति**। घटमानय घटं नयेत्यादिव्यवहारवैलक्षण्यानुपपत्तिरपि बोध्या। अपूर्वत्वादानन्त्याच्चेति पाठः। अपूर्वत्वेनाऽऽनन्त्यादिति पाठेऽप्ययमेवार्थः।

**असंबद्धं एवेति**। पदशक्त्यादिसहकृतवाक्यबोध्यार्थेनेति शेषः। **व्यङ्ग्यव्यञ्जकभाव इति**। व्यङ्ग्यव्यञ्जकयोर्भावो व्यङ्ग्यप्रतीतिरूपः। **नानियतात्**। न व्याप्यत्वातिरिक्तसंबन्धवतः। **प्रतिबद्धरूपादिति**। प्रतिनियतो बन्धो व्याप्त्याख्यः

१ ग. एवार्थो वा°। २ ग. °व वा°। ३ क. °तव्येति ४ ग. °णादिषु वि°। ५ क. °तीतिप्र°। ६ क. °न्धे चाव°। ७ क. वाच्यात्प्र°। ८ क. °ज्ञातव्य°। ९ क. एवमित्यादिरनुपपत्तिरपि बोध्येत्यन्तो ग्रन्थः क. पुस्तके न दृश्यते। १० क. °द्ध इति। ११ क. °न्धतः।

व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत्तद्रूपः पर्यवस्यति। तथा हि—

भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ तेण।
गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण॥ १३९॥

अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे[1] सिंहोपलब्धेरभ्रम-

---

क्षनिष्ठत्वेन च सपक्षसत्त्वविपक्षासत्त्वपक्षसत्त्वलक्षणरूपत्रयवतो लिङ्गाल्लिङ्गिज्ञानमेवानुमानम्। तदेतदुक्तमनुमानं यत्तद्रूप इति तेनानुमानेनानुमित्या रूप्यते न त्वतिरिक्तया व्यक्त्येति हि तस्यार्थः। एवमनुमानादेव व्यङ्ग्यप्रतीतिः। तथा हि—

**भम धम्मिअ०।**

संकेतनिकेतनीभूतं गोदावरीतीरनिकुञ्जं पुष्पावचयादिहेतोः कदाचित्संचरतो धार्मिकस्य तन्निवारणायाविनयवत्या इयमुक्तिः। तत्र निकुञ्जवासिसिंहकृतया श्वनिवृत्त्या गृहे भ्रमण-

---

संबन्धस्तदाश्रयादित्यर्थः। सकलेत्यस्य पक्षतावच्छेदकावच्छिन्नेत्यर्थः। तत्र व्याप्तिघटकसामानाधिकरण्यांशेन सपक्षसत्त्वम्। अव्यभिचारितत्वांशेन विपक्षासत्त्वम्। पक्षनिष्ठत्वेन पक्षसत्त्वं बोध्यते। **अनुमानेन**। ज्ञायमानहेतुना। **अनुमित्या**। ज्ञायमानहेतुकरणिकयेत्यर्थः। **रूप्यते**। विषयी क्रियते। न त्वतिरिक्तव्यक्तिजन्यज्ञानविषय इत्यर्थः। एवं च क्लृप्तलिङ्गव्यापारेणैव निर्वाहेऽक्लृप्तव्यञ्जनारूपव्यापारकल्पनमनुचितमिति भावः। **एवमनुमानादिति**। प्रागुक्तप्रकारवत इत्यर्थः।

**भमेति।**

भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन।
गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन॥

पुष्पावचयार्थं स्वसंकेतस्थाने कूलनिकुञ्जे यान्तमभिसारघातकं धार्मिकं भीषयितुं कस्याश्चिदुक्तिः। हे धार्मिकेति साक्षेपसंबोधनम्। परश्रेयोविघातकस्य तत्त्वायोगात्। त्वं विश्रब्धो विश्वस्तः सन् भ्रम। गृह इति शेषः। कुत इत्यत्राऽऽह। स गेहस्थः श्वा यद्भयात् ग्रामे भ्रमणं त्यक्तमासीत्। सोऽद्य तेन गोदानद्याः कच्छं जलप्रायो देशस्तत्संबन्धिनिकुञ्जवासिना दर्पयुक्तेन सिंहेन मारितः। तेनेति प्रसिद्धार्थकम्। सिंहस्य दृप्तता नगरमागत्य हननात्। अत्र वाच्येन भीरुस्वभावस्य गृहे श्वनिवृत्त्या भ्रमणेन[3] निकुञ्जे सिंहोपलब्ध्या भ्रमणनिषेधो व्यङ्ग्यः। **तदत्र निकुञ्जेति**। श्वाऽत्र गेहस्थः। यद्भयात् गृहेऽप्यभ्रमण-

---

१ क. °रे च सिं°। २ ग. °लब्धिर°। ३ ग. °कं भी°। ४ ग. °न कु°।

**णमनुमापयति । यद्यद्भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकम् । गोदावरीतीरे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः। अत्रोच्यते-भीरुरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेणान्येन चैवंभूतेन हेतुना**

---

विधिर्वाच्यः । स एव निकुञ्जभ्रमणायोग्यतानुमित्यै प्रभवति । यद्यद्भीरुभ्रमणं तत्तद्भय-कारणनिवृत्त्युपलब्धिपूर्वकम् । निकुञ्जे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धौ पर्य-वसानाद्भ्रमणस्य व्यापिका भयकारणाभावोपलब्धिः प्रतीता । तद्विरुद्धं यद्भयकारणं तदुप-लब्धेः । यथा नात्र तुषारः स्पर्शो वह्नेः । अनुमानं च– इदं गोदावरीनिकुञ्जं धर्मीरुभ्रमणा-योग्यम् । सिंहवत्त्वादिति ।

अत्रोच्यते—धर्मीरोरवीरस्वभावस्य भ्रमणायोग्यत्वमत्र साध्यं वीरस्वभावस्य वा विशे-षौदासीन्येन तत्सामान्यस्यैव वा । आद्ये व्यभिचारः । प्रभोर्गुरोर्वा निदेशेन प्रियानुरागेण निधिलाभादिशङ्कया वा तादृशस्यापि तत्र भ्रमणदर्शनात् । अत एव नान्त्योऽपि । मध्यमे तु

---

मासीत् । **स एव निकुञ्जेति ।** निकुञ्जे पक्षे भ्रमणयोग्यत्वानुमित्या इत्यर्थः । ननु गृहे भ्रमणं न गोदातीराभ्रमणमनुमापयति । व्यधिकरणत्वादिति चेन्न । श्लोकवाच्यस्य तदनुमितिसाध्यसाधनविरुद्धयोर्व्याप्तिप्रदर्शनरूपत्वादित्याह—**यद्यद्भीरुभ्रमणमिति ।** यद्यप्यत्र भीरुभ्रमणवति गृहे भयकारणश्वनिवृत्त्युपलब्धिरेव वाच्या तथाऽपि तत्र तदुपल-ब्धिज्ञानाद्व्युत्पन्नेन झटिति तयोर्व्याप्तिः स्मर्यते । उत्तरार्धेन च व्यापकाभावस्य पक्षधर्मता-ज्ञानमिति भावः । पर्यवसानमेवोपपादयति—**व्यापकमयेति ।** व्यापिका चासौ भयकारणाभावोपलब्धिश्चेति कर्मधारयः । **प्रतीतेति ।** पद्यादिति भावः । **तद्विरुद्ध-मिति ।** तद्विषयविरुद्धत्वेन तद्विरुद्धत्वोपचारोऽत्र बोध्यः । एवं च भ्रमणव्यापकभयकार-णाभावज्ञानाभावेन व्याप्यभ्रमणाभावः सिध्यतीति भावः । तत्र प्रयोगमाह—**अनुमानं चेति । सिंहवत्त्वादिति ।** उपलभ्यमानभयकारणवत्त्वं हेतुः । यद्यदुपलभ्यमानभय-कारणवत् तद्भीरुभ्रमणायोग्यं यथा महदरण्यमित्यन्वयसहचारः । यद्यत् न भीरु-भ्रमणायोग्यं न तदुपलभ्यमानभयकारणवद्यथा गृहमित्येवं व्यतिरेकसहचारः । उपल-भ्यमानत्वं चानुपलभ्यमानभयहेतुमति व्यभिचारवारणायेत्यन्ये । मूलं तु व्यापकविरुद्धज्ञानं व्यतिरेक्यनुमितिहेतुरिति मते । नव्यमते तु भयहेतुमत्त्वज्ञानाभावो व्यापको बोध्य इत्याहुः ।

**तत्र भ्रमणदर्शनादिति ।** एवं च यद्भीरुभ्रमणं तद्भयकारणनिवृत्त्युपलब्धिपूर्व-

---

१ क. °लब्धेरि° । २ क. °कुञ्जे भ्र° । ३ क. °त्यैवप्रतिभ° । ४ क. °°षारस्प° । ५ क. °मणायो° । ६ ग. न इति । ७ क. भावाभावेन । ८ क. मानं चा ।

सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः। शुनो बिभ्यदपि[1] वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि। गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः। अपि तु वचनात्। न च वचनस्य प्रामाण्यमस्ति। अर्थेनाप्रतिबन्धात्। इत्यसिद्धश्च। तत्कथमेवंविधाद्धेतोः साध्यसिद्धिः। तथा निःशेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तरतोऽपि[2] भवन्ति। अतश्चात्रैव स्नानकार्यत्वेनोक्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि।

व्यक्तिवादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम्। न चात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम्। एवंविधादर्थादेवंवि-

---

विरोधः। स्पर्शादिशङ्कयाऽपौरुषेयतया वा श्वतो बिभ्यतोऽपि मृगयादिकुतूहलेन सिंहवद्देशे वीरस्य भ्रमणात्। किं च पक्षे सिंहसद्भावो न मानान्तरेणावधारितः। किं तु पुंश्चलीवाक्यादवधारितः। न च तद्वचनं निश्चायकम्। अर्थेन समं संबन्धानियमात्। इत्यनिश्चयरूपाऽसिद्धिः। एवं 'निःशेषच्युत' इत्यादौ चन्दनच्यवनादीन्युपभोगव्यञ्जकतयोपात्तानि। न च तानि तद्व्याप्यानि। कारणान्तरतोऽपि संभवात्। अत एवात्र स्नानकार्यत्वेनोपात्तानि। अतोऽनैकान्तिकात्कथमनुमानं स्यात्। ननु व्यक्तिरपि कथं तैरिति चेत्। अधमपदसाहित्यादिति ब्रूमः। अस्माकमपि तत्साहित्येनानैकान्तिकताव्यतिरेक इति चेत्। भवेदप्येवं यद्यधमत्वं प्रमाणादवधारितं भवेत्। न त्वेवमस्ति। व्यक्तिरपि कथं तादृशाद्भवेदिति चेत्। धिङ्मूर्ख। व्यञ्जनायां न व्याप्तेर्नापि पक्षधर्मताया निर्धारणमङ्गम्। किं तु संभावितादप्येवं-

---

कमिति व्यतिरेकव्याप्तिरेवासिद्धेति भावः। **विरोध इति**। तदा ह्येवमनुमानम्—गोदावरीतीरं शूरभ्रमणायोग्यं सिंहादिमत्त्वादिति। तत्र साध्यहेत्वोरसामानाधिकरण्यात् साध्याभावव्याप्तत्वाच्च हेतोर्विरोध इति भावः। ननु गुरुनिदेशाद्यभावे सति यत्स्वोपलभ्यमानयद्भयकारणवत्तत्तद्भ्रमणायोग्यमित्यत्र नोक्तदोषावत आह—**किं चेति**। **पुंश्चलीति**। अनेनानाप्तोक्तत्वादप्रामाण्यं सूचितम्। तदेवाऽऽह—**न च तद्वचनमिति**। कोपाकुलितत्वाच्चेत्यपि बोध्यम्। तदेवाऽऽह—**संबन्धानियमादिति**। व्याप्त्यभावादिति भावः। **अनैकान्तिकादिति**। व्यभिचारिहेतोरित्यर्थः। **न त्वेवमिति**। निश्चितमित्यर्थः। एवं च पूर्ववत्संदिग्धासिद्धिरिति[3] भावः। **संभावितादपीति**। व्यभिचारस्फूर्तिमतामपि सामाजिकानामसति च पक्षधर्मतानिश्चये संभावितादर्था-

---

१ क. °पि धीर°। २ क. न्तरेऽपि भवन्तीति। अ°। ३ ग. °रित्यर्थः।

धोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशत इति व्यक्तिवादिनः पुनस्तद्दूषणम् ।

इति श्रीकाव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसंकीर्णभेदनिर्णयो नाम पञ्चम उल्लासः ॥ ५ ॥

---

विधादेवंविधोऽर्थः प्रतीयत इति मूकी भव ।

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे ध्वनिगुणीभूतव्यङ्ग्यसंकीर्ण-निर्णयो नाम पञ्चम उल्लासः ॥ ५ ॥

---

द्व्यक्तेरुदयादिति भावः । किं च व्याप्तिस्मरणादिकल्पनातो व्यञ्जनायाः कारणस्वकल्पन-मेवोचितमिति शिवम् ॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते काव्यप्रदीपोद्द्योते पञ्चम उल्लासः ॥ ५ ॥

---

१ क. °दिनस्त° । २ क. °विधो° ।

अथ षष्ठ उल्लासः।

---

**शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम्।**
**गुणप्राधान्यतस्तत्र स्थितिः[1] शब्दार्थचित्रयोः॥ ४८॥**

न तु शब्दचित्रेऽर्थस्या[2]चित्रत्वम्। अर्थचित्रे वा शब्दस्य। तथा[3] चोक्तम्—

रूपकादिरलंकारस्तस्यान्यैर्बहुधोदितः।
न कान्तमपि निर्भूषं विभाति वनिताननम्॥
रूपकादिमलंकारं[4] बाह्यमाचक्षते परे।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम्॥

---

एवं गुणीभूतव्यङ्ग्यभेदे निर्णीते चित्रभेदं दर्शयितुमवसरः। तत्र यद्यपि शब्दचित्रार्थचित्ररूपभेदद्वयं प्रथमोल्लास एव दर्शितं तत्प्रभेदाश्चालंकारप्रभेददर्शनेनैव प्रदर्शिता भविष्यन्तीति न किंचिदस्ति तत्र प्रदर्शनीयम्। तथाऽपि प्रदर्शितभेदद्वयमेव तावदनुपपन्नम्। शब्दार्थालंकारयोरन्योन्यनैरपेक्ष्येणानुपलम्भात्[5]। उपलम्भेऽपि वोभयसद्भावे तृतीयभेदप्रसङ्गादिति तदुपपादयति—**शब्दार्थचित्रं०**।

शब्दार्थालंकारयोरेकैकमात्रावस्थानपुरस्कारेण न विभागः। किं तु प्राधान्यपुरस्कारेण। तथा च न काचिदनुपपत्तिरिति भावः। ननु तथाऽपि विभागोऽनुपपन्न एव। यतः केचिच्छब्दालंकारमात्रं केचिच्चार्थालंकारमात्रमुरी चक्रिरे। तत्कस्य मतमाश्रित्य विभाग इति चेत्। सन्त्येव केचिदुभयाङ्गीकारिणः। तथा चोक्तम्—

रूपकादिरलंकारस्तस्यान्यैर्बहुधोदितः।
न कान्तमपि निर्भूषं विभाति वनिताननम्॥
रूपकादिमलंकारं बाह्यमाचक्षते परे।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम्॥

---

**अन्योन्यनैरपेक्ष्येणेति**। अन्योन्येन विनेत्यर्थः। स्वच्छन्देत्यादावितरनद्यपेक्षया व्यतिरेकालंकारस्य विनिर्गतमित्यादौ मानदमात्ममन्दिरादित्यत्र मकारानुप्रासस्य सत्त्वादिति भावः। **प्राधान्येति**। आसमाप्ति कविसंरम्भविषयत्वं च प्राधान्यमिति भावः। **विभाति**। आह्लादाय पर्याप्यते। **बाह्यम्**। आस्वादोत्पत्तिपरवर्त्तिनम्। प्रथमतः शब्दालंकारेण चित्तापकर्षः। अर्थप्रतीत्युत्तरं त्वर्थालंकारप्रतीतिरिति तेषां बाह्यत्वमिति भावः। **सुपां तिङाम्**। तदन्तानाम्। **व्युत्पत्तिम्**। अनुप्रासादिना विशिष्टामुत्पत्तिम्। **तदे-**

---

१ क. ग. स्थितिश्चित्रार्थ शब्दयोः। २ क. ग. °र्थस्य चि°। ३ ग. तथोक्तम्। ४ ग. °रं वाच्यमा°। ५ क. °लम्भनात्।

तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालंकारभेदादिष्टं द्वयं तु नः ॥ इति ।

शब्दचित्रं यथा—

प्रथममरुणच्छायस्तावत्ततः कनकप्रभ—
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ॥
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥ १४० ॥

---

तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालंकारभेदादिष्टं द्वयं तु नः ॥ इति ।

अस्यार्थः । अर्थस्यैव विभावादिरूपत्वेन रसव्यञ्जकत्वात्तन्निष्ठो रूपकादिरेवालंकारः कैश्चिदुक्तः । केचित्तु काव्यस्यालंकारो वाच्यः । काव्यं च कविकर्म शब्द एवेति तदाश्रिता सुप्तिङां विशिष्टोत्पत्तिरलंकारः । रूपकादिस्त्वर्थाश्रितोऽलंकारो बाह्यः । अलंकारप्रयोगस्तु तत्र गौण एवेति वाञ्छन्ति । व्युत्पत्तिरेव कथं नार्थालंकार इत्यत आह—तदेतदाहुरित्यादि । शब्दाभिधेयेति । शब्दवदर्थस्यापि कविसंरम्भङ्गाप्यत्वमर्थस्येव शब्दस्यापि रसप्रतीत्युपयोगित्वमत उभयाश्रितोऽप्युभयरूपोऽलंकार इति ।

तत्र शब्दचित्रं यथा—**प्रथममरुण०** ।

अत्रार्थालंकार उपमा गुणीभूता । शब्दालंकारस्त्वनुप्रासः प्रधानम् । आसमाप्ति कवेस्तत्रैव संरम्भात् । प्राधान्यस्य कविविवक्षामात्रनिबन्धनत्वात् ।

---

**तदाहुरिति** । स्वत एव शब्दालंकाराणां चमत्कारित्वम् । अर्थव्युत्पत्तिरर्थालंकारो नेदृशी न शब्दवत्स्वतश्चमत्कारिकाऽपि तु विभावाद्युत्कर्षमुखेनैवेत्यर्थः । **अभिधेयः** । प्रतिपाद्यः । तेन लक्ष्यव्यङ्ग्ययोरपि संग्रहः । **विभावादीति** । आदिनाऽनुभावादिसंग्रहः । **शब्द एवेति** । तस्यैव पठनश्रवणादिविषयत्वादिति भावः । **शब्दवदिति** । अलंकृतशब्दव्यङ्ग्यस्याऽऽस्वादस्य विभावाद्यप्राप्तौ शृङ्गारादिविशेषानाश्रयत्वेनाकिंचित्करत्वादलंकृतार्थोपजीव्यत्वाच्छब्दानामप्यावश्यकत्वेन द्वयोरप्यास्वादोपकारत्वात्कविसंरम्भगोचरत्वाच्चोपादेयता । तत्र यो यदन्वयव्यतिरेकानुविधायी स तेन व्यपदिश्यत इति भावः । **प्रथमेति** । कनकद्युतिः पीतः । सरसेति । कन्दो मृणालम् । तच्छेदद्युतित्वेन शौक्ल्यातिशयः । तेन ध्वान्तध्वंसक्षमता । अत एव विपक्षजयादुदयः । मृगलाञ्छन इत्यपुष्टार्थम् । चन्द्रादिपदेनापि तदर्थलाभात् । मकारयोस्तकाराणां ककारयोर्धकारयोः क्षकारयोश्छकारयोः सकारच्छकारलकाराणामनुप्रासः ।

---

१ क. °कद्युतिस्त° । २ क. °लप्रभः । उ° । ३ क. °रो वाच्यः । प्र° । ४ क. ग. °दच्छविष्ट्वेन ।

अर्थचित्रं यथा—

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना[1]
ये कालतां कुटिलतामिव न त्यजन्ति[2] ॥ १४१ ॥

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया रसपर्यवसानं[3] तथाऽपि स्फुटस्य[4] रसस्यानुपलम्भादव्यङ्ग्यमेतत्काव्यद्वयमुक्तम् । अत्र[5] च शब्दार्थालंकारभेदाद्बहवो भेदाः । ते चालंकारनिर्णये[6] निर्णेष्यन्ते ।

इति काव्यप्रकाशे शब्दार्थचित्रनिरूपणं नाम
षष्ठ उल्लासः ॥ ६ ॥

---

अर्थचित्रं यथा–ते दृष्टिमात्र०।

अत्र शब्दालंकारोऽनुप्रासः स गुणीभूतः । अर्थालंकारस्तु समुच्चयः प्रधानम् । आरम्भादासमाप्ति तन्निर्वाहणात् । यथा चात्र किंचिद्व्यङ्ग्यसत्त्वेऽप्यधमकाव्यत्वं तथोक्तं प्रथमोल्लास एव । एषां भेदाश्चालंकारभेदाद्भवन्तीत्यलंकारनिर्णयेनैव ते निर्णेष्यन्त इति ।

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे चित्रकाव्यनिर्णयो नाम
षष्ठ उल्लासः ।

---

ते दृष्टिमात्रेति । पक्ष्मलेति भूम्नि मत्वर्थीयो लः । क्षोभो धैर्यविघातः, अस्वस्थता च । नीचा अधोगामिनोऽनुच्चाशयाश्च । कृत्रिमविनयान्नीचतां गता वा । अलीकं ललाटं मिथ्यावचनं च । कालता श्यामता परपीडकत्वोद्यमता च । कुटिलता वक्रता कचपक्षे । खलपक्षे अस्फुटं परापकारेच्छा कुटिलतामिवेति सहोपमा । तद्व्यङ्ग्यश्च समुच्चयः । तेन तथा ते कुटिलतां न त्यजन्ति तथा कालतामपीत्यर्थालंकारस्य प्राधान्यम् । कवेस्तत्रैव संरम्भात् । यत्किंचिद्व्यङ्ग्यसत्त्वेऽपीति । आद्य उद्दीपनविधया रसव्यञ्जकत्वेऽपि द्वितीये खलसदृशा अलका इत्युपमायास्तन्मूलविप्रलम्भस्य च सत्त्वेऽपीति भावः ।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते काव्यप्रदीपोद्द्योते
षष्ठ उल्लासः ॥ ६ ॥

---

१ ग. °कभग्ना । २ ग. °लतां ननु संत्यजन्ति । ३ ग. रसः पर्यवस्यति त° । ४ क. °टर° । ५ ग. अस्य च । ६ क. °रे च कु° ।

अथ सप्तम उल्लासः ।

## काव्यस्वरूपं निरूप्य दोषाणां सामान्यलक्षणमाह—

## मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः ।

---

**अथ काव्यप्रदीपे सप्तमोल्लासः**—एवं धर्मिणि काव्ये सप्रभेदे निरूपिते प्राप्तावसरतया दोषाभावादीनि लक्षणस्थानि विशेषणानि विवेचनीयानि । तेषु च दोषाभावः प्रधानम् । सति दोषे गुणादेरप्यकिंचित्करत्वात् । यदाह—

'स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्'

इति । सति तु दोषाभावे गुणादिकं विनाऽपि किंचिदाह्लादसंभवात् । 'अपदोषतैव विगुणस्य गुणः' इति न्यायात् । अतः प्रथमं तस्मिन्निरूपणीयेऽभावस्य स्वरूपतो निरूपणानर्हतया प्रतियोगिनिरूपणाधीननिरूपणीयत्वाद्धेयापरिचये तद्धानासंभवाच्च दोषा निरूपणीयाः । न च सामान्येऽविज्ञाते विशेषे जिज्ञासेति तत्सामान्यलक्षणमाह—**मुख्यार्थ०** ।

मुख्यस्यार्थस्य हतिर्यस्मादिति व्यधिकरणत्वेऽपि गमकत्वाद्बहुव्रीहिः । करणसाधनो हतिशब्द इत्येके । मुख्यत्वमर्थस्य न शक्यत्वलक्षणम् । येनार्थासंगतिः स्यात् । किं त्वन्यदित्याह—रसश्च मुख्य इति । रस्यत इति व्युत्पत्त्या रसशब्देन भावादिरप्युपसंगृह्यते । नन्वेवं नीरसेषु न कश्चिद्दोषः स्याद्विघात्याभावादित्यत आह—तदाश्रयाद्वाच्य इति ।

---

**अथोद्योते सप्तमोल्लासः—श्वित्रम्** । कुष्ठम् । **निरूपणाधीननिरूपणत्वादिति** । बहुव्रीहिस्त्वः । **दोषा निरूपणीया इति** । यत्तु गुणविपर्ययात्मानो दोषा इति वामनोक्तेर्गुणनिरूपणमेवोचितमिति । तन्न । व्यत्ययस्यापि सुवचत्वात् । प्रसादादिगुणसत्त्वेऽपि दोषसत्त्वाच्च । **मुख्यार्थेति** । कर्मधारयः । **करणेति** । एवं हि दोषपरता भवति । तद्वत्त्वं च दुष्टलक्षणं बोध्यम् । **अर्थासंगतिरिति** । अर्थस्य लक्षणस्यासंगतिः । सकलदोषाव्यापकत्वमित्यर्थः । मुख्यत्वं चेतरेच्छानधीनेच्छाविषयत्वम् । तच्च स्वतः पुरुषार्थे सुखरूपे रसेऽक्षतमित्याह—**रसश्च मुख्य इति** । **वाच्य इति** । वाच्योऽपि रससाहचर्याच्चमत्कार्येव गृह्यते । एवं मुख्यत्वं सुखान्तरेऽपि, तद्व्यावृत्त्यर्थमर्थपदम् । अर्थत्वं शब्दजन्यसाक्षात्काराविषयत्वम् । काव्यभिन्नशब्दाच्च न सुखप्रत्यक्षम् । सुखांश आवरणभङ्गाभावात् । काव्योपात्तविभावादिप्रतीत्यैव तद्भङ्गात् । किं तु शाब्दबुद्धिरेव । पुत्रस्ते जात इत्यादिवाक्यौ[3]ऽजन्यमानसुखं तज्जन्यपुत्रोत्पत्तिज्ञानादेवेति न दोषः । अस्तु वा तस्यापि काव्यत्वमेव । अर्थत्वमात्रमचमत्कारिण्यर्थेऽपि, अतो मुख्यत्वमुपात्तम् । केचित्तु अर्थत्वमात्रं शब्देऽपि, तस्यापि विषयतया शब्दजन्यश्रवणसाक्षात्कारविषयत्वात् । अतो मुख्यत्वमुपात्तमित्याहुः ।

---

१ क. 'द्विभावाद्यभा' । २ ग. 'क्याज्जायमा' । ३ क. 'षः । अर्थ' ।

**उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥ ४९ ॥**

**हतिरपकर्षः । शब्दाद्या—इत्याद्यग्रहणाद्वर्णरचने ।**

आश्रयणमाश्रयः । तथा च तेन रसेनाऽऽश्रयणादुपकारित्वेनापेक्षणाद्वाच्योऽपि मुख्य इत्यर्थः । न चैवं मुख्यशब्दार्थस्य नानात्वेनाननुगमः । काव्ये प्राधान्येनोद्देश्यप्रतीतिविषयत्वेनानुगमात् । तदेवं रसवति सर्व एव दोषाः, नीरसे त्वविलम्बितचमत्कारिवाक्यार्थप्रतीतिविघातका एव हेया इति मन्तव्यम् । नन्वेतयोरेव दोषाधारत्वमुचितं, न तु शब्दादीनामित्यत आह—उभयोपयोगिन इत्यादि । अत्र शब्दपदं प्रतिपादनात्मकशब्दनाव्यापारवतोः पदवाक्ययोर्वर्तते । तेनाऽऽद्यपदाद्वर्णरचने संगृहीते इति प्रकाशकारस्वरसः । न च तत्र बीजाभावः । अन्यथा वर्णस्यापि शब्दपदेनैव प्राप्तौ शब्दाद्या इति बहुवचनासंगतेः । स्यादेतत् । हतिर्विनाशः । न च दोषेण रसो नाश्यते । तस्मादलक्षणमेतत् । मैवम् । हतिशब्दस्यापकर्षवाचित्वात् । नन्वेवं रसानुत्पत्तिप्रयोजकेष्वव्याप्तिः । अथानुत्पत्तिरेव हतिशब्दार्थः । तर्हि यत्र रस उत्पद्यत एव परं त्वपकृष्यते तत्राव्याप्तिः । तदेतल्लक्षणमतिदरिद्रदंपत्योः कृशतरनिशावगुण्ठनीयवसनमिवैकेनापकृष्यमाणमपरं परिहरति । किं चार्थरूपस्य मुख्यार्थस्यानुत्पत्तिरपकर्षो वा न दोषाधीन इति ।

अत्र ब्रूमः—उद्देश्यप्रतीतिविघातलक्षणोऽपकर्षो हतिशब्दार्थः । उद्देश्या च प्रतीतिः रसवत्यविलम्बितानपकृष्टरसविषया च, नीरसे त्वविलम्बिता चमत्कारिणी चार्थविषया । तथा च तादृशप्रतीतिविघातकत्वं सर्वेषामविशिष्टम् । यतो दुष्टेषु क्वचिद्रसस्याप्रतीतिरेव, क्वचित्प्रतीयमानस्यापकर्षः, क्वचित्तु विलम्बः । एवं नीरसे क्वचिदर्थस्य मुख्यभूतस्याप्रतीतिरेव, क्वचिद्विलम्बेन प्रतीतिः, क्वचिदचमत्कारितेत्यनुभवसिद्धम् । इत्युद्देश्यप्रतीत्यनुत्पादो

विघात्याभावादिति पाठः । **उपकारित्वेनेति** । विभावादिसमूहालम्बनरूपत्वाद्रसस्येत्यर्थः । **प्राधान्येनोद्देश्येति** । सा च चमत्कारिणी प्रतीतिः । तेन चमत्कारकारिकाव्यजन्यप्रतीतिविषयत्वमित्यर्थः । **उभयेति** । विभावादिप्रतीतिद्वारा रसप्रत्यायकत्वेन तेषामुभयोपयोगित्वम् । **तेन** । रसोपायत्वेन । **तेषु** । अर्थशब्देषु । **सः** । दोषः । न केवलं रस एवेत्यपेरर्थः । **प्रतिपादनात्मकेति** । शब्द्यते बोध्यतेऽनेनेति व्युत्पत्तेः । **स्वरस इति** । अन्यथा वर्णस्य शब्दरूपत्वादादिपदग्राह्यता तदुक्ताऽसंगता स्यादिति भावः । रचना आनुपूर्वीरूपा । **न च दोषेणेति** । दुष्टेष्वपि रसानुभवादिति भावः । **अपकर्षेति** । अपकर्षशब्दोऽपि करणसाधनस्तद्वत् । स च रसनिष्ठो जातिविशेषः । तद्व्यञ्जकं दोषज्ञानम् । असत्यपि श्रुतिकटुत्वादौ तद्भ्रमेण रसापकर्षव्यक्तेरिति बोध्यम् । केचित्त्वानन्दांशे सम्यगावरणध्वंसाभावोऽपकर्ष इत्याहुः । **रसानुत्पत्तीति** । यथा च्युतसंस्कृत्यादयः । **तत्राव्याप्तिरिति** । श्रुतिकटुप्रतिकूलवर्णादावित्यर्थः ।

१ क. नन्वेवंतयो. । २ क. स्याप्यप.

**विशेषलक्षणमाह—**

---

व्यक्त एव । तद्विघातकता च कस्यचित्साक्षात् । यथा रसदोषाणाम् । कस्यचित्परम्परया । यथा शब्दादिदोषाणाम् । तेष्वपि कस्यचिदर्थोपस्थितेरभावात् । यथाऽसमर्थत्वादेः[1] । कस्यचिद्विलम्बात् । यथा निहतार्थत्वादेः । कस्यचिद्वाक्यार्थबोधाभावात् । यथा च्युतसंस्कृत्यादेः । कस्यचित्तत्र विलम्बात् । यथा क्लिष्टत्वादेः । कस्याचित्सहृदयवैमुख्यव्यग्रताद्यापादनेन । यथा निरर्थकत्वादेः । कस्यचिद्विरोध्युपस्थापनेन[2] विपरीतोपस्थापनेन वा । यथा विरसविरुद्धमतिकृत्त्वादेरित्याद्यूहनीयम् । विघातकत्वं च कस्यचिज्ज्ञातस्य । यथा व्याहतत्वादेः । कस्यचित्तु स्वरूपसत एव । यथा निहतार्थत्वादेः । स चायं द्विविधः—नित्योऽनित्यश्च[3] । तत्रानुकरणादन्येन प्रकारेण समाधातुमशक्यो नित्यः । यथा च्युतसंस्कृत्यादिः । अन्यादृशस्त्वनित्यः । यथाऽप्रयुक्तादिः । अथ विशेषलक्षणानि वक्तव्यानि । तत्र द्विविधोऽप्ययं त्रिविधः । शब्ददोषोऽर्थदोषो रसदोषश्चेति । तत्र शब्दार्थरसानां यथापूर्वमुपस्थितिः प्राथमिकीति तत्क्रमेणैव दोषभेदा निरूपणीया इति शब्ददोषाणां प्राथम्यम् । शब्दस्तु त्रिधा—पदं तदेकदेशो वाक्यं च । एवं च तदाश्रितः शब्ददोषोऽपि त्रिविधः । तत्र पदानां वाक्यघटकत्वेन प्राथम्यात्प्रथमं तद्दोषनिरूपणमिति परमार्थः । तत्रेदं निरूप्यते । एवं पदैकदेशस्य पदापेक्षयाऽपि प्राथम्यात्तद्दोषनिरूपणस्यैव प्राथम्यमर्हतीति । अत्र भास्करः—'सत्यमुच्यते । परंतु पददोषेष्वेव यथासंभवं केचित्पदैकदेशदोषाः ' इति समादधे । तन्नातिमनोरमम् । अस्त्वेवम् । तथाऽपि पदैकदेशदोषत्वेन प्रथमाभिधानापादने किमुत्तरमिति । वयं त्वालोचयामः—उपदेशे तावत्प्राथम्यादिविचारणा । अतिदेशस्तूपदेशानन्तरमेव । न च पदैकदेशे दोषोपदेशः । अतिदेशेनैव तल्लाभे लाघवात् । न च पदैकदेश एवास्तूपदेशः, पदे त्वतिदेश इति वाच्यम् । पदैकदेशावृत्तीनामपि केषांचित्पदवृत्तित्वेन तदर्थं पदेषूपदेशस्याऽऽवश्यकत्वादिति ।

---

अविलम्बितचमत्कारिणी चेति पाठे कर्मधारयः । **यथा रसेति** । रसापकर्षकाणामपि तेषां प्रकृष्टरसव्यञ्जकत्वाभावोऽस्त्येव । **यथा शब्दादीति** । आदिनाऽर्थवर्णरचनासंग्रहः । **विपरीतोपस्थापनेनेति** । विपरीतार्थोपस्थापनेनेत्यर्थः । **यथा विरसेति** । विरसशब्देनामतपरार्थमुच्यते । **यथा व्याहतत्वादेरिति** । यस्य पूर्वमुत्कर्षापकर्षौ वर्णितौ तस्याग्रे तद्वैपरीत्यं चेद्व्याहतः । **यथाऽप्रयुक्तेति** । तस्य श्लेषादावदोषत्वादिति भावः । **द्विविधोऽपि** । नित्यानित्यरूपः । **शब्ददोष इति** । वाक्यार्थबोधात्प्राक्प्रतीयमानाः शब्दगाः । ततः परं प्रतीयमानाः परम्परया रसापकर्षका अर्थगाः । तादृशाः साक्षाद्रसापकर्षका रसगा इत्यर्थः । **पदापेक्षयाऽपीति** । न च पदांशः पदनिरूप्यः, प्रकृतित्वप्रत्ययत्वादिर्नो[4] निरूपणे पदनिरूप्यत्वाभावादिति भावः । तद्दोषनिरूपणस्य प्राथम्यं ग्रन्थकृदर्हतीति—

---

१ क. °न वा । २ क. °कृदादे° । ३ क. नित्यश्चानि° । ४ क. ख. °ना भा नादि ।

**दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।**
**निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम् ॥ ५० ॥**
**संदिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत्क्लिष्टम् ।**
**अविमृष्टविधेयांशं विरुद्धमतिकृत्समासगतमेव ॥ ५१ ॥**

**श्रुतिकटु ( परुषवर्णरूपं ) दुष्टं यथा—**

**अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।**
**आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥ १४२ ॥**

---

पददोषविशेषलक्षणमाह—**दुष्टं०** ।

**दुष्टं** पदमिति प्रत्येकमभिसंबध्यते । ननु श्रुतिकटुप्रभृतिशब्दानां लक्षणपरत्वे विभागपरत्वाभावाल्लक्ष्यानुपस्थितौ कथं लक्षणवाक्यत्वनिर्वाह इति । उच्यते—रूढियोगाभ्यामुभयार्थोपस्थितौ लक्ष्यलक्षणयोरुभयोरपि प्रत्ययः । यथा—'घ्राणरसनचक्षुस्त्वक्छ्रोत्राणीन्द्रियाणि भूतेभ्यः' इतीन्द्रियलक्षणसूत्रे गौतमीये । अथैषां लक्षणवाक्यत्वे त्रिधाऽश्लीलमित्यत्र त्रिधेति निरर्थकम् । तस्य विभागमात्रार्थत्वेन लक्षणेऽनुपयोगादिति चेन्न । अश्लीलशब्दस्य व्रीडादिव्यञ्जकत्रितयसाधारणैकावयवशक्तिविरहेण नानार्थतया लक्षणत्रयार्थत्वमित्यस्य तदर्थत्वात् । तत्र श्रुतिकटुत्वं यद्यपि श्रुत्युद्वेजकत्वं तच्च पुरुषभेदेनानियतं तथाऽपि तज्जनकतावच्छेदकरूपवत्त्वं विवक्षितम् । तच्च परुषवर्णत्वम् । तच्च दुर्वचत्वम् । उदाहरणम्—**अनङ्ग०** ।

---

त्यन्वयः । **दुष्टं पदमिति** । पदशब्देनात्र सुबन्तं तिङन्तं तत्प्रकृतिभूतं प्रातिपादिकादि च गृह्यते । विभक्तिप्रत्ययादेस्तु पदैकदेशत्वमग्रे वक्ष्यति । **निर्वाह इतीति** । विभागवाक्याल्लक्ष्योपस्थितावेव हि विशेषलक्षणाकाङ्क्षायां लक्षणकथनयोग्यत्वम् । विभागपरत्वे तु लक्षणानुक्तेर्न्यूनतेति भावः । **रूढियोगाभ्यामिति** । श्रुतिकट्वादिपदेभ्य इत्यादिः । रूढ्यर्थो लक्ष्यः, योगार्थो लक्षणमिति भावः । केचित्तु योगरूढेष्वेकार्थीभाववादिनां नैकविनाकृतापरार्थोपस्थितिरिति कथं प्राग्लक्ष्यज्ञानं यस्य योगार्थो लक्षणं स्यात् । अतः श्रुतिकट्वादिपदवाच्यत्वं लक्षणमित्याहुः । परुषत्वमोजोव्यञ्जकत्वम् । वीरबीभत्सरौद्रेष्वस्यादुष्टत्वादाह—**दुर्वचत्वमिति** । मुख्यार्थापकर्षकत्वमित्यर्थः । वीरादौ तु मुख्यार्थोत्कर्षकत्वाददुष्टत्वम् । दुःखेन वक्तुं शक्यत्वाच्च तत्त्वं माधुर्यवद्रसेऽस्य । **अनङ्गमङ्गलेति** । ( कुट्टिनी कयोश्चित्कामिनोः समागमं चिन्तयति । ) अत्र पूर्वार्धे लोचनैरिति विशेष्यमध्याहार्यम् । अङ्गशून्यस्यापि विजयप्रदत्वान्मङ्गलगृहत्वमिति कश्चित् । स्वस्यानङ्गत्वादत्र मङ्गलं निहितमित्यपरे । तत्संबन्ध्यपाङ्गवृत्तिभङ्गीनां ये तरङ्गा

---

१ क. °र्णमयं य° । २ क. °णेऽयो° । ३ क. °पत्वं । ४ केचित्तु केवलरूढेर्योगस्य चातिप्रसक्तत्वाद्योगरूढानामानि । तत्र हि नैकविना इति पाठान्तरम् । ५ ग. °हृभि° ।

**अत्र कार्तार्थ्यमिति ।**

**च्युतसंस्कृति ( व्याकरणलक्षणहीनं ) यथा—**

---

अत्र कार्तार्थ्यमिति पदं परुषवर्णप्रायम् । किं पुनरस्य दूषकताबीजम् । उद्वेगजनकत्वमिति चेत् । न । रौद्रादावपि दोषत्वप्रसङ्गात् । माधुर्यव्यञ्जकरचनामध्यगुम्फितमेव तदुद्वेजयतीति चेत्तत्किं तादृशत्वेन ज्ञातं तथा, उत स्वरूपसदेव । नाऽऽद्यः । रसविशेषव्यञ्जकत्वाज्ञानेऽपि प्राथमिकतादृशपदश्रवणेनोद्वेगाभावप्रसङ्गात् । न चेष्टापत्तिः । अनुभवविरोधात् । अन्त्ये तु सत्यादयः प्रमाणम् । न ह्यविदितविशेषानपि तत्रैव तदुद्वेजयति नान्यत्रेति प्रमाणमस्ति । किं चैवं वैयाकरणादौ वक्तरि किंनिबन्धनो दोषत्वाभावः स्यात् ।

अत्रोच्यते—स्वायत्ते शब्दप्रयोगे कर्णोपतापकशब्दप्रयोगेण श्रोतुरुद्वेगो रसापकर्षायेति स एव तद्बीजम् । अत एव प्रतिकूलवर्णादस्य भेदः । तस्य कर्णोपतापाहेतुत्वात् । अत एव चानुकरणे वैयाकरणादौ वक्तरि श्रोतरि वा रौद्रादौ रसे व्यङ्ग्ये नीरसे च काव्येऽस्य दोषत्वाभावः । आद्ये तस्यैवानुकरणीयतया स्वायत्त्यभावात् । द्वितीये च तत्स्वभावावगमेनोद्वेगाभावात् । तृतीये च श्रोतुस्तेनानुद्वेगात् । चतुर्थे तदनुगुणत्वेनोद्वेगाहेतुत्वात् । पञ्चमे मुख्यार्थहतेरभावात् । एवमर्थौचित्यप्रकरणादिवशेनाप्यनुद्वेजकतया दोषत्वाभाव उपपद्यते ।

च्युतसंस्कृति । च्युता स्खलिता संस्कृतिः संस्करणं व्याकरणलक्षणानुगमो यत्र । यद्भाषासंस्कारकव्याकरणलक्षणविरुद्धं यत्तद्भाषायां च्युतसंस्कृतीत्यर्थः । देश्यं तु न लक्षणविरुद्धं किं तु तदविषयः । संज्ञाशब्दानां बहुलवचनेन संस्कृतत्वान्न तत्रातिव्याप्तिः ।

---

उत्तरोत्तरा विच्छेदास्ते संजाता येषु तैर्लोचनैरुपलक्षितया कृशाङ्ग्या कण्ठ आलिङ्गितः कृतार्थतां कदा लभते लप्स्यत इत्यर्थः । भविष्यति कदाकर्ह्योरिति भविष्यति लट् । भङ्गीनां तरङ्गवदाचरणैः करणैरित्यन्ये । ( तरङ्गितैरित्यत्राऽऽचारक्विबन्ताद्भावे क्तः । तरङ्गवदाचरणानि तरङ्गितानि [ अर्थात् लोचनानाम् ] तैरित्यर्थः । अनुष्टुप् छन्दः ) **नान्यत्रेतीति** । इति इत्यस्मिन्नर्थे इत्यर्थः । **तस्य कर्णोपेति**[3] । रौद्रे मसृणवर्णादेरिति भावः । **मुख्यार्थहतेरभावादिति** । अत एवायं दोषो माधुर्यवच्छान्तकरुणशृङ्गाररसप्रधानकाव्य एवेत्याहुः । एवं च रसाद्यपकर्षकश्रोत्रुद्वेगजनकत्वं श्रुतिकटुलक्षणमिति बोध्यम् । **देश्यं त्विति** । तत्तद्देशीयभाषारूपमित्यर्थः । एवं च तत्र च्युतसंस्कृतिर्न दोष इति भावः । यत्तु देश्यं लडहादीति । तन्न । लडहादयो बहुलमिति प्राकृतसूत्रेण तेषामपि

---

१ क. तत्तथा । २ क. °पद श° । ३ ग. कर्णेति ।

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत्पल्लीपतिपुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥ १४३ ॥

**अत्रानुनाथत इति । सर्पिषो नाथत इत्यादावाशिष्येव नाथतेरात्मनेपदं विहितम्, " आशिषि नाथः " इति । अत्र तु याचनमर्थः । तस्मात् ' अनुनाथति स्तनयुगम् '—इति पठनीयम् ।**

---

यथा—एतन्मन्द०

अत्र नाथत इति याचत इत्यर्थे च्युतसंस्कृति । सामान्यतः ' तिपू–' आदिसूत्रेण प्राप्तस्याऽऽत्मनेपदस्य नियामकेन ' आशिषि नाथः ' इति सूत्रेणानाशिषि तन्निषेधात् । तस्मात् ' नाथति स्तनयुगम् ' इति पठनीयम् । ननु नाथत इति स्वरूपं संस्कृतमेव । तथा चार्थविशेषे न तथेति वक्तव्यम् । एवं चार्थदोषत्वं प्राप्तमिति । मैवम् । यत्र शब्दपरिवर्तनेऽपि यो दोषोऽनुवर्तते तस्यार्थदोषत्वम् । यस्तु तथा सति निवर्तते तस्य शब्ददोषत्वमिति विभागात् । अत्रार्थाप्रतीतिर्दूषकताबीजमिति नित्यदोषत्वम् । अनुकरणे स्वर्थपरत्वाभावाद्दोषत्वाभावः ।

---

व्युत्पादनादित्याहुः । **एतन्मन्देति** । ( पल्लीपतिपुत्र्याः कुचयुगं दिदृक्षोः कस्यचिद्विदग्धस्योक्तिरियम् । ) एतदनपलपनीयम् । मन्दविपक्वमीषद्विपक्वमित्यनेनेषत्कठिनत्वपाण्डरत्वलाभः । पुलिन्दसुन्दरः । शबरयुवा । करस्पर्शक्षमम् । तद्योग्यम् । पल्लीपतीत्यनेन तत्पुत्र्यास्तव भीतत्राणमुचितमिति ध्वनितम् । स्तनयोः पत्रानावृतत्वेन तदासक्तचेतसः प्रहारपाटवं न भविष्यतीति 'अनयोः कतरः कुम्भ' इति हनने मौढ्यं वा भविष्यतीति तत्सारूप्येण प्रहारायोग्यत्वबुद्ध्या वा कुम्भाभयं स्यादिति भावः । अभ्यर्थना इच्छा । कुलमित्यनेन बह्वनुरोधात्तथाकरणस्याऽऽवश्यकत्वं ध्वनितम् । ( शार्दूलविक्रीडितं छन्दः । ) **अनाशिषीति** । न चात्राप्याशीरर्थः । त्वामित्यस्यानन्वयापत्तेः । इष्टार्थस्यैवाऽऽशंसनकर्मत्वात् । **अत्रार्थाप्रतीतिरिति** । अत्रेदं चिन्त्यम् । साधुशब्दस्मरणेन शक्तिभ्रमेण शक्त्यैव वा तेषां बोधकत्वस्य सर्वैः स्वीकारात्नार्थाप्रतीतिः । असाधुत्वज्ञानस्य शाब्दबोधप्रतिबन्धकत्वे तत्तद्देशभाषाकाव्यादितो न बोधः स्यात् । तस्मात्तत्तद्व्याकरणसंस्कृतशब्दघटितपद्ये, तदसंस्कृत-

---

१ क. ग. °पाण्डुर° । २ क. °नादीनं । ३ ग. °षोऽनुना° । ४ क. °दाविवा° । ५ क. ग. नियमितम् । ६ क. °त्र च याचनार्थः । तस्मान्नाथति स्त° । ७ क. °ति रू° । ८ क. ग. °विशेषेण तथे° । ९ ग. भवतीति ।

अप्रयुक्तं ( तथाऽऽम्नातमपि कविभिर्नाऽऽदृतम् ), यथा,

यथाऽयं दारुणाचारः सर्वदैव विभाव्यते ।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा ॥ १४४ ॥

अत्र दैवतशब्दो "दैवतानि पुंसि वा" इति[१] पुंस्याम्नातोऽपि न केनचित्प्रयुज्यते ।

असमर्थं ( यत्तदर्थं[२] पठ्यते न च तत्रास्य शक्तिः ), यथा,

---

अप्रयुक्तं तथानुशासनसिद्धमपि कविभिर्न[३] प्रयुक्तम् । यथा—**यथाऽयं०** ।

अत्र 'दैवतानि पुंसि वा' इत्यनेनाऽऽम्नातोऽपि पुंलिङ्गो दैवतशब्दः कविभिर्न क्वापि प्रयुक्तः । नन्वत्र किं दूषकताबीजम् । न तावच्छक्तिविरहः । तत्सत्त्वात् । शक्तिस्मृतिविरह इत्यपि नास्ति । शब्दानुशासनेन तद्ग्रहे स्मृतौ प्रतिबन्धकाभावादिति चेत्, पदार्थोपस्थितिविलम्बस्तद्बीजम् । अत एव श्लेषयमकादावदोषत्वम् । उद्भटालंकारसंपत्त्या प्रतीत्यविलम्बस्य तत्रानुद्देश्यत्वात् । वस्तुतस्तु तादृशकविसमयविलङ्घनप्रयोजनानुसंधानव्यग्रतया मुख्यार्थविच्छित्तिर्दूषकताबीजम् । अत एवानुकरणे दोषत्वाभावः । यमकादावप्यदोषत्वम् । अन्यत्राप्रयुज्यमानस्यापि तदर्थं कविभिः प्रयोगस्य दर्शनेन व्यग्रताभावादिति ।

असमर्थमित्यल्पार्थे[४] नञ् । तेन यत्तदर्थं परिपठितमपि प्रकृतस्थले विवक्षितार्थसामर्थ्यरहितमित्यर्थः । समर्थस्यैवासामर्थ्यं विरुद्धमिति चेत् । न । उपसंदानोपजीवित्वात्सामर्थ्यस्य ।

---

पदोपादानस्य कव्यशक्त्युन्नायकतया सहृदयश्रोतुरुद्वेगो दूषकताबीजमिति तत्त्वम्[५] । अन्ये तु आशीरर्थ एवास्य नियमादर्थान्तरानुपस्थितिरेवेत्याहुः । **तथा** । प्रयुज्यमानतावच्छेदकरूपेण । **न प्रयुक्तं** कविसंप्रदायनिषिद्धप्रयोगवत् । तेनैतत्कविप्रयुक्तत्वेन नाप्रयुक्तत्वासिद्धिः । नाप्यसमर्थे हन्त्यादावतिव्याप्तिः । तेषां पद्धतीत्यादौ प्रयोगानुमत्या सामान्यतो निषेधाभावात् । नापि नपुंसकत्वेनाप्रयुक्ते घटादौ च्युतसंस्कृत्यादौ चातिव्याप्तिः । तेषामनुशासनसिद्धत्वाभावात् । कविभिरिति व्याकरणस्याप्युपलक्षणम् । तेन व्याकरणनिषिद्धस्य घृधातोर्घृतघर्मघृणाभ्योऽन्यत्र प्रयोगस्य वचेश्चान्तौ प्रयोगस्य च संग्रहः । एवं च लडहादीनां प्राकृतादिशब्दानां संस्कृतकाव्यनिवेशेऽयमेव दोष इति बोध्यम् । **यथाऽयमिति** । दारुणाचारः । क्रूरकर्मा । **पदार्थोपस्थितिविलम्ब इति** । तद्बीजं स्वप्रयुक्तत्वेन शक्तिस्मरणविलम्ब इत्याहुः । **मुख्यार्थविच्छित्तिः** । तत्प्रतीतावत्यन्तविलम्बः ।

---

१ क. इत्याम्ना° । २ क. यदर्थं । ३ क. °भिर्यन्न प्र° । ४ क. °ल्पार्थेन° । ५ ग. त्वम् । यत्तु आत्मनेपदिगणपाठादेवाऽऽत्मनेपदे सिद्धे पुनस्तद्विधानं नियमाय । नियमश्चाशीरर्थं आत्मनेपदमेव न परस्मैपदमित्याकारः । एवं चार्थान्तरेऽनियम इति चिन्त्यमिदमिति । तन्न । महाभाष्यादिग्रन्थविरोधात् । तथा ।

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः[1]।
सुरस्रोतस्विनीमेष हन्ति संप्रति सादरम् ॥ १४५ ॥

अत्र हन्तीति गमनार्थम् ॥

निहतार्थं ( यदुभयार्थमप्रसिद्धेऽर्थे प्रयुक्तम् ), यथा,

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन।
मुग्धा साध्वसतरला विलोक्य परिरभ्य[2] चुम्बिता सहसा ॥ १४६ ॥

---

यथा हनधातोः पद्धतिजघनजङ्घादिषु पदादिपदोपसंदानेन मार्गाद्यर्थोपसंदानेन वा गतौ सामर्थ्यम्, न पुनरविशिष्टस्य। यथा—तीर्थान्तरे०।

अस्यार्थानुपस्थितिर्दूषकताबीजमिति नित्यता।

निहतार्थे निहतः प्रसिद्धेनार्थेनाप्रसिद्धतया व्यवहितो विवक्षितोऽर्थो यस्य तत्। गूढेऽप्यर्थे क्वचित्प्रयोगान्नाप्रयुक्तसंकरः। उदाहरणम्—यावक०।

---

न पुनरविशिष्टस्येति। एवं चोपसंदानं विनाऽनुशिष्टार्थाबोधकत्वमसमर्थत्वम्। तीर्थेति। सत्कृतिः सत्फलजनकं पुण्यम्। सुरस्रोतस्विनीम्। गंगाम्। सुरेत्यादिनाऽवश्यगम्यत्वम्। हन्ति। गच्छति। अस्यार्थानुपस्थितिरिति। अत एव न निहतार्थसंकरः। तत्र विलम्बेन प्रकृतार्थोपस्थितेः। नाप्यवाचकसंकरः। तस्योपसंदानेनाप्यबोधकत्वात्। अस्य नित्यदोषत्वं चिन्त्यम्। यस्योपसंदानं विनाऽपि गमनार्थबोधस्तं प्रत्यदोषत्वादित्येके। तस्यापि प्रसिद्धपरित्यागेनेदृशप्रयोगे प्रयोजनानुसंधानव्यग्रत्वाद्विलम्ब एव दुष्टिबीजमिति तत्त्वम्। अत्र हन्तेः पदैकदेशत्वेऽपि प्रकृतिगतत्वात्पददोषता बोध्या। प्रसिद्धेनेति। अविवक्षितेनेति शेषः। अविवक्षितप्रसिद्धार्थप्रत्ययव्यवधानेन विवक्षिताप्रसिद्धार्थबोधकत्वमिति फलितम्। अविवक्षितेत्युपादानान्नाप्रसिद्धव्यञ्जकनानार्थेऽतिप्रसङ्गः। सामग्रीसाद्गुण्यात्प्रागप्रसिद्धार्थप्रतिपत्तौ नायं दोष इति तृतीयान्तम्। प्रसिद्धिश्च भूरिप्रयोगाहितपटुतरसंस्कारविषयत्वम्। तेन हि तस्य द्रुतमुपस्थित्या तदितरतिरोधानम्। एवं च योगमात्राश्रयेण कुमुदादौ प्रयुक्ते पङ्कजपदेऽयमेव दोषः। रूढ्यर्थस्य द्रुतमुपस्थितेः। लक्षणया प्रयुक्ते त्वसति प्रयोजने नेयार्थत्वं दोषः। सति त्वदोष एवेति दिक्[3]। यावकेति। यावकोऽलक्तकः। तद्रसार्द्रपादकृतप्रहारेण शोणिता आरक्तीकृताः कचा यस्य तादृशेन दयितेन रुधिरभ्रमात्साध्वसेन भयेन तरला व्याकुलाऽत एव मुग्धा विलोक्येयं साध्वसवतीति ज्ञात्वा, सहसा तत्क्षणम्। विलम्बे नायिकाया भ्रमोच्छेदसंभवात्। सहसाऽप्रसाद्यैवेत्यर्थ इत्यन्ये।

---

१ क. सत्क्रियः। २ क. परिचुम्ब°। ३ ग. °क्कारः। तेन।

अत्र शोणितशब्दस्य रुधिरलक्षणेनार्थेनोज्ज्वलीकृतत्वरूपोऽर्थो व्यवधीयते।

अनुचितार्थं यथा,

तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या।
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः॥१४७॥

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम्।

निरर्थकं पादपूरणमात्रप्रयोजनं चादिपदम्। यथा,

---

अत्र शोणितपदम्। अस्य रुधिरे प्रसिद्धिः। अप्रसिद्धिस्तूज्ज्वलीकृतत्वरूपे विवक्षितार्थे। दूषकताबीजं प्रसिद्धस्यैव द्रागुपस्थित्या विवक्षितस्य विलम्बोपस्थितिः। अतो यमकादावदोषत्वम्। तत्रोपस्थितिविलम्बस्यापि सहृदयसंमतत्वेनाविलम्बानुद्देश्यत्वात्।

अनुचितार्थमनुचितो विवक्षितार्थतिरस्कारकोऽर्थो यस्य तत्। यथा—**तपस्वि०**।

अत्र शौर्ये प्रतिपाद्ये पदान्तरानपेक्षमेव पशुपदं कातरतामभिव्यनक्ति। तदर्थे तस्या दर्शनात्। विरुद्धमतिकृत्तु पदान्तरसापेक्षं तथेति तस्माद्भेदः। दूषकताबीजं च विवक्षिततिरस्कारकार्थोपस्थितिः। अतोऽस्य नित्यदोषत्वम्।

निरर्थकमविवक्षितार्थकम्। वृत्तनिर्वाहमात्रप्रयोजनकमिति यावत्। अत एव वाक्यालंकारभूतं यमकादिनिर्वाहकं च खल्वादिपदमदुष्टम्। तच्च निपातरूपं चादिपदं बहुवचनादि

---

(गीतिश्छन्दः)। **उज्ज्वलीकृतत्वेति**। शोणितशब्दो नानार्थः। यद्वा शोणशब्दात्करोतिण्यन्तात् क्त उज्ज्वलीकृतत्वरूपार्थबोधो विलम्बेन। रूढ्या रुधिरस्यैव बोधात्। **विलम्ब्येति**। द्राग्रुधिरोपस्थितौ तदन्वयानुपपत्तिप्रतिसंधानपूर्विका प्रकृतार्थोपस्थितिरिति विलम्ब इति भावः। **तिरस्कारकः**। तिरस्कारकधर्मव्यञ्जकः। **तपस्विभिरिति**। या सुचिरेणेत्यनेन तैरपि यों क्लेशलभ्येति सूचितम्। सत्रिभिः। याज्ञिकैः। यत्नत इष्यते। न तु प्राप्यते। पशुतां वध्यतां प्राप्ता इत्यर्थः। [वंशस्थं वृत्तम्]। **पदान्तरानपेक्षमिति**। प्रकृते तदन्वितार्थबोधकपदान्तराभावादिति भावः। **तदर्थे**। पशुपदार्थे। **तस्याः**। कातरतायाः। अस्य नित्यदोषत्वं चिन्त्यम्। तदर्थेऽगृहीतकातरत्वस्य तत्तिरस्कारकोपस्थित्यभावादित्याहुः। **वृत्तनिर्वाहेति**। वृत्तन्यूनतापरिहारेत्यर्थः। मात्रपदेन समुच्चयार्थकचादिव्युदासः। **प्रयोजनकमिति**। 'च ह वै पादपूरणे' इत्यादिना तत्प्रयोजनकत्वेनोक्तमित्यर्थः। अत एव नाधिकपदत्वेन संकरः। तदर्थस्याविवक्षितत्वेऽपि निष्प्रयोजनत्वात्। **बहुवचनादीति**। तच्च पदैकदेशदोषनिरूपण उदाहरिष्यते दशामिति। ननु तन्न पूरणमात्रा-

---

१ क. °तरू° । ग. °तरूपार्थो° । २ क. ग. °कं पू° । ३ क. विलम्ब्येति उद्द्योतसंमतः पाठः । ४ ग. याऽऽल° । ५ ग. °ति । अत । ६ ग. तस्य निष्प्रयोजनविषयत्वात् ।

उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि ।
अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन ॥ १४८ ॥

अत्र हिशब्दः ।

अवाचकं यथा,

अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।

---

च । उदाहरणम्—**उत्फुल्ल०** ।

अत्र हिपदम् । अर्थस्याविवक्षितत्वात् । दूषकताबीजं त्वस्य चिन्त्यताम् । तद्धि न तावदर्थानुपस्थितिः । पदान्तरैरेव यावदभिधेयोपस्थापनात् । न चैवमवाचकादौ । तत्र तदभिधेयस्य वाक्यार्थघटकस्य पदान्तरैरनुपस्थापनात् । नापि प्रतिकूलवर्णवद्रसविरोधिता । चादीनां सार्थकत्वस्थलेऽपि रसविरोधित्वप्रसङ्गात्स्वरूपस्य ताद्रूप्यादिति । उच्यते—निरर्थकं प्रयुञ्जानस्य वचसि सहृदयानां वैमुख्यं दूषकताबीजम् । प्रयोजनानुसंधानव्यग्रता वा ।

अवाचकं विवक्षितधर्मविशिष्टस्य विवक्षितधर्मिणः क्वापि न वाचकं यत्तदित्यर्थः । अत एवासमर्थाद्भेदः । तस्य क्वचिच्छक्तिस्वीकारात् । एतादृशविशिष्टविरहश्च क्वचिद्धर्मिणि शक्तावपि विवक्षिते प्रकारे शक्तिविरहात् । क्वचित्प्रकारे शक्तावपि धर्मिणि शक्तिविरहात् । क्वचित्प्रकारधर्मिणोरुभयोरपि शक्त्यभावात् । तत्राऽऽद्यं द्विधा—अपेक्षितयोगमनपेक्षितयोगं च । तयोराद्यं यथा—**अवन्ध्य०** ।

---

र्थम् । अपि तु संबन्धार्थकमपीति चेन्न । दृशोरिति द्विवचनेनापि संबन्धप्रतीतिसंभवादित्याहुः । केचित्तु सप्रयोजनत्वे सति प्रकृतार्थोपकारकार्थमात्रकोन्यत्वं विवक्षितम् । तद्धि निरर्थकानुपयुक्तार्थसाधारणमित्याहुः । **उत्फुल्लेति** । ( नागानन्दे प्रथमाङ्के मलयवत्या नायिकाया गौरीप्रार्थनरूपं गानमिदम् ) । विकसितकमलकेसरैसंलग्नो यः परागस्तद्वद्गौरद्युते । अत्रेदं विशेषणमपुष्टम् । भगवति सकलैश्वर्यसंपन्ने । तेनाभिवाञ्छितदानसामर्थ्यं ध्वन्यते । अत्र हि प्रेति निरर्थकम् । प्रेति प्रसिद्धिरूपार्थान्तरोपस्थापकं च । युष्मदिति विरुद्धम् । पूर्वमेकत्वविशिष्टायाः संबोध्यत्वात् । (आर्या छन्दः) **अर्थस्येति** । अत्र हिर्न हेतुत्वे । अनन्वयात् । नाप्यवधारणे । स्तोतव्यापकर्षापत्तेः । न च क्रियान्वयि तत् । लोटा निर्देश्येऽवधारणायोगादित्याहुः । हेः पदान्तरसापेक्षत्वनियमेन पदत्वाभावात्कथं पददोषत्वमिति चेद्विभक्त्याद्यन्यस्यैवात्र पदत्वेन ग्रहणाददोषः । प्रेत्यप्यत्र निरर्थकम् । तदर्थविवक्षायां तु प्रसिद्धिलाभेनावाचकम् । एवं विनश्यतीत्यादौ वीत्यादिकमप्यनर्थकमिति दिक् । **व्यग्रता वेति** । तस्यां च वाक्यार्थबोधे विलम्बः स्यादिति भावः । **अवन्ध्येति** । (किरातकाव्ये प्रथमसर्गे) दुर्योधननिग्रहाय युधिष्ठिरमुद्बोधयन्त्या द्रौपद्या इयमुक्तिः । सफलकोपस्येत्यर्थः । तेन शूरस्येति फलितम् । आपदां दारिद्र्यरूपाणां विहन्तुः । तेन दातुरित्यर्थः । स्वयमेव । विनैव व्यापारम् । देहिनः । शत्रुमित्र-

---

१ क. काव्यत्वं । २ ग. °रल° ।

**अमर्षशून्येन जनस्य जन्तुना न जातहार्देन चं विद्विषादरः॥ १४९ ॥**
**अत्र जन्तुपदमदातर्यर्थे विवक्षितम्, तत्रं च नाभिधायकम् ।**
**यथा वा,**

**हा धिक्सा किल तामसी शशिमुखी दृष्टा मया यत्र सा**
**तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितम् ।**
**किं कुर्मः कुशले सदैव विधुरो धाता न चेत्तत्कथं**
**तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥१५०॥**

---

अत्र पूर्वार्धे दारिद्र्यरूपापद्विघातकतया दातृत्वं विवक्षितमिति द्वितीयार्धे तद्वैपरीत्य-प्रदर्शकं जन्तुपदमदातरि प्रयुक्तम् । तत्र च जायत इति योगमपेक्ष्य तस्य शक्तत्वेऽपि न विवक्षितया अदातृतया प्रकारेण सेत्यवाचकम् ।

अनपेक्षितयोगं यथा—**हा धिक्सा०** ।

---

रूपाः । तादृशस्यैव भयलोभाक्रान्तत्वात् । देहिन उपचययुता अपि वश्या भवन्ति किं पुनर्व-क्तव्यमितर इति सूचयितुं वा तथोक्तं न तु शरीरिण इति । तत्र व्यतिरेकमुखेनार्थन्तरन्यासः— यतः । अमर्षशून्येन । अवन्ध्यामर्षशून्येन भवादृशा । विद्विषा । विशिष्टद्वेषं कुर्वताऽपि न दरो भयमित्यर्थः । जातहार्देन । जातस्नेहेनापि । जन्तुना । अदात्राऽऽदरोऽपि न । जनस्यापि दरादरौ न, किं पुनर्वक्तव्यं देहिन इति सूचयितुं भग्नप्रक्रममपि जनपदमुपात्तम् । तत्र भयादरयोरभावकथनेन भङ्ग्यन्तरेणावश्यत्वाभाव एवोक्त इति बोध्यम् । (वंशस्थं वृत्तम्) ।

**तस्य शक्तिमत्त्वेऽपीति** । तदर्थनिरूपितशक्तिमत्त्वेऽपीत्यर्थः । **अवाचकमिति** । योजनाद्यभावान्न तदर्थलक्षकमपीति भावः । अत एव रामोऽस्मीत्यादौ न दोषः । विवक्षि-तसकलदुःखभाजनत्वादिना विवक्षितधर्मिणि लक्षणाङ्गीकारात् । लक्षणे वाचकत्वं शक्तिल-क्षणान्यतरसंबन्धेन बोधकत्वं विवक्षितम् । रामोऽसावित्यादौ लक्षणाद्यनवतारकाले दुष्टत्व-मिष्टमेव । एवं जन्तुपदमपि सर्वप्रकारानुपास्यत्वादिप्रतीतिरूपप्रयोजनानुसंधानेनादातृत्वादिला-क्षणिकं यदि, तदा तदप्यदुष्टमेवेत्याहुः । **हा धिगिति** । रात्रौ स्वप्न उर्वशीं दृष्टवतः पुरूरवस उक्तिरियम् । निर्वेदातिशयसूचकं हा धिगिति । अत्र हेतुः । यत्र रात्रौ साऽ-निर्वचनीयरमणीयगुणा शश्येव मुखं यस्या ईदृशी दृष्टा सा किल तामसी तमोयुक्ता कल्पितेति लिङ्गविपरिणामेन संबन्धः। धात्रेति विभक्तिविपरिणामेन । किलेत्यरुचौ । शशिनः समुद्भवे पदार्थदर्शनयोग्यतायां च तमोव्यवहारस्यायोग्यत्वात् । एवं तद्विश्लेषरुजा व्याधि-नाऽन्धकारितं विषयाग्राहकम् । अत एव दग्धम् । दुःखदत्वान्निन्द्यमिदमनुभूयमानं दिनं प्रका-

---

१ क. ग. न । २ ग. °त्र ना° । ३ क. °द्विश्लेषरजोऽन्ध° । ४ शक्तिमत्त्वेपीत्युद्योतसम्मतः पाठः । ५ क. °रेण ब° ।

**अत्र दिनमिति प्रकाशमयमित्यर्थेऽवाचकम् ।**
**यच्चोपसर्गसंसर्गादर्थान्तरगतम्, यथा,**

**जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः**
**प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।**
**भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-**
**संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः॥१५१॥**

---

अत्र दिनपदं प्रकाशमयमित्यर्थे विवक्षितम् । तामसीत्यनेन लब्धस्य तमोमयत्वस्य वैपरीत्याभिधानायोपादानात् । तत्र च धर्मिणि योगमनपेक्ष्यैव रूढ्या दिनत्वेन शक्तम्, न पुनः प्रकाशमयत्वेनेत्यवाचकम् । द्वितीयं यथा—

जलं जलधरे क्षारमयं वर्षति वारिदः ।
इदं बृंहितमश्वानां ककुद्मानेष हेषते ॥

अत्र जलधरशब्दस्य जैलधारकत्वे प्रकारे सामर्थ्येऽपि न समुद्रे धर्मिणि सामर्थ्यम् । यद्यपि योगशक्तिस्तत्राप्यस्त्येव तथाऽपि रूढ्या प्रतिबन्धादनस्तिकल्पैव ।

तृतीयं तूपसर्गसंसर्गादर्थान्तरगतमन्यथा च । तयोराद्यं यथा—**जङ्घाकाण्डो०** ।

---

शमयं कल्पितमित्यप्यनुचितम् । विषयाग्राहकस्य तथात्वायोगात् । ईदृशानुचितकारिणि किं कुर्म इति साकूतोक्तिः । धाता कुशले इष्टे सदैव विधुरः प्रतिकूलः । तत्रोपपत्तिमाह—चेद्यदि । न विधुर इत्यनुषज्यते । तत्तदा जीवलोको जीवनाखिलकालः । मे मम तादृक्तन्नायिकादर्शनजनकयामिनीमयः कथं न भवति । ( शार्दूलविक्रीडितं छन्दः ) । दिनमिति पाठे दिनपदमित्यर्थः । दिनत्वं रव्यवच्छिन्नकालत्वम् । **रूढ्या** । मेघविषया । ( जलमिति । अयं वारिदो मेघो जलधरे समुद्रे क्षारं जलं वर्षति । अश्वानामिदं बृंहितं शब्द एष ककुद्मान्वृषभो हेषते शब्दं करोति । अत्र 'जलधरः बृंहितं हेषते' इत्येतेऽवाचकाः । ) **तृतीयं त्विति** । तृतीयभेदरूपमवाचकं पदमित्यर्थः । **अर्थान्तरगतम्** । अर्थान्तरवाचकम् । **जङ्घाकाण्डेति** । ( बाणभट्टकृते चण्डीशतके पद्यमिदम् ) जङ्घाकाण्डमेवोरुर्महान्नालो यस्य । जङ्घाकाण्डम्, ऊरू च नालो यत्रेति वा । नखकिरणा एव लसन्ति केसराणि तेषामाल्या पङ्क्त्या करालो नतोन्नतः प्रत्यग्रस्य नूतनस्य तत्कालदत्तस्यालक्तकस्याऽऽभायाः प्रसरा एव किसलयानि यस्य । मञ्जुमञ्जीरः पादभूषणमेव भृङ्गो यस्य । भर्तुः शिवस्य नृत्तस्यानुकारे ।

'पदार्थाभिनयो नृत्यं नृत्तं ताललयाश्रितम् ' ।

स्वतनुरूपस्वच्छलावण्यवापीजन्यकमलशोभाम् । जलस्थानीयं लावण्यम् । अत एवाग्रेऽम्भोजेत्युक्तिः । विदधत् । विशेषेण धारयत् । अभिनव इदं प्रथमतया नृत्यप्रवृत्तो दण्डपादः ।

' प्रसह्योर्ध्वीकृतः पादो दण्डपादोऽभिधीयते '

---

१ क. ग. °त्यत्रार्थे ° । २ क. °गतं तदप्यवाचकम् । ३ क. °जलाधा° ।

**अत्र दधदित्यर्थे[1] विदधदिति ।**
**त्रिधेति व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वात्[2] । यथा,**
**साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते ।**

---

अत्र विदधातिर्धारणे प्रयुक्तो न च धारणे धारणत्वे वा समर्थः । विसंसर्गेण[3] करणे नियमितशक्तित्वात् ।

अन्यस्तु वाक्यनिष्ठावाचकतायां 'प्राभ्रभ्राड्–' इत्यादावुदाहरिष्यते । तदेवं निर्दूषणे प्रकाशे यत् 'असमर्थं धर्मधर्मिणोर्द्वयोरपि शक्तिविरहः । अवाचके तु धर्ममात्रे सः । विदधदित्युदाहरणं त्ववाचकप्रकरणमध्येऽसमर्थस्यैव' इति प्रलपितं तद्वाक्यावाचकत्वोदाहरणानवलोकननिबन्धनं संदर्भविरुद्धं चेत्यनादेयम् । दूषकताबीजं तु विवक्षितार्थानुपस्थितिरिति नित्य एवायम् ।

त्रिधाऽश्लीलमिति । अश्रीरस्यास्तीत्यर्थे सिध्मादित्वाल्लच्प्रत्ययः । कपिलकादित्वाद्रेफस्य लत्वम् । तथा च कान्त्यभाववदिति पर्यवसन्नम् । कान्त्यभावश्चातिप्रसक्त इति व्रीडाजुगुप्सामङ्गलव्यक्तिहेतुकस्तद्विशेषो वक्तव्यः । न चैतत्त्रयेऽनतिप्रसक्तमनुगतं रूपमस्तीति व्रीडादिहेतुकाकान्तिमत्सु नानार्थोऽयमश्लीलशब्द इत्यर्थः । तच्च प्रत्येकं त्रिविधम् । क्वचिद्विवक्षितस्यैवार्थस्य व्रीडाद्यालम्बनत्वात् । क्वचिदविवक्षितस्य[4] निर्वाहिणस्तथात्वात् । क्वचित्तादृशार्थस्यानिर्वाहिणोऽपि स्मृतिमात्रहेतुत्वात् । एषु त्रिषु कश्चित्किंचिदुदाह्रियते । तत्र व्रीडाव्यक्तावर्थान्तरस्य तथाभावो यथा—**साधनं०** ।

---

इति निरुक्तः । जयति सर्वोत्कर्षेण वर्तत इत्यर्थः । ( स्रग्धरा छन्दः । ) उपमानधर्माम्भोजशोभाया दण्डपाद आरोपान्निदर्शनाऽत्रालंकारः । कविकल्पितोपमानेनापि बहुश उपमादर्शनात् । तदुपपादकं जङ्घाकाण्डेत्यादि रूपकचतुष्टयमिति बोध्यम् । **नियमितशक्तित्वादिति** । एतेन धारणं व्यङ्ग्यमिति परास्तम् । अन्वय्यर्थान्तरं प्रतिपादयत एव पदस्य व्यञ्जकत्वादित्याहुः । **वाक्यावाचकत्वोदाहरणेति** । वाक्यस्यावाचकत्वे यदुदाहरणेत्यर्थः । संकोचादिबोधकनिद्रादिपदं हि तत् । **अतिप्रसक्त इति** । ग्राम्यादिष्विति भावः । **व्रीडादिव्यक्तिहेतुकेति** । व्रीडाद्यालम्बनविभावादिभूतासभ्यार्थोपस्थितिद्वारेत्यर्थः । ग्राम्यं च नासभ्यार्थबोधकं किं तु स्वत एव शोभारहितमिति न तत्संकरः । केचित्तु व्रीडादिशब्दस्तद्धेतुपरः । उदाहरणेषु व्रीडाव्यञ्जकत्वासंभवात् । वराङ्ग–अपान–वायु–मरणज्ञानेन प्रकृताननुगुणव्रीडादेरुत्पादनात् । व्यक्तिश्च बोधकत्वम् । जुगुप्साहेत्वभिधायकपर्दते–इत्यादीनां तद्व्यञ्जकत्वाच्चेत्याहुः । **अविवक्षितस्येति** । अर्थस्येत्यनुषज्यते । **निर्वाहिण इति** । प्रकृतार्थेऽन्वयिन[5] इत्यर्थः । **अर्थान्तरस्येति** । निर्वाहिण इति शेषः । **साधनमिति** । साधनं सैन्यं पुरुषलिङ्गं च । धीः शत्रुपराभव-

---

१ क. °त्यत्रार्थे । २ ग. °लरूपव्य° । ३ क. स्वसंसर्गेण । ४ क. °क्षितार्थस्यार्थान्तरस्य । ५ ग. °तार्थान्वयिन इत्यर्थः । साधनमिति । सैन्यं ।

तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥ १५२ ॥

लीलातामरसाहतोऽन्य[1]वनितानिःशङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तस्य[2] सा
भ्रान्त्या धूर्ततयाऽथवा नतिमृते तेनानिशं चुम्बिता ॥ १५३ ॥

मृदुपवनविभिन्नो मत्प्रियाया विनाशा-
द्घनरुचिरकलापो निःसपत्नो[3]ऽद्य जातः ।
रतिवि[4]गलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्हीं ॥ १५४ ॥

**एषु साधन—वायु–विनाशशब्दा व्रीडादिव्यञ्जकाः ॥**

---

अत्र सैन्यार्थकस्य साधनशब्दस्य पुंव्यञ्जनमर्थान्तरम् ।

जुगुप्साव्यक्तौ तथाभूतार्थस्मृतिमात्रहेतुत्वं यथा—**लीला०** ।

अत्र वायुशब्दोऽपानवायुं स्मारयति । न तु तदर्थतया वाक्यमुपपद्येत ।

अमङ्गलव्यक्तौ विवक्षितस्यैवार्थस्य तथात्वं यथा—**मृदुपव०** ।

अत्र विनाशशब्दस्य विवक्षित एवार्थोऽमङ्गलः ।

---

नयादिविषया, सुरतविशेषविषया च । अरालिताम् । शत्रुदर्शने कोपावेशाद्वक्रितां, कामिनीदर्शने मन्मथपीडासहतया वक्रितां च[6] । अन्या । सेना, नायिका च । **पुंव्यञ्जनमिति** । इदं च निर्वाहि । **लीलेति** । ( अमरुशतके पद्यमिदम् ) । अन्य[7]दयितया निःशङ्कं दष्टोऽधरो यस्य । निःशङ्कमित्यतिस्पष्टतां व्रणस्य ध्वनयाति । लीलातामरसेनाऽऽहतोऽर्थात्स्ववनितया । इवेन मीलनस्य कपटकृतत्वम् । ततो भ्रान्त्या तदीयधूर्तत्वानभिज्ञतया अत एव मुग्धा वायुं ददती स्थिता । अथानन्तरं तेन[9] भ्रान्त्या धूर्ततया वा नतिमृते नतिं विना अनिशं निरन्तरं बहुकालमिति यावच्चुम्बिता च । वाशब्दश्चार्थे । तेनाऽऽलिङ्गनसंग्रहः । ऋतेयोगेऽन्येष्वपीति द्वितीया । यद्वा भ्रान्त्या चुम्बिता अस्याः कोपोऽपगत इति भ्रान्तिः । धूर्तता तु कोपानपगमेऽप्येनां चुम्बेयमिति । यद्वा नायिकाभ्रान्त्याऽथ वा स्वस्य धूर्ततयेत्यन्वयः । यद्यप्युभयोरपि प्रयोजकत्वाद्वाशब्दोऽनुचितस्तथाऽप्यन्यतरस्य प्राधान्याविवक्षया तदुपपत्तिः । मुग्धा सुन्दरी मूढा वा । [ शार्दूलविक्रीडितं छन्दः ] । **मृदुपवनेति** । विक्रमोर्वशीये विरहिणः पुरूरवस उक्तिरियम् । विभिन्नः

---

१ क. न्यदयिता° । २ क. तत्र । ३ ग. °त्नोऽस्य जा° । ४ ग. विलुलित° । ५ क. यथा° । ६ ग. च । पुंव्य° । ७ ग. °न्यस्य द° । ८ क. र्थाद्वनि° । ९ ग. °न धूर्ततया नति° ।

**संदिग्धं यथा-**

**आलिङ्गितस्तत्रभवान्संपराये जयश्रिया ।**
**आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥ १५५ ॥**

---

एवं त्रिषु भिन्नभिन्नप्रकारोदाहरणेन प्रत्येकं त्रिप्रकारकत्वमूहनीयम् । न्यायसाम्यात् । दूषकताबीजं त्वनुभवसिद्धरसापकर्षकताद्दशार्थोपस्थितिः । नीरसे तु चमत्कारापकर्षकत्वं तस्याः । अथ वा ताद्दशार्थोपस्थित्या श्रोतुर्वैमुख्यं तद्बीजम् । अतः शमकथायां दोषत्वाभावः । ताद्दशोपस्थितेः शमपोषकत्वात् । भाव्यमङ्गलादिसूचने कामशास्त्रस्थितौ च न दोषत्वम् । वैमुख्याभावात् । शिवलिङ्गभगिनीब्रह्माण्डादिशब्देषु तु समुन्नीतगुप्तलक्षितेष्वसभ्यार्थानुपस्थितेः ।

संदिग्धं विवक्षिताविवक्षितोभयार्थोपस्थापनानुकूलस्वरूपद्वयसंदेहविषयः । यथा— **आलिङ्गित०** ।

---

संयोगध्वंसवान् । ईषल्लाभाय मृद्विति । घनो निबिडो रुचिरः सुन्दरः कलापो मयूरपिच्छम् । सपत्नः शत्रुः । अद्य प्रियारहिते जगति । विगलितेत्युक्तं न तु विभिन्न इति । तेन रामणीयकतातिशयः । कलापापेक्षया व्यतिरेकश्च । हरेत् । अनुरञ्जयेत् । चन्द्रकसाम्याय कुसुमसनाथतोक्तिः । बर्ह इत्यपपाठः । ‘ पिच्छबर्हे नपुंसके ’ इत्यमरात् । पौनरुक्त्यापाताच्च । तस्माद्बर्हीति पाठः । यद्यपि कलापशब्दो मयूरपिच्छे शक्तस्तथा च बर्हीत्यपुष्टं, तथाऽपि 'कलापो भूषणे बर्हे' इति कोशाद्भूषणवाचिग्रहणं मा भूदिति तदुक्तिः । ( मालिनी छन्दः ) **वैमुख्यमिति** । असभ्यार्थोपस्थितिर्हि श्रोत्रियसमूहे चण्डालागमनमिव वैरस्यमापादयतीति भावः । **ब्रह्माण्डादीति** । आदिना सुभगापरिग्रहः । **समुन्नीतेत्यादि** । अविनीतानादिप्रयोगयोगित्वे सति भगवदादिसंबन्धित्वं समुन्नीतत्वम् । इदमेव संवीतमित्युच्यते । शिवलिङ्गशब्दस्य जगदन्तर्यामिभगवति प्रसिद्धेर्व्रीडाजनकार्थाप्रतीतिरेव । तत्त्वे सति रूढ्यर्थातिरिक्ताश्लीलार्थस्य योगेनोपस्थापकत्वं गुप्तत्वम् । अत्र हि रूढ्यर्थस्य झटित्युपस्थित्या तद्भावनया योगार्थस्य तिरोधानम् । यथा भगिनीत्यत्र । ग्राम्यस्मृतिजनकैकदेशवत्त्वं लक्षितत्वम् । ब्रह्माण्डादिपदं हि समुदायरूढ्या झटिति सभ्यमर्थमेवोपस्थापयति न त्ववयवेनासभ्यमिति न दोषः । **असभ्यार्थानुपस्थितेरिति** । एवं च तेष्वपि नायं दोष इति भावः । **स्वरूपद्वयसंदेहेति** । वाक्यदोषे सुरालयोल्लासेत्यादौ मार्गणभूतिपदयोःस्वरूपनिश्चयेऽपि संदिग्धत्वेन तदव्याप्तेश्चिन्त्यमिदम् । तस्मात्तात्पर्यसंदेहविषयीभूतार्थद्वयोपस्थापकं संदिग्धमिति वक्तुमुचितम् । **आलिङ्गित इति** । अनेनानायासजयं सूचयति । संपराये । युद्धे । ( जयश्रिया आलिङ्गितस्तत्रभवान्पूज्यस्त्वमाशीःपरम्परामाशीर्वादप-

---

१ क. संवीत° । २ क. °लापो मयू° । ३ ग. पुस्तके अविगीतेति पाठ. । ४ ग. पुस्तके समाप्तम् ।

अत्र वन्द्यां किं हठहृतमहिलायाम्, किं वा नमस्यामिति संदेहः ।

अप्रतीतं ( यत्केवले शास्त्रे प्रसिद्धम् ) । यथा,

सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः ।
विधीयमानमप्येतन्न भवेत्कर्म बन्धनम् ॥ १५६ ॥

अत्राऽऽशयशब्दो वासनापर्यायो योगशास्त्रादावेव प्रसिद्धः ।

ग्राम्यं ( यत्केवले लोके स्थितम् ) । यथा,

---

अत्र वन्द्यामिति पदं बन्दीशब्दे सप्तम्यन्तं वन्द्याशब्दे द्वितीयान्तं वेति संदेहः । प्रथमे हठगृहीतमहिलायां कृपां कुर्विति, द्वितीये नमस्यामाशीःपरम्परामित्यर्थोपपत्तौ साधकबाधकप्रमाणाभावात् । दूषकताबीजमुद्देश्यनिश्चयाभावः । अतो यत्र संदेह एवोद्देश्यस्तत्र, यत्र च वाच्यादिमहिम्ना प्रकरणादिवशेन वा निश्चयस्तत्र चादोषत्वम् ।

अप्रतीतमिति मन्त्रोऽल्पार्थतया शब्दानुशासनातिरिक्तशास्त्रमात्रप्रसिद्धमित्यर्थः । अत एवाप्रयुक्ताद्भेदः । तस्यान्यत्रापि प्रसिद्धेः । उदाहरणम्—सम्यग्ज्ञान० ।

अत्राऽऽशयशब्दो मिथ्याज्ञानजन्यवासनार्थः । स चैवं योगशास्त्र एव प्रसिद्धः । एवं शास्त्रान्तरप्रसिद्धमप्यूह्यम् । दूषकताबीजं तच्छास्त्रानभिज्ञस्यार्थानुपस्थितिः । अत एव यत्र तच्छास्त्राभिज्ञ एव प्रतिपाद्यः स्वयमेव वा परामर्शस्तत्र न दोषत्वम् । प्रत्युत व्युत्पत्तिसूचकतया गुणत्वम् ।

ग्राम्यं 'ग्रामे केवले लोके प्रसिद्धं न तु शास्त्रेऽपि । अत एवाप्रयुक्ताद्भेदः' इत्येके । अपरे तु 'देश्यमनेन संगृह्यते । कटिशब्दादयस्तु नोदाहर्तव्याः । किं तु गल्लभल्लादयः' इत्याहुः । तदुभयमप्यसत् । कटिशब्दस्य शास्त्रेऽपि प्रसिद्धस्य व्युत्पन्नस्य चोदाहरणत्वेन

---

रम्परां [ अर्थाज्जितशत्रुप्रयुक्तां ] कर्णे कृत्वाऽऽकर्ण्य कृपां कुरु ) । **संशयः** । वक्तृतात्पर्यसंशयो बवयोरभेदबुद्धिमूलकः । वन्द्यामित्यानुपूर्व्या उभयसाधारणत्वेन विनिगमनाविरहादर्थद्वयस्मृतौ वक्तृतात्पर्यसंशय इति भावः । अत एव विधौ वक्र इत्यादौ श्लेषेऽर्थद्वयोपस्थितिः । **हठगृहीतेति** । बलात्कारेण स्वपत्नीकृतेत्यर्थः । **शब्दानुशासनेति** । व्याकरणकोशादिसकलेत्यर्थः । तेन व्याकरणमात्रप्रसिद्धटिघुभादिसंग्रहः । **शास्त्रमात्रेति** । न तु लोककाव्यादीत्यर्थः । **अन्यत्रापि** । शब्दानुशासने लोके च । **सम्यगिति** । सम्यग्ज्ञानं तत्त्वज्ञानं तदेव महज्ज्योतिः सकलाज्ञाननिवारकत्वान्मोक्षजनकत्वाच्च । आशयो मिथ्याज्ञानजनितः संस्कारविशेषः स गलितो यस्य तत्तासेविनः । तादृशस्यैतद्विहितनिषिद्धं कर्म विधीयमानमपि क्रियमाणमपि न बन्धनं कृघजनकं संसारप्रयोजकमित्यर्थः । **तच्छास्त्रानभिज्ञस्येति** । असमर्थात्तु सर्वेषां तदनुपस्थितिरिति ततो भेद इति

---

१ क. किं न° । २ ग. °तिगलि° । ३ ग. बन्धकम् । ४ क. °परपर्या° । ५ क ग. प्रयुक्तः । ६ क. 'म्यं केव° । ७ संशय इति पाठ उद्योतसंमतः । ८ क. °व प° ।

राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥ १५७ ॥

अत्र कटिरिति ।

नेयार्थं

("निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।
क्रियन्ते सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तितः" ॥

इति यन्निषिद्धं लाक्षणिकम्) । यथा,

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि[3] चपेटापातनातिथिम् ॥ १५८ ॥

---

दर्शितत्वात् । तस्मात्[1]सर्वलोकप्रसिद्धम् । तस्मिन्देशे सर्वैर्लोकैर्यदाख्यया यद्वस्तु व्यवह्रियते तदित्यर्थः । तेन देश्यमपि संगृहीतम् । अत एवाग्रे खादनपानगल्लादय उदाहरणीयाः । कलममहिषीदध्यादयश्च प्रत्युदाहर्तव्याः । उदाहरणम्—**राका०** ।

अत्र कटिशब्दः । लोकानभिज्ञं प्रति तदर्थानुपस्थितिर्दूषकताबीजमिति ऋजवः । वस्तुतस्तु नागरोपनागरौ विहाय ग्राम्यशब्दप्रयोगाद्वक्तुरवैदग्ध्योन्नयनेन श्रोतुर्वैमुख्यं तदित्यालोच्यते । अत एव विदूषकादावधमे वक्तरि न दोषत्वम् । तस्य तथैवौचित्येन वैरस्याभावात् । कटिशब्दे तु ग्राम्यताप्रयोजकं नाश्लीलत्वमिति न तत्संकरः ।

नेयार्थं नेयोऽर्थो यस्य तत् । नेयत्वं च—**निरूढा०** ।

इत्यनेन रूढिप्रयोजनाभ्यां विना या लक्षणा निषिद्धा तद्विषयत्वम् । यथा—**शरत्काल०** ।

---

भावः । समस्तलोकप्रसिद्धत्वमेव विवृणोति—**तस्मिन्देश इति** । सर्वैर्विदग्धाविदग्धैः । **तदिति** । तत्पदं तद्वस्तुनि तद्देशीयान्प्रति ग्राम्यमित्यर्थः । **राकेति** । राका पूर्णचन्द्रा या विभावरी रात्रिस्तत्कान्तश्चन्द्रस्तस्य संक्रान्ता द्युतिर्यत्र तस्मिन्संक्रान्ता द्युतिर्यस्य वा तादृङ्मुखम् । तपनीयं स्वर्णम् । हरतेऽनुरञ्जयति । **नागरम्** । विदग्धमात्रप्रसिद्धम् । **उपनागरम्** । ग्राम्यकक्षातिक्रान्तमप्राप्तनागरभावम् । **ग्राम्यताप्रयोजकमिति** । सामान्ये नपुंसकम् । विदग्धाविदग्धप्रसिद्धत्वप्रयुक्तशोभारहितत्वं वैमुख्यप्रयोजकम् । न व्रीडादिव्यञ्जकार्थोपस्थापकत्वं [6]तत्प्रयोजकमिति नाश्लीलेनास्य गतार्थतेति भावः । **अभिधानवत्** । शक्तिवत् । **सामर्थ्यम्** । प्रसिद्धिः । **अधुना** । प्रयोजनवशात् । **शरदिति** । मुखं कर्तृ । चपेटा प्रसृतकरतलम् । (हे तन्वि ते मुखं शरत्काले समुल्लासी यः पूर्णिमा-

---

१ अस्य श्लोकस्य चतुर्थचरण एव केवलं क. पुस्तके दृश्यते । २ क. चाधुना. । ३ चण्डि. ४ क. त्समस्तलो° । ५ क. °णा सा नि° । ६ क. तद्बीजमिति. ।

**अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते।**

**अर्थं समासगतमेव दुष्टमिति संबन्धः। अन्यत् केवलं समासगतं च। क्लिष्टं (यतः अर्थप्रतिपत्तिर्व्यवहिता)। यथा,**

**अत्रिलोचनसंभूतज्योतिरुद्गमभासिभिः।**
**सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम्॥ १५९॥**

**अत्रात्रिलोचनसंभूतस्य चन्द्रस्य ज्योतिरुद्गमेन भासिभिः कुमुदैरित्यर्थः।**

---

अत्र चपेटादिपदं निर्जितत्वे लक्षणया प्रयुक्तम्। न च तत्रास्य रूढिर्न वा प्रयोजनम्। मुख्यशब्दार्थातिरेकिणोऽर्थस्याप्रतीतेः। दूषकताबीजं च वृत्त्यभावेनार्थानुपस्थितिरिति नित्योऽयं दोषः।

अथ भवेत्क्लिष्टमित्यादि। क्लिष्टादिकं दुष्टं पदं समासगतमेवेत्यभिसंबन्धः। तदयमर्थः—क्लिष्टत्वादिदोषत्रयं पदान्तरसाहित्येनैव संभवति। तथा च यदि तयोः पदयोः समासस्तदैव समासेनैकपद्यात्पददोषता। असमासे वाक्यदोषत्वमेव। इतरेषां तु समासेऽसमासे च पददोषत्वम्। द्वितीयपदनैरपेक्ष्येणैव दुष्टत्वादिति।

तत्र क्लिष्टमर्थप्रतीतौ क्लेशवत्। यतो विवक्षितस्यान्वितविशेषस्य प्रतिपत्तिर्विलम्बिता तदित्यर्थः। निहतार्थादौ तु पदार्थोपस्थितिरेव विलम्बितेति ततो भेदः। विलम्बश्चाप्रत्यासत्तेर्वा, सामान्यशक्तात्प्रकरणाद्यभावे विवक्षितविशेषस्य[3] द्रागनुपस्थितेर्वा। आद्ये वाक्यमात्रदोषत्वं 'धम्मिल्लस्य—' इत्यादौ। अन्त्ये तु पददोषत्वमपि। तद्यथा—**अत्रि०**।

अत्रात्रिलोचनसंभूतेत्यादौ सामान्यतोऽन्वयबोधाविलम्बेऽप्यत्रिलोचनसंभूतेत्यादिना चन्द्रादेर्न द्रागुपस्थितिः। अन्यस्यापि तथाभावान्नियामकस्याभावाच्च। अतः कुमुदैरित्यस्य व्यव-

---

संबन्धी शर्वरीप्रियश्चन्द्रस्तं चपेटा प्रसृतकरतलं तत्पातनस्य प्रहारस्यातिथिं पात्रं करोति। लक्षणया जयतीत्यर्थः। अतिशेत इति भावः। **अत्र चपेटादिपदमिति**। चपेटापातनातिथिपदस्य निर्जितत्वे लक्षणेत्यर्थः। वैयाकरणनय इवाऽऽलंकारिकैरपि वृत्तावेकार्थीभावाङ्गीकाराच्छक्यसंबन्धरूपा लक्षणा सूपपादेति भावः। **मुख्यशब्दार्थेति**। मुख्यत्वं च शाब्दवाक्यार्थान्वयित्वम्। **अर्थानुपस्थितिरिति**। लक्षणाजन्यबोधे रूढिप्रयोजनान्यतरज्ञानस्य हेतुत्वेन तदभावात्तदनुपस्थितिरिति भावः। अत एवाप्रयुक्ताद्भेदः। न च निर्जितत्वातिशयप्रतिपत्तिः फलम्। उपमानत्वेनोत्तमगुणे चन्द्रे न्यूनेन चपेटापातनदानवर्णने वर्ण्यस्यैवापकर्षापत्तेः। **क्लेशवदिति**। आकाङ्क्षासत्तितात्पर्यादिज्ञानरूपकारणविलम्बेन बिलम्बात्स्वार्थबोधजनकमित्यर्थः। तदेवाऽऽह—**यत** इति। **अत्रीति**। अत्रिर्मुनिस्तल्लोचनसंभूतं ज्योतिश्चन्द्रः। तदुदयभासीनि कुमुदानि। अत्रेदं क्लिष्टं चन्द्रादिपदेनैव सिद्धेरपुष्टं च। चेष्टितं यशः। **संभूतेत्यादिनेति**। आदिना चन्द्रोद्गमभासित्वेन कुमुदानुपस्थितिसंग्रहः। व्यव-

---

१ क. °थ क्लिष्टं स°। २ ग. यत्रार्थ°। ३ क. °स्य प्राग°।

**अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत्। यथा—**

**मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-**
**धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम्।**
**कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां**
**दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यत्प्रयासः॥ १६०॥**

**अत्र मिथ्यामहिमत्वं नानुवाद्यम्। अपि तु विधेयम्।**

---

धानेनोपस्थितिः। इदमेव च 'अत्रिदृष्टेः समुद्भूतस्योद्द्योतेनावभासिभिः' इति पाठे द्वितीय-प्रभेदे वाक्यदोषोदाहरणं द्रष्टव्यम्। दूषकताबीजं प्रतीतिविलम्बः। प्रहेलिकादौ तु तस्येष्टत्वाददोषत्वम्। मत्तोक्त्यादौ तु गुणत्वमपि तदौचित्यात्।

'अविमृष्टविधेयांशम्' अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत्। प्राधान्यं च विधिप्रतीतियोग्यता। सा चानुपसर्जनीभूतत्वे सत्युद्देश्यानन्तर्यम्। अतो 'न्यक्कारो ह्ययमेव' इत्यादौ 'क्षणमप्यमुक्ता—' इत्यादौ वा नाव्याप्तिः। प्रथम उक्तरूपप्राधान्याभावेन द्वितीये विधेयस्य प्रसज्यप्रतिषेधस्यानिर्देशेन विशिष्टविरहसत्त्वात्। उदाहरणम्—**मूर्ध्नामु०।**

अत्र नगरीरक्षण एव यत्प्रयासस्तन्मूर्ध्नां महिमा मिथ्येति मिथ्यात्वं विधेयम्। अप्राप्तत्वात्। अत एव च नानुवाद्यम्। प्राप्तत्वे तु मिथ्यामहिम्नामफलत्वमेवोचितम्। अतः किमेतत्फलमित्यादिना नाभिसंबन्धः स्यात्। तच्च बहुव्रीहावन्यपदार्थे गुणीभूतम्। विशेषणप्राधान्ये समासानतुशासनात्। किं चोद्देश्यं विधेयं च यदि पृथक्पदाभ्यामुपतिष्ठते तदा प्राप्तमुद्दिश्याप्राप्तं विधीयते। न च समासे पृथक्पदादुपस्थितिः। अपृथगुपस्थितौ च न तथा व्युत्पत्तिरिति।

---

**धानेनेति।** यशःशुक्ले कुमुदे तात्पर्यग्रहोत्तरमित्यर्थः। **प्रहेलिकादाविति।** आदिना यमकादिसंग्रहः। **मूर्ध्नामिति।** (हनुमन्नाटके) रामसेनया लङ्कायां वेष्टितायां रावणस्योक्तिः। उद्वृत्तमुद्धतं यत्कृतं कर्तनं तेनाविरलं गलाद्गलन्ती रक्तस्य संसक्ताऽर्थादीशाङ्घ्रौ तादृशधारया धौते ये ईशाङ्घ्री तत्प्रसादेनोपनतो यो जयस्तेन जगति जातो मिथ्या महिमा येषां तेषां मूर्ध्नां कैलासस्योल्लासन उत्थापने य इच्छाया व्यतिकर आधिक्यं तस्य पिशुनानां सूचकानामुत्सर्प्युत्कटो यो दर्पो गर्वस्तेनोद्धुराणामतिक्रान्तजगतां दोष्णां च किमेतदेव फलं यद्वानरेभ्यो नगरीरक्षणे प्रयास इति निर्वेदः। किमा ईदृशफलेऽनौचित्यं व्यज्यते। तदुपपादकं चोक्तविशेषणद्वयम्। (स्रग्धरा छन्दः)। वक्ष्यमाणकर्मधारयोदाहरणे प्रागुक्तोपसर्जनत्वविरहेण तत्संगत्यर्थमाह—**किं चेति।** पदाभ्यां यदि पृथग्विशेष्यविशेषणभावानापन्न उपतिष्ठेतेत्यर्थः। न च समासे पदात्पृथगुपस्थितिरित्यन्वयः। समास एकार्थीभावाङ्गीकारेणेतरपदार्थान्विततयैव स्वार्थोपस्थितेरिति भावः। अयमेव चैकार्थीभावो नाम यदितरान्वयितयैवोप-

---

१ क. °धेयोंऽशो। २ क. °भेदवा°। ३ क. °यमित्यादौ। ४ क. °दौ च ना°।

यथा वा,

स्रस्तां नितम्बादव[1]रोपयन्ती पुनः पुनः केसरदा[2]मकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥१६१॥

अत्र[3] द्वितीयत्वमात्रमु[4]त्प्रेक्ष्यम् । मौर्वीं द्वितीयामिति [5]युक्तः पाठः ।

यथा वा,

---

एवं समासान्तरेऽप्यविमृष्टत्वं द्रष्टव्यम् । तत्र कर्मधारये यथा—स्रस्तां० ।

अत्र द्वितीयत्वं मौर्व्यामुत्प्रेक्ष्य विधेयम् । तच्च समासे गुणीभूतम् । 'मौर्वीं द्वितीयाम्' इति पा[6]ठे तु निराबाधा प्रतीतिः । नन्वत्र काञ्च्यां द्वितीयमौर्वीत्वं विशिष्टमेवोत्प्रेक्ष्यमतो नोक्तदोषावकाश इति चेत् । न । तथाऽपि हि विशेषणांशस्य द्वितीयत्वस्य प्राधान्यम् । द्वितीयसद्भाव एकस्य न्यासीकरणौचित्यात् । मौर्वीत्वं तु तस्याप्रयोजकम् । अन्यस्यापि सद्वितीयस्य तदौचित्यादिति वस्तुविशेषपरिचायकतामात्रम् । तस्माद्विशिष्टविधावपि विशेषणमत्र प्राधान्येन वक्तव्यम् । अत एव 'आ कडारादेका संज्ञा' ( पा० सू०।१।४ १ ) इत्यत्रैकत्वस्याप्राधान्यप्रसङ्गभयेन समासो नाकारीति व्याख्यातारः । अन्यथा तत्राप्येकत्र संज्ञिन्युद्देश्य एकत्वविशिष्टसंज्ञाविधाने दोषो न स्यात् ।

---

स्थितिरिति स्पष्टं तद्विदाम् । एवं चोपसर्जनत्वमितराविशेषणतयैवोपस्थितिविषयत्वं फलितम् । पृथगुपस्थितयोस्तथान्वय इत्युत्सर्गः । लोहितोष्णीषा इत्यादौ समासेऽपि तद्दर्शनात् । एवं चोत्सर्गत्यागेन सहृदयोद्वेग एव दुष्टिबीजमत्रेति तत्त्वम् । अत्राभवन्मतयोगसत्त्वेऽपि न क्षतिः । अविमृष्टविधेयत्वस्यापि सत्त्वेनोपधेयसांकर्यस्यादोषत्वात् । **स्रस्तामिति** । ( कुमारसंभवे तृतीयसर्गे कामस्य हरं प्रत्यभियोगे सहायभूतां पार्वतीम् । 'अदृश्यत स्थावरराजकन्या' इतिकुलकादिनोपक्रम्य पद्यमिदम् । ) नितम्बात्स्रस्तां केशरो बकुलस्तस्य दाम माला सैव काञ्ची नितम्बभूषणमवरोपयन्ती स्थाने निवेशयन्तीत्यन्वयः । न्यासः समर्पितं द्रव्यं तथाकृताम् । स्थानविदा स्वास्त्रभूता पार्वत्येव स्वीयमौर्वीस्थापनस्थानमिति जानता । मन्नाशेऽप्यनयैव शिवं वशी करिष्यामीति जानता वा । आश्रयगुणप्रकर्षेणाऽऽधेयगुणप्रकर्ष इति योग्यमिदं स्थानमिति जानता वा । अत्र मौर्वीपदादेव कार्मुकसंबन्धे लब्धे कार्मुकपदमपुष्टम् । ( उपजातिश्छन्दः ) । **उत्प्रेक्ष्येति** । स्वीयवस्तुन एव न्यासीकरणं न तु तत्सदृशस्येति नोपमेति भावः । **तथाऽपि हीति** । न्यासीकरणे हेतूत्प्रेक्षेयम् । तत्र च द्वितीयत्वमेव हेतुरिति भावः । विशिष्टस्य हेतुत्वेऽपि न दोष इति चिन्त्यम् ।

---

१ क. ग. °वलम्बमानां पु° । २ क. ग. °रपुष्पका° । ३ क. °त्र मौर्वीद्वितीयामिति द्वितीयत्वमात्रमुत्प्रेक्ष्यम् । यथा वा । ४ ग. °मुत्प्रेक्षितम् । ५ ग. युक्तम् । ६ क. °ठे च नि° ।

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने॥१६२॥

अत्रालक्षिता जनिरिति वाच्यम् ।

यथा वा,

आनन्दसिन्धुरतिचापलशालिचित्त-
संदाननैकसदनं क्षणमप्यमुक्ता ।
या सर्वदैव भवता तदुदन्तचिन्ता
तान्तिं तनोति तव संप्रति धिग्धिगस्मान् ॥ १६३ ॥

अत्र ‘ न मुक्ता ’–इति निषेधो विधेयः,

यथा,

नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न तस्य शरासनम् ।

---

बहुव्रीहावेव तद्धितार्थगुणीभूतेऽन्यपदार्थे गुणीभावो यथा—वपु० ।

अत्र वरेषु मार्गणीयानां धर्माणां वैकल्यदर्शनप्रस्तावाजन्मन्यलक्ष्यत्वं विधित्सितम् । तच्च समासे न्यग्भूतम् । ‘ अलक्षिता जनिः ’ इति पाठे तु पौर्वापर्यविपर्ययसत्त्वेऽपि समासनिबन्धनमप्राधान्यं निवर्तते ।

नञ्समासे यथा—आनन्द० ।

अत्रावान्तरवाक्येऽमुक्तेत्यनेन ।

नवजल० ।

---

**वपुरिति** । ( कुमारसंभवे पञ्चमसर्गे ) बटुवेषधारिणः शिवस्य पार्वतीं प्रत्युक्तिः । वपुः शरीरं विरूपाक्षम् । सर्वाङ्गप्रधानं चक्षुरेव यस्य विरूपं तस्येतराङ्गं किं वक्तव्यमित्यर्थः । न लक्ष्यं जन्म यस्य तत्ता । यद्वरेषु मृग्यते तद्व्यस्तमपि त्रिलोचनेऽस्ति किमित्यन्वयः । यत्रिलोचनेऽस्ति तद्व्यस्तमपि ( रूपकुलधनमध्य एकैकमपि ) किं वरेषु मृग्यत इत्यन्वयः । उक्तान्वये तु रूपाभावादेः स्पष्टतयोपन्यासो न युज्यत इति दीपिकाकृतः । (वंशस्थं वृत्तम्) **निवर्तत इति** । तथा च पददोषोद्धारेऽपि वाक्यविधेयाविमर्शस्तदवस्थ एवेति भावः । केचित्तु शिवे जन्मनोऽभावाद्विशिष्टविधिरेव विवक्षित इत्याहुः । **आनन्देति** । ( विरक्तं नायकं प्रति नायिकासखीनामुक्तिरियम् । अतिचापलशालि यत्तव चित्तं तस्य यत्संदाननं बन्धनं तस्यैकं सदनं स्थानं कारणं वा । अव्यभिचारेण तथात्वं व्यङ्ग्यम् । या भवता सर्वदैव क्षणमप्यमुक्ता मुक्ता न तदुदन्तचिन्ता तद्वार्ताचिन्ताऽपि तान्तिं ग्लानिं तनोत्यतोऽस्मान्धिगिति । एवंविधदुःखदर्शित्वादतिशोच्या वयमित्यर्थः । ( वसन्ततिलका छन्दः ) । **नवजलधर इति** । उर्वशीविरहे पुरूरवसो मेघादौ

---

१ क. नाम ।

अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥ १६४ ॥

इत्यत्र )। न त्वमुक्ततानुवादेनान्यदत्र किंचिद्विहितम्,
( यथा,

जुगोपाऽऽत्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥ १६५ ॥

इत्यत्रात्रस्तत्वाद्यनुवादेनाऽऽत्मनो गोपनादि ॥ )

---

इत्यत्रेव प्रसज्यप्रतिषेध एव विधेयो न तु—जुगोपा० ।

इत्यत्रात्रस्तत्वाद्यनुवादेनाऽऽत्मगोपनादिवदमुक्ततानुवादेनान्यत्किंचिद्विधेयमस्ति ।
न च समासे नञः प्रसज्यप्रतिषेधोऽर्थः किंतु पर्युदास एव । तदुक्तम्—

विधेर्यत्र प्रधानत्वं प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ इति ।

कथं तर्हि ‘ अश्राद्धभोजी ’ इत्यादौ प्रसज्यप्रतिषेधलाभः। पर्युदासेनाऽऽक्षेपात् । ननु पर्युदासार्थोऽमुक्तत्वमेव विधीयतां फलाविशेषादिति चेत् । भवेदप्येवं यदि तथा सति क्षण-

---

निशाचरादिभ्रमानन्तरं विशेषदर्शने सतीयमुक्तिः । कनकनिकषः । तत्कषणरेखा । ( हरिणी छन्दः ) । जुगोपेति । ( रघुकाव्ये प्रथमसर्गे दिलीपवर्णनमिदम् ) । ( अत्रस्तो भयरहितः ) । अत्रस्तोऽपि त्रस्तवत्सम्यक्तया सदैवाऽऽत्मानं जुगोपेति व्यङ्ग्यम् । तावता न प्रकर्षः । अनातुरोऽरोगी । अगृध्नुरलुब्धः । ( असक्तोऽनासक्तः ) । उत्तरपदेनेति । उत्तरपदेन युतो नञ्समस्त इत्यर्थः । समासयोग्य इति यावत् । विधेर्भेदप्रतियोगिनः प्रधानत्वं विशेष्यत्वं प्रतिषेधे नञर्थेऽप्रधानता । नञ्तत्पुरुषस्योत्तरपदार्थप्रधानत्वादारोपितो घट इत्येवं बोधादिति भावः । अत एव प्रसज्यप्रतिषेधोऽसमास एवेत्याहुः । तदुक्तम्—

‘ अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥ ’ इति ।

क्रियान्वयी यत्र नञ् धात्वर्थरूपक्रियाभावबोधक इति यावत् । तथा च प्रसज्यप्रतिषेधे भवति--क्रियायामन्वयेन मुक्तापदेन समासो न स्यात्, असामर्थ्यादिति भावः । नवजलधर इत्यादावपि गम्यमानभवतिक्रियाया एव निषेधो बोध्यः । कथं तर्हीति । अत्र हि श्राद्धादीतरभोजित्वं नार्थः । भोजनस्य रागप्राप्तत्वेनाव्रतत्वात् । व्रताधिकारपठितणिन्यनुपपत्तेः । अश्राद्धाद्युपपदाच्च सः । श्राद्धभोजनाभावश्च व्रतमिति भावः । आक्षेपादिति । अयं भावः—श्राद्धभोजिभिन्न इति वाच्योऽर्थः । श्राद्धभोजनाभाववत्त्वं च तेनाऽऽक्षिप्यते । व्रते गम्यमाने णिनिरिति सूत्रार्थः । णिन्यन्तेन नञ्समासे हि तस्य गम्यतेति । वस्तुतोऽसूर्यललाटयोरिति

---

१ ग. °स्तताद्य° । २ क. °त्मगो° । ३ क. यदुक्तम् ।

**विरुद्धमतिकृद्यथा,**

**सुधाकरकराकारविशारदविचेष्टितेः ।**

**अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ॥ १६६ ॥**

मपोत्यनेव संबन्धः स्यात् । स हि मुक्तत्वेनैव प्रतियोगिना विवक्षितः । न च पर्युदासे तथा संभवः । नन्वेवमपि नाविमृष्टविधेयांशता । विधेयस्यानुपस्थितेः । किं तु धारणे विदधदितिवदवाचकत्वमेव स्यात् । समासेऽर्थान्तरनिरूढत्वादिति चेत् । न । प्राधान्येनानिर्देशस्य तथाऽप्यक्षतेः । अत एव 'प्राधान्येनानिर्दिष्टो विधेयांशो यत्र' इत्याह वृत्तिकृत्, न त्वप्राधान्येन निर्दिष्ट इति । तर्हि विदधदित्यस्याप्यत्रैवान्तर्भाव इति चेत् । न । तदर्थस्यानिर्दिष्टस्याप्यविधेयत्वात् । अमुक्तेत्यस्याविमृष्टविधेयांशस्यावाचकप्रवेश इति चेत् । न । उभयोरसंकीर्णस्थलसंभवे क्वचित्संकरेऽप्यदोषात् । दूषकताबीजं च विवक्षितार्थाप्रत्ययः । तस्मान्नित्यदोषोऽयम् ।

विरुद्धमतिकृत्, पदान्तरसंनिधानेन प्रकृतप्रतीतिन्यक्कारकप्रतीति[illegible]कम् । तच्चेदमनेकधा प्रवर्तते । क्वचित्समासान्तरविग्रहेण । यथा—**सुधाकर०** ।

ज्ञापकादसामर्थ्येऽपि क्वचित्समासः । न च प्रकृतेऽपि स्यात् । तावताऽपि तादृशात्सहृदयवैमुख्यं दुर्वारम् । एतेनाशब्दोऽयं निषेधार्थस्तेनासमास एवेत्यपास्तम् । समाससंदेहेन पर्युदाससंदेहाच्च । पौर्वापर्यविपर्ययस्यापरिहाराच्च । एवं द्वितीयमौर्वीमित्यत्र विशिष्टस्य विधेयत्वेऽपि तत्र प्रधानमौर्वीत्वस्य प्रसिद्धसादृश्येन प्राप्ततया प्राप्ताप्राप्तविवेकन्यायेन द्वितीयत्वे पर्यवसानेन शब्दतो गुणभूतस्य द्वितीयत्वस्य न्यासीकरणे हेतुत्वे सहृदयवैमुख्यमेव दूषकताबीजमिति बोध्यम् । **न च पर्युदास इति** । समास एकदेशेनान्वयायोगात् । विशिष्टेनाऽऽरोपितमुक्तत्वेनैवान्वयाच्चेति भावः । **विवक्षितार्थाप्रत्यय इति** । विवक्षितस्योद्देश्यविधेयभावरूपार्थस्याप्रतीतिः । स ह्यपदार्थोऽपि विषयताविशेषरूपो विशेषणविशेष्यभाववद्वाक्यार्थप्रतीतौ भासते । सोऽपि पदार्थ इत्यन्ये । उद्देश्यत्वविधेयत्वे विशेष्यत्वविशेषणत्वरूपे तत्समनियते वेति तु न युक्तम् । पर्वते वह्निरित्यादौ व्यभिचारादित्याहुः । अभवन्मतयोगे तु परस्परं पदार्थानां संबन्धरूपोऽन्वयोऽपि न भासत इति ततो भेदः । दूषकताबीजान्तरमप्युक्तम् । **प्रकृतप्रतीतिन्यक्कारकेति** । विरुद्धस्य मतिर्विरुद्धा वा मतिरिति समासः । अत्र पदान्तरसंनिधानेनेति विशेषणादनुचितार्थाश्लीलनिहतार्थानां व्युदासः । किं चाऽऽद्ययोर्न वाक्यार्थप्रतीत्योः परस्परविरोधिता किं तु व्यङ्ग्ययोर्वाच्यव्यङ्ग्ययोर्वा । अमतपरार्थश्च व्यङ्ग्यरसयोरेव विरोध इति न तत्संकरः । प्रकाशितविरुद्धे तु प्रथमप्रतीतेन विवक्षितार्थेनैव विरुद्धव्यञ्जनं नात्र तथेति ततो भेदः । न्यक्कारकत्वं च प्रकृतबोधप्रतिबन्धकतया तद्बोधजन्यचमत्कारप्रतिबन्धकतया चेति बोध्यम् । **सुधाकरेति** । चन्द्रकरसदृशप्रगल्भचेष्टितः ।

१ क. °ष्टितैः ।

अत्र कार्यं विना मित्रमिति विवक्षितम्। अकार्येषु मित्रमिति तु प्रतीतिः। यथा वा,

चिरकालपरिप्राप्तलोचनानन्ददायिनः।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम्॥ १६७॥

अत्र कण्ठग्रहमिति वाच्यम्।

यथा वा,

न त्रस्तं यदि नाम भूतकरुणासंतानशान्तात्मन-
स्तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः।
तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः॥१६८॥

---

अत्राकार्यं कार्यमन्तरेण मित्रमिति विवक्षितम्। अकार्ये मित्रमिति तु प्रतीयते। क्वचिन्नामपदयोः समासे विरुद्धार्थनिरूढपदघटनया। यथा—**चिरकाल०**।

अत्र कण्ठग्रहार्थतया विवक्षितो गलग्रहशब्दो रोगविशेषे निरूढः। क्वचिद्विवक्षितविशेषपरत्वे पदवैयर्थ्यप्रसङ्गेनाविवक्षितविशेषपरत्वग्रहात्। यथा—**न त्रस्तं०**।

---

आकारशब्दः सदृशवाची। 'विद्वत्सुप्रगल्भौ विशारदौ' इत्यमरः। अकार्यमित्रं कार्यं विनैव मित्रमित्यर्थः। मयूरव्यंसकादित्वात्समासः। (वर्णयामह इत्यस्य कर्म गुणानित्यार्थिकम्)। **अकार्ये मित्रमिति त्विति**। नञोऽल्पार्थत्वे कुकार्ये मित्रमित्यपीत्यर्थः। अव्ययीभावनञ्समासयोस्तुल्यत्वेनास्यापि प्रतीतिरिति भावः। **निरूढेति**। निरूढया पदघटनयेत्यर्थः। अत्र प्रकरणेन रूढेर्बलवत्त्वं बाधित्वा योगार्थोपस्थितावप्यविवक्षितार्थव्यञ्जनया तिरस्कार एव विरोधो बोध्यः पदार्थः। अत एव प्रकरणौत्कट्ये निहतार्थस्य न दोषत्वम्। **चिरेति**। चिरकालेन परिप्राप्तस्य। अनेनौत्कण्ठ्यातिशयः। लोचनानन्दजनकस्येत्यनेन सौन्दर्यातिशयः। कान्तस्य मनःप्रियस्य। **न त्रस्तमिति**। (वीरचरितनाटके द्वितीयाङ्के) दाशरथिमुद्दिश्य परशुरामोक्तिः। यदि तेन रघुनाथेन धनुर्व्यारुजता भङ्गं कुर्वता देवाद्विजिगीषोरपि भगवतस्तत्समर्थादपि भवानीपतेः। इदं च दक्षयज्ञविध्वंसकत्वेनार्थान्तरसंक्रमितम्। तेनातिरोषवतोऽपि सकाशाद्यन्न त्रस्तं तन्नाम युक्तमित्यर्थः। तत्र हेतुगर्भविशेषणम्। भूतकरुणासंतानः समूहस्तेन शान्त आत्मा यस्य तादृशात्। ननु तत्पुत्र एव योत्स्यते किं तवेत्यत्राऽऽह—तत्पुत्रस्त्विवति। तुर्व्यवच्छेदे। स्कन्दो जगदास्कन्दनसमर्थोऽपि मदान्धस्य तारकासुरस्य वधात्सर्वलोकस्य दत्त उत्सवो येन तादृशस्तेन दत्तोत्सवत्वात्कथमपि तद्विपरीतं कर्तुं नेष्टे। अतस्तदस्मरणं युक्तमिति भावः।

---

१ झ. अकार्ये। २ ग. ॰ति प्र॰। ३ क. ग. प्राप्ति लो॰। ४ क. ग. ॰म्। न त्र॰।

अत्र भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति[1]। इन्द्रवरुणभवेत्यादिना पुंयोगान्ङीप्प्रत्ययेन भवस्य पत्नी भवानी ।

यथा वा,

गोरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।
सविधे निरहंकारः पायाद्वः सोऽम्बिकारमणः ॥ १६९ ॥

अत्राम्बिकारमण इति विरुद्धां धियमुत्पादयति ।

श्रुतिकटु समासगतं यथा,

सा दूरे च सुधासान्द्रतरङ्गितविलोचना[2] ।
बर्हिनिर्ह्रादनार्होऽयं कालश्च समुपागतः[3] ॥ १७० ॥

---

अत्र भवस्य पत्नीत्यर्थे भवानीति सिद्धम् । तथाच भवपत्नीपतौ प्रतीयमाने भवातिरिक्तः स द्राक्प्रतीयते । न हि भव एवाभिधेये भवपत्नीपतिरिति[4] प्रयोगो योग्यः सचेतसाम् ।

क्वचित्समासैक्येऽपि[5] समस्यमानपदयोर्व्यर्थतया । यथा—**गोरपि०** ।

अत्राम्बिकारमणपदयोर्गौरीप्रीतिकरत्ववन्मातृस्वामित्वमप्यर्थः । दूषकताबीजं विवक्षितार्थतिरस्कारकार्थोपस्थितिः । अतो यत्र विरुद्धोऽर्थो विवक्षित एव तत्रादोषत्वम् ।

क्लिष्टादिदोषविशेषेषु समासगतत्वनियमविधानाच्छ्रुतिकटुप्रभृतिष्वनियमोऽस्यनुज्ञातः । तत्रासमासगतमुदाहृतमेव । समासगतेषु श्रुतिकटु यथा[6]—**सा दूरे०** ।

---

ननु तथाऽपि तव मुनेः किं प्रयोजनं कश्च संबन्धो येन त्वत्तो भयं कार्यमत आह—स्कन्द इव तस्य देवस्य यतोऽहं प्रियः, अतः कथं विस्मृतः । अनुचितं विस्मरणमिति भावः । ननु त्वत्प्रियत्वं नास्माकं विदितं तत्राऽऽह—अथवा शिष्यः । तत्तु जगद्विदितमिति भावः । अहमिति क्षत्रियकुलान्तकेऽर्थान्तरसंक्रमितवाच्यम् । तेन धनुर्भङ्गकर्तुः साहसातिशयो व्यज्यते । ( चन्द्रिकायां तु स्कन्द इत्यस्य विस्मृत इत्यत्रान्वय उक्तः । तन्मतेऽथ वेति भिन्नक्रमेण स्कन्दपदोत्तरं बोध्यम् । शार्दूलविक्रीडितं छन्दः ) । **द्राक्प्रतीयत इति** । तेन भवप्रतीतिप्रतिबन्ध एवेति भावः । तच्चमत्कारप्रतिबन्धो वा । परे तु भवस्य पत्न्यां गुणभूतत्वेन भवान्वितपत्न्या विशेष्यभूतः पत्यर्थोऽन्य एव प्रतीयते । गुणस्योत्सर्गतः प्रधानत्वायोगादित्याहुः । एवं चाऽऽराध्याया देव्या इदृक्प्रतीतिर्भयंकरीति[7] मतिर्विरुद्धा । भवानीशब्दो दुर्गात्वविशिष्टे रूढ एवेति नात्र दोष इति केचित् । **गोरपीति** । यद्वाहनतां प्राप्तवतो गोरपि सविधे सोऽपि प्रसिद्धरूपोऽपि सिंहो निरहंकारः । अम्बिकारमणो महेशः । **करत्ववन्मातृस्वामित्वमपीति** । अम्बिकाशब्दस्य जनकताविशेषवत्स्त्रीत्वेन मातरि गौरीत्वेन गौर्यां च शक्तिरिति बोध्यम् । ( आर्याच्छन्दः ) । **सा दूरे चेति** । विरहिणो रामस्योक्तिरियम् । संजातसुधासान्द्रतरङ्गसदृशकटाक्षव-

---

१ क. °ति । यथावा । २ क. °धासिन्धुस्तर° । ३ क. °दनोपीढ का° । ४ क. भवान्तप° । ५ क. °क्ये स° । ६ क. °था दूरे च सा सुधा° । ७ भयकारी° ।

एवमन्यदपि ज्ञेयम् ।

अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।
वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन ॥ ५२ ॥

केंचन[1], न पुनः सर्वे ।
क्रमेणोदाहरणम्,

---

समासादैकपद्यम् । एवं च्युतसंस्कृत्यादयो द्रष्टव्याः ।

उक्तान्पददोषान्पदैकदेशे वाक्ये चातिदिशति—अपास्य० ।

च्युतसंस्कारेत्यादिर्भावप्रधानो निर्देशः । एते[2] श्रुतिकट्वादिपदप्रवृत्तिनिमित्तभूताः श्रुतिकटुत्वादय इत्यर्थः । अत्र यत्र पदान्तरसाहित्येन पदानां दुष्टत्वं स वाक्यदोषः । न चासाध्वसमर्थनिरर्थकानां दुष्टत्वे पदान्तरसाहित्यापेक्षेति तत्रितयापासनमिति संप्रदायः । तदसत् । 'सोऽध्यैष्ट—' इत्यादौ[3] श्रुतिकटोर्दुष्टत्वे पदान्तरसाहित्यस्यानपेक्षणीयतया तदुदाहरणविरोधात् । न च तत्रापि तथैवेति वाच्यम् । परुषवर्णारब्धत्वस्य स्वत एव सत्त्वात् । तथात्वेऽपि वा 'सँ रातु वो दुश्च्यवनः'[4] इत्याद्यप्रयुक्ताद्युदाहरणाव्याप्तिः । न हि तत्रापि दुष्टत्वे पदान्तरापेक्षेति वक्तुमपि शक्यते । किं चावाचकमप्यसमर्थसमानशीलं किमिति नापास्तमिति सर्वव्याख्यानेषु विनिगमकं वक्तव्यमिति ।

अत्र ब्रूमः—विवक्षितधर्मिप्रत्यायकशब्दवृत्तित्वे सति नानापदवृत्तित्वमेवात्र वाक्यवृत्तित्वमभिप्रेतम् । 'न्यक्कारो ह्ययमेव—' इत्यत्रापि नाव्याप्तिः । उद्देश्यविधेयाभिधायकयोर्द्वयोरपि दुष्टत्वात् । अत एवाविमृष्टविधेयांशमित्यत्रांशपदोपादानम् । 'योऽसौ सुभगे तवाऽऽगतः' इत्युदाहरणे प्रकाशे स्फुटमेतत् । एवं च युक्तं च्युतसंस्कृत्यादिव्युदसनम् । न चासमर्थसहोदरस्यावाचकस्यापि व्युदासो युक्तः । तेनापि केनचिद्विवक्षितधर्मिज्ञापनात् । यथोदाहृतेन जन्तुपदेन । व्युदस्तेषु पुनर्न कोऽपि प्रभेदो विवक्षितधर्मिप्रतिपादक इति ।

---

लोचना । बर्हीति । मयूरशब्दजनकः । कालः समयोऽन्तकश्च । द्वयोरपीति । विधेय उद्देश्यानन्तर्यवदुद्देश्ये तत्प्राग्वर्तित्वस्याप्यपेक्षणात् । अंशशब्दोपादानमिति । विधेयपदे धातोर्विधित्वेन बोधे लक्षणा, तद्योग्यांशो यत्राविमृष्ट इत्यक्षरार्थः । अन्यथाऽविमृष्टविधेयमित्येव वदेदिति भावः । एवं च युक्तमिति । असाधु-

---

१ क. केचन इति नास्ति । २ क. °ते इति श्रु° । ३ क. °त्यादि श्रु° । ४ क. स पातु देवो दु° । ५ क. °यमित्यत्रा° ।

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनतार्प्सीत्सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥ १७१ ॥

स रातु वो दुश्च्यवनो भावुकानां परम्पराम् ।
अनेडमूकताद्यैश्च द्यतु दोषैरसंमतान् ॥ १७२ ॥

अत्र दुश्च्यवन इन्द्रः, अनेडमूको मूकबधिरः ।

सायकसहायबाहोर्मकरध्वजनियमितक्षमाधिपतेः ।
अब्जरुचिभास्वरस्ते भातितरामवनिप श्लोकः ॥ १७३ ॥

अत्र सायकादयः शब्दाः खड्गाब्धिभूचन्द्रयशः पर्यायाः शराद्यर्थतया प्रसिद्धाः ।

---

तत्र श्रुतिकटु वाक्यगतं यथा—सोऽध्यैष्ट० ।

व्यक्तम् ।

अप्रयुक्तं यथा—स रातु० ।

अत्र दुश्च्यवनशब्द इन्द्रे, अनेडमूकशब्दश्चैडमूकेऽप्रयुक्तः ।

निहतार्थं यथा—सायक० ।

अत्र सायकशब्दः खड्गे, मकरध्वजशब्दः समुद्रे, क्षमाशब्दो भूमौ, अब्जशब्दश्चन्द्रे, श्लोकशब्दो यशसि च प्रयुक्तः । न चतेषामेतेषु प्रसिद्धिभूयस्त्वम् । अतः प्रसिद्धैः शरमदनक्षान्तिपद्मपद्यैरर्थैर्निहतार्थाः ।

---

स्वाच्छक्त्यभावाच्च प्रत्यायकत्वाभावेनेति भावः । प्रागुक्तास्मद्रीत्या च्युतसंस्कृतिव्युदासश्चिन्त्य एव । श्रोत्रुद्वेगविशेषाजनकत्वे सतीति वक्तुं युक्तम् । सोऽध्यैष्टेति । ( भट्टिकाव्ये प्रथमसर्गे पद्यमिदम् ) । ( अध्यैष्टाधीतवान् । अयष्टापूजयत् ) । पितॄनतार्प्सीच्छ्राद्धादिभिस्तर्पितवान् । अपारीदिति पाठे निवापजलादिभिः पूर्णाञ्जलितवान्पालितवान्वेत्यर्थः । बन्धूनमंस्त । तेषां दानसूनृतादिभिः सन्मानं कृतवान् । षड्वर्ग इति । कामक्रोधलोभमोहमदमात्सर्याणि । समूलघातमिति । समूलं हतवानित्यर्थः । ( उपजातिश्छन्दः ) । स रात्विति । रातु ददातु । दुश्च्यवन इन्द्रः । भावुकानां कल्याणानाम् । असंमतान्शत्रून् । अनेडमूको मूकबधिरस्तदाद्यैर्दोषैः । द्यतु खण्डयतु ।

'अनेडमूक उद्दिष्टः शठे वाक्श्रुतिवर्जिते' ।

इति मेदिनी । एडमूक इति । मूकबधिर इत्यर्थः ।

'एडमूकः स्मृतो धीरैः शठे वाक्श्रुतिवर्जिते' ।

इति विश्वः । सायकेति । सायकः खड्गः शरश्च । मकरध्वजः समुद्रः कंदर्पश्च । क्षमा भूमिः क्षान्तिश्च । अब्जं चन्द्रः पद्मं च । श्लोको यशः

---

१ क. स पातु वो° । ग. ददातु वो । २ क. वैस्तु व° । ३ ग. °न्द्रः । मूकबधिरोऽनेडमूकः । सा° । ४ क. °चैषा° ।

कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो ।
शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा
तथाऽपि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥ १७४ ॥

अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन्नुपश्लोक्यमानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थः ।

प्राभ्रभ्राड्विष्णुधामाऽऽप्य विषमाश्वः करोत्ययम् ।
निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥ १७५ ॥

अत्र प्राभ्रभ्राड्—विष्णुधाम—विषमाश्व—निद्रा—पर्णशब्दाः प्रकृष्टजलदगगन—सप्ताश्व—संकोच—दलानामवाचकाः ॥

---

अनुचितार्थं यथा—कुविन्द० ।

अत्र कुविन्द इति तन्तुवायं, पटयसीति पटं करोषीति, गुणेति तन्तुं, नग्नेति वस्त्रहीनं, यश इत्यकारप्रश्लोषादयशः, विगताच्छादनमित्यवसनमित्यर्थानुपश्लोक्यमानापकर्षद्योतकतयाऽनुचितान्प्रकाशयन्ति ।

अवाचकं यथा—प्राभ्रभ्रा० ।

अभ्रे भ्राजत इत्यभ्रभ्राड् जलदः । प्रकृष्टोऽभ्रभ्राड् यत्र तद्विष्णुधामेत्यस्य विशेषणम् । अत्र प्राभ्रभ्राडिति प्रकृष्टजलदे, विष्णुधामेति विष्णुपदे, विषमाश्व

---

पद्यं च । अत्र द्वितीयेनाऽऽद्यो निहन्यते । ( आर्या छन्दः ) । कुविन्द इति । राजानं प्रति कवेरुक्तिः । कुं पृथ्वीं विन्दतीति कुविन्दो राजा रूढ्या तन्तुवायश्च । पटयसि पटुं पटं च करोषि । गुणाः, विद्यादानादयः सूत्राणि च । ग्रामः समूहः । अभितः समन्तात्, आरोहपरिणाहाभ्यां च । यश इत्यकारप्रश्लेषादयशश्च । नग्नाः, बन्दिनो वस्त्रहीनाश्च । शरज्ज्योत्स्नावत्कान्तान्यतिनिर्मलानि स्फुटानि विकटान्यपि गुप्तान्यपि सर्वाङ्गाणि यस्याः सा चासौ सुभगा च रमणीया त्वत्संबन्धिकीर्तिः । विगतमाच्छादनमावरणवासो यस्यां क्रियायां तद्यथा भवति तथा भ्रमति । तथाऽपीति नग्ना इत्यत्राप्यन्वेति विरोधस्फोरणार्थम् । एवं च तथाऽपीत्युपात्तविरोधस्फोरणाय भद्रात्मन इतिवदुपस्थिततन्तुवायादिद्वितीयार्थमादाय वाक्यस्यासंबद्धार्थतापत्तावुपमा कल्पनीया । तथा च तदुपमानकत्वं राज्यनुचितमित्युदाहरणसंगतिः । ( शिखरिणी छन्दः ) । प्राभ्रेति । अभ्रे भ्राजत इत्यभ्रभ्राड्जलदः प्रकृष्टोऽभ्रभ्राड्यत्र तद्विष्णुधामेत्यस्य विशेषणम् । तादृगपि विष्णुपदमाप्य प्राप्य । विषमाश्वः सप्ताश्वः सूर्यः । सहस्रदलानां निद्रां संकोचं पलाय-

---

१ क. °त्स्नाकान्त स्फु° । २ क. सूर्य. । ३ क. ग. °च पत्राणाम° । ४ क. °न्धिनी की° ।

भूपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहरणोत्साहवती मोहनमादधौ ॥ १७६ ॥

अत्रोपसर्पण–प्रहरण–मोहन–शब्दा व्रीडादायित्वादश्लीलाः ।

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्तनम् ॥ १७७ ॥

अत्र वान्तोत्सर्गप्रवर्तनशब्दा जुगुप्सादायिनः ।

पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥ १७८ ॥

---

इति सन्नाध्वे, निद्रेति संकोचे, सहस्रपर्णेति सहस्रदले, प्रकृष्टजलदत्वादिना प्रकारेणावाचकानि । कानिचिच्चात्र धर्मिणि शक्तान्येवेति यथोक्तवाक्यदोषत्वम् ।

अश्लीलेषु व्रीडादायि यथा—**भूपते०** ।

अत्रोपसर्पन्तीति सुरतारम्भं, प्रहरणेति ताडनविशेषं, मोहनमिति निधुवनं चार्थान्तरं प्रतिपादयद्व्रीडादायि ।

जुगुप्सादायि यथा—**तेऽन्यै०** ।

अत्र वान्तोत्सर्गशब्दौ छर्दितपुरीषार्थतया, प्रवर्तनमिति पुरीषार्थान्तरतया जुगुप्सां प्रयच्छन्ति ।

अमङ्गलार्थं यथा—**पितृवसति०** ।

---

नपरायणां तत्कालविनश्वरां करोतीत्यर्थः । **प्रकारेणावाचकानीति** । प्रगताभ्रस्थानिकत्व–विष्णुस्थानत्व–अयुग्मसंख्यावच्छिन्नाश्वत्व–मित्थानाडीमनोयोगत्व–पत्रसहस्रवत्त्वेनावाचकत्वादिति भावः । **भूपतेरिति** । उपसर्पणमभिगमनं रिरंसोद्योगश्च । कम्पना सेना । शत्रुकम्पजनकत्वात् । अपराऽपि स्वदर्शनेन सात्त्विकभावेन पुंसः कम्पयुक्तान् करोति । स्वयमेव कम्पयुक्ता वा, शङ्कया । वामं भ्रुकुटीविषमं सुन्दरं च । प्रहरणं शस्त्रादिप्रक्षेपः । कामशास्त्रप्रसिद्धं दंपतिजघनताडनं च । मोहनं विपक्षसंमोहनं निधुवनविलासातिशयं च । **तेऽन्यैरिति** । वान्तम् । मुखद्वारा भुक्तत्यक्तम् । उत्सर्गमधोद्वारेण त्यक्तम् । प्रवर्तनं प्रवृत्तिः पुरीषोत्सर्गश्च । **पुरीषार्थान्तरतयेति** । प्रवृत्त्यर्थकतयोपात्तत्वात्तदर्थान्तरमिति बोध्यम् । **पितृवसतिमिति** । (पतिगृहे शोकपीडितायाः कस्याश्चिदियमुक्तिः) । पितृवसतिं पितृगृहं श्मशानं च । तत्र परिवारगणेन सह व्रजामि गच्छामि । यत्र पावकान्वये पवित्रत्वकारकपित्रादिसंबन्धे सति वह्निसंबन्धवति च, गताया मम सपदि तत्कालमेव

---

१ ग. नृपते° । २ क. ग. हणनोत्सा° । ३ क. दधे । ४ क. ग. °प्रहणनमो° । ५ क. °हं प्रयामि । ६ क. गणेन । ७ ग. पुरीषत्यागार्थान्तरतया ।

अत्र पितुर्गृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वम् ।

सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥ १७९ ॥

अत्र किं सुरकम्पनामार्गणभूतिशब्दा देवसेनाशरविभूत्यर्थाः, किं मदिराद्यर्थाः ?—इति संदेहः ।

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः ।
दृढभूमिः प्रियप्राप्तौ यत्नः स फलितः सखे ॥ १८० ॥

अत्राधिमात्रोपायादयः शब्दा योगशास्त्रमात्रप्रयुक्तत्वादप्रतीताः ।

---

अत्र पितुर्गृहं पावनो वंश इति च विवक्षिते पितृवसतिपावकान्वयशब्दौ श्मशानवह्नि-संबन्धरूपामङ्गलार्थान्तरौ ।

संदिग्धं यथा—**सुराल०** ।

अत्र सुरालयेति देवगृहमदिरामन्दिरयोः प्राप्तपर्याप्तकम्पन इति प्राप्तसैन्यत्वप्राप्तकम्प-स्त्वयोरुपस्थापकम् । एवमग्रेऽपि ।

अप्रतीतं यथा—**तस्याधि०** ।

अधिमात्रो दृढज्ञानवानुपायो यमादिर्यस्य । तीव्रः परमः संवेगो वैराग्यं यस्य तत्तायुक्तस्य । दृढभूमिर्दृढसंस्कारः । मृदूपायो मध्योपायोऽधिमात्रोपायश्चेति त्रिविधा अपि योगिनः प्रत्येकं मृदुसंवेगो मध्यसंवेगस्तीव्रसंवेगश्चेति त्रिविधाः । अत्राधिमात्रादयः शब्दा योगशास्त्रमात्रप्रसिद्धाः ।

---

हृतशोकलक्षणशल्यं हृदयं भवति । **श्मशानवह्निसंबन्धेति** । द्वन्द्वः । अत्र वह्निः श्मशानसांनिध्याच्चितावह्निरेव प्रतीयत इति तस्यामङ्गलत्वं बोध्यम् । ( अपरवक्त्रं छन्दः ) । **सुरेति** । सुरालयो देवतागृहं मदिरागृहं वा । प्राप्ता पर्याप्ता शत्रुवधक्षमा सेना येन, प्राप्तं पर्याप्तमतिशयितं कम्पनं येनेति वा । मार्गणा बाणा मार्गणमन्वेषणं वा । प्रवणस्तत्परः । भास्वन्ती शोभमाना भूतिर्विभूतिर्भस्म वा यस्य । **उपस्थापकमिति** । तत्र प्रकरणाद्यभावात्तात्पर्यसंदेहेन स्तुतिर्निन्दा वेति संदेहः । **तस्याधीति** । अधिमात्रो दृढज्ञानकार्युपायो यमादिर्यस्येत्यर्थः । तीव्रः परमः संवेगो वैराग्यमुपायानुष्ठानशैघ्र्यं वा यस्य तत्तायुक्तस्य दृढभूमेर्दृढसंस्कारजनकस्य प्रियस्याऽऽत्मसाक्षात्कारस्य प्राप्तौ सत्यां स यत्नश्चित्तैकाग्र्यविषयको यत्नो मोक्षरूपफलभाग्जात इत्यर्थः ।

---

१ ग. पितृगृह° । २ क. °ङ्गलम् । ३ क. °क्यते । ४ ग. सुरादिश° । ५ क. °त्रप्र° । ६ क. °वने वं° । ७ क. °ध्यमसं° ।

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥ १८१ ॥

अत्र गल्लादयः शब्दा ग्राम्याः ।

वस्त्रवैदूर्यचरणैः क्षतसत्त्वरजःपरा ।
निष्कम्पा रचिता नेत्रयुद्धं वेदय सांप्रतम् ॥ १८२ ॥

अत्राम्बररत्नपादैः क्षततमा अचला (भूः) कृता, नेत्रद्वन्द्वं बोधयेति नेयार्थता ।

धम्मिलस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥ १८३ ॥

---

ग्राम्यं यथा—ताम्बूल० ।

अत्र गल्लभल्लमानुषखादनपानशब्दा ग्राम्याः ।

नेयार्थं यथा—वस्त्रवै० ।

अत्र वस्त्रवैदूर्यशब्देनाम्बरमणेर्विवक्षितत्वाद्वस्त्रशब्देन गगनं विवक्षितम् । न चास्य तत्र शक्तिरिति वाचकत्वलक्षणेन शक्यसंबन्धेनाम्बरपदं लक्षयति । तस्माच्च गगनप्रतीतिः । यद्वा स्ववाचकवाच्यत्वलक्षणशक्यसंबन्धेन गगनमेव लक्षयतीति लक्षितलक्षणा लक्षणा वेति वस्तुगतिः । एवं वैदूर्येत्यस्य मणौ चरणेत्यस्य पादे सत्त्वरजःपरेत्यस्य तमसि निष्कम्पेत्यस्य चाचलायां भूमौ युद्धमित्यस्य द्वन्द्वे वेदयेत्यस्य बोधने लक्षणैव । न च तद्बीजं रूढिः प्रयोजनं वेति नेयार्थत्वम् ।

क्लिष्टं यथा—धम्मिलस्य० ।

---

दृढभूमिरित्यसमस्तम् । दीर्घकालादरनैरन्तर्यसेविताभ्यासार्थकं यत्नविशेषणं वा । ताम्बूलेति । यथा सदैव खादनं भक्षणं पानं च करोति तथा तु तथैव भल्लं सम्यग्जल्पतीत्यर्थः । नैसर्गिकत्वं चात्र साधर्म्यम् । ग्राम्या इति । गल्लादयो गण्डादिषु विदग्धैर्न प्रयुज्यन्त इत्यर्थः । वस्त्रेति । ( सखीं विबोधयन्त्याः कस्याश्चिदुक्तिः ) । वस्त्रमम्बरं तस्य वैदूर्यं मणिः सूर्यस्तस्य चरणैः पादैः किरणैः क्षतं सत्त्वरजोभ्यां परं तमोऽन्धकारो यस्या ईदृशी निष्कम्पाऽचला भूमी रचिता कृता तत्सांप्रतं नेत्रयुद्धं नेत्रद्वन्द्वं वेदय बोधयोद्घाटयेत्यर्थः । वाचकत्वेति । स्वशक्यवाचकत्वेत्यर्थः । लक्षितलक्षणेति । इदमाद्यपक्षे । लक्षितेन पदेन बोधनात् । द्वितीय आह—लक्षणा वेति । तमसीति । सत्त्वरजःपरत्वेन तमसो गुणस्य बोधनेऽप्यन्धकारे लक्षणैवेति भावः । बोधन इति । उद्घाटनरूप इत्यर्थः । धम्मिलस्येति । कुरङ्गशावाक्ष्या अपूर्वस्य बन्धस्य विशिष्टोत्पत्तिः संबन्धो यत्र तादृशस्य

---

१ ग. मानवः । २ क. °त्रयुगं वे° । ग. त्रद्वंद्वं बोधय । ३ क. पादैर्हततमा । ४ क. °र्यम् । °ध । ५ क. चेति ।

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति संबन्धे क्लिष्टत्वम् ।

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिग्धिक्छक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥ १८४ ॥

अत्रायमेव न्यक्कार इति वाच्यम् । उच्छूनत्वमात्रं चानुवाद्यम्, न

---

अत्र कुरङ्गशावाक्ष्या धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति संबन्धे प्रतीतिव्यवधानम् ।

अविमृष्टविधेयांशं यथा—न्यक्कारो० ।

अत्र प्राप्तमरिसत्त्वमयमित्यनूद्याप्राप्तं न्यक्कारत्वं विधीयते । अतोऽयमेव न्यक्कार इति वाच्यम् ।

'अनुवाद्यमनुक्त्वैव नाभिधेयमुदीरयेत् ।'

इति वृद्धवचनात् । अन्यथा तु वैपरीत्येन विलम्बेन वा तथाभावः प्रतीयेत । अयं न्यक्कार इत्युभयोः पदयोर्दुष्टत्वाद्वाक्यदोषत्वम् । अत एव समासगतमेव दुष्टं

---

धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं निकाममतिशयेन न रज्यति, अपि तु सर्वस्येत्यर्थः । आसत्तिज्ञानविलम्बादत्र विलम्बः । ( आर्याच्छन्दः ) । न्यक्कार इति । ( हनुमन्नाटके चतुर्दशाङ्के ) रामेण राक्षसक्षये क्रियमाणे क्षुब्धस्वान्तस्य रावणस्य स्वाधिक्षेपोक्तिरियम् । अयमेव मे न्यक्कारो निन्दा यदरयः सन्तीति शेषः । अन्यस्य तु तत्कृतपराभवादि । अरयो नत्वेको द्वौ वा । अनेन पूर्वमेकोऽपि नाऽऽसीदधुनाऽकस्मादेव बहव इति व्यज्यते । तत्रापि तेष्वपि मुख्यस्तापसः । आभ्यां भक्ष्यत्वशस्त्रानभिज्ञत्वे द्योत्येते । अत्रैव मत्समीप एव न तु दूरे । कुलं बालवृद्धस्त्रीप्रभृति । निहन्ति । स्त्रीवधस्य भूतत्वेऽपि वर्तमानसामीप्यविवक्षया सर्वत्र वर्तमाननिर्देशः । क्वचिद्राक्षसभटानिति पाठः । एतावता न्यक्काराातिशयः । अहो इति निर्वेदातिशयः । रावयति लोकानिति रावणः । अनेन तत्सहनेऽनौचित्यातिशयः । जीवति, काका न जीवतीत्यर्थः । धिग्धिगिति निन्दातिशये । अत एव शक्रजितामित्युक्तिः । शक्रोऽपि येन जितस्तस्य मनुष्यमात्राज्जयेन निन्दातिशयप्रतीतेः । प्रबोधितवतेति णिजन्ताद्भावे क्तस्ततो मतुप् । न तु क्तवत्वन्तः । कर्मणि तस्यासाधुत्वात् । स्वर्गस्य ग्रामटिकेवाल्पग्रामवद्विलुण्ठनम् । ग्रामशब्दादल्पार्थे 'तद्धिताः' इति बहुवचनबोध्यष्टिकच्प्रत्ययः । एभिः प्रसिद्धपराक्रमैर्भुजैः किम् । भुजद्वयशालिशत्रोरप्यजयात् । अरिसत्त्वमिति पाठः । अभिधेयमिति पाठेऽपि विधेयमित्येवार्थः । ( शार्दूलविक्रीडितं छन्दः ) । वृद्धवचनादिति । उद्देश्यविधेयताशालिबोधे विधेयवाचकप्राग्वर्त्युद्देश्यवाच-

---

१ क. °सभटाजीव° ।

वृथात्वविशेषितम् । अत्र[1] च शब्दरचना विपरीता[2] कृतेति वाक्यस्यैव दोषो न वाक्यार्थस्य ।

यथा वा,

अपाङ्गसंसर्गितरङ्गितं दृशो-
र्भ्रुवोररालान्तविलासि[3]वेल्लनम् ।
विसारिरोमाञ्चनकञ्चुकं तनो-
स्तनोति योऽसौ सुभगे तवाऽऽगतः ॥ १८५ ॥

अत्र योऽसाविति पदद्वयमनुवाद्य[4]विधेयार्थतया विवक्षितमनुवाद्यमात्रप्रतीतिकृत् ।

---

पदमित्युक्तम् । अपि चात्र वृथोच्छूनैरित्यसंगतम् । उच्छूनत्वमात्रस्यैवानुवादौचित्यात् । न तु वृथात्वविशेषितस्य । किमेभिरित्यनेन वृथात्वस्यैव विधेयत्वात् । अर्थभेदोपगमेऽपि किमेभिरिति वैफल्याभिधानविरोधात् । वृथोच्छूनस्य तदौचित्यात् । ननु न्यक्कारोऽयमित्यत्र वैपरीत्येन विधेयत्वप्रत्ययादर्थदोष एवायं स्यादिति चेत् , न[5] खल्वत्र विवक्षितोऽर्थो दुष्टः । किंतु क्रमविशेषादविवक्षितार्थप्रत्यय एवेति शब्दविशेष एवापराध्यति । शब्दान्तरेण तत्प्रतीतेरवैकल्यात् । यथा विरुद्धमतिकृति ।

न केवलं विधेयस्योपसर्जनत्वव्युत्क्रमत्वाभ्यामेवायं वाक्यदोषः । किंतु विधेयानुपस्थित्याऽपि । यथा—**अपाङ्ग०** ।

अत्र योऽसाविति पदद्वयमुद्देश्यविधेयार्थकतया विवक्षितम् । उद्देश्यवाचिनो यच्छब्दस्य स्वार्थपरामर्शकतच्छब्दापेक्षितत्वात् । न चैतत्तत्प्रतिपादकम् । यच्छब्दसांनिध्ये-

---

कपदजोपस्थितिर्हेतुरिति भावः । **वृथात्वस्यैव विधेयत्वादिति** । घटो घट इतिवदयोग्यमेतदिति भावः । **अर्थभेदोपगमेऽपीति** । उच्छूनताया भुजानां वैफल्यस्य भेदादिति भावः । अत एव किंपदवृथापदयोर्न पौनरुक्त्यम् । **वैफल्येति** । अस्यानौचित्यविशिष्टतयेति शेषः । **तदौचित्यादिति** । एवं चानुवादोऽयुक्त इति भावः । प्रसङ्गाचैतत्कथनम् । अयुक्तानुवादेऽपि विधेयाविमर्शः फलतीति कश्चित् । **शब्दान्तरेण** । शब्दधर्मक्रमविशेषभूतरचनान्तरेणेत्यर्थः । **विधेयस्योपसर्जनत्वेति** । वृथोच्छूनैरित्यंश इदम् । **अपाङ्गेति** । ( नायकागमनोत्सवं निवेदयन्त्याः सख्या इयमुक्तिः ) । तवेत्यस्य षष्ठ्यन्तत्रयेऽप्यन्वयः । अपाङ्गसंबद्धं दृशोस्तरङ्गितं वक्रप्रेक्षणपरम्परामित्यर्थः । भ्रूसंबन्धिकुटिलान्तभागे विलासयुक्तं वेल्लितं वक्रताधिक्यं नर्तनं वा विसारि प्रकाशयोग्यं रोमाञ्चनमेव कञ्चुकं सर्वाङ्गव्यापनात् , यस्तनोति स आगत इत्यन्वयः । ( वंशस्थं वृत्तम् ) । **उद्देश्यविधेयार्थकतयेति** । तद्बोधकवाक्यार्थघटकार्थकतयेत्यर्थः । यस्त-

---

१ ग. °त्र श° । २ क. °रीतैव कृ° । ३ क. विलास वेल्लितम् । ४ क. °द्यमा° । ५ क. न ह्यत्र ।

[ तथा हि, प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते। क्रमेणोदाहरणम्,

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम्।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः॥ १८६॥

द्वयं गतं संप्रति शोचनीयतां
समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी॥ १८७॥

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षिताऽसि॥ १८८॥

---

नादसादीनां प्रसिद्धपरामर्शकत्वात्। ननु केवलयोरपि यत्तदोः प्रयोगदर्शनात्सापेक्षत्वमेवानयोरसिद्धम्। उच्यते—अनयोः परस्परार्थापेक्षार्थकत्वं नियतमेव। एतदेवोच्यते 'यत्तदोर्नित्याभिसंबन्धः' इति। स चाभिसंबन्धः शाब्द आर्थो वा। तत्र द्वयोरुपादाने शाब्दः। यथा 'स दुर्मतिः श्रेयसि यस्य नाऽऽदरः' इति। एकस्य द्वयोरपि वाऽनुपादाने त्वार्थः। अनुपात्तस्यापि सामर्थ्यादेवाऽऽक्षेपात्।

तत्र तच्छब्देन यच्छब्दाक्षेपः प्रक्रान्तप्रसिद्धानुभूतार्थकेन, यथा—**कातर्यं०**।

अत्र स इति प्रक्रान्तं राजानमाह।

**द्वयं०**।

अत्र सेति प्रसिद्धा।

**उत्कम्पिनी०**।

---

नोऽस्यसौ समागत इत्युद्देश्यविधेयभावो विवक्षितः। न च प्रतीयते। योऽसौ प्रसिद्ध इत्येव प्रतीतेः। तदाह—**यच्छब्देति**। यच्छब्दाक्षेपो ननूपादानमेवेत्यर्थः। **कातर्यमिति**। (रघुवंशे सप्तदशसर्गेऽतिथिनामकराज्ञो वर्णनमिदम्)। चापलं चपलताप्रयुक्तं चेष्टितमित्यर्थः। चापले स्वार्थिकोऽण्। तदीयचेष्टितमित्यर्थ इत्यन्ये। केवलेति लिङ्गविपर्यासेन शौर्येऽपि योजनीयम्। आक्षेपे बीजं तु व्युत्पत्तिवैचित्र्यं पदस्वभावो वा। **प्रक्रान्तमिति**। सोऽतिथिर्नाम राजा। अत्रोभाभ्यामित्यनेनैव सामर्थ्यात्परस्परसाहित्यलाभे समेताभ्यामिति चिन्त्यप्रयोजनम्। प्रक्रान्तमतिथिसंज्ञम्। **द्वयमिति**। (कुमारसंभवे पञ्चमसर्गे) बटुवेषेण पार्वतीं छलयतः शिवस्योक्तिः। पूर्वमेका चन्द्रकलैव शोच्याऽऽसीत्, तवैवं निश्चये सति द्वयं शोचनीयतां गतमिति भूतकालेनाऽऽवश्यकत्वं शोकस्य व्यज्यते। द्वितीयश्चकारो भिन्नक्रमः। तेन त्वं चेत्यर्थः। (वंशस्थं वृत्तम्)। **उत्कम्पिनी इति**। रत्नावल्यां दग्धां वासवदत्तां संभाव्य तामनुध्याय शोचतो वत्सराजस्योक्तिः।

---

१ क. चापलचेष्टितम्। २ ग. °लिताश्चलान्ता। ३ क. धूमाश्चितेन।

यच्छब्दस्तूत्तरवाक्यानुगतत्वेनोपात्तः सामर्थ्यात्पूर्ववाक्यानुगतस्य तच्छब्दस्योपादानं नापेक्षते । यथा,

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥ १८९ ॥

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः । यथा—अत्रैव

---

अत्र ते इत्यनुभूते । त्रिष्वप्येतेषु[3] यच्छब्दोपादानं नावश्यापेक्षणीयम् । तदभावेऽप्याक्षेपादेव यः पूर्वोक्तगुणवान्, या प्रसिद्धा, ये अनुभूते इति च प्रत्ययाविघातात् । यच्छब्दस्तूत्तरवाक्यगत एव सर्वत्र तच्छब्दाक्षेपसमर्थः । यथा—साधु चन्द्र० ।

यथा च मम—

'मातर्भारति वत्सवत्सलतया किं नाम नाऽऽचर्यते
मित्राणि स्थिरताविवेकविनयाः कार्यं सुहृत्प्रार्थितम् ।
इत्यालोच्य विमुच्य मामिह मनागन्तर्हितं स्थीयतां
यावत्त्वादृशविप्रयोगसुभगा[4] लक्ष्मीर्मया लभ्यते ॥'

पूर्ववाक्यगतस्तु तदाक्षेपासमर्थतया तदुपादानमेवापेक्षते । यथाऽत्रोदाहरणे पूर्वार्धपादयोर्व्यत्यासे ।

---

उत्कम्पिनी । कम्पयुक्ता । भयेन गलितोत्तरीयप्रान्ता ते अनुभूते विधुरे कातरे लोचने प्रतिदिशं कश्चिन्मां त्रास्यतीति बुद्ध्या क्षिपन्ती त्वं क्रूरेणातिप्रवृद्धेन दारुणतया निष्करुणतया दहनेन दाहजनकधर्मवता सहसा तत्कालमेव दग्धैव यतो धूमान्धितेन तेन न वीक्षिताऽसि न दृष्टाऽस्यतो दग्धाऽसि। यदि पश्येत्तर्हि न दहेदिति भावः। (वसन्ततिलका छन्दः) । **साध्विति** । अभिरामताधिके सौन्दर्याधिके चन्द्रमस्युदिते सति पुष्करैः पद्मैर्यन्मीलितं तत्साधु कृतम् । तेन चन्द्रमसा तु कामिनीमुखे जयिनि सर्वजेतरि सति उद्यता साहसमविचार्यकारित्वमनुष्ठितमित्यर्थः । ( रथोद्धता छन्दः ) । **मातरिति** । [ हे मातर्भारति वत्से ( मयि ) या वत्सलता तया किं नाम ( अकार्यमपि ) त्वया नाऽऽचर्यते न क्रियते, अपि तु क्रियत एवेत्यर्थः। तथा हे मित्राणि स्थिरता स्थैर्यं विवेको विचारो विनयो नम्रता च तत्संबोधनम्। सुहृदा ( मया ) प्रार्थितं कार्यमकार्यमप्येतदवश्यकर्तव्यमित्यालोच्य विचार्य ( युष्माभिर्मातृसुहृद्भिः ) इह सभायां मां विमुच्य मनागीषदन्तर्हितं गुप्तं यथा तथा स्थीयताम् । कियत्कालं तत्राऽऽह—यावदिति । यावत्त्वादृशानां भारतीस्थिरतादीनां विप्रयोगेण विरहेण सुलभा श्रीर्मया लभ्यते तावदित्यर्थः । श्रियः सरस्वत्या गुणैश्च साकं विरोधस्य लोके प्रसिद्धत्वादेवं याचनम् । शार्दूलविक्रीडितं छन्दः ] । **यथाऽत्रैवेति** । साधु चन्द्रमसीति

---

१ क. ग. 'क्यार्थग' । २ क. सापेक्षः । ३ क. 'प्येषु । ४ मु. पु. सुलभा ।

श्लोक आद्यपादयोर्व्यत्यासे । द्वयोरुपादाने[1] तु निराकाङ्क्षत्वं प्रसिद्धम् । अनुपादानेऽपि[2] सामर्थ्यात्[3]क्वचिद्द्वयमपि गम्यते ।

यथा,

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ १९० ॥

अत्र य उत्पत्स्यते तं प्रतीति ।

एवं च ] तच्छब्दानुपादानेऽत्र साकाङ्क्षत्वम् । न चासाविति तच्छब्दार्थमाह ।

---

ननु पूर्ववाक्यगतोऽप्ययं तदाक्षेपसमर्थः, यथा 'तच्चक्षुर्यदि हारितं कुवलयैः' इत्यादाविति चेत् । सत्यम् । समर्थो न तु सर्वत्र । किं तु यदीत्येतावद्रूपस्तत्पर्यायैः[4] । उत्तरवाक्यगतस्तु सकलरूपस्तथेति विशेषः । यद्वा यदीत्यव्ययं न तु यच्छब्दः । तच्च भिन्नस्वभावमेव । एवं चेच्छब्दोऽपि ।

द्वयोरप्यनुपादानेऽप्यार्थो यत्तदोः संबन्धः । यथा—ये नाम० ।

अत्र य उत्पत्स्यतेऽस्ति वा मम समानधर्मा तं प्रतिं यत्न इति स्फुटमेवावगम्यते । यथाश्रुते हि न पूर्वार्धेन कथमप्यन्वयः ।

यत्तु 'प्रक्रान्ताद्यर्थकस्य तच्छब्दस्य यच्छब्दापेक्षैव न' इति व्याख्यानं तद्व्यक्तिविवेकाद्यनालोचननिबन्धनं प्रकाशकारानभिमतं च । यदयं 'यच्छब्दोपादानं नापेक्षते' इत्याह, न तु

---

पद्ये । तच्चक्षुरिति । तच्चक्षुर्यद्यस्ति तर्हि कुवलयैर्हारितमिति प्रतीतेस्तर्हिशब्दोपादानं विनाऽपि प्रतीतेर्निर्बाधत्वादिति भावः । ये नामेति । (मालतीमाधवे प्रथमाङ्के भवभूतेरुक्तिरियम् ] । न इति 'अस्मदो द्वयोश्च' इति एकत्वे बहुवचनम् । तेन ममेत्यनेन न विरोधः । नामेति क्रोधे कुत्सने वा । अवज्ञामवहेलनां ये प्रथयन्ति कुर्वन्ति ते किमपि जानन्ति । न किमपीत्यर्थः । तान्प्रति एष यत्नोऽपि न । अत्र ग्रन्थस्य परार्थत्वाद्विशेषनिषेधस्य च शेषाभ्यनुज्ञाफलकत्वात्कं प्रतीति जिज्ञासायामाह—उत्पत्स्यत इति । उत्पत्स्यत इत्यत्र हेतुः कालस्य निरवधित्वम्, अस्तीत्यत्र तु पृथ्व्या विपुलत्वम् । य उत्पत्स्यतेऽस्ति वा तं प्रति यत्न इति यत्तदोर्वेत्यस्य चाध्याहारेण योजना । ( वसन्ततिलका छन्दः ) । अत्रेति । उत्तरार्धे इति भावः । स्फुटमेवेति । यत्तच्छब्दाक्षेपादिति भावः । आक्षे-

---

१ क. °ने नि° । २ क. °पि द्वयमपि क्वचित्सामर्थ्याद्गम्यते ३ क. °र्थ्यात्कुत्र चि° । ४ क. °यश्चेदिति वा । ५ क. °व्ययमिदं न ।

असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवाऽऽगतः ॥१९१॥

अत्र हि न तच्छब्दार्थप्रतीतिः ।

प्रतीतौ वा,

करवालकरालदोःसहायो युधि योऽसौ विजयोऽर्जुनैकमल्लः ।
यदि भूपतिना स तत्र कार्ये विनियुज्येत ततः कृतं कृतं स्यात् ॥१९२॥

अत्र स इत्यस्याऽऽनर्थक्यं स्यात् ।

अथ,

---

'यच्छब्दं नापेक्षते' इत्यादि । तस्माद्यथाव्याख्यातमेवाऽऽदरणीयम् । एवं च 'योऽसौ सुभगे' इत्यत्र तच्छब्दस्यानुपादानादाक्षेपासंभवाच्च यच्छब्दः साकाङ्क्षः ।

ननु स्यादेवैतत् । यदि तच्छब्दार्थकोऽयमदःशब्दो न स्यादिति चेत् । तत्किमदसस्तच्छब्दपर्यायता । तथा सति—**असौ०** ।

इत्यत्रादश्शब्दस्तच्छब्दार्थमेवाभिदध्यान्न त्विदमर्थम् । अथात्र वैयात्यादिष्टापत्तिमालम्बसे तर्हि—**करवाल०** ।

इत्यत्र स इत्येतत्पुनरुक्तं स्यात् । अदश्शब्देन तदर्थाभिधानात् ।

नन्वर्थान्तरमस्य न निषेधामः । किं त्वनुजानीमस्तदर्थकत्वम् । कथमन्यथा—

---

**पासंभवाच्चेति** । पूर्ववाक्यस्थत्वाद्यच्छब्दस्येति भावः । एवं च विधेयाविमर्श इति बोध्यम् । अत्र यच्छब्द उद्देश्यसमर्पक एव तच्छब्दो विधेयसमर्पक इति प्राञ्चः । **असाविति** । ( हनुमन्नाटके षष्ठाङ्के पद्यमिदम् ) । मरुत्पवनो हनुमत्पिता च । चुम्बनं पक्षे मुख्यं पक्षे संयोगः । केसरो बकुलः सटा च । ताराधिपश्चन्द्रः सुग्रीवश्च । मण्डलं बिम्बं राष्ट्रं च प्रसन्नताराधिपमण्डलमेवाग्रणीर्यत्र प्रसन्नताराधिपस्य सुग्रीवस्य मण्डले राष्ट्रेऽग्रणीरिति चार्थः । वियुक्तो रामो दाशरथिः, वियुक्ता रामा कामिनीत्यर्थः । आतुरदृष्टिवीक्षितत्वं सहायोत्कण्ठया विरहोद्दीपकत्वेन च । ( वंशस्थं वृत्तम् ) । **न त्विदमर्थमिति** । तथा सति विधेयत्वावगमेऽनुवादकयच्छब्दापेक्षा स्यादिति भावः । **वैयात्यादिति** । प्रक्रान्ताद्यर्थकतत्पदवत्क्वचिददःपदेऽपि तदनपेक्षा स्यादिति भावः । **करवालेति** । करवालेन करालं भयजनकं दोः सहायं यस्य । युधि विजयनामा योऽर्जुनः स इव एक एव मल्लः । यद्वा विजय इति सप्तमी । विजयार्जनेति पाठे तु विजयस्यार्जन एकमल्ल इत्यर्थः । ईदृशो यः स यदि तत्र कार्ये भूपतिना विनियुज्येत ततः कृतं कार्यं कृतं

---

१ क. °यार्जनै° । २ क. ग. 'कथं भवेत् । ३ क. ननु । ४ क. °ख्यानमे° । ५ क. इति पुन° ।

योऽविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः ।
आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥ १९३ ॥

इतीदंशब्दवददःशब्दस्तच्छब्दार्थमभिधत्त इति ।
उच्यते । तर्ह्यत्रैव वाक्यान्तर उपादानमर्हति न तत्रैव ।
यच्छब्दस्य हि निकटे स्थितस्तच्छब्दः प्रसिद्धिं परामृशति ।
यथा,

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताक्षैस्तदाऽनेन नूनं तदपि हारितम् ॥ १९४ ॥

इत्यत्र तच्छब्दः ।

---

योऽविकल्प० ।

इत्यत्रेदंशब्दस्यापि तच्छब्दार्थकता । इदमदसोः समानशीलत्वादिति चेत् । सत्यमात्थ । परं तु यच्छब्दाव्यवहितानन्तरवर्ती समानाधिकरणस्तच्छब्दोऽपि प्रसिद्धिमात्रे निरूढः किं पुनरिदमादिः । यथा—यत्तदू० ।

इत्यादौ । तस्मात् 'योऽविकल्पम्—' इत्यत्रैव व्यवधानेनादःप्रयोगो युक्तः, न त्वव्यवधानेन ।

---

युक्तं स्यादित्यर्थः । संभूतमेव स्यादिति वा । ( मालभारिणी छन्दः ) । **योऽविकल्पमिति** । ईश्वरं प्रति भक्तस्योक्तिः । अविकल्पं निःसंदेहमिदं प्रसिद्धं निखिलमर्थमण्डलं भवद्वपुस्त्वदभिन्नं पश्यति । बाधेन सामानाधिकरण्यम् । परमार्थतोऽसत्त्वेन तद्बाधेन भवन्तमेव पश्यतीत्यर्थः । यथाश्रुते जडस्य प्रपञ्चस्य ब्रह्मस्वरूपत्वाभावादसंगत्यापत्तिः । स्वात्मेति स्वशब्दः स्वीयवचनः । आत्मशब्दः स्वरूपे । तेन स्वात्मपक्षः स्वीयपक्ष आत्मरूपपक्षो वा । तत्राऽऽदौ स्वीयत्वेन ज्ञानं तत आत्मैव जगदिति ज्ञानम् । परिपूरितत्वं चैतदेव यज्जगतस्तादृशज्ञानविषयत्वम् । अत एव नित्यसुखिनस्तत्स्वरूपस्य कुतो भयं न कुतोऽपीत्यर्थः । ( रथोद्धता छन्दः ) । **प्रसिद्धमात्र इति** । एवं च नायं विधेयसमर्पक इति भावः ।

'विभाति मृगशावाक्षी येदं भुवनभूषणम् '

इत्यादौ प्रसिद्धिबोधकत्वाभावात्समानाधिकरण इति । समानलिङ्गविभक्त्यादिक इत्यर्थः ।

'परदारापहर्ता यः स स्वर्गं नाधिगच्छति '

इत्यादिवारणायाव्यवहितेति । अत्र तु विसर्गेण व्यवहितः । अत्रैव यत्तदोर्व्यत्यासेऽतिप्रसङ्गवारणायानन्तरवर्तीति । **यत्तदिति** । ( वेणीसंहारे प्रथमाङ्के ) भीमस्य सहदेवं प्रत्युक्तिः । ( अस्य भूपतेर्युधिष्ठिरस्य तत् प्रसिद्धं यदूर्जितमुद्भटमत्युग्रं

---

१ क. ग. स्वात्म° । २ क. न च त° । ३ क. °स्य नि° । ४ क. ग. स्थितः प्र° ।

नतु कथम्,

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते!
धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव! प्रसीद ।
यद्यत्पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् ! भूयसे मङ्गलाय ॥ १९५ ॥

अत्र यद्यदित्युक्त्वा तन्म इत्युक्तम् ।

उच्यते । यद्यदिति येन केनचिद्रूपेण स्थितं सर्वात्मकं वस्त्वाक्षिप्तम्, । तथाभूतमेव तच्छब्देन परामृश्यते ।

---

कथं तर्हि—

' न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक् '

इत्यत्र तच्छब्दो न प्रसिद्धार्थ इति चेत् । य इत्यत्र विच्छेदेन व्यवधानात् । योऽसावित्यत्र तु संधिना यच्छब्दैकनिविष्टैकदेशत्वेनाविच्छेदात् । ननु भवेदेवं यदि यत्तदोर्नित्याभिसंबन्धः स्यात् । स एव तु नास्ति । कथमन्यथा ' यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे ' इत्यत्रैकयत्परामृष्टस्यैकेन तदा परामर्शेऽपि द्वितीययच्छब्दान्निराकाङ्क्षा प्रतीतिः । द्वितीयतत्पदाभावात् । न च तत्राऽऽक्षेपोऽपि । यदः पूर्ववाक्यगतत्वादिति । मैवम् । न खल्वेकेनैव रूपेण यत्तद्भ्यां परामर्शनियम इति ब्रूमः । किं त्वेकस्य ताभ्यां परामर्श इति । तथा चात्रापि पापात्मकं वस्तु येन केनचिद्विशेषद्वयेन यत्पदाभ्यां परामृष्टं तत्पदेन तु पापत्वेनैकेनेति को विरोधः । वस्तुतस्तु यद्यदिति न पदद्वयम् । किंतु 'नित्यवीप्सयोः' (पा०सू०८।१।४)

---

क्षात्रं तेज आसीत्तदा द्यूतप्रसङ्गेऽक्षैर्दीव्यताऽनेन युधिष्ठिरेण नूनं तदपि तेजोऽपि हारितम् । अपिना राज्यादिकम् ) । **विच्छेदेन** । असंहिताकृतार्धमात्राकालेन । विसर्गेण व्यवधानमित्यन्ये । **कल्याणानामिति** । मालतीमाधवे प्रथमाङ्के सूत्रधारस्य सूर्यप्रार्थनेयम् । हे विश्वमूर्ते सूर्य त्वं कल्याणानां कल्याणहेतूनां महसां तेजसां भाजनं पात्रमसि । अथ मयि धुर्यां नृत्यभारवहनसमर्थां लक्ष्मीं संपत्तिं भृशमत्यंतं धेहि अर्पय । हे देव प्रसीद । हे जगन्नाथ नम्रस्य मे यद्यज्ज्ञातमज्ञातं च पापं तत्प्रतिजहि नाशय । हे भगवन्भूयसे मङ्गलाय मङ्गलार्थं भद्रं भद्रमत्यन्ताभीष्टं वितर देहि । ( मन्दाक्रान्ता छन्दः ) । यच्छब्दार्थस्तदा परामृश्यत इति नियमो न तु यावद्यत्पदं तावत्तत्पदमितीत्याशयेन समाधत्ते— **मैवमिति** । **विशेषद्वयेनेति** । उपपातकत्वमहापातकत्वादिनेत्यर्थः । **एकेनेति** । बुद्धिविषयतावच्छेदकावच्छिन्ने तदादीनां शक्तेरिति भावः । अत एव—

'स श्लाघ्यः स गुणी धन्यः स शूरः स च पण्डितः ।
स कुलीनः स विक्रान्तो यस्त्वया देवि वीक्षितः ।

---

१ क. स्वमिह महसामीशिषे त्वं विधत्से, पुण्याम् । २ क. शं देहि । ३ क. °च्छब्दनि° ।

यथा वा,

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुतां गता किमथ वा मातैव मे मध्यमा ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥ १९६ ॥

अत्राऽऽर्यस्येति तातस्येति च वाच्यम् । न त्वनयोः समासे गुणी-

---

इति सूत्रेण वीप्सायां यदो द्वित्वापन्नोऽयमादेशः । तथा चाऽऽदेशिनैकेन यत्पदेन तत्पदेन च द्वाभ्यामप्येकेनैव रूपेण पापपरामर्शः । आदेशस्तु साकल्येन संबन्धपरताग्राहक इति यत्पदीयेनैव तेन तदुपपत्तौ न तत्पदेऽपि । यत्र तु तत्पदेऽपि वीप्सा तत्र न यत्पदेऽप्यादेशः । किं तूभाभ्यां रूपद्वयेन सर्वोपस्थापनमिति सारम् ।

असमासवत्समासेऽप्यनेकपदगतत्वेनास्य वाक्यदोषत्वम् । यथा—**किं लोभेन०** ।

अत्र कलत्रे तातसंबन्धस्यानुजे चाऽऽर्यसंबन्धस्योत्कर्षाधायकत्वेन विधित्सितयोः समासाद्गुणीभावः । वाक्यदोषत्वं तु यथा तदुक्तम् । सोऽयं षष्ठीतत्पुरुषसमासः । एवं

---

इत्यादौ नानातत्पदपरामृष्टस्यैकेनैव यत्पदेन प्रतीतिरिति भावः । **तदुपपत्तौ** । प्राथम्यात्तेनैव साकल्येन संबन्धप्रतीत्युपपत्तौ । **न तत्पदेऽपीति** । वीप्साद्योतको द्वित्वापन्न आदेश इत्यर्थः । यत्र तु तत्पदप्राथम्यं तत्र तत्पद एवाऽऽदेशो न यत्पदे । यथा 'तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितम्' इति । **यत्र तु तत्पदेऽपि वीप्सेति** । अपिना यत्पदे । वीप्सा तदर्थे साकल्येन संबन्धः । **तत्र न यत्पदेऽप्यादेशः** । अपिना तत्पदे । आदेशो द्वित्वापन्नः । किं तु पदद्वयं पृथगेवेति भावः । यथा 'यं यं व्यतीयाय पतिंवरा सा विवर्णभावं स स भूमिपालः' इत्यादौ । अत्र नरेन्द्रकन्यया क्रमेण व्यतीतानां क्रमेणैव वैवर्ण्यप्राप्तिरिति पृथक्पृथग्रूपेणैव पृथक्पदाभ्यां बोधः । तदेवाऽऽह—**किंतूभाभ्यामिति** । इदमपि क्रमभेदविवक्षायाम् । तद्भेदविवक्षाविरहेऽपि तथा प्रयोगे त्वेकत्राऽऽदेशो व्यर्थ एव । यथा

'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' ।

इत्यादौ । **किं लोभेनेति** । रामवनवासे हेतुं चिन्तयतो लक्ष्मणस्योक्तिरियम् । स विनयार्जवादिमत्त्वेन प्रसिद्धः । येन भरतेन कर्त्रा, मात्रा, करणभूतयैतद्वनवासादि एवं कपटेन कृतमुत्पादितम् । भरत इति नामग्रहणमनुचितकारित्वात्कोपेन । अथ वा मे माता मध्यमा कैकेयी स्त्रीषु निसर्गसिद्धां लघुतां गता । अथ वैतद्द्वितयमपि मम चिन्तितं मिथ्या । तत्र हेतुः । असौ भरत आर्यो रघुनाथस्तदनुजः । गुरुः । अत्र म इति शेषः । तथा च भरतेऽत्यसंभावितमेतत् । माता च तातकलत्रमित्यतो हेतोर्विधात्राऽनुचितं कृतं मन्ये । ( शार्दूलविक्रीडितं छन्दः ) । **उत्कर्षाधायकत्वेनेति** । तादृशस्य हि प्राधान्यमुचितमिति भावः । **तदुक्तमिति** । आर्यानुजस्ता-

---

१ क. ग. तथा किं लो° । २ क. °व वा म° । ३ क. °ति वा° । ४ क. यदी° । ५ क °रुषः स° ।

भावः कार्यः। एवं समासान्तरेष्वप्युदाहार्यम्[1] ॥

विरुद्धमतिकृद्यथा,

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्तयः।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः ॥ १९७ ॥

अत्र क्षमादिगुणयुक्ताः सुखमासत इति विवक्षिते हता इति विरुद्धार्थप्रतीतिः[2]।

पदैकदेशे यथासंभवं क्रमेणोदाहरणानि—

अलमतिचपलत्वात्स्वप्नमायोपमत्वा-
त्परिणतिविरसत्वात्संगमेनाङ्गनायाः।
इति यदि शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥ १९८ ॥

---

समासान्तरेऽपि।

विरुद्धमतिकृद्यथा—**श्रित०**।

अत्र क्षान्तिमन्तोऽनुरक्तभुवः कल्याणालिङ्गिता युद्धक्षपणेन दुःखाभाववन्तः शेरत इति विवक्षिते भूमिपतिता रुधिरस्थानानि शिवाभिरालिङ्गिताः शरीरक्षपणेन गतप्राणेन्द्रियाः शेरत इति विरुद्धं प्रतीयते। अमतपरार्थे विरुद्धोऽप्यर्थो विवक्षित इति ततो भेदः। न च प्रकाशितविरुद्धसंकरः। तत्रार्थस्यात्र तु शब्दस्य व्यञ्जकतया विशेषात्।

पदैकदेशे यथासंभवमुदाहरणानि। तत्र श्रुतिकटु[3] यथा—**अलम०**।

---

तकलत्रमित्यनेकपदगतत्वाद्वाक्यदोषत्वमिति भावः। आर्यानुजस्वादिविशिष्टविधिसंभवाद्विरोध्यादिसाधारणसंबन्धस्योत्कर्षहेतुत्वेन तस्यैव युक्तत्वाच्च नायं दोष इत्येके। **श्रितक्षमा इति**। सामोपलब्धसिद्धीनां राज्ञां वर्णनमिदम्। अद्य ते राजानः श्रिता आश्रिता क्षमा क्षान्तिर्यैस्ते रक्ताऽनुरक्ता भूः, भूस्थो लोको येषु ते। शिवेन कल्याणेनाऽऽलिङ्गिता मूर्तयो येषां ते। विग्रहस्य युद्धस्य क्षपणेन त्यागेन गतमसुखं दुःखं येषां तथाभूताः सन्तः शेरते निद्रान्तीति विवक्षितोऽर्थः। पक्षे श्रिता क्षमा भूर्यैस्ते। रक्तस्य रुधिरस्य भुवः स्थानानि। शिवाभिः क्रोष्ट्रीभिरालिङ्गिता मूर्तयो येषां ते। विग्रहस्य देहस्य क्षपणेन नाशेन गतान्यसुखानि येषाम्। असवः प्राणाः खमिन्द्रियमिति विरुद्धोऽर्थः। **युद्धक्षपणेनेति**। सामोपायाभिनिवेशाद्युद्धत्यागेनेत्यर्थः। **विरुद्धं प्रतीयत इति**। इदं च प्रकृतप्रतीतिजन्यचमत्कारापकर्षकमिति बोध्यम्। न चामङ्गलाश्लीलमत्र। उपधेयसांकर्येऽप्युपाधेरसंकीर्णत्वादिति दिक्। **अलमिति**। ( कस्यांचित्कामिन्यामनुरक्तस्य कस्यचित्कामुकस्योक्तिरियम् )। अङ्गनासंगमस्यालंतायां

---

१ क. ग. °म्। श्रित°। २ ग. °द्धा प्र°। ३ क. °टुकं य°।

**अत्र त्वादिति।**

**यथा वा,**

**तद्गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरलभ्य एव।**
**अपेक्षते प्रत्ययमङ्गलब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः॥ १९९॥**

**अत्र[2] द्ध्यै ब्ध्यै इति कटु।**

**यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति।**
**बलाहकच्छेदविभक्तरागामकालसंध्यामिव धातुमत्ताम्॥ २००॥**

---

एकत्रपदे वर्णद्वयकटुत्वे पददोषत्वम्। पदस्यैव कटुत्वप्रतीतेः। एकस्यैव तथात्वे पदैकदेशदोषत्वम्। न चैवं 'सोऽध्यैष्ट—' इत्यादौ प्रत्येकं पददोषाभावात्कथं वाक्यदोषतेति वाच्यम्। न हि नानापददुष्टत्वे वाक्यदोषता। किं तु नानापदवृत्तितामात्रेण। सा च पदावच्छेदेन तदेकदेशावच्छेदेन वेति को विशेषः। त्वादित्यस्य कटुत्वासंमतौ—**तद्गच्छ०।**

अत्र सिद्ध्यै लब्ध्यै इत्युदाहार्यम्।

निहतार्थं यथा—**यश्चा०।**

---

हेतवश्चपलत्वादयः। मन्त्रादिसामर्थ्यादसमर्थप्रकाशनं माया। स्वप्नश्च माया चेति द्वन्द्वः। (मालिनी छन्दः)। **एकस्यैवेति।** अत्र विरोधिनं शान्तमुपमर्द्य विश्रान्तस्य शृङ्गारस्यातिमधुरत्वेन क्षुद्रापचारस्याप्यसहतया पदैकदेशगतश्रुतिकटुत्वस्याप्यपकर्षकतेत्यर्थः। **तद्गच्छेति।** (कुमारसंभवे तृतीयसर्गे कामं प्रतीन्द्रस्योक्तिरियम्)। सिद्ध्या अस्मदभिमतलब्ध्यै तत्त्वज्ञानसिद्ध्यै च। नन्वधुना तत्त्वज्ञानं नोद्देश्यमत आह—कुरु देवकार्यम्। सर्वेषां देवानां न ममैव कार्यं स्कन्दोत्पत्तिरूपं कुरु। स्वानिष्टे कथं प्रवृत्तिः स्यादत आह—अर्थोऽयमिति। शिवस्य पार्वतीवशताकरणरूपदेवकार्यभूतोऽयमर्थः' अर्थान्तरं स्वानिष्टरूपं तल्लभ्यं यत्त तादृश एव। नन्वन्य एव तत्र नियुज्यतां तत्राऽऽह—उदयात्प्राग्बीजाङ्कुरोऽङ्गलब्ध्या अम्भ इवेदं कार्यं त्वामेव प्रत्ययं कारणमपेक्षते। एवं च दैवस्य दुरतिक्रमत्वादनिष्टशङ्का न कार्येति भावः। **ध्यै इति।** प्रार्थनेऽतिमधुरभाषणस्यैवौचित्येनास्यात्र दोषत्वं बोध्यम्। (उपजातिश्छन्दः)। **यश्चाप्सर इति।** (कुमारसंभवे प्रथमसर्गे हिमालयवर्णनमिदम्)। अप्सरसां यो विभ्रमो विलासस्तन्निमित्तं मण्डनानां भूषणानां गैरिकादिना संपादयित्रीं कर्त्रीम्। बलाहको मेघस्तच्छेदेषु खण्डेषु तच्छेदेन खण्डखण्डीभावेन वा विभक्तोऽवच्छेदकभेदेनावस्थितो रागो यस्यास्तादृशीमकालसंध्यामिव धातुमत्तां यः शिखरै-

---

१ ज. °य मुत्तमं त्वां बी°। २ ग. °त्र सिद्ध्यै लब्ध्या इति कष्टम्। य°।

अत्र मत्ताशब्दः क्षीबार्थे निहतार्थः[1] ॥

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः संतापितानां दृशाम्।
संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥ २०१ ॥

अत्र दृशामिति बहुवचनं निरर्थकम्। कुरङ्गेक्षणाया एकस्या एवोपादानात्। न[2] च—

'अलसवलितैः[3] प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ॥
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाऽद्य विलोक्यते' ॥ २०२ ॥

इत्यादिवद्व्यापारभेदाद्बहुत्वम्। व्यापाराणामनुपात्तत्वात्। न च व्यापारेऽत्र दृक्शब्दो वर्तते। अत्रैव 'कुरुते' इत्यात्मनेपदमप्यनर्थकम्। प्रधानक्रियाफलस्य कर्तृसंबन्धे कर्त्रभिप्रायक्रियाफलाभावात्[4]।

---

अत्र मत्ताशब्दः। स हि क्षीबायां सुप्रसिद्धः।

निरर्थकं यथा—**आदाव०**।

अत्र दृशामिति बहुवचनमविवक्षितार्थमेव वृत्तपूरणायोपात्तम्। एकस्याः कुरङ्गेक्षणाया दृग्बहुत्वाभावात्। 'अलसवलित—' इत्यादिवद्व्यापारभेदाद्बहुत्वमिति चेत्। न। तत्रेक्षणैरितिवदत्र तदनुपादानात्। न च भावसाधनतया दृक्छब्द एव व्यापारे

---

र्बिभर्ति। अकालसंध्या वर्षाकालसंध्येति दीपिका। (उपजातिश्छन्दः) **सुप्रसिद्ध इति**। तेन मत्वर्थो निहन्यत इति भावः। **आदावञ्जनेति**। भाविविरहेण रुदत्याः कस्याश्चिद्वर्णनमिदम्। कुरङ्गीवेक्षणे यस्याः सा कुक्कुट्यादीनामण्डादिष्विति पुंवद्भावः। सा स्वदृशां संप्रत्येव संतापनाद्यव्यवहितमेव। अव्ययानामनेकार्थत्वात्। अश्रुपयसा निषेकं कुरुते तच्चेतोभुवो भल्लीनां पानकर्मेवेत्युत्प्रेक्षा। शस्त्रं पङ्केन लिप्त्वाऽग्नौ संताप्य पयसि निक्षिप्यत इति पानकर्मस्वरूपम्। दृशः कामशस्त्रत्वेनाध्यवसायादित्थमुक्तिः। श्वासानिलेनोल्लासितः प्रवृद्धोऽत एव प्रोत्सर्पन्समन्तात्प्रसरन्यो विरहजन्माऽनलोऽग्निस्तेन संतापितानाम्। नायिका चेयं भविष्यत्प्रवासपतिका। अञ्जनसत्त्वात्। (शार्दूलविक्रीडितं छन्दः)। **अलसेति**। अलसवलितैरीक्षणैः को विलोक्यत इत्यादाविवेत्यर्थः। **भावेति**। भावेऽर्थे दृशः क्विबि-

---

१ ग. °र्थेन नि°। २ ग. न वाऽल°। ३ क. ग. 'लितैरित्यादिवत्। ४ क. प्राये क्रियाफलसंबन्धाभा°।

**चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः**
**शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।**
**अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां**
**बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥ २०३ ॥**

---

वर्तते । विशेषणानन्वयप्रसङ्गात् । एवं ' कुरुते ' इत्यात्मनेपदमपि निरर्थकम् । प्रधानक्रियाफलसंबन्धस्य कर्तर्यविवक्षणात् । ननु ' आशिषि नाथः ' इतिवत्कर्त्रभिप्रेतक्रियाफलत्वाभाव आत्मनेपदमसाध्वेव, न तु निरर्थकम् । नाथत इत्यपि वा निरर्थकमेव । अविशेषात् । एवं द्वयोरर्थयोर्बहुवचनमसाध्वेवेति । उच्यते—' आशिषि नाथः ' इत्यनेनाऽऽशिष्यात्मनेपदं नियमयताऽनाशिषि तदभावो बोध्यते । तस्माद्याचने तस्य युक्तमसाधुत्वम् । ' स्वरितञितः कर्त्रभिप्राये क्रियाफले' ( पा० सू० १।३।७२ ) इत्यनेन तु कर्त्रभिप्रेतक्रियाफलविवक्षायां तन्नियमयता पराभिसंबन्धविवक्षायां तन्निषेधः प्रतिपाद्यत इति तत्रैवासाधुत्वम् । न तु कर्त्रभिप्रेतत्वाभावमात्रे । अत एव ' कर्त्रभिप्राय इति किम्, पराभिप्रेतक्रियाफले मा भूत् ' इत्यवोचत् । न तु कर्त्रभिप्रेतक्रियाफलत्वाभाव इति । न चात्र पराभिप्रेतक्रियाफलत्वं द्योत्यम् । किं तु कर्त्रभिप्रेतक्रियाफलत्वाद्योतनमात्रमिति नासाधुत्वम् । एवं ' बहुषु बहुवचनम् '( पा०सू० १।४।२१ ) इत्येतत्सूत्रं बहुवचनं नियमयद्द्वयेकयोरुपस्थितयोस्तन्निषेधति । न तु बहुत्वाविवक्षामात्रे । दृशामित्यत्र च न द्वित्वैकत्वे विवक्षिते येनासाधुत्वं स्यात् । किं तु बहुत्वाविवक्षामात्रमित्यनर्थतैवेति युक्तमुत्पश्यामः । एतेन ' अवयवाभिप्रायेण निरर्थकत्वं, समुदायाभिप्रायेण त्वसाधुत्वमेव ' इति चण्डीदासमतमनादेयम् ।

अवाचकं यथा—**चापा०** ।

---

स्यर्थः । **विशेषणानन्वयेति** । अञ्जनलेपादीनां क्रियायामसंभवादिति भावः । **एवमिति** । अत्र ' कुरुते ' इत्यात्मनेपदमुत्प्रेक्षितभल्लीपानकर्मसाध्यमन्मथसंबन्धिजगद्विजयलक्षणकार्यस्य मृगदृशोऽनभिप्रेतत्वेन तदसंबद्धत्वेन च कर्तृगामिक्रियाफलाभावादनुपपन्नम् । अत एव निरर्थकम् । तद्द्योत्यस्य क्रियाफलगतकर्तृगामित्वस्याप्रत्ययात् । असाधुत्वं तु न । ' कमलवनोद्घाटनं कुर्वते ये ' इतिवत् कामदेवगतफलस्य तत्संबन्धिनायिकायामारोपमात्रेण दृग्द्वयेऽपि बहुत्वारोपेण च साधुत्वस्य निरूपयितुं शक्यत्वात् । आरोपफलाभावाच्च निरर्थकत्वम् । **चापाचार्य इति** । ( बालरामायणे द्वितीयाङ्के ) रावणदूतस्य परशुरामं प्रतीयमुक्तिः । चापाचार्यो धनुर्विद्यागुरुस्त्रिपुरविजयी शिवो विजेयो विजितः । त्रिपुरजेता स्कन्दो येन जित इति पराक्रमातिशयः । शस्त्रेण व्यस्तः स्थानाद्दूरमुत्क्षिप्तो न तु स्वयं चलित ईदृश उदधिः सदनं गृहम् । अमूर्तिमतोऽपि शस्त्रेण

---

१ क. कार्तवीर्यो वि° । २ क. °संधिवि° । ३ क. °हुत्ववि° ।

अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः ।

अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठम् ।
परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव ॥ २०४ ॥

अत्रपेलवशब्दः ।

यः पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेन शास्त्रपरिशीलनकीलनेन ।
सौजन्यमान्यजनिरूर्जितमूर्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः ॥ २०५ ॥

अत्र पूयशब्दः ।

विनयप्रणयैककेतनं सततं योऽभवदङ्ग तादृशः ।
कथमद्य स तद्वदीक्ष्यतां तदभिप्रेतपदं समागतः ॥ २०६ ॥

---

अत्र विजेय इति यत्प्रत्ययः क्तप्रत्ययार्थे प्रयुक्तस्तत्र चावाचकः ।

अश्लीलेषु व्रीडादायि यथा—**अतिपेलव०** ।

अत्र पेलेति पेलवशब्दैकदेशो गुह्याङ्गस्मारकतया व्रीडादायी ।

जुगुप्सादायि यथा—**यः पूय०** ।

अत्र पूयेति पूयव्यञ्जकतया जुगुप्सादायि ।

अमङ्गल्यं यथा—**विनय०** ।

---

निराकरणात्तस्यैवातिशयः । हन्तकारोऽतिथिबलिः । अनेन सकलनरपतिजेता, विशेषणैर्देवासुरमनुष्यजेता वदान्य इति च फलितम् । किमु किंतु रेणुकाकण्ठबाधां कृतवता तव परशुना बद्धस्पर्धः पूर्वं बद्धस्पर्धोऽपि चन्द्रहासः खड्गो लज्जते । 'चन्द्रहासासिऋष्टयः' इति अमरात् । **यत्प्रत्यय इति** । अर्हार्थे हि सः । अर्हत्वं च योग्यता । सा च भाविविषया । अतीतत्वं तु विवक्षितम् । अन्यथा सिद्धत्वाप्रतीत्योत्कर्षासिद्धेरिति भावः । ( मन्दाक्रान्ता छन्दः ) **अतिपेलवमिति** । मित्रं प्रत्याप्तस्योपदेशोक्तिरियम् ) । अतिकोमलमित्यर्थः । लघुतरमातिमन्दम् । सत्यत्वप्रत्यायनायेदम् । परमार्थतस्तत्त्वतः । पुनस्त्वर्थे । ( गीतिश्छन्दः ) । **गुह्याङ्गेति** । पुंगुह्याङ्गेत्यर्थः । पेलशब्दो लाटभाषायां तद्बोधक इत्याहुः । **यः पूयत इति** । ( कस्याचिन्महापुरुषस्य प्रशंसनमिदम् ) । मुखशब्द आद्यर्थः । सार्थः समूहः । शास्त्रपरिशीलनेनाभ्यासेन कीलनं संस्कारदृढीकरणं तेन च यः पवित्री क्रियते । सौजन्येन मान्या जनिरुत्पत्तिर्यस्य । ऊर्जितानां बलवतामूर्जितं बलम् । ( वसन्ततिलका छन्दः ) । **पूयेति** । व्रणक्लेदेत्यर्थः । **विनयेति** । ( सखायं प्रति कस्यचित्पूर्ववृत्तमैत्रीकस्य पुरुषस्य वृत्तान्तकथन-

---

१ क. ग. कृत्प्रत्य° । २ क. शठः । ३ भ. °लशब्दो व्रीडा यः । ४ क. °शब्दो जुगुप्सा । वि° । ५ क. °थमेप स ।

अत्र प्रेतशब्दः ।

कस्मिन्कर्मणि सामर्थ्यमस्य नोत्तपतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥ २०७ ॥

अत्र किं पूर्वं साधुरुत साधुषु चरतीति संदेहः ।

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥ २०८ ॥

अत्र वचःशब्देन गीःशब्दो लक्ष्यते । अत्र खलु न केवलं पूर्वपदम्, यावदुत्तरपदमपि पर्यायपरिवर्तनं न क्षमते । जलध्यादावुत्तरपदमेव, वडवानलादौ पूर्वपदमेव ।

---

अत्र प्रेतेति भागोऽमङ्गल्यस्मारकः ।

संदिग्धं यथा—**कस्मिन्०** ।

अत्र चरभागो 'भूतपूर्वे चरट्' ( पा० सू० ५ । ३ । ५३ ) इति चरट्प्रत्ययो वा 'चरेष्टः' ( पा० सू० ३ । २ । १६ ) इति टान्तश्चरधातुर्वेति संदेहात्पूर्वं साधुरिति वा साधुषु चरतीति वाऽर्थ इति संदेहः ।

नेयार्थं यथा—**किमुच्यते०**।

अत्र वचोबाणशब्दो गीर्वाणे विवक्षितः । न च तत्र समर्थः । गीर्वाणशब्दयोरेव समस्तयोस्तदर्थे रूढिर्न तु तत्पर्यायान्तराणाम् । अत एव गीःशरादिशब्दोऽपि तत्रासमर्थः । पर्यायपरिवृत्त्यसहत्वात् । तस्माद्वचःशब्देन गीःशब्दो लक्ष्यते । न च तत्र रूढिः प्रयोजनं वेति नेयार्थता । एवं जलध्यादिशब्देऽपि पदपरिवर्तनं द्रष्टव्यम् । परं तु तत्रोत्तरपदमेव परिवृत्त्यसहम् ।

---

मिदम् ) । हे अङ्ग तस्य नीचस्य पुरुषस्याभिप्रेतं यत्पदं नीचपदं तदुपगतोऽपि स तद्वन्नीचपुरुषवत्कथमीक्ष्यताम् । यो विनयः प्रणयः प्रीतिस्तयोरेकं केतनं स्थानम् । यस्तादृशोऽनिर्वचनीयगुणवानभवत् । ( अपरवक्त्रं छन्दः ) । **कस्मिन्निति** । उत्तपते ज्वलति प्रकाशत इति यावत् । सामर्थ्यं कर्तृ । साधुचरः साधुषु चरतीति वा भूतपूर्वः साधुर्वा । **किमुच्यत इति** । भूपालानां या मौलिमाला मौलिसमूहस्तत्र महामणेर्मेरुस्थानीयमणेर्यस्य तेजो वचोबाणैर्देवैरपि सुतरां दुर्लभमिति विभाव्यते । **गीःशब्दो लक्ष्यत इति** । स्ववाच्यवाचकत्वसंबन्धेनेति भावः । अत्र शब्दे लक्षणैवोचिता । गीर्वाणशब्दयोरेव मिलितयोर्देवेषु रूढत्वादिति बोध्यम् । **जलध्यादाविति** । आदिना जलधरादयः, जलधरशब्देन पयोध्यप्रतीतेः । उदकधरशब्देन च मेघाप्रतीतेरिति बोध्यम् ।

---

१ क. °शब्दोऽमङ्गलम् । २ क. ग. °ध्यादौ तूत्त° । ३ क. ग. °दौ च पू° । ४ जलध्यादाविति उद्योतसंमतः पाठः ।

यद्यप्यसमर्थस्यैवाप्रयुक्तादयः केचन भेदाः, तथाऽप्यन्यैरलंकारका-रैर्विभागेने[1] प्रदर्शिता इति, भेदप्रदर्शनेनोदाहर्तव्या इति च विभज्योक्ताः ।

प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसंधि हतवृत्तम् ।
न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥ ५३ ॥
अर्धान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम् ।
अपदस्थपदसमासं संकीर्णं गर्भितं प्रसिद्धिहतम् ॥ ५४ ॥
भग्नप्रक्रममक्रमममतपरार्थं च वाक्यमेव तथा ।

रसानुगुणत्वं वर्णानां वक्ष्यते । तद्विपरीतं[3] प्रतिकूलवर्णम् ।
यथा शृङ्गारे

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥ २०८ ॥

---

वडवानलादौ तु पूर्वपदमेवेति तदन्यपरिवर्तनेऽप्यदोषः । नन्वसमर्थत्वं विवक्षितार्थप्रतीतिसामर्थ्यविरह एवोच्यताम् । स च[4] प्रसिद्ध्यभावात्समयाद्यभावाद्वेत्यप्रयुक्तावाचकनिहतार्थादयोऽप्यसमर्थभेदा एव भवितुमर्हन्तीति किमिति पृथङ्निर्दिष्टा इति चेत्तथ्यमात्थ । परं त्वन्यैरलंकारकारैर्भेदेन दर्शिता इति तथैव निर्दिष्टाः । किं च वैजात्याभावेऽपि शिष्यबुद्धिवैशद्याय प्रभेदा वक्तव्या एवेत्यतोऽपि विभज्योक्ता इति ।

अथ वाक्यमात्रदोषलक्षणमाह—**प्रतिकूल०** ।

अत्रापि रूढियोगाभ्यामर्थद्वयोपस्थितौ लक्षणवाक्यस्वोपस्थितिः । वाक्यमेव तथा । प्रतिकूलवर्णत्वादिकं वाक्य एव दोषो न तु पदादिष्वपीत्यर्थः ।

तत्र प्रतिकूलवर्णं विवक्षितरसादेः प्रतिकूला अननुगुणा वर्णा यत्र तत् । अनुगुणत्वं वर्णानां गुणविवेचनावसरे वक्ष्यते । शृङ्गारे यथा—**अकुण्ठो०** ।

---

वचोबाणशब्दे लक्षणायां कवेस्तात्पर्याभावाद्वाचकत्वम् । तदभावे त्ववाचकत्वमेवेति बोध्यम् । **शिष्यबुद्धीति** । अन्यथा सापकर्षकत्वसामान्येन दोषैक्यं प्रसज्येतेति भावः । अत्र च्युतसंस्कृत्यसमर्थानुचितार्थावाचकाश्लीलसंदिग्धाप्रतीतक्लिष्टाविमृष्टविधेयांशविरुद्धमतिकृतां काव्याकाव्यसाधारणता बोध्या । **अननुगुणा इति** । आस्वादोद्बोधप्रतिबन्धका इत्यर्थः । **अकुण्ठेति** । (नायिकासंगमोत्सुकस्य कस्यचिदुक्तिरियम्) । कम्बुः शङ्खः । तादृश-

---

१ क. °कारिकैर्वि° । २ ग. °न द° । ३ क. ग. °रीतत्वं प्रतिकूलत्वम् । य° । ४ क. °च सि° ।

रौद्रे यथा,

देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः॥२०९॥

अत्र हि विकटवर्णत्वं दीर्घसमासत्वं चोचितम्।

यथा,

प्रागप्राप्तनिशुम्भशांभवधनुर्द्वेधाविधाविर्भव-
त्क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात्।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते॥२१०॥

---

अत्र टवर्गः शृङ्गारप्रतिकूलः। 'अटवर्गा'—इत्यादिना प्रतिषेधात्। रौद्रे यथा—**देशः०**।

अत्र मृदवो वर्णाः प्रतिकूलाः। ओजस्विनि रसे विकटवर्णत्वस्य दीर्घसमासत्वस्य चानुगुणत्वात्। यथा—**प्रागप्राप्त०**।

---

कण्ठ्या अकुण्ठोत्कण्ठया उत्तरोत्तरं बलवत्या उत्कण्ठया आकण्ठं पूर्णं मां हे कलकण्ठि सखि कोकिले वा तस्याः कण्ठे कुरु इत्यन्वयः। कण्ठस्याऽऽर्तिं तदालिङ्गनौत्सुक्यरूपाम्। **प्रतिषेधादिति**। शृङ्गारपरिपन्थ्योजोगुणव्यञ्जकत्वाच्चेत्यपि बोध्यम्। **देशः सोऽयमिति**। ( वेणीसंहारे तृतीयाङ्के ) अश्वत्थाम्नः कर्णं प्रतीयमुक्तिः। सोऽयं कुरुक्षेत्ररूपः। अरातयः शत्रवः, शोणितं रुधिरं तदेव जलमिति रूपकम्। पूरिता अर्थात्परशुरामेणेति शेषः। तथाविधो यादृशात्पितृकेशग्रहरुष्टहृदयेन जामदग्न्येनाक्षत्रिया भूः कृता तादृश इत्यर्थः। तानि प्रसिद्धान्यहितानां क्षत्रियाणां या हेतयः शस्त्राणि तेषां घस्मराणि भोक्तॄणि भास्वन्ति शिलातीक्ष्णानि। तदेव क्षत्रक्षयरूपम्। ( शार्दूलविक्रीडितं छन्दः )। **दीर्घसमासत्वस्य चेति**। प्रतिकूलवर्णेत्यत्र वर्णपदं समासस्याप्युपलक्षणमिति भावः। **प्रागप्राप्तेति**। ( वीरचरितनाटके द्वितीयाङ्के ) कृतधनुर्भङ्गं रामं प्रति परशुरामस्योक्तिः। प्रागप्राप्तो निशुम्भो नमनं येन तादृशं यच्छंभुसंबन्धि धनुस्तस्य या द्वेधाविधा द्वैधीकरणं तेनाऽऽविर्भवन्प्रकटो यः क्रोधस्तेन प्रेरितो यो भीमो भार्गवभुजः स एव पुष्टदीर्घत्वा-

---

१ क. ग्रहात्। २ क. °त होति घ°।। ३ क. तदद्य। ४ क. ...धतः इति वा पाठः। ५ क. °त्वं समासभूयस्त्वं चो°। ६ क. निषेधात्। ... णामि... न।

यत्र तु न क्रोधस्तत्र चतुर्थपादाभिधाने तथैव शब्दप्रयोगः।

उपहतं उत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत्। यथा—

धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः॥ २११॥

---

इत्यत्र। यत्र तु न क्रोधश्चतुर्थपादे तत्र शिथिल एव प्रयोगः। अपरुषस्यापि रौद्रादिविरोधितयाऽस्य न श्रुतिकटुभेदत्वम्। न च श्रुतिकटोरेव तद्विशेषत्वम्। तस्य सकृत्प्रयोगेऽप्यात्मलाभात्। अस्य तु वाक्यव्यापित्वेन। अत एवास्य न पददोषत्वम्। एकत्र तादृशवर्णप्रयोगस्य रसाविरोधित्वात्। दोषत्वबीजमप्यस्य रसविरोधित्वमेव। अत एव नित्यदोषोऽयम्। नीरसादावात्मलाभाभावात्। श्रुतिकटोस्तु नीरसादावात्मलाभादनित्यत्वमिति महान्भेदः। इदं तु चिन्त्यम्। रौद्रादिरसे श्लोकार्धपर्यन्तं समासेनैकपदे मृदुवर्णप्रायेऽस्य न कथं पददोषत्वमिति। अथान्यसाहित्येन दोषत्वं वाक्यदोषत्वं, निरपेक्षदोषत्वं तु पददोषत्वमिति चेत् न। एवं हि क्लिष्टादावपि पददोषत्वं न स्यात्। किं बहुना यादृशविवक्षया क्लिष्टत्वं पददोषत्वेनोक्तं तयेदमपि तथेति न्यूनः पददोषत्वविभागः।

उपहतलुप्तविसर्गम्। उपहतविसर्गं लुप्तविसर्गं चेति द्वयमित्यर्थः। उपहता ओत्वं प्राप्ता लुप्ता वा विसर्गा यत्रेति बहुवचनान्तो विग्रहः। एकविसर्गस्य तथात्वे वैरस्यात्। उपघातैश्चौत्वप्राप्तिः। उपघातान्तरस्य दोषान्तरत्वे प्रवेशात्। तेन नैरन्तर्येणौत्वप्राप्तबहुविसर्गत्वं तथा लुप्तबहुविसर्गत्वं च लक्षणे। द्वयोरेकमुदाहरणम्—**धीरो०**।

---

स्तम्भस्तेनापविद्धश्चालित उज्ज्वाल उद्गतज्वालोऽशिथिलं वेगवत्तरं यथा तथा। अशिथिल इति परशुविशेषणं वा। त्वत्कण्ठपीठेऽतिथिरिव भवतु। अतिथेः पीठारोहणमुचितमिति पीठत्वरूपणम्। खण्डो भिन्नोऽर्धीकृतः परशुर्यस्य। हरेण स्वपरशोरेकोऽवयवः परशुरामाय दत्त इति प्रसिद्धिः। तेन यद्धनुस्त्वया खण्डितं तत्परशुना त्वमपि खण्डिष्यस इति भावः। (शार्दूलविक्रीडितं छन्दः)। **यत्र त्विति**। चतुर्थे पादे गुरोरनुस्मरणेन तद्विषयभावोद्रेकात्क्रोधस्य तिरस्कृतेरिति भावः। **अपरुषस्य**। मसृणवर्णस्य। **तस्य सकृदिति**। अत एव स पददोषः। **रसविरोधित्वमिति**। तद्व्यक्तिविरोधित्वमित्यर्थः। तदपि तत्तद्रसवृत्तिमाधुर्यादिगुणव्यक्तिप्रतिबन्धकत्वाद्बोध्यम्। **धीर इति**। वराकारः सुन्दराकारः। अत्र जगति। स एवैतादृशगुणवानित्यर्थः।

---

१ क. ग ।२ ग. प्रभक्तन्विताः। ३ क. 'वं क्लि'। ४ क. 'षवि'। ५ क. उत्वं।
६ क. 'तश्चौत्व'

विसंधि संधेर्वैरूप्यम्,–विश्लेषोऽश्लीलत्वं कष्टत्वं च । 
तत्राऽऽद्यं यथा,

राजन्विभान्ति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः ।
धीदोर्बले अतितते उचितानुवृत्ती
आतन्वती विजयसंपदमेत्य भातः ॥ २१२ ॥

---

दूषकताबीजं बन्धपारुष्येण सहृदयोद्वेगः । अत एवायं नित्यः । अत्रापीदं चिन्त्यम्—'भूयो महीयोऽतियशोविभूषितः' इत्यादौ कथं न पददोषत्वमस्येति ।

विसंधि । विरूपः संधिः संनिकर्षो यत्र । वैरूप्यं च त्रिधा—विश्लेषोऽश्लीलत्वं कष्टत्वं च । विश्लेषस्तु प्राप्तस्य श्लेषस्य संहिताकार्यस्याभावः । स च 'अन्यत्र तु विभाषया' इति वचनादैच्छिक आनुशासनिकश्च । तत्रान्त्यः प्रगृह्यादित्वात्' 'पूर्वत्रासिद्धम्' (पा. सू. ८।२।१) इत्यादिना विसर्गादिलोपासिद्धेर्वा । तेष्वाद्यः सकृदपि वर्तमानो दोषाय । इच्छानिबन्धनत्वेनाशक्तिमूलकतया प्रथमत एव सहृदयोद्वेजकत्वात् । अन्त्यौ त्वसकृत् । आनुशासनिकत्वेनाशक्त्यननुन्नायकतया बन्धपारुष्यणैव हि तस्य दोषत्वम् । तच्चासकृत्प्रयोग एवं । तैद्वरूप्यवतामनुगमश्चान्यतमत्वेन । अश्लीलवन्नानार्थत्वमेव वा । एवं त्रिप्रकारके विश्लेष आद्यप्रकारद्वयं यथा—राजन्वि० ।

---

उत्सिक्ता अहंकृता बुद्धिप्रभाविता बुद्धिजन्यसामर्थ्ययुताः । **बन्धपारुष्येणेति** । बन्धपारुष्यं बन्धाशैथिल्यम् । बन्धस्य गाढत्वे हि चमत्कारो नान्यथेति भावः । एवं विसर्गबहुत्वमपि दोषः । यथा

"स्मरः खरः खलः कान्तः कायः कृतशरः सखि ' ।

इत्यादौ । तदुक्तम्—

" अत्राप्लुतविसर्गान्तैः पदै प्रोतैः परस्परम् ।
ह्रस्वैः संयोगपूर्वैश्च लावण्यमतिरिच्यते ॥ "

इति । **स चान्यत्रेति** । 'संधिरेकपदे नित्यो नित्यो धातूपसर्गयोः । नित्यः समासे द्रष्टव्यः, इति चरणत्रयं बोध्यम् । **तद्वैरूप्यवतामिति** । प्रागुक्तप्रकाररूपवैरूप्यवतामित्यर्थः । अन्यान्यस्त्वेनेति पाठः । अत्रैच्छिकसंध्यभावस्य खेदादिना विच्छिद्य पाठे न दुष्टत्वम् । यथा 'एका एका शिरोरुहा ' इति केचित् । कष्टत्वं च श्रुतिकटुत्वम् । **राजन्निति** । तानि ते चरितानि भान्ति यानि रसातले प्रविश्यान्तः, मध्य इन्दोर्द्युतिं दधतीत्यन्वयः । धीर्नीत्यनुसारिणी बुद्धिर्दोर्बलं चोभे विजयसंपत्तिमेत्य प्राप्य भातः ।

---

१ क. च । आद्यं । ग. च । य° । २ क. ग. °तार्थवृ° । ३ क. ग. °मेषु भा° । ४ क. °व । तद्वैरू° ।

यथा वा,

तत उदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः ।
निजवंश उदात्तकान्तकान्तिर्बत मुक्तामणिवच्चकास्त्यनर्घः॥ २१३ ॥

संहितां न करोमीति स्वेच्छया सकृदपि दोषः। प्रगृह्यादिहेतुकत्वे त्वसकृत् ।

वेगादुड्डीय गगने चलण्डामरचेष्टितः ।
अयमुत्तपते पत्री ततोऽत्रैव रुचिं कुरु ॥ २१४ ॥

अत्र संधावश्लीलता ।

उर्व्यसावत्र तर्वाली मर्वन्ते चार्व्यवस्थितिः ।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥ २१५ ॥

---

अन्त्यो यथा—तत ० ।

दूषकताबीजमस्योक्तम् ।

अश्लीलत्वं यथा—वेगादु० ।

अत्र 'चिङ्कु' इत्यश्लीलम् ।

कष्टत्वं यथा—उर्व्यसा० ।

अत्र दूषकताबीजं पददोषप्रस्ताव उक्तमिति । अत्रापीदं चिन्त्यम्—समासेनैकपद्येऽश्लीलकष्टेच्छानिबन्धनविश्लेषाणामश्लीलकष्टासाधुमध्यप्रवेशे लोपासिद्धिनिबन्धनविश्लेषस्य पदेऽपि सद्भावात्कथमस्य न पददोषत्वम् । यथा—' भूयउञ्चैर्महउदात्तयशउदारः '

---

किंभूते । अतितते अतिविस्तृते । उचितयोरवसरयोरनुवृत्ती अनुसरणे आतन्वती कुर्वती । दीपिकाकृतस्तु उचितानुवृत्तिमिति पठित्वोचितावसरानुसरणं विजयसंपदं चाऽऽतन्वती धीदोर्बले स्वामेत्य प्राप्य भात इत्यन्वयमाहुः । उचितेत्यादेर्धीदोर्बलविशेषणत्वं तु नुमाषत्याऽयुक्तम् । (वसन्ततिलका छन्दः) । **तत उदित इति**। उदयाचलादुच्चैरुदित इन्दुरिव ततो वंशादुदितः । निजवंशे मुक्तामणिवच्चकास्तीत्यन्वयः । मुक्तामणिर्हि वंश उत्पद्यते तत्र मुक्तोपमायां साधारणो धर्मः, उदारहारहारिणी द्युतिर्यस्य । पक्षे उदारहारवद्धारिणी द्युतिर्यस्य । पतिंवरां प्रति सख्या उक्तिः । ( विषमं छन्दः ) । **वेगादिति** । डामरम् । उद्भटम् । उत्तपत उत्तप्तो भवति । नायकाधिष्ठितसंकेतस्थानं बोधयन्त्या दूत्या इयमुक्तिः। **चिङ्क्विति** । लण्डेत्यपि । **उर्व्यसाविति** । ( अध्वगं प्रति कस्यचिदुपदेशोक्तिरियम् । मरोरन्ते समीप उर्वी महत्यसौ दृश्यमाना तर्वाली तरुपङ्क्तिः । चारूणां पक्ष्यादीनामवस्थितिर्यस्यां सा । अत्रर्जु गन्तुं न क्षमते । **असाध्विति** । इदं चिन्त्यम् । तदैच्छिकत्वस्य

---

१ क. उदारका° । २ क. ग. °त्वेन त्व° । ३ क. चार्वव° । ४ क. नात्रर्जुः क्षमते ।

हतं लक्षणानुसरणेऽप्यश्रव्यम्, अप्राप्तगुरुभावान्तलघु रसाननुगुणं च वृत्तं यत्र तद्धतवृत्तम् ।

क्रमेणोदाहरणानि—

अमृतममृतं कः संदेहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥ २९६ ॥

---

इति । वयं तु तर्कयामः—सकलप्रभेदभिन्ना एते दोषा दूषणान्तरासंकीर्णा वाक्य एवेति वाक्यमेव तथेति नियमार्थः । अत एव न पददोषविभागन्यूनताऽपि । तादृशस्यैव पदवृत्तेस्तत्र विभागादिति ।

हतवृत्तम् । हतं वृत्तं यत्र तत् । हतत्वं चाश्रव्यत्वं गुरुकार्याक्षमपादान्त्यलघुवर्णत्वं प्रकृतरसाननुगुणत्वं वा । अन्यतमत्वेनैषामनुगमः । अश्रव्यत्वं च लक्षणाननुगमाद्यतिभङ्गात्स्थानविशेषे गणविशेषयोगाच्च । यद्वा, हतत्वमश्रव्यत्वमेव । तच्च गुर्वादिनियमरूपलक्षणाननुगमाद्यतिभङ्गात्स्थानविशेषे गणविशेषयोगाच्च । शिखरिण्यादावन्त्यस्य लघोर्गुरुकार्याक्षमत्वात्प्रकृतरसाननुगुणत्वाच्च । तत्राऽऽद्यं यथा—

यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥

अत्र श्लोके पञ्चमस्य गुरुत्वाच्छन्दोभङ्गः ।

यतिभङ्गो वर्णवृत्ते यथा—अमृत० ।

---

शास्त्रानुभवैकत्वात् । **एते दोषा इति** । प्रतिकूलवर्णस्य शृङ्गारे समासगतत्वेऽस्थानस्थसमासेन श्रुतिकटुना च संकरः । उपहतलुप्तविसर्गस्याप्रयुक्तेन विसंधिभेदस्याश्लीलकष्टाभ्यामिति बोध्यम् । एषामश्रव्यत्वादीनां लक्षणं छन्दः सूत्रं, यतिः स्थानविशेषे विच्छेदो, गणा यगणरगणतगणादयः । **यस्मिन्निति** । श्रुतिरेषा । अत्र पञ्चमं लघु सर्वत्रेति लक्षणाननुगमः । रथकारपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः । ( ' प्राणचक्षुःश्रोत्रान्नमनांसि ' इति प्रभा ) । प्रज्ञा निदिध्यासनम् । **अमृतममृतमिति** । (प्रियाया अधरस्य स्वादिष्ठतामभिधित्सोः कस्यचिदुक्तिरियम् )। अमृतममृतमास्वाद्यमत्र न कश्चित्संदेहः। एवं मधूनीत्यस्यापि। आम्रस्यापि प्रसन्नरसं फलमधिकं मधुरम्। इदमप्यन्यथा न। पुनः परंतु प्रियादशनच्छदादन्यदिह यदि स्वादु स्यात्तर्हि मध्यस्थः सन्सकृदेकवारमपि वदतु। तादृशं न किमपीति

---

१ ग. °त्र । क्र° । २ क. °गात् । शि° ।

अत्र यदिहान्यत्स्वादु स्यादित्यश्रव्यम् ।

यथा वा,

ज़ं परिहरिउं तीरइ मणअं-पि ण सुन्दरत्तणगुणेण ।

अह णवर जस्स दोसो पडिवक्खेहिं पि पडिवण्णो ॥ २१७॥

अत्र द्वितीयतृतीयगणौ सकारभकारौ ।

विकसितसहकारतारहारिपरिमलपुञ्जितगुञ्जितद्विरेफः ।

नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः॥२१८॥

अत्र हारिशब्दः। हारिप्रमुदितसौरभेति पाठो युक्तः ।

---

अत्र हरिणीच्छन्दसि षष्ठे दशमे च यतिरुचिता । चतुर्थे तु पादे तद्भङ्ग इत्यश्रव्यता । मात्रावृत्ते स्थानविशेषे गणविशेषयोगो यथा—जं परि० ।

अत्राऽऽर्यायां द्वितीयतृतीयौ सगणभगणौ । तौ च तथाविधौ छन्दःशास्त्रेण दुःश्रवत्वेन प्रतिपादितौ ।

पादान्तलघोर्गुरुकार्याक्षमत्वं यथा—विकसित० ।

अत्र 'वा पादान्ते' इति पादान्तस्य गुरुत्वाच्छन्दोभङ्गाभावेऽपि प्रथमपादान्तवर्तिनो

---

भावः । रसान्तरविद्रसतारतम्यज्ञः । ( हरिणी छन्दः ) । चतुर्थे त्विति । यदिहान्यदित्यत्र हेत्यस्य परपदसंधानापेक्षत्वादिति भावः । जं परीति । ( आनन्दवर्धनकृतपञ्चबाणलीलायां गाथेयम् ) ।

'यत्परिहर्तुं तीर्यते न मनागपि सुंदरत्वगुणेन ।

अथ केवलं यस्य दोषः प्रतिपक्षैरपि प्रतिपन्नः' ॥

णवरशब्दः केवलवाची । मानिनीं प्रति दूत्या उक्तिः । तादृशमेतत्कामचेष्टितम् । यत्सौन्दर्यगुणेन रमणीयत्वरूपेण युक्तं वस्तु मनागीषदपि परिहर्तुं न शक्यते । अथ च यस्य दोष उक्तापरिहार्यत्वरूपः प्रतिपक्षैर्यत्यादिभिरपि केवलं प्रतिपन्नोऽङ्गीकृतो न तु परिहृतः । त्वत्कान्तस्य तु कैव कथा तस्य दैवादन्यवनितासङ्गेऽपि कोपातिशयो न विधेय इति भावः । अन्ये तु यः परिहर्तुमिति संस्कृतं प्रदर्श्य यो नायकोऽपराधशीलोऽपि सौन्दर्यगुणेन त्यक्तुं शक्यते न । जो परीति प्राकृतपाठ उचित इत्याहुः । भगणाविति ।

'मो भूमिस्त्रिगुरुः श्रियं दिशति यो वृद्धिं जलं चाऽऽदिलो

रोऽग्निर्मध्यलघुर्विनाशमनिलो देशाटनं सोऽन्त्यगः ॥

तो व्योमान्तलघुर्धनापहरणं जोऽर्को रुजं मध्यगो

भश्चन्द्रो यश उज्ज्वलं मुखगुरुर्नो नाकआयुस्त्रिलः' ॥

( नारायणभट्टकृतवृत्तरत्नाकरटीकायामिदं द्रष्टव्यम् ] । ल इति लघो, र्ग इति गुरोर्ग्रहणम् । विकसितेति । विकसितो यः सहकारस्तस्य तारोऽत्युत्कटो हारी मनोरञ्जको

---

१ क. ग. °दु इ° । २ क. ग. °लगुञ्जितपुञ्जितद्वि° । ३ क. °रिप्र° । ४ क. °र्थे तद्भङ्गः । सा° । ५ क. °वे प्र° । ६ क. °न्तरव° ।

यथा वा,

अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
संभाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थला-
द्दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥ २१९ ॥

अत्र वस्त्राण्यपीति पाठे लघुरपि गुरुतां भजते ।

हा नृप हा बुध हा कविबन्धो विप्रसहस्रसमाश्रय देव ।
मुग्धविदग्धसभान्तररत्न क्वासि गतः क्व वयं च तवैते ॥ २२० ॥

---

रिकारस्य लघोर्गुरुकार्यकरणाक्षमत्वम् । इन्द्रवज्रादिषु तु तत्कार्यक्षमत्वाददोषः । तस्मात् 'हारिप्रमुदितसौरभ—' इति पठनीयम् । न केवलं प्रथमतृतीयपादयोरेवायं दोषः किं त्वन्ययोरपि । तत्र चतुर्थे यथा—**अन्या०** ।

अत्र 'वस्त्राण्यपि' इति पाठेऽगुरोरेव संयोगपरतया स्वरवृद्धौ लघुरपि गुरुकार्यकारी संपद्यते । एवं द्वितीयपादेऽप्यूह्यम् । एषु चाश्रव्यता सहृदयोद्वेजिनी दुष्टताबीजम् । अतो नित्यदोषोऽयम् ।

प्रकृतरसाननुगुणत्वं यथा—**हा नृप०** ।

---

यः परिमलस्तेन गुञ्जारवयुता पुञ्जिता मिलिता द्विरेफा यस्मिन्सः । यद्वा, तादृशः परिमलो यत्र तादृशश्चासौ गुञ्जितपुञ्जितद्विरेफश्चेति विग्रहः । नवकिसलयैश्चार्वी चामरश्रीर्यस्य । अनेन राजत्वं तेन हरणशक्तिः । मुनेरपि दुर्हरमानसस्यापि । (पुष्पिताग्रा छन्दः ) । **इन्द्रवज्रादिष्विति** । तथा च 'वा पादान्त' इतीन्द्रवज्रादिपरमेवेति भावः । **अन्यास्ता इति** । ( कस्यचिद्राज्ञो वर्णनमिदम् ) रोहणः पर्वतविशेषः । उत्पादिका वा । मृत्पार्थिवो भागोऽन्यैव भिन्नैव परं धन्या । तत्संबन्धप्राप्तेः । इदं च भुवोऽपि विशेषणं विभक्तिविपरिणामात् । संभाराः । इतरकारणकलापरूपा सामग्री । धन्या इत्यत्राप्यन्वेति । श्रीमन्तश्च ते कान्तियुताश्च, तेषां द्विषाम् । इदं च स्त्रीणामपि विशेषणम् । प्रतिपत्तिलोपो मोहः । स च शत्रौ भयात्परत्र कामात् । यैरित्यत्र स्त्रीपुंलिङ्गयच्छब्दैकशेषः ( शार्दूलविक्रीडितं छन्दः ) । पाठेऽगुरोरिति च्छेदः । **संयोगपरतयेति** । संयोगात्परतयेत्यर्थः । **हा नृपेति** । ( राज्ञि मृते तदीयानां विलापोक्तिरियम् ) । मुग्धेति । सुन्दरचतुरसभा-

---

१ क किल । २ क. 'रत्नं भ° ।

हास्यरसव्यञ्जकमेतद्वृत्तम् ।

न्यूनपदं यथा,

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनया
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्याऽऽवासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥ २२१ ॥

अत्रास्माभिरिति, 'खिन्ने'—इत्यस्मात्पूर्वमित्थमिति च ।

---

इदं दोधकवृत्तं शोकाननुगुणम् । तद्विरोधिहास्यव्यञ्जकत्वात् । अस्य च प्रतिकूलवर्णत्वं दुष्टताबीजम् । नीरसे च नास्याऽऽत्मलाभ इति नित्यदोषता ।

न्यूनाधिकेत्यादि । न्यूनपदमधिकपदं कथितपदं चेत्यर्थः । तत्र न्यूनपदं न्यूनं पदं वाचकशब्दो यत्र तत् । द्योतकन्यूनतायां त्वनभिहितवाच्यत्वमिति विशेषः । उदाहरणम्—**तथाभूतां०** ।

अत्र पादत्रयमध्येऽस्माभिरिति, खिन्ने इत्यस्य पूर्वमित्थमिति च पदं नास्ति । आवश्यके च ते । अन्यथा कर्तुरलाभादेकवाक्यत्वासंभवाच्च, तदर्थस्य विवक्षितत्वात् । अर्थश्चैतादृश एव विवक्षित इति शब्दस्यैवायमपराधः । यत्र त्वर्थ एव न तावद्दूरं विवक्ष्यते तत्रार्थ एव दुष्ट इति साकाङ्क्षत्वं दोषान्तरमिति द्रष्टव्यम् । विवक्षिताप्रतिपत्तिश्च दूषकताबीजम् । अतो झटित्याक्षेपतस्तल्लाभेऽदोषत्वम् ।

---

मध्यरत्नेत्यर्थः । इतरत्स्पष्टम् । ( दोधकवृत्तम् ) । **इदं दोधकेति** । करुणे पुष्पिताग्रादीनामेवानुगुणत्वम् । पृथ्वीस्रग्धरादीनां शृङ्गारादौ । शिखरिणीमन्दाक्रान्तादीनां वीरानुगुण्यम् । दोधकस्य प्रतिपदविच्छेदित्वेन हास्यानुगुणतेत्यर्थः । **अस्य** । प्रकृतरसानुगुणत्वरूपभेदस्य । **इत्यर्थ इति** । द्वंद्वान्ते श्रूयमाणमिति न्यायादिति भावः । न्यूनमनुपात्तविवक्षितार्थकम् । **तथेति** । ( शिखरिणी छन्दः ) । **अत्र पादत्रयेति** । वल्कलधरैरित्यस्य विशेष्याकाङ्क्षत्वादुषितमित्यत्र स्थितमित्यत्र च कैरित्याकाङ्क्षोदयान्मध्यमपादद्वयेऽस्माभिरित्यावश्यकम् । तदेवोक्तानां खेदहेतुत्वलाभात् । आद्यपादे यद्यपि गुरुः कर्तृत्वेनान्वेतुं योग्यस्तथाऽपि खिन्नत्वातिशयस्तथादर्शनकालिकतूष्णींस्थित्यैवेति तत्राप्यस्माभिरित्येव कर्तृपदमपेक्षितम् । स्थितमिति च तृतीयपादस्थमावृत्त्या तत्राप्यन्वेति । तथाभूतनृपतनयादर्शनोत्तरकालिकास्थित्यादिरित्यर्थकमित्थमिति पदं विना नैकवाक्यतासंभव इति भावः । तदाह—**अन्यथेति** । तदर्थस्य विवक्षितत्वादित्यपपाठः । **विवक्षिताप्रतिपत्तिरिति** । पदज्ञानविरहकृतेत्यर्थः । **झटित्याक्षेपेति** । यथा 'मा भवन्तम-

---

१ क. तत्त्वम् । धौ° । २ अस्य श्लोकस्य व्याख्यानं तृतीयोल्लासोद्योते (पृ. ७३) द्रष्टव्यम् ।

अधिकं यथा,

स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।
अविरुद्धसमन्वितोक्तियुक्तः प्रतिमल्लास्तमयोदयः स कोऽपि॥२२२॥

अत्राऽऽकृतिशब्दः ।

यथा वा,

इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः ।
यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा॥२२३॥

अत्र कृतमिति । कृतं प्रत्युत प्रक्रमभङ्गमावहति ।

तथा च, यदपि च न कुरङ्गलोचनानामिति पाठे निराकाङ्क्षैव प्रतीतिः ।

---

अधिकपदं यथा—**स्फटिका०** ।

अत्र स्फटिकमेव निर्मलतायामुपमानं विवक्षितम् । उपात्तेऽप्याकृतिपदे यथाकथंचित्तेनैवोपमितिपर्यवसानादित्याकृतिपदमधिकम् । न तु व्यर्थत्वादपुष्टार्थेन संकर इति वक्ष्यते । न केवलं समास एव पदाधिक्यं किं त्वसमासेऽपि । यथा—**इदमनु०** ।

अत्र कृतमधिकम् । पूर्वार्धवत्तेन विनैव प्रतीतिपर्यवसानात् । कृतं प्रत्युत प्रक्रमभङ्गमावहति । पूर्वार्धेऽकरणात् । तथा च यदपि च न कुरङ्गलोचनानामिति पठनीयम् ।

---

नलः पवनो वा ' इत्यादावधाक्षीदभाङ्क्षीदिति प्रसिद्धक्रियायाः । यथा वा ' निधानगर्भामिव सागराम्बराम् ' इत्यादावव्यभिचारिविशेषणेन पृथ्व्या इति भावः । **अधिकपदमिति** । अविवक्षितार्थपदकमित्यर्थः । **स्फटिकेति** । कस्यचिद्विदुषो वर्णनमिदम् । निर्मलो रागद्वेषादिरहितः । प्रकाममतिशयेन । पूर्वपरान्वयि । प्रतिसंक्रान्तं प्रतिबिम्बमादर्शादिमिव हृदयमारूढम्, निशातानि गूढार्थानि यानि शास्त्राणि तेषां तत्त्वं गूढार्थरूपम् । अविरुद्धा लोकशास्त्रादिभिः समन्विताः परस्परान्विता उक्तयो युक्तयश्च यस्य सः । प्रतिमल्लानां प्रतिवादिनामस्तमयस्य लक्षणया पराभवस्योदयः प्रादुर्भावो यस्मात्सः । ( मालभारिणी छन्दः ) । **उपात्तेऽपीति** । अवयवसंयोगरूपाकृतिपदार्थस्यान्वयासंभवात्कथंचित्संभवदन्वयोऽन्योऽर्थोऽप्यविवक्षित इति भावः । **न तु व्यर्थत्वादिति** । अपुष्टार्थत्वसंकराभावे हेतुर्व्यर्थत्वम् । **इदमिति** । अनुचितं लोकविरुद्धमित्यर्थः । अक्रमः शास्त्रविरुद्धः । बाल्ययौवनजरासु विद्याविषयसेवाधर्मार्जनमिति शास्त्रम् । रतं वेति । जीवनसत्त्वेऽपि जरायां रतमनुचितम् । वैरस्याऽऽधायकत्वात् । अक्रमः । अप्रशस्तैषा परिपाटीति भावः । ( पुष्पिताग्रा छन्दः ) । **प्रत्युत प्रक्रमभङ्गमिति** । पूर्वं पुंधर्मेऽनौचित्यमुक्त्वेदानीं

---

१ क. युक्तिः । २ ग. मान्मथो विकारः । ३ ग. °त क्र° । ४ क. °त क°।

कथितपदं यथा,

अधिकरतलतल्पं कल्पितस्वापलीला
परिमिलननिमीलत्पाण्डिमा गण्डपाली।
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम्॥ २२४॥

अत्र लीलेति।

---

निष्प्रयोजनशब्दश्रवणेन श्रोतुर्वैमुख्यं दूषकताबीजम्। अतो हर्षादावभिव्यङ्ग्ये न दोषत्वम्।

कथितपदं यथा—**अधिकरतल०**।

अत्र लीलापदं वारद्वयमुपात्तम्। नरपतिलक्ष्मीति युक्तः पाठः। दूषकताबीजं च कवेरशक्त्युन्नयनेन श्रोतुर्वैमुख्यम्। अतो लाटानुप्रासादावदोषत्वम्। अशक्त्यनुन्नयात्। इदं तु चिन्त्यम्—समासे सत्येकस्मिन्नपि पदे व्यवधानाल्लाटानुप्रासविरहेऽप्यस्य संभवात्कथं न पददोषत्वमिति।

---

स्त्रीधर्मे तदनुक्त्वा तत्करणे तदुक्त्या विधावनौचित्यप्रतीतेः प्रक्रमभङ्गः। **निष्प्रयोजनेति**। तत्त्वं चाविवक्षितार्थकत्वाद्बोध्यम्। **श्रोतुर्वैमुख्यमिति**। तस्मिन्हि रसोद्बोधवैगुण्यादिति भावः। **कथितपदमिति**। प्रयोजनशून्यत्वे सति समानार्थकसमानानुपूर्वीकपदवत्त्वं तत्त्वमित्यर्थः।

'उदेति सविता ताम्रस्ताम्र एवास्तमेति च'।

इत्यादावेतद्वारणाय सत्यन्तम्। तत्र हि तेनैव शब्देन पुनरुपादानेऽनुवादत्वेन झटिति प्रयोजनजिज्ञासायां व्यञ्जनयाऽस्तमयोदयादावेकरूपतावगमः प्रयोजनमस्ति। विभिन्नानुपूर्वीकपदोपादाने पुनरुक्तत्वं वक्ष्यते। **अधिकरेति**। करतले कपोलमाधाय चिन्तयन्तीं नायिकां प्रति सख्या उक्तिः। करतलरूपे तल्पे कल्पिता या स्वापलीला तस्यां सत्यां यत्परिमिलनं दृढतरः संबन्धस्तेन मीलंस्तिरोभवन्पाण्डिमा यस्यां सा। करकपोलयोर्दृढसंबन्धेन रक्तिमोदयाद्विरहपाण्डिमतिरोधानम्। पाली स्थली। तेन सकललावण्यातिशयमर्यादात्वबोधनम्। अञ्जसा शीघ्रं तत्त्वतो वा स्मर एव नरपतिस्तस्य लीलाश्चुम्बनदशनादयस्तत्र यौवराज्यं मुख्याधिकारस्तत्राभिषेकं कस्य व्यञ्जयति कथयेत्यन्वयः। स्मरेण स्वतः कर्तुमशक्यं तत्रैवंविधं स्वापादि यः करोति स ध्रुवं वृद्धेन स्मरेण स्वराज्येऽभिषिक्त इति भावः। ( मालिनी छन्दः। ) **वारद्वयमिति**। तथोपादानं ह्युद्दिष्टप्रतिनिर्दिष्टयोरभेदव्यञ्जकतया स्वापलीलायौवराज्यमिति प्रत्याययति। प्रकृते तु न तथा विवक्षितम्। तदाह—**कवेरशक्तीति**। **वैमुख्यमिति**। उपभुक्तभोगवदिति भावः।

---

१ क. 'लीला लीले'।

पतत्प्रकर्षं यथा,

क: क: कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकरः
क: क: कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥ २२५ ॥

समाप्तपुनरात्तं यथा,

---

पतत्प्रकर्षम् । अलंकारकृतस्य बन्धकृतस्य वा प्रकर्षस्य यत्रोत्तरं पातो निकर्षः । यथा—क: क:० ।

सूकराद्यभिधानेऽपि विकटबन्धकृतोऽनुप्रासकृतश्च प्रकर्षः सिंहाभिधाने पतितः । दूषकताबीजं चाशक्त्युन्नयनेन श्रोतुर्वैरस्यम् । रसानुगुणतया तत्पातेऽपि न दोषः ।

समाप्तपुनरात्तम् । समाप्तं सत्पुनैरुपात्तम् । वाक्ये समाप्ते पुनस्तदन्वयिशब्दोपादानं यत्रेत्यर्थः । यत्तु ' समाप्ते वाक्येऽविशेषविधायिविशेषणान्तरोपादानवत्त्वं तल्लक्षणम् ' इति तन्न । ' प्रागप्राप्त—' इत्यादौ वाक्यान्तरारम्भे विशेषणान्तरानुपादाने तल्लक्षणविरहेण

---

क: क: कुत्र नेति । अपि तु सर्वः सर्वत्रेति भावः । घुर्घुरः शब्दविशेषः । तद्वती या घुरी घोणा तया घोरो भीमः घुरेद्भीमशब्दं कुर्वीत । ' घुर भीमार्थशब्दयोः ' । विकमलं विगतकमलम् । वनान्यरण्यमहिषाः के नोन्मूलयेयुः समूलं नाशयेयुः । अनेन स्वाश्रयोन्मूलकतया तेषां मदौत्कट्यं ध्वनितम् । सिंहीस्नेहेन विलासो दन्तेन कण्डूयनादिस्तेन बद्धा नियतं कृता वसतिरेकदेशवासो येन तादृशो यतः । अत्र सूकरेभ्यः परपक्षविनाशोद्योगितया करिणां तेभ्यश्च देवीप्रतिपक्षजातीयतया यमवाहनजातीयतया च महिषाणां तेभ्यः कर्यादिहिंसकत्वेन सिंहानामभिधाने तथैव बन्धदार्ढ्यादिकमुचितम् । एवं च राजनि व्यसनशीले क्षुद्रा अपि भौमिका निर्मर्यादा भवन्तीति प्रस्तुतध्वननादप्रस्तुतप्रशंसा । ( शार्दूलविक्रीडितं छन्दः ) । **समाप्तं सदिति** । जनितविवक्षितान्वयबोधकमित्यर्थः । **पुनरुपात्तमिति** । तदन्वयिशब्दोपादानेन पुनरुपात्तं पुनरनुसंधानविषय इत्यर्थः । **तदन्वयि** । तत्रान्वयो यस्य, तेनान्वयो यस्येति च । तेन विशेषणस्य विशेष्यस्य च संग्रहः । आद्योदाहरणं प्रकृतमेव । द्वितीयं तु प्रागप्राप्तेति । तत्र हि येनानेनेति वाक्ये तृतीयान्तपरामृष्टवाक्यार्थस्य विशेषणत्वम् । तद्दर्शयति—यत्त्वित्यादिना । यदि तु तत्रापि विशेषणत्वानुभवस्तदा विशेषणान्तरशब्देन पदरूपमेवास्य विवक्षितमित्यभिमानः । किं च पुनःशब्दार्थानन्वयः । नववय इत्यादेः सकृदेवोपादानात् । विशेषणान्तरापेक्षया तत्त्वे तु तद्वैयर्थ्यं व्यधिकरणबहुव्रीह्यापत्तिश्च । क्रियाविशेष्यकबोधवादिनां मते ' घटोऽस्ति मृन्मय ' इत्यत्राव्याप्तेश्च । विशेषणान्तरानुपा-

---

१ क. कं कं क: । २ क. °नरात्तम् ।

क्रेंकारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो
झंकारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः॥ २२६ ॥

द्वितीयार्धगतैकवाचकशेषप्रथमार्धं यथा,

---

तत्रानित्यदोषव्युत्पादनविरोधात्। उदाहरणम्—क्रेंकारः०।

अत्र 'तनोतु वः' इति समाप्तमेव वाक्यं 'नववय—' इत्यादि विशेषणेनोपात्तम्। निराकाङ्क्षत्वं च दूषकताबीजम्। अतश्चानित्यदोषोऽयम्। वाक्यान्तरारम्भे तदभावात्।

अर्धान्तरैकवाचकम्। द्वितीयार्धगतमप्रधानहेत्वाद्यर्थकमेकं वाचकं यत्र तत्। यथा—

---

दानात्। ननु 'नववय' इत्यादिना विशेष्यभूतः क्वाण एव पुनरुपात्तः। न वाक्यम्। एवं येनानेनेत्यत्रापि परशुरूपं विशेषणं पुनरुपात्तं न वाक्यमिति चेन्न। तादृशविशेषणविशिष्टक्वाणस्य क्रियाकाङ्क्षतया वाक्यस्यैव पुनरुपादानात्। येनानेनेत्यत्रापि स्वत्कण्ठपीठातिथिभवनकर्तृपरशुनेत्यर्थाद्वाक्यानुसंधानं स्फुटमेवेत्याहुः। विवक्षितेति विशेषणात्, 'अयमुदयति मुद्राभञ्जनः पद्मिनीनाम्' 'अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः' इत्यादौ न दोषत्वम्। आद्येऽयंपदार्थस्य संदिग्धतया कुत्राप्यपर्यवसितत्वेन न क्रियान्वय इति वक्ष्यमाणविशेषणैर्विशेष्यसमर्पणे युगपदेवान्वयबोधात्। अन्त्ये कुतो वेपथुरिति हेत्वाकाङ्क्षाया अनिवृत्तेः प्रमाणाधिकत्वान्वयं विना विवक्षितान्वयबोधस्यैवाभावात्। तद्वक्ष्यति निराकाङ्क्षत्वं चेति। **क्रेंकार इति**। (स्वगृहं प्रति प्रस्थितान्पथिकान्प्रति कस्यचित्कवेरियमुक्तिः)। विपक्षजयकालिकज्याकर्षणजः शब्दः क्रेंकारः। सुरतक्रीडारूपपिकीनां रवः रतिरेव मञ्जरी तत्संबन्धिनो ये मधुलिहस्तेषां रव इति दीपिका। अन्ये तु रतिः प्रीतिस्तद्रूपमञ्जरी विलासादिफलोत्पत्तिस्थानत्वात्। तत्संबन्धिमधुलिहां झंकारः। अत्र मधुलिट्त्वारोपविषयः कङ्कणान्येव। लीला कटाक्षादिविक्षेपः। तद्रूपचकोरीध्वनिः। कञ्चुलिकापसारणे यो भुजाक्षेपस्तेन स्खलन्ति यानि कङ्कणानि तत्क्वाणः। नववयसस्तारुण्यस्य नववयसां तरुणानां वा लास्याय नृत्याय वेणुस्वनरूपः। अत्र क्रेंकारारोपविषये रवत्वारोपो विरुद्धः। किं च पिकादीनामपि कूजितमेव प्रसिद्धं न तु रव इति बोध्यम्। (शार्दूलविक्रीडितं छन्दः) **निराकाङ्क्षत्वं चेति**। अस्य विशेषणस्यानुगुणत्वेऽपि तन्निरपेक्षतया प्रागजनितविवक्षितान्वयबोधत्वेन पुनरन्वय आकङ्क्षाभावादिति भावः। एतेन पुनरुपात्तविशेषणस्याननुगुणत्वे कथं तद्विना बोधः। अननुगुणत्वे स्वपुष्टार्थतैव स्यादित्यपास्तम्। **वाक्यान्तरारम्भ इति**। येनानेन जगत्स्वित्यादौ येनेति यत्पदेनाऽऽकाङ्क्षोत्थापनादिति भावः। एवं च यो नववयोलास्यायेति पाठेऽत्रापि न दोष इति बोध्यम्। **द्वितीया-**

---

१ क. 'शेषं प्र०'। २ क. 'मेकवा।

मसृणचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः[1]
पथि पथिकवधूभिर्वीक्षिता शिक्षिता[2] च ॥ २२७ ॥

अभवन्मतः ( इष्टः ) योगः ( संबन्धः ) यत्र[3] तत्। यथा,

---

**मसृण०।**

अत्र भूः सदर्भा तन्मसृणचरणपातं गम्यतामिति वाक्यम्। तत्र च तदित्यर्धान्तरगतम्। अत्र च निराकाङ्क्षता दुष्टिबीजम्। श्रुतमात्रस्यैव भूसदर्भत्वस्याऽऽक्षेपादिना हेतुत्वप्रतीतेः। यस्य तु कर्त्रादेर्न तथा प्रतिपत्तिस्तस्यार्धान्तरोपादानेऽप्यात्मलाभ एव नास्ति। तल्लाभेऽपि वा न दोषत्वमिति।

अभवन्मतयोगम्। अभवन्[4]मतो योगो यत्र। 'न चाविमृष्टविधेयमध्ये[5]ऽस्यान्तर्भावः। उपजीव्यत्वेन भेदात्' इति केचित्। वस्तुतस्तु तत्र पदार्थयोरुपस्थितयोरन्वयो भवत्येव। परं त्व[6]नभि-

---

**र्धेति**। वाक्यान्तरान्तःपातविरहान्न संकीर्णता। **मसृणेति**। ( बालरामायणे षष्ठाङ्के वने रामेण सह सीतायां गतायां तद्वार्तां कथयतः सुमन्त्रस्य दशरथं प्रत्युक्तिरियम् )। भूः सदर्भा तन्मसृणो लघुचरणपातो यथा तथा गम्यताम्। यतो घर्मः कठोरोऽतो मूर्ध्नि सिचयान्तं वस्त्राञ्चलं विरचय। जनकपुत्री पथिकानां वधूभिरश्रुपूर्णैर्लोचनैर्वीक्षितेति शिक्षिता च। अहो धन्यतमेयं राजपुत्र्यपि कोमलतराभ्यां पद्भ्यामेव पथिकं स्वभर्तारमनुयाति। अधन्यतमा वयं या एवं विरहदुःखेन पीड्येमहीत्यश्रुपूर्णता। अत एव पथिकपदं चरितार्थम्। ( मालिनी छन्दः )। **आक्षेपादिनेति**। आदिना व्यञ्जना। न च तदित्यखण्डो निपातः प्रागुक्तपरामर्शकः। इतीत्यनेनैव सिद्धेः। **आत्मलाभ एव नास्तीति**। हेत्वादिघटितलक्षणकरणादिति भावः। **तल्लाभेऽपि वेति**। तदघटितलक्षणकरण इति भावः। **न दोषत्वमिति**। निराकाङ्क्षस्वरूपदुष्टिबीजाभावान्नायं दोष इत्यर्थः। आसत्तिज्ञानकृतप्रतीतिविलम्बेन तत्रापि दुष्टत्वानुभवे तु क्लिष्टत्वमेव तत्र दोष इति भावः। परं त्वस्य वाक्यदोषता कथम्। अपदस्थपदताऽपुष्टार्थता वा कथं नेति चिन्त्यम्। अत्र
'घुसृणमसृणपादा गम्यते भूः सदर्भा विरचय शिवजातं मूर्ध्नि घर्मः कठोरः।'
इति पूर्वार्धे पाठान्तरम्।
'घुसृणः पङ्कजे गर्भो घुसृणं नवनीतकम्'।
इति धरणिः।
शिवजातं शिरःपादत्राणं वल्कलपत्रजम्'।

---

१ क. रसपू°। २ क. ग. शिक्षिता वीक्षिता। ३ क. °त्र। य°। ४ क. °वन्नभिम°। ५ क. °योर°। ६ क. °त्वभि।

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
र्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः।
येषां हुंकृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किं तैस्त्वत्परितोषकारि विहितं किंचित्प्रवादोचितम् ॥२२८॥

अत्र " गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्—" इत्युक्तनयेन यच्छब्दनिर्दिश्यानामर्थानां परस्परमसमन्वयेन यैरित्यत्र विशेष्यस्याप्र-

मतेनाप्राधान्यादिना रूपेण । अत्र तु संबन्ध एव तयोर्न प्रतीयत इति महान्भेदः । नन्वेवमभवन्मतयोगमित्यत्र योगे मतत्वविशेषणानर्थक्यमिति चेत्, न। एकवाक्यस्थपदोपस्थापितत्वादिरूपस्य योगस्यापि सत्त्वात्। मतत्वं चान्वयबोधविषयत्वमित्यप्रसङ्गः ।

एतच्च क्वचिद्विभक्तिभेदात् । यथा—येषां० ।

अत्र यैरित्यस्य विशेष्यतया क्षपाचारिशब्दार्थो विवक्षितः। न च तेन ततस्तथायोगः प्रतीयते । विभक्तिभेदात् । अथ यैर्लीलापानभुवः कल्पिता येषां प्रतापोष्मभिरित्यादिप्रकारेण यच्छब्दाभिधेययोरेव तथान्वयोऽस्तु, किं विशेष्यान्तरविवक्षयेति चेत् । न । अनुवाद्यानां हि विधेयेनैव साक्षादन्वयो न तु तदनन्तर्भाव्यनुवाद्यान्तरेण । गुणत्वस्योभयत्र तुल्यतया विशेष्यत्वविनिगमनाया अशक्यत्वात् । तदेतदुक्तम्—' गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात् ' इति । अत एव ' अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति '

इति संसारार्णवः । **महान्भेद इति** । एवं च प्रकृते पदार्थयोर्वाक्यार्थविधया भासमानसंसर्गस्यैवाभानं तत्र तूद्देश्यत्वादिशालिबोधस्यैवानुदय इति विशेष इति भावः । अत एवात्र योगपदं चरितार्थम् । **येषामिति** । हनूमता लङ्कायां दग्धायां वीरराक्षसानधिक्षिपतः कस्यचिद्रावणं प्रत्युक्तिः । येषां राक्षसानां प्रतापोष्मभिरित्यन्वयः । दानं मदजलम् । ऊष्मणा हि नदीशोषणं युक्तम् । लीलया पाने लीलानां पानस्य चेति वा। भुवः कल्पिता इत्यनेन स्वर्गोऽपि येषां भूतुल्य इति सूचितम्। तरुत्वाभिधानं साधारणोपभोग्यत्वप्रतिपादनाय। तेन नन्दनसंबन्धिष्वपि येषां साधारणी बुद्धिरासीदिति ध्वनिः। इदं च सर्वं त्वदाश्रयात्तैः क्षपाचारिभिस्तव रावणस्य संतोषकारि प्रवादोचितं सदसि कथनयोग्यं किंचिद्विहितमपि तु न किंचिदित्यर्थः । ( शार्दूलविक्रीडितं छन्दः ) । **विशेष्यतयेति** । अभेदसंसर्गेणेत्यादिः । **तथान्वयोऽस्त्विति** । यो धूमवांस्तत्र वह्निरित्यादावन्वयानुरोधेन व्युत्पत्तिवैचित्र्याद्यत्तच्छब्दार्थानां परस्परमभेदान्वये विरुद्धविभक्तिराहित्यस्यातन्त्रत्वादिति भावः । एवं च तृतीयान्तयत्पदार्थस्य षष्ठ्यन्तयत्पदार्थेऽभेदान्वये तेन च क्षपाचारिणामभेदबोध इति तृतीयान्तार्थेऽप्यभेदलाभ इति तत्त्वम् । **गुणानाम्** । अप्रधानानाम् । **परार्थत्वात्** । प्रधानापेक्षितत्वात् । **असंबन्धः** । परस्परमनन्वयः । **समत्वात्** । परापेक्षानियतत्वात् । एवं च गुणप्रधानभावेनैव पदार्थानामन्वयो न गुणानां

१ क. नन्दनवनच्छा° । ग. °चन्दन° । २ क. °ये यै° । ३ क. °च तैस्त° । ४ क. °तास्तेषां ।

तीतिरिति । क्षपाचारिभिरिति पाठे युज्यते समन्वयः ।

यथा वा,

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः ।
अपि द्वंद्वं दिष्ट्या तदिति सुभगे संवदति वा-
मतः शेषं यत्स्याज्जितमिह तदानीं गुणितया ॥ २८९ ॥

अत्र यदित्यत्र तदिति, तदानीमित्यत्र यदेति वचनं नास्ति । चेत्स्यादिति युक्तः पाठः ।

---

इत्यारुण्यादीनां पिङ्गाक्ष्यादिभिर्नान्वयो नापि गवा । तस्या अपि क्रयसाधनत्वेन गुणत्वात् । किं तु क्रयेणैव । कथं तर्हि धर्म्यन्तरस्थैरारुण्यादिभिर्न क्रय इति चेन्न । आरुण्यादीनां गवान्तानामार्थसमाजात् । तर्हि तद्वदेवात्राप्यार्थ एव समाजोऽस्त्विति चेत् । भवेदेवम् , यदि तद्वत्समानविभक्तिकत्वं भवेत् । कथं तर्हि भवत्यभिमतो योग इति चेत्, ' क्षपाचारिभिः ' इति पाठे । कथम् । सकलयत्पदनिर्दिष्टानां तत्पदेन परामर्शे तेषां सर्वेषां क्षपाचारित्वावगतेः ।

क्वचिन्न्यूनतादिनिबन्धनो यथा—**त्वमेवं०** ।

अत्र शेषसंपत्तेर्गुणिताजयप्रयोजकत्वान्वयो विवक्षितः । स च द्विधा संभवति—

---

न वा प्रधानानां परस्परमनाकाङ्क्षत्वादिति भावः । **आर्थसमाजादिति** । गुणादिप्रकारकव्यक्तिवचनानां संनिहितविशेषपरत्वादिति भावः । अत एवाऽऽरुण्यादीनां स्वाश्रयावच्छेदकतया क्रयसाधनत्वप्राप्तये धर्मैक्यप्राप्तये चाऽऽरुण्येनेत्यादिकं विहायारुणयेत्यादिनिर्देश इति बोध्यम् । ननु क्षपाचारिभिरिति पाठेऽपि षष्ठ्यन्तानन्वयतादवस्थ्यमत आह—**सकलयत्पदेति** । तत्पदेन विभिन्नविभक्तिकेनाप्यन्वयबोधाद्यावद्यत्पदार्थे तत्पदेन परामृष्टे क्षपाचार्यभेदलाभादिति भावः । क्षपाचारिणामिति निर्धारणषष्ठ्यादरे तु नाभवन्मतयोगतेति चिन्त्यमिति कश्चित् । **त्वमेवमिति** । ( नायिकां प्रति दूत्या उक्तिरियम् ) । एवं विलक्षणं सौन्दर्यं यस्याः सेत्यर्थः । स च प्रकृतनायकोऽपि रुचिरतायाः सुन्दरतायाः परिचितः । शेषे षष्ठी । कलानां वैदग्धीनां सीमानं परोत्कर्षं परमतिशयेन युवामेव नान्य इत्यर्थः । अपीति संभावने । वां युवयोस्तदनिर्वचनीयगुणगरिमद्वंद्वं दिष्ट्या भाग्येनेति पूर्वार्धोक्तप्रकारेण संवदति योग्यं भवति । अतो हेतोः शेषं यत्संगमरूपं तद्यदि स्यात्तदानीं गुणितया गुणवत्तया जितमित्यन्वयः । ( शिखरिणी च्छन्दः ) । **शेषसंपत्तेः** । मङ्गलशेषसंपत्तेः । **स च द्विधेति** । यदित्यस्य क्रियाविशेषणतया यच्छेषभवनं स गुणिताया जय इत्यर्थे तु

---

१ क °दिह सु° ।

यथा वा,

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाऽऽकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥ २३० ॥

अत्राऽऽकर्णनक्रियाकर्मत्वे कोदण्डं शरानित्यादि, वाक्यार्थस्य कर्मत्वे

---

यदित्यस्य चेदित्यर्थकतया, तद्यदिपदार्थयोर्विवक्षया वा । तयोर्यदि प्रथमे तात्पर्यं तदाऽ-वाचकता । द्वितीये तु न्यूनपदत्वमिति । न च न्यूनपदस्याप्यत्रैवान्तर्भावः । क्वचिन्न्यूनपदेऽ-प्यध्याहारादिना मतयोगसंभवे विलम्बादेवं दुष्टत्वसंभवात् ।

क्वचिदाकाङ्क्षाविरहाद्यथा—**सङ्ग्रामा०** ।

अत्र पूर्वार्धार्थेनोत्तरार्धस्य योगो विवक्षितः । न च कथंचित्संपद्यते । तथा हि—अर्थानां वाक्यार्थयोगः क्रियात्वेन वा कारकत्वेन वा संबन्धित्वेन वा, एषां विशेषणतया वा हेतुत्व-लक्षणत्वादिना वा तदादिना पूर्ववाक्यार्थमनूद्य वाक्यान्तरावष्टम्भाद्वाक्यैकवाक्यतया वा भवेत् । तत्र कोदण्डादेः प्रथमतृतीयपञ्चमषष्ठाः पक्षास्तद्विशेषणता चासंभाविता एव । कारकत्वमपि कर्मकर्तृभावाभ्यामन्यन्न घटते । तत्राऽऽकर्णनक्रियायां पदार्थमात्रस्य कर्मत्वे विवक्षिते 'कोदण्डं शरान्' इत्यादि स्यात् । अथ परस्परानन्विता मिलिताः पदार्थाः कर्म, न प्रत्येकम् । अतो न प्रत्येकवाचकात्कोदण्डादिशब्दाद्द्वितीयेति चेत्, तर्हि शुद्धप्राति-

---

तदानीमित्यस्यानन्वितत्वमिति भावः । **तद्यदिपदेति** । अतः शेषं यत्तद्यदि स्यादित्य-न्वयविवक्षयेति भावः । **क्वचिन्न्यूनेति** । अध्याहारश्च नित्यसाकाङ्क्षक्रियाकारकवाचि-स्थल एवेति नात्र स इति भावः । **संभवादिति** । स्वरूपायोग्यत्वे तु प्रकृतदोष इति भावः । **सङ्ग्रामेति** । ( खण्डप्रशस्तौ पद्यमिदम् ) । सङ्ग्रामरूपाङ्गणगतेन । निर्भय-सञ्चरणीयत्वेनाङ्गणता । चापे समारोपिते ज्याविशिष्टे कृत इत्यर्थः । ( शार्दूलविक्रीडितं छन्दः ) । **कर्मत्वे विवक्षित इति** । अत्र येन येन यद्यत्समासादितं तदाकर्णये-त्यर्थः । उत्तरवाक्यस्थयत्पदेन तत्पदाक्षेपात् । तत्राऽऽक्षिप्ततत्पदार्थे कोदण्डादीनामभे-दान्वये विवक्षित इत्यर्थः । समानविभक्तिकत्वस्य तदन्वये तन्त्रत्वाद्द्वितीया स्यादिति भावः । **परस्परानन्विता इति** । कोदण्डयुक्ताः शरा इत्येवं परमनन्विता इत्यर्थः । **मिलिताः** । कोदण्डशरादयः समुदायापन्नाः । अत एव कोदण्डः शरा इत्यादिप्रथमापादनम् । **कर्मेति** । येन येन यद्यत्समासादितं तदाकर्णयेत्याकर्णनक्रियाकर्मीभूततत्पदार्थान्वितत्वमि-

---

१ क. °रमला । °रनघा की° । २ क. °देरदु° । ३ क. °र्वार्धेनो° । ४ क. °कयार्थे यो° । ५ क. °रान्वि° ।

**कोदण्डः शरा इति प्राप्तम् । न च यच्छब्दार्थस्तद्विशेषणं वा कोद-**

पदिकार्थमात्रार्थकत्वात् ‘ कोदण्डः शरा ’ इत्यादि प्रथमा स्यात् । ‘ माहिषं दधि सशर्करं पयः ’ इत्यादिवत् । अथ समासादनक्रियायां कोदण्डादीनां कर्तृतया शरादीनां तु कर्मभावेनान्वय इति चेत् , न । शराः समासादितमित्यनन्वयात् । किं च येन यत्समासादितं कोदण्डेन शराः समासादितास्तदाकर्णयेति पर्यवसाने कर्त्रोः कर्मणोश्च भेदः प्रतीयेत । न चाऽऽकाङ्क्षानिवृत्तिः स्यात् । अथ यच्छब्दस्य बुद्धिस्थवाचकतया कोदण्डादिपदार्थ एव यच्छब्दार्थः । तथा च यच्छब्दार्थस्य क्रियान्वये कोदण्डादीनामन्वयो जात एवेति चेत् , न । एवं हि कोदण्डादीनां पुनरुपादानं व्यर्थमेव स्यात् । तस्मादस्ति कश्चित्प्रकारकृतस्तदर्थयोर्भेद इति तदवच्छिन्नतया योगः कथंचिदुपपादनीयः । एतेनाऽऽक्षिप्ततच्छब्दार्थत्वमपि निरस्तम् । अथ कर्तृकर्मणोर्विशेषणानि कोदण्डादीनीति चेत् । न । कोदण्डेन येन शरा यत्समासादितं तदाकर्णयेति वाक्यार्थपर्यवसाने पुनर्विशेषानुक्तावाकाङ्क्षाया अनिवृत्तिप्रसङ्गात्, शरा यदित्याद्यन्वयबाहुल्यप्रसङ्गाच्च । अत एव ‘कोदण्डादिशरादी कर्तृकर्मणी, तद्विशेषणं तु यच्छब्दार्थः ’ इत्यपि व्युदस्तम् । अथ येन यदिति सामान्यतोऽवगमात्केन

---

त्यर्थः । **कोदण्डः शरा इति** । तत्पदेन तृतीयान्तयत्पदोपस्थाप्यस्य प्रथमान्तयत्पदोपस्थाप्यस्याऽऽकर्णनक्रियाकर्मत्वबोधनादिति भावः । समुदायाभेदान्वये हि न समानविभक्तिकत्वं तन्त्रमित्याह—**माहिषं दधीति** । “ कालिदासकविता नवं वयः । एणमांसमबला च कोमला स्वर्गशेषमुपभुञ्जते नराः ” इति तच्छेषः । अत्र ह्यबलान्तानां समुदितानां भिन्नविभक्तिकत्वेऽपि स्वर्गशेषेऽभेदान्वयदर्शनादिति भावः । अत्र पक्ष आसादनान्वितस्याऽऽकर्णनक्रियान्वयो न प्रतीयेत । यत्पदेन केवलकोदण्डादेः परामर्श आक्षिप्ततत्पदेनापि तथैव प्रतिपत्तेरित्यपि बोध्यम् । एतेन यद्यत्समासादितं तदाकर्णय, कोदण्डादिकं चाऽऽकर्णयेत्यन्वयोऽपि परास्तः । कोदण्डाद्यतिरिक्तस्यैव यत्पदेन तदा स्वरसतः प्रतीत्या तरिकमित्याकाङ्क्षापत्तेश्च । **कर्त्रोः कर्मणोश्च भेद इति** । कोदण्डादिकर्तृकर्मापेक्षया यत्पदार्थकर्तृकर्मणोर्भेदः प्रतीयेतेति भावः । **न चाऽऽकाङ्क्षेति** । यत्पदार्थयोरित्यर्थः । **जात एवेति** । एवं च तदभिन्नत्वात्कोदण्डादौ तृतीयाद्युपपत्तिरिति भावः । **एवं हीति** । कोदण्डत्वादिना यच्छब्देन बोधेऽयं दोषः । कोदण्डेनेत्यादि तात्पर्यग्राहकमिति चेदावश्यकत्वादिदमेवास्त्विति भावः । **प्रकारकृतः** । कोदण्डत्वबुद्धिस्थत्वरूपप्रकारकृतः । **तदर्थयोः** । यच्छब्दार्थकोदण्डपदार्थयोः । **आकाङ्क्षाया इति** । केन कोदण्डेन के शरा इति विशेषाकाङ्क्षाया इत्यर्थः । **अन्वयबाहुल्येति** । तथा च प्रतीयमानैकवाक्यताभङ्ग इति भावः । अनन्वयबाहुल्येति पाठे बहुष्वनन्वयप्रसङ्ग इत्यर्थः कथंचित् । **व्युदस्तमिति** । कल्पद्वयेऽपि

---

१ क. ॰यानन्व॰ ।

ण्डादि। न च केन केनेत्यादिप्रश्नः।

यथा वा,

चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः।
अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः॥ २३१॥

इत्यादौ भार्गवस्य निन्दायां तात्पर्यम्। कृतवतेति परशौ सा प्रती-

---

किमिति विशेषप्रश्ने कोदण्डेन शरा इत्याद्युत्तररूपाणि वाक्यान्तराणीति चेत्। न। तादृश-प्रश्नाश्रवणात्। अथासावुन्नीयते। एवमुत्तरालंकारोऽपि लभ्यत इति चेत्। न। येन यदासादितं तदाकर्णयेति प्रतिज्ञाय प्रश्नं विनाऽपि कोदण्डादिनिर्देशसंभवेन तदुन्नयनासिद्धेः। ननु चाऽऽसादितमित्यस्य क्रियापदस्य वचनादिविपरिणामेनानुषङ्गे कोदण्डेन शराः समासादिता इत्यादिवाक्यान्तरारम्भे को दोष इति चेत्। वाक्यभेदः। पूर्वापरार्धयोरनन्वयतादवस्थ्यात्। लोके तादृशवाक्यभेदेऽपि दोषाभावात्तथा प्रयोग इति।

व्यङ्ग्यस्यापि विवक्षितयोगाभावेऽस्यावतारो यथा—**चापाचार्य०**।

अत्र रेणुकाकण्ठबाधाजन्यात्मनिन्दया भार्गवस्य योगो विवक्षितः। तन्निन्दाप्रकरणात्। परशोः स्वक्रियापाटवेनानिन्दनीयत्वाच्च। न च तथा प्रतीयते। कृतवतेति तृतीयया परशु-

---

यच्छरा येन शरैरित्यनन्वयादन्वयबाहुल्यप्रसङ्गाच्चेत्यपि बोध्यम्। **तदुन्नयनासिद्धेरिति**। राज्ञो धीरोदात्तत्वेन प्रश्नवाक्याप्रयोगेऽपि जिज्ञासावश्यकत्वात्कवेरपर्यवसितसामान्योक्त्या न्यूनतापत्तेश्च। सामान्योक्त्या बोधनीयमभिमुखीकृत्य लोकोत्तरविशेषनिर्देशेन चमत्कारातिशयाय प्रतिज्ञातस्यार्थस्य निर्वाहाय विशेषनिर्देशसंभवेनान्यथाऽनुपपत्त्यभावान्न तदुन्नयनमिति भावः। नन्वेवं तथैवास्त्विति शङ्कते—**ननु चेति**। समासादितमित्यस्य वचनविपरिणामेनानुषङ्गाच्च क्रियालाभोऽपीति भावः। वाक्यभेदे हेतुमाह—**पूर्वापरार्धयोरिति**। एवं च मतस्य चमत्कारिणः पूर्वापरार्धयोरन्वयस्याभावादभवन्मतयोग इति भावः। "संप्राप्ते परिपन्थियोधनिवहे सांमुख्यमासादितम्" इति पाठस्तु युक्तः। जन्यनिन्दयेति पाठः। **भार्गवस्य योगो विवक्षित इति**। अत्र हि रावणस्य भार्गवेण युद्धमनभिलषितमिति तदुपेक्षा वाक्यार्थः। स च भार्गवनिन्दायामेव। परशोर्निन्दायामपि भार्गवस्यानुपेक्ष्यत्वात्। निन्दितशस्त्रं विना शस्त्रान्तरेणापि तेन युद्धसंभवात्। अस्त्रस्य निन्द्यत्वेऽप्यस्त्रिणोऽनिन्द्यत्वात्परशुनिन्दामुखेन भार्गवनिन्देत्यपि वक्तुमशक्यम्। परशोरचेतनस्याकर्तृत्वेन

---

१ क. °जयीत्यादौ। २ क. °परस्य। ३ क. °भावस्या°। ४ क. °बाधज°।

यते । कृतवत इति तु पाठे मतयोगो भवति ।

यथा वा,

चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं हतो दुन्दुभिः ॥ २३२ ॥

अत्राध्वरशब्दः समासे गुणीभूत इति न तदर्थः सर्वैः संयुज्यते ।

---

नैव संबन्धावगमात् । 'कृतवतः' इति पाठे तु भार्गवे[1] निन्दायोगः प्रतीयते । यदि तु परशुनिन्दानन्तरं विदग्धोक्त्यौ भार्गवेऽपि निन्दावगमस्तदा कृतवत्त्वस्यानेनायोगाद्वाच्यायोगोदाहरणमेवैतत् । तथा हि, यथा स्पर्धायोग्यत्वोपपत्तये परशुस्वामिनो महादेवशिष्यत्वादीनि विशेषणान्युपात्तानि, तथा तदयोग्यत्वोपपादनाय तस्यैव कश्चिद्धर्मो वक्तुमुचित इति भार्गवेण कृतवत्त्वस्यान्वयो विवक्षितो न प्रतीयत इति दुष्टत्वम् । एवं च चण्डीदासादिव्याख्यानमनादेयम् ।

क्वचित्समासच्छन्नतया मतयोगाभावः । यथा—चत्वारो० ।

अत्र सङ्ग्रामाध्वरस्य ऋत्विगादिषु सर्वत्रान्वयो विवक्षितो न तु प्रतीयते । समासच्छन्नत्वात् ।

---

स्वतोऽनन्वयत्वाच्च । धीरोद्धतस्य रावणस्य परम्परया तद्दोषकथनानौचित्याच्चेति भावः । **इति पाठे त्विति** । न च परशुनिन्दाया अप्रतीतौ परशुना बद्धस्पर्धो लज्जत इत्यसंबद्धं स्यात् । तव परशुनेत्यनेन तत्संबन्धेन परशोर्निन्दासूचनात् । **वाच्यायोगेति** । तद्वत्त्वेन वाच्यस्य तदयोगेत्यर्थः । **चत्वार इति** । ( वेणीसंहारे प्रथमाङ्के दुंदुभिध्वनिमाकर्ण्य रणयज्ञः प्रवर्तत इत्युक्त्वा भीमसेनस्योक्तिरियम् ) । भीमादयः सहदेवान्ता इत्यर्थः । स भगवानित्यनेन तादृशस्योपद्रष्टृत्वेऽवश्यं कार्यसिद्धिरिति ध्वनितम् । दीक्षितो गृहीतनियमः । पत्नी द्रौपदी । गृहीतव्रता केशसंयमनाद्यभावरूपव्रतवती । कौरव्या दुर्योधनादयः । हतो दुन्दुभिः स्फीतं स्निग्धं यथा तथा रसति । ताडने स्निग्धशब्दोदयाज्जयसूचनम् । यशो दुन्दुभिरिति पाठे स्फीतं यश एव दुन्दुभिरिति व्यस्तरूपकं बोध्यम् । समासे स्फीतमित्यनन्वयात् । ( शार्दूलविक्रीडितं छन्दः ) । **समासच्छन्नत्वादिति** । इतरविशेषणत्वेनोपस्थितस्यापरत्र विशेषणत्वेनान्वयस्याव्युत्पन्नत्वात् । समास एकार्थीभावाङ्गीकारेण पदार्थोपस्थि-

---

१ ध. यशो । २ क. °ते । तथा ज° । ३ क °र्गवनि° । ४ क. °क्त्याऽपि भा° । ५ क. °नेन योगात् । ६ क. °वस्य शि° । ७ क. °मासाच्छ° ।

यथा वा,

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः॥२३३॥

अत्र दण्डपादगता निजतनुः प्रतीयते । भवान्याः संबन्धिनी तु विवक्षिता ।

अवश्यवक्तव्यमनुक्तं यत्र । यथा,

अप्राकृतस्य चरितातिशयैश्च[2] दृष्टै-
रत्यद्भुतैरपहृतस्य[3] तथाऽपि[4] नाऽऽस्था ।
कोऽप्येष वीरशिशुकाकृतिरप्रमेय-
माहात्म्यसारसमुदायमयः पदार्थः ॥ २३४ ॥

---

क्वचिद्व्युत्पत्तिविरोधात् । यथा—जङ्घाकाण्डो० ।

अत्र तनुपदार्थस्य पार्वत्या योगोऽभिमतो दण्डपादेन प्रतीयते । वाक्ये यत्प्रधानं तत्रैव निजादिपदव्युत्पत्तेः । दूषकताबीजमिष्टप्रतीतिविरह इति नित्यदोषोऽयम् ।

अनभिहितवाच्यमित्यावश्यके ण्यः । तेनानभिहितं वाचकपदातिरिक्तमवश्यवाच्यं यत्र तदित्यर्थः । वाचकपदानभिधाने न्यूनपदत्वव्यवस्थापनात् । यत्तु "न्यूनपदेऽप्रतीतिमात्रमत्र तु विरुद्धा प्रतीतिरित्यनयोर्भेदः, 'अप्राकृतस्य' इति वक्ष्यमाणोदाहरणे च मत्संबन्धित्वेन वीरशिशुप्राप्तिरेव विरुद्धा प्रतीतिः" इति कस्यचिद्व्याख्यानं तदनुभवविरुद्धम् । तथाऽनुभवस्याप्रतीतेः । इदं चान्यथावाच्यस्यान्यथाऽभिधानाद्वा, अवाचकस्य द्योतकादेरनभिधानाद्वा । आद्यं यथा—अप्राकृतस्य० ।

---

तिरेवेतरविशेषणतयेति भावः । "हिरण्यपूर्वं कशिपुं प्रचक्षते", "रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः" इत्यादौ तु नायं दोषः । नामनामिनोरभेदस्य सत्त्वेनेष्टयोगसंपत्तेः । नामनामिनोरभेदश्च वैयाकरणसिद्धान्तमञ्जूषायामस्माभिरुपपादितः । व्युत्पत्तेरिति । प्रधानक्रियाकारकार्थत्वव्युत्पत्तेरित्यर्थः । वाच्यशब्दोऽत्र शब्दपरो नार्थपरः । तथा सति वाक्यदोषत्वानापत्तेरित्याशयेनाऽऽह—वाचकपदातिरिक्तेति । एवं चोद्देश्यविधेयभावादिद्योतकविभक्तीनां निपातानां च न्यूनत्वेऽयं दोष इति भावः । अप्राकृतेति । ( वीरचरितनाटके द्वितीयाङ्के ) रामेण धनुर्भङ्गे कृते जनकस्य हर्षादनाश्वासोक्तिरियम् । अप्राकृतस्या-

---

१ क. °वानीसं° । २ क. °यैर दृष्टै° । ३ क. °रत्याहतस्य मम नाम° । ४ क. °तैर्मन्दृ° । ५ क. °प्येकदी° । ६ क. °यसैन्दर्यसा° । ७ क. °हितवा° ।

अत्रापहृतोऽस्मीत्यपहृतत्वस्य विधिर्वाच्यः । तथाऽपीत्यस्य द्वितीय-वाक्यगतत्वेनैवोपपत्तेः ।

यथा वा,

एषोऽहमद्रितनयामुखपद्मजन्मा
प्राप्तः सुरासुरमनोरथदूरवर्ती ।
स्वप्नेऽनिरुद्धघटनाधिगताभिरूप-
लक्ष्मीफलामसुरराजसुतां विधाय ॥ २३५ ॥

---

अत्राहमपहृतोऽस्मीति प्रकारेणापहृतत्वस्य विधिर्वाच्यः । तेन वाक्यद्वयसंपत्तौ तथाऽपीत्युपपद्यते । द्वितीयवाक्यगतत्वेनैव तस्योपपत्तेः । नन्वयमविमृष्टविधेयांश एवेति चेत् ? न । न हि विधेयाविमर्शमात्रमत्र दूषणम् । किं तु तथाऽपीत्यस्यासंगतिरपि । तदनुरोधेनैव ह्यपहृतत्वस्य विधेयत्वाभ्युपगमो न तु तत्प्राधान्यात् । एतेन 'अवान्तर-वाक्ये न विधेयाविमर्शः' इति समाधानमनादेयम् । बीजाभावात् । 'क्षणमप्यमुक्ता—' इत्यवान्तरवाक्य एव तदुदाहरणाच्च । अस्तु वाऽत्रोदाहरणे विधेयाविमर्शस्तथाऽपि द्वितीय-भेदे तदसंकरमात्रेणैव दोषभेदव्यवस्थितेः । यथा—एषोऽह० ।

---

नन्यसामान्यस्य विदग्धस्य मम वा चरितातिशयैः । चो भिन्नक्रमः । दृष्टैः श्रुतैश्चापहृतस्य वशीकृतमनसो मम यद्यप्यहमपहृतस्तथाऽपि नाऽऽस्था, न तथा निश्चयः। दशरथपुत्रेणैव धनु-र्भग्नमिति निश्चयो नेत्यर्थः । तत्र हेतुः, एष कोऽपि जनागम्यः पदार्थो वीरशिशुकाकृतिः । अप्रमेयेति । अन्यत्रादृष्टसौन्दर्यसारसमुदायप्रचुरः । ( वसन्ततिलका छन्दः ) । **तस्यो-पपत्तेरिति** । तच्छब्दश्च पूर्वप्रक्रान्तपरामर्शकः । न चैकवाक्यतयाऽन्वये तत्संभव इति भावः । **न हि विधेयेति** । अत्रापहृतस्य मम नाऽऽस्थेत्यन्वयसंभवेऽपि 'तथाऽपि'— इति पदासंगतियुक्तस्य तस्यात्र दोषत्वमिति भावः । आकर्णितैरपहृतोऽस्मि तथाऽपि नाऽऽस्थेति तु युक्तम् । **तदसंकरेति** । एवं चात्र विधेयाविमर्शेन तस्य संकर इति भावः । **एषोऽहमिति** । उषाहरणे कंदर्पवचश्चेदम् । मुखपद्मजत्वं दाहानन्तरं वरप्रदानद्वारा । एतेन शिवस्याप्यप्रधृष्य इति ध्वनितम् । हेऽसुरराज बाणासुर । स्वप्नेऽनिरुद्धेन या संघटना संबन्धस्तेनाधिगतमनुरूपाऽनिरुद्धानुरूपा या लक्ष्मीः सौन्दर्यशोभा तस्याः फलमनिरुद्धस्य घटनरूपं यया तादृशीं तव सुतां विधाय निर्मा-याहं प्राप्त इत्यन्वयः । नन्वागतस्यापि तवेतः परं मत्तो नाश एव भविष्यतीत्यत्राऽऽह— सुरासुरेति । सुरासुराणामपि मनोरथस्यापि दूरवर्तीत्यन्वयः । तेनान्यमनोरथविषयत्वाभावः ।

---

१ क. °तानिरू° । २ ग. तस्य प्रतीतिः ।

अत्र मनोरथानामपि दूरवर्तीत्यप्यर्थो वाच्यः ।

यथा वा,

त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मम पश्यसि त्यजसि मानिनि दासजनं यतः ॥२३६॥

अत्रापराधस्य लवमपीति वाच्यम् ।

अस्थानस्थपदं यथा,

प्रियेण संग्रथ्य विपक्षसंनिधा-
वुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुषु ॥ २३७ ॥

---

अत्र सुरासुराणामपि मनोरथस्य दूरवर्तीत्यप्यर्थोऽवश्यवाच्यः । अन्यथाऽन्यमनोरथविषयत्वं प्रतीयते । असमासेऽप्येष दोषः । यथा—त्वयि० ।

अत्र लवमपीत्यप्यर्थोऽवश्यवाच्यः । अन्यथा लवनिषेधे स्थूलप्रतीतिप्रसङ्गात् । दूषकताबीजं प्रथमेऽभिमताप्रतीतिः, अन्त्ययोस्तु विरुद्धप्रतीतिरिति नित्यदोषोऽयम् ।

अपदस्थेति । अस्थानस्थपदमस्थानस्थसमासं चेति द्वयमित्यर्थः । अस्थानस्थत्वं चायोग्यस्थानस्थत्वम् । तयोराद्यं यथा—प्रियेण० ।

---

सुरासुराणामन्येन्द्रियाविषयत्वं च ध्वनितमिति नाशाशक्यताध्वनिः । ( वसन्ततिलका छन्दः ) । त्वयीति । (विक्रमोर्वशीये चतुर्थाङ्के) उर्वशीं प्रति पुरूरवस उक्तिः । (हे मानिनि त्वयि निबद्धा रतिरनुरागो यस्य तादृशस्य प्रियवादिनो मधुरभाषिणः प्रणयस्य प्रेम्णो भङ्गे नाशविषये पराङ्मुखं चेतो यस्य तादृशस्य मम कमपराधस्य लवं लेशं पश्यसि यतो यस्मात्कारणाद्दासजनं मां त्यजसि ) । पराङ्मुखं भीरु । विशेषणत्रयमपराधलेशाभावोपपादकमिति परिकरोऽत्रालंकारः । ( द्रुतविलम्बितं वृत्तम् ) । अस्थानस्थपदमिति । आद्यं पदपदं स्थानार्थकमित्यर्थः । अयोग्येति । केचित्त्वस्थानस्थत्वं यथाश्रुतानुपूर्व्या विवक्षितस्वार्थानुभावकत्वे सति स्वसाकाङ्क्षस्थानाद्व्यवहितस्थानप्रयुक्तत्वम् । सत्यन्तेन संकीर्णगर्भिताक्रमाणां व्युदासः । तेषु तदानुपूर्व्या विवक्षितार्थाबोधादित्याहुः । प्रियेणेति । किराते ( अष्टमसर्गे ) जलक्रीडावर्णने कस्याश्चिद्वर्णनमिदम् । विपक्षः सपत्नी तत्संनिधौ प्रियेण संग्रथ्य सम्यगादरेण न तु यथाकथंचिदुपाहितां स्पर्शपूर्वकं निवेशितां जलाविलां जलेन म्लानामपि काचिन्नायिका न विजहौ । यतः प्रेम्णि गुणा उत्कर्षा न तु वस्तुनि । प्रेम्णि सति वस्तुन्युत्कर्षो न तु वस्तुमात्र इत्यर्थः । प्रेमोत्कर्ष ए-

---

१ क. प्रणयभङ्गपराङ्मुखचेतसस्त्वयि निबद्धरतेः प्रियवादिनः । २ क. °निधौ निवेशितां । ३ क. ग. वस्तुनि । ४ क. °मे नियता° ।

अत्र काचिन्न विजहाविति वाच्यम् ।
यथा वा,

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकंधरेन्दुशकलेनान्तः कपोलस्थलम् ।
पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितह्रीतया
प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ॥२३८॥

अत्र नखलक्ष्मेत्यतः पूर्वं कुटिलाताम्रेति वाच्यम् ।

---

अत्र न काचिदिति न योग्यं नञः स्थानम् । प्रतियोगिसंनिधिर्हि तथेति न युक्तम् । तद्व्यवधानेऽपि ' न खलु न खलु बाणः संनिपात्योऽयमस्मिन् ' इत्यादौ निरवद्यप्रयोगदर्शनात् । परं तु न काचिद्विजहौ, अपि तु सर्वा एव विजहुरिति विरुद्धप्रतीतिप्रसङ्गादयोग्यं स्थानमेतत् । विरुद्धप्रतीतिजननादिव विवक्षितोपयोगस्य पदस्योपयोगासंभवादपि स्थानस्यायोग्यत्वम् । यथा—लग्नः० ।

अत्र कुटिलाताम्रच्छवित्वं नखलक्ष्मशङ्काबीजमिति तत्पूर्वमेव प्रयुज्यमानमुपयुज्यते न तु पश्चादिति स्पष्टं दुष्टिबीजम् । नित्यश्चायम् ।

---

वोपादेयो न वस्तूत्कर्ष इति भावः । ( वंशस्थं वृत्तम् ) । **अत्र न काचिदिति** । कवेर्जलक्रीडावर्णन एकैकस्या एकैकगुणवर्णनप्रस्तावेनैकस्याः कस्याश्चिदेवैतादृशवर्णने तात्पर्यात्, अपि तु सर्वा न विजहुरिति विरुद्धप्रतीतेः । मूले 'अपि तु सर्वा न विजहुः' इत्येव पाठः । अत एव ' न ङिसंबुध्योः ' (पा०सू०८।२।८) इति सूत्रे महाभाष्ये न क्वचिन्ङिर्लोपेन लुप्यतेऽपि तु सर्वत्र लुप्तैव, इति प्रयुक्तम् । तत्र हि न क्वचिदित्यादेः सर्वत्रैव लोपेन न लुप्यत इत्यर्थः । 'अपि तु सर्वत्र ' इत्यादिप्रतिनिर्देशात् । तस्मात्क्वचिदादेः पूर्ववर्तिनि नञि सति क्वचिदादिपदे काकुर्व्युत्पत्तिसिद्धेति चिदित्यस्याप्यर्थकत्वं वा व्युत्पत्तिसिद्धमिति भावः । **लग्न इति** । ( कदाचित्किल भवानी रात्रौ प्रणयकलहे हरजटामाकृष्य चन्द्रखण्डसहितां तां कपोलतले निधाय निद्रां कृतवती । ततः प्रभाते जटास्थचन्द्रखण्डमुद्राङ्कितं कपोलं दृष्ट्वा नखक्षतमेतदिति शङ्कमानायाः सख्या हास्येन लज्जिता सती कपोलस्थं चन्द्रमुद्राङ्कं हस्तेन ममार्जेति कविकल्पनम् ) । शितिकंधरो महादेवस्तादिन्दुशकलेन निद्रामध्ये कपोलस्थलमध्ये लग्नो मुद्राङ्को वः पातु । अन्यसंपर्कादन्यत्र समुदितं चिह्नं मुद्राङ्कः । पार्वत्याः कपोललग्नत्वे हेतुः केलीति । आलम्बेन संबन्धेन । नखलक्ष्मशङ्काहेतुः कुटिलेत्यादि । प्रोन्मृष्टत्वे हेतुः—नखलक्ष्मशङ्कावत्सखीनर्मस्मितजन्यव्रीडेति बोध्यम् । ( शार्दूलविक्रीडितं छन्दः ) । **अत्र कुटिलाताम्रेति** । अत्र कुटिलाताम्रच्छवित्वस्य साधर्म्य-

---

१ ग. °तव्रीडया । २ क. पङ्कजेन ।

अस्थानस्थसमासं यथा,

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणा-
त्फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी ॥ २३९ ॥

अत्र क्रुद्धस्योक्तौ समासो न कृतः। कवेरुक्तौ तु कृतः।

संकीर्णम्, यत्र वाक्यान्तरस्य पदानि वाक्यान्तरमनुप्रविशन्ति[३]। यथा,

किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम्।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥ २४० ॥

---

अस्थानस्थसमासं यथा—अद्यापि०।

अत्र पूर्वार्धे क्रुद्धस्य शशिन उक्तिरिति तत्समासस्य योग्यं स्थानम्, न पुनः कवेरुक्तिरुत्तरार्धमित्यस्थानसमासता। न च प्रतिकूलवर्णत्वान्तर्भावः। समासस्यावर्णरूपत्वात्। नापि पतत्प्रकर्षता। प्रथमप्रवृत्तस्य प्रकर्षस्याग्रे त्यागे हि तत्संभवः। अत्र तु तद्वैपरीत्यम्। किं चोभयत्रोचितस्यैव प्रकर्षस्याभावे तत्संभवः। अत्र त्वेकतरत्रैव समासौचित्यमिति। दूषकताबीजं सहृदयवैमुख्यम्।

संकीर्णं वाक्यान्तरपदेन मिश्रम्। यथा—किमिति०।

---

रूपस्य नखलक्ष्मशङ्काबीजस्य प्रागप्राप्तेस्तच्छङ्कायास्तन्मुखनिरीक्षकत्वेनायोग्यतादिपरिहाराय साधर्म्योपस्थापकापेक्षणाद्विलम्बेन प्रतीतिरिति भावः। पूर्वं प्रयोगे तु झटिति हेतुहेतुमद्भावेनान्वयप्रतीतिरिति तत्त्वम्। अद्यापीति। मत्सांनिध्येऽपीत्यर्थः। स्तनलक्षणशैलदुर्गाभ्यां विषमेऽगम्ये। उद्यन्त एव दूरतरं प्रसारिताः करा येन सः। उद्यदित्यनेन कर्मधारयो वा। कोशः कुड्मलं खड्गपिधानं च। धिगिति। स्त्रीसंबन्धेनाऽऽत्मानं रक्षतोऽपि शत्रोरनाक्रन्दाद्धिगित्युक्तिः। ( शार्दूलविक्रीडितं छन्दः )। योग्यं स्थानमिति। तत्रैव तद्व्यङ्ग्यौजोगुणस्यौचित्यादिति भावः। केचित्तु, अत्र दोषद्वयं स्थाने समासत्यागोऽस्थाने करणं चेत्यस्थानसमासपदार्थोऽपि द्विविध इत्याहुः। अवर्णरूपत्वादिति। रसाननुगुणवर्णबहुलवाक्यत्वस्यैव प्रतिकूलवर्णपदार्थत्वादिति भावः। एवं च माधुर्यवच्छृङ्गारादिरसप्रधानपद्ये दीर्घसमासेऽप्ययमेव दोष इति बोध्यम्। वाक्यान्तरपदेनेति। भिन्नभिन्नवाक्यार्थान्वितपदानां तत्तदर्थनिराकाङ्क्षवाक्यघटकत्वमित्यर्थः। तेन वाक्यैकवाक्यतया महावाक्यस्यैकत्वेऽपि किमितीत्यादावयं दोष इति बोध्यम्। किमितीति। (मानिनीं प्रति सख्या उक्तिरियम्)।

---

१ ग उद्य॰। २ क. ॰रपदानि वाक्यान्तरेऽनु॰। ३ ग. ॰न्ति। कि॰।

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि, इमं कण्ठे गृहाण, मनसस्तमोरूपं कोपं मुञ्चेति । एकवाक्यतायां तु क्लिष्टमिति भेदः ।

गर्भितम्, यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति । यथा,

परापकारनिरतैर्दुर्जनैः सह संगतिः ।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥ २४१ ॥

अत्र तृतीयपादो वाक्यान्तरमध्ये प्रविष्टः ।

यथा वा,

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्याऽरिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः॥२४२॥

---

अत्र पादगतं हृदयनाथं किमिति न पश्यसि, इमं कण्ठे गृहाण, कोपं मुञ्चेति वाक्यत्रयेऽन्योन्यवाक्यस्थपदमादायानभिमतं प्रतीयते । इदमेव च दुष्टिबीजं प्रतीतिविलम्बो वा । एकवाक्ये क्लिष्टत्वमिति ततो भेदः ।

गर्भितं जातगर्भम् । अन्तःस्थितवाक्यान्तरं वाक्यमित्यर्थः । तत्तु वाक्यं क्वचित्स्वभावत एवैकम् । क्वचित्तु वाक्यैकवाक्यतयैकीभूतम् । तत्राऽऽद्यं यथा—**पराप०** ।

अत्र वदामि भवतस्तत्त्वमिति वाक्यान्तरं प्रथमवाक्ये स्थितम् । द्वितीयं यथा—**लग्नं०** ।

---

पादगतं पादनतं बहुगुणं हृदयनाथं किमिति न पश्यसि । इमं कण्ठे गृहाण । मनसस्तमोरूपं कोपं मुञ्चेत्यन्वयः । " बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतम् " इत्यादौ तु बाले शृणु नाथ वदेत्येवं तयोरध्याहृतक्रियापदेनैकवाक्यतया प्रतीतेः संकीर्णत्वदोषशङ्काऽपि नास्तीति बोध्यम् । ( गाथा छन्दः ) **गर्भितमिति** । अत्र मध्यस्थितस्य स्वार्थानुभावकत्वं संकीर्णे तु न तथेति भेदः । एतेन बीजफलसाम्ये संकीर्णाद्गर्भितस्य पृथगुपादानं चिन्त्यमित्यपास्तम् । फलवैषम्यसत्त्वात् । **वाक्यैकवाक्येति** । हेतुहेतुमद्भावेन वाक्यैकवाक्यताऽत्र । **स्थितमिति** । एवं च संगतेः सदसत्त्वसंशयोऽन्त्यपादे कर्मसाकाङ्क्षत्वं चेति दूषकताबीजमिति केचित् । **लग्नमिति** । रागोऽनुरागो रुधिररक्तिमा च । अङ्गमवयवः । खड्गगतरेखाविशेषश्चेति दीपिका । ययैवेत्येवकारेणैकस्या एव नानासंबन्ध इति सूचितम् । अरिकण्ठे । अनेन राज्ञि याऽत्यन्तं विरक्तेति ध्वनितम् ।

---

१ क. °क्यतयां तु । २ सुचिरमि° । ३ क. °न्तरवा° ।

अत्र विदितं तेऽस्त्वित्येतत्। कृतं प्रत्युत लक्ष्मीस्ततोऽपसरतीति विरुद्धमतिकृत्।

' मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम्॥ '

इति प्रसिद्धिमतिक्रान्तम्, यथा,

महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रति[1]रुतानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकंदरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः॥ २४३॥

---

अत्र तत्सक्तोऽयं न किंचिद्गणयति तेन भृत्येभ्यो दत्ताऽस्मीति वाक्यैकवाक्यमध्ये विदितं तेऽस्त्विति वाक्यान्तरं स्थितम्। प्रत्युत लक्ष्मीस्ततोऽपसरतीति विरुद्धमतिकारित्वात्प्रकाशितविरुद्धत्वम्। प्रतीतिवि[2]च्छेदोऽत्र दुष्टिबीजम्। अतो न यत्र प्रतीतिर्विच्छिद्यते तत्र नायं दोषः।

प्रसिद्धिहतं—**मञ्जीरादि०**।

इति प्रसिद्धिमतिक्रान्तम्। यथा—**महाप्रलय०**।

---

मातङ्गाश्चण्डाला दन्तिनश्च। उपरि स्वयमेव गत्वा तदुपरि पततीत्यर्थः। पर उदासीनाः शत्रवश्च। तस्यामसियष्ट्यां सक्तोऽनुरक्तश्च न किंचिद्गणयति न किमपि युक्तायुक्तं विचारयति। तेनाविचारेणैवाहं भृत्येभ्यो दत्तेति विदितं तेऽस्त्विति श्रीनियोगात्, मत्पितर्येवं निवेदयेत्येवंरूपात्। अम्बुधिं तत्संदेशं गदितुमिव गतेत्यन्वयः। अत्रासियष्टिरसतीत्वेन लक्ष्मी राजपत्नीत्वेन कीर्तिश्च दूतीत्वेनाध्यवसिताः। संदेशस्वरूपं लग्नमित्यादि भृत्येभ्य इत्यन्तम्। अत्र भङ्गिविशेषेण शौर्यदातृत्वयशसामुत्कर्षो वर्णितः। **कृतं प्रत्युत्तेति**। न केवलं विवक्षितैकवाक्यताऽप्रतीतिमात्रं किं तु दोषान्तरमपीत्यर्थः। विदितं तेऽस्त्वित्युक्तौ तज्ज्ञापनं तत्परित्यागे न ममापराधः किंतु तस्यैवेति ज्ञापनार्थमिति लभ्यते। तदनुक्तौ तु तदवमाननापसारणप्रकारश्चिन्तनीय इत्येतदर्थमिति भावः। ( स्रग्धरा छन्दः )। **महाप्रलयेति**। ( वेणीसंहारे तृतीयाङ्के ) अश्वत्थाम्न उक्तिः। महान्यः प्रलयमारुतस्तेन क्षुभितौ यौ प्रचण्डौ पुष्करावर्तकाख्यौ घनौ तयोः प्रचण्डं भीषणं घनं निबिडं यद्गर्जितं तस्य प्रतिरुतं प्रतिध्वनिस्तदनुकारी तत्सदृशः। स्थगितं रोदस्योः स्वर्गभूम्यो-

---

1 क. ग. 'तिरवान्'। 2 क. 'तिच्छे'।

अत्र रवो मण्डूकादिषु प्रसिद्धो न तूक्तविशेषे[1] सिंहनादे ।

भग्नः प्रक्रमः ( प्रस्तावः ) यत्र । यथा,

नाथे निशाया नियतेर्नियोगादस्तं गते हन्त निशाऽपि याता ।
कुलाङ्गनानां हि दशानुरूपं नातः परं भद्रतरं समस्ति[2] ॥ २४४ ॥

अत्र गतेति प्रक्रान्ते यातेति प्रकृतेः । गता निशाऽपीति तु युक्तम् । ननु 'नैकं पदं द्विःप्रयोज्यं प्रायेण'—इत्यन्यत्र, कथितपदं दुष्टमिति चेहैवोक्तम्[3], तत्कथमेकस्य पदस्य द्विःप्रयोगः । उच्यते ।

रवो मण्डूकादिशब्दे कविप्रसिद्धो न तूक्तविशेषे सिंहनादे । न चावाचकसंकरः । तुल्येनैव रूपेणोभयत्र शक्तिसत्त्वेऽप्येकत्रैव कविप्रयोगनियमात् । अत एवायं वाक्यदोषः । विशेषणविशेष्यसंनिधानेन विशेषपरत्वादिति ।

भग्नप्रक्रमम्, भग्नः प्रक्रमः प्रस्तावौचित्यं यत्र तत् । तच्चानेकधा व्यवस्थितम् ।

तत्र प्रकृतेः[4] प्रक्रमभङ्गो यथा—नाथे० ।

अत्रास्तं गत इति गमेः प्रकृतेः प्रस्तावे यातेति यातेः प्रकृतिक्रमभङ्गः । भिन्नाभ्यामुपस्थापितं भिन्नवद्भातीति कुलाङ्गनानां स्वामिसदृशावस्थाप्रतीतिर्न संभवति । तस्मात् 'गता निशाऽपि' इति युक्तः पाठः । ननु 'नैकं पदं द्विः प्रयोज्यं प्रायेण' इति वामनसूत्रम् । अत्रापि कथितपदं दुष्टमनुपदमेवोक्तम् । तथा च पुनर्गमेः प्रयोगो दुष्टः स्यादिति चेत्, न ।

रन्तरं सैव कन्दरा येन । मण्डूकः सकलमृदुध्वनिकजन्तूपलक्षणम् । (पृथ्वी छन्दः) । **तुल्येनैव रूपेणेति** । अत एव न निहतार्थत्वम् । **कविप्रयोगनियमादिति** । सिंहशब्दे रवशब्दप्रयोगो न चमत्कारायेति नियमः । अतो नाप्रयुक्तत्वम् । सर्वथा प्रयोगनिषेध एव हि स दोषः । प्रकृते चार्थविशेषे प्रयोगोऽनुमत एवेत्याहुः । **विशेषणविशेषेति** । श्रवणभैरवस्वरोदसीस्थगनरूपेत्यर्थः । प्रसिद्धित्यागकृतसहृदयोद्वेगो दूषकताबीजम् । **प्रस्तावौचित्यमिति** । प्रस्ताव उपक्रमः । येन रूपेणोपक्रमस्तेनोपसंहार इत्यर्थः । उपक्रमश्च द्वेधा शब्दतोऽर्थतश्च । तत्राऽऽद्यं नाथ इत्यादौ । द्वितीयमकलितेत्यादौ । **नाथ इति** । नियतेरदृष्टस्य नियोगादाज्ञया निशानाथे चन्द्रे याते यन्निशा याता तद्युक्ततरम् । तत्रार्थान्तरम् । कुलाङ्गनानां दशानुरूपं वैधव्यदशानुरूपं भद्रतरं कल्याणातिशयः । अतः परमनुगमनात्परं न समस्ति । स्वामिसमानदशैवोचितेति भावः । ( उपजातिश्छन्दः ) । **भिन्नवद्भातीति** । ज्ञाने शब्दस्यापि भानादिति भावः । एतच्च मञ्जूषायां निरूपितं विस्तरेण । सर्वनाम्ना तु परामर्शे तेषां बुद्धिविषये शक्तिस्वीकारात्पूर्वपदावच्छिन्नस्यैव प्रतिपादनान्नायं दोषः । न च सर्वनामपदावच्छिन्नत्वेनापि भानाद्भेदः । विशिष्टस्य तदवच्छिन्नतया भानेऽपि

१ क. ग. °शेषणे सिं° । २ ग. चक्कास्ति । ३ क. ग. °नोक्तेः कथ° । ४ क. °तेः क्र° । ५ क. °पदम° ।

उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो विषय एकपदद्विःप्रयोगनिषेधस्य । तद्वति[1] तु विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः ।

तथा हि,

उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥ २४५ ॥

अत्र, रक्त एवास्तमेतीति यदि क्रियेत, तदा[2] पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयेव[3] प्रतिभासमानः प्रतीतिं स्थगयति । अत्र ताहगेवे-तिपाठे[4] वा न दोषः । सर्वनाम्नः प्रयोगात् ।

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः[5] ॥ २४६ ॥

---

उद्देश्यप्रतिनिर्देश्यातिरिक्तं ह्येकं[6] पदं द्विःप्रयोगनिषेधविषयः । तादृशे तु विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः । यथा—उदेति० ।

अत्र 'रक्त एवास्तमेति च' इति यदि क्रियेत तदा पदान्तरप्रतिपाद्यमानः स एवार्थो भिन्न इव प्रतीयमानः प्रतीतिं ऽप्रवदधीत । प्रत्ययस्य यथा—यशो० ।

---

पूर्वरूपाप्रच्यवात् । तदुक्तम्,

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।"

इतीत्याहुः । उद्देश्यप्रतिनिर्देश्यातिरिक्तमिति । उद्देश्यः प्रत्यायित एव पुनर्निर्देश्यः पुनः प्रत्याय्यो यत्र तदतिरिक्तमित्यर्थः । तत्राभेदज्ञापनार्थं पुनरुक्तिरेवोत्कर्षिकेति भावः । इदमेवाभिप्रेत्य वामनेन प्रायेणेत्युक्तम् । सर्वनाम्नो वेति । वाशब्दो व्यवस्थितवि-कल्पे । तेन यत्र सर्वनाम्ना परामर्शासंभवस्तत्रैव प्रागुक्तपदमुपादेयम् । यत्र तु तेन संभ-वस्तत्र तदेव । उदेतीत्यादौ स इति कृते प्रधानस्य सवितुरेव परामर्शः स्यात् । तादृश इति कृते तु नाभेदप्रतीतिः । सादृश्यावगमात् । तथैवेति कृतेऽपि तेन प्रकारेणेत्यर्थनिष्पन्नतथा शब्देन ताम्रत्वेन प्रकारेणास्तमेतीत्यर्थे प्रकारभानेनाभेदप्रत्यभिज्ञा न स्यात् । एवं

"वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये" ।

इत्यत्र नोपमा । तत्तत्फलप्राप्तये तत्सदृशवस्तुवन्दनादेर्लोकेऽदृष्टत्वात् । तस्मा-दुत्प्रेक्षाऽत्र । अभेदप्रतिपत्तेरेवोद्देश्यत्वाच्च न कथितपदत्वादिदोष इति दिक् । भिन्न इवेति । तेनैव शब्देन पुनरभिधाने त्वनुवादत्वेन झटिति प्रयोजनजिज्ञास-योदयास्तमयादावेकरूपतावगमो व्यञ्जनया झटिति, अन्यथा विलम्बेनेत्याशयः । यश इति युधिष्ठिरं ( अर्जुनं ) प्रति द्रौपद्या उक्तिः किराते ( तृतीयसर्गे ) । निरुत्सुकानां निरौत्सु-

---

१ ग. °ति वि° । २ क. तत्पदा° । ३ क. ग. °तयैव । ४ ग. °ठे न । ५ क. लक्ष्मीः । ६ क. °ह्येकप°।

अत्र प्रत्ययस्य । सुखमीहितुं वेति युक्तः पाठः ।

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ २४७ ॥

अत्र सर्वनाम्नः । अनेन विसृष्टा इति तु वाच्यम् ।

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥ २४८ ॥

अत्र पर्यायस्य । महीभृतोऽपत्यवतोऽपीति युक्तम् ।[२]

अत्र सत्यपि पुत्रे कन्यारूपेऽप्यपत्ये सस्नेहोऽभूदिति केचित्समर्थयन्ते।

---

अत्र तुमुनः क्रमे सनोऽभिधानमेकरूपताप्रतीतिं स्थगयति । 'सुखमीहितुं वा' इति युक्तः पाठः । सर्वनाम्नो यथा—ते हिमा० ।

अत्रास्मै, इतीदमा प्रक्रमात्तद्विसृष्टा इत्यत्राप्यनेन विसृष्टा इत्येव वाच्यम् । न च तदिदमोरर्थभेदः । इदमः प्रस्तुतप्रत्यक्षपरामर्शकत्वात् । अन्यथा तयोः पर्यायतापत्तेः । पर्यायस्य यथा—महीभृतः० ।

अत्रापत्येषु बहुषु सत्स्वपि तस्मिन्नपत्ये स्नेहातिशयाविवक्षणादपत्यशब्दे प्रयोक्तव्ये पुत्रशब्दप्रयोगात्पर्यायप्रक्रमभङ्गः । केचित्तु 'असति पुत्रे सुतायां स्नेहो युक्तस्तस्य तु सत्यपि

---

क्यानामनुत्कण्ठानामभियोगभाजां यत्नवताम् । तुमुनन्तानां निरुत्सुकानामित्यत्रान्वयः । लोके हि सर्वे लक्ष्म्युत्सुकास्तेष्वतिनिस्पृहत्वरूपं यशो लब्धुमुत्कण्ठाविषयार्थासिद्धौ हि दुःखं भवति, लक्ष्म्यागमने हि न कोऽपि मनुष्यः स्वत आगच्छल्लक्ष्मीकस्तादृशश्चायं न मनुष्यगणनाविषय इति व्यवहारो भवति । मनुष्येषु संख्येति समासः । ( उपेन्द्रवज्रा छन्दः ) **अत्र तुमुन इति** । तुमुना क्रियायाः प्राधान्यावगमः फलत्वप्रतीतिश्च, न सनेत्येकरूपताप्रतीतिस्थगनमिति भावः । **ते हिमेति** । ( कुमारसंभवे षष्ठसर्गे पद्यमिदम् ) । ते मरीच्यादयोऽस्मै शूलिनेऽर्थं पार्वतीदानरूपं सिद्धं पित्रङ्गीकृतं निवेद्य ज्ञापयित्वा खमाकाशं तद्विसृष्टाः शूलिविसृष्टाः । **इदम इति** । इदमः पूर्वानुभूतपुरोवर्तिविषयवाचकत्वम् । तदस्त्वप्रत्यक्षपूर्वानुभूतपरामर्शकत्वमिति भावः । **महीभृत इति** । ( कुमारसंभवे प्रथमसर्गे पद्यमिदम् । ) तस्मिन्कन्यारूपे । तृप्तिरिच्छाविच्छेदः । पूर्वार्धे उत्तरं दृष्टान्तः । अनन्तपुष्पविशिष्टमधुसंबन्ध्यपि द्विरेफमाला चूतपुष्पे सविशेषसङ्गेत्यर्थः । अत्र द्विरेफमाला सादृश्याद्वसन्तदार्ष्टित्वेनाध्यवसिता बोध्या । अत्र पुष्पसामान्यसत्तायां तद्विशेषादरे दृष्टान्तः । ( उपजातिश्छन्दः ) **पर्यायप्रक्रमेति** । सामान्यपर्यायप्रक्रमभङ्ग इत्यर्थः । ननु सामान्यविशेषवाचकयोः

---

१ क. ग. °ति तु युक्तम् । ते हि° । २ ग. °पेऽप्ले स्ने° । ३ क. °नः प्रक्रमेण स° ।

पुत्रे तस्याः सोऽभूदिति विवक्षणान्नात्र दोषप्रतीतिः' इति समादधिरे । तदयुक्तम् । अनन्तपुष्पस्य चूत इति दृष्टान्तवैषम्यप्रसङ्गात् । तत्र च सामान्यविशेषभावेनोपादानाद्दार्ष्टान्तिके तथैवौचित्यात् । तस्मात् 'अपत्यवतोऽपि' इति युक्तः पाठः । न चात्रापि बहुत्वालाभाद्दृष्टान्तवैषम्यम् । अपत्यान्यस्य सन्तीति बह्वर्थ एव मतुपो विधानात् । एतेन ''साधुरेव' 'पुत्रवतः' इति पाठ इत्यतः 'केचित्' इत्यनेन सांप्रदायिका इत्यर्थकेन वृत्तिकृतोऽत्रानुमतिरेव'' इति चण्डीदासमतमनादेयम् । अथापत्यपुत्रशब्दयोः कथं पर्यायता । तत्र केचित्, 'अपत्यपर्यायोऽपि पुत्रशब्दः । अन्यथा पुत्रीत्यत्र स्त्रीप्रत्ययस्य कुत्रान्वयः' इत्याहुः । तन्न युक्तम् । तथा सति दोषस्यैवाप्रसङ्गात् । अपत्यार्थकत्वाविशेषात् । तस्मात्पर्यायत्वमेकार्थप्रतिपादकत्वमात्रम् । न त्वेकप्रकारकप्रतीतिजनकत्वमपीति । अत एव लघुतामुपक्रम्यागरीयानित्युक्ता-

---

पर्यायत्वाभावे कथमत्र पर्यायप्रक्रमभङ्ग इत्याशङ्कते—**अथापत्येति** । सामान्यविशेषवाचकोपलक्षणमेतत् । जन्यप्राणित्वजन्यपुंस्त्वयोः शक्यतावच्छेदकयोर्भेदादिति भावः । प्रसङ्गात्केषांचिन्मतं खण्डयति—**अपत्यपर्यायोऽपीति** । अत एव—

'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ।
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ' ॥

इत्यमरः संगच्छते । तत्रापत्यशब्दस्य वंशायतनहेतुत्वरूपमपत्यत्वं शक्यतावच्छेदकं तदेव च पुत्रशब्दस्यापीति पर्यायता । न च सापत्य इतिवत्सपुत्र इत्यतोऽपि कन्यापुत्रसंदेहापत्तिः । पुंस्त्वतात्पर्यग्राहकस्य विसर्गस्य सत्त्वेन स्त्रीत्वतात्पर्यग्राहकस्यैकारस्यासत्त्वेन च संदेहविरहादिति भावः । मानान्तरमप्याह—**अन्यथेति** । अन्यथा प्रत्ययानां प्रकृत्यर्थान्वितेति व्युत्पत्त्या प्रत्ययः किंगतं स्त्रीत्वमभिदध्यादित्यर्थः । **दोषस्यैवाप्रसङ्गादिति** । पर्यायत्वेऽपि येन पर्यायेण प्रक्रमस्तद्भिन्नेनोपसंहारेऽपि दोषात्, कथमन्यथा गतेत्युपक्रम्य यातेत्युक्तौ दोष इति चिन्त्यमेतदिति केचित् । तन्न । एकरूपार्थप्रतीतिविघातो हि तत्र दूषकताबीजम् । न चात्र तत् । किं तु दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम् । तथा हि पुष्पसामान्यसत्तायां पुष्पविशेषादरबोधकेन दृष्टान्तेन यत्सामान्यसत्ता तद्विशेषगोचरेच्छेति प्रस्तावः । एवं च दार्ष्टान्तिकेऽप्यपत्यसत्तायामप्यपत्यविशेषे सस्नेह इत्येवापेक्षितम् । पुत्रशब्दस्य तत्पर्यायत्वे सामान्यविशेषभावेन प्रतीत्युपपत्तेस्तद्बीजाभावाददोषप्रसङ्ग इत्याशयात् । तदाह—**एकार्थेति** । सामान्यविशेषबोधकयोरपीदमक्षतमेव । एवं च चूतशब्दस्य पुष्पविशेषवाचिनोऽनन्तपुष्पस्येति सामान्यपर्यायप्रस्तावे दार्ष्टान्तिके विशेषपर्यायोपादानात्पर्यायप्रक्रमभङ्ग इति भावः । तदाह—**नत्वेकप्रकारकेति** । किं च पुत्रापत्ययोरेकप्रकारकप्रतीतिजनकत्वरूपे पर्यायत्व उपक्रमानुरोधेनोपसंहारस्यान्यथा नेतुमुचितत्वात् ' तस्यां हि पुत्र्याम् ' इति युक्तः पाठ इत्येव प्रकाशकृतो ब्रूयुरित्यलम् । **अत एवेति** । अगरीयः पदं हि

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥ २४९ ॥

अत्रोपसर्गस्य पर्यायस्य च । तदभिभवः कुरुते निरायतिम् । लघुतां भजते निरायतिः, लघुतावान्न पदं नृपश्रिय इति युक्तम् ।

काचित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्यः शशंसुः ॥२५०॥

अत्र वचनस्य । काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निःश्रीका इति, कम्पमाना इत्यत्र कम्पमापुरिति च पठनीयम् ।

---

वापि पर्यायक्रमभङ्ग उच्यते । यथा—विपदो० ।

अत्रैव विपदापदोरुपसर्गप्रक्रमभङ्गो द्रष्टव्यः । 'तदभिभवः कुरुते निरायतिम् । लघुतां भजते निरायतिर्लघुताभागपदं नृपश्रियाम्' इति पाठो युक्तः, यदि न च्छन्दोभङ्गः । काचित्० ।

अत्र काचिदित्युपक्रम्य काश्चिदिति वचनप्रक्रमभङ्गः । तस्मात् 'काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निश्रीकाः' इति पठनीयम् । 'कम्पमाना' इति च 'कम्पमापुः' इति पठनीयम् । शतृशानचोर्गुणीभूतक्रियान्तराभिधायकत्वनियमात् । न

---

गुरुत्वाभाववत्त्वेन बोधकम् । विपद इति । किराते ( द्वितीयसर्गे युधिष्ठिरं प्रति ) द्रौपद्या ( भीमसेनस्य ) उक्तिः । रहयति त्यजति । आयतिरुत्तरकालशुद्धिः । आपदोपेतं विशिष्टं पदं स्थानम् । ( सुन्दरी छन्दः ) । काचिदिति । रजोभिरार्तवैः कीर्णा व्याप्ता । दिवमाकाशं रजोवृष्ट्या कीर्णम् । विभक्तिविपरिणामेनान्वयः । मन्देन्दुसदृशवक्त्रलक्ष्मीर्यस्याः सा मन्देन्दुभिन्नवक्त्रलक्ष्मीर्यस्यास्तामनुविदधेऽनुकृतवती । काश्चिद्दिश इवान्तर्दाहं तापं हेतुलक्षणया वह्निं च दधिरे । उद्भ्रान्तं व्याकुलीभूतं सत्त्वं सत्त्वगुणो यासाम् । सत्त्वं चित्तं वा । उद्भ्रान्ता इतस्ततो विक्षिप्ताः सत्त्वाः प्राणिनो यासु दिक्षु । अन्या वात्या इव प्रतिपदं भ्रेमुः । अपरा भूमिवत्कम्पयुक्ता जाता इति नार्यः पार्थिवानां त्वद्विषां प्रस्थाने यात्रायां पुरोभाव्यशिवं रजोवृष्टिदिग्दाहवात्याभूकम्पादिरूपं शशंसुः । ( स्रग्धरा छन्दः ) । गुणीभूतक्रियान्तरेति । क्रियान्तरं प्रति गुणीभूतस्वार्था-

---

१ ग. °तिः । लघुता नियता निरा° । २ क. श्रियाम् । ३ ग. °ताभाङ्न प° । ४ क. पदमिति तु यु° । ५ क. °मशुभमि° । ६ क. ग. °ति प° । ७ क. °ति क° ।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यताम्[1]।
विश्रब्धैः[2] क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ २५१ ॥

अत्र कारकस्य। विश्रब्धा रचयन्तु शूकरवरा मुस्ताक्षतिमित्यदुष्टम् ।

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा-[3]
ववितथमदाध्माते रोषान्मुनावभिधावति[4]।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च ॥ २५२ ॥

अत्र क्रमस्य। पादोपसंग्रहणायेति[5] हि पूर्वं वाच्यम्। एवमन्यदप्य-[6]नुसर्तव्यम्।

---

चात्र क्रियान्तरं प्रधानमस्ति। **गाहन्तां०** ।

अत्र गाहन्तामिति कर्तृकारकवाचकतिङः प्रक्रमे क्रियतामिति कर्मकारकवाचकस्य। 'विश्वस्ता रचयन्तु सूकरवराः' इत्यदुष्टम्। **अकलित०**।

अत्र तेजोवीर्यरोषौ क्रमेणोपक्रम्य तदुभयोचितयोः पादोपसंग्रहधनुर्ग्रहणयोः पौर्वापर्यं योग्यम्। 'यथासंख्यमनुदेशः समानाम्' (पा०सू०१।३।१०)इति न्यायात्। इति तदन्यथाकरणे[7] क्रमप्रक्रमभङ्गः। एवमन्यदप्यूह्यम्। अत्र सर्वत्रैकरूपप्रसृतायाः प्रतीतेः स्थग-

---

भिधायकत्वादित्यर्थः । तदाह—**प्रधानमस्तीति** । आख्यातप्रक्रमभङ्गप्रसङ्गाच्चेत्यपि बोध्यम्। **गाहन्तामिति**। शाकुन्तले (द्वितीयाङ्के) दुष्यन्तोक्तिः। तत्राद्य तावदि-त्युपक्रमस्थं सर्ववाक्यान्वयि। महिषाः शृङ्गैरिति स्वभावोक्तिः। तैस्ताडितं निपानसलिलं कूपसमीपवर्तिक्षुद्रदेशजलं गाहन्ताम्। शृङ्गैरूर्ध्वं क्षिप्त्वा शरीरोपरि पातयतु। एतेन हननयोग्यदेशस्थितानपि न हनिष्य इति स्वोदात्तता। एवं सर्वत्र। रोमन्थोऽभ्यवहृतस्याऽऽ-कृष्य चर्वणम्। त्रासनिवृत्तेरिति भावः। मुस्ता तृणविशेषः। पल्वलं क्षुद्रसरः। विश्वस्तै-रिति विभक्तिविपरिणामेन सर्वत्र योज्यम्। (शार्दूलविक्रीडितं छन्दः) **शूकरवरा इति**। शूकरपदस्य ग्राम्यत्वाद्बन्धशैथिल्याच्च विश्रब्धः कुरुतां वराहनिवहो मुस्ताक्षति-मिति युक्तं पठितुम्। एवं चाऽऽत्मनेपदप्रक्रमभङ्गोऽपि न। **अकलितेति**। (वीरचरि-तनाटके द्वितीयाङ्के) धनुर्भङ्गकुपिते भार्गव आगते रामोक्तिः। अपरिमितब्रह्मचर्यादितेजो-वीर्यविस्तारवति यशोनिधावतिप्रसिद्धे। तादृशस्य जयादुत्कर्षाधिक्यम्। अवितथो यथार्थो यो मदोऽहंकारस्तद्विशिष्टे। दर्पोऽहंकारस्तद्योग्यं कर्म युद्धम्। रभसादित्युभयान्वयि। अत्र तपस्तेजोवीर्ये क्रमेणेति पाठः। **ऊह्यमिति**। "शशी दिवसधूसरो गलितयौवना

---

१ क. ग. स्यतु°। २ क. विश्वस्तैः। निश्रब्धं क्रियतां वराहतति°। ३ प्र. तपोनि°। ४ क. °भि गच्छति.। ५ ग. °ति प°। ६ ग. °न्यत्राप्य°। ७ क. °णे प्र°। ८ स्खलनमित्युद्द्यो-तसंमतः पाठः।

**अविद्यमानः क्रमो यत्र, यथा,**

**द्वयं गतं संप्रति शोचनीयतां**
**समागमप्रार्थनया कपालिनः।**
**कला च सा कान्तिमती कलावत-**
**स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ २५३ ॥**

**अत्र त्वंशब्दानन्तरं चकारो युक्तः।**

---

नमुपघातो वा दूषकताबीजम्। यदुक्तम्—

'प्रक्रमस्यान्यथात्वेन प्रतीतौ प्रस्खलद्गतौ।
ह्लादः स्फुरन्ननास्वादी यत्र ग्लानत्वमश्नुते॥
दोषः प्रक्रमभेदाख्यः शब्दानौचित्यभूश्च सः।' इति॥

अत एव नित्यदोषोऽयम्।

अक्रममविद्यमानः क्रमो यत्र तत्। यत्पदानन्तरं यत्पदोपादानमुचितं ततोऽन्यत्र तदुपादानं यत्रेत्यर्थः। यथा—**द्वयं०**।

अत्र लोकस्य चेति चकारस्त्वंशब्दानन्तरं युक्तः। त्वंशब्दार्थस्यैव शोच्यतायां समुच्चयस्य द्योतनीयत्वात्। लोकपदार्थे समुच्चयाभावात्। अथापदस्थपदादस्य को भेदः। तत्र प्रतीत्यन्तरमत्र सैव प्रतीतिः किं तु विलम्बितेति केचित्। तन्न। 'कुटिलाताम्रच्छविः—' इत्युदाहृतेऽपदस्थपदे प्रतीत्यन्तराभावात्। वयं तु ब्रूमः—अव्यवधानेनैव यत्राभिमतप्रतीतिजननसामर्थ्यं तदेतस्य विषयः। अन्यः पुनरितरस्य। चादीनां चाव्यवहितपदार्थेष्वेव समुच्चयादिद्योतकता। यदुक्तं महिमभट्टेन—

'अत एव व्यवहितैर्बुधा नेच्छन्ति चादिभिः।
संबन्धं ते हि स्वां शक्तिमुपदध्युरनन्तरे॥' इति।

न च नञोऽप्यव्यवहितस्यैव तथात्वम्। अतः 'स्रजं न काचिद्विजहौ' इत्यादिक-

---

कामिनी" इत्यादौ शोभनत्वेन प्रतीतस्य धूसरत्वादिनाऽशोभनत्वमिति विवक्षितः क्रमस्तस्य द्वितीयचतुर्थषष्ठवाक्येष्वन्यथात्वेन भङ्ग इति। स्खलनं सर्वथैवाभावः। उपघातश्चमत्कारापकर्षः। (हरिणी छन्दः)। **अक्रममिति**। यस्य यदव्यवहितपूर्वत्वनियमेन यदव्यवहितपरत्वनियमेन वा विवक्षितार्थानुभावकत्वं तस्य तत्परिहारेणान्यत्र स्थितत्वमित्यर्थः। एवं चायं दोषो निपातविषयः। यथोपसर्गाणां धातोः पूर्वमेव प्रयोगः। एवेत्यादीनां व्यवच्छेद्यानन्तरम्। पुनरादीनां व्यतिरेच्यादनन्तरम्। इवादीनामुपमानादनन्तरम्। एवं च "उद्बाहुरिव वामनः" इत्यादावप्ययं दोषः। चादीनां समुच्चेयादनन्तरमित्यादि बोध्यम्। **अव्यवधानेनैवेति**। प्रयुक्ते इति शेषः। **अव्यवहितस्येति**। प्रतियोगिवाचकपदा-

---

१ क 'शब्दयोगादनन्तरं चका°। २ क. °महेशभ°।

यथा वा,

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्रीं-
र्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टनी खड्गयष्टिः ।
आज्ञेयं सर्वगा ते विलसति च पुनः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥२५४॥

अत्रेत्थं प्रोच्येवेति नाच्यम् । तथा लग्नं रागावृताङ्ग्येत्यादाविति श्रीनियोगादिति वाच्यम् ।

अमतः प्रकृतविरुद्धः परार्थो यत्र, यथा,

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ २५५ ॥

---

मप्यक्रमभेदः स्यादिति वाच्यम् । 'न खलु न खलु बाणः संनिपात्योऽयमस्मिन्' इत्यादौ व्यवधानेऽपि प्रतीतिर्विशेषाभावात् । न चायं चादिपदेष्वेव दोषः । किं त्वित्थमादिष्वपि । यथा—शक्ति० ।

अत्रेत्थं प्रोच्येवेति वाच्यम् । इत्थंशब्दस्याव्यवहितपरामर्शकत्वात् । पादत्रयस्यैव च परामर्शनीयत्वात् । एवं 'लग्नं रागावृताङ्ग्या—'इत्यादावपि 'इति श्रीनियोगात्' इति वाच्यम् । इतेरपि तत्तुल्यत्वात् । दूषकताबीजं चोद्देश्यप्रतीतिविरह इति नित्योऽयम् ।

अमतपरार्थममतः परार्थो द्वितीयोऽर्थो यस्य तत् । अमतत्वं च,

'ज्ञेयौ शृङ्गारबीभत्सौ तथा वीरभयानकौ ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ॥'

इत्याद्युक्तदिशा प्रकृतरसविरुद्धरसव्यञ्जकत्वम् । यथा—राम० ।

---

व्यवहितस्येत्यर्थः । **प्रतीतिविशेषाभावादिति** । प्रतीतौ विशेषस्य विलम्बितत्वादिरूपस्याभावादित्यर्थः । **शक्तिरिति** । शक्तिः सामर्थ्यम् । निस्त्रिंशः खड्गस्त्रिंशद्भ्यो निर्गतास्तदधिकास्तज्जन्या च नानापितृजन्या वेश्यापुत्रीत्वाद्वेश्येति फलितम् । भुजयुगले । न तु भुज एव दोषाकरश्चन्द्रो दूषणाश्रया च कुट्टनी छेदिका परस्त्रीपुरुषादिसंघटनकर्त्री च सा यस्य पार्श्वे । अत्यन्तं परवनितासक्त इत्यनेन व्यज्यते । सर्वगा सर्वगामिनी सर्वोपभोग्या च । ईदृशी ते पुरः प्रसरति । इतस्ततः संचरमाणा तिष्ठति । ईदृशस्य दुर्वृत्तस्य मया वृद्धया महत्या जरत्या च किं किं प्रयोजनमित्थं प्रोच्येवेन्दुसितया यस्य कीर्त्या प्रयातमित्यन्वयः । अत्र कीर्तौ पत्नीत्वाध्यवसायो बोध्यः । एवं शक्त्यादेरसन्नायिकात्वेन । ( स्रग्धरा छन्दः ) । **अव्यवहितपरामर्शकत्वादिति** । अव्यवहितपूर्वपरामर्शकत्वादित्यर्थः । **उद्देश्यप्रतीतिविरह इति** । स चाऽऽकाङ्क्षाविरहादासत्तिविरहादपि वा बोध्यः । आद्यो यथा शक्तिरित्यत्र । अन्त्यो लग्नमित्यत्रेति दिक् । **रामेति** । ( रघुवंश एका-

---

१ क. तवैषा । २ क. कुट्टिनी । ३ क. प्रसरति पुरतः । ४ क. पुरः । ५ क. °पात्सितक° । ६ क. विरोधाभा° ।

अत्र प्रकृते रसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः[1] ।

अर्थदोषानाह[2]—

अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥ ५५ ॥
संदिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ।
अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्ताः[3] ॥ ५६ ॥
साकाङ्क्षोऽपदयुक्तः[4] सहचरभिन्नः प्रकाशितविरुद्धः ।
विध्यनुवादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः ॥ ५७ ॥

दुष्ट इति संबध्यते । क्रमेणोदाहरणानि—

अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥ २५६ ॥

---

अत्र प्रकृतस्य बीभत्सस्य विरोधी शृङ्गारः । तस्य व्यञ्जको द्वितीयोऽर्थः । तादृशार्थोपस्थित्या रसापकर्षकतास्य दोषत्वबीजम् । अतो नित्योऽयं दोषः । नीरसे स्वात्मलाभस्यैवाभावात् ।

अर्थदोषलक्षणान्याह—**अर्थोऽपुष्टः०** ।

पददोषलक्षणसूत्रस्थं दुष्टमिति पदं लिङ्गविपरिणामेन संबध्यते ।

तत्रापुष्टः पुष्टाद्भिन्नः । पुष्टत्वं च विवक्षितार्थबाधप्रयोजकानुपादानत्वम् । तद्विरहश्च द्विधा—अप्रयोजकत्वात्प्रयोजकत्वेऽप्यन्यलभ्यत्वाच्च । यमेनम्—

'व्यर्थमाहुर्गतार्थं यच्च स्यान्निष्प्रयोजनम् ।'

इत्यनेन भोजराजो व्यर्थमाह । अत एव प्रकाशकारोऽपि 'अत्रातिविततत्वादयोऽनुपादानेऽपि प्रतीयमानमर्थं न बाधन्ते' इत्येवाऽऽह । न त्वप्रयोजका एवेति । उदाहरणम्—**अतिवितत०** ।

---

दशसर्गे श्रीरामेण हतायास्ताटकाया वर्णनमिदम् ) । राम एव मन्मथः कामो मनोमथनहेतुश्च । पृषोदरादित्वाट्टिलोपः । निशाचरी राक्षस्यभिसारिका च । रुधिरचन्दनं रुधिरमेव चन्दनं रक्तचन्दनं च । गन्धवत्त्वं रक्तस्य रघुनाथशरसंबन्धात्पापक्षयात्पूतनाधूमवत् । जीवितेशो यमो नायकश्च । सा ताटका । रथोद्धता छन्दः ) । **रसापकर्षकतेति** । प्रकृतबीभत्सरसापकर्षकतेत्यर्थः । एषु वाक्यदोषेषु न्यूनपदकथितपदाभवन्मतयोगाविमृष्टविधेयास्थानस्थपदाक्रमाः काव्याकाव्यसाधारणाः । केचित्त्वनभिहितवाच्यस्य न्यूनपदेऽक्रमस्यापदस्थपदेऽन्तर्भावः शक्यः । एवमर्थान्तरैकवाचकसंकीर्णगर्भितानामप्यपदस्थपदैव । अल्पान्तरेण दोषान्तरत्वेऽतिप्रसङ्गादित्याहुः । **अतीति** । विश्रमानन्दो विश्रमजं सुखम् । आनन्दपदमपुष्टम् ।

---

१ क. °परार्थः । २ ग. °दोषमाह । ३ क. वृत्तः । ४ क. °दमुक्तः । ५ क. °लावलिह्वा° ।
६ अत्र वि° ।

**अत्रातिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं न बाधन्त इत्यपुष्टाः । न त्वसंगताः पुनरुक्ता वा ।**

---

अत्रातिवितते निरवलम्बे व्योम्न्यविश्रामं गमनादितराप्रकाश्यकमलप्रकाशनाच्च रवेरुत्कर्षो विवक्षितः । तत्रातिविततत्वं गगनस्यार्थादेवावगम्यते । अग्नेरिवौष्ण्यम् । सरणित्वं मरुदुल्लासितसौरभत्वं चाप्रयोजकमेवेत्यपुष्टा एतेऽर्थाः । नन्वेतेऽर्था अपुष्टा इति सिद्धम् । परं त्वतिविततेति पुनरुक्तः । गगनपदादेव तदुपस्थितेः । मरुदुल्लासितसौरभेति विरुद्धम् । विकासात्पूर्वं सौरभाभावेन तद्विशिष्टस्य सूर्येणाप्रकाश्यत्वादिति नायं पृथगिति चेत्, न । गगनपदं न विततत्वे शक्तम् । अर्थलभ्यत्वे च न पुनरुक्तता । यदुक्तं भोजराजेन— 'काव्येतिहासादावर्थवृत्त्या लब्धस्य साक्षाद्गुणनमपौनरुक्त्याय' इति । नापि विरुद्धम् । सौरभस्योपलक्षणत्वात् । यद्वा चित्रहेतुपुरस्कारेण पूर्वभावाभिधानात् । अथाधिकपदादस्य को भेदः । अप्रयोजके प्रयोजनाभावकृतोऽपि भेदो न संभवति । अत्र कश्चित्—'तत्र पदार्थान्वयसमकालं दुष्टत्वप्रतिभास इह तु तदनन्तरमिति विशेषः' इति । तन्नातिसमीचीनम् । तथा नियमे प्रमाणाभावात् । एतावता च विशेषेण शब्ददोषत्वमेकस्यापरस्यार्थदोषत्वमिति विभागानुपपत्तेश्च । विरुद्धमतिकृदमतपरार्थादौ शब्ददोषेऽन्वयप्रत्ययोत्तरमेव दुष्टत्वप्रतिभासात् । वयं तु पश्यामः—यत्र विवक्षित एवार्थोऽन्यथाभिधानेऽपि दुष्यति सोऽर्थदोषः । अन्यस्तु रसदोषभिन्नः शब्ददोष इति विवेकः । तथा च यत्राविवक्षितोऽप्यर्थः कथंचिदन्वितत्तयाऽभिधीयते तत्राधिकपदत्वम् । तत्पदेन विनाऽपि तन्निर्वाहात् । यत्र तु सोऽर्थो विवक्षित एव परं त्वप्रयोजकत्वान्यलभ्यत्वाभ्यां शब्देन नोपात्तुमर्हस्तत्रापुष्टत्वम् । 'स्फटिकाकृति—' इत्यत्र नाऽऽकृतिपदार्थ उपमानत्वेन विवक्षितः । तस्य नैर्मल्याभावात् । 'यदपि च न कृतं

---

विश्रमान्तानन्दपदयोः कर्मधारय इति नास्यापुष्टत्वमित्यन्ये । एवं कमलाकरेत्यत्राऽऽकरपदमपि व्यर्थम् । अतिविततत्वं दीर्घत्वं न तु विस्तृतत्वम् । न हि विस्तीर्णपथसंचारः श्रमहेतुरिति बोध्यम् । निरवलम्बनत्वोपादानं दृष्टान्तार्थम् । ( गीतिश्छन्दः ) । **चित्रहेत्विति** । चित्रमत्र कार्यकारणयोः पौर्वापर्यलक्षणातिशयोक्तिरूपोऽलंकारः । **तत्र पदार्थेति** । एवं च तत्र प्रतीतेरेवानुपपत्तिरिति भावः । **इह त्विति** । अन्वयबोधोत्तरं तल्लभ्यार्थस्यान्यलभ्यत्वानुसंधानोत्तरं तेषामनुपकारित्वग्रह इति प्रतीतानुपपत्तिरिति भावः । **रसदोषभिन्न इति** । तस्य शब्दावाच्यत्वेनान्यथाभिधानासंभवादिति भावः । **तस्य** । अवयवसंयो-

---

१ क. शब्दे नो० ।

सदा मध्ये यासामियममृतनिःस्यन्दसुरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥ २५७ ॥

अत्र यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यमात्मकत्रिमार्गा

---

नितम्बिनीनाम्' इत्यत्रापि च रतस्य स्तनपतनावधित्वव्यतिरेक एवानुचितत्वेन विवक्षितो न तु तत्स्कृतिव्यतिरेकः । पूर्वार्धे तथैवोपक्रमात् । किं तु च्छन्दोनुरोधादिना द्वयमपि कथंचिदन्वितत्वेनोपात्तमित्यधिकपदत्वम् । ' अतिविततं—' इत्यादौ त्वतिविततत्वादिकं वक्तुर्विवक्षितमेव । परं त्वर्थलभ्यत्वादिना नोपादानार्हमित्यपुष्टम् । व्यक्तं च पूर्वस्य शब्ददोषत्वमुत्तरस्य चार्थदोषत्वमिति । दूषकताबीजं चाशक्त्युन्नयनेन श्रोतुर्वैमुख्यम् । अत एव यमकादावदोषता । तत्रालंकारान्तरारम्भेणाशक्त्यनुन्नयनात् । कर्णावतंसादिपदे च विशेषद्योतकतया तदुपादानं नाशक्त्युन्नायकमित्यदुष्टत्वम् । अत एव विशेषणदानार्थं विशेष्यप्रयोगेऽपि दोषाभावः ।

कष्टः प्रतीतिक्लेशवान् । दुरूह इत्यर्थः । यथा—सदा० ।

अत्र यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यात्मकमार्गत्रयवती भारती चमत्कारं

---

गरूपस्याऽऽकृतिपदार्थस्य । **वक्तुर्विवक्षितमेवेति** । अतिविततत्वं श्रमोत्कर्षाय । मरुदुल्लासितसौरभत्वमतिशयोक्त्यलंकारबोधनाय । सरणित्वं च विपिनादिवन्न कदाचिद्गमनं किं तु प्रतिदिनं निरुपाधिगमनमित्यर्थलाभायेति भावः । अविवक्षितार्थकत्व इव विशेषानाधायकार्थबोधकेऽपि तद्दोषस्वीकारे किं बाधकमिति चिन्त्यम् । **सदेति** । स्वकाव्यस्य गम्भीरचमत्कृतार्थशालितया स्फुटार्थत्वाभावेऽपि दोषाभावसमर्थनाय कस्यचित्कवेरुक्तिः । यासां कविरुचीनां काव्यरूपाणाममृतं सुधा तत्सदृशो निस्पन्दो यस्यां सा चासौ सरसा च शृङ्गारादिरसयुता । उद्दामा प्रौढा मार्गो रीतिस्तेन सुकुमारादिरीतित्रयवती सरस्वती वाणी कवित्वरूपा परिमलं चमत्कारं वहति ता एता महतां कवीनां रुचयः काव्यानि घनसदृशश्लिष्टबन्धसंबद्धा अत्यन्ताभ्यस्ता वा स्फुरितो रुचिरो मधुरः शृङ्गारादिरसो याभिस्ता व्योमसदृशात्यन्तापरिच्छेद्ये महाकाव्ये काव्यमार्गे कथमितरकाव्यवत्प्रसन्नाः सुबोधा भवन्तु । पक्षे यासामादित्यप्रभाणां मध्ये सरस्वती गङ्गाख्या नद्यमृततुल्यजलनिस्यन्दमधुरा प्रौढा त्रिपथगामिनी चमत्कारं वहति ताः स्फुरितो दृष्टो रुचिरो रम्यपदार्थो याभिस्तथाभूता महतां द्वादशादित्यानां रुचयः प्रभाः काव्यसदृशव्योम्नि मेघसंबद्धाः केनेतरका-

---

१ क. 'निष्यन्द' । २ क. 'न्दसर' । ग. 'न्दसरसं सर' । ३ क 'रिचयाः के' । ४ क. 'त रुचिरा, ।

भारती चमत्कारं वहति, ताः गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत्प्रसन्ना भवन्तु, यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति, ताः मेघपरिचिताः कथं प्रसन्ना भवन्तीति संक्षेपार्थ[3] इति कष्टम्।

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः॥ २५८॥

अत्रेन्दुकलादयो यं प्रति पस्पशप्रायाः स एव चन्द्रिकात्वमुत्कर्षार्थमारोपयतीति व्याहतत्वम्।

---

वहति ता गम्भीरकाव्ये घनपरिचिताः कथमितरकाव्यवत्प्रसन्ना भवन्तु। यथा यासामादित्यप्रभाणां मध्ये त्रिपथगा नदी संबन्धं वहति ता मेघपरिचिताः कथं प्रसन्ना भवन्तीत्यर्थो विवक्षितः। स च शब्दान्तरैरपि क्लेशेनैव प्रतीयत इत्यर्थ एवायं दुष्टः। क्लिष्टत्वादिकं तु शब्ददोषः। घटनान्तरेणार्थस्य सुखेनैव प्रतीतेः। सम्यक्प्रतीतिविरहश्च दूषकताबीजम्। अतो नित्योऽयं दोषः।

व्याहतः,

'उत्कर्षो वाऽपकर्षो वा प्राग्यस्यैव निगद्यते।
तस्यैवाथ तदन्यश्चेद्व्याहतोऽर्थस्तदा भवेत्॥'

इत्युपलक्षितविरुद्धत्ववान्। यथा— **जगति०**।

अत्र पूर्वार्धे साधारणचन्द्रिकाचन्द्रकलाः स्वं प्रत्यसारतया प्रतिपादिताः। तेनैवोत्तरार्धे चन्द्रिकात्वमुत्कर्षायाऽऽरोप्यत इति व्याघातः। दूषकताबीजं च वाक्यार्थाप्रतीतिः। अयं नित्यो दोषः।

---

लिकप्रभावत्प्रसन्नाः स्वच्छकान्तयो भवन्तु। (शिखरिणी छन्दः)। **जगतीति**। मालतीमाधवे (प्रथमाङ्के) माधवोक्तिः। ये नवेन्दुकलादयः। आदिना चन्द्रिकापद्मादिपरिग्रहः। भावास्ते जगति जयिनो न तु ममेत्यर्थः। येऽप्यन्ये मनो मदयन्ति तेऽपि जगत्येव प्रकृतिमधुरा लोका एव तान्प्रकृतिमधुरत्वेन व्यवहरन्तु न त्वहं व्यवहरिष्य इति भावः। तव किं तथा तदाह—मम तु लोक इयमेव विलोचनयोश्चन्द्रिकाऽऽह्लादिका। सा च यन्नयनविषयं याता जन्मनि स एक एव महोत्सवो न त्वन्यः। (हरिणी छन्दः)। **व्याघात इति**। न चात्रानुचितार्थता। तत्र पशुकुविन्दादिपदैः स्वार्थोपस्थितिदशायामेवोपश्लोक्यमानस्य तिरस्कारावगमः। अत्र तु चन्द्रिकायाः सहजत उपादेयत्वाद्वाक्या-

---

१ क. °ति ता घनप°। २ क. °बन्दिवति। ३ ग. °पार्थः। ज°। ४ क. °व्ये प°। ५ क. तथा°।

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ २५९॥

अत्रार्जुनार्जुनेति भवद्भिरिति चोक्ते सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तः ।

---

पुनरुक्तः शब्देन प्रतिपन्नत्वे सति पुनस्तेनैव प्रतिपादितः । अर्थेन प्रतिपन्नस्य प्रतिपादनेऽपुष्टत्वमुक्तम् । यत्तु 'प्रयोजनं विनेति विशेषणम्' इति तदयुक्तम् । एवं सत्यस्यानित्यदोषत्वं न स्यात् । प्रयोजनस्थले पुनरुक्तत्वस्यैवाभावप्रसङ्गात् । स चायं द्विधा—पदार्थवाक्यार्थभेदात् । तयोराद्यो यथा—

'अरेरे अर्जुनार्जुन, सात्यके सात्यके, न युक्त ईदृशो मत्तातस्य सुतशोकभ्रान्त्या न्यस्तशस्त्रस्य दिवमुपगच्छतः केशाकर्षणरूपः परिभवः । अपि च, कृत० ।

अत्रार्जुनार्जुनेति संबोध्य यैर्भवद्भिरित्यनेन परामृश्य तेषामित्यनेन परामर्शादर्जुनस्यापि प्राप्तेः सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तः । न च प्राधान्यप्रतिपत्तये पुनरुपादानमित्यदोषता । संबोधनेनैव तल्लाभात् ।

---

र्थप्रतिसंधानानन्तरं चन्द्रकलादयो यं प्रतीत्याद्यर्थपर्याप्ताविति भेदात् । द्वितीयं यथा—

'देवि त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा
पश्यैतानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम् ।

इत्यादौ मुखोपमानतया पङ्कजान्युत्कर्ष्य तेषामेवाग्रे निर्जितानीति तत्कृतापकर्षवर्णनात् । प्रमत्तोन्मत्तबालकानामुक्तौ तु नाभवन्मतयोगादिदोषः । तेषां संबन्धस्यानुद्देश्यत्वात् । प्रत्युतोन्मादादिव्यञ्जकत्वाद्गुणतैवेत्याहुः । **तेनैवेति** । तद्वाचकेन पर्यायान्तरेणेत्यर्थः । तस्यैव पदस्योपादाने तु कथितपदत्वमुक्तम् । परिवृत्तिसहत्वादर्थदोषताऽस्य । **यत्त्विति** । कर्णावतंसादिवारणाय तद्विशेषणमिति तद्भावः । **कृतमिति**[3] । ( वेणीसंहारनाटके तृतीयाङ्के द्रोणवधोत्तरमर्जुनादीन्प्रति क्रुद्धस्याश्वत्थाम्न उक्तिरियम् । ( हरिणी च्छन्दः ) **तेषामिति** । न च तत्पदार्थेऽर्जुनेऽर्जुनसाहित्यानन्वयादभवन्मतयोगोऽप्यत्रेति वाच्यम् । इष्टापत्तेः । किरीटिपदयोगार्थमादायाऽऽपाततोऽन्वयसंभवाच्च । अत्र केचित् । नात्र पद्येऽयं दोषः । सभीमेत्यादावुक्तानुक्तविस्मृतिद्वारा क्रोधातिशयव्यञ्जकत्वेन पौनरुक्त्यस्यानुगुणत्वात् । अत एवार्जुनसात्यक्योर्द्वयोरेव संबोधनेऽपि भवद्भिरिति बहुवचनं संगच्छते । न चायं वीरः । नरकरिपुणा सार्धमित्याद्युक्ते रौद्रपरिपोषकत्वादित्याहुः ।

---

१ ग. 'मतमित्यादि । अत्रा° । २ क. अर्जु° । ३ एतच्छ्लोकव्याख्यानं प्राक् ११५ पृष्ठे द्रष्टव्यम् ।

यथा वा,

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं संभ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥ २६० ॥

अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः।

भूपालरत्न निर्दैन्यप्रदानप्रथितोत्सव ।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥ २६१ ॥

अत्र मातङ्गस्य प्राङ्निर्देशो युक्तः।

---

वाक्यार्थस्य पुनरुक्तत्वं यथा—अस्त्र० ।

अत्रालं संभ्रमेण, को भयस्यावकाश इत्यभिन्नार्थौ । न च वक्तृ रौद्ररसाविष्टत्वं समाधानमाशङ्कनीयम् । वीरस्यायुक्तकारित्वावर्णनात् । दूषकताबीजं च निष्प्रयोजनाभिधानेन श्रोतुर्वैमुख्यम् । अत एव प्रयोजनसत्त्वेनादोषत्वादनित्योऽयं दोषः । केचित्तु—"अर्थप्राप्तस्यापि वचने पुनरुक्तता । तदुदाहरणम्—'अस्त्रज्वाला—' इति । अप्रयोजकाभिधानमात्रस्थले त्वपुष्टार्थत्वम्" इत्याहुः ।

दुष्क्रमो दुष्टक्रमः । दुष्टत्वं च क्रमस्य लोकशास्त्रविरुद्धत्वम् । तत्राऽऽद्यं यथा—भूपाल० ।

अत्र तुरङ्गभूयिष्ठं प्रति मातङ्गं देहि तुरङ्गं वेति लौकिकक्रमः । गुरुदानाशक्तौ

---

ध्वनितश्चायमर्थ उत्तरश्लोके वीरत्वकथनेन प्रदीपकृता । अस्त्रज्वालेति । ( वेणीसंहारे तृतीयाङ्के ) अश्वथाम्न इयमुक्तिः । अस्त्राण्येव ज्वालाऽग्निशिखा ताभिरवलीढो व्याप्तो योऽसौ प्रतिबलं शत्रुबलमेव जलधिस्तदन्तर्मध्य औैर्वायमाणे वडवाग्नितुल्ये । अत्र सेनाया जलनिधित्वेन पितुरौर्वत्वेन रूपणाद्वध्यघातकभावः, अस्त्रज्वालेत्यनेन प्रसिद्धवाडवापेक्षया व्यतिरेकश्च व्यज्यते । प्रसिद्धो हि जलनिधेरेव भक्षकः । अयं तु साग्नेरपि भक्षक इति प्रतीतेः । मम पितरीत्यनेन यस्य पुत्र ईदृशः किं वक्तव्यं तस्य माहात्म्यमिति ध्वनितम् । गुराविन्यनेन गुरुवधभिया न कोऽपि हन्तेति ध्वनितम् । संभ्रमेण पलायनवेगेन । हार्दिक्य कृतवर्मन् । रणधुरां रणभारम् । (स्रग्धरा छन्दः ) । निष्प्रयोजनाभिधानेनेति । निष्प्रयोजनद्वितीयाभिधानेनेत्यर्थः । भूपालेति । (राजानं प्रति याचकस्योक्तिरियम्) । निर्दैन्यमकार्पण्यं यथा भवति तथा प्रदाने प्रथित उत्सवो यस्य तादृशः । अर्थिदैन्यनिवारकप्रदान

---

१ ग. °तुर्थे पादे वा° । २ क. ग. °शो न्याय्यः । स्व° ।

स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते।
तदयि[1] सांप्रतमाहर कूर्परं त्वरितमूरुमुदञ्चय कुञ्चितम् ॥ २६२ ॥

एषोऽविदग्धः।

मात्सर्यमुत्सार्य[2] विचार्य कार्यमार्याः समर्यादमुदाहरन्तु।
सेव्या नितम्बाः किमु[3] भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥ २६३ ॥

अत्र प्रकरणाद्यभावे संदेहः। शान्तशृङ्गार्यन्यतराभिधाने तु निश्चयः।

---

लघुदानौचित्यात्। वक्तुश्च यथास्थित एव क्रमो विवक्षित इत्यर्थदोष एवायम्। द्वितीयं तु—

काबारिऊण खउरं गामडलो मज्जिऊण जेमिअ अ।
णक्खत्तं तिहिवारे जोइसिअं पुच्छिदुं चलिदो ॥

नक्षत्रादिज्ञानपूर्वकं क्षौरस्य शास्त्रेण विधानात्तद्विरुद्धमिदम्। दूषकताबीजं च विरोधेनाप्रतीतिः सहृदयोद्वेगो वेति। नित्य एवायम्।

ग्राम्यो ग्रामसंभवः। अविदग्धोक्तिप्रतिपादितो रिरंसादिश्च। यदुक्तम्—

'स ग्राम्योऽर्थो रिरंसादिः पामरैर्यत्र कथ्यते।
वैदग्ध्यवक्रिमबलं हित्वैव वनितादिषु॥' इति।

यथा—**स्वपिति०**।

अत्र निकटे तावदहं स्वपिमीत्यविदग्धस्य रिरंसोक्तिः। एवमन्यत्। दूषकता चाश्लीलवत्। किं चैतादृशोक्तिकवलितो विभावादिरूपोऽर्थो न रसाय पर्याप्यते भृष्टमिव बीजमङ्कुरायेति।

संदिग्धः संदेहविषयः। तत्प्रयोजनरूपवानिति[4] यावत्। यथा—**मात्सर्य०**।

अत्र भूधरनितम्बानां कामिनीनितम्बानां वा सेव्यत्वं व्यञ्जनया प्रतिपिपादयिषितं[5] तद्द्वितीयेन संदिह्यते। प्रकरणाद्यभावात्। यत्तु 'वक्तृविशेषसंदेहः' इति व्याख्यानं सर्व-

---

इति वा। विश्राणय देहि। ग्रामीणतापरिपोषकमेतदित्यन्ये। **काबारीति**।

कारयित्वा क्षौरं ग्रामवृद्धो निमज्ज्य (स्नात्वा) भुक्त्वा च।

नक्षत्रं तिथिवारौ ज्योतिषिकं प्रष्टुं चलितः।

(गाथा छन्दः)। **स्वपितीति**। नवोढां प्रति रिरंसोरुक्तिः। किमपैति का क्षतिः। कूर्परं हस्तवर्त्यस्थिप्रधानोऽवयवविशेषः। उदञ्चय विकासय। अयीति संबोधनम्। (द्रुतविलम्बितं वृत्तम्)। **मात्सर्यमिति**। (भर्तृहरिकृते शृङ्गारशतके पद्यमिदम्। उपजातिश्छन्दः)। **संदिह्यत इति**। विरुद्धद्वयोपस्थित्येति भावः।

---

१ क. तदयि संहर कूर्परमायतम्। २ क. ग. °रसार्यैश्चादि। अत्र। ३ क. खलु। ४ क. णां किमु स्म°। ५ क. °जं वि°। ६ क. °जकरू°। ७ क. °तिपादयितुं द्विती°। ८ एतच्छ्लोकव्याख्यानं प्राक् २२८ पृष्ठे द्रष्टव्यम्।

गृहीतं येनाऽऽसीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥ २६४ ॥

अत्र[2] द्वितीयशस्त्रमोचने हेतुर्नोपात्तः ।

---

मान्यानां तदुत्तानताविलसितम् । वक्तुः पदवाक्यार्थत्वाभावेन तत्संदेहस्यार्थदोषत्वाभावात् । अत एव वृत्तिकृता वक्तृविशेषनिश्चयः संदेहाभावप्रयोजकत्वेनोक्तः । तन्निश्चय एकतरनितम्बस्य सेव्यत्वनिर्णयेनासंदेहात् । वन्द्यावित्यादौ द्वितीयासप्तम्यन्तत्वाभ्यां पद एव संदेहोऽत्र तु पदानामसंदिग्धत्वे सत्येव स इति पदसंदिग्धत्वाद्भेदः । दूषकताबीजं चोद्देश्यनिश्चयविरहः । यत्र तु संदेह एवोद्देश्यस्तत्रादोषत्वमेवेति ।

निर्हेतुर्निष्क्रान्तो हेतुर्यस्मात् । यथा—**गृहीतं०** ।

अत्र स्वशस्त्रत्यागे हेतुर्नोपात्तः । ननु तं विना प्रतीतेः पर्यवसानं न वा । आद्ये दोषाभावोऽन्त्ये साकाङ्क्षसंकर इति । अत्र कश्चित्—'उपात्तस्य परेणान्वये साकाङ्क्षत्वमनुपादाने निर्हेतुत्वमिति विशेषः' इति । तन्न । साकाङ्क्षोदाहरण उपेक्षितुमित्याकाङ्क्षतीत्यनेनानुपात्तसाकाङ्क्षताया एव वृत्तौ प्रदर्शनात् । तस्माद्धेतुतद्भिन्नसापेक्षतया द्वयोर्भेद इत्येव ज्यायः । यद्वाऽत्राप्रतीतिमात्रं तत्र तु विरुद्धा प्रतीतिः । स्त्रीरत्न एवामर्षप्रतीतेरिति विशेषः । दुष्टिबीजं चोद्देश्यप्रतीतिविरहः । अत एव प्रसिद्धावनुपादानेऽपि न दोषः ।

---

**अर्थदोषत्वाभावादिति** । किमु पदद्वयानाभिधेयत्वाचेत्यपि बोध्यम् । **वक्तृविशेषनिश्चयः** । शान्तशृङ्गारित्वान्यतरनिश्चयः । **उद्देश्यनिश्चयविरह इति** । पञ्चमोल्लासग्रन्थेनेदं विरुध्यत इति । **निष्क्रान्त इति** । अनुपात्तहेतुक इत्यर्थः । **गृहीतमिति** । (वेणीसंहारे तृतीयाङ्के) द्रोणे हतेऽश्वत्थाम्नः (शस्त्रं प्रति) उक्तिः । येन ब्राह्मणस्यानुचितमपि त्वं परिभवभयात्क्षात्रकृतानादरभयाद्गृहीतमङ्गीकृतमासीः । तद्भयादेव गृहीत्वा नोज्झितमपि यस्य प्रभावात्सामर्थ्याद्विषयो लक्ष्यः । द्वयोर्नञोः प्रकृतार्थगमकत्वम् । तेनापि त्वं सुतशोकात्त्यक्तं न तु भयात् । अतो हेतोरहमपि त्वां विमोक्ष्ये । क, यतो यत्र भवते स्वस्ति विश्रमसुखं तत्रेत्यर्थः । सार्वविभक्तिकस्तासिः । यच्छोकात्तेन धनुस्त्यक्तं तच्छोकात्स्वस्यापि धनुषस्त्याग उचित इति भावः । ( शिखरिणी छन्दः ) । **हेतुर्नोपात्त इति** । न च ततः पितृशस्त्रत्यागादहमपि विमोक्ष्य इत्यस्त्येव तदुपादानमिति वाच्यम् । तावन्मात्रस्याहेतुत्वात् । श्रमादिना पित्रा शस्त्रत्यागेऽपि वीरस्य तद्ग्रहणमेवोचितम् । न च शोकमूल-

---

१ ग. °पि ततः । २ ग. °त्र शस्त्रमोचनहे° ।

इदं ते केनोक्तं कथय कमलातङ्कवदने
यदेतस्मिन्हेम्नः कटकमिति धत्से खलु धियम्।
इदं तद्दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम्॥ २६५॥

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम्।

यथा वा,

उपपरिसरं गोदावर्याः परित्यजताध्वगाः
सरणिमपरो मार्गस्तावद्भवद्भिरिहेक्ष्यताम्।
इह हि विहितो रक्ताशोकः कयाऽपि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः॥ २६६॥

---

प्रसिद्धिविरुद्धो लोकस्य कवेर्वा यत्रार्थे न प्रसिद्धिः। यथा—इदं ते०।

अत्र कामस्य चक्रं लोके कविमार्गे वा न प्रसिद्धमिति प्रसिद्धिविरुद्धः। यत्र तु लोकस्य कवेश्च प्रसिद्धयोर्विरोधस्तत्र कविप्रसिद्धेर्बलवत्त्वम्। तथा च लोकविरुद्धेऽपि कवीनां यथा यत्र समयस्तत्र न दोषः। यथा—सुसित०।

अत्र कीर्तेर्मूर्तत्वं ज्योत्स्नावत्प्रकाशकता च लोकविरुद्धे अपि कविसमयसिद्धे इत्यदोषः। एवमकीर्त्यादेर्मालिन्यादौ द्रष्टव्यम्। यत्तु—उप०।

---

तदीयतत्त्यागो हेतुः। पितृशोकनिवारणाय तद्दशायामपि तद्ग्रहणस्यैवौचित्यात्। तस्माद्यथा तेन सुतशोकात्त्यक्तमेवमहं पितृशोकात्त्यक्ष्य इति पितृशोक एव तद्धेतुः। शोकाविष्टे चेतस्युत्साहस्याप्ररोहात्। स च नोपात्त इति भावः। इदं त इति। कमलानामातङ्को यस्मादेवंभूतवदने चन्द्रमुखीति यावत्। ते तवेदं केनेदं केन प्रतारकेणोक्तं यत एतस्मिन्वस्तुनि सुवर्णकटकबुद्धिं करोषि। तर्हि किमिदं तत्राऽऽह—इदं प्रत्यक्षतो दृश्यमानं तत्प्रसिद्धं दुःसाधपुरुषवशीकरणपरमास्त्रं तव प्रीत्या करमूले निहितं चक्रम्। (शिखरिणी छन्दः)। **अत्र कामस्य चक्रमिति**। पञ्चशरत्वेनैव तत्प्रसिद्धेः। अन्यदीयशस्त्रनिधानं त्वफलमिति भावः। **कविप्रसिद्धेरिति**। तस्य काव्ये प्रधानत्वादिति भावः। **सुसितेति**। राजानं प्रति कव्युक्तिः। कदाचनैकदा शुभ्रवस्त्रालंकारायां कौमुदीमहसि स्वैरं यान्त्या मस्तं विधुर्गतः। ततो भवत्कीर्तेर्गाने कौमुदीवदेव प्रकाशे जाते सा मुक्ताशङ्का पतिगृहमगादित्यन्वयः। अतस्त्वं क्व शुभप्रदो नासि सर्वत्रैव तथेत्यर्थः। मूर्तत्वं धवलतागुणाश्रयत्वम्। (हरिणी छन्दः)। **उपेति**। अशोककलिकादर्शनमूर्छितस्य पथिकस्य तत्र गच्छन्तं पथि-

---

१ ग. साध्या क्र°। २ क. °केऽसिद्धम्। उप°। ३ ग. °म्। उप°। ४ क. °द्भिरवे°। ५ ग. रिहेष्यता°। ६ ग. °कः। पा°। ७ अयं श्लोकः ३३४ पृष्ठे दृश्यः।

अत्र पादाघातेनाशोकस्य[1] पुष्पोद्गमः कविषु प्रसिद्धो न पुनरङ्कुरोद्गमः।

सुसितवसनालंकारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का[2][3] क नासि शुभप्रदः॥ २६७॥

अत्रामूर्ताऽपि कीर्तिर्ज्योत्स्नावत्प्रकाशरूपा कथितेति लोकविरुद्ध-मपि कविप्रसिद्धेर्न दुष्टम्।

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च॥ २६८॥

ग्रहोपरागादिकं[4] विना रात्रौ स्नानं धर्मशास्त्रेण[5] विरुद्धम्।

अनन्यसदृशं[6] यस्य बलं बाह्वोः समीक्ष्यते।
षाड्गुण्यानुसृतिस्तस्य सत्यं सा[7] निष्प्रयोजना॥ २६९॥

---

इति कविसमयसिद्धोदाहरणं तदयुक्तम्। चरणन्यासेनाशोकाङ्कुरस्य कवीनामप्यसंमतेः। पुष्पोद्गम एव तेषां समयात्। दूषकताबीजं च विरोधादर्थाप्रतीतिरिति। उत्पातादिना तत्प्रतीतावदोषः।

विद्याविरुद्धः शास्त्रेण विरोधवान्। स चायं शास्त्रभेदाद्भिद्यते। तत्र धर्मशास्त्रविरुद्धो यथा—सदा०।

ग्रहोपरागादिकं विना रात्रौ स्नानं धर्मशास्त्रेण प्रतिषिद्धमिति तद्विरुद्धोऽयमर्थः। अर्थशास्त्रविरुद्धो यथा—अनन्य०।

---

कान्तरं प्रतीयमुक्तिः। उपपरिसरं परिसरसमीपे परिसरस्तटं सरणिं मार्गं परित्यजत तावद्यावदशोकोऽङ्कुरितः। हताशयेति। परपीडकत्वाद्रोषोक्तिः। कञ्चुकः सर्वावयवव्यापनात्। आदौ नदीतीरं तत्रापि रक्ताशोकस्तत्रापि सपुष्प इति उद्दीपनातिशयः। रक्तपदेन नवपल्लववत्ता। ( हरिणी छन्दः )। **तेषां समयादिति**। एवं च कविसमयविरुद्धोदाहरणमिति वक्तुं युक्तमिति भावः। अयमेव च प्रकाशाशयः। **विद्याविरुद्ध इति**। विद्येत्युपलक्षणम्। सविषाणस्तुरङ्गम इत्यादौ प्रत्यक्षादिविरुद्धस्यापीत्याहुः। **सदेति**। निशीथिन्यामर्धरात्रे। सकलं वासरमित्युत्तरार्धान्वयि। **ग्रहोपरागादीति**। वज्राशनिवत्समुदितप्रयोगः। निमित्तमात्रसंग्रहश्चादिना। **अनन्येति**। अनुपममित्यर्थः। संधि-

---

१ क. °कपु°। २ क. पति। ३ क. °शङ्कं क। ४ क. ग. °रागं वि°। ५ ग. °स्त्रे वि°। ६ क. अनन्यसदृशं बाह्वोर्बलं यस्य विलोक्यते। ७ क. स्यान्निष्प्रयोजना।

एतदर्थशास्त्रेण।

विधाय दूरे केयूरमनङ्गाङ्गणमङ्गना।
बभार कान्तेन कृतां करजोल्लेखमालिकाम्॥ २७०॥

अत्र केयूरपदे नखक्षतं न विहितमिति। एतत्कामशास्त्रेण।

अष्टाङ्गयोगपरिशीलनकीलनेन
दुःसाधसिद्धिसविधं विदधद्विदूरे।
आसादयन्नभिमतामधुना विवेक-
ख्यातिं समाधिधनमौलिमणिर्विमुक्तः॥ २७१॥

अत्र विवेकख्यातिस्ततः[3] संप्रज्ञातसमाधिः पश्चादसंप्रज्ञातस्ततो मुक्तिर्न तु विवेकख्यातौ। एतद्योगशास्त्रेण। एवं विद्यान्तरैरपि विरुद्धमुदाहार्यम्।

---

अत्र महाबलस्यापि संध्यादिषड्गुणानुसरणमर्थशास्त्रेण विहितमिति तद्विरोधः। कामशास्त्रविरुद्धो यथा—**विधाय०**।

अत्र केयूरपदे नखक्षतं कामशास्त्रे विरुद्धम्। बाहुमूलावयवविशेषे तस्य विधानात्। अर्थतः शेषेषु प्रतिषेधात्। योगशास्त्रविरुद्धो यथा—**अष्टाङ्ग०**।

अत्र मुक्तिसमीपस्थमसंप्रज्ञातयोगमनपेक्ष्यैव मोक्षो योगशास्त्रे विरुद्धः। विवेकख्यातिः प्रकृतिपुरुषयोर्भिन्नत्वज्ञानरूपा। ततो वितर्कविचाराद्यनुसारिरूपः संप्रज्ञातयोगः। पश्चात्पुरुषमात्रावलम्बनस्वरूपोऽसंप्रज्ञातयोगः। ततो मुक्तिः। न तु विवेकख्यातिमात्रत

---

विग्रहयानासनद्वैधसंश्रयाः षड्गुणास्त एव षाड्गुण्यम्। स्वार्थे ष्यञ्। **विधायेति**। केयूरं बाहुभूषणम्। अनङ्गाङ्गणमित्यनेन रमणीयतातिशयः। अनङ्गाङ्गदमिति पाठेऽनङ्गायाङ्गप्रदमित्यर्थः। करजा नखा उल्लेखः क्षतम्। नखस्थानानि तु

'कक्षाकरोरुजघनस्तनपृष्ठपार्श्वहृत्कन्धरासु नखराः खरवेगयोः स्युः'

इत्युक्तानि।

'नखक्षतस्य स्थानानि कक्षौ वक्षस्तथा गलः।
पार्श्वौ जघनमूरू च स्तनगण्डललाटिका'॥

इति वा। **अष्टाङ्गेति**। यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टौ योगाङ्गानि। तादृशाङ्गकयोगस्य परिशीलनं मुहुराचरणं तेन यत्कीलनमभ्यासदार्ढ्यं तेन दुःसाधा दुष्प्रापा या सिद्धिर्मुक्तिस्तस्याः सविधं समीपवर्तिनमसंप्रज्ञातलक्षणं पुरु-

---

१ ग. °ङ्गाङ्कनम°। ङ्गाङ्गदम°। २ क. ग. °म्। केयूरपदे नखक्षतं न विहितम्। अष्टा°।
३ ग. °तिः संप्रज्ञातः पश्चादसंप्रज्ञातस्ततो विमुक्तिर्न तु विवेकख्यातौ। एवं।

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
संतर्पिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ २७२ ॥

अत्र ततः किमिति न नवीकृतम् ।[3]
तत्तु यथा,

यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥२७३॥

---

एवेति हि योगशास्त्रम् । एवं तुरगादिशास्त्रविरोधोऽप्यूहनीयः । अभिमतप्रतीतिविरहो दूषकताबीजम् ।

अनवीकृतो भङ्ग्यन्तरेण यन्नवत्वं तन्न प्रापितः । एकभङ्गिनिर्दिष्टानेकार्थ इत्यर्थः । यथा—**प्राप्ताः०** ।

अत्र सर्वेष्वर्थेषु 'ततः किम्' इत्येकैव भङ्गिः । अथैष कथितपद एवान्तर्भविष्यतीति चेन्न । पर्यायान्तरप्रयोगेऽपि भङ्गेरेकरूपतायामसांकर्यात् । अथ नवीकृतं कीदृक् । **यदि०** ।

---

षमात्रविश्रान्तमनोवृत्तिरूपं योगं दूरे विदधत्तमनपेक्ष्यैवाभिमतामिष्टां विवेकख्यातिं प्रकृतिपुरुषयोर्भिन्नत्वज्ञानरूपामासादयन्नसौ समाधिधनानां योगिनां मौलिमणिरुत्कृष्टो विमुक्त इत्यन्वयः । संप्रज्ञातयोगः सविकल्पकसमाधिर्यत्राऽऽत्मा विषयान्तरं च भासत आत्ममात्रं वा । असंप्रज्ञातसमाधिः सर्ववृत्तिनिरोधरूपः । तत्र हि स्वरूपमात्रेऽवस्थानम् । ( वसन्ततिलका छन्दः ) । **अभिमतेति** । विरुद्धार्थप्रतीत्या सहृदयवैरस्यं दुष्टिबीजमित्यन्ये । **प्राप्ता इति** । ( वैराग्यशतके भर्तृहरेः ) शान्तस्योक्तिः । कामदुघाः कामदाः । ततः किम् । तत्त्वज्ञानं विना सर्वमकिंचित्करमिति भावः । [ वसन्ततिलका छन्दः ] **पर्यायान्तरप्रयोगेऽपीति** । ततः किमित्यस्यैतस्मात्किमितः किमित्यादयः पर्यायाः । अयं भावः—एकप्रकारकार्थाभिधानेऽनवीकृतत्वम् । भिन्नधर्मप्रकारेणार्थाभिधाने तु नवीकृतत्वमिति । अत एवास्यार्थदोषता । **यदीति** । सतामविषादिता प्रकृतिरेव स्वभाव एव, नत्वाश्चर्याय । तत्र दृष्टान्तत्रयं यदि दहतीत्यादि । अविषादिता विषादराहित्यम् । ( द्रुतविलम्बितं वृत्तम् ) । प्रकृतिरित्यस्य व्याख्यानं

---

१ ग. पुस्तके द्वितीयतृतीयचरणयोर्व्यत्यासो दृश्यते । २ क. संमानिताः । ३ ग. किमित्यनवी° ।

ईतीदृक् । अत्र हि सतामविषादिता स्वाभाविकीति नाऽऽश्चर्याय । यथाऽनलादेर्दाहकत्वादीति विवक्षितम् । तत्र च ततः किमित्यादिना किमद्भुतमित्यादि नवीकृतम् । पारुष्येणाशक्तिप्रकाशनेन वा सहृदयोद्वेजकत्वं दूषकताबीजमिति नित्योऽयम् ।

सनियमादिभिश्चतुर्भिः परिवृत्तपदान्वयात्सनियमपरिवृत्तादिचतुष्टयं लभ्यते । परिवृत्तिश्च सनियमानियमयोर्विशेषाविशेषयोश्च । अविशेषः सामान्यम् । तत्र सनियमपरिवृत्तः सनियमत्वेन वक्तुमुचितोऽनियमत्वेनोक्तः । न च न्यूनपदत्वेऽनभिहितवाच्यत्वे वाऽनुप्रवेशः । तादृशेऽर्थे विवक्षिते तयोरवकाशात् । अविवक्षिते त्वेतत्प्रसरति । अत एवायमर्थदोषः । विवक्षितमात्रस्य पदान्तरेणाप्युपस्थितौ तस्य तादवस्थ्यात् । एवमितरेष्वप्यूह्यम् । यत्तु—'अर्थत्वेन विशेषणं समाधानम्' इति, तन्न । न्यूनपदादिषु त्रिषु त्रयाणां संकरप्रसङ्गात् । चण्डीदासस्तु—'शब्दोच्चारणानन्तरमेव यस्य प्रतिभासः स शब्ददोषः, यस्य त्वर्थप्रत्ययानन्तरं सोऽर्थदोषः, अस्य त्वर्थप्रत्ययानन्तरमेवेत्यसावर्थदोषः, अत एवानभिहितवाच्याद्भिद्यते' इत्याह । तच्चायुक्तम् । बहुषु स्थानेषु व्यभिचारात् । शब्दार्थविभागस्यासंगतत्वात् ।

---

स्वाभाविकीति । **विवक्षितमिति** । प्रतिवस्तूपमा विवक्षितेत्यर्थः । किमित्यादिनेत्यत्राऽऽदिपदेन सदैवेति किमद्भुतमिति । इत्यादीत्यादिशब्देन ततः किमिति । अत्र वाच्यार्थबोधकाले भिन्नभिन्नप्रकारेण बोधान्नवीकृतत्वम् । **पारुष्येणेति** । पिष्टपेषणन्यायेनेत्यर्थः । **सनियमादिभिरिति** । अत्र केचित्—'एतन्मते परिवृत्ता इति बहुवचनमावश्यकम् । कथं वा सविशेषपरिवृत्त इति न संज्ञितम् । तस्मान्नियमादिभिश्चतुर्भिः परिवृत्तपदान्वयान्नियमपरिवृत्तादिचतुष्टयम् । तैः सहित इत्यनवीकृतविशेषणम्' इत्याहुः । **तादृशेऽर्थ इति** । आभासस्यैवान्वयप्रतियोगित्वेन कविविवक्षिततया तद्वाचकपदसत्त्वान्न दोषः । अन्वयप्रतियोग्युपस्थापकपदानुपादान एव न्यूनपदत्वादिति भावः । मात्रार्थं विनाऽप्यन्वयोपपत्त्या तस्यावश्यानपेक्षणान्नानभिहितवाच्यत्वमपीति भावः । **अविवक्षिते त्विति** । न चास्याविवक्षितत्वे यत्रानुल्लिखितेत्युदाहरणेऽश्मत्वौचित्ये हेत्वाकाङ्क्षायाः सत्त्वेन कथं वाक्यार्थबोधः । आभासेन मणिसदृशाश्ममिलनस्यैवाश्मत्वे हेतुत्वप्रतीत्या तदाकाङ्क्षानिवृत्तेः । अत एव न निर्हेतुत्वम् । नाप्यनभिहितवाच्यत्वादि । मात्रपदं त्वत्यन्तापकर्षाय । स च कवेरविवक्षित एवेति भावः । **न्यूनपदादिष्विति** । आदिनाऽधिकपदावाचकसंग्रहः । एवं च तदसंकीर्णमस्योदाहरणं न स्यादिति भावः । अत्रावाचकत्वं

---

१ क. इति । ईदृगविषादि° । २ क. °सरात् । अ° । ३ क. यत्प्रति° ।

**यत्रानुल्लिखितार्थमेव निखिलं निर्माणमेतद्विधे-**
**रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।**
**याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्संपद-**
**स्तस्याऽऽभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥२७४॥**

**अत्र च्छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचितेति सनियमत्वं वाच्यम् ।**

**वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते**
**बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।**
**वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं**
**स्वच्छेऽन्तर्मानसेऽस्मिन्[3]कथमवनिपते तेऽम्बुपानाभिलाषः ॥२७५॥**

---

उदाहरणम्—यत्रा० ।

अत्रान्यापदेश आभासमात्रेण मणीकृतेष्विति वाच्यम् । गुणान्तरव्यावर्तनेन निन्दातिशयप्रतीतेः । अनियमे तु न निन्दनीयानां गुणान्तरव्यवच्छेदप्रत्ययः । तस्मात् ‘ छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता ’ इति पठनीयम् । अव्युत्पत्त्युन्नयनेन वैमुख्याधायकत्वमेव दुष्टिबीजम् । नित्यदोषोऽयम् ।

अनियमपरिवृत्तो यथा—**वक्त्राम्भोजं०** ।

---

तृतीयश्लोके श्यामापदे बोध्यम् । **यत्रेति** । यत्र पदार्थ इति विषयसप्तमी । अनुल्लिखितं विषयावगाहनविमुखम्, अक्षि लोचनं, यस्य । अनुल्लिखिताख्यमिति पाठे नोल्लिखिता निर्दिष्टा, आख्या नाम यस्य तत् । फलाभावेन नामाग्रहणात् । यत्रानुल्लिखितार्थमिति पाठे सति सप्तमी । अनुल्लिखितोऽविभावितोऽर्थः प्रयोजनं यस्य तादृशं विधेर्निखिलं निर्माणं जगत् । उत्कर्ष आभिजात्यादौ यत्प्रतियोगिकत्पनमुपमानकल्पनं तद्यस्य परोत्कृष्टा निन्दाकोटिः । यत्संपदो जीवानां मनोरथगतीरप्युल्लङ्घ्य याताः प्राणिमनोगोचरा अपि न भवन्ति । तस्य मणेश्चिन्तामणेराभासेनेषत्स्फुरणेनामणयोऽपि मणित्वेन कल्पिता येऽश्मानस्तेष्वश्मत्वव्यवहार एवोचितो न तु मणित्वव्यवहार इत्यर्थः । चिन्तामणेः प्राकृतमणिगणनायां गणनमनुचितमिति भावः । अश्मा पाषाणः । अन्योक्तिरियम् । ( शार्दूलविक्रीडितं छन्दः ) । **अनियमे त्विति** । तस्मिन्हि तेषामश्मनां चिन्तामणितोऽपकर्षाप्रतीत्या तन्मध्यपतितस्याश्मत्वविधानं विरुध्येत । अपकृष्टमध्ये हि स्थितिरपकर्षायेति भावः । यद्यपि मणिरश्मैव तथाऽप्यश्मपदेनार्थान्तरसंक्रमितवाच्येन निष्प्रयोजनाश्मत्वं प्रतीयत इति बोध्यम् । **वक्त्रेति** । मृगयायै[1] पिपासुं ( विक्रमार्कं ) राजानं प्रति कस्यचिद् (मगधस्य) उक्तिः । वक्त्रं प्रथममेवाम्भोजन्यम् । तत्रापि श्लिष्टरूपकेण वाण्यभिन्नसरस्वत्याख्यनद्यावास इति भावः । एवं सर्वत्र ।

---

१ क. °ताख्यमे° । ग. ताक्षमे° । २ क. °ञ्चन्ति देव । ३ क. °स्मिन्नवतराति कथं तेऽम्बु° ।

अत्र शोण एवेति नियमो न वाच्यः ।

श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥२७६॥

अत्र ज्यौत्स्नीमिति श्यामाविशेषो वाच्यः ।

---

अत्र शोण एवेति नियमो न वाच्यः । वैयर्थ्यात् । प्रत्युतान्यजलाशयानात्मकप्रतीतौ पिपासानौचित्यातिशयाप्रतीतेः । अधिकपदभेदो दूषकताबीजं च पूर्ववत् । विशेषपरिवृत्तो यथा—श्यामां० ।

अत्र ज्यौत्स्नीमिति रात्रिविशेषो वाच्यः । अपरविशेषस्य स्वत एव श्यामत्वात्तत्राऽऽकाङ्क्षाविरहात् । इदमेवात्र दूषकताबीजम् । अन्यत्र विरोधादिकमपि दुष्टिबीजं द्रष्टव्यम् ।

---

सरस्वती वाणी नदी च, शोणो रक्तो नदश्च, स्मृतिकरणपटुतासादृश्यात् । समुद्रविरोधित्वाद्वा बाहोः । काकुत्स्थो रामस्तस्य तद्बन्धनकर्तृत्वेन तद्वीर्यस्मारकत्वम् । दक्षिणो दक्षिणदेशस्थो दानदक्षः सव्येतरो वा । समुद्रो मुद्रया सहितः पयोधिश्च । वाहिन्यो नद्यः सेनाश्च । अन्तर्हृदयमध्ये । स्वच्छे निर्मले । मानसं सरः स्वान्तं च । ( स्रग्धरा छन्दः ) । **पूर्ववदिति** । यत्रान्वयप्रतियोग्यर्थापेक्षयाऽधिकार्थो न विवक्षितस्तत्राधिकपदत्वम् । प्रकृते चैवकारार्थः कवेर्विवक्षित एवेति न स दोष इति भावः । सदैव शोण इति विवक्षिते त्वस्थानस्थपदतेति बोध्यम् । **श्यामामिति** । विद्धशालभञ्जिकायां ( तृतीयाङ्के ) मृगाङ्कावलीवियोगातुरस्य राज्ञो विद्याधरमल्लदेवस्येयमुक्तिः । भो इत्याकाशे संबोधनम् । श्यामा रात्रिः सान्द्रैर्निबिडैर्मषीकूर्चकैर्मषीयुक्ततूलिकाभिः । तन्त्रं वैद्यकादिशास्त्रोक्तौषधमित्यर्थः । अथशब्दो वाऽर्थे । क्वचित्तु अपीति पाठः । तत्र समुच्चयः । चन्द्रस्यैवानयोः शोभाहेतुत्वात्तद्वेष्टि चन्द्रमिति । मुद्रा चिह्नम् । एवं हि मुद्राङ्कयोरन्यतरवैयर्थ्यं स्यात् । तस्माद्वक्त्रमेव मुद्राङ्कः संजातो यास्विति व्याख्येयम् । अन्यसंबन्धादन्यत्र समुदितं चिह्नं मुद्राङ्कः । भावनोपनीतं मुखं दशसु दिक्षु पश्यतश्चन्द्रादिभिरुद्दीपनतया संतापकैः क्रियमाणं प्रतिबन्धमुक्तरीत्याऽपहरतेत्यर्थः । ( शार्दूलविक्रीडितं छन्दः) । **तत्राऽऽकाङ्क्षाविरहादिति** । तमिस्रायाः श्यामत्वेन श्यामीकरणवैफल्यात्सामान्योपादानमयुक्तमिति भावः । **इदमेवेति** । एतत्कृतसहृदयोद्वेग एवेत्यर्थः । येन रूपेण न शक्तिस्तेन रूपेण बोधस्य कविविवक्षितत्वेऽवाचकत्वम् । प्रकृते च सामान्यरूपेणैव बोधः कविविवक्षितः । योगस्याविवक्षितत्वाद्रूढेर्ज्योत्स्नायां सत्त्वाच्च नावाचकत्वन्यूनपदत्वे इति भावः ।

---

१ क. °मपि प्र° । २ ग. °त्रज्योत्स्नी° ।

कल्लोलवेल्लितदृषत्परुषप्रहारै
रत्नान्यमूनि[1] मकरालय माऽवमंस्थाः ।
किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥ २७७ ॥

अत्र, एकेन किं न विहितो भवतः स नामेति[3] सामान्यं वाच्यम् ॥

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः, प्रत्युत
द्रुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चाऽऽत्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥ २७८ ॥

---

विशेषनियामकप्रकरणादिसत्त्वे त्वदोषत्वम् । सामान्यपरिवृत्तो यथा—**कल्लोल०** ।

अत्र कौस्तुभेनेति विशेषतो रत्नवचनं नोचितम् । कौस्तुभमात्रस्योपकारकत्वेनान्यावमाननेन निषेधायोगात् । 'एकेन किं न भवतो विहितः स नाम' इति पाठे तु भेदानवगमाद्विवक्षितनिर्वाहः । तदनिर्वाहादिकं च दूषकताबीजमिति नित्य एवायम् ।

साकाङ्क्षः सहाऽऽकाङ्क्षया वर्तते । इतरपदार्थान्वयाय विशेषणसाकाङ्क्ष इत्यर्थः । निर्हेतुभेदस्तु तदवसर एवोक्तः । उदाहरणम्—**अर्थित्वे०** ।

---

**कल्लोलेति** । कल्लोलैर्वेल्लिताश्चालिता ये दृषदस्तेषां कठोरप्रहारैरित्यर्थः । मकराकरः समुद्रः । माऽवमंस्था माऽवज्ञासीः । कुत इत्यत आह—किमिति । पुरुषोत्तमः श्रीकृष्णः पुरुषश्रेष्ठश्च । ( वसन्ततिलका छन्दः ) । **निषेधायोगादिति** । वस्तुनि सत्युपकार एव स्यादिति वाक्यार्थोपपत्तावनन्तरं कौस्तुभमात्रस्योपकारकत्वेऽन्यावमाननिषेधः कथमिति प्रतीतानुपपत्तिरिति भावः । **एकेन किं नेति** । येषामेकेनोपकृतं तदितरेषामवमाननं नोचितमिति प्रतीतेर्नानुपपत्तिरिति भावः । **अनिर्वाहादिकमिति** । विवक्षितान्यावमाननानिर्वाहादिकमित्यर्थः । अन्वयित्वेन तु कवेर्विशेष एव विवक्षित इति न पूर्वोक्तिविरोधः । **विशेषणसाकाङ्क्ष इति** । विशेषणपदमाकाङ्क्षाविषयानुपात्तार्थपरमित्याहुः । **अर्थित्व इति** । (वीरचरितनाटके द्वितीयाङ्के ) सीताप्राप्तौ निराशरावणदूतस्य शौष्कलस्येयमुक्तिः । ( रावणामात्यस्य माल्यवत उक्तिः ) । प्रभोः समर्थस्य मत्प्रेषणाद्याचकत्वे प्रकटीकृतेऽपि फलप्राप्तिः सीताप्राप्तिः । प्रभौ ह्यर्थिनि फलप्राप्तिरावश्यक्युचिता च सा न जाता । न केवलं फलाप्राप्तिः किंतु द्रुह्यंस्ताटकादिविरोधेन द्रोहं कुर्वन्विरुद्धचरितो यज्ञादिसंरक्षकस्तया कन्यया युक्तः । एवं परस्योत्कर्षरूपमात्मनो मानयशसोर्विस्रंसनं नाशरूपं च । जनके जन्याध्यवसायः ।

---

१ क. °राकर मा° । ग. °राश्रय° । २ क. °न भवतो विहितो न । ३ क. °ति वाच्यं सामान्यम् । ४ क. °ननि° ।

**अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति । न हि परस्येत्यनेन संबन्धो योग्यः[2] ।**

**आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं**

---

अत्र स्त्रीरत्नमित्यस्यार्थ उपेक्षितुमित्यस्यार्थमाकाङ्क्षति । अन्यथा कथं मृष्यत इत्यनेनामर्षार्थकेनान्वयाप्रसङ्गः । न हि स्त्रीरत्न एवामर्षः किं तु तदुपेक्षायाम् । न च परस्येत्येतदन्तर्भाव्य तदन्वयोऽस्त्विति वाच्यम् । तस्य जनितान्वयबोधत्वेन निराकाङ्क्षत्वात् । न चाभवन्मतयोगसंकरः । वक्तृविवक्षितयोगस्यात्र सत्त्वात् । परं तु विवक्षित एवार्थः साकाङ्क्षतया दुष्टः । अत एव न न्यूनपदत्वान्तर्भावः । दूषकताबीजं चाभिधानापर्यवसानम् । अतो नित्य एवायम् । कश्चित्तु—'स्त्रीरत्नस्य कथं मृष्यत इत्यनेनाऽऽकाङ्क्षा । तदन्वयश्च परस्येत्यन्तर्भाव्य संभवति । तच्च जनितान्वयबोधत्वेन निराकाङ्क्षमिति दूषणार्थः । अन्वयप्रयोजकरूपवत्त्वेनोपस्थितत्वे सत्यपर्यवसितार्थान्वयत्वं च लक्षणमतोऽभवन्मतयोगाद्भेदः । तत्रान्वयप्रयोजकरूपेणानुपस्थितेः । समाप्तपुनरात्ते विशेषणस्यापर्यवसानमिह तु विशेष्यस्येति ततो भेदः ' इत्याह । तद्वृत्तिविरोधादिग्रस्तम् ।

अपदयुक्तः, अपदेऽस्थाने युक्तः । यत्र तद्योगे प्रकृतविरुद्धप्रतीतिः । उदाहरणम्—**आज्ञा०** ।

---

तादृशं स्त्रीरत्नं जगत्स्वामी । दशमुख इत्यनेन सकललोकविलक्षणत्वम् । देवो विजिगीषुः कथं मृष्यते क्षमते न कथंचिदपीत्यर्थः । (शार्दूलविक्रीडितं छन्दः) । **कथं मृष्यत इति** । एतत्समुदायरूपेणामर्षार्थकेनेत्यर्थः । **तस्य जनितेति** । परस्येत्यस्योत्कर्षेण जनितान्वयबोधत्वादित्यर्थः । न चानुषङ्गः । विस्रंसनादिना व्यवधानात् ।

असंबद्धव्यवाये तु वैषम्यान्नानुषज्यते ।

इत्युक्तेरिति भावः । **वक्तृविवक्षितयोगस्येति** । चकारत्रयेण त्रयाणामेकक्रियान्वयित्वमेव वक्तृविवक्षितमिति स्त्रीरत्नस्यामर्षान्वय एव वक्तृविवक्षितः । तस्मिंश्चाऽऽपाततो जाते पर्यालोचनायां रत्नस्यामर्षायोग्यत्वेन प्रतीतानुपपत्तिपरिहारायोपेक्षितुमित्यपेक्षणेन साकाङ्क्षत्वग्रह इति भावः । अमर्षो द्वेषः । **अत एव न न्यूनपदेति** । विवक्षितार्थबोधकानुपादान एव तदङ्गीकारात् । यथा तथाभूतामित्यादावित्थमादेरिति भावः । **अभिधानापर्यवसानमिति** । प्रतीतानुपपत्तेरिति भावः । **स्त्रीरत्नस्य कथं मृष्यत इत्यनेनाऽऽकाङ्क्षेति** । कर्मणस्तत्रैवान्वययोग्यत्वं स चोपात्तस्वरूपेण न कथमपीति भावः । **तदन्वयश्चेति** । तदर्थान्वयश्चेत्यर्थः । **तत्रान्वयेति** । सङ्ग्रामाङ्गणेत्याद्यभवन्मतयोगोदाहरणादावित्यर्थः । **तद्वृत्तीति** । अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति । न हि परस्येत्यनेन संबन्धो योग्यः । व्यवहितत्वादिति हि वृत्तिग्रन्थः । **आज्ञेति** । ( बालरामायणे प्रथ-

---

१ ग. 'मिति का' । २ एतदुत्तरं 'व्यवहितत्वात्' इत्यधिकः पाठः क्वचित् । ३ क. 'योपस्थितिरिति । ४ क. अत्रा' । ५ क. 'णस्य प' । ६ क. 'दमुक्तः अपदेऽस्थाने मुक्तः । ७ क. ' हरणे इत्यर्थः ' इति पाठः क्वचित् ।

भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥ २७९ ॥

अत्र स्याच्चेदेष न रावण इत्यन्तमेव समाप्यम् ।

---

अत्रे जगदाक्रन्दनदायित्वादिना रावणस्य त्याज्यत्वं विवक्षितम् । तथा च स्याच्चेदेष न रावण इत्यत्र क्व नु पुनरित्यादि योजितं समाधाने पर्यवस्यतीति दुष्टम् । उत्पत्तिर्द्रुहिणान्वये चेत्यत्र यदि योज्यते तदाऽविवक्षितासिद्धिरेवेत्यपदस्थपदवदस्य दोषत्वम् । न च प्रकाशितविरुद्धान्तर्भावः । स्थानविशेषयोगमनपेक्ष्य तस्य प्रवृत्तेः । दुष्टिबीजं च विरुद्ध-प्रतीतिः । अतो नित्य एवायम् । केचित्तु—अपदेमुक्त इति पठित्वा व्याचक्षते—"अपदे-मुक्तः पदे स्थाने योऽमुक्तोऽत्यक्तः । 'आज्ञा शक्र'—इत्यादौ च स्याच्चेदेष न रावण इत्येतावता विच्छेदे काऽपि कान्तिरनुभवसिद्धा । 'जीवत्यहो रावणः' इतिवत् । सोऽय-मर्थोऽत्र चेन्न त्यज्यते क्व नु पुनरित्यादिना विस्तार्यते तदा मध्यप्रवेशेनायमर्थोऽलक्षित-प्रायश्चमत्कारं नाऽऽवहतीत्यनुभवसिद्धम्" इति ।

---

माङ्के ) रावणदूतं प्रति जनकपुरोहितस्य ( शतानन्दस्य ) उक्तिः । प्रणयिनीत्वेन रूपणा-दंपत्योरविच्छेदसूचनम् । शास्त्राणि चक्षुरिति बहुवचनैकवचनाभ्यां सर्वशास्त्रविषयकैकसमूहा-लम्बनज्ञानसूचनम् । चक्षुर्नवत्वेन विषयग्रहाधिक्यम् । पदं विलासस्थानम् । द्रुहिणो ब्रह्मा द्रोग्धा च । अत ईदृग्वरो न लभ्यते । रावयति लोकानिति रावणः । ननु दोग्धृवंशोत्पन्नाय कथं देयेत्यत आह—क्व न्विति । ( शार्दूलविक्रीडितं छन्दः ) । अत्र । वीरचरिते । **रावणस्य त्याज्यत्वमिति** । इयं हि रावणपुरोहितं प्रति 'यद्यपि सन्त्येव बहवो गुणा-स्तथाऽपि बलवानेको दोषस्तानपवदति' इत्युपक्रम्य जनकपुरोहितस्योक्तिः । तत्र चूर्णिका-साचिव्येन जनकस्य रावणोपेक्षैव विवक्षिता । सा च स्याच्चेदेष न रावण इत्येतावतैव संपन्ना । रावणपदस्य जगदाक्रन्दकारित्वरूपार्थान्तरसंक्रमितवाच्यत्वादिति भावः । समर्थनसहितैतद्वा-क्येनान्यत्रोक्तगुणासंभवेन रावणादन्य ईदृग्वरो न लभ्यत इत्येवमापाततो वाक्यार्थप्रतीति-निष्पत्तौ चूर्णिकानुसंधानेनैव दोषावतारादस्यार्थदोषता बोध्या । **योज्यत इति** । तदुत्तरं पठ्यत इत्यर्थः । **अविवक्षितासिद्धिरिति** । अविवक्षितस्य समाधानस्यासिद्धिरित्यर्थः । क्वचित्तु विवक्षितासिद्धिरित्येव पाठः । **तस्य प्रवृत्तेरिति** । अत्र तात्पर्यविरुद्धस्यैवाभिधाना-दित्यपि बोध्यम् । नाप्यधिकपदत्वम् । तदर्थस्यान्वयित्वात् । विरुद्धमतिकृद्भेदस्तु तत्प्रकरण एव दर्शितः । **केचित्त्विति** । अत्रारुचिबीजं त्वीदृशेऽर्थेऽस्य पदस्य साधुत्वं दुर्वचम् ।

---

१ क. °न्त एव । २ क. °त्र यदा° । ३ तदा यिवक्षित इति प्रभासंमतः पाठः । ४ क. °दयुक्तः । ५ क. °दयुक्तः पदे स्थानेऽयुक्तोऽत्यक्तः । आज्ञा° ।

श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा।
निशा शशाङ्केन धृतिः समाधिना नयेन चालंक्रियते नरेन्द्रता॥२८०॥

अत्र श्रुतादिभिरुत्कृष्टैः सहचरितैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम्[1]। विनयेन धीरता इति पाठो युक्तः।

लग्नं रागावृताङ्ग्या[2] सुदृढमिह ययैवासियष्ट्याऽरिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती।
तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता[3]
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः॥२८१॥

इत्यत्र विदितं तेऽस्त्वित्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम्।
इयं परिसमाप्यते रणकथाऽद्य दोःशालिना-
मपैतु[4] रिपुकाननातिगुरुरद्य भारो भुवः॥ २८२ ॥

---

सहचरभिन्नः समभिव्याहृतविजातीयः। वैजात्यं चोत्कृष्टत्वापकृष्टत्वाभ्याम्। उदाहरणम्—श्रुतेन०।

अत्र श्रुतबुद्ध्यादिभ्य उत्कृष्टेभ्यः समभिव्याहृतेभ्यो व्यसनमूर्खतयोर्विजातीयत्वमुभयोरुपादेयत्वमनुपादेयत्वं वा प्रतीयत इति दूषकताबीजम्। नित्यश्चायम्।

प्रकाशितविरुद्धः। प्रकाशितो विवक्षितार्थस्य विरुद्धोऽर्थो येन वाक्यार्थेन सः। सहचरभिन्ने पदार्थस्यैव तथात्वमिति ततो भेदः। उदाहरणम्—लग्नं०।

अत्र विदितं तेऽस्त्विति वाक्यस्यार्थो लक्ष्मीस्ततोऽपसरतीति विरुद्धं प्रकाशयति। इदमेव च दूषकताबीजमिति नित्यदोषोऽयम्।

विध्ययुक्तः। अयुक्तविधिरित्यर्थः। अयुक्तत्वं च विधेरविधेयस्यैव विधेयत्वेनायुक्तक्रमतया[5] वा। तत्राऽऽद्यो यथा—प्रयत्न०।

---

दूषकताबीजभूतोऽनुभवश्च संदिग्ध इति। श्रुतेनेति। श्रुतं विद्याश्रवणम्। व्यसनं द्यूतादि। मदो यौवनादिजन्मा। समाधिर्धर्मचिन्ता। नयो नीतिमार्गः। अत्र क्रियत इति क्रियादीपकम्। ( वंशस्थं वृत्तम् )। दूषकताबीजमिति। उत्कृष्टैरुत्कृष्टं भूष्यत इति बुद्धेर्निकृष्टानुप्रवेशेन विच्छेदस्तादित्यन्ये। अयुक्तविधिरिति। न तु विधेयत्वानवगम इति विधेयाविमर्शतो भेदः। प्रयत्नेति। ( वेणीसंहारे तृतीयाङ्के ) द्रोणवधकुपितस्याश्वत्थाम्नो दुर्योधनं प्रत्याश्वासनोक्तिः। स्तुतिभिः प्रयत्नेन परिबोधितस्त्वमित्यन्वयः। निशामित्यत्य-

---

१ क. °चरैर्व्य°। २ ग. °म्। लग्नं। ३ क. ग. °ताहृयेलत्र। ४ °पैति रि°। ५ क. °त्वेन वायु°।

**अत्र शयितः प्रयत्नेन बोध्यस इति विधेयम्।**

**सुखेन शयितश्चिरादुषसि बोध्यसे मागधैः, इति युक्तम्।**

**यथा वा,**

**वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं**
**ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः।**
**तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-**
**र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते॥२८३॥**

**अत्र वाताहारादित्रयं व्युत्क्रमेण वाच्यम्।**

---

अत्र पाण्डवभयेनाद्यावधि तव निद्रा नाभूदेव। अद्य तु मया शमितेषु तेषु निःशङ्कतया निद्राणस्त्वं प्रयत्नेन बोध्यस इति तात्पर्यम्। तथा च शयितस्त्वं प्रयत्नेन बोध्यस इति विधिर्युक्तो न तु शेष इति शयनस्य। अविमृष्टविधेयांशे तु युक्तस्यैव विधिः। परं स्वविमर्शमात्रम्। अत्र त्वयुक्तस्यैव विधिरिति भेदः। विवक्षितानिर्वाहोऽत्र दुष्टिबीजम्। द्वितीयो यथा—**वाता०।**

मृगचर्मवसनं मेघतोयकणिकापानं वायुभक्षणं चेत्युत्तरोत्तरं तीव्रमिति तत्क्रमेण विधि-

---

न्तसंयोगे द्वितीया। शेष इति वर्तमानसामीप्ये लट्। तथा निद्रास्यसि यथैवं प्रतिबोधनीय इत्यर्थः। "सुखेन शयितश्चिरादुषसि बोध्यसे मागधैः" इति युक्तः पाठः। सोमकाः पाञ्चालाः। रिपुकाननेनातिगुरुः। **बोध्यस इति।** वैतालिकस्तुतिभिः प्रयत्नेन बोधं लप्स्यस इत्यर्थः। (पृथ्वी छन्दः)। **अयुक्तस्यैवेति।** शेष इत्याख्यातेन शयनस्यापि विधेयतावगतिर्जायते। परं तु विधेयतापर्याप्त्यनधिकरणे तत्राऽऽख्यातगम्यविधेयत्वविश्रान्तिरयुक्ता। प्रयत्नबोधपर्यन्तमेव तदौचित्यात्। तथा शयितो भविष्यसि यथा प्रयत्नेन बोध्यस इति प्रबोध एव तद्विश्रान्तेः। विशिष्टविधौ विशेषणांशेऽपि तदवगमान्न विधेयाविमर्श इति भावः। **विवक्षितानिर्वाहोऽत्रेति।** अत्र शयनेऽपि कदाचिद्विश्रान्तिसंभवेनाऽऽपाततो वाक्यार्थबुद्धावपि प्रकरणादुक्तार्थतात्पर्यग्रहेण तद्बाधावतारादर्थदोषत्वं बोध्यम्। निशां रात्रीणां शेषेऽवसानेऽद्यारभ्य प्रयत्नपरिबोधितो भविष्यसीत्यध्याहार्यमिति नात्रायं दोष इत्यन्ये। एतन्मतेऽपि साकाङ्क्षत्वं दोषोऽस्त्येवेति बोध्यम्। **वातेति।** वाताहारतयेत्यादितृतीयान्तान्याश्वास्येत्यत्र करणतयाऽन्वियन्ति। अभ्रं मेघा बर्हिणो मयूराश्चमूरुर्मृगः क्रूरं कठिनं चर्म वसनं येषां तैः। लुब्धका व्याधाः। शाठ्येन धर्माचरणं दम्भः। तस्य स्फुरितमुदर्के परहिंसारूपं जानन्नपि जाल्मोऽसमीक्ष्यकारी मूर्खो जनः परप्रतार्यो गुणानीहते संभावयति। दाम्भिकेष्विति शेषः। (शार्दूलविक्रीडितं छन्दः)। **तत्क्रमेण विधि-**

---

१ ग. °मू। यथा वा।

अरे रामाहस्ताभरण भसलश्रेणिशरण
स्मरक्रीडाव्रीडाशमन विरहिप्राणदमन ।
सरोहंसोत्तंस प्रचलदल नीलोत्पल सखे
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥ २८४ ॥

अत्र विरहिप्राणदमनेति नानुवाद्यम् ।
लग्नं रागावृताङ्ग्येत्यादि, ॥ २८५ ॥

---

युक्तः । लोकप्रसिद्धक्रमलङ्घनेन श्रोतुरुद्वेगोऽत्र दुष्टिबीजमिति नित्योऽयम् ।

अनुवादायुक्तः, अयुक्तोऽनुवादः । अयुक्तत्वं चात्र विध्यननुगुणत्वम् । यथा—अरे० ।

अत्र विरहिप्राणदमनेत्यनुवादः कथय क्वेन्दुवदनेति विधिविरुद्धः । तदेव च दूषकताबीजमिति नित्यदोषोऽयम् ।

त्यक्तपुनःस्वीकृतः । पूर्वं त्यक्तोऽनन्तरं पुनः स्वीकृत उपात्तः । तस्मिन्नेव वाक्यार्थे विशेषणान्तरोपादाने समाप्तपुनरात्तम् । अत्र त्वन्य एव वाक्यार्थ इति ततो भेदः ।

उदाहरणम्—'लग्नं रागावृताङ्ग्या—' इति ।

---

युक्त इति । अयं भावः—अत्रार्थान्तरन्यासरूपान्यापदेशभूतचतुर्थचरणस्वारस्येन दम्भाधिक्ये वाच्ये तीव्रतीव्रतरक्रमेणैव विधिर्वाच्यः । एतेन दुष्क्रमत्वमत्र स्यादित्यपास्तम् । अत एवार्थदोषोऽयम् । यथाश्रुतवाक्यार्थोपपत्तावपि चतुर्थचरणीयापदेशानुसारेण तीव्रादिक्रमेण विधौ तात्पर्यग्रहादित्याहुः । केचित्तु दम्भचेष्टाया विधेयत्वे जगन्निःशेषयितुं वाताहारः कृतस्तान्ग्रसितुमभ्रकणिकाव्रतं कृतं तान्क्षयं नेतुं चर्मवसनं कृतमित्येवं व्युत्क्रमेणाभिधातुं युक्तमित्याहुः । तन्मतेऽविमृष्टविधेयांशतैव स्यात् । लोकप्रसिद्धेति । एतादृशापदेशे लोकप्रसिद्धेत्यर्थः । श्रोतुरुद्वेग इति । विवक्षिताप्रतीत्येत्यर्थः । अरे रामाहस्ताभरणेति । ( विक्रमोर्वशीये ) विरहिणः पुरूरवस इयमुक्तिः ( संप्रति नोपलभ्यते ) । रामाहस्ताभरण । तेन तदागमनस्यात्र संभावितता । भसला भ्रमराः । अनेन शरणगमनयोग्यता । उद्दीपकतया स्मरक्रीडाव्रीडाशामकत्वम् । तेन मदनोपकारकत्वम् । विरहिप्राणदमनत्वं तत्सपक्षत्वात् । हंसः श्रेष्ठ उत्तंसो भूषणम् । कम्पयुक्तपत्र नीलोत्पल सखे । अहं सखेदोऽत इन्दुवदनोर्वशी क्व तत्कथय । मदीयं मोहं श्लथय दूरी कुर्वित्यर्थः । ( शिखरिणी छन्दः ) । विधिविरुद्ध इति । अत्र विरहिणः स्वमोहश्लथनप्रार्थनायां विरहिप्राणदमनत्वेनानुवादो न युक्तः । विरहिविरोधित्वेन तन्मोहश्लथनायोगादिति भावः । विशेषणान्तरोपादान इति । तच्च पदा-

---

१ क. °व्र हि वि° । २ अयं श्लोकः प्राक्० पृ. ३१५ द्रष्टव्यः । ३ क. नित्योऽयम् ।

अत्र विदितं तेऽस्त्वित्युपसंहृतोऽपि तेनेत्यादिना पुनरुपात्तः ।

उद्यतस्य परं हन्तुं स्तब्धस्य विवरैषिणः ।
यथाऽस्य जायते पातो न तथा पुनरुन्नतिः ॥ २८६ ॥

अत्र पुंव्यञ्जनस्यापि प्रतीतिः ।

यत्रैको दोषः प्रदर्शितस्तत्र दोषान्तराण्यपि सन्ति, तथाऽपि तेषां तत्राप्रकृतत्वात्प्रकाशनं न कृतम् ।

कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।
संनिधानादिबोधार्थं

---

अत्र विदितं तेऽस्त्वित्युपसंहृतो राजदोषस्तेनास्मि दत्ता भृत्येभ्य इत्येतावता पुनरुपात्तः । स चाप्रयोजकः । उत्प्रेक्षाया उपसंहृतेनैव निर्वाहात् । श्रीनियोगादित्यादिकं त्वदुष्टमेव । अन्यथा वाक्यैकवाक्यतोच्छेदापत्तेः । दूषकताबीजं त्वप्रयोजकत्वं सहृदयवैरस्याधानं वा । लोकेऽपि हि त्यक्तस्य भक्ष्यादेः पुनरुपादानं वैरस्यमावहति । नित्यश्चायम् ।

अश्लीलो व्रीडादिसमर्पकोऽर्थः । यथा—उद्यतस्य० ।

शब्दान्तरेणाप्युपादीयमानोऽयमर्थः पुंव्यञ्जनादिसाधारण्येन प्रतीतिर्व्रीडादायी ।

ननूदाहरणेषूक्तेषु किमुदाहृता एव दोषाः, तथा सत्यन्यलक्षणानां तेषु दर्शनादतिव्याप्तिः । अथ तत्र दोषान्तराण्यपि, तर्हि किमिति न प्रकाशितानीति चेत्, अप्रकृतत्वादिति ।

अथैषां यथायथमदोषत्वे प्रतिपादयितव्येऽर्थदोषाणां संनिधानात्प्रथममर्थदोषस्यैव तत्प्रतिपादयति—कर्णा० ।

---

र्थरूपं वाक्यार्थरूपं चेत्यन्यदेतत् । **उपसंहृतः** । उपहृत उपसंहृतैकदेशः । **स चाप्रयोजक इति** । तत्र हेतुमाह—**उत्प्रेक्षाया इति** । **अन्यथा वाक्यैकेति** । अत एव येनानेन जगत्स्वित्यादौ नायं दोषः । उत्तरवाक्यस्थयत्पदार्थस्याऽऽक्षिप्ततत्पदार्थेन नियताकाङ्क्षासत्त्वाच्च । परशुप्रकर्षार्थं तदुपादानेन येनानेनेत्यादौ न समाप्तपुनरात्तत्वम् । नापि प्रकृतोदाहरणे समाप्तपुनरात्तता । तेनास्मि दत्ता भृत्येभ्य इति श्रीनियोगाद्ददितुमिवेत्यर्थबोधोपपत्तेरिति भावः । **उद्यतस्येति** । हननं हिंसा सुरतक्रियारूपयोनिमध्यताडनं च । स्तब्धस्वमनम्रता निष्क्रियोन्नतिश्च । विवरं छिद्रं वराङ्गं च । पातोऽपचयो धातुत्यागजनितशैथिल्यं च । उन्नतिरुपचयो रागोद्रेकेण दृढता च । अस्यार्थदोषत्वे बीजमाह—**शब्दान्तरेणापीति** । **दोषान्तराण्यपीति** । संभवन्तीति शेषः । यथा लग्नं रागावृत्ताङ्गचेत्यादौ । **अप्रकृतत्वादिति** । दोषान्तराणामन्यदोषप्रसङ्गे वक्तुमनर्हत्वादित्यर्थः । न त्वलक्ष्यत्वात् । तथा सति तल्लक्षणगमनेऽतिव्याप्तिः स्यात् । एवं चोपधेयसांकर्येऽप्युपाधेरसां-

---

१ ग. हन्तुमेव प्रवृत्तस्य स्तब्ध° । २ यथाऽऽशु । ३ क. 'षां तेषां त' ।

अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते। तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये ।

यथा,

अस्याः कर्णावतंसेन जितं सर्वं विभूषणम् ।
तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम् ॥ २८७ ॥
अपूर्वमधुरामोदप्रमोदितदिशस्ततः ।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥ २८८ ॥

अत्र कर्णश्रवणशिरःशब्दाः संनिधानप्रतीत्यर्थाः ।

विदीर्णाभिमुखारातिकराले संगरान्तरे ।
धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव ॥ २८९ ॥

---

अवतंसादिपदैर्जात्यादिपुरस्कारेण कर्णाभरणादीन्येवोच्यन्त इत्यर्थप्राप्तौ कर्णपदादीनां यद्यप्यपुष्टार्थत्वं पुनरुक्तत्वं वा युज्यते तथाऽपि क्वचित्कर्णेऽवतंस इत्यादिव्युत्पत्त्या क्वचिल्लक्षणादिना च कर्णस्थित्यादिरूपस्याधिकस्य विवक्षितार्थस्य प्रतिपत्तेरदोषत्वम् । यथा— **अस्याः०** ।

अत्रावतंसस्य कर्णस्थित्यवस्था कर्णपदोपादानेनावगम्यते । तदवगत्या किं प्रयोजनमिति चेत्, वर्णनीयोत्कर्षः । कथमिति चेत्, न स्वरूपतोऽस्य विभूषणजेतृत्वम्, किं तु तत्कर्णावस्थित्येति पर्यवसानात् । एवं श्रवणकुण्डलपदेऽप्यूह्यम् । न केवलं कर्णश्रवणपदयोरेवायं महिमा, किं त्वन्येषामपि । यथा—**अपूर्व०** ।

अत्र शिरःपदादाने शेखरस्वाम्यमात्रं लभ्यते, न तु तदलंकृतत्वम् । तथा च तत्प्रतीतेरदोषत्वम् ।

**विदीर्णा०** ।

---

कर्यादेदोष इति भावः । **जात्यादिपुरस्कारेणेति** । कर्णसंबन्धिभूषणत्वेन शक्तौ शक्यतावच्छेदकगौरवात्कर्णाद्यसंबन्धेऽपि तत्प्रयोगाच्च कर्णादिसंबन्धयोग्यताया वैलक्षण्यानतिरेकाच्चेति भावः । वैजात्यं च कर्णादिसंबन्धाक्षेपकम् । अत्र पक्षेऽपुष्टार्थत्वम् । अवतंसः कर्णभूषेत्यादिकोशात् । कर्णसंबन्धयोग्यभूषणत्वेन शक्तिरिति केचित्तन्मतेनाऽऽह— **पुनरुक्तत्वं वेति** । **क्वचिल्लक्षणादिनेति** । यथा पुष्पमालापदे । **अपूर्वेति** । अपूर्वो मधुरो य आमोदः । मोदिताः सुगन्धिताः । पाठान्तरे—आलापो भाषणं तेन मोदिता हर्षिता दिशो यैः, भृङ्गैर्मुखराः शिरःशेखरेण शिरोभूषणेन शोभिनः पुरुषा आगता इत्यन्वयः । केचित्तु भृङ्गाः कर्तारो मधुरालापेति पाठ इत्याहुः । **विदीर्णेति** । आदौ विदीर्णाः

---

१ क. °णान्युच्य° । २ क. ग. °त्यन्त° म° । ३ क. °रालापप्र° । ४ प्रसादित इति वा पाठः । ५ क. °त्यर्थम् । वि° । ६ क. संयुगान्तरे । ७ दोषा इति वा पाठः । ८ क. स्फूर्जितं ।

अत्र धनुःशब्द आरूढत्वावगतये ।

अन्यत्र तु,

ज्याबन्धनिःष्पन्दभुजेन यस्य विनिःश्वसद्वक्त्रपरम्परेण ।
कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमा प्रसादात् ॥ २९० ॥

इत्यत्र केवलो ज्याशब्दः ।

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥ २९१ ॥

अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधनाय मुक्ताशब्दः ।

सौन्दर्यसंपत्तारुण्यं यस्यास्ते ते च विभ्रमाः ।
षट्पदान्पुष्पमालेव कान्नाऽऽकर्षति सा सखे ॥ २९२ ॥

अत्रोत्कृष्टपुष्पविषये पुष्पशब्दः । निरुपपदो हि मालाशब्दः पुष्पस्र-

---

अत्र धनुःशब्दो ज्याया आरूढत्वप्रतिपादनाय । तच्च किणस्य प्रहारकृतत्वप्रतिपत्तये । यत्र स्वारूढत्वं तत्प्रतीतिप्रयोजनं वा नास्ति तत्र न धनुःशब्दोपादानमपि यथा—ज्याबन्ध० ।

इत्यत्र ।

**प्राणेश्वर०** ।

अत्र हारशब्दस्य मुक्तासंदर्भशक्तत्वेऽपि न मुक्ताशब्दवैयर्थ्यम् । अन्यरत्नामिश्रत्वप्रतिपादनेनोत्प्रेक्षायामुपयोगात् ।

**सौन्दर्य०** ।

मालाशब्दो यद्यपि पुष्पस्यैव स्राजि शक्तस्तथाऽपि न पुष्पपदमपुष्टार्थम् । लक्षणयोत्कृष्ट-

---

पश्चादभिमुखा येऽरातयस्तैः कराले भीषणे । विदीर्णा विक्षता अभिमुखा येऽरातय इति वा । किणो व्रणः । यत्र स्वारूढत्वप्रतीतिप्रयोजनं नास्तीति पाठः । **ज्याबन्धेति** । ( रघुवंशे षष्ठसर्गे पद्यमिदम् ) । ज्याबन्धेन निष्पन्दा निष्क्रिया भुजा यस्य तेनेत्यर्थः । यस्य कार्तवीर्यस्य कारागृह इति संबन्धः । ( उपजातिश्छन्दः ) । **प्राणेति** । विभ्रमा विलासाः । प्राणेश्वरपरिष्वङ्गे ये विलासा नायिकायास्तेषां प्रतिपत्तयो ज्ञानानि । लसता शोभमानेन । **उत्प्रेक्षायामुपयोगादिति** । 'हारो मुक्तावली' इति विश्वकोशात् , 'मुक्ता ग्रैवेयकं हारः ' इति कोशाच्च हारत्वेनैव मुक्तासंबन्धावगतौ पुनर्मुक्तापदं नियमायेत्यन्यव्यावृत्तिरिति भावः । एवं मरकतशिलेत्यादौ शिलापदं विस्तीर्णत्वप्रतिपादनायेति बोध्यम् । **सौन्दर्येति** । यस्याः सौन्दर्यातिशयस्तारुण्यं चास्तीति शेषः । तेऽनुभवैकवेद्या विलासाः ।सा पुष्पमाला षट्पदा-

---

१ क. ग. इति के° । २ क. कं । ३ क. 'ष्पधिये । ४ 'स्वारूढत्वप्रतीति° इत्युद्द्योतसंमतः पाठः ।

जमेवाभिधत्ते ।

**स्थितेष्वेतत्समर्थनम् ॥ ५८ ॥**

**न खलु कर्णावतंसादिवज्जघनकाञ्चीत्यादि क्रियते ।**

**जगाद मधुरां वाचं विशदाक्षरशालिनीम् ॥ २९३ ॥**

**—इत्यादौ क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतिसिद्धौ, "गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं क्वचित्प्रयोगः कार्यः"—इति न युक्तम्[1] । युक्तत्वे वा,**

**चरणत्रपरित्राणरहिताभ्यामपि[2] द्रुतम् ।**

**पादाभ्यां दूरमध्वानं व्रजन्नेप[3] न खिद्यते ॥ २९४ ॥**

**—इत्युदाहार्यम् ।**

---

स्वप्रतिपादकत्वात् । अयमेव करिबृंहितन्यायः । ननु मालाशब्दस्य पुष्पस्रङ्मात्रशक्तत्वमित्यसम्यक् । रत्नमालेत्यादिप्रयोगदर्शनादिति चेत्, न । निरुपपदस्य तस्य तथात्वात् । **स्थितेष्वे० ।**

महाकविप्रयुक्तेष्वेवं समाधानम् । न तु स्वेच्छया कर्णावतंसादिपदवज्जघनकाञ्च्यादि करिकलभवदुष्ट्रकरभादि वा प्रयोक्तव्यम् । वामनस्तु—"अप्रुष्टस्यापि तत्रोपादानमुचितं यत्र तद्विशिष्यते । अन्यथा कुतस्तद्विशेषणान्वयः स्यात् । यथा—

'जगाद विशदां वाचं मधुराक्षरशालिनीम्' ।

इत्यादौ । अत्र हि वाचामित्यनुपादाने मधुरत्वादितद्विशेषणयोगः क्व प्रत्येतव्यः" इत्याह । तन्न युक्तमुदाहृतम् । विशदं जगादेत्यादिक्रियाविशेषणत्वेनैव समीहितसिद्धेः । तस्माद्यत्र न क्रियाविशेषणत्वं योग्यं तदुदाहरणीयम् । यथा—**चरण० ।**

अत्र हि चरणत्रेत्यादि पदविशेषणं न क्रियाविशेषणार्हमिति प्रकाशकृत् । तदपि न युक्तमुदाहृतमिति वयम् । कर्तृविशेषणत्वेनैवोपपत्तेः । तस्मान्मदीयं पद्यमुदाहरणीयम् । यथा—

'निर्वातपद्मोदरसोदराभ्यां विलोचनाभ्यामवलोकयन्ती ।

न केवलं यूनि मनोभवेऽपि व्यनक्ति कंचित्तपसः प्रभावम्' ॥

अत्र निर्वातपद्मोदरसोदराक्षीत्येवं कर्तृविशेषणत्वेनोपपत्तिरिति चेत्सत्यम् । परं त्वक्षिप-

---

निव कान्ताऽऽकर्षतीत्यन्वयः । विशदत्वादितद्विशेषणेति पाठः । **चरणेति ।** चरणत्रमुपानत्तेन वयत्परित्राणं तद्रहिताभ्याम् । स्फुटं सवेगम् । **निर्वातेति ।** निर्वातं वातसंबन्धरहितं यत्पद्मं तस्योदरं मध्यस्तत्सोदरे तत्सदृशे ताभ्याम् । अनेन निमेषराहित्यं सूच्यते । विलोचनाभ्यामवलोकयन्ती काचित्स्त्री केवलं यूनि यून्येव कंचिदनिर्वचनीयं तपसः प्रभावं सामर्थ्यं व्यनक्तीति

---

१ क. ग. 'क्तमुक्तम् । २ क. 'पि स्फुटम् । ३ क. 'जन्नपि न । ४ विशदत्वादि' इत्युद्द्योतसंमतः पाठः । ५ क. त्र च° ।

ख्यातेऽर्थे निर्हेतोरदुष्टता

यथा,

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥ २९५ ॥

अत्र रात्रौ पद्मस्य संकोचः, दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति 'न भुङ्क्ते'—इति हेतुं नापेक्षते ।

अनुकरणे तु सर्वेषाम् ।

सर्वेषां श्रुतिकटुप्रभृतीनां दोषाणाम् । यथा,

मृगचक्षुषमद्राक्षमित्यादि कथयत्ययम् ।
पश्यैष च गवित्याह सुत्रामाणं यजेति च ॥ २९६ ॥

---

दोपादानमपेक्ष्यैव । किं च सोदरत्वमात्रं नान्यविशेषणीभवितुमर्हति यथा मधुरस्वचरणत्रपरित्राणरहितत्वे ।

ख्याते० ।

यथा—चन्द्रं० ।

रात्रौ चन्द्रगतायाः पद्मगुणानुपभोगे पद्मसंकोचो हेतुः । दिवा च पद्माश्रितायाश्चन्द्रगुणानुपभोगे चन्द्रस्य निष्प्रभत्वं कारणम् । ते चात्र प्रसिद्धेरेवावगम्येते इति न तदुपादानापेक्षेत्यदोषः ।

अथ पदादिदोषाणामप्यदोषत्वं क्वचिदित्याह—अनुकरणे० ।

प्रतिपादितदूषकताबीजाभावात्तत्र वैरस्याभावस्याऽऽनुभविकत्वेन तदतिरिक्तस्थल एव दोषत्वव्यवस्थितेर्वा । यथा—मृग० ।

---

न, किं तु मनोभवे मदनेऽपीत्यर्थः । स्त्रीकर्तृकावलोकनरूपफलेन यूना पूर्वं तप आचरितम् । मदनस्यापीष्टार्थप्राप्त्या तेनापि तप आचरितमिति भावः । ( उपजातिश्छन्दः ) । अपेक्षामेव व्युत्पादयति—किं च सोदरत्वेति । चन्द्रमिति । ( कुमारसंभवे प्रथमसर्गे पद्यमिदम् ) । पद्मगुणान्सौरभादीन्भुङ्क्तेऽनुभवति । अभिख्या परमा शोभा । लोला चञ्चला । चञ्चलाया अपि तादृशप्रीतिदानेनोमामुखस्योत्कर्षः । (उपजातिश्छन्दः) । न तदुपादानापेक्षेति । न चाशब्दत्वम् । प्रसिद्धित एव झटिति तत्पदाध्याहारात् । एवं चेदृशे विषये हेतूपादानेऽपुष्टत्वं स्यादिति बोध्यम् । व्यवहितदोषानुवृत्तय आह—सर्वेषामिति । ननु श्रुतिकटुप्रतिकूलवर्णादीनां पुरोवाद इवानुवादेऽपि स्वरूपानपायात्कथं न दोषतेति चेत् । न । तस्य शब्दस्यान्यथा वक्तुमशक्यत्वेन श्रोतुर्वैमुख्याद्यभावेनादोषत्वादित्याहुः । ( मृगेति ।

---

१ क. ग. °म् । श्रु° । २ क. °णां न दुष्टत्वम् । य° । ३ ग. °द्राक्षीदित्या° । ४ क. चातिप्र° ।

**वक्त्राद्यौचित्यवशाद्दोषोऽपि गुणः क्वचित्क्वचिन्नोभौ ॥ ५९ ॥**

**वक्तृ-प्रतिपाद्य-व्यङ्ग्य-वाच्य-प्रकरणादीनां महिम्ना दोषोऽपि क्वचिद्गुणः, क्वचिन्न दोषो न गुणः । तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये च, रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः ।**

**क्रमेणोदाहरणानि—**

**दीधीङ्वेवीङ्समः कश्चिद्गुणवृद्ध्योरभाजनम् ।**
**क्विप्प्रत्ययनिभः कश्चिद्यत्र संनिहिते न ते ॥ २९७ ॥**
**यदा त्वामहमद्राक्षं पदविद्याविशारदम् ।**
**उपाध्यायं तदाऽस्मार्षं समस्प्राक्षं च संमदम् ॥ २९८ ॥**

---

अत्राद्राक्षंगोसुत्रामपदानि श्रुतिकटुच्युतसंस्कृत्यप्रयुक्तानि । अनुकरणे चैषामदोषत्व-बीजं प्रतिपादितम् । तद्वदन्यत्राप्यूह्यम् ।

वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादिमहिम्ना दोषस्यापि क्वचिद्दोषत्वाभावमात्रं क्वचित्तु भाक्तो गुणव्यवहारोऽपीत्याह—**वक्त्रा०** ।

नोभौ न गुणो न दोषश्च । तत्र स्ववैयाकरणत्वं प्रतिपिपादयिषौ वक्तरि कष्टत्वं गुणः । प्रतिपाद्यस्य ततोऽतिशयेन प्रतीतेः । दोषत्वाभावश्चोपपादित एव । यथा—**दीधीङ्०** ।

वैयाकरणादौ प्रतिपाद्ये च तस्य गुणत्वम् । तद्भावनाभावितस्य तच्छ्रवणेन प्रीत्युपच-यात् । यथा—**यदा०** ।

---

मृगचक्षुषं मृगनयनाम् । सुत्रामाणमिन्द्रम् ) । **दोषत्वाभावमात्रमिति** । रसोत्कर्षा-पकर्षकारित्वाभावादित्यर्थः । **भाक्त इति** । प्रकृतरसोत्कर्षकत्वादिति भावः । **कष्टत्वम्** । अर्थस्य दुरूहत्वम्, शब्दस्य श्रुतिकटुत्वं च । **दीधीङिति** । ( अस्मिन्ग्रामे कीदृशा लोका इति प्रश्नस्योत्तरमिदम् ) । कश्चिन्मन्दभाग्यः । पक्षे गुणा धैर्यादयः । वृद्धिः समृद्धिः पक्षे गुणोऽदेङौ वृद्धिरादैच् । दीधीवेवीटाम् ( पा० सू० १ । १ । ६ ) इति निषेधात् । अभाजनमनाश्रयः । कश्चिद्दुर्जनः । क्विप्प्रत्ययनिभः सर्वतः प्राप्तलोपः । यत्र संनिहिते सति न ते गुणवृद्धी इत्यन्वयः । क्विपि परे क्ङिति च ( पा० सू० १ । १ । ५ ) इति निषेधादिति भावः । अत्र विलम्बेनार्थप्रत्ययेऽपि वक्तुर्व्याकरणव्युत्पत्त्यतिशय-प्रतीतेर्गुणत्वमिति भावः । **यदा त्वामिति** । ( पदविद्या व्याकरणं तत्र विशारदं निपुणम् । अस्मार्षं सादृश्यात्स्मारितवान् । समस्प्राक्षं संस्पृष्टवान् । स्मृधातोः संपूर्वात्स्पृशधातोश्च

---

१ ग. °ङ्ग्यप्र° । २ क. ग. °द्ये वा रौ° । ३ ग. °क्षं शब्दवि° । ४ क. ततोऽस्मा° । ५ क. °त्र वैयाकरणे प्र° ।

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लस-
द्व्यालोलस्तनभाररभैरववपुर्दर्पोद्धुतं धावति ॥ २९९ ॥

वाच्यवशाद्यथा,

मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः
सारङ्गा महिषा मदं व्रजत किं शून्येषु शूरा न के ।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुरः
सिन्धुध्वानिनि हुंकृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥ ३०० ॥

अत्र सिंहे वाच्ये परुषाः शब्दाः । प्रकरणवशाद्यथा,

---

ओजस्विनि रौद्रादिरसे व्यङ्ग्ये च तस्य गुणत्वम् । कठिनशब्दस्य तद्व्यञ्जकत्वात् । तत्र बीभत्से यथा—अन्त्र० ।

ओजस्विनि सिंहादौ वाच्येऽपि तस्य गुणत्वम् । यतो मसृणशब्दप्रयोगेणोर्जितोऽप्यर्थो मृदुवद्भासते । ऊर्जितशब्दप्रयोगे त्वौर्जित्येन । उदाहरणम्—मातङ्गाः० ।

अत्र सिंहो वाच्यः । प्रकरणविशेषेण च गुणत्वम् । वक्तुर्वैयाकरणत्वाद्यभावेऽपि

---

भूते लुङ् ) । अत्र श्रुतिकटुनानावर्णैर्वैयाकरणसामाजिकस्य वक्तृव्युत्पत्तिज्ञानेन चमत्कार इति बोध्यम् । तद्व्यञ्जकत्वादिति । तद्गतौजोगुणव्यञ्जनद्वारेति भावः । अन्त्रेति । ( वीरचरिते प्रथमाङ्के लक्ष्मणकृतं ) रामं प्रति क्रुद्धायास्ताटकाया वर्णनमिदम् । अन्त्रेषु प्रोतानि ग्रथितानि बृहन्ति यानि कपालानि शिरोऽस्थीनि नलकानि जङ्घास्थीनि च तान्येव क्रूरं यथा तथा क्वणन्ति कङ्कणानि तद्वद्बहुलचञ्चलबहुभूषणरवैः करणैरम्बरं घोषयन्ती प्रतिध्वनिव्याप्तं कुर्वती पूर्वं पीतं पश्चाच्छर्दितं वान्तम् । तेन घृणातिशयः । तादृग्यद्रक्तं तदेव कर्दमस्तेन घनो व्याप्तो यः प्राग्भार उत्तरकायस्तत्र घोरं यथा स्यात्तथोल्लसन्तौ व्यालोलौ चञ्चलौ यौ स्तनौ तयोर्भारेण भङ्गुरं वपुर्यस्याः सा दर्पेणोद्धतं यथा तथा धावतीत्यन्वयः । प्राग्भारेति पाठे प्राग्भारो निरन्तरक्षरणं तेन घोराविति स्तनविशेषणम् । ( शार्दूलविक्रीडितं छन्दः ) । मातङ्गा इति । वल्गितं गतिविशेषः । बृंहितैरिति पाठे करिगर्जितमित्यर्थः ।

'आडम्बरः समारम्भे फेरुगर्जितसूर्ययोः' ।

इति विश्वः । मदं गर्वं किं व्रजत । कोपस्य य आटोप उद्रेकस्तेन समुद्भटा उत्थिताः सटानां ग्रीवारोम्णां कोटयोऽग्रभागा यस्य । समुद्रशब्दसदृशगम्भीरशब्दं कुर्वन्ति । द्वितीयगर्जितपदं सफलतत्परम् । ( शार्दूलविक्रीडितं छन्दः ) । अत्र सिंह इति । अत्र सिंह

---

१ क. °रभङ्गुरवपुर्बन्धोद्धतं । २ क. व्रजथ । ३ क. °द्भवोत्क° । ४ ग. °रेः शनैः सिं° । ५ क. °षे च ।

रक्ताशोक कृशोदरी क्व नु गता त्यक्त्वाऽनुरक्तं जनं
नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः ।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥ ३०१ ॥

अत्र शिरोधूननेन कुपितस्य वचसि ।

क्वचिन्नीरसे न गुणो न दोषः । यथा,

शीर्णघ्राणाङ्घ्रिपाणीन्व्रणिभिरपघनैर्घर्घराव्यक्तघोषा-
न्दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥ ३०२ ॥

---

कोपादिप्रस्तावे च तदनुगुणत्वात् । यथा—रक्ता० ।

अत्र मिथ्याशिरोवधूननेन कोपप्रकरणे । न चास्य व्यङ्ग्य एव प्रवेशः कोपस्य व्यङ्ग्यत्वादिति वाच्यम् । वक्त्राद्यतिरिक्तस्थानीयस्य व्यङ्ग्यस्य व्यङ्ग्यपदोपादानाद्गोबलीवर्दन्यायात् । दोषत्वाभावश्चैतेषु गुणत्वप्राप्तेः स्फुट एव । क्वचित्पुनर्न दोषत्वं न वा गुणत्वं यत्र न रसो न वा प्रतिपाद्याद्यौचित्यम् । अथ नीरसे यदि विघ्नास्याभावादस्यादोषत्वं तदाऽन्येषामपि स्यात् । तथा च नीरसदोषोदाहरणं विरुध्येतेति चेत्, न । तस्योपलक्षणत्वाद्दोषपरिचयमात्रार्थत्वाद्वा । यथा—शीर्ण० ।

---

ओजस्विनि वाच्ये तन्निष्ठौजोगुणप्रकाशका दीर्घसमासविकटवर्णा अनुगुणा इति भावः । **रक्तेति** । ( विक्रमोर्वशीये चतुर्थाङ्के ) विरहिणः पुरूरवस उक्तिः । रक्तस्तद्वर्णः । अशोको वृक्षविशेषोऽनुरक्तशोकापनोदकश्च । नो दृष्टेति । सूचयितुमिति शेषः । वातावधूतस्यैव शिरसः क्रोधाद्वातव्याधिकम्पितत्वेनोक्तिः । मिथ्यात्वं समर्थयति—उत्कण्ठेति । उत्कण्ठाघटमानास्तद्विशिष्टास्तया मिलिता वा ये भ्रमरास्तेषां यः संघट्टो गाढमिलनं यत्र स चासावर्थात्तैरेव दष्टच्छद इवेति विग्रहः । दष्टो मकरन्दाप्राप्त्या । अयमदृष्टपूर्वः । (शार्दूलविक्रीडितं छन्दः ) । **अत्र मिथ्येति** । अत्र प्रकरणगम्यविप्रलम्भानौचित्येऽपि प्रस्तुतशिरोधूननप्रतिपादितदर्शनापलापप्रादुर्भूतक्रोधप्रकर्षकत्वाद्दीर्घसमासाविकटवर्णयोर्गुणत्वम् । तेनाङ्गस्य क्रोधस्य प्रकर्षादङ्गिनो विप्रलम्भस्यापि प्रकर्ष इति बोध्यम् । **व्यङ्ग्य एव** । व्यङ्ग्यौचित्य एव । **वक्त्राद्यतिरिक्तेति** । वक्त्राद्यौचित्यव्यतिरेकेत्यर्थः । **नीरसे** । शृङ्गारादिरसशून्ये । न तु निरास्वादे । तत्र काव्यताविरहात् । **उपलक्षणत्वादिति** । दोषपरिचयमात्रार्थत्वादिति भावः । **शीर्णेति** । मयूरकृत ( सूर्यशतके ) सूर्यस्तुतिः । तस्य

---

१ ग. °ताभिभूतं । २ क. °रोविधू° । ३ °णीन्घृणि° । ४ ग. °त्येष उ° । ५ क. °स्य वातद्विगु° । ६ क. °त्वं य° । ७ वियाख्याभावात् इति प्रभासंमतः पाठः । ८ दोषपरिचयमात्रार्थत्वाद्वा इति पाठो नोद्योतसंमतः ।

अप्रयुक्तनिहतार्थौ श्लेषादावदुष्टौ । यथा,

येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।
यस्याऽऽहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः ॥ ३०३ ॥

---

नीरसत्वं चात्रानुप्रासमात्रमग्नतया रसे तात्पर्याभावात् । न चानुप्रासास्पदैकतयैव गुणत्वम् । 'सोऽध्यैष्ट वेदान्—' इत्यादावपि तदापत्तेरिति । न च परुषवर्णत्वमनुप्रासे प्रयोजकम् । येन तद्घटकतयाऽदोषत्वं स्यात् ।

अप्रयुक्तनिहतार्थौ श्लेषयमकादावदुष्टाविति प्रतिपादितं प्राक् । यदि च प्रयोजनानुसंधानव्यग्रता दुष्टिबीजं तथाऽप्यत्र न दोषता । तदलंकारस्त्वस्य प्रयोजनस्य प्रतीतेर्व्यग्रताभावात् । यथा—येन० ।

---

धर्मांशोः सूर्यस्य घृणयः किरणा वः शीघ्रमंहो दुरितं तद्विघातं कुर्वन्त्वित्यन्वयः । य एकोऽसहायोऽघौघैः पापसमूहैर्विदीर्णनासाचरणहस्तान् । व्रणयुक्तैरपघनैरवयवैरुपलक्षितान् । घृणिभिरिति पाठे जुगुप्साविषयैरित्यर्थः । लक्षणे तृतीया । दुःखादूघर्घरो बलवद्वारिध्वनिस्तद्वदव्यक्तो वर्णप्रतिभारहितो घोषो येषां तान् । दीर्घमाघ्रातं श्वासो येषां तान् । अघौघैरिति सर्वत्रान्वयि । उल्लाघयन्व्याधिनिर्मुक्तान्कुर्वन्घटयति नवी करोति । कीदृशस्य । अन्तः, हृदये द्विगुणा घनाऽतिशयिता या घृणा कृपा तन्निघ्ना तदायत्ता विघ्नरहिता वृत्तिर्यस्य तस्य । कीदृशाः सिद्धसमूहैर्दत्ता अर्घा येषाम् । 'घर्घरो बलवद्वारिध्वान' इति विश्वः । 'उल्लाघो निर्गतो गदात्' इत्यमरः । ( स्रग्धरा छन्दः ) । रस इति । सूर्यस्य दयावीरत्वेन दयावीररस इत्यर्थः । न च कविनिष्ठसूर्यविषयकभावस्यौजस्व्यालम्बनकत्वेनौजस्वितया तद्गतौजोगुणव्यञ्जकत्वेन गुणत्वम् । भावेषु गुणानङ्गीकारादिति संप्रदायः । **यदि च प्रयोजनेति** । पदार्थोपस्थितिविलम्ब एव दुष्टिबीजमित्यर्थस्यापि प्राङ्निरूपणादिति भावः । तत्पक्षेऽपि तदलंकारविषये प्रतीत्यविलम्बस्यानुद्देश्यत्वाददुष्टत्वम् । **येनेति** । अत्र विष्णुपक्षे स माधवस्त्वामव्याद्रक्षतु । मा लक्ष्मीस्तस्या धवः पतिः, येनानः शकटं ध्वस्तं पातितम् । अभवेन, अजेन, न भवः संसारो यस्मात्तादृशेन वा । येन बलिजयनशीलः कायः पुराऽमृतहरणप्रस्तावे स्त्रीरूपतां प्रापितः । योऽगं गोवर्धनं गां पृथ्वीं च दधार । कृष्णवराहावताराभ्यां योऽन्धकानां यादवानां क्षयं गृहं मुशलाहरणेन नाशं वा कृतवान् । यो मयूरपक्षप्रियः

---

१ क. °षादौ न द° । २ क. यो गङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः । ३ क. सोऽव्यादिष्टभुजङ्गहारवलयस्त्वां ।

**अत्र माधवपक्षे शशिमदन्धकक्षयशब्दावप्रयुक्तनिहतार्थौ ।**

**अश्लीलं क्वचिद्गुणः । यथा । सुरतारम्भगोष्ठ्याम्,**

**"ताम्बूलदानविधिना विसृजेद्वयस्याम् । द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु ॥"—इति कामशास्त्रस्थितौ,**

**करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते ।**
**उपसर्पन्ध्वजः पुंसः साधनान्तर्विराजते ॥ ३०४ ॥**

**शमकथासु,**

---

अत्र माधवपक्षे राहौ शशिमत्पदमप्रयुक्तम् । क्षयपदं गृहे निहतार्थम् । न च श्लेषरूपालंकारप्रयोजकतया गुणत्वमपि शङ्कनीयम् । तत्त्वस्य तत्राप्रयोजकत्वात् । एवमन्येषु प्रतीतिविलम्बवस्तु द्रष्टव्यम् ।

अश्लीलत्वं क्वचिद्गुणः । यथा सुरतारम्भगोष्ठ्यां 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रस्थितौ दोषत्वाभावे व्युत्पत्तिप्रकटनात् । यथा—**करिहस्तेन०** ।

अत्र संबाधादिपदानि । शमकथास्वप्यश्लीलं गुणः । तत्पोषकत्वात् । यथा—

---

शशिमद्राहुस्तस्य शिरोहर इति यस्य स्तुत्यं नामामरा आहुः । य इष्टभुजंगहा भुजंगान् हन्त्यसौ भुजंगहा गरुडः स इष्टो यस्य । दृप्तभुजंगहेति पाठे उद्वृत्तकालियभुजंगहन्ता । रवे शब्दे ब्रह्मणि लयो यस्य । सर्वदः सर्वदाता । शिवपक्ष उमाधवः सर्वदाऽव्यात् । येन ध्वस्तमनोभवेन नाशितकंदर्पेण बलिजितो नारायणस्य कायः पुरा त्रिपुरनामकदैत्यवधकालेऽस्त्रीकृतः शरीकृतः । यो गङ्गां भागीरथीं दधार । उत्तमाङ्गेनेति शेषः । योऽन्धकनामकदैत्यस्य नाशकर्ता । इष्टानि भुजङ्गसंबन्धिवलयानि यस्य । बर्ही पत्रं वाहनं यस्य स कार्तिकेयः प्रियो यस्य । यस्य शिरः शशिमच्चन्द्रयुतम् । यस्य हर इति स्तुत्यं नामामरा आहुः । ( शार्दूलविक्रीडितं छन्दः ) । **पक्ष इति** । माधवपक्ष इत्यर्थः । **तत्त्वस्येति** । अप्रयुक्तत्वनिहतार्थत्वस्येत्यर्थः । एतेन निरर्थकस्यानुप्राससंपादकत्वेन क्वचिद्गुणत्वमित्यपास्तम् । नैरर्थक्यस्य तत्राप्रयोजकत्वात्सार्थकेनापि तन्निर्वाहादिति बोध्यम् । **द्व्यर्थैः** । अनेकार्थैः । **पिशुनयेत्** । सूचयेत् । दोषत्वाभाव इति पाठः । गुणत्वे हेतुमाह—**व्युत्पत्तीति** । उदासीनवञ्चनया स्वार्थसंपत्त्या च रसोत्कर्षकत्वाद्गुणत्वं बोध्यम् । **करीति** । करिहस्तो नाम

'तर्जन्यनामिके युक्ते मध्यमा पृष्ठतस्तयोः ।
करिहस्त इति प्रोक्तः कामशास्त्रविशारदैः' ॥

इति लक्षणलक्षितः कठिनयोनिशैथिल्यापादको हस्तिशुण्डा च । तेन संबाधे जनाकीर्णे योनिसंकोचे च । अन्तः प्रविश्य विलोडिते । क्षोदिते सावकाशे च कृते । ध्वजः पुरुषलिङ्गं केतुश्च । साधनं स्मरमन्दिरं सैन्यं च । **शमकथास्वपीति** ।

---

१ क. ग. °यकरश° । २ 'अत्र पक्षे' इत्युद्द्योतसंमतः पाठः ।

उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥ ३०५ ॥
निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥ ३०६ ॥

अत्र भाव्यमङ्गलसूचकम् ।

---

उत्तानो० ।

सूचनीयविशेषे यथा— निर्वाण० ।

अत्र प्रशमादिति स्वस्था इति मरणार्थकत्वादश्लीले अपि भाव्यमङ्गलसूचनाद्गुणः ।

---

वैराग्यहेतुघृणोत्पादनादिति भावः । उत्तानेति । उत्तानो वैपरीत्येन स्थित उच्छूनः शोफवांस्तस्य विपाटितं यदुदरं तत्संनिभे । क्लेदिनि स्रवन्मन्मथजले । स्त्रीव्रणे वराङ्गरूपे । निर्वाणेति । वेणीसंवरणे (प्रथमाङ्के) सूत्रधारोक्तिरियम् । शत्रूणां नाशाद्युद्धनिवृत्तेर्वा शान्तवैराग्नयः पाण्डुतनयाः श्रीकृष्णेन सह नन्दन्तु । रक्ता अनुरक्ता प्रसाधिता प्रकर्षेण साधिता भूर्यैः, रक्तं रुधिरं तेन प्रसाधिताऽलंकृता भूर्यैस्ते क्षतविग्रहाः खण्डितशरीराश्च स्वस्थाः स्वीयप्रकृतौ तिष्ठन्तीति सुखिनः पक्षे स्वर्गस्थाश्च । विसर्गलोपान्न वैरूप्यम् । (वसन्ततिलका छन्दः । ) भाव्यमङ्गलेति । दुर्योधनामङ्गलस्य नायकमङ्गलत्वेन गुणत्वं बोध्यम् । एवम् ।

"अङ्गीकृता क्वचिद्विज्ञैरश्लीलस्याप्यदोषता ।
प्रसिद्धं पादशब्दादौ क्वचिल्लाक्षणिके तथा" ॥

आदिना शिवलिङ्गादि । द्वितीयं यथा—

"अविदितगुणाऽपि सत्कविभणितिः कर्णेषु वमति मधुधाराम् ।"

इत्यादौ । असाध्वसमर्थानुचितार्थावाचकनिरर्थकविरुद्धमतिकृन्नेयार्थाविमृष्टविधेयांशास्तु नित्या एवेति बोध्यम् । ननु निरर्थकक्लिष्टविरुद्धमतिकृतोऽनित्याः ।

"दधार हृदये देवं गौरी हिमकराङ्कितम् ।
अत्र श्लेषोदयान्नैव त्याज्यं हीति निरर्थकम् ॥"

इति जयदेवोक्तेः । क्लिष्टं मत्तोक्त्यादौ गुण इति प्रदीपोक्तेश्च । एवं विरुद्धमतिकृतोऽपीति चेत्, न । वृत्तनिर्वाहमात्रप्रयोजनकस्य निरर्थकस्यात्राऽऽत्मलाभाभावात् । तस्मान्निरर्थकं नित्यदोष एव । प्रकृतप्रतीतिन्यक्कारकप्रतीतिजनकं हि विरुद्धमतिकृत् । न्यक्कारकप्रतीतेर्विवक्षितत्वे तु तस्याऽऽत्मलाभ एव नेति तस्यापि नित्यत्वम् । अयमेव तत्र-

संदिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थप्रतीतिकृत्त्वेन व्याजस्तुतिपर्यवसायित्वे गुणः। यथा,

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम्॥ ३०७॥

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे सत्यप्रतीतं गुणः। यथा,

आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्ता-
त्तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम्॥ ३०८॥

---

संदिग्धमपि वाच्यमहिम्ना नियतार्थप्रतीतिकारित्वाद्व्याजस्तुतिपर्यवसायितया गुणः। यथा—**पृथु०**।

अत्र पृथुकार्तस्वरादिशब्दाः पृथुकानामार्तस्वरः पृथु बहुलं कार्तस्वरं चेति संदिग्धाः।

अप्रतीतोऽपि यत्र प्रतिपाद्यप्रतिपादकयोर्द्वयोरपि तज्ज्ञता तत्र गुणः। अर्थाप्रतीतिरूपबीजाभावेनादोषतायां व्युत्पत्तिप्रकटकत्वात्। यथा—**आत्मा०**।

---

स्यप्रदीपाशयः। अनित्यमेवेदमित्यन्ये। क्लिष्टं त्वनित्यमेवेति दिक्। **नियतार्थेति**। प्रकृतार्थेत्यर्थः। प्रतीतिर्निश्चयस्तत्करणे हेतुर्वाच्यमहिम्नेति। वाच्यो वर्णनीयो राजादिः। तावता दोषत्वाभावः। गुणत्वे हेतुमाह—**व्याजेति**। संपत्तिबाहुल्येन राजोत्कर्षप्रतीतेर्व्याजस्तुतेर्भावोत्कर्षतया गुणत्वात्। **पृथ्विति**। (राजानं प्रति कवेरुक्तिः)। राजगृहपक्षे पृथूनि विपुलानि कार्तस्वराणां सुवर्णानां पात्राणि यत्र तत्। भूषिता मण्डिता निःशेषाः परिजना यत्र। विलसन्तीभिः करेणुभिः करिणीभिर्गहनं व्याप्तम्। कविपक्षे पृथुकानां बालानां क्षुद्बाधाकृतार्तस्वरपात्रम्। भुवि उषिता निःशेषाः परिजना यत्र। बिले छिद्रे सीदन्ति बिलसत्का मूषकास्तेषां रेणुभिर्गहनम्। वबयोरभेदात्। (आर्या छन्दः)। **प्रतिपाद्यः**। शब्दप्रयोगोद्देश्यः। **प्रतिपादकः**। वक्ता। **तज्ज्ञता**। तच्छास्त्रपटुत्वम्। **आत्मेति**। वेणीसंहारे प्रथमाङ्के भीमस्य कृष्णबन्धनोद्यतं दुर्योधनं श्रुत्वा, किं दुर्योधनः कृष्णस्वरूपं न जानातीति पृच्छन्तं सहदेवं प्रतीयमुक्तिः। स्वात्मनि चिदानन्द आरमन्ते प्रत्याहृतेन्द्रियाः सन्तस्तदेकताना भवन्तीत्यात्मारामा योगिनः। आत्मैवाऽऽरामः क्रीडास्थानं येषामिति वा। निर्विकल्प आत्ममात्रावलम्बिनि भेदसंसर्गभानहीने समाधौ ध्याने ध्येयध्यात्रोरेकत्वापत्तिरूपे विहिता कृता रतिर्निरन्तरा प्रीतिर्यैस्ते। ज्ञानोद्रेक आत्मसाक्षात्कारदार्ढ्यं तेन विघटितस्तमोग्रन्थिर्मिथ्या-

---

१ क. °प्रतिपत्तिं कृत्वैव व्या°। २ ग. [°कृद्व्याज°। ३ ग. °योस्तत्त्वज्ञत्वे। ४ क. °तीतो गु°। ५ क. °नो सेक्रा°। ६ ग. °तमनोग्र°। ७ क. ध्यायन्ते।

स्वयं वा परामर्शे यथा,

षडधिकदशनाडीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः।
अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः॥ ३०९ ॥

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः। यथा,

फुल्लुक्करं कमलक्कूरणिहं वहन्ति
जे सिन्धुवारविडवा मह वल्लहा दे।
जे गालिदस्स महिसीदहिणो सरिच्छा
दे किं च मुद्धविअइल्लपसूणपुञ्जा॥ ३१० ॥

---

इयं भीमसेनस्य सहदेवं प्रत्युक्तिः। अत्र निर्विकल्पादिशब्दा आत्ममात्रावलम्बनत्वा-दावर्थे योगशास्त्रमात्रप्रसिद्धाः। स्वयं परामर्शेऽप्येवमेव गुणत्वम्। यथा—**षडधिक०**।

अधमप्रकृतीनां चेटविटविदूषकाणां हास्यरसप्रधानानां तथैवौचित्याद्दोषत्वाभावे हास्यपर्य-वसायित्वाद्ग्राम्यो गुणः। यथा—**फुल्लु०**।

---

ज्ञानजन्यः संस्कारो येषां ते। सत्त्वगुणास्तन्निष्ठास्तन्मात्रविश्रान्ताः। यं कमपि वागाद्यगो-चरं ध्यायन्तीत्यन्वयः। कथं त एव पश्यन्तीत्यत्र हेतुगर्भविशेषणम्—तमसां ज्योतिषां वा परस्तादिति। वर्तमानमिति शेषः। रजस्तमःस्पृष्टैरलभ्यमिति पर्यवसितम्। तमीश्वरमर्थं दुर्योधनो मोहान्धो वस्तुतत्त्वप्रतिपत्तिरहितः पुराणं प्रकृतेरपि प्राग्वर्तमानम्। अत्र प्रतिपाद्य-प्रतिपादकौ सहदेवभीमौ योगशास्त्रज्ञाविति प्रतीतिविलम्बाभावान्न दोषत्वम्। इतराज्ञातज्ञा-तृत्वेन स्वज्ञानद्वारा भावोत्कर्षकत्वाद्गुणत्वं च। अत्र प्रतिपाद्यप्रतिपादकाभ्यां सामाजिकव-क्तारौ च विवक्षितौ। एतेन सामाजिकस्य रसोद्बोधात्तयोस्तज्ज्ञत्वमकिंचित्करमित्यपास्तम्। ( मन्दाक्रान्ता छन्दः )। **षडिति**। मालतीमाधवे ( पञ्चमाङ्के ) कपालकुण्डलायाः स्वयं परामर्शोऽयम्। षडधिका दश षोडश इडा पिङ्गला सुषुम्नाऽपराजिता गान्धारी हस्ति-जिह्वा पूषा सुयशाः अलम्बुसा कुहूः शङ्खिनी तालुजिह्वा इभजिह्वा विजया कामदा अमृता बहुला इत्येवंरूपास्तासां यच्चक्रं मणिपूराख्यं हृदयस्थितं तन्मध्ये स्थित आत्मा स्वरूपं यस्य, हृदि विशिष्टं निहितं रूपं ज्योतिरादिरूप आकारो यस्य, ईदृशो यस्तद्विदां तथा-ज्ञानवतां सिद्धयोऽणिमादयस्तद्दाता, अविचलितं निश्चलं चित्तं येषां तैस्तादृशैः साधकैरुपास-कैर्मृग्यमाणोऽन्विष्यमाणः। शक्तिभिर्ज्ञानेच्छाकृतिभिः परिणद्धो व्याप्त उपहितो वा, शक्तिः पार्वती तस्या नाथः। यद्वा, तासामेव शक्तीनां नाथः। अत्रापि प्राग्वद्गुणत्वम्। ( मालिनी छन्दः )। **हास्यरसप्रधानानामिति**। उक्तिषु हास्यकरीष्विति शेषः। **फुल्लुक्केति**।

---

१ क. ग. °रसप्रधान°। २ क °मात्रवचनत्वा°।

अत्र कलमभक्तमहिषीदधिशब्दा ग्राम्या अपि विदूषकोक्तौ ।
[1]न्यूनपदं क्वचिद्गुणः । यथा,

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
[2]सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद माऽति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥ ३११ ॥

क्वचिन्न गुणो न दोषः । यथा,

---

अत्र कलममहिषीदधिशब्दाः ।

न्यूनपदमपि क्वचिद्गुणो यत्र न्यूनतयैवाभिमतविशेषसिद्धिः । यथा—गाढा० ।
अत्र मा मेत्यत्राऽऽयासय, माऽतीत्यत्र पीडयेति न्यूनम् । न च दोषः । प्रतीतेः

---

( कर्पूरमञ्जरीनामकसट्टके प्रथमजवनिकान्तरे विदूषकोक्तिरियम् ) ।

पुष्पोत्करं कमलकूरनिभं वहन्ति ये सिन्धुवारविटपा मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नः सदृक्षास्ते किं च मुग्धविचकिल्लप्रसूनपुञ्जाः ।

कलमाः शालिधान्यानि । कूरं भक्तं प्राकृते देशीयमेतत् । विटपाः शाखाः । शाल्यो-दनसादृश्यं प्रियत्वबीजम् । गलितस्य निर्जलीकृतस्य । विचकिल्लं मल्लिकाः । विरुद्धशालभ-ञ्जिकायां विदूषकोक्तिरियम् ।

" स पुनर्वेषभाषाभिर्हास्यकारी विदूषकः " ।

इति तल्लक्षणम् । वाक्यदोषे प्रतिकूलवर्णोपहतलुप्तविसर्गविसंन्धिहतवृत्तानां नित्यत्वान्न्यूनप-दानित्यत्वं दर्शयति—न्यूनपदमपीति । गाढेति । अमरुकवेरिदम् । ( अमरुशतके शृङ्गार-रसातिरेकसीमानं प्राप्तस्य कस्यचिन्नायकस्य सुरतान्ते रतिश्रमनिमग्नां प्रेयसीमनेकधोल्लिख्य वितर्कोऽयम् ) । गाढालिङ्गनेन वामनीकृतौ कुचौ यस्याः । अनेन पीनोच्चकुचत्वम् । सा चासौ प्रकटमुद्भूतो रोमोद्गमो यस्याः सा । प्रियसंबन्धेन सान्द्रो निबिडो य आनन्दस्तस्या-तिरेक आधिक्यं तेन विगलच्छ्रीमन्नितम्बाम्बरं यस्याः सा । हे मानद मानखण्डक सन्मा-नदायक च । मा मामायासयेति शेषः । माऽतिपीडयेति शेषः । अनुक्तिस्तु रसातिशय-व्यञ्जनाय । अलमिति अस्पष्टाक्षरोल्लेखिनी । सुप्तेत्यादिनायकवितर्काः । सुप्तस्यापि श्वासा-द्यनुभवादाह—मृता नु किम् । मृताऽपि बहिरनुभूयतेऽत आह—मनसीति । किं नु इत्यनु-षङ्गः । लीनत्वं जतुकाष्ठन्यायेन । तादृशोऽपि पृथक्कर्तुं शक्यते तत्राऽऽह—विलीनेति । क्षारे जले लवणवन्मिश्रितेत्यर्थः । ( शार्दूलविक्रीडितं छन्दः ) । प्रतीतेरिति । झटित्यध्याहा-

---

१ क. न्यूनं प० । २ क. सान्द्रानन्दर० ।

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः॥ ३१२॥

अत्र पिहितेत्यतोऽनन्तरं 'नैतद्यतः' इत्येतैर्न्यूनैः पदैर्विशेषबुद्धेरकरणान्न गुणः। उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधत इति न दोषः।

अधिकपदं क्वचिद्गुणः। यथा,

यद्वञ्चनाहितमतिर्बहु चाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति।
तत्साधवो न न विदन्ति विदन्ति किं तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति॥ ३१३॥

---

स्फुटत्वात्। प्रत्युत गुणः। रसातिरेकव्यञ्जकत्वात्। क्वचित्तु न दोषो नापि गुणः। यथा—**तिष्ठेत०**।

अत्र पिहितेत्यनन्तरं 'नैतद्युज्यते' इत्येतैर्न्यूनम्। एवं द्वितीयपादेऽपि। न चात्र गुणत्वम्। विशेषबुद्धेरनुत्पादनात्। नापि दोषत्वम्। तद्व्यतिरेकेणापि दीर्घं न सा कुप्यतीत्यादिप्रतीत्या तिष्ठेत्कोपवशादित्यादिप्रतीतीनां बाध्यत्वावगमात्।

अधिकपदं क्वचिद्गुणो यत्र विशेषप्रतिपत्तिः। यथा—**यद्वञ्चना०**।

---

रादिति भावः। **रसातिरेकेति**। हर्षसंमोहातिशयप्रत्यायकत्वेनेति भावः। एवं शोकादावपि गुणत्वं बोध्यम्। **तिष्ठेदिति**। (विक्रमोर्वशीये चतुर्थाङ्के) विरहिणः पुरूरवस उक्तिः। प्रभावोऽन्तर्धानकरणविद्या। विधानं तिरोधानम्। स्वर्गायेति कर्मणि चतुर्थी। 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' (पा०सू०२।३।१४) इति सूत्रात्। स्वर्गं गन्तुमुत्पतिता, ऊर्ध्वगमनानुकूलक्रियावती। विबुधा देवाः। अगोचरोऽविषयः। विधिः प्रकारः। अत्र दीर्घमित्याद्युत्तरवाक्यार्थावगमेनैव पूर्वस्य बाध्यत्वावगमान्न्यूनत्वं न दोषः। (शार्दूलविक्रीडितं छन्दः)। **विशेषबुद्धेरिति**। वितर्करूपभावस्य न्यूनपदेनाप्रकर्षादिति भावः। **बाध्यत्वावगमादिति**। भ्रमत्वेनावगमादित्यर्थः। वाक्यार्थबुद्धावविलम्बाच्चेत्यपि बोध्यम्। **यद्वञ्चनेति**। वञ्चनायां प्रतारणायां कृतबुद्धिः कार्योन्मुखो दुर्जनसमूहो बहुप्रियवाक्यगर्भं कृतकं मिथ्या यद्वचनं ब्रवीति तत्साधवः पण्डिता न विदन्तीति न, किं तु विदन्ति। तथाऽस्य खलस्य कृतकमपि स्नेहं वृथा कर्तुं न पारयन्तीत्यन्वयः। ( वसन्ततिलका छन्दः )। दोषत्वाभावमुपपादयति—

---

१ क. °नः स्नेहार्द्र°। २ क. °योर्जाते°। ३ क. °तद्युज्यत इ°। ४ क. ग. °धिकं प°।

अत्र विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम् ।

यथा वा,

वद वद जितः स शत्रुर्न हतो जेल्पंश्च तव तवास्मीति ।
चित्रं चित्रमरोदीद्धाहेति परं मृते पुत्रे ॥ ३१४ ॥

इत्येवमादौ हर्षभयादियुक्ते वक्तरि ।

कथितपदं क्वचिद्गुणो लाटानुप्रासे, अर्थान्तरसंक्रमितवाच्ये, विहितस्यानुवाद्यत्वे च । क्रमेणोदाहरणानि—

सितकरकररुचिरविभा विभाकराकार धरणिधर कीर्तिः ।
पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य ॥ ३१५ ॥

---

अत्र द्वितीयं विदन्तीति पदमन्ययोगव्यवच्छेदं प्रतिपादयन्नाधिकपदत्वेऽपि दुष्टम् । यदुक्तम्—

'विस्मये च विषादे च दैन्ये कोपेऽवधारणे ।
प्रसादे च तथा हर्षे वाक्यमेकं द्विरुच्यते ॥' इति ।

एवं हर्षशोकादियुक्ते वक्तरि गुणत्वम् । त्वरादिव्यक्त्या हर्षाद्यभिव्यञ्जकत्वात् । यथा—वद० ।

अत्र पादचतुष्टये क्रमेण हर्षभीतिविस्मयविषादयुक्ता वक्तारः । एवं पुनरुक्तेऽपि द्रष्टव्यम् ।

कथितपदस्यापि लाटानुप्रासे तन्निर्वाहकतयाऽर्थान्तरसंक्रमितवाच्ये विशेषव्यञ्जनाद्विहितस्य यत्रानुवाद्यत्वं तत्र च ताद्दशाभिमतनिर्वाहकतया गुणत्वम् । क्रमेणोदाहरणानि—सित० ।

अत्र लाटानुप्रासः ।

---

**अत्र द्वितीयं विदन्तीति** । नन्द्वययोगेन ज्ञानातिशये लब्धे पुनर्विदन्तीति पदमत एव जानन्तीति न त्वन्यं ज्ञापयन्तीति विशेषकत्वाद्गुण इति भावः । **वद वदेति** । स्पष्टम् । ( आर्या छन्दः ) **सितेति** । सितकरश्चन्द्रस्तस्य करवद्रुचिराऽऽह्लादिका विभा कान्तिर्यस्याः सेति कीर्तिविशेषणम् । विभाकरः सूर्यस्तत्सदृशधरणिधर राजन् । एतेन प्रतापित्वम् । पौरुषकमला पौरुषलक्ष्मीः सा कमला प्रसिद्धा लक्ष्मीश्च तवैव नान्यस्येत्यर्थः । पौरुषमेव कमलमधिष्ठानं यस्याः सा लक्ष्मीरित्यर्थ इति केचित् । तन्न । तथा सत्यर्थभेदेन लाटानुप्रासत्वानापत्त्या लाटानुप्रासे कथितपदगुणत्वोदाहरणासंगतेः । अन्वयमात्रभेद एव तस्य वक्ष्यमाणत्वात् । ( आर्या छन्दः )।

---

१ क. °ल्पं स्तु त° । २ क. °भयशोकादि° । ३ क. °थितं पदं गुणो लाटा° । ४ क. दैन्ये चाप्यवधारणे । प्रसादमे तथा । ५ क. यत्रानु° । ६ क. च सादृश्याभि° ।

ताला जाअन्ति गुणा जाला ते सहिअएहिं[२] घेप्पन्ति ।
रइकिरणाणुग्गहिआइँ होन्ति कमलाइँ कमलाइँ ॥ ३१६ ॥
जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः ॥ ३१७ ॥

पतत्प्रकर्षमपि क्वचिद्गुणः यथा, उदाहृते प्रागप्राप्तेत्यादौ ।

समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः, यत्र न विशेषणमात्रदा[३]नार्थं पुनर्ग्रहणम्, अपि तु वाक्यान्तरमेव क्रियते । यथा, अत्रैव प्रागप्राप्तेत्यादौ ।

---

ताला० ।

अत्र द्वितीयं कमलपदं सौरभादिमदर्थकतयाऽर्थान्तरसंक्रमितवाच्यम् । तथात्वे च कथितपदत्वमेव प्रयोजकम् । जितेन्द्रिय० ।

अत्र च कारणमालायां पूर्वोपात्तपदैनैव विनयादिकमुपादेयम् । पदान्तरेणानूद्यमानं तद्भिन्नतयेव प्रतिभाति । तथा च तादृशालंकारसंपादकतया गुणत्वम् । दोषत्वाभावश्च । ततो बीजाभावाच्च ।

पतत्प्रकर्षमपि क्वचिद्गुणः । यथा—'प्रागप्राप्त-' इत्यादौ । अत्र हि चतुर्थे पादे क्रोधाभावान्मसृणमेव पदं युक्तमिति दोषत्वाभावः । गुणत्वं तु विनयप्रकाशकतया ।

समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः । यथा—'प्रागप्राप्त-' इत्यादौ । अत्र

---

तालेति ।

'तदा जायन्ते गणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥'

इति संस्कृतम् । ( जघनविपुला छन्दः ) । अत्रेति । अत्रानुप्रासमात्रं निमित्तम् । औपम्यस्य कान्तिपदादपि निर्वाहात् । तथात्वे चेति । पुनस्तत्पदोपादाने चार्थान्तरसंक्रमितवाच्यत्वं स्फुटमिति तदेव निमित्तमर्थान्तरसंक्रमितवाच्यलक्षणासाध्यविच्छित्तेः । कमलान्युत्कृष्टानीति मुख्यप्रयोगादप्रतीतेश्चेति भावः । जितेन्द्रियत्वमिति । ( वंशस्थं वृत्तम् ) । भिन्नतयेव प्रतिभातीति । भिन्नत्वेनाभासे चोत्तरोत्तरं प्रति पूर्वस्य हेतुता न लभ्येतेति कारणमालासंपादनमेव कथितपदस्य गुणत्वे निमित्तमिति भावः । एवं च सर्वत्रानुप्रासस-त्त्वेऽपि पृथङ्निर्देशो निमित्तभेदादिति बोध्यम् । क्रोधाभावादिति । गुरुस्मृत्येति भावः । विनयेति । अत्र परश्वूत्कर्षस्येत्यादिः ।

---

१ क गुणाधिके पुंसि ज° । २ क. °णदा° । ३ क. °त्र का° ।

अपदस्थसमासं क्वचिद्गुणः । यथा, उदाहृते रक्ताशोकेत्यादौ ।
गर्भितं तथैव । यथा,

भमि अवहत्थिअरेहो णिरङ्कुसो अह विवेअरहिओ वि ।
सिविणे वि तुमम्मि पुणो पत्तिहि भत्तिं ण पुह्मसिमि ॥ ३१८ ॥

अत्र प्रतीहीति मध्ये दृढप्रत्ययोत्पादनाय ।

---

'येनानेन—' इत्यादि न विशेषणदानमात्रार्थं किं तु वाक्यान्तमेवावधेयम् । अतो बीजाभावान्न दोषः । न च गुणः । विशेषबुद्धेरजननात् ।

अपदस्थसमासमपि क्वचिद्गुणः । यथा—'रक्ताशोक—' इत्यादि । अत्रापदस्थसमासत्वमेव कथमिति चिन्त्यम् । द्वितीयार्धस्यापि[2] तत्स्थानत्वात्तस्यापि दृष्टवक्तृकत्वादन्यथा गुणत्वासंभवात् । भास्करस्तु—'शृङ्गारे समासस्यानौचित्यादस्थानस्थत्वम्' इत्याह ।

गर्भितमपि क्वचिद्गुणः । दृढप्रत्ययादिहेतुत्वात् । न तु दोषः । प्रतीतेरव्यवधानात् । भमि० ।

अत्र प्रतीहीति दृढप्रत्ययोत्पादकम् ।

---

**न विशेषणेति** । विशेषणस्य विशेष्यसाकाङ्क्षत्वाज्जनितान्वयबोधविशेष्यपदावृत्तिकल्पनात्प्रतीतिविलम्बो निराकाङ्क्षत्वं च विशेषणोपादाने दूषकताबीजमिति भावः । **किं त्विति** । तत्र तु पदानामनाकाङ्क्षत्वेऽपि यच्छब्देनाऽऽकाङ्क्षोत्थापनान्न दोषः । अत एव 'यो नववयो लास्याय' इति पाठे तत्रापि न दोषः । **अन्यथा गुणत्वेति** । क्रोधोन्मादपरिपुष्ट्या हि तस्य गुणत्वम् । विरहिणः पुरूरवस इयमुक्तिरिति भावः । नो दृष्टेत्यस्यापि कोपप्रकाशकत्वेन तत्स्थानत्वम् । एवं च स्थानेऽकृतत्वमात्रेणापदस्थपदतेति कश्चित् । **भमि इति** ।

'भ्रमामि अपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि ।
स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रस्मरामि ॥'

'हुमि' इति पाठे भवामीत्यर्थः । कामं प्रति यौवनोक्तिरियमित्येके । मलयानिलादिसहचरसंपत्तौ तं प्रति तरुणोक्तिरित्यन्ये । गुरुं प्रति शिष्योक्तिरित्यपरे । अपहस्तिता त्यक्ता रेखा मर्यादा येन । निरङ्कुशोऽनुरोधशून्यः । विशेषणत्रयस्य भिन्नार्थत्वं चिन्त्यम् । प्रस्मरामीति वर्तमानसामीप्ये लट् । प्रस्मरिष्यामीत्यर्थः । ( गाथा छन्दः ) । **प्रत्ययोत्पादकमिति** । प्रतीहीति सत्यप्रतीतिपरम् । तेन स्वोक्तेरमिथ्यात्वप्रतिपादकेन प्रतीहीत्यनेन शपथसमानशीलेन सौहार्दविषयदार्ढ्यावगमः । परत उपादाने तु प्राङ्मिथ्यात्वेन प्रतीतौ तदकिंचित्करमिति भावः । त्वमित्यस्याध्याहारनियमादस्य

---

१ क. हुमि । २ क. °पि दृ° ।

एवमन्यदपि लक्ष्यांल्लक्ष्यम् ।

रसदोषानाह—

व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।
कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥ ६० ॥
प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः ।
अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः ॥ ६१ ॥
अङ्गिनोऽननुसंधानं प्रकृतीनां विपर्ययः ।
अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः ॥ ६२ ॥

स्वशब्दोपादानं व्यभिचारिणो यथा,

सव्रीडा दयिताननें सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जन्हुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥ ३२१ ॥

---

एवमन्यदपि लक्ष्यं दृष्ट्वोहनीयम् ॥

अथ साक्षाद्रसविरोधिनो दोषानाह—व्यभिचारि० ।

शब्दवाच्यता सामान्यतो विशेषतो वा स्वशब्देनोपादानम् । सा व्यभिचारिणां यथा—सव्रीडा० ।

---

वाक्यदोषत्वम् । परापकारनिरतैरित्यत्र तु प्रसिद्धार्थस्योपदेशान्नास्त्युपपत्त्यपेक्षेति तत्र निराकाङ्क्षतैवेति बोध्यम् । एवमन्यदपीति । ताणं गुण(पृ० १७४)इत्यादौ वचनप्रक्रमभेदस्यादोषता । प्रत्युत प्रेम्ण एकरूपताव्यञ्जनाद्गुणत्वम् । एवं धन्याऽसीत्यादावपि शपामीति गर्भितं गुण एव । अविदग्धगोष्ठ्यां शपथेनैव प्रत्यायनौचित्यात् । अभवन्मतयोगानभिहितवाच्यापदस्थपदसंकीर्णप्रसिद्धिहताक्रमामतपरार्थास्तु नित्या एवेति बोध्यम् । व्यभिचारीति । व्यभिचारिणां स्वशब्दानुपादाने सत्येव स्वैः स्वैरनुभावैर्व्यक्तौ भावध्वनित्वं रसाय पर्याप्तत्वं च । तथा रसपदेन रसोपादानेऽपि विभावादिभिरभिव्यक्तिं विना न चर्वणीयता । स्थायिनोऽप्यभिव्यक्ता एव रसाः, न स्वशब्दोपात्ताः । किं तु तदुपादानकृत आस्वादापकर्ष इति भावः । सव्रीडेति । नायकस्य संमुखदर्शनाद्व्रीडा । मातङ्गो गजः । तच्चर्माम्बरदर्शनेन कारुण्यम् । विभवाभावेन शोकोदयात् । सर्पदर्शनेन भयम् । अम्बरस्थायी कथमत्रेति चन्द्रदर्शनाद्विस्मयः । विस्मयस्य स्थायित्वेऽपि चमत्कारकारित्वेनोपचाराद्रसत्वम् । पत्युरन्यस्त्रीसङ्गदर्शनादीर्ष्या । मणिस्थाने कपालदर्शनाद्दैन्यम् । नवसङ्गमे प्रीतियुक्ता

---

१ क. 'क्ष्यात्प्रेक्ष्यम् । व्यभि° । २ ग. 'मु । व्य' । ३ क. 'रसदो' ।

अत्र व्रीडादीनाम् ।

व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि ।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे

इत्यादि तु युक्तम् ।

रसस्य स्वशब्देन शृङ्गारादिशब्देन वा वाच्यत्वम् । क्रमेणोदाहरणम् ,

---

अत्र व्रीडादयो व्यभिचारिभावाः स्वशब्देनोपात्ताः । न च स्वशब्देनोपात्तेषु व्यभिचार्यादिष्वास्वादसंभवोऽनुभूयते, किं त्वनुभावादिमुखेनैव व्यक्तेषु । तस्मादास्वादानुत्पत्तिर्दोषत्वबीजमिति संप्रदायः । तत्रेदमालोचनीयम्—एतावता शब्दवाच्यतताया दोषत्वमेव तावद्दुर्लभम् । दूरे पार्थक्येन । दूरतरे साक्षात् । तथा ह्यनुभावादीनामुपस्थिताविवियं रसप्रतिबन्धिकाऽभिमता तदनुपस्थितौ वा । अन्त्ये कारणाभावादेवाऽऽस्वादाभावो न तु वाच्यत्वकृतः । सत्येव कारणचक्रे कार्यानुत्पादस्य प्रतिबन्धकताव्यवस्थापकत्वात् । तथा च न्यूनपदत्वमनभिहितवाच्यता वा दोषः । न त्वियम् । आद्येऽनुभावादित एव रसव्यक्तिरिति किं तच्छब्देनेति वैयर्थ्यमात्रं दोषः । वयं त्वालोचयामः—अनुभावादीनामुपस्थितावेव भावादीनां शब्दवाच्यतयाऽऽस्वादोपघातः प्रतीयत इति तस्याः पृथग्दोषत्वम् । अत एवौत्सुक्यादीनां शब्दवाच्यता न दोषः । तत्राऽऽस्वादविघाताप्रतीतेः । न च वाच्यमेवानुभावोपादाने किमिति नोदाहृतमिति । तदुपादानस्थले भावादिशब्दानां वैयर्थ्यमपीत्यसंकराभिप्रायेण तथोदाहरणात् । उदाहृते त्वनुभावाक्षेपकतया वैयर्थ्याभावात् । न चैवमुक्तोदाहरणविरोधस्तत्रानुभावाद्यनुपादानादिति वाच्यम् । 'दैवादहमत्र तया—' इत्यादाविवाऽऽक्षेपेण तेषां प्रतीतेः । न हि व्रीडादिशब्दैः प्रतिपादिता व्रीडादय आस्वाद्यतामिव स्वानुभावाद्याक्षेपकतामप्यास्वादयितुमक्षमा बीजाभावात् । एवमग्रिमोदाहरणेष्वप्यूह्यमिति । एवं च स्थिते, 'व्यानम्रा दयितानने०' इति पादत्रये पाठो युक्तः । एवं भावादिशब्देनाप्युपादाने द्रष्टव्यम् ।

---

च । ( शार्दूलविक्रीडितं छन्दः ) । अन्त्ये **कारणाभावादिति** । स्वस्वानुभावैरभिव्यक्तावेव व्यभिचारिण आस्वादका इति भावः । **न च वाच्यमिति** । अनुभावोपादान एव किमिति नोदाहृतमिति न वाच्यमित्यन्वयः । **अनुभावाक्षेपकतयेति** । व्रीडाद्याक्षिप्तैस्तदनुभावैर्व्यञ्जितैरेव तै रसपर्याप्तिः, परं त्वास्वादोपघात इति भावः । एतदुत्तरं न चैवमुक्तोदाहरण इत्यादेराक्षेपेणैव तेषां प्रतीतिरित्यन्तग्रन्थः क्वचित्पुस्तके पठ्यते सोऽग्रन्थः ।

---

१ क. दीनां वाच्यत्वम् । २ ग. °दि यु° । ३ क. °म् । ताम° । ४ क. °च्यत्वमे° ।
५ ङ. नेऽपि कि° । ६ क. °त्रयपा° ।

तामनङ्गजयमङ्गलश्रियं किंचिदुच्चभुजमूललोकिताम् ।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥३२२॥

आलोक्य कोमलकपोलतलाभिषिक्त-
व्यक्तानुरागसुभगामभिराम[1]रूपाम् ।
पश्यैष बाल्यमतिवृत्त्य विवर्तमानः
शृङ्गारसीमनि तरङ्गितमातनोति ॥ ३२३ ॥

स्थायिनो यथा,

संप्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
ठणत्कारैः[2] श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥ ३२४ ॥

अत्रोत्साहस्य ।

कर्पूरधूलिधवलद्युतिपूरधौत-
दिङ्मण्डले शिशिररोचिषि तस्य यूनः ।

---

रसस्य सामान्यतो रसशब्देन यथा—**ताम०** ।

विशेषतः शृङ्गारपदेन यथा—**आलोक्य०** ।

स्थायिनो विशेषत उत्साहपदेन यथा—**संप्रहारे०** ।

अत्रैव ' स्थायिभावोऽस्य कोऽप्यभूत् ' इति चतुर्थपादपाठे सामान्यतः शब्दवाच्यतोदाहरणं द्रष्टव्यम् ।

कष्टकल्पनया पृथक्श्लोकाद्यनुसंधेयप्रकरणादिपर्यालोचनया विलम्बेन व्यक्तिः । न तु ' दैवादहमत्र तया—' इत्यादाविव झटित्याक्षेपमहिम्ना सा । अनुभावस्य यथा—**क र०** ।

---

**तामिति** । अनङ्गसंबन्धिजयमङ्गललक्ष्मीम् । ईषदुन्नतं यद्भुजमूलं लोकितं दृष्टं यया । नखक्षताद्यवलोकनाय भुजमूलस्य किंचिदौन्नत्यकरणम् । तां नेत्रयोर्गोचरे कृतवतोऽस्य निरवच्छिन्नः कोऽपि रसः शृङ्गार इत्यन्वयः । ( रथोद्धता छन्दः ) । पूर्वार्धं उद्दीपनातिशयः । अत्र रसपदोपात्ततद्रसाक्षिप्तस्वविभावानुभावव्यभिचारिभिर्व्यज्यते रसः किं त्वास्वादापकर्ष इति भावः । एवमग्रेऽपि बोध्यम् । **आलोक्येति** । कोमलकपोलतलेऽभिषिक्तस्तत्कार्यपाण्डुत दर्शनाद्रोमाञ्चादिनाऽभिव्यक्तो योऽनुरागस्तेन सुभगां दर्शनीयरूपामभिराममूर्तिं रमणीयतरावयवसंस्थानामालोक्य, एष बाल्यमतिवृत्त्यातिक्रम्य विवर्तमानः पुलककटाक्षादिभिश्चेष्टमानः । तरङ्गितमविच्छदारम्भमिति केचित् । ( वसन्ततिलका छन्दः ) । **संप्रहार इति** । युद्ध इत्यर्थः । प्रहरणैः शस्त्रैः परस्परक्रियमाणप्रहाराणां ठणत्कारैरित्यन्वयः । प्रहरणकरणकप्रहारजन्यझणत्कारैरित्यर्थः । उत्साहो वीरस्थायी । ' प्रमोदस्तस्य कोऽप्यभूत् ' इति पाठे न दोषः । **कर्पूरेति** । कर्पूरधूलिवद्धवलो यो द्युतिपूरस्तेन क्षालितदिङ्मण्डले शशिनि सति तस्य प्रसिद्धतारुण्यस्य यूनो नयनावनौ नयनप्रसारणभूमौ

---

१ क. °मभूर्तिम् । २ झणत्कारैः ।

लीलाशिरोंशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥ ३२५ ॥

**अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावपर्यवसायिनः स्थिता इति कष्टकल्पना ।**

परिहरति रतिं मतिं लुनीते स्खलति[2] भृशं परिवर्तते च भूयः ।
इति बत विषमा दशाऽस्य देहं परिभवति प्रसमं किमत्र कुर्मः ॥ ३२६ ॥

**अत्र रतिपरिहारादीनामनुभावानां[3] करुणादावपि संभवात्कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः ।**

**प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं**

---

अत्र चन्द्रादय उद्दीपनालम्बनविभावाः शृङ्गारयोग्या अनुभावाप्रतीत्याऽऽस्वादापर्यवसायिनः स्थिताः । यद्यप्यंशुकनिवेशोऽनुभावत्वयोग्यस्तथाऽपि तस्य स्तनव्यक्तिप्रयोजकत्वेनोपादानान्नानुभावत्वपर्यवसानमिति प्राञ्चः । वस्तुतस्तु पुंनिष्ठ एव शृङ्गारोऽत्र प्रतिपिपादयिषितः । 'अभून्नयनावनौ सा' इत्यनेन तस्यैवाऽऽलम्बनत्वप्रतिपादनात् । न च पुंसि कश्चिदनुभाव उपात्तः । न च विभावैरप्याक्षेपार्ह इति कष्टेन कल्पनीयः । विभावस्य यथा—

**परिहरति॰ ।**

अत्र कामिनीरूपः शृङ्गारविभावोऽभिमतो न पुनरुपात्तः । न च रतिपरिहारादिभिरनुभावैराक्षेप्तुमपि शक्यते । तेषां करुणादावपि संभवादिति कष्टेन कल्पनीयः ।

प्रतिकूलविभावादिग्रहः । प्रकृतरसादेः प्रतिकूलो यो रसादिस्तद्विभावानुभावव्यभिचारिणां ग्रहः । तत्र तादृशविभावव्यभिचारिणोर्ग्रहो यथा—**प्रसादे॰ ।**

---

लीलाशिरोंऽशुकनिवेशस्य या विशेषा क्लृप्तिस्तया व्यक्ता स्तनोन्नतिर्यस्याः साऽभूदित्यन्वयः । (वसन्ततिलका छन्दः) । लीलाशिरोंशुकेत्यप्युद्दीपनविभाव एव । **उद्दीपनालम्बनेति** । चन्द्रनायिकाः । **अनुभावाप्रतीत्येति** । झटिति तदप्रतीत्येत्यर्थः । चन्द्रोदये यूनोः परस्परावलोकने विकारो भवत्येवेति प्रतिसंधानोत्तरं विलम्बेन तत्प्रतीतिरिति भावः । **उपादानादिति** । एवं च दर्शनकार्यत्वेनाप्रतीतेर्नानुभावत्वमिति भावः । स्तनोन्नतिव्यञ्जनस्यानुभावत्वयोग्यत्वादाह—**वस्तुतस्त्विति** । **परिहरतीति** । वस्तुनि स्पृहा रतिर्मतिरर्थावधारणं विषमा दशा कर्त्री, अस्य देहमिति कर्म । स्खलतीति । अन्तर्भावितण्यर्थः । परिवर्तत इत्यपि । (पुष्पिताग्रा छन्दः) । **शृङ्गारेति** । विप्रलम्भशृङ्गारेत्यर्थः । **करुणादौ** । करुणभयानकबीभत्सेषु । **कष्टेनेति** । झटित्यनाक्षेपात् । किं तु प्रकरणाद्यनुसंधानेन विलम्बेनेति भावः । एवं च तत्कृत एवाऽऽस्वादविघ्नः । आपाततस्तु बहूनां संगमेनैकतरविश्रान्त्यभावादास्वादविघ्न इति बोध्यम् । **प्रसाद इति** । मानवतीं मालतीं प्रति माधवस्येयमुक्तिः ।

---

१ क. ग. °भावाप° । २ क. °तितरां परिवर्तते स भू° । ३ क. ग. °वादीनां । ४ क. °पात्तैर्नानु° ।

प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥ ३२७ ॥

अत्र शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो निर्वेदश्च व्यभिचार्युपात्तः ।

णिहुअरमणम्मि लोअणवहम्मि पडिए गुरूण मज्झम्मि ।
सअलपरिहारहिअआ वणगमणं चेअ महइ वहू ॥ ३२८ ॥

अत्र सकलपरिहारवनगमने शान्तानुभावौ । इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेत्, न दोषः ।

दीप्तिः पुनःपुनः, यथा कुमारसंभवे रतिविलापे ।

---

अत्र प्रकृते शृङ्गारे प्रतिकूलस्य शान्तस्य प्रकाश्यमानानित्यतारूपो विभाव एतत्प्रकाशितो निर्वेदरूपो व्यभिचारी च स्फुटमेव गृह्यते । तादृशानुभावग्रहो यथा—**णिहुअर०** ।

अत्र व्याजादिकं विना वनगमनं सकलपरिहारश्च शान्तानुभावः । न च व्याजः प्रतिपादित इति शृङ्गारस्य प्रकृतस्य विच्छित्तिः । इन्धनाद्यानयनव्याजेन संभोगार्थं वनगमनं यद्युच्यते तदा न शान्तानुभावग्रहः ।

पुनःपुनर्दीप्तिरङ्गरसादिविषया दोषः । अङ्गिनस्तु सा महाभारतादौ शान्तादेरिव न

---

( चन्द्रकस्य कवेः पद्यमिदमिति शार्ङ्गधरपद्धतौ स्पष्टम् ) । शुष्यन्ति शुष्का भवन्त्यङ्गानि सिञ्चत्वित्यन्वयः । शत्रन्तमेतत् । इतरत्स्पष्टम् । **कालानित्यतारूप इति** । उद्दीपनविभाव इत्यर्थः । **एतत्प्रकाशित इति** । कालानित्यताप्रकाशनप्रकाशितत्वेन निर्वेदस्य प्रतिकूलता । प्रकारान्तरप्रकाशितस्त्वनुकूल एवेति बोध्यम् । **निर्वेदरूपः** । शान्तस्थाय्याख्यः । व्यभिचारित्वोक्तिश्चास्य शृङ्गारापेक्षयेति बोध्यम् । अस्यामतपरार्थाद्भेदश्चिन्त्य इति कश्चित् । **णिहुअरेति** ।

" निभृतरमणे लोचनपथे पतिते गुरूणां मध्ये ।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूः ॥ "

निभृतरमणो जारः । गुरूणां मध्य इत्यनेनात्यन्तं तरलता ( गाथा छन्दः ) । **यद्युच्यत इति** । न चैवं प्रकृत इति भावः । न च निभृतेत्यादिस्वरसात्सकलपदस्य गृहकार्यपरत्वादेवं प्रतीतिः । तत्कर्मणस्तदानीमनौचित्यप्रतिभासेन वैराग्यहेतुत्वसंभवात् । **पुनःपुनर्दीप्तिरिति** । वेद्यान्तरेण विच्छिद्य विच्छिद्य ग्रहणमि-

अकाण्डे प्रथनं यथा,

वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरसंक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम्।

अकाण्डे छेदो यथा,

वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोर्धाराधिरूढे वीररसे "कङ्कणमोचनाय गच्छामि"—इति राघवस्योक्तौ।

अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनम्। यथा हयग्रीववधे हयग्रीवस्य।

अङ्गिनोऽननुसंधानं यथा, रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने

---

वैरस्यमावहति। उदाहरणं कुमारसंभवे—'अथ मोहपरायणा—' इत्यादिना दीप्तिमानीतोऽपि करुणः 'अथ सा पुनरेव—' इत्यादिना पुनःपुनर्दीप्तिं नीतः। उपभुक्तो हि पुनरुपभुज्यमानः परिम्लानस्तबकवद्वैरस्याय कल्पते।

अकाण्डेऽनवसरे प्रथनम्। यथा वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरसंक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम्।

छेदो यथा वीरचरिते राघवभार्गवयोरविच्छिन्नप्रसरतया प्रवृत्ते वीररसे 'कङ्कणमोक्षणाय यामि' इति राघवस्योक्तौ। अकाण्डे हि तथा वचनं व्याजेन निर्गमं प्रतिपादयद्वीरत्वाभावे पर्यवस्यति।

अङ्गस्यातिविस्तृतिरप्रधानस्यातिविस्तरेण वर्णनम्। यथा हयग्रीववधे हयग्रीवस्य। यद्यपि प्रतिनायकवर्णनं नायकस्यैवोत्कर्षे पर्यवस्यति तथाऽप्यतिशयितं प्रधानतिरोधायकतया दोषपदवीमवतरति।

अङ्गिनः प्रधानस्याननुसंधानम्। यथा रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने

---

त्यर्थः। तच्च प्रबन्ध एवेत्याह—**कुमारेति**। **परिम्लानस्तबकवदिति**। उपभुक्तकुसुमपरिमल इव सहृदयानामास्वादापकर्ष इत्यर्थः। प्रथनं विस्तारः। **अनेकवीरसंक्षय इति**। तदा करुणस्य वीरस्य वाऽवसरो न शृङ्गारादेः। न हि शोकोत्साहवासनानिरुद्धे प्रतिपत्तृचेतसि शृङ्गारादिः पदमपि लभते सुतरामास्वाद इति भावः। **छेदो** विच्छेदः। **कङ्कणमोचनम्**। विवाहदशमादिनोत्सवभेदः। **वीररसे**। युद्धोत्साहे। तादृशे हि समाजे तथाऽचरणमशक्तिसंदेहापादकत्वादकीर्तिपर्यवसायीति भावः। **अङ्गस्य**। प्रतिनायकादेः। **यथेति**। तत्र हि हयग्रीवस्य जलवनविहारादिना नायकापेक्षया विस्तरेण वर्णनं तस्यैव नायकत्वं प्रत्याययति। **प्रधानस्येति**। प्रबन्धव्यापिन इत्यर्थः। प्रबन्धो हि

---

१ क. 'संवरणे द्वि°'। २ क. '°कस°'। ३ क. '°कसं°'।

सागरिकाया विस्मृतिः ।

प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्च, वीररौद्रशृङ्गारशान्तरसप्रधाना धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ताः, उत्तममध्यमाधमाश्च । तत्र रतिहासशोकाद्भुतान्यदिव्योत्तमप्रकृतिवद्दिव्येष्वपि । किं तु रतिः संभोगशृङ्गाररूपा, उत्तमदेवताविषया न वर्णनीया । तद्वर्णनं हि पित्रोः संभोगवर्णनमिवात्यन्तमनुचितम् ।

क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥ ३२१ ॥

---

सागरिकाया विस्मृतिः ।

प्रकृतीनां विपर्ययो यत्प्रकृतौ यद्वर्णनमनुचितं तत्र तद्वर्णनम् । प्रकृतयस्तावद्दिव्या अदिव्या दिव्यादिव्याश्च । अत्र दिव्यत्वममर्त्यैकरूपत्वमतो न पातालीयाद्यसंग्रहः । उदाहरणं श्रीमन्महेश्वरादिः । अदिव्यत्वं मर्त्यैकरूपता । यथा माधवादेः । दिव्यादिव्यत्वरूपता यथा श्रीकृष्णादेः । त्रिविधा अप्येते चतुर्धा भवन्ति—धीरोदात्तधीरोद्धतधीरललितधीरशान्तभेदात् । क्रमेण वीररौद्रशृङ्गारशान्तप्रधानत्वमेषां लक्षणानि । श्रीरामभार्गवश्रीकृष्णजीमूतवाहना उदाहरणानि । एते च प्रत्येकमुत्तमाधममध्यमभेदाः । अनुकूलादिभेदास्त्वस्थिराः । अनुकूलादिर्हि कदाचिद्दक्षिणादिः संपद्यत इति प्रकृतिभेदे न गणनीयाः । एवं भिन्नासु प्रकृतिषु रतिहासशोकाद्भुतान्यदिव्योत्तमप्रकृतिवद्दिव्येष्वपि वर्णनीयानि । किं तु रतिः, संभोगशृङ्गाररूपा, उत्तमदिव्यविषया न वर्णनीया । तद्वर्णनं पित्रोः संभोगवर्णनमिवात्यन्तमनुचितम् ।

क्रोधं० ।

---

नैकरसेन निर्वहति । तत्र नानारसोपादानस्य कविसमयसंमतत्वात् । उपादानं च न प्रधानानां परस्परनिराकाङ्क्षत्वाभावादित्येकस्याङ्गित्वमन्येषामङ्गत्वं रसवैचित्र्यार्थं वाच्यम् । तत्र यद्यङ्गी नोपादीयते तदा वैचित्र्यं न प्रतीयत इति दोषः । **सागरिकायाः** । रत्नावल्याख्याया मुख्यनायिकायाः । **विस्मृतिरिति** । तदनुसंधानाधीना शृङ्गाररसधारा तदननुसंधाने विरता स्यादिति दुष्टिबीजम् । **उत्तमाधममध्यमेति** । गुणोत्कर्षापकर्षतदुभयैरेते भेदा बोध्याः । **संभोगेति** । चुम्बनालिङ्गनादिरूपः । न पुनरन्योन्यावलोकनम् । तस्य व्रीडाद्यकारित्वात् । एवं भयं नोत्तमेषु जुगुप्साप्यदिव्येष्वेवेति बोध्यम् । क्रोधोत्साहविशेषावपि दिव्येष्वेवेत्याह—**क्रोधमिति** । ( कुमारसंभवे तृतीयसर्गे पद्यमिदम् ।

---

१ ग. °त्तमाधममध्यमाश्च । २ क. विभो । ३ क. °वक्र° । ४ क. °ति । तत्र रति° ।

इत्युक्तवद्भ्रुकुट्यादिविकारवर्जितः क्रोधः सद्यःफलदः स्वर्गपातालगगनसमुद्रोल्लङ्घनाद्युत्साहश्च दिव्येष्वेव । अदिव्येषु तु यावदवदानं प्रसिद्धमुचितं वा, तावदेवोपनिबद्धव्यम्, अधिकं तु निबध्यमानमसत्यप्रतिभासेन 'नायकवद्वर्तितव्यम्, न प्रतिनायकवत्—' इत्युपदेशे न पर्यवस्येत् । दिव्यादिव्येषूभयथाऽपि । एवमुक्तस्यौचित्यस्य दिव्यादीनामिव धीरोदात्तादीनामप्यन्यथावर्णनं विपर्ययः । तत्रभवन्भगवन्नित्युत्तमेन, नाधमेन, मुनिप्रभृतौ, न राजादौ, भट्टारकेति नोत्तमेन राजादौ, प्रकृतिविपर्ययापत्तेर्वाच्यम् । एवं देशकालवयोजात्यादीनां वेषव्यवहारादिकमुचितमेवोपनिबद्धव्यम् ।

अनङ्गस्य रसानुपकारकस्य वर्णनं यथा,

कर्पूरमञ्जर्यां नायिकया स्वात्मना च कृतं वसन्तवर्णनमनादृत्य बन्दिवर्णितस्य राज्ञा प्रशंसनम् ।

---

इत्युक्तवद्भ्रुकुट्यादिवर्जितः सद्यःफलदः क्रोधो नाकपातालगगनसमुद्रोल्लङ्घनादावुत्साहश्च दिव्येष्वेव वर्णनीयः । अदिव्येषु तु यावदेव महत्कर्म लोकप्रसिद्धमुचितं वा तावदेवोपनिबन्धनीयम् । अधिकं हि निबध्यमानमसत्यप्रतिभासनया रामादिवत्प्रवर्तितव्यमित्याद्युपदेशे न पर्यवस्येत् । दिव्यादिव्येषु पुनरुभयोरप्युचितं वर्णनीयम् । एवमुक्तस्यौचित्यस्य दिव्यादीनामिवोत्तमादीनामप्यन्यथावर्णनं प्रकृतिविपर्ययः । आमन्त्रणौचित्यलङ्घनेऽप्येवम् । तद्यथा तत्रभवन्भगवन्नित्युत्तमेनैव प्रयोक्तव्यं नाधमेन । उत्तमेनापि मुनिप्रभृतावेव न तु राजादौ । भट्टारकेति न राजादावुत्तमेन किं तु देवादावेव । अन्यथा प्रकृतिविपर्ययापत्तेः । एवं यत्र देशे काले वयसि जातौ वा यद्वेषव्यवहारादि समुचितं तदेव तत्रोपनिबद्धव्यम् । अन्यथानिबन्धने तु प्रकृतिविपर्ययः । यथा स्वर्गाङ्गनासु मानुषीवेषादिः । रसातलादौ मेघादिरिति ।

अनङ्गस्याभिधानं रसानुपकारकस्य वर्णनम् । यथा कर्पूरमञ्जर्यां नायिकया स्वात्मना च यद्वसन्तवर्णनं तदनादृत्य बन्दिवर्णनस्य राज्ञा प्रशंसनम् ।

---

इन्द्रवज्रा छन्दः ) । **उक्तवत्** । ईदृशः । **उत्तमादीनामिति** । आदिना धीरोद्धतादीनामपि संग्रहः । **न राजादाविति** । अधमेन तु राजादावेव न मुनिदेवादाविति केचित् । **मेघादिरिति** । एवं वसन्ते मेघादिकम्, जरायां संभोगादिः, कुलवधूजातीयस्य

---

१ ग. °त्युक्तिव° । २ क. °रविवर्जितः सद्यः फलदः कोपः । स्वःपा° । ३ ग. °तः सद्यः फलदः क्रोधः । स्व° । ४ क. °नादावुत्सा° । ५ ग. °षु च या° । ६ क. °सत्प्रति° । ७ ग. °मन्य° । ८ क. °ति परमेश्वरे न मुनिप्रभृतौ प्रकृ° । ग. °ति न राजादौ परमेश्वरेति न मुनिप्रभृतौ प्रकृ° । ९ ग. °दिसमु° । १० क. च वसन्तस्य वर्ण° । ग. °च व° । ११ क. ग. राज्ञः प्र° । १२ ख. इत्याद्युक्तभ्रुकु° । १३ क. °वद्वर्ति° ।

"ईदृशाः"—इति नायिकापादप्रहारादिना नायककोपादिवर्णनम्। उक्तं हि ध्वनिकृता—

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥ इति।

इदानीं क्वचिददोषा अप्येते—इत्युच्यन्ते

न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित्।

यथा,

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताऽभिमुख्यं पुनः।
दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥३३०॥

अत्रौत्सुक्यशब्द इव तदनुभावो न तथाप्रतीतिकृत्। अत एव

---

'ईदृशाः' इत्यनेनैतदुक्तं यदेवंविधा अन्येऽप्यनौचित्यहेतवो भवन्ति। यथा नायिकापादप्रहारादिना नायककोपादिवर्णनमित्यादि। अनौचित्यं तु रसविच्छेदहेतुः। यदुक्तं ध्वनिकृता—अनौचित्या०।

इदानीमेषां केषांचित्क्वचिददोषत्वमपीत्याह—न दोषः०।

संचारिणो न तु रसस्थायिनोरपि। क्वचिदिति यत्रेतरविलक्षणो नानुभावः। यथा—औत्सुक्येन०।

अत्रौत्सुक्यशब्दवत्सहसाप्रसरणादिरूपोऽनुभावो नौत्सुक्यमसंदिग्धं प्रतिपादयितुमीष्टे। भयादिसाधारणत्वात्। अत एव

---

साभिप्रायवचनादिकमनुचितम्। यत्रेतरेति। इदमुपलक्षणम्। यत्रानुभावविभावादिकृतः परिपोषः प्रकृतरसाननुगुणत्वादनपेक्षितस्तत्रेत्यपि बोध्यमिति केचित्। तादृशोदाहरणं चिन्त्यम्। औत्सुक्येनेति। (रत्नावल्यां प्रथमाङ्के मङ्गलाचरणमिदम्)। त्वरा सहसागमनारम्भः। अस्य रोषभयादितोऽपि संभवेन भयादुत्कण्ठातो वेति संशयान्न निर्णय इति औत्सुक्येनेति। एवं व्यावर्तनस्य कोपादिनाऽपि संभवाद्ध्रियेत्युक्तम्। सहभुवा स्वाभाविक्या। नवोढात्वात्। बन्धुवधूजनैर्भ्रातृजायादिभिराभिमुख्यं प्रियस्य वरं श्रेष्ठं पतिं च। अत्र साध्वसस्य विकृतवरदर्शनादिरूपविभावानुभावमुखेन परिपोषः प्रकृतशृङ्गाररसप्रतिकूलप्राय इति तस्य स्वशब्दाभिधानं, तेन नवोढास्वाभाव्यकृतसाध्वसलाभः।

---

१ क. प्रसिद्ध्यौचित्यब°। ग. प्रसिद्धौचित्य ब°। २ ग. °षा एते उ°।

"दूरादुत्सुकम्—" इत्यादौ व्रीडाप्रेमाद्यनुभावानां विचलितत्वादीनामिवोत्सुकत्वानुभावस्य सहसाप्रसरणादिरूपस्य तथाप्रतिपत्तिकारित्वाभावादुत्सुकमिति कृतम्।

**संचार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥ ६३ ॥**

**बाध्यत्वेनोक्तिर्न परमदोषः, यावत्प्रकृतरसपरिपोषकृत्।**
**यथा, क्वाकार्यं, शशलक्ष्मणः क्व च कुलम्—इत्यादौ।**

---

'दूरादुत्सुकमागते विचलितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम्।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥

इत्यत्र व्रीडादीनि विचलितत्वादिभिरनुभावैरुपनिबध्नन्नेव रसिकशिरोमणिरमरुकविरौत्सुक्यं स्वशब्देनैवोपात्तवान्। दोषत्वाभावबीजमुक्तं प्राक्। इदं त्ववधेयम्—त्वरादीनां भयादिसाधारण्येऽप्यौत्सुक्यादिना स्वकारणेन विशिष्यमाणास्ता एवासाधारण्यमासाद्यौत्सुक्यादि व्यञ्जयन्तीत्यास्वादोदयः। न तु शब्दादेव तत्प्रतिपत्त्या। व्यभिचार्यादीनां वाच्यत्वासहत्वव्युत्पादनात्। अत एवात्र न वैयर्थ्यमपि। विशेषणत्वेनोपयोगात्। 'दूरादुत्सुकम्' इत्यादौ तु शब्दमहिम्ना विशिष्टस्यैवानुभावस्य कल्पनमिति ततोऽभिव्यक्तिरिति। एवं व्यवस्थिते शब्देन तदुपस्थितिं विना न तदनुभावस्यासाधारण्यम्, न च तेन विनाऽभिव्यक्तिः, न चाभिव्यक्तिं विनाऽऽस्वादसंभवः, न च तेन विना भावमध्यप्रवेशः, न च तमन्तरेण तथाकीर्तनं युक्तमिति भावस्योत्कीर्तनमप्येतादृशस्य व्यभिचारिणि शब्दवाच्यताया दोषत्वाभावं साधयतीति युक्तमुत्पश्यामः।

**संचार्यादेः०।**

प्रकृतविरुद्धं व्यभिचार्यादि यदि बाध्यत्वेनोच्यते तदा दूरे दोषत्वम्। प्रत्युत प्रकृतरसपरिपोषकतया गुणत्वम्। तत्र व्यभिचारिणो यथा—'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्—'

---

संरोहत्पुलका प्रियकरस्पर्शेन सात्विकभावोदयात्। हसता। हासश्च विश्वासोत्पादनाय। (शार्दूलविक्रीडितं छन्दः)। **दूरादिति** (अमरुशतके पद्यमिदम्। शार्दूलविक्रीडितं छन्दः)। भावत्वोत्कीर्तनमिति पाठः। **'व्यभिचारिणि'** इत्यस्य तु भाव इति शेषः। **बाध्यत्वेनेति**।

---

१ क. °डाद्य°। २ ग. प्रसार°। ३ ग. °ध्यस्योक्ति°। ४ क. ग. परं न दो°। ५ अयं श्लोकः प्राक् (पृष्ठ १३२) दृश्यः। ६ एतच्छ्लोकव्याख्यानं प्राक् (पृ० १०४) दृश्यम्। ७ क. °विवलि°। ८ क. °विवलि°। ९ क °णास्त ए°। १० क. °वं च व्य°। ११ क. °वस्य सा°। १२ क. °ना व्य°।

अत्र वितर्कादिषूद्गतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृतरसपरिपोषः।

पाण्डुक्षामं वदनं[1] हृदयं सरसं तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥ ३३२ ॥

इत्यादौ साधारणत्वं पाण्डुतादीनामिति न विरुद्धत्वम्।

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः।
किं तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥ ३३३ ॥

—इत्यत्राऽऽद्यमर्धं बाध्यत्वेनैवोक्तम्। जीवितादप्यधिकमपाङ्गभङ्गस्या-

---

इत्यादौ। अत्र चतुर्षु पादेषु पूर्वभागप्रतिपाद्यानां शमाङ्गानां वितर्कमतिशङ्काधृतीनामुत्तरभागप्रतिपाद्याभिरभिलाषाङ्गभूताभिरौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारपुरःसरं चिन्तायामेव पर्यवसानमिति भावशबलतापरिपोषकत्वाद्गुणत्वम्।

**पाण्डुक्षामं०।**

इत्यत्र पाण्डुत्वादीनां रोगानुभावतया विरुद्धत्वेऽपि विप्रलम्भशृङ्गारे समारोपादङ्गभावप्राप्त्या दोषत्वाभाव इति ध्वनिकारः। तदयुक्तम्। तेषामुभयसाधारण्याद्विरोधस्यैवासिद्धेः। विभावस्य यथा—**सत्यं०।**

अत्र पूर्वार्धे शृङ्गारस्य परार्धे शान्तस्य विभावः। अनयोर्विरोधेऽपि पूर्वार्धस्य बाध्यत्वेनैवोक्तत्वान्न दोषत्वम्। प्रत्युत शान्तपरिपोषणाद्[2]गुणत्वम्। एवं ह्यत्र प्रतीयते—सर्वा रामादयः सत्येव जीविते तत्सौकर्यार्थमुपादेयाः, जीवितं चातिभङ्गुरमिति किं कृतं[3] तेषामुपादेयत्वमतो रम्यत्वेऽपि निष्फला एता इति। नन्वेवं पूर्वार्धप्रतिपाद्यस्य बाध्यत्वेऽपि मत्ताङ्गनापाङ्गभङ्गेत्यनेन विरोधो न परिहृतः। न च तत्र न शृङ्गारप्रतीतिरिति वक्तुं शक्यम्। तदु-

---

यथा बाध्यत्वेनावगमस्तथा चेदुच्यत इत्यर्थः। **शमाङ्गानामिति**। शान्तसंचारिणामित्यर्थः। शृङ्गारविरोधिनामित्यपि बोध्यम्। **भावशबलतेति**। विपक्षजयाद्राज्ञ इव ततः शृङ्गारस्योत्कर्ष इति भावः। स्त्रीरत्नरूपालम्बनविभावबलादान्तरालिकहेतूपनिपातेनाऽऽविर्भूतानामपि मत्यादीनां बाधिकाभिरौत्सुक्यस्मृतिदैन्यचिन्ताभिः पूर्वानुरागावस्थानुभवादभिलाषस्य गाढता, तेन पूर्वानुरागप्रकर्ष इति तात्पर्यम्। **पाण्ड्विति**। क्षामं कृशं सरसं सानुरागमन्तरससहितं च, अत एवालसं बाह्यक्रियायामक्षमम्। नितान्तमित्यतिशयार्थकं सर्वान्वयि। क्षेत्रियो देहान्तरे चिकित्स्यो देहपर्यन्तस्थायीति फलति। ( आर्याछन्दः )। **रोगानुभावतयेति**। करुणरसोचिततयेत्यपि बोध्यम्। **विभावस्येति**। बाध्यत्वेनोक्तिरिति शेषः। **सत्यमिति**। तद्वल्लोलतया जीवितस्यानुपादेयं सर्वमित्यर्थः।

---

१ ग. वक्त्रं हृ°। २ क. °पोषाद्गु°। ३ क °कृतमु°।

**स्थिरत्वमिति प्रसिद्धंभङ्गुरोपमानतयोपात्तं शान्तमेव पुष्णाति । न पुनः शृङ्गारस्यात्र प्रतीतिस्तदङ्गाप्रतिपत्तेः । न तु विनेयोन्मुखीकरणमत्र परिहारः । शान्तशृङ्गारयोर्नैरन्तर्यस्याभावात् । नापि काव्यशोभाकरणम् । रसान्तरादनुप्रासमात्राद्वा तथाभावात् ।**

**आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः ।**
**रसान्तरेणान्तरितो नैरन्तर्येण यो रसः ॥ ६४ ॥**

---

पादानवैयर्थ्यप्रसङ्गादिति चेत्, न । तत्र रसाप्रतीतेः । तद्व्यञ्जकानुभावाद्यप्रत्ययात् । कथं तर्हि तदुपादानमिति चेत्, शान्तपरिपोषार्थमेवेति ब्रूमः । स एव कथमिति चेत्, जीवितस्यातिभङ्गुरत्वप्रतीतेः । साऽपि कुत इति चेत्, जीवितादप्यधिकमपाङ्गस्यास्थैर्यं सकलजनप्रसिद्धम् । अतस्तथाविधभङ्गुरस्यापाङ्गस्योपमानत्वेनोपादानात् । तदेतदुक्तं जीवितादप्यधिकमपाङ्गभङ्गस्यास्थिरत्वमिति प्रसिद्धं भङ्गुरोपमानतयोपात्तं शान्तमेव पुष्णातीति ।

केचित्तु प्रसिद्धभङ्गुरस्य साधर्म्येण जीवितोपमानतयोपात्तमिति तद्व्याचक्षते । ध्वनिकारस्तु—भवत्येवात्र शृङ्गारप्रतीतिः । परंतु तया गुडजिह्विकान्यायेनोन्मुखीकृत्य विनेयाः शान्तरसे निवेश्यन्त इत्यदोषता । यद्वा काव्यशोभानिमित्तमेव तदुपादानाद्दोषाभावः । न हि विना शृङ्गारेण काव्यशोभेति समादधे । तन्नातिमनोरमम् । शृङ्गारप्रतीत्युपगमेऽपि शृङ्गारशान्तयोर्नैरन्तर्याभावेन प्रथमसमाधेरसंभवात् । द्वितीयसमाधिरपि तदा स्याद्यदि रसान्तरयोगेण चारुत्वं नानुभूयेत । न त्वेवम् । किं च रसमात्रेण चारुत्वमित्यपि न शक्यते वक्तुं प्रागेव शृङ्गारमात्रेणेति । यतश्चित्रकाव्येऽलंकारादेव चारुत्वप्रत्ययः । तस्मादत्र शान्तरसादनुप्रासमात्रेण वा चारुत्वसंभवान्नोत्तरोऽपि समाधिरिति ।

अविरोधोपायान्तरमाह—**आश्रयैक्ये०** ।

---

अपाङ्गभङ्गः कटाक्षः । **तत्र रसेति** । शृङ्गाररसेत्यर्थः । **प्रसिद्धभङ्गुरेति** । प्रसिद्धभङ्गुरस्योपमानत्वेनोपादानमित्यर्थः । केचिन्मतेऽप्युपात्तमित्यस्योपादानमित्येवार्थः । तन्मते मूले प्रसिद्धभङ्गुरपदं भावप्रधानं तृतीयातत्पुरुषः । अविवक्षितकर्मकत्वेनाकर्मकत्वाद्भावे क्त इति केचित् । प्रसिद्धभङ्गुरमुपमानं यस्येति बहुव्रीहिरित्यपरे । अत्र कटाक्षस्य नानुभावतयोपादानम् । रतिकार्यत्वेनानुक्तेः । किं तु चञ्चलत्वसाधर्म्येणोपमानतयैवेति भावः । **भवत्येवेति** । शृङ्गाराङ्गविभावादिसत्त्वादित्यर्थः । नैरन्तर्यमव्यवधानम् । एवं च शृङ्गारोद्बोधे शान्तोद्बोधो दुर्घट इति भावः । उक्तकाव्ये च शृङ्गारासंभव इत्युक्तम् । अनेन द्वितीयमपि यद्यपि निरस्तं तथाऽपि वैयात्यमपि तदीयं दूषयितुमाह—**द्वितीयेति** । **नोत्तरोऽपीति** । वैयात्येन शोभानिमित्तशृङ्गारस्वीकृतिरूपः । **अविरोधोपायान्तरमाहेति** । रसयोरित्यादिः । विरोधो द्विधा—

---

१ क. ग. °द्भतद्गुणोप° । २ क. °तं रुच्छान्त° । ३ क. विनयो° । ४ क. °प्रासाद्वा । ५ क. रन्तर्ये तु । ६ क. °स्यापि भ° । ७ क. °ते प्रागेव तु शृ° ।

**वीरभयानकयोरेकाश्रयत्वेन विरोध इति प्रतिपक्षगतत्वेन भयानको निवेशयितव्यः। शान्तशृङ्गारयोस्तु नैरन्तर्येण विरोध इति रसान्तरमन्तरे कार्यम्। यथा नागानन्दे, शान्तस्य जीमूतवाहनस्य 'अहो गीतम्! अहो वादित्रम्!' इत्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः।**

---

अत्र विरुद्ध इत्यनुषज्यते। रसानां विरोधो द्वेधा—समानाधिकरणतया नैरन्तर्येण चेति। तत्र वीरभयानकयोरैकाधिकरण्येन विरोध इति प्रतिपक्षगतत्वेन भयानको वर्णनीयः। तथा सति दूरे तस्य दोषत्वं प्रत्युत वीरपरिपोषः। यथा मम—

'आहूताऽपि पदं ददाति न पुरो न प्रार्थिताऽपीक्षते
साकूतं परिभाषिताऽपि बहुशः किंचिन्न चाऽऽभाषते।
आश्लिष्टाऽपि न संमुखानि रचयत्यङ्गानि मूढाशया
कोपोद्रेकवशंवदेव तरुणी श्रेणी यदीयद्विषाम्॥'

न चात्र शृङ्गारभयानकयोरपि विरोधः। वक्ष्यमाणक्रमेण द्वयोरप्यन्याङ्गत्वाद्व्यधिकरणत्वाच्च। यद्यप्यालम्बनभेदेनैवैकाश्रयावपि वीरभयानकौ क्वचिदनुभूयेते तथाऽपि न तथा वर्ण्येते इति भिन्नाश्रयतयैव निवेशनीयौ। एवमन्येषामप्यूह्यम्। यस्य तु येन रसेन नैरन्तर्येण विरोधः सोऽविरोधिना रसान्तरेणान्तरितो निबद्धव्यः। यथा नागानन्दे शान्तस्य जीमूतवाहनस्य 'अहो गीतमहो वादित्रम्' इत्यनेनाद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो

---

दैशिकः कालिकश्च। तदाह—**समानाधिकरणतयेत्यादि**। **वीरेति**। उत्साहातिशयवान्वीरः। न हि तत्र भयसंभवः। प्रतिपक्षे तु भयनिबन्धो नायकपराक्रमातिशयायेति वीरस्य पोषः। तदीयभयं हि तत्र व्यभिचारि। एवं प्रतिपक्षे शोकोपनिबन्धोऽपि द्रष्टव्यः। **आहूताऽपीति**। कस्यचिद्राज्ञो वर्णनमिदम्। यदीयद्विषां यस्य प्रकृतस्य राज्ञः संबन्धिशत्रूणां श्रेणी पङ्क्तिः (कर्त्री) कोपोद्रेकस्य कोपातिशयस्य वशंवदा स्वाधीना कुपितेति यावत्। तरुणीव मूढाशया। मूढः किंकर्तव्यताविमूढः, (भयात्, तरुणीपक्षे कोपात्) आशयोऽन्तःकरणं यस्या एतादृशी सत्याहूताऽपि पुरः पदं न ददाति नाऽऽगच्छति। प्रार्थिताऽपि नेक्षते। साकूतं साभिप्रायं बहुशः परिभाषिताऽपि किंचित्किमपि नाऽऽभाषते। आश्लिष्टाऽपि संनिधिं प्रापिताऽपि तरुणीपक्ष आलिङ्गिताऽपि। अङ्गानि हस्त्यश्वादीनि, तरुणीपक्षे मुखादीनि। संमुखानि न रचयतीत्यर्थः। (शार्दूलविक्रीडितं छन्दः)। **व्यधिकरणत्वाच्चेति**। समासोक्त्यलंकारविधया द्विट्सेनायामपि शृङ्गारप्रतीतिरिति न वाच्यम्। इवेन तस्यास्तिरस्कारात्। तत्सादृश्येन तथाप्रतीतिर्यद्यनुभवारूढा तदाऽन्याङ्गत्वेनैव विरोधपरिहार इति बोध्यम्। यद्यप्यालम्बनभेदेनेति पाठः। **सोऽविरोधिनेति**। कालव्य-

---

१ क. °योरैर°। २ क. ग. °वाद्यमित्य°। ३ ग. °रोवांगितः। ४ ख. यद्यप्याश्रयभेदेन।

न परं प्रबन्धे, यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्तते। यथा,

भूरेणुदिग्धान्नवपारिजातमालारजोवासितबाहुमध्याः।
गाढं शिवाभिः परिरभ्यमाणान्सुराङ्गनाश्लिष्टभुजान्तरालाः॥ ३३४॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान्।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः॥ ३३५॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम्।
निर्दिश्यमानाल्लँलनाङ्गुलीभिर्वीराः स्वदेहान्पतितानपश्यन्॥ ३३६॥

अत्र बीभत्सशृङ्गारयोरन्तर्वीररसो निवेशितः।

**स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः।**

---

निबद्धः। न केवलं प्रबन्ध एव रसान्तरव्यवधिना विरोधनिवृत्तिः किं त्वेकस्मिन्नपि वाक्ये। यथा—**भूरेणुदिग्धा०**।

अत्र विशिष्टस्य वीरस्य कर्तुः सर्ववाक्यान्वयित्वेन विमानाधिरोहणादिना मध्य उत्साहप्रतीतेर्बीभत्सशृङ्गारयोरविरोधः। यद्यप्यत्र वीर एव प्रधानम्, अन्यौ च तद्व्यभिचारिणाविति न विरोधस्तथाऽप्येवमप्यविरोधः संभवतीत्युदाहृतम्।

अविरोधे[3] हेत्वन्तरमाह—**स्मर्यमाणो०**।

---

वधानेनाविरोधेऽपि विरोधिवासनाया अप्यपनयायाविरोधिरसान्तरोपनिबन्धः। तदपनये हि निरस्तकण्टकतया रसान्तरप्रकर्ष इति भावः। अद्भुतं तत्तपोभङ्गार्थमिन्द्रप्रेषिताप्सरसां वादित्रगीतैरिति शेषः। **एकस्मिन्नपीति**। एकक्रियासमाप्य इत्यर्थः। **भूरेण्वित्यादि**। यथाक्रममेकं देहविशेषणमपरं वीरविशेषणम्। पतितान्स्वदेहान्वीरा अपश्यन्नित्यन्वयः। दिग्धान्व्याप्तान्। रञ्जितं वासितम्। बाहुमध्यं वक्षः। क्रव्यभुजां मांसाशिनां खगानाम्। सशोणितैः सरुधिरैः। चन्दनवारिणां सेको यत्र तादृशैः, कल्पलता एव दुकूलानि पट्टवस्त्राणि तैर्युक्तो विमानमध्ये यः पर्यङ्कस्तत्तले स्थिता ललनाः स्वर्वेश्याः। (उपजातिश्छन्दः)। **बीभत्सशृङ्गारयोरिति**। पतितस्वदेहस्वर्गाङ्गनारूपालम्बनभेदव्यवस्थितयोरित्यर्थः। अत्र साहसेन रणमध्यनिपातजन्यस्वर्गलाभरूपानुभावेनाऽऽक्षेपलभ्यगर्वादिसंचारिणा च वीररसप्रतीतिरिति बोध्यम्। एतद्वाक्यात्तत्तत्सामग्रीताश्चित्ररस इति संप्रदायविदः। तन्नेत्याह—**वीर एवेति**। प्राकरणिकत्वादिति भावः। अत्र रसानां परस्परविरोधस्त्रिधा। क्वचिदाश्रयैक्येन क्वचिदालम्बनैक्येन क्वचिन्नैरन्तर्येण। तत्राऽऽलम्बनैक्येन वीरशृङ्गारयोः, हास्यरौद्रबीभत्सैः संभोगस्य, वीरकरुणरौद्रैर्विप्रलम्भस्य। आलम्बनाश्रयैक्याभ्यां वीरभयानकयोः। नैरन्तर्यविभावैक्याभ्यां शान्तशृङ्गारयोः। अविरोधोऽपि त्रेधा। वीरस्याद्भुतरौद्राभ्यां

---

१ क. 'णुदाघान्न'। २ क. 'जोरञ्जितबा'। ३ क. 'रोधहे'।

अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ॥ ६५ ॥

यथा,

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ ३३७ ॥

एतद्भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूरभिदधौ ।

अत्र पूर्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं परिपोषयति ।

द[३]न्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥ ३३८ ॥

अत्र कामुकस्य दन्तक्षतादीनि यथा चमत्कारकारीणि तथा जिनस्य। यथा वा परः शृङ्गारी तदवलोकनात्सस्पृहस्तद्वदेतद्दृशो मुनय इति साम्यविवक्षा[१]

---

तत्र स्मर्यमाणत्वेनाविरोधो यथा—अयं० ।

समरभुवि निपतितं भूरिश्रवसो हस्तमालोक्य तद्वधूनामिदं वचनम् । तथा च शृङ्गाराङ्गमपि पूर्वावस्था स्मर्यमाणतयोद्दीपनविभावत्वेन करुणपरिपोषिकेत्यदोषः । साम्यविवक्षया यथा—दन्त० ।

पाटनं खण्डनम् । प्रसवजनिताऽतिबुभुक्षावशेन निजापत्यमेव भोक्तुमारभमाणायै

---

सर्वथैवाविरोधः। शृङ्गारस्याद्भुतेन भयानकस्य बीभत्सेन। क्वचिदालम्बनभेदाद्यथा वीरशृङ्गारयोः। तृतीयस्तु भूरेणित्यादावुक्त एवेति केचित् । **अङ्गिनि** । उत्कर्षाश्रये । **अङ्गत्वम्** । उत्कर्षकारकत्वम् । **पूर्वावस्था** । शृङ्गारानुभावरूपरसनोत्कर्षादिरूपा । **परिपोषिकेति**। अत्यन्तसुखहेतुवियोगस्य शोकपरिपोषकत्वात् । अत्र करुणः प्रधानं शृङ्गारस्याप्रकृततया हीनबलत्वेनाङ्गत्वम् । **दन्तेति** । ( अपत्यं प्रसूय तदेव भोक्तुमुद्यतायै सिंह्यै तदपत्यदयया स्वाङ्गमर्पितवन्तं जिनं प्रति कस्यचिदुक्तिरियम् ) । करजैर्नखैः । करणे तृतीया । विपाटितानि विदारणानि । परपरित्राणहर्षादनुरागाच्च प्रकटनिबिडरोमाञ्चता । रक्ते रुधिरे मनो यस्यास्तयाऽनुरक्तमनसा च । मृगराजः सिंहो मृगाख्यपुंजातिविशेषनृपश्च । वयमप्येवंविधा भूयास्मेति जातस्पृहः । अपिर्विरोधे । गतस्पृहाणां मुनीनामपि तदुद्रेकात् । (वसन्त-

---

१ ग. °म् । अयं । २ ग. °तितह° । ३ दन्तैः क्ष° । ४ ग. °कारणानि त° । ५ ग. °देतादृशो ।
६ पाटनमित्यारभ्य विसमबाजनकरवादित्यन्तो ग्रन्थः क. पुस्तके न दृश्यते ।

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव[1] पतद्बाष्पाम्बुधौताननाः ।
भीता[2] भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्योऽधुना[3]
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥ ३३९ ॥

अत्र चाटुके राजविषया रतिर्या प्रतीयते तत्र करुण इव शृङ्गारोऽप्यङ्गमिति तयोर्न विरोधः ।

---

सिंहवध्वे परमदयालुं जिनं तद्रक्षार्थं स्वशरीरदायकं प्रतीयमुक्तिः । अत्र दयावीरस्यानुभावविशेषे शृङ्गार उपमानभावेनाङ्गम् । न चात्र दयाऽपि विस्मयोपकारकत्वेनाङ्गम् । बौद्धानां स्वाभाविकदयाशीलत्वेन विस्मयाजनकत्वात् ।

एकत्राङ्गिनि विरुद्धयोरङ्गत्वं द्विधा—तुल्यकक्षतयाऽङ्गाङ्गिभावेन वा साक्षात्परस्याङ्गभावमासाद्य[4] च । तत्राऽऽद्येनाविरोधो यथा— क्रामन्त्यः० ।

अत्र चाटुके या राजविषया रतिस्तत्र करुणशृङ्गारावुभावपि साक्षादङ्गमिति तन्निर्वाहणैकव्याकुलयोस्तयोरेकराजकार्योद्यतयोरिव भटयोः सहजतो विरोधोऽपि न दोषाय ।

---

तिलका छन्दः ) । **अनुभावविशेषे** । दन्तक्षतादिधारणरूपे । **अङ्गमिति** । यथा कान्ताकृतनखक्षतादीनि कान्तोऽप्युपादेयतयाऽनुरागातिशयादङ्गी करोत्येवमसावपीति दयोत्साहपरिपोषकत्वादिति भावः । **विस्मयोपकारकत्वेनेति** । जिनविषयकरतिभावाङ्गभूताद्भुतस्थाय्युपकारकत्वेनेत्यर्थः । दयावीरस्य विस्मयसूचककर्मणा तदुपस्थितेरिति भावः । तत्र च दयावीरशृङ्गारावङ्गमिति तात्पर्यम् । एवं चाङ्गत्वं प्राप्तयोरेवेदमुदाहरणं न तु साम्यविवक्षाया इति शङ्कार्थः । **स्वाभाविकेति** । ब्राह्मणानां दयावदित्यर्थः । केचित्तु जिनदेहे सिंहीदत्तनखक्षतानि बीभत्सप्रतिपादकान्यपि कान्तादन्तक्षतरूपशृङ्गारानुभावसाम्येनोक्तानि जिनं प्रकर्षयन्तीति तद्विषयभावपोषकाणि । अत एव सस्पृहतदवलोकनेनैव रागितुल्यता मुनीनामपीत्याहुः । **तुल्यकक्षतया** । राज्ञि सेनापतिद्वयवत् । **अङ्गाङ्गिभावेन** । **साक्षात्परस्येति** । राज्ञि सेनापतितद्भृत्यवत् । **क्रामन्त्य इति** । ( राजानं प्रति कवेरुक्तिः ) । दर्भाङ्कुरैः क्षताभ्यः कोमलाङ्गुलिभ्यो गलद्रक्तं येषु, ईदृशैः पातितयावकैरिव पादैः क्रामन्त्यः । दर्भाः कुशाङ्कुराः । दावाग्निमित्यत्र परितःशब्दयोगे द्वितीया । विवाहे लाजाहोम एवं भावात् । धूमेन गलद्बाष्पाम्बुता । होमार्थदर्भैः सदर्भता भूमेः । भर्तृकरस्थापितस्वकराः । ( शार्दूलविक्रीडितं छन्दः ) । **भटयोरिति** । साक्षाद्राजसेवक-

---

१ क. °व गलद्बा° । २ क. भीतया । ३ क. °स्त्वद्वैरिना° । ४ क. °मापाद्य वा । त° ।

यथा,

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ ३४० ॥

अत्र, एहीति क्रीडन्ति, गच्छेति क्रीडन्तीति क्रीडनापेक्षयोरागमनगमनयोर्न विरोधः ।

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवाऽऽर्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः॥३४१॥

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम् । तस्य तु शृङ्गारः । तथाऽपि न करुणे विश्रान्तिरिति तस्याङ्गतैव । अथवा प्राग्यथा कामुक

---

यथा—एहि० ।

इत्यत्र प्रधाने क्रीडायामङ्गभावेन भावाभावयोरपि न विरोधः । एहीति क्रीडन्ति गच्छेति क्रीडन्तीति प्रकारेणोभयोरपि प्रकारत्वेन तत्राङ्गत्वात् । तस्माद्विधेययोरेव विरोधो दोषाय न त्वनूद्यमानयोरपीति परमार्थः । प्रकृतोदाहरणे च 'पुनरप्युद्यद्विवाहा इव' इत्युत्प्रेक्षा । तेन गच्छेतिवत्प्रतापे द्वयोरपि साक्षादेवाङ्गत्वम् । तादृशोऽयं प्रभावो येनाऽऽसां पुनर्विवाह उत्प्रेक्ष्यत इति प्रतीतिपर्यवसानात् ।

अङ्गाङ्गिभावेन पराङ्गतयाऽविरोधो यथा—क्षिप्तो० ।

अत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गं, तस्य तु शृङ्गारः । नन्वेवं करुणस्य प्राधान्ये तत्रैव विश्रान्तेरुभयोरङ्गत्वासंभवे कथमुदाहरणत्वमिति न वाच्यम् । शृङ्गारापेक्षया हि तस्य प्राधान्येऽपि न तत्रैव विश्रान्तिरिति तस्यापि प्रभावं प्रत्यङ्गतैव । यतो यथा पूर्वं कामुकः

---

योर्मिथो विरुद्धयोरित्यर्थः । एकप्रधानाङ्गयोर्विरुद्धयोरप्यविरोधे दृष्टान्तमाह—**यथेति** । **एहीति** । ( विष्णुशर्मकृते पञ्चतन्त्रे धृतं पद्यमिदम् ) । आशैव ग्रह इत्यर्थः । **न विरोध इति** । मिलित्वा क्रीडातिशयकारित्वादिति भावः । **क्षिप्त इति** । ( अमरुशतके पद्यमिदम् ) । हस्तावलग्नः क्षिप्त इत्यादिक्रमेणान्वयः । अवधूतो निराकृतः । आर्द्रापराधस्तत्कालकृतापराधः । ( स्रग्धरा छन्दः ) । **करुणोऽङ्गमिति** । रिपुस्त्रीवैक्लव्यस्य तत्कार्यत्वेन तद्व्यञ्जकत्वादिति भावः । क्षिप्तत्वादीनां वीरानुगुणानां शृङ्गाराङ्गसाम्येनालंकारवदुत्कर्षकत्वात्करुणाङ्गत्वमित्याह—**तस्य त्विति** । **करुणस्य** । शृङ्गारेण पुष्टस्य । **अङ्गत्वासंभवे** । प्रभावाङ्गत्वासंभवे । **यथा पूर्वमिति** । यासां पूर्वमीर्ष्याकलुषहृदयानां

---

१ क. °शाशतग्र° । २ क. क्रीडापेक्षयोर्गमनागमनयो° । ३ ग. 'योर्गमनागनयो° । ४ ग. °भिहितो° । ५ क. सास्रने° । ६ क. °स्य शृ° । ७ क. 'धानर्का° । ८ क. न चैवं । ९ क. °ति वा° ।

आचरति स्म, तथा शराग्निरिति शृङ्गारपोषितेन करुणेन मुख्य एवार्थ उपोद्बल्यते ।

उक्तं हि,

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥ इति ।

प्राक्प्रतिपादित[1]रूपस्य रसस्य रसान्तरेण न विरोधः, नाप्यङ्गाङ्गिभावो भवतीति रसशब्देनात्र[2] तत्स्थायिभाव उपलक्ष्यते ॥

इति श्रीकाव्यप्रकाशे दोषदर्शनो नाम सप्तम उल्लासः ॥ ७ ॥

---

करालम्बादिकमकार्षीत्तथा संप्रति शराग्निरित्युपमानतया शृङ्गारपरिपोषितेन करुणेन प्रभावातिशय एव प्रकर्षमानीयते । न चाङ्गाङ्गस्य कथमङ्गत्वमिति वाच्यम् । तदुपकृतस्याङ्गस्योपकारविशेषाधायकतया तस्याप्युपकारत्वात् । यदुक्तम्—गुणः० ।

ननु प्राक्प्रतिपादितरूपवेद्यान्तरसंपर्कशून्यरसस्य न रसान्तरेण विरोधो नाप्यङ्गाङ्गिभाव इत्यसंबद्धमेवैतत्सर्वमिति चेत्, न । रसशब्देनात्र प्रकरणे[3] स्थायिभावस्याभिधानात् । रस्यत इति व्युत्पत्तेः ॥

इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे दोषदर्शनो नाम सप्तम उल्लासः ॥

---

प्राणेश्वरास्तथा चाटुपरा बभूवुस्तासामिदानीं शंभुशराग्निस्तथाविधां दशां करोतीति प्रतीत्येति भावः । अनेन च पुष्ट ईश्वरोत्साहस्तद्विषयरतिभावपोषक इति तात्पर्यम् । **अङ्गाङ्गस्य** । प्रभावातिशयाङ्गकरुणाङ्गस्य शृङ्गारस्य । **अङ्गत्वम्** । प्रभावातिशयाङ्गत्वम् । आत्मसंस्कारोऽन्येन परिपुष्टिः । **तथा** । आत्मसंस्कारेण । दन्तक्षतानीत्यतस्त्वस्येयान्भेदः । तत्र प्रतीतयोः साम्यम् । अत्र कामीवेत्युक्तेः साम्येनैव प्रतीतिरिति । **भावस्येति** । स्थायिभावस्येत्यर्थः । यद्यपि

"बहूनां समवेतानां रूपं यस्य भवेद्बहु ।
स मन्तव्यो रसस्थायी, शेषाः संचारिणः स्थिताः ।
रसान्तरेष्वपि रसा भवन्ति व्यभिचारिणः ।
तथा हि, हासः शृङ्गारे, रतिः शान्ते च दृश्यते ।

---

१ क. 'तस्वरू' । २ क. °त्र स्थयि° । ३ क. °णे ' भावस्या ' ।

क्रोधो वीरे, भयं शोके, जुगुप्सा च भयानके ।
उत्साहविस्मयौ सर्वरसेषु व्यभिचारिणः ॥ ”

इति भरतोक्तेरयं स रसेत्यादौ रत्यादेः स्थायित्वमपि नास्ति तथाऽपि किंचित्प्राधान्यविवक्षया स्थायित्वव्यपदेश इति शुभम् ।

**इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते काव्यप्रदीपोद्द्योते सप्तम उल्लासः ॥ ७ ॥**

---

---

एवं दोषानुक्त्वा गुणालंकारविवेकमाह—

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवाऽऽत्मनः ।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥ ६६ ॥**

---

एवं दोषे निरूपिते गुणालंकारौ प्राप्तावसरौ । तयोर्गुणस्यान्तरङ्गतया प्राथम्यम् । विप्रतिपद्यन्ते तु केचिद्गुणालंकारयोर्भेदे । किं च सामान्यतो लक्षिते विशेषलक्षणमुचितमिति कारिकाद्वयेन तयोः स्वरूपदर्शनमुखेन लक्षणं दर्शयन्नेव भेदकमाह—**ये रसस्या०** ।

अङ्गिनः शरीरे[2]ष्वात्मवत्काव्ये प्राधान्येन स्थितस्य रसस्य धर्माः साक्षात्तदाश्रिता इत्यर्थः । अचलस्थितय इत्यपृथक्स्थितयः । अव्यभिचारिस्थितय इति यावत् । अव्यभिचारश्च रसेन तदुपकारेणे वा । तेन रसं विना ये नावतिष्ठन्तेऽवतिष्ठमानाश्चावश्यं रसमुपकुर्वन्तीत्यर्थः । अत एवानयोर्व्यतिरेकमलंकारे वक्ष्यति । एवं च रसस्योत्कर्षहेतुत्वे सति रसधर्मत्वं तथात्वे सति रसाव्यभिचारिस्थितित्वमयोगव्यवच्छेदेन रसोपकारकत्वं चेति लक्षणत्रयं गुणानां द्रष्टव्यम् । अलंकारमात्रभेदकं तु सत्यन्तभागविमुक्तमिदमेव ग्राह्यम् ।

---

**अन्तरङ्गतयेति** । गुणस्य रसधर्मत्वेन प्रधानतयेत्यर्थः । **विप्रतिपद्यन्त इति** । शब्दाश्रितत्वकाव्यशोभाकरत्वादिधर्माविशेषादिति भावः । **स्वरूपं** लक्ष्यतावच्छेदकं गुणत्वालंकारस्वरूपम् । लक्षणं दर्शयन्नेव भेदकमाहेति पाठः । भेदकमलंकारतः । तच्चाग्रे स्वयमेव वक्ष्यति । **रसस्येति** । अलक्ष्यक्रमोपलक्षणम् । अत एव प्रागप्राप्तेत्यादौ चतुर्थचरणे गुरुस्मरणेन मसृणवर्णस्यानुगुणत्वमुक्तम् । एवं च यत्र रसस्तत्र माधुर्यादिकमस्त्येव । तस्य तद्धर्मत्वात् । क्वचित्तु व्यञ्जकाभावात्तदस्फुटमित्यन्यत् । यथा सरसनेत्यादाविति बोध्यम् । रसदोषातिव्याप्तिवारणायाऽऽह—**उत्कर्षेत्यादि** । स्वमतेन लक्षणमुक्त्वा गुणानां शब्दनिष्ठत्वमेवेति मते लक्षणमाह—**अचलेति** । अचलस्थितित्वं विवृणोति—**अपृथगिति** । रसाभाववदवृत्तय इत्यर्थः । तदेवाऽऽह—**अव्यभिचारीति** । **रसं विनेति** । रसाभाववतीत्यर्थः । मधुरं काव्यमित्यादिव्यवहाराच्छब्दनिष्ठमेव माधुर्यमिति मत इदम् । शब्दादिनिष्ठत्वेऽपि रसवत्काव्यनिष्ठा एवैते स्वीकार्या इति भावः । नन्वेवं नीरसेऽपि व्यञ्जकवर्णादिसत्त्वे तथाव्यवहारान्नायं नियम इत्यत आह—**अवतिष्ठमानाश्चेति** । **अनयोरिति** ।

---

१ क. 'त्रिभेदमा' । २ क. 'रे स्वात्म' । ३ क. 'णच । ते' ।

**आत्मन एवं हि यथा शौर्यादयो नाऽऽकारस्य तथा रसस्यैव माधुर्यादयो गुणा न वर्णानाम्। क्वचित्तु शौर्यादिसमुचितस्याऽऽकारमहत्त्वोदर्दर्शनादाकार एवास्य शूर इत्यादेर्व्यवहारादन्यत्राशूरेऽपि विततकृतित्वमात्रेण शूर इति, क्वापि शूरेऽपि मूर्तिलाघवमात्रेणाशूर इति, अविश्रान्तप्रतीतयो यथा व्यवहरन्ति तद्वन्मधुरादिव्यञ्जकसुकुमारादिवर्णानां मधुरादिव्यवहारप्रवृत्तेरमधुरादिरसाङ्गानां वर्णानां सौकुमार्यादिमात्रेण माधुर्यादि, मधुरादिरसोपकरणानां तेषामसौकुमार्यादेरमाधुर्यादि, रसपर्यन्तविश्रान्तप्रतीतिवन्ध्या व्यवहरन्ति। अत एव माधुर्यादयो रसधर्माः**

---

अन्यथा विशेषणवैयर्थ्यात्। चण्डीदासस्तु—रसधर्ममात्रं लक्षणम्, उत्कर्षहेतुत्वं तु गुणशब्दप्रवृत्तिबीजमित्याह। तदयुक्तम्। शृङ्गारत्वादौ धर्मेऽतिव्याप्तेः।

ननु रसधर्मत्वमेषामसिद्धम्। कथमन्यथा नीरसेऽपि सुकुमारादिवर्णशालिनि मधुरादिव्यवहारः, रसवत्यपीदृग्वर्णाभाववत्यमधुरादिव्यवहार इति। उच्यते—शौर्यादयस्तावदात्मन एव धर्मा इत्यविवादम्। दृश्यते तु क्वचिदशूरेऽप्याकारमहत्त्वादियोगिनि शूरव्यवहारः शूरेऽप्याकारलाघवादियोगिन्यशूरव्यवहारश्च। तत्कस्य हेतोः। अथ क्वचिच्छूरव्यवहारविषये विततकृतिदर्शनादाकार एवास्य शूर इत्यौपचारिकव्यवहाराच्चाभियुक्तानामाकार एवैतादृशः शूरपदवाच्य इति विपर्यासाददूरदर्शिनस्तथा व्यवहरन्ति। तत्त्वज्ञास्तु क्वचिदुपचारत इति वक्तव्यम्। हन्तैवं मधुरादिरसयोगिनि सुकुमारादिवर्णयुक्ते मधुरादिव्यवहाराद्वर्ण एवायं मधुरादिरित्यौपचारिकव्यपदेशाच्चाभियुक्तानां वर्ण एवैतादृशो माधुर्यभागिति विपर्ययाद्रसपर्यन्तावगाहिबुद्धिविधुरा व्यवहरन्ति। तत्त्वालोचिनस्तु—क्वचिदुपचारादिति तुल्यमेतत्।

---

रसधर्मत्वाव्यभिचारिस्थितित्वयोरित्यर्थः। **अन्यथा**लंकारप्रतियोगिकभेदानुमाने संपूर्णस्य हेतुत्व इत्यर्थः। **विशेषणेति**। अलंकारभेदानुमापकहेतौ सत्यन्तरूपविशेषणवैयर्थ्यादित्यर्थः। रसस्योत्कर्षश्चानुभवसिद्धचित्तद्रुत्यादिरूपकार्यविशेषप्रयोजकत्वरूपो बोध्यः। एवं चालंकारव्युदासाय लक्षणद्वये विशेष्यदलमिति फलितम्। रसत्वादिवारणाय सत्यन्तम्। **उत्कर्षहेतुत्वमिति**। अयोगव्यवच्छेदिरसोत्कर्षहेतुत्वमित्यर्थः। अत्रालंकारव्यावृत्तयेऽयोगव्यवच्छेदेनेति। गुणास्तु विद्यमानं रसमवश्यमुपकुर्वन्ति। नत्वलंकाराः। क्वचिदलंकारसत्त्वेऽप्युपकाराभावादिति वक्ष्यति। नीरसादौ व्यञ्जकसत्त्वेऽपि व्यङ्ग्यासत्त्वान्न नियमप्रच्यवः। नापि सूत्रे विशेषणवैयर्थ्यमिति बोध्यम्। **आत्मन एवेति**। न शरीररूपाकारस्येत्यर्थः। **विततत्वम्**। स्थौल्यम्। **औपचारिकेति**। रसशून्येऽपि सुकुमारास्तरणसत्त्वे माधुर्य-

---

१ क. ब शौर्यादयो यथा नाऽऽका° । ग. ब हि शौर्यादयो नाऽऽकारस्य यथा तथा । २ क. ग. °दिरसव्य° । ३ क. °र्पो° । ४ क. °च्छूरे व्य° ।

समुचितैर्वर्णैर्व्यज्यन्ते न तु वर्णमात्राश्रयाः । यथैषां व्यञ्जकत्वं तथोदाहरिष्यते ।

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥ ६७ ॥

ये वाचकवाच्यलक्षणाङ्गातिशयमुखेन मुख्यं रसं संभविनमुपकुर्वन्ति ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽप्युपकारका हारादय

---

ननु शौर्यादेरात्मवृत्तित्ववन्मधुरत्वादीना रसवृत्तित्वव्यवस्थितावेवं स्यात् । सैव त्वसिद्धा ।[1] विनिगमकाभावादिति चेन्मैवम् । भवत्येव विनिगमकाभावो यदि त्वया वर्णमात्राश्रया गुणाः स्वीकर्तुं शक्यन्ते । न त्वेवम् । अविशेषेण रचनायामपि तदभ्युपगमात् । तथा च रसमात्रवृत्तित्वे लाघवं वर्णरचनोभयवृत्तित्वे तु गौरवम् । यतश्चै[2]वमत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णादिभिर्व्यज्यन्त इत्येव सम्यक् । व्यञ्जकत्वं चैषां यथा तथोदाहरिष्यत इति नातिप्रसङ्गशङ्का ।

उपकुर्वन्ति० ।

अङ्गिनो रसस्याङ्गभूतौ शब्दार्थौ । तद्द्वारेण तदतिशयाधानमुखेन ये धर्मा रसमुपकुर्वन्ति तेऽलंकाराः । तत्र शब्दद्वारेणानुप्रासादयोऽर्थद्वारेणोपमादयः । यथा कण्ठाद्यङ्गोत्कर्षद्वारेण

---

व्यवहार औपचारिक इत्यर्थः । एवं रसवत्यपि तदसत्त्वे माधुर्यव्यवहारो व्यञ्जकाभावेन तदग्रहादिति माधुर्यस्य शब्दनिष्ठत्वमयुक्तम् । रसशून्ये मधुरादिवर्णमात्रादापाततश्चमत्कारेऽपि पर्यन्ते तदभावादिति प्रघट्टार्थः । **विनिगमकाभावादिति** । रसवृत्तित्वं वर्णवृत्तित्वं वेत्यत्र विनिगमकाभावादिति भावः । **रचनायामपीति** । एतेन माधुर्यस्य द्वित्वादिवद्व्यासज्यवृत्तितां ध्वनयति । यद्यपि प्रसाद आसत्त्यादिरूप आपाततः शब्दगत एव प्रतीयते तथाऽपि तज्ज्ञानाद्रसगतप्रसादाभिव्यक्तिश्चित्तव्याप्तिकररसप्रतीतिनियामकतया कल्प्यत इत्याहुः । **यतश्चैवमिति** । अत एवेति शेषः ।

**अङ्गिनो रसस्येति** । काव्योपात्तविभावादिभ्यो लब्धात्मनः प्रधानभूतरसस्येत्यर्थः । **शब्दद्वारेणेति** । रमणीया अप्यर्थास्तुच्छशब्देनाभिधीयमाना न तथा चमत्कारायेति भावः । यथा काञ्चनाञ्चलादि वस्त्रमुत्कृष्यैव तत्परिधात्रीं नायिकामप्युत्कर्षयति । न हि रमणीयाऽपि नायिका तुच्छवसनावगुण्ठिताऽऽह्लादाय भवतीत्याहुः । **अर्थद्वारेणेति** । रसाद्यभिव्यञ्जकविभावाद्युत्कर्षाधानद्वारेणेत्यर्थः । ते हि न साक्षाद्रसोपयोगिनः । अप्रकृतत्वात् । अलंकारैराहितातिशयाश्चाऽऽस्वादातिशयं जनयन्ति । अनुभूयते हि निरलंकारात्सालंकारे कश्चनाति-

---

१ ग. °चितवर्ण° । २ क. °श्चैवं मा° ।

इवालंकाराः । यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्यवसायिनः[1] । क्वचित्तु सन्तमपि नोपकुर्वन्ति । यथा[3]क्रममुदाहरणानि—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥ ३४२ ॥

इत्यादौ वाचकमुखेन

मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥ ३४३ ॥

---

शरीरिणोऽप्युपकारका हारादयः । सन्तमिति यत्र रसस्य संभवस्तत्र तमुपकुर्वन्ति यत्र तस्यासंभवस्तत्रोक्तिवैचित्र्यमात्रपर्यवसिता इति भावः । जातुचिन्न तु नियमेन । तथा च सन्तमपि रसं क्वचिन्नोपकुर्वन्तीत्यर्थः । एतावता रसावृत्तित्वं चलस्थितित्वं च दर्शितम् । तथा च रसोपकारकत्वे सति तदवृत्तित्वं तथात्वे सति रसव्यभिचारित्वमनियमेन रसोपकारकत्वं चेति सामान्यलक्षणत्रयमलंकाराणाम् । गुणमात्रभेदकं तु सत्यन्तभागरहितं तद्बोधितव्यम् । अन्यथा व्यर्थविशेषणत्वात् ।

तत्र शब्दद्वारेण रसोपकारकत्वं यथा—**अपसारय०** ।

अत्र रेफानुप्रासः शब्दमलंकुर्वञ्शृङ्गारमुपकरोति । रेफस्य शृङ्गारव्यञ्जकत्वात् ।

अर्थद्वारेण यथा—**मनोराग०** ।

---

शय इति भावः । अलंकारा हि विभावाद्युत्कर्षयन्तो बहुधोद्दीपनाः । क्वचिदनुभावा अपि । यथा नायकादिकृतनायिकादिवर्णन इत्याहुः । **तत्र तामिति** । हारादयोऽपि कामिनीसौन्दर्ये तदङ्गानामुत्कर्षकाः । कुरूपाङ्गे तु दृष्टिवैचित्र्यमात्रहेतव इति भावः । **क्वचिदिति** । तेनोपकारनियमव्यवच्छेदः । यथाऽतिसुकुमारनायिकाङ्गे ग्रामीणालंकाराः । **लक्षणत्रयमिति** । आद्ययोः सत्यन्तं पदादिदोषातिव्याप्तिवारणायेति बोध्यम् ।

**अपसारयेति** । दूरी कुर्वित्यर्थः । घनसारः कर्पूरः । घनोपमः पिण्डश्च । कमलैः पुष्पैः जलमलभूतैश्च । किम् । न किमपीत्यर्थः । अलमलमिति द्विरभिधानमवधारणार्थम् । बाला । तथाविधदुःखासहिष्णुः । शृङ्गारम् । विप्रलम्भशृङ्गारम् । **व्यञ्जकत्वादिति** । विप्रलम्भशृङ्गारगतमाधुर्यव्यञ्जकत्वादित्यर्थः ।

**मन इति** । माधवानुरक्ताया मालत्या लवङ्गिकां प्रत्युक्तिः । रागो मनस्येव । कन्यका-

---

१ ग. °त्र्यप° । २ क. °वसिताः । क्व° । ३ क, ग. °था अप° । ४ क. °धूमोज्ज्व° । ५ क. ग. °व बलीया° । ६ क. सां तातस्त्रातुं प्र° ।

इत्यादौ वाच्यमुखेनालंकारौ रसमुपकुरुतः।

चित्ते विहट्टदि ण टुट्टदि सा गुणेसु
सज्जासु लोट्टदि विसट्टदि दिम्मुहेसु।
बोलम्मि वट्टदि पवट्टदि कव्वबन्धे
झाणे ण टुट्टदि चिरं तरुणी तरट्टी ॥ ३४५ ॥

इत्यादौ वाचकमेव।

---

अत्र विषमिवेत्यादिरुपमा। सा चार्थमलंकुर्वाणा रसमुत्कर्षयति। विषमिवेत्युपमावशेन विसर्पणादेरतिशयप्राप्त्या विप्रलम्भोत्कर्षात्।

रसं विनाऽप्यलंकारसंभवो यथा—स्वच्छन्दोच्छलदच्छकच्छ, इत्यादौ चित्रेऽपि।

सत्यपि रसे तदनुपकारकत्वं शब्दालंकारस्य यथा—चित्ते विहट्टदि०।

अत्रानुप्रासेन शब्दमात्रमलंक्रियते न तु सन्नपि शृङ्गारः। टवर्गस्य तत्प्रतिकूलत्वात्। अत्र च प्रतिकूलवर्णत्वं न दोषः। प्राकृतस्यौजोगुणप्रधानत्वादस्य च तदभिव्यञ्जकत्वा-

---

त्वेन सखीषु प्रकाशनोपायाज्ञानात्। तीव्रं यथा स्यादेवं विसर्पति। सर्वतः संचरति। तीव्रमिति विषविशेषणमित्येके। रागः कर्ता तत उत्कर्षं प्राप्तः प्रमाथी क्षोभकारी। विधुतः प्रज्वालितोऽत एव निर्धूमं यथा स्यात्तथा। यद्वा निर्धूमः पावक इव ज्वलति। ततोऽप्युत्कर्षकाष्ठां गतो गरीयान्सांनिपातिकज्वर इव प्रत्यङ्गं हिनस्ति पीडयतीत्यर्थः। इत इत इति मौग्ध्यादङ्गप्रदर्शनम्। न तातः। वरान्तरानुसरणात्। राजानुवर्तनाच्च। नाम्बा। तथा तदप्रतिषेधात्। न भवती। पित्रोः संमते सख्याः प्रतिषेधासंभवात्। स्वच्छन्देति। गङ्गाविषयरतिभावसत्त्वादङ्गिपदेन भावस्याप्युक्तेश्च चिन्त्यमेतत्।

चित्ते इति०।

चित्ते विघटते न त्रुट्यति सा गुणेषु शय्यासु लुठति विकसति दिङ्मुखेषु।
वचने वर्तते प्रवर्तते काव्यबन्धे ध्याने न त्रुट्यति चिरं तरुणी प्रगल्भा ॥

विघटते चमत्करोति चित्तानुरूपं व्यवहरति। न त्रुट्यति गुणविषये हीना न भवति। यद्वा त्वद्गुणश्रवणेऽर्थान्तरश्रवणपरा न भवति। शय्यासु इति बहुवचनेन विरहातिशयः। लुठति, इतस्ततः परिवर्तते। दिङ्मुखेषु भवद्दिदृक्षया विकसति सादरमवलोकयति। वचने वर्तते। अविरतं प्रलपति। काव्यबन्धे भवद्वर्णनायाम्। ध्याने भवच्चिन्तायाम्। ध्यानेन भवच्चिन्तया संप्रति कृशा भवतीत्यर्थ इत्येके। दूत्या उक्तिः। अनुप्रासेन। परुषवर्णारब्धेनौजोव्यञ्जकेन। शृङ्गारः। विप्रलम्भः।

---

१ क. °त्वादिति क°।

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नाऽऽस्वादिता नोज्झिता
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥ ३४५ ॥

इत्यादौ वाच्यमेव न तु रसम् । अत्र बिसलता न जीवं रोद्धुं क्षमेति प्रकृताननुगुणोपमा ।

---

दिति कश्चित् । वस्तुतस्तु सत्यपि प्रतिकूलवर्णत्वे रसस्य नानुत्पत्तिरेवानुभवविरोधात् । किंत्वपकर्षमात्रम् । न चापकृष्टेऽपि विद्यमाने तस्मिंष्टवर्गानुप्रासस्योपकारकतेति सारम् ।

सत्यपि रसे तदनुपकारकत्वमर्थालंकारस्य यथा—**मित्रे क्वापि गते०** ।

अत्रोपमार्थालंकारः । न चासौ प्रकृतस्य शृङ्गारस्योपकारिका । विप्रलम्भे हि जीवनिर्गमोऽपि वर्ण्यते तदुत्कर्षाधायकत्वादिति तन्निरोधहेतूपादानमनुचितम् । प्रत्युत स्नेहाभावे पर्यवस्यति । तदेतदुक्तम्—'अत्र विसलता जीवं निरोद्धुमशक्तेति प्रकृताननुगुणोपमा' इति । अशक्तत्वं नानुचितत्वमिति प्राञ्चः । वस्तुतस्तु तदन्यथा व्याख्येयम् । बिसलता जीवं रोद्धुमशक्तेत्युपमा प्रकृताननुगुणा प्रकृते विषयेऽनुगुणरहिता । उपमाया अनुगुणं यत्सादृश्यं तच्छून्या । तस्मादत्रोपमा नालंकारः किं तूत्प्रेक्षा । न च तस्यामपि तद्दोषतादव-

---

**मित्र इति** । अत्र चक्राह्वगतविप्रलम्भाभासः । मित्रे सूर्ये सुहृदि च । क्वापि अज्ञातरूपे देशविशेषे । सरोरुहेत्यनेनैकदेशवासेन सुहृत्त्वम् । बद्धानने मुद्रिते मौनिनि च । एताभ्यां मित्रस्य प्रतिकर्तुरभावः सहवासिषु च तथाऽतियत्नाभावः सूचितः । क्रन्दत्सु शब्दायमानेषु रुदत्सु च । अनेन क्रन्दज्जनान्तरदर्शनेन दुःखातिरेकः । वीक्ष्य दयितेत्यनेन नायिकासक्तनायकान्तरदर्शनेन विप्रलम्भोद्दीपनम् । सारसः पक्षिभेदः । वियोगिना संध्याकालकल्पितचक्रवाकीविच्छेदवता । बिसं मृणालम् । आस्वादिता भक्षिता । उज्झिता त्यक्ता । अर्गलासादृश्यं च ऋजुत्वगलद्वारपिधानादिना । **शृङ्गारस्य** । विप्रलम्भस्य । तदाह—**विप्रलम्भे हीति** । **जीवनिर्गमः** । जीवनिर्गमोपायानुसरणम् । **तन्निरोधहेतूपादानमिति** । अर्गलासादृश्येन हि तथात्वप्रतीतिरुत्कृष्यते । **अत्र बिसेति** । जीवं निरोद्धुं जीवनिरोधफलकम् । बिसलता तद्ग्रहणम् । अशक्ता अनुचितम् । अतः प्रकृताननुगुणा सेत्यक्षरार्थः । **यत्सादृश्यं तच्छून्येति** । बिसलतायां कविविवक्षितस्य जीवनिर्गमप्रतिबन्धकत्वरूपस्य सादृश्यस्याभावादिति भावः । अत्र पक्षेऽशक्तत्वमसमर्थत्वम् । लक्षणाऽत्र नेति युक्तत्वम् । एतेन ऋजुत्ववक्रनिधानगलद्वारपिधायकत्वादि सादृश्यमस्त्येवेति परास्तम् । **न च तस्यामपीति** । सादृश्याभावेन तस्या अप्यसंभवः । तस्या अपि

---

१ क. °सक्तं पु° । २ ग. °काह्वेन° । ३ क. ग. °ता जीवं रोद्धुं नक्ष° ।

**एष एव च गुणालंकारप्रविभागः । एवं च समवायवृत्त्या शौर्यादयः संयोगवृत्त्या तु हारादय इत्यस्तु गुणालंकाराणां भेदः । ओजःप्रभृतीनामनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति[1] गड्डलिकाप्रवाहेणैषां भेद इत्यभिधानमसत् । यदप्युक्तम्—काव्यशोभायाः[2] कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलंकारा इति । तदपि न युक्तम् । यतः किं समस्तैर्गुणैः काव्यव्यवहार उत कतिपयैः । यदि समस्तैः, तत्कथमसमस्तगुणा गौडी पाञ्चाली च रीतिः काव्यस्याऽऽत्मा । अथ कतिपयैः, ततः**

---

स्थ्यम् । संभावितेनापि सादृश्येन तत्प्रवृत्तेः । न तूपमाबद्वस्तुसत्तैव । जीवरोधकत्वरूपसादृश्यमेपि विषये ह्युत्प्रेक्षणीयकोटावेवान्तर्भूतं यथोच्यते—रोधकमिव निहितमिति । तर्हि कथमिदं प्रकृतोदाहरणमिति चेदुत्प्रेक्षातो रसातिशयाप्रतीतेः । प्रत्युत तादृशोत्प्रेक्षाया उपमोक्तन्यायेनापकर्षपर्यवसानादिति । एष एव गुणालंकारविभागो विचारसहो नान्यः ।

तदेव गुणालंकारयोर्भेदे व्यवस्थिते यत्कैश्चिदुक्तम्—लौकिकयोर्गुणालंकारयोः शौर्यादिहाराद्योः समवेतत्वसंयोगित्वाभ्यां भेदः संभवति । अलौकिकयोर्माधुर्याद्यनुप्रासोपमाद्योरुभयोरपि समवेतत्वादनुपपन्नो भेदः । तस्मात्तयोर्भेदाभिधानं गड्डुलिकाप्रवाहन्यायेन । तथा हि—गड्डुलिका मेषी काचिदेका केनचिद्धेतुना पुरो गच्छति, इतरास्तु विनैव निमितविचारं तामनुगच्छन्ति तथा केनाप्यालंकारिकेण गुणालंकारौ केनचिदभिप्रायेण भिन्नतयोक्तौ, इतरे तु हेतुविचारं विनैव तदनुसारेण तद्भेदं वदन्तीति, तदसम्यग्वेदितव्यम् ।

यदप्युक्तं वामनेन—काव्यशोभा काव्यव्यवहारानिमित्तं कश्चिदतिशयः । तद्धेतवो गुणास्तदतिशयहेतवस्त्वलंकारा इति तयोर्भेदः, इति । तदप्ययुक्तम् । यतः शोभाहेतवो गुणा इत्युक्तं तत्र किं समग्रैर्गुणैः काव्यशोभोत्पत्तिरुत येन केनापि । आद्ये पाञ्चाली-गौडीया च रीतिः कथं काव्यस्याऽऽत्मा । माधुर्याद्यभावेन समस्तगुणाभावा-

---

सादृश्यमूलकत्वादिति भावः । **एष एवेति** । रसधर्मत्वचलस्थितित्वरूपः । **विभागः** । भेदकः । **उभयोरपीति** । माधुर्यादिगुणसदृशवर्णत्वरूपानुप्राससादृश्यादिरूपोपमाद्योरित्यर्थः । **समवेतत्वादिति** । समवायपदं नित्यसंबन्धोपलक्षणम् । तेन सामान्यादिगतसादृश्यसंग्रहः । **तामनुगच्छन्तीति** । अग्रिमायाः कूपादिपातेऽन्या अपि कूपादौ पतन्ति चेति शेषः । **अभिप्रायेण** । भ्रान्त्या । **तदतिशयेति** । काव्यशोभातिशयेत्यर्थः । **कथं काव्यस्याऽऽत्मेति** । तदुक्तं वामनेन—रीतिरात्मा काव्यस्य । सा च पदसंघटनात्मिका त्रिविधा । वैदर्भी पाञ्चाली गौडी च । सर्वगुणव्यञ्जकवर्णवस्या-

---

१ क. 'तिर्गड्ड' । २ क. 'भाक' । ३ क. 'मप्युत्प्रे' । ४ क. काव्ये शो' ।

अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः ॥३४६ ॥

इत्यादावोजःप्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्राप्तिः ।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।

अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥ ३४७ ॥

इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्तकौ ।

---

च्छोभानुत्पत्तेः । अन्त्ये **अद्रावत्र०** ।

इत्यादावोजःप्रसादगुणसत्त्वात्काव्यव्यवहारप्रसङ्गः । न हि मन्मत इव तन्मतेऽपि तद्व्यवहारेऽलंकारापेक्षा । तेन गुणमात्रेणैव काव्यव्यवहारस्वीकारात् ।

यदपि शोभातिशयहेतवोऽलंकारा इति तदप्ययुक्तम् ।

**स्वर्गप्राप्ति०** ।

इत्यत्र पूर्वार्धे विशेषोक्तिः । एकगुणहानिकल्पनया शेषगुणदार्ढ्यकल्पना विशेषोक्तिरिति वामनलक्षणात् । उत्तरार्धे व्यतिरेकः । उपमेयस्य गुणातिरेकत्वं व्यतिरेक इति तल्लक्षणात् । एतौ च गुणमनपेक्ष्यैव काव्यव्यवहारहेतुशोभाजनकौ । एवमन्यत्राप्यूह्यम्[१] । नन्वत्रापि प्रसादादेर्वर्तमानत्वात्कथं गुणानपेक्षत्वमलंकारयोः । किं च निर्गुणत्वे कथं त्वन्नयेऽपि काव्यव्यवहारः । सगुणत्वविशेषणाभावादिति चेत् । अस्त्येवात्र गुणस्तथा ज्ञानं च । परं तु किंचिद्गुणवत्त्वस्य शोभाहेतुत्वेऽतिप्रसङ्गात्समस्तगुणवत्त्वं तथा वक्तव्यम् । न चात्र तत्सामग्र्यम् । तथा च गुणजन्यां शोभामनपेक्ष्यैवालंकाराभ्यां शोभासंपत्तिरिति तात्पर्यम् ।

---

द्या । प्रसादौजोव्यञ्जकवर्णवती गौडी । माधुर्यप्रसादवदक्षरयुता पाञ्चाली । रीतिधर्मा गुणाः शब्दार्थोभयरूपं काव्यं शोभयन्ति । शब्दार्थाश्रया अलंकारास्तच्छोभाया अतिशयं कुर्वन्तीति । तत्र वैदर्भ्यां माधुर्यस्य प्रसादस्य च सत्त्वेन संभोगशृङ्गारादौ लेशत ओजःसत्त्वेऽपि क्षत्यभावेन सैव काव्यस्याऽऽत्मा स्यान्नेतरेत्युक्त-पाञ्चाली गौडीया चेति । **शोभानुत्पत्तेरिति** । शोभाहीनेव न काव्यत्वमिति भावः ।

**अनेन** । मानुषदेहेनैव स्वर्गसुखप्राप्तिरित्यर्थः । तदेव व्यतिरेकेणोपपादयति—**अस्या इति** । **उपमेयस्येति** । अधररसस्य सुधारसापेक्षयाऽऽधिक्योक्तेरिति भावः । **एतौ चेति** । एवं चात्र माधुर्यव्यञ्जकवर्णाभावेनौजसश्च प्रकृतविरुद्धत्वेन गुणाहितशोभाया अभावे गुणाहितशोभातिशयकारिस्वरूपालंकारलक्षणस्य निरुक्तालंकारद्वयेऽव्याप्तिरिति भावः । **अतिप्रसङ्गादिति** । अद्रावत्रेत्यादावित्यर्थः । **तात्पर्यमिति** । वस्तुतोऽत्र शृङ्गारे

---

१ क. °रप्र° । २ क. °भू । प्र° ।

**इदानीं गुणानां भेदमाह—**

**माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ।**

**एषां क्रमेण लक्षणमाह—**

**आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ॥ ६८ ॥**

---

इदानीं गुणानामलंकारभेदे सिद्धे दशविधत्वव्युदासाय तद्भेदमाह—**माधुर्यौजः०** । विभागक्रमेणैषां लक्षणमाह—**आह्लादकत्वं०** ।

आह्लादकत्वं यद्यानन्दहेतुत्वं तर्हि न शृङ्गारस्यापि । तस्यैव सुखात्मत्वेनातजनकत्वात् । आनन्दस्वरूपत्वं चेत्तर्हि सर्वेषामेव रसानामित्यत आह—द्रुतिकारणमिति । द्रुतिश्चेतसो गलितत्वमेव द्वेषादिजन्यकाठिन्याभावः । तथा च यद्वशेन श्रोतुर्निर्मनस्कतेव संपद्यते तदाह्लादकत्वस्वरूपं माधुर्यमित्यर्थः । यदुक्तम्—

गलितत्वमिवाऽऽह्लादपदव्या हृदये ददत् ।
माधुर्यं नाम शृङ्गारे प्ररोहं गाहते गुणः ॥ इति ।

---

माधुर्यमेव शोभाधायकं न विद्यमानमप्योज इति । ओजोनुविद्धत्वात्प्रसादोऽपि न तच्छोभाहेतुः । एवं च काव्यव्यवहारनिमित्तगुणजन्यशोभाभावात्तस्य काव्यत्वमेव न स्यादिति भावः । न चेष्टापत्तिः । नायकयोरनुरागातिशयस्य रदच्छदरसास्वादातिशयस्य च काव्योपात्ततया रसानुभवस्य सर्वसिद्धत्वात् ।

**न पुनर्दशेति ।**

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥
इति वैदर्भमार्गस्य प्राणा दशगुणा मताः ।

इति वामनोक्ता दश न । यतः सामाजिकानां नवरसजन्यास्तिस्रोऽवस्थाः । द्रुतिर्विस्तारो विकासश्चेति । तत्र शृङ्गारकरुणशान्तेभ्यो द्रुतिश्चित्तस्य । वीररौद्रबीभत्सेभ्यो विस्तारस्तस्य । हास्याद्भुतभयानकेभ्यो विकास इति । विकासश्च हास्ये वदनस्याद्भुते नयनस्य भयानके द्रुतापसरणरूपो गमनस्य । स च क्वचिद्द्रुत्या क्वचिद्विस्तारेण च युक्तः । विभाववैचित्र्यात् । प्रसादस्तु सर्वेषामाधिक्यकारीत्यवस्थात्रयरूपकार्यवैचित्र्यनियामकतया कारणत्रयमेव कल्प्यते । कारणवैचित्र्येण त्रयाणामेव स्फुटमुपलम्भात् । अवान्तरगुणानामङ्गाङ्गिभाववैचित्र्येणाऽऽनन्त्यादस्फुटत्वाच्चेति भावः । **गलितत्वमिवेति** । मुख्यद्रवत्वासंभवादिवेत्युक्तम् । शौर्यक्रोधाद्याहितदीप्तत्वविस्मयहासाद्याहितविक्षेपपरित्यागेन चित्तस्याऽऽर्द्रताख्यो नेत्राम्बुपुलकादिसाक्षिको वृत्तिविशेष इत्यर्थः । तत्कारणं माधुर्यमिति भावः । विभावादिचर्वणाजन्यवृत्त्याऽऽनन्दांशे भग्नावरणकत्वप्र-

शृङ्गारे ( अर्थात् ) संभोगे । द्रुतिर्गलितत्वमिव । श्रव्यत्वं पुनरोजः-प्रसादयोरपि ।

**करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।**

अत्यन्तद्रुतिहेतुत्वात् ।

**दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥ ६९ ॥**

चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः ।

---

क्वासावित्यत आह—शृङ्गार इति । शृङ्गारपदं संभोगपरम् । विप्रलम्भेऽतिशयस्य वक्तव्यत्वात् । भास्करस्तु श्रव्यत्वं माधुर्यस्य लक्षणमाह स्म । तदयुक्तम् । ओजःप्रसादयोरपि तत्सत्त्वेनातिव्याप्तेः । शब्दनिष्ठत्वाच्च ।

तत्किं संभोग एव माधुर्यं नेत्याह—**करुणे०** ।

संभोगात्करुणे तस्माद्विप्रलम्भे ततोऽपि शान्तेऽतिशयितं माधुर्यम् । हास्यादेरप्यपगमेनातिद्रुतिहेतुत्वात् । इयांस्तु विशेषः—संभोगविप्रलम्भयोस्तन्निःसपत्नम् । शान्ते तु जुगुप्साद्यन्वयादोजोलेशानुविद्धमिति ।

**दीप्त्यात्म०** ।

दीप्तिस्वरूपा या मनसो विस्तृतिर्ज्वलितत्वमिव । तथा च यद्वशाज्ज्वलितमिव मनो जायते तदोज इत्यर्थः । क्वेदमित्यत आह—**वीररसस्थिति०** ।

---

काशसुखस्यैव रसत्वात् । आह्लादकत्वमित्यत्र कः स्वार्थे । करुणविप्रलम्भशान्तेषु विजातीया विजातीया द्रुतिः । तत्कारणाह्लादोऽपि विजातीय एव । तेषां सर्वेषां च माधुर्यत्वेन व्यवहार इति तत्त्वम् । **श्रव्यत्वम्** । श्रवणानुद्वेजकत्वम् । **ओजःप्रसादयोरपीति** । तत्रौजसि क्रोधादिकृतं दीप्तत्वमेवावगम्यते न माधुर्यम् । प्रसादे नियतवर्णाभावान्न माधुर्याभिव्यक्तिरिति भाव इति ।

**करुणे इति** । करुणसंचारिणो निर्वेदस्य विषये ह्यलंप्रत्ययहेतुत्वात्प्रतिबन्धकविषयरागोच्छेदकत्वादातिद्रुतिः । तत्स्थायिशोकापेक्षया विप्रलम्भस्थायिरतेः कोमलतया, करुणे प्रियनाशने सङ्गमाशानिवृत्तौ चित्तविक्षेपस्य निर्वेदविरोधिनः संभवेन विप्रलम्भे संगमाशासत्त्वेन प्रियालाभाद्विषयान्तररागस्य सर्वथोच्छेदेन निर्वेददार्ढ्यात्तदपेक्षया विप्रलम्भेऽधिका द्रुतिः । शान्ते च निर्वेदस्य स्थायितया सर्वात्मना विषयनिवृत्तौ निर्भरमात्मसुखालम्बनमित्यतिशयिता द्रुतिरिति भावः । अतिशयो यथोत्तरं तारतम्यम् । कोमलकोमलतरकोमलतमभेदेन द्रुतौ तारतम्यात् । संभोगे तु विषयरागौत्कट्येन निर्वेदासत्त्वान्न तथा द्रुतिः । अत एवात्र नाश्रुपातलेशोऽपि । न च तर्हि मानिन्याश्चरणानतिव्यतिकर (पृ० १०४ पं० ६) इति कथम् । प्रसादेन मानभङ्गमात्रम् । संभोगप्रवृत्तिस्तु तदुत्तरमेवेति न दोषः ।

**विस्तृतिः** । द्रुतिविरोधिनी काचन वृत्तिश्चित्तस्य ।

**बीभत्सरौद्ररसयोस्तस्याऽऽधिक्यं क्रमेण च ।**

**वीराद्बीभत्से ततोऽपि रौद्रे सातिशयमोजः ।**
**शुष्केन्धनाग्निवत्स्वच्छजलवत्सहसैव यः ॥ ७० ॥**
**व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः ।**

---

अस्याधिकरणान्तरमाह—**बीभत्स०** ।

वीराद्बीभत्से ततोऽपि रौद्रे चित्तदीप्तेः कार्यायाः सातिशयतया कारणमोजः क्रमेणोत्कर्षवत् । तदेतद्वीररौद्रयोर्निष्प्रतिपक्षं बीभत्से तु माधुर्यलवानुविद्धमिति विशेषः । प्राधान्येन माधुर्यौजसोरेकैकविधानमत्र प्रक्रान्तमतो हास्याद्भुतभयानकेषु न किंचिद्विहितम् । तेषूभयगुणप्राधान्यात् ।

**शुष्केन्धना०** ।

ओजसि शुष्केन्धनाग्निवन्माधुर्ये स्वच्छशर्करावस्त्रादिजलवद्यो गुणोऽन्यद्व्याप्यं चित्तं झटित्येव रसेन व्याप्नोति स प्रसादः । करणस्यापि स्वातन्त्र्यविवक्षया य इति निर्देशः । अयं

---

**वीराद्बीभत्स इति** । स्निग्धस्यापि सामाजिकचित्तस्य द्वेष्यविषयसंपर्केण दीप्तत्वमुष्णता जायते । तत्र वीरस्य द्वेष्यनिग्रहे जिगीषामात्रम् । बीभत्सं तु जुगुप्सितविषयेऽत्यन्तत्यागेच्छा । रौद्रे त्वपकारिणि वधावधिकः प्रयास इति क्रमेण दीप्त्याऽऽधिक्यं बोध्यम् । **तेषूभयगुणप्राधान्यादिति** । हास्ये शृङ्गारविभावादिप्रभवत्वेन माधुर्यस्य विकासधर्मतया वीरादिप्रभवतया चौजसश्च सत्त्वात् । भयानकाद्भुतयोश्च वीरबीभत्सशृङ्गारविभावादिप्रभवतयौजसो माधुर्यस्य च सत्त्वात् । वीरादेर्हि विकृताद्भयानको लोकोत्तराद्द्भुतः । शृङ्गारविभावादितोऽपि नवोढाया भयानकस्य दृष्टत्वादिति भावः । विभावादिवैचित्र्यं न द्रुत्यादिभेदप्रयोजकम् ।

शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणो रसः ।
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्सात्तु भयानकः ॥ इत्युक्तेः ।

शृङ्गारादिपदेन तदाभासा अपि ग्राह्याः । किं च

भयानकेऽद्भुते हेतुं बीभत्सं च बभाषिरे ॥
बीभत्से सति भीरूणामुत्पद्येत भयानकः ।

इति च । एवं शृङ्गारादीनां नियतविभावादित्वेन गुणनियमः । हास्याद्भुतभयानकेषु तु विभावाद्यनियमान्माधुर्यौजसोः सत्त्वान्न तन्नियम इति भावः ।

---

१ क. °ण तु । २ क. °र्यबलानु° ।

अन्यदिति व्याप्यमिह चित्तम् । सर्वत्रेति सर्वेषु रसेषु सर्वासु रचनासु च ।

गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥ ७१ ॥

गुणवृत्त्या उपचारेण, तेषां गुणानामाकारे शौर्यस्येव । कुतस्त्रय एव न दशेत्याह–

केचिदन्तर्भवन्त्येषु दोषत्यागात्परे श्रिताः ।
अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥ ७२ ॥

---

च सर्वेषु रसेष्वाधेयतया सर्वासु रचनासु व्यङ्ग्यतया स्थित इति तन्त्रेणाऽऽह—सर्वत्र विहितस्थितिरिति ।

कथं तर्हि तत्त्ववेदिनामपि शब्दार्थयोर्मधुरादिव्यवहार इत्यत आह—**गुणवृत्त्या०** ।

गुणवृत्तिरुपचारः । आकारे शौर्यस्येव व्यञ्जके सुकुमारवर्णादौ तदुपचार इत्यर्थः । तेषां गुणानाम् ।

ननूक्तलक्षणाः श्लेषादयोऽपि दश दुरपह्नवास्तत्कुतस्त्रय एव न पुनर्मदुक्ता अपि दशेत्यत आह—**केचिदन्त०** ।

एषु मदुक्तलक्षणेषु माधुर्यादिषु । इदं चोपलक्षणम् । अलंकारध्वन्योरप्यन्तर्भावस्य दर्शयिष्यमाणत्वात् । उक्तान्तर्भावादिहेतुत्रयोपादानमप्युपलक्षणम् । वैचित्र्यमात्रपर्यवसानस्यापि दर्शयिष्यमाणत्वात् । दोषत्यागादिति । दोषाभावस्वरूपत्वोत्तद्व्यापकतया वा । दोषत्वं कुत्रचिदिति । दोषस्वभावस्य गुणस्वभावस्वानौचित्यात्स्वभावभङ्गप्रसङ्गात् । तथा हि—

---

**आधेयतयेति** । विशेषणनिष्ठः संबन्ध इति मत इदम् । **रचनास्वति** । यद्यपि शब्दार्थयोरपि व्यञ्जकत्वमनुपदं वक्ष्यति तथाऽपि रचनायाः प्रसादे साधारणं व्यञ्जकत्वं प्रसिद्धम् । शब्दार्थयोरपि रचनावैरूप्ये प्रसादाव्यञ्जकत्वादिति भावः ।

**आकारे** । स्थूलशरीरे । **वर्णादौ** । आदिनाऽर्थरचने । शब्दार्थरचनानां नानात्वाद्रसनिष्ठमेव माधुर्यादीत्युक्तयुक्तेरिति भावः ।

**उक्तलक्षणाः** । वामनादिभिः । तद्व्यापकतया चेति पाठः । दोषाभावव्यापकतये-

---

१ क. °त्वात्तु व्याप° । ख. °त्वात्तत्प्रापक° ।

बहूनामपि पदानामेकपदवद्भासनात्मा यः श्लेषः, यश्चाऽऽरोहावरोहक्रमरूपः समाधिः, या च विकटत्वलक्षणोदारता, यश्चौजोमिश्रितशैथिल्यात्मा प्रसादः, तेषामोजस्यन्तर्भावः। पृथक्पदत्वरूपं माधुर्यं भङ्ग्या साक्षादुपात्तम्। प्रसादेनार्थव्यक्तिर्गृहीता। मार्गाभेदरूपा समता क्वचिद्दोषः। तथा हि। मातङ्गाः किमु वल्गितैरित्यादौ सिंहाभिधाने

---

श्लेषस्तन्मते बहूनामपि पदानामेकवद्भासनम्। समाधिस्त्वारोहावरोहयोः क्रमः। स चोत्कर्षापकर्षयोर्वैरस्यानाधायको विन्यासः। उदारत्वं विकटाक्षरत्वम्। तच्च नृत्यद्भिरिव पदैर्या घटना तत्त्वम्। प्रसाद ओजोमिश्रितं शैथिल्यम्। सर्वशैथिल्यस्य दोषत्वात्। तदेतच्चतुष्टयमोजस्यन्तर्भूतम्। यद्यपि दीप्तिजनकत्वरूपे रसनिष्ठ ओजसि नैषामन्तर्भावसंभवस्तथाऽपि तत्वीकारेण स्वी क्रियते। तद्व्यञ्जके गाढबन्धलक्षणे तदन्तर्भाव इत्यर्थः। एवमग्रेऽपि। पृथक्पदरूपं तु माधुर्यं भङ्ग्या साक्षादेवोपात्तम्। यथोक्तमाधुर्यव्यञ्जकत्वेनासमासस्य विधानात्। अर्थव्यक्तिस्तु झटित्यर्थसमर्पकतया। सा च प्रसादपदेनैवोपात्ता। यथोक्तप्रसादस्य तद्व्यङ्ग्यत्वात्। समता त्वारब्धवैदर्भ्यादिमार्गापरित्यागः। सा च क्वचिद्दोष एव। यथा—'मातङ्गाः किमु वल्गितैः' इत्यादौ प्रारब्धस्य मसृणवर्णत्वस्य सिंहाभिधा-

---

त्यर्थः। **एकवद्भासनमिति**। तच्च संधिसौष्ठवादेकस्थानीयवर्णोपन्यासाच्च। यथा अस्त्युत्तरस्यामिति। अत्र संधिः सन्नपि न प्रतीयते। वर्णाश्च प्रायेणैकस्थानीयाः। **आरोहेति**। आरोहो गाढत्वमवरोहः शैथिल्यम्। तयोः क्रमः। अवरोहपूर्वक आरोहः। आरोहपूर्वकोऽवरोहो वा। गाढवर्णमिश्रितशिथिलस्यापि गाढत्वोपगमात्। केवलमारोहोऽवरोहो वा वैरस्याव्यापकः। यथा चञ्चद्भुजभ्रमितचण्डगदाभिघातेत्यत्र संचूर्णितेत्यन्तमारोहः। सुयोधनान्तोऽवरोहः। पुनस्तत्वान्ते पूर्वः। भीमान्ते पर इति। विकटत्वं विच्छेदात्पदानां नृत्यप्रायत्वम्। **उदारत्वं** यथा–स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनामित्यादौ। **ओजोमिश्रितमिति**। अत्र क्रमविपर्ययात्समाधितो भेद इति बोध्यम्। यथा यो यः शस्त्रं बिभर्ति स्वभुजगुरुमद इत्यादौ यो य इत्यत्र शैथिल्यम्। शस्त्रमित्योजः। पुनर्बिभर्तीत्यत्र पूर्वः। अन्यवर्णद्वये परं इति दिक्। **ओजसीति**। चतुर्णामप्येषां गाढबन्धतया दीप्तिहेतुत्वादोजोव्यञ्जकरचनायामन्तर्भाव इत्यर्थः। **तत्स्वीकारेणेति**। ओजसः शब्दनिष्ठताया वामनेन स्वीकृतत्वादिति भावः। **गाढबन्धेति**। सर्वत्र गाढबन्धानुभवादिति भावः। **भङ्ग्या**। माधुर्यव्यञ्जके अवृत्तिपदोपादानपरया। **झटित्यर्थसमर्पकतयेति**। व्यक्तिरिति करणे क्तिन्निति भावः। **मार्गापरित्याग इति**। यथा चोपक्रम-

---

१ क. °वदवभास°। २ ग. °श्रितः शै°।

मसृणमार्गत्यागो गुणः। कष्टत्वग्राम्यत्वयोर्दुष्टताभिधानात्तन्निराकरणेनापारुष्यरूपं सौकुमार्यम्, औज्ज्वल्यरूपा कान्तिश्च स्वीकृता। एवं न दश शब्दगुणाः।

पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च॥

इति या प्रौढिः ओज इत्युक्तं तद्वैचित्र्यमात्रं न गुणः। तदभावेऽपि

---

नेऽप्यत्यागो दोषाय। तत्परित्यागस्तु प्रत्युत गुण इत्युक्तम्। न च दोषस्वभावस्य गुणत्वम्। स्वभावभङ्गप्रसङ्गात्। सुकुमारत्वं त्वनिष्ठुराक्षरप्रायत्वम्। तच्च कष्टत्वरूपदोषाभावपर्यवसन्नम्। कान्तिस्तूज्ज्वलता। उज्ज्वलत्वं तु ग्राम्यपदाघटितत्वमिति साऽपि ग्राम्यत्वरूपदोषाभावपर्यवसन्नैव। एवं दश शब्दगुणा न पृथग्वक्तव्याः।

अर्थगुणा अप्येवम्। तथा हि—अर्थस्यौजः प्रौढिः। सा च—**पदार्थे०**। इतिप्रतिपादितपञ्चप्रभेदा। तेष्वाद्यभेदचतुष्टयमुक्तिवैचित्र्यमात्रं न गुणः। तैर्विनाऽपि

---

स्तयैव निर्वाह इत्यर्थः। **दोषायेति**। समतोपयोगस्तु वृत्त्यनुप्रास इति बोध्यम्। **स्वभावभङ्गेति**। रौद्रादौ श्रुतिकटुत्वादिरूपदोषाभाव एवेति बोध्यम्। **तच्च कष्टत्वेति**। श्रुतिकटुतेत्यर्थः। **उज्ज्वलतेति**। हालिकादिसाधारणपदविन्यासवैपरीत्येनालौकिकशोभाशालित्वमत्येत्यर्थः। **दोषाभावेति**। सुकुमारताज्वलत्वयोरसत्वे रसापकर्षः। तत्सत्त्वे तु तदभावमात्रमिति न गुणत्वमनुत्कर्षकत्वादिति भावः।

**प्रौढिरिति**। लक्ष्यनिर्देशः। **अस्य चेति**। विशेषणस्येत्यर्थः। तत्र पदार्थे वाक्यरचनं यथा—अथ नयनसमुत्थं ज्योतिरत्रेति वाक्यं चन्द्रपदार्थे। वाक्यार्थे पदं यन्न दुःखेनेत्याद्यर्थे स्वर्ग इति। वाक्यार्थस्य व्यासो यथा—

अयं नानाकारो भवति सुखदुःखव्यतिकरः
सुखं वा दुःखं वा भवति न भवत्येव च ततः।
पुनस्तस्मादूर्ध्वं भवति सुखदुःखं किमपि तत्
पुनस्तस्मादूर्ध्वं न च भवति दुःखं न च सुखम्॥ इति।

अत्रादृष्टवैचित्र्यात्सुखदुःखवैचित्र्यमित्येतदर्थस्यानेकेन प्रतिपादनम्। तस्य समासो यथा—ते हिमालयमामन्त्र्येत्यादि। साभिप्रायत्वं यथा—

सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः। इति।
गुणत्वाभावे हेतुमाह—**तैर्विनाऽपीति**।

---

१ क. °पा च कान्तिः स्वी°। २ क. °चना वा°। ३ क. च। व्यास समासौ चेति या।

काव्यव्यवहारप्रवृत्तेः। अपुष्टार्थत्वाधिकपदत्वानवीकृतत्वामङ्गलरूपाश्लीलग्राम्याणां निराकरणेन च साभिप्रायत्वरूपमोजः, अर्थवैमल्यात्मा प्रसादः, उक्तिवैचित्र्यरूपं माधुर्यम्, अपारुष्यरूपं सौकुमार्यम्, अग्राम्यत्वरूपोदारता च स्वीकृतानि। अभिधास्यमानस्वभावोक्त्यलंकारेण रसध्वनिगुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपार्थव्यक्तिः, दीप्तरसत्वरूपा कान्तिश्च स्वीकृते। क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटनात्मा श्लेषोऽपि विचित्रत्वमात्रम्। अवैषम्यस्व-

---

काव्यव्यवहारात्। माधुर्यादिनिरपेक्षेण च तेन तव्द्यवहाराप्रवर्तनात्। अन्त्यस्तद्भेदोऽपुष्टार्थत्वरूपदोषाभावपर्यवसन्नः। एवं प्रसादोऽर्थनैर्मल्यम्। प्रयोजकमात्रार्थपरिग्रह इति यावत्। सोऽप्यधिकपदरूपदोषपरित्यागादेवान्यथासिद्धसंनिधिः। माधुर्यं तूक्तिवैचित्र्यं नवीकृतत्वरूपम्। तच्चानवीकृतत्वरूपदोषाभावरूपम्। सौकुमार्यं पुनरपारुष्यम्। परुषेऽप्यर्थेऽपरुषशब्दाभिधानमिति यावत्। तच्चामाङ्गल्यरूपाश्लीलपरित्यागेनैव सिध्यति। उदारता त्वर्थस्याग्राम्यत्वम्। तच्च ग्राम्यत्वरूपदोषाभाव एवेति। अर्थव्यक्तिस्तु वस्तुस्वभावस्य स्फुटता। सा च स्वभावोक्त्यन्तर्भूता। कान्तिस्तु दीप्तरसत्वम्। सा च रसध्वनौ रसवदलंकारे गुणीभूतव्यङ्ग्ये चान्तर्भूता। श्लेषस्तु क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटना। अस्यार्थः—क्रमकौटिल्यमतिक्रमस्तस्यानुल्बणत्वमनतिस्फुटता। तत्रोपपत्तिर्युक्तिस्तस्या योग इति। यथा दृष्ट्वैकासन इत्यादि। अत्र पिहितनयनामतिक्रम्यान्यचुम्बनादतिक्रमः। तस्यास्फुटत्वमनया

---

न च भवदुक्तौजोगणविरहेऽपि स्वर्गप्राप्तिरित्यादेः काव्यत्वात्तस्यापि गुणत्वानापत्तिः। दीप्तत्वाख्यचित्तवृत्तिविशेषप्रयोजकतया गुणत्वात्। एषां तूक्तिवैचित्र्यमात्रत्वमित्यत्र तात्पर्यात्। न हि चन्द्रादिपदार्थस्यात्रिलोचनेत्यादिनाऽभिधाने कोऽपि विशेषः। किं तु प्रतीतिविलम्ब एवेति भावात्। **प्रयोजकेति**। अपेक्षितेत्यर्थः। **परुषोऽमङ्गलः**। **अपरुषेति**। यथा मृत इति वक्तव्ये कीर्तिविशेषं गत इति। **अर्थस्याग्राम्यत्वमिति**। ग्राम्येऽप्यर्थे विदग्धतयाऽभिधानमुदारता। यथा—

अयं कंदर्पचाण्डालो मयि वामाक्षि निर्दयः।
त्वयि निर्मत्सरो दिष्ट्येति।

**वस्तुस्वभावस्येति**। वस्तुनो वर्णनीयस्य डिम्भादेः स्वभावस्य रूपक्रियादेः स्फुटत्वेन वर्णनमित्यर्थः। **दीप्तरसत्वम्**। स्फुटप्रतीयमानरसत्वम्। **सा चेति**। तत्र रसस्य प्राधान्ये ध्वनित्वम्। गुणत्वे तु रसवदलंकाररूपगुणीभूतव्यङ्ग्यत्वमित्यर्थः। क्रमकौटिल्यपदार्थमाह—**अतिक्रम इति**। **दृष्ट्वैकेति**।

---

१ ग. °कृताम°। २ ग. °णे च। ३ क. ग. °त्वव्युत्पुदा। ४ क. °सरू°। ५ क. ग. °षो वि°। ६ क. ग. °म्यरू°। ७ क. °लत्वप°। ८ क. °तस्फु°।

रूपा समता दोषाभावमात्रं न पुनर्गुणः। कः खल्वनुन्मत्तोऽन्यस्य प्रस्तावेऽन्यदभिदध्यात् । अर्थस्यायोनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत्कथं काव्यम्, इत्यर्थदृष्टिरूपः समाधिरपि न गुणः ।

तेन नार्थगुणा वाच्याः[1] ।

वाच्या वक्तव्याः ।

---

तदज्ञानात् । तत्रोपपत्तिरिदमनया तु न ज्ञातव्यमिति । कौचित्तु क्रमकौटिल्यं क्रमस्यातिक्रमः । स चात्र व्यक्त एव । एकदैवोभयानुरञ्जनात् । स एष श्लेष उक्तिवैचित्र्यमात्रं न गुणः । अनन्यसाधारणरसोपकारित्वातिशयविरहात् । समता तु वैषम्याभावोऽर्थस्य । स च क्रमाभेदरूप इति क्रमभेदरूपदोषाभाव एव । दोषत्वं तु तद्व्यतिरेकस्य कथमिति चेत् । यतो न खल्वनुन्मत्तोऽन्यप्रस्तावेऽन्यदभिधत्त इति । समाधिः पुनरर्थदर्शनम् । न चासौ गुणः । काव्यशरीरत्वात् । स्वयं दृष्टस्यान्यच्छायासिद्धस्यार्थस्य यदि न दर्शनं कथं तर्हि काव्यशरीरनिष्पत्तिः । असाधारणशोभादायकं हि गुणं ब्रुवन्ति । न च काव्यशरीरनिर्वर्तकामिति ।

उक्तयुक्ती बुद्धिस्थीकृत्याऽऽह—तेन० ।

परैरङ्गीकृता अर्थगुणास्ते चोक्तयुक्त्या न पृथग्वक्तुमर्हाः ।

---

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्याऽऽदरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकंधरः सपुलकप्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥

अन्यचुम्बनादिति पाठः । अन्यस्याश्चुम्बनादिति सर्वनाम्नो वृत्तिमात्र इति पुंवत्वम् । **एवमनयेति** । एवं प्रकारेणानयेत्यर्थः । **एकदैवेति** । कनिष्ठातिक्रमेण ज्येष्ठाचुम्बनात्क्रमकौटिल्यमित्यन्ये । आद्यव्याख्याने तु एकनायिकाप्रतारणमेवातिक्रमो बोध्यः । **न गुण इति** । रसोपकारकत्वाभावात् । प्रत्युताऽऽस्वादप्रतीतेश्च विलम्ब एवेति भावः । **वैषम्येति** । अर्थस्य क्रमभेदेत्यर्थः । **क्रमभेदेति** । प्रक्रमभेदेत्यर्थः । यथोदेति सविता ताम्र इत्यादौ । **यतो नेति** । रसापकर्षकस्य तस्याभावोऽपेक्षितो न तु रसोत्कर्षप्रयोजकस्येति बोध्यम् । अत एवास्य न गुणत्वम् । **अर्थदर्शनमिति** । अवर्णितपूर्वोऽयमर्थः पूर्ववर्णितच्छायो वेति कव्यालोचनमित्यर्थः । **काव्यशरीरत्वादिति** । काव्यशरीरकारणत्वादित्यर्थः । **अस्य** । अर्थस्येत्यर्थः । **असाधारणशोभेति** । असाधारण्येन शोभाधायकमित्यर्थः । तेन काव्यहेतोरर्थदृष्टेर्न गुणत्वमिति भावः ।

---

१ क. °न्यप्र° । २ ग. °च्याः प्रो° । ३ क. °भायाध° ।

**प्रोक्ताः शब्दगुणाश्च[1] ये ।**
**वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥ ७३ ॥**

**के कस्येत्याह—**

**मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।**
**अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥ ७४ ॥**

**टठडढवर्जिताः[2] कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः, तथा रेफणकारौ ह्रस्वान्तरिताविति वर्णाः, समासाभावो मध्यमः[3] समासो वेति**

---

**प्रोक्ताः०** ।

ये तु त्रय उपचारेणान्यैः शब्दगुणाः प्रोक्ता वस्तुतो रसगुणा एव । वर्णादयस्तेषां व्यञ्जकत्वं गताः ।

के कस्य व्यञ्जका इत्याकाङ्क्षायामाह—**मूर्ध्नि०** ।

माधुर्ये व्यङ्ग्ये टवर्गवर्जिताः कादिमान्ता रेफणकारौ चेति वर्णाः । तत्र कादयो मूर्ध्नि स्वस्ववर्गान्त्यवर्णगताः । यथा कुञ्ज इत्यादि । रेफणकारौ तु ह्रस्वस्वरान्तरितौ । वृत्तिः समासस्तस्य चाभाव एव मध्यमता वा इति समासः । घटना तथेति सौकुमार्यवती

---

**शब्दगुणा इति** । शब्दव्यङ्ग्यगुणा इत्यर्थ इत्येके । वर्णा इति बहुवचनमेकद्वित्रिवर्णानामव्यञ्जकत्वसूचनाय । समासो बहूनामेकपदता । वृत्तिमात्रोपलक्षणमिदम् । रचना पदानां पौर्वापर्यरूपानुपूर्वी ।

स्पर्शा इति व्याचष्टे—**कादिमान्ता इति** । **वर्णगता इति** । वर्णयुक्ता इत्यर्थः । **ह्रस्वस्वरेति** । तेन रा णा इत्यादेर्व्युदासः । अत्र निषिद्धानामसकृदुपादाने दोषता बोध्या । अवृत्तिरित्यनेन वैदर्भी उक्ता । मध्यमता द्वित्रिचतुःपदकृता । एषा पाञ्चाली रीतिः शृङ्गारकरुणशान्तेषु । तदुक्तम्—

द्वित्रिपदा पाञ्चाली लाटी या पञ्चसप्तधा यावत् ।
शब्दैः समासवद्भिर्यथाशक्ति गौडी या ॥
द्वित्रीत्युपलक्षणं चतुष्पर्यन्ताऽपि ।
वैदर्भीपाञ्चाल्यौ प्रेयसि करुणे भयानकाद्भुतयोः ।
लाटीं गौडीं रौद्रे कुर्याद्यथा यथैवोचितं सुकविरिति ॥

---

१ क. °णास्तु ये । २ क. °वर्जाः का° । ३ क. °ध्यमस° ।

**समासः, तथा माधुर्यवती पदान्तरयोगेण रचना माधुर्यस्य व्यञ्जिका । उदाहरणम् ।**

**अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।**
**कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तनानि ॥ ३४८ ॥**

**योग आद्यतृतीयाभ्यामन्त्ययो, रेण तुल्ययोः ।**
**टादिः; शषौ, वृत्तिदैर्घ्यं, गुम्फ उद्धत ओजसि ॥ ७५ ॥**

**वर्गप्रथमतृतीयाभ्यामन्त्ययोः द्वितीयचतुर्थयोः रेफेण अध उपरि उभयत्र वा यस्य कस्यचित्, तुल्ययोः तेन तस्यैव संबन्धष्टवर्गोऽर्थात् णकारवर्जः शकारषकारौ दीर्घसमासः विकटा संघटना ओजसः । उदाहरणम् । मूर्ध्नामुद्वृत्तकृत्तेत्यादि ।**

---

पदान्तरयोगेण रचना चेति वर्णसौकुमार्यवती रचना वर्णसौकुमार्यादेव लब्धेति पदान्तरयोगे सौकुमार्यलाभाय घटना तथेत्युक्तमिति ।

उदाहरणम्—**अनङ्गरङ्ग०** ।

**योग०** ।

ओजसि व्यङ्ग्ये वर्गप्रथमतृतीयाभ्यां सह तदन्तयोर्द्वितीयचतुर्थयोर्योगः । यथा कच्छपुच्छेत्यादि । तथा रेफेणाध उपर्युभयत्र वा यस्य कस्यापि योगः । यथा वक्त्रार्कनिर्ह्रादादयः । तथा तुल्ययोः कयोश्चिद्योगः । यथा चित्तवित्तादौ । तथा टादिचतुष्टयं शषौ चेति वर्णाः । समासस्तु दीर्घः । गुम्फो रचना । सा चोद्धता विकटेति । उदाहरणम्—मूर्ध्नामुद्वृत्तकृत्त-इत्यादि ।

---

तथेत्यस्यार्थः—सौकुमार्यवतीति । **पदान्तरयोगेणेति** । यथाऽलं कुर्विति पदयोः संधौ मधुरवर्णोत्पत्तिः ।

**अनङ्गेति** । रङ्गो नृत्यस्थानं तत्सदृशम् । अत्र मध्यवृत्तिः । तदनुभवैकगोचरं नताङ्ग्या अङ्गं भङ्गीभिः वशीकरणहेतुवदनगमनादिगतविशेषैस्तथाऽङ्गीकृतं यया एता भङ्ग्यो यूनां मनांसि शान्तापरः शृङ्गारस्तस्य चिन्तितं चिन्ता येषु तादृशानि कुर्वन्तीत्यर्थः ।

**दीर्घ इति** । चतुरधिकपदारब्धः । एवोऽपि विकटवर्णपदघटित एवौजोतिशयव्यञ्जकः । तेन

अनवरतनयनजललवनिपतनपरिपीतहरिणमदतिलकम् ।
करतलनिषण्णमबले वदनमिदं कं न तापयति ॥

इत्यादौ न दोषः । एषा गौडी रीती रौद्रवीरबीभत्सेषु । **विकटेति** । विकटवर्णपदघटितेत्यर्थः । समग्राणां साधारणः । समग्ररसवृत्तिरित्यर्थः । समग्राणां समा-

---

१ क. ग. °गे र° । २ ग. °का । तथोदा° । ३ क. °चिन्तितानि । ४ क. °याभ्यां द्वि° । ५ क. ग. °दीर्घः स° ।

श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत् ।
साधारणः समग्राणां स प्रसादो गुणो मतः ॥ ७६ ॥

समग्राणां रसानां संघटनानां च । उदाहरणम्—

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम् ॥ ३४९ ॥

यद्यपि गुणपरतन्त्राः संघटनादयस्तथाऽपि

वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित् ।
रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥ ७७ ॥

---

**श्रुतिमात्रेण०** ।

येन शब्देन समासेन वा यया रचनया वा श्रुतिमात्रेण शब्दादर्थप्रत्ययः स प्रसादव्यञ्जक इत्यर्थः । उदाहरणम्—**परिम्लानं०** ।

अन्येषां तु वर्णानामुदासीनत्वमिति तदुपादाने तु पुराणच्छायेत्युच्यते । न चैवं माधुर्यादावुद्धतोदयो रचनाद्याः सर्वत्र विरुद्धाः स्युरिति वाच्यम् । यतो यद्यपि गुणपरतन्त्रा रचनादयस्तथाऽपि

**वक्तृवाच्यं०** ।

अन्यथात्वं गुणपारतन्त्र्याभावः । वक्तृवाच्यप्रबन्धौचित्यविरह एव गुणपारतन्त्र्यस्वीकारात् । तत्रापि वक्तृक्रोधाद्यभिव्यक्तावुपयोगात् ।

---

सानां घटनानां चापेक्षित इति चार्थः । अत्र चाप्रसिद्धपदक्लिष्टत्वादिदोषाभावो निदानमिति बोध्यम् ।

**येन शब्देनेति** । एवं च प्रसिद्धार्थकत्वमासन्नत्वादिकं च प्रसादव्यञ्जकमित्युक्तम् ।

**परीति** । उभयतः । पीनस्तनजघनस्थानयोः । वसन्तीयकुसुमदर्शनप्रीत्या न्युब्जकायशयनात् । अन्तः शयनमध्यभागे । तनोः क्षीणस्य मध्यभागस्य परिमिलनमामर्दनमप्राप्य हरितं तथावर्णम् । व्यस्तो विपरीतः । श्लथं शिथिलमबलाप्रयोज्यत्वाद्यथा तथा भुजलतासंबन्धी य आक्षेपोऽभिघातस्तस्य वलनैः संबन्धैः करणैः । वदति । आवेदयति । शयनं शय्या । केचित्तु आक्षेप इच्छाधीनचेष्टा । वलनं तदितरक्रिया । द्वंद्वगर्भस्तत्पुरुष इत्याहुः ।

**गुणपरतन्त्राः** । गुणव्यञ्जकत्वनियताः । वक्ता कविस्तन्निबद्धश्च । वाच्योऽभिधेयः ।

---

१ क. ग. °न्दानां ये° । २ क. गुणः स्मृतः । ३ ग. °नां समासानां सं° । ४ क. °ता र° ।

क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः। यथा—

मन्थायस्तार्णवाम्भःप्लुतिकुहर[1]चलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितो[2]ऽसौ ॥ ३५० ॥

अत्र[3] हि न वाच्यं क्रोधादिव्यञ्जकम्। अभि[4]नेयार्थं च काव्यमिति तत्प्रतिकूला उद्धता रचनादयः। वक्ता चात्र भीमसेनः।

---

तत्र क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः। यथा—मन्थायस्तार्ण०।

अत्र न वाच्यं क्रोधादिदीप्तरसव्यञ्जकम्। प्रश्नरूपत्वात्। प्रबन्धश्च नाटकात्माभिनेय इति दीर्घसमासत्वं प्रतिकूलं यद्यपि तथाऽपि वक्ता भीमसेन इति वक्त्रौचित्यादुद्धता रचनाऽत्र। अतस्तदुद्धतत्वादिव्यक्तावेवोपयुज्यते।

---

प्रबन्धो महाकाव्यनाटकादि। वृत्तिः समासः। अन्यथात्वं गुणपारतन्त्र्याभावः। एवं चैषां गुणव्यञ्जकत्वनियम औत्सर्गिकः। वक्त्राद्यौचित्येन क्वचिद्बाधात्। तद्भिन्नस्थल एव गुणव्यञ्जकत्वनियम इति भावः।

**मन्थेति**। मन्थो मन्थनदण्डः। तेनाऽऽयस्तं दूरमुत्क्षिप्तं यदर्णवाम्भस्तेन प्लुतं व्याप्तं यत्कुहरं तत्र चलतो मन्दरगिरेर्यो ध्वानस्तद्वद्धीर इत्यर्थः। मन्थेनाऽऽयस्तो भ्रान्तो योऽर्णवस्तदम्भःप्लुत्या कुहरेषु रन्ध्रेषु इति वा। कोणाघातेषु सत्सु।

भेरीशतसहस्राणि ढक्काशतशतानि च।
एकदा यत्र हन्यन्ते कोणाघातः स उच्यते ॥

कोणो वादनदण्ड इत्यन्ये। कोणो वीणादिवादनमिति त्वमरः। प्रकृते त्वाद्य एव स उचितः। अमरेऽपि वादनमिति करणल्युडन्तमित्यन्ये। गर्जन्तो ये प्रलयकालीना मेघास्तेषां घटाः समूहास्तेषामन्योन्यं परस्परं यः संघट्टः स इव चण्डः प्रचण्डः। कृष्णाया द्रौपद्याः क्रोधस्याग्रदूतः। भविष्यदर्थस्य प्रथमावेदकः। कुरुकुलस्य निधनार्थं मृत्यव उत्पातरूपो निर्घातयुक्तो वातः। वातजन्यो निर्घातो वा। मेघवातयोः संघट्टजो ध्वनिरशुभसूचको निर्घात उच्यते। केनातिबलवता। अस्मत्सिंहनादस्तस्य च यः प्रतिध्वनिस्तत्तुल्यः। प्रतिध्वनेः सिंहनादेन संवलनाद्गुरुत्वम्। दुंदुभिः। तच्छब्दः। ताडितः। ताडनेनोत्पादितः। तेन मन्दरध्वानप्रतिध्वन्योः साम्यम्। **प्रश्नरूपत्वादिति**। न च तद्विषयो दुन्दुभिशब्दस्तथा। केनेत्यस्य केन कारणेनेत्यप्यर्थाद्युद्धेच्छया प्रवृत्तत्वसंदेहात्। **अभिनेयः**। अभिनयबोधनीयार्थकः। **प्रतिकूलम्**। दीर्घसमासेनार्थप्रति-

---

१ क. °रगल°। °ररगन्न°। ग. °रवल°। २ क. ग. °तोऽयम्। ३ ग. °त्र न°। ४ क. °भिनया°। ५ क. °त्कावेवोपयुज्यन्ते। क्व°।

**क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादयः । यथा—**

**प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-**
**त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।**
**कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुतां कंधरारन्ध्रभाजां**
**भाङ्कारैर्भीममेतन्निपतति वियतः[1] कुम्भकर्णोत्तमाङ्गम् ॥ ३५१ ॥**

**क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते । तथा हि । आख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः[2] । कथायां रौद्रेऽपि नात्यन्तमुद्धताः । नाटकादौ रौद्रेऽपि न दीर्घसमासादयः । एवमन्यदप्यौचित्यमनुसर्तव्यम् ।**

---

क्वचित्तु वक्तृप्रबन्धौचित्यानपेक्षया वाच्यौचित्यादेव रचनादयः । यथा—**प्रौढच्छेदा०** ।

अत्र वक्ता वैतालिकः प्रबन्धाभिनेयात्मेति दीर्घसमासानौचित्येऽपि वाच्यस्य कुम्भकर्णस्यौद्धत्यादुद्धता रचनादयः । क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव रचनादयः । तथा हि—आख्यायिकायां हि शृङ्गारेऽपि व्यङ्ग्येऽनुद्धतेऽपि वक्तरि नातिमसृणा वर्णादयः । प्रस्तुतविकटबन्धस्यैव च्छायावत्त्वात् । विप्रलम्भकरुणयोस्तु तस्यामपि दीर्घसमासपरीहारः । तयोरतिसौकुमार्यात् । कथायां तु रौद्रेऽपि नात्यन्तमुद्धटा वर्णादयः । वर्णनीयमहापुरुषसुखप्रतिपत्तिसमर्पणस्योद्देश्यत्वात् । नाटकादावभिनेये[3] तु रौद्रेऽपि न दीर्घसमासादयः । विच्छेदेनाभिनयसौकुमार्यात् । एवं मुक्तकाद्यौचित्यमनुसरणीयम् । तथा हि—एकैकच्छन्दसि वाच्यस-

---

पत्तौ विलम्बात् । अभिनयेन झटिति प्रत्यायनासंभवाच्च । क्रोधाभावेन तद्व्यञ्जकदीर्घसमासादेरनौचित्याच्चेति भावः । वक्तुरौचित्यादित्यस्य वक्त्रौद्धत्यव्यञ्जनायेत्यर्थः ।

**प्रौढेति ।** प्रौढेन बलवता प्रयुक्तो यश्छेदः । करणव्युत्पत्त्या तज्जनकः खड्गाभिघातः । तदनुरूपं यदुच्छलनमूर्ध्वगमनं तेन जनितो यो रयो वेगस्तेन भवज्जायमानो वेगसारूप्येण सैंहिकेयभ्रमाद्यस्तदुपघातस्त्रासस्तेनाऽऽकृष्टा येऽश्वास्तैस्तिर्यक्कृतो रविरथो येन तेनारुणेनेक्ष्यमाणम् । कंधरारन्ध्रभाजां मरुतां भांकारैः भांभांशब्दैः काकुत्स्थो रामस्तद्वीर्यस्तुतिमिव कुर्वद्भीमं भयजनकमुत्तमाङ्गं शिरो वियत आकाशात् । **कुम्भकर्णस्येति ।** तदुत्तमाङ्गस्येत्यर्थः । **औद्धत्यादिति ।** भीमत्वेनौजस्वित्वादित्यर्थः । **उद्धता इति ।** तदीयौद्धत्यव्यञ्जनायेति शेषः । **छायावत्त्वादिति ।** गद्यप्राधान्यात् । गद्ये च विकटवर्णस्याभ्यर्हिततया तैरेव शोभावत्त्वाच्छृङ्गारेऽपि न मसृणवर्णा देया इत्यर्थः । **कथायां त्विति ।** वर्णनीयनृपादिकथायां त्वित्यर्थः । श्रोतृसुखसमर्पणस्योद्देश्यत्वादिति भावः । **वर्णनीयमहापुरुषेति ।** वर्णनीयस्यार्थस्य श्रोतृभूतानां महापुरुषाणां सुखेन

---

१ क. °तः कौम्भ° । २ क. °सृणा व° । ३ क. °भिनये° ।

इति काव्यप्रकाशे गुणालंकारभेदनियतगुणनिर्णयो नामा-ष्टमोल्लासः ॥ ८ ॥

---

मात्रिर्मुक्तकम् । द्वयोः संदानितकम् । त्रिषु विशेषकम् । चतुर्षु कालापकम् । पञ्चादिचतुर्दशान्तेषु कुलकम् । तत्र मुक्तकेषु कवे रसबन्धाभिनिवेशित्वे रसाश्रयमौचित्यम् । यथा— शून्यं वासगृहमित्यादौ । रसनिवेशाभावे तु कामचारः । संदानितकादिषु काव्यपरिसमाप्तेर्वैकल्यं दीर्घमध्यसमासता च । प्रबन्धगतेषु पुनस्तेषु प्रबन्धोचिता एव रचनादय इत्यादि ज्ञेयम् ।

इति काव्यप्रदीपे गुणालंकारभेदनियतगुणनिर्णयो नामा-ष्टमोल्लासः ॥ ८ ॥

---

प्रतिपत्तेः समर्पणस्योत्पत्तेरुद्देश्यत्वादित्यर्थः । यद्वा वर्णनीयो यो महापुरुषस्तस्य सुखेन प्रतिपत्तौ यत्समर्पणं विषयकरणमित्यर्थः । संदानितकादिष्विति । यतो वैकल्यं नैकल्याभावोऽतो दीर्घमहासमासताऽपि तत्र कार्येत्यर्थः ।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते काव्यप्रदीपोद्द्योतेऽष्टम उल्लासः ॥ ८ ॥

---

अथ नवम उल्लासः ।

---

गुणविवेचने कृतेऽलंकाराः प्राप्तावसरा इति संप्रति शब्दालंकारानाह—

यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते ।
श्लेषेण काका वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥ ७८ ॥

तथेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च । तत्र पदभङ्गश्लेषेण यथा—

---

एवं गुणे विवेचितेऽलंकारा विवेचनीयाः । तत्र सामान्यलक्षणं गुणविवेचन एवोक्तम् । शब्दालंकारार्थालंकारोभयालंकाररूपविशेषलक्षणत्रयं चार्थलभ्यमिति तेषां विशेषलक्षणेषु वक्तव्येषु काव्यलक्षणे शब्दस्य प्राथम्यात्तदलंकारविशेषलक्षणे वक्तव्ये प्रथमं वक्रोक्तिं लक्षयति—यदुक्त० ।

वक्त्राऽन्याभिप्रायेणोक्तमन्येनान्यार्थकतया योज्यते संगम्यते सा वक्रोक्तिरित्यर्थः । श्लेषेण काक्का वेति[3] योजनया हेतुमुखेन विशेषलक्षणद्वयम् । तथा द्विधेति विभागः । श्लेषवक्रोक्तिः काकुवक्रोक्तिश्चेति द्विधेत्यर्थः ।

श्लेषश्च द्विधा—सभङ्गपदोऽभङ्गपदश्च । तत्र सभङ्गश्लेषेण यथा—

---

**गुणे विवेचित इति** । काव्यलक्षणे प्रागुक्तत्वात्, रसधर्मतया च प्राधान्यात्तत्र प्रथमं जिज्ञासेति तन्निरूपणे कृतेऽवसरसंगत्येत्यर्थः । **उभयालंकाररूपविशेषलक्षणेति** । रूपविशेषाणां लक्षणेत्यर्थः । **अर्थलभ्यमिति** । शब्दाश्रितत्वादिरूपं तच्छब्दालंकारेत्यादिपदादेर्वाऽर्थलब्धमिति भावः । **प्रथममिति** । वक्रोक्तेश्चारुत्वातिशयात्, उक्तिवक्रतायाः स्फुटं शब्दालंकारत्वाच्चेति भावः ।

**अन्येन** । श्रोत्रेत्यर्थः । स्वयमेवान्यथाकरणेऽपह्नुतिं वक्ष्यति । **श्लेषेणेति** । शब्दबोध्यार्थान्तरेणेत्यर्थः । तेन

मञ्चः क्रोशति किमहो प्रयासि नय मां परावृत्त्य ।
किं कातरतयैवं मुह्यसि मञ्चः किमालपति ॥

इत्यादौ मुग्धया नवाभिसारिकया पुरुषे लक्षणया प्रयुक्तं मञ्चपदं दूत्या मुख्यार्थाभिप्रायेण योजितमिति अस्य न भेदान्तरत्वमित्याहुः ।

---

१ ग. °भङ्गे श्ले° । २ क. °षु श° । ३ क. °ति प्रयोजनहेतु° ।

नारीणामनुकूलमाचरसि चेज्जानासि, कश्चेतनो
वामानां प्रियमादधाति, हितकृन्नैवाबलानां भवान् ।
युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः पुरंदरमतच्छेदं विधातुं कुतः ॥ ३५२ ॥

अभङ्गश्लेषेण यथा—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥ ३५३ ॥

काक्वा यथा—

गुरुजनपरतन्त्रतया[२] दूरतरं देशमुद्यतो[३] गन्तुम् ।
अलिकुलकोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ[४] ॥ ३५४ ॥

नारीणा० ।

---

अत्र नारीणामिति पदं स्त्रीणामित्यभिप्रायेणोक्तम् । श्रोता तद्भङ्क्त्वा न शत्रूणामित्यर्थतया योजयित्वाऽऽह—कश्चेतन इत्यादि । अत्र वामानामिति शत्रूणामित्यर्थो वक्तुरभिप्रेतः । स्त्रीणामित्यर्थतया योजयित्वाऽऽह—हितकृदित्यादि । अथान्योऽबलानामिति दुर्बलार्थतया हितकृदिति हितकृन्तनार्थतया योजयित्वाऽऽह—युक्तं किमित्यादि । अथान्यो बलाभावप्रसिद्धात्मपदमिन्द्रार्थतया योजयित्वाऽऽह—सामर्थ्यमित्यादि । अत्र नारीणामबलानामिति पदे सभङ्गे ।

अभङ्गमात्रपदेन श्लेषेण यथा—अहो केने० ।

अत्र दारुणेति क्रूरेत्यर्थकत्वेन वक्तुरभिप्रेतं काष्ठेनेत्यर्थेनान्यो योजितवान् ।

काकुवक्रोक्तिर्यथा—गुरु० ।

---

**नारीणामिति** । नारीणां स्त्रीणामनुकूलमाचरसिचेज्जानासि विज्ञोऽसि । विज्ञ एव स्त्रीणामनुकूल इति भावः । उत्तरं—कश्चेतनो वामानां शत्रूणां हितमादधाति । काक्वा नाऽऽदधातीति लभ्यते । अबलाः स्त्रियः । आस्वयं समुदायो रूढः । बलं तेजोऽसुरविशेषश्च । सामर्थ्यं युक्तायुक्तविचारानुकूलो व्यापारः । पुरंदर इन्द्रः । **हितकृदिति** । हितकारकार्थतया प्रयुक्तमपीति शेषः ।

**अहो इति** । दारुणा क्रूरा । त्रिगुणा सत्त्वरजस्तमोरूपगुणत्रयात्मिका । बुद्धितत्त्वरूपा । बुद्धेः प्रकृतिपरिणामतया त्रिगुणात्मकत्वमिति सांख्यसिद्धान्तात् । यद्वा सूक्ष्मग्राहित्वाशुग्राहित्वगृहीतग्राहित्वरूपगुणत्रयवती । दारु काष्ठम् ।

**गुर्विति** । परतन्त्रः पराधीनः । बतेति खेदः । सुरभिर्वसन्तः । ललितो रमणीयः ।

---

१ क. °नां हितमातनोति । २ क. °रुपरतन्त्रतया बत दू° । ३ ग. °या बत दूरं दे° । ४ क. °ते सखि नैष्यति सु° ।

वर्णसाम्यमनुप्रासः ।

**स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम् । रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः ।**

---

अत्र नैष्यतीति नायिकया निषेधाभिप्रायेणोक्तं सख्या तु नैष्यति अपि त्वेष्यत्येवेत्यर्थकतया काक्वा योज्यते ।

इयं च न काकोवाक्यमात्रे किं तु स्वतोऽप्यन्येनोक्तस्यान्यथायोजनमात्रे । न्यायसाम्यात् । यथा मम—

कृष्णो वैरिविमर्दने हरिपदप्रीत्यर्जने त्वर्जुनः
पीतः पङ्कजलोचनाभिरभितो नेत्राञ्चलैश्चञ्चलैः ।
रक्तः सज्जनसंगमेषु करणश्रेणीमणे श्रीधर-
स्थाने वर्णचतुष्टयस्य भुवने भर्ता भवान्गीयते ॥

अत्र वर्णचतुष्टयस्य भर्ता श्रीधर इति सार्वलौकिकं वाक्यमन्यथा श्लेषादिनाऽस्माभिः समर्थितम् । एवमन्यदप्यूह्यम् ।

अथाऽऽवृत्तिनिबन्धनेष्वलंकारेषु लक्षणीयेषु रसानुगुणतयाऽनुप्रासः प्रथमं लक्षणीयः । स द्विधा-वर्णानुप्रासः पदानुप्रासश्च । तत्राऽऽद्यो वाचकवर्णमात्रावृत्तौ द्वितीयस्तु वाचकपदावृत्ताविति वस्तुगतिः । तत्राऽऽद्यं लक्षयति—**वर्णसाम्य०** ।

अव्यवधानेन वर्णमात्रविन्यासो वर्णानुप्रास इत्यर्थः । शब्दसाम्यत्वमनुप्राससामान्यलक्षणमित्यर्थाल्लभ्यते । वर्णपदं व्यञ्जनपरम् । अतो व्यञ्जनवैसादृश्ये विरिञ्चिपदादौ नातिव्याप्तिः । न चेष्टैव सा । तत्रानुप्रासशब्दार्थस्याभावात् । रसादिभिरनुगतः प्रकृष्ट आसो न्यासो

---

**सख्या त्विति** । पुनस्तदेवोत्तरयन्त्येति शेषः । **काक्वा योज्यते** । पारतन्त्र्यं न सार्वदिकमिति भावः । अत्र काकोः शब्दधर्मतया शब्दालंकारता । अन्यथा योजनं च व्यञ्जनयेत्याहुः । श्लेषेणास्माभिरिति पाठः । श्लेषादिनेति पाठ आदिपदार्थश्चिन्त्यः । **वर्णानुप्रास इति** । केवलानुप्रासशब्द एव वर्णसाम्यवृत्तिर्न तु वर्णानुप्रास इति सूत्रस्वरसाच्चिन्त्यमेतदित्येके । **अवाचकवर्णमात्रेति** । सूत्रे वर्णपदमहिम्ना तथैव लाभादिति भावः ।

**व्यञ्जनवैसादृश्य इति** । स्वरमात्रसादृश्येऽपीति शेषः । **रसादिभिरनुगत इति** । आदिना भावादीनां संग्रहः । अनेन यमकव्यावृत्तिः । तत्रार्थभेदप्रतिसंधानेन रसावगमविलम्बात् । लाटानुप्रासे च नातिव्याप्तिः । तात्पर्यभेदप्रतिसंधानेन तत्रापि रसावगमविलम्बात् । **प्रकृष्टः** । संनिहितः । तेनातिव्यवधानेन न्यासस्य चमत्काराप्रयोजकस्य

---

१ ग. ॰नुगुणः प्र॰ । २ क. ॰रभितो॰ ।

**छेकवृत्तिगतो द्विधा ।**

छेका विदग्धाः, वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः, गत इति च्छेकानुप्रासो वृत्त्यनुप्रासश्च ।

किं तयोः स्वरूपमित्याह—

**सोऽनेकस्य सकृत्पूर्वः ।**

अनेकस्यार्थाद्व्यञ्जनस्य, सकृदेकवारं सादृश्यं छेकानुप्रासः । उदाहरणम्—

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥ ३५५ ॥

**एकस्याप्यसकृत्परः ॥ ७९ ॥**

---

ह्यनुप्रासशब्दार्थः । न च स्वरमात्रसादृश्ये रसानुगमः । न वा सहृदयहृदयावर्जकत्वलक्षणः प्रकर्षः ।

तं विभजते—**छेक०** ।

छेकगतो विदग्धाश्रितः । तैश्च प्रचुरमेतत्प्रयोगात् । वृत्तिगतो वृत्त्याऽऽश्रितः । तदुपोद्बलकत्वात् । वृत्तिश्च मधुरादिरसानुगुणानियतमसृणादिवर्णगतो रसविषयो व्यापारो व्यञ्जनाख्यः ।

तयोर्लक्षणमाह—**सोऽनेकस्य०** ।

अनेकस्य व्यञ्जनस्य सकृदेकवारं साम्यं पूर्वश्छेकानुप्रासः । उदाहरणम्—**ततोऽरुण०** ।

अत्र स्यन्दगण्डयोः ।

द्वितीयं लक्षयति—**एकस्या०** ।

---

व्युदासः । **न च स्वरमात्रसादृश्य इति** । मात्रपदेनोभयसाम्ये चारुत्वातिशय इति ध्वन्यते । यथाऽग्रेसरा वासरा इत्यादौ । साम्यं च श्रुतिकृतमपि गृह्यते । यथा याति राजा बलाढ्य इति रंहः संघ इति च । श्रुतिसाम्यं स्थानैक्यात् । जातिसाम्ये तु मूल एवोदाहरणम् । **सहृदयहृदयावर्जकत्वम्** । सहृदयहृदयानुरञ्जकत्वम् । प्रकर्षश्चाव्यवधानेन न्यासः । स एव च सहृदयहृदयानुरञ्जकः । **विदग्धाश्रित इति** । तत्प्रियत्वात्तदाश्रितत्वम् । स इत्यस्यानुप्रासपरामर्शकत्वम् । स च वर्णसाम्यम् । तत्र वर्णस्यानेकपदेनैव लाभात्साम्यमात्रपरामर्शकस्तच्छब्द इत्याशयेनाऽऽह—**साम्यमिति** ।

**ततोऽरुणेति** । अरुणस्य सारथेर्न तु सूर्यस्य । परिस्पन्देन न तु पूर्णोदयेन । मन्दो विरुचिः । कामः स्मरः । परिक्षामा क्षीणा । **अत्र स्पन्देति** । नकारदकारणकारड-

---

१ ग. °परीक्षा° ।

एकस्य, अपिशब्दादनेकस्य व्यञ्जनस्य द्विर्बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रासः । तत्र

माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।
ओजःप्रकाशकैस्तैस्तु परुषा

उभयत्रापि प्रागुदाहृतम्, अनङ्गरङ्गेत्यादि मूर्ध्नामुद्वृत्तेत्यादि ।

कोमला परैः ॥ ८० ॥

परैः शेषैः । तामेव केचिद्ग्राम्येति वदन्ति । उदाहरणम्—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥ ३५६ ॥

केषांचिदेता वैदर्भीप्रमुखा रीतयो मताः ।

एतास्तिस्रो वृत्तयो वामनादीनां मते वैदर्भी—गौडी—पाञ्चाल्याख्या रीतयो मताः ।

---

अपिशब्दादनेकस्यापि । असकृद्द्विर्बहुकृत्वो वा । वस्तुतस्तु छेकानुप्रासभिन्नं लक्ष्यम् । अन्यथैकस्य सकृदावृत्तेरसंग्रहापत्तेः । एवं चैकस्य वर्णस्य सकृदसकृद्वाऽनेकस्य त्वसकृत्सादृश्यं वृत्त्यनुप्रास इति पर्यवसन्नम् । तत्र—**माधुर्य०** ।

यथा—अनङ्गरङ्गप्रतिमम्—इत्यादि ।

**ओजः०** ।

यथा—मूर्ध्नामुद्वृत्त—इति ।

**कोमला०** ।

अपरैरोजोमाधुर्यव्यञ्जकातिरिक्तैः प्रसादवद्भिरक्षरैः । एनामेव केचिदतिशयितकान्तिराहित्येन ग्राम्यस्त्रीसाम्याद्ग्राम्येति वदन्ति । उदाहरणम्—अपसारय० इत्यादि ।

**केषांचि०** ।

वामनादीनां मत एता एव यथाक्रमं वैदर्भीगौडीपाञ्चाल्यो रीतय उच्यन्ते ।

---

कारककारमकाराणामनेकेषां सकृत्साम्यम् । **सकृदावृत्तेरिति** । यथा व्याधूतचूताङ्कुरेति । **ग्राम्यस्त्री** । अविदग्धस्त्री । उपनागरिकादिपदानां वृत्तिरिति विशेष्यम् । **अपसारयेत्यादि** । अत्र मूर्ध्नि वर्गान्त्यगाभावादाद्यतृतीयादियोगाभावाच्चेति भावः । **पाञ्चाल्य इति** ।

---

१ क. °कव्य° । २ क. ग. °रिकेष्यते । ३ क. °स्तैश्च प° । ४ ग. °म् । को° । ५ क. °रयेत्यादि । के° । ६ क. ग. °तय उच्यन्ते । शा° ।

**शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ॥ ८१ ॥**

**शब्दगतोऽनुप्रासः, शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदात् । लाटजनवल्लभत्वाच्च लाटानुप्रासः । एष पदानुप्रास इत्यन्ये ।**

**पदानां सः ।**

---

शब्दानुप्रासमाह—**शाब्दस्तु०** ।

शब्दनाव्यापारवान्शब्दः प्रातिपदिकादिस्तद्गतः शाब्दः । भेद इति । तात्पर्यमन्वयभेदस्तन्मात्राद्भेदे । न तु स्वरादर्थाद्वा । तथा च भिन्नतात्पर्यतुल्यार्थशब्दसादृश्यं शब्दानुप्रासः । स तु लाटानुप्रास उच्यत इत्यर्थः । तुशब्दो वर्णानुप्रासस्य लाटीयत्वव्यवच्छेदकः ।

यत्तु—पुनरुक्तत्वव्यवच्छेदाय 'भेदे तात्पर्यमात्रतः' इत्युक्तमिति व्याख्यानं तदसत् । मात्रशब्दस्याप्रयोजकतापत्तेः । एष एव कैश्चित्पदानुप्रास उच्यते । सोऽयं पदस्य नाम्नो वेति द्विविधः । तत्र सविभक्तिकस्य यत्राऽऽवृत्तिः स आद्यः । अन्यादृशस्तु द्वितीयः । तयोराद्योऽनेकस्य पदस्यैकस्य वा पदस्येति द्विविधः । अन्त्यस्तु त्रिविधः । आवृत्तेरभिन्नसमासस्थतया भिन्नसमासस्थतयैकस्याः समासस्थत्वे सत्यपरस्या असमासस्थतया च समासं विनाऽस्यासंभवादिति पञ्चप्रभेदा इति कारिकया प्रतिपादितम् ।

तत्राऽऽद्यमाह—**पदा०** ।

---

लाटो स्वल्पान्तरत्वात्पाश्चात्यन्तर्गतैवेति बोध्यम् । **शब्दनाव्यापारवानिति** । अयमेव पदानुप्रास इत्युच्यत इति भावः । अत एव वर्णानुप्राससाधारण्यं नेति बोध्यम् । लाटो देशविशेषस्तत्प्रियत्वाल्लाट इत्यर्थः । **प्रातिपदिकादीति** । आदिना विभक्त्यन्तम् । शब्दनाव्यापारोऽर्थबोधानुकूलः शक्त्यादिः । **अन्वयभेदः** । तात्पर्यविषयसंसर्गः । **तन्मात्रादिति** । मात्रपदेन यमकव्यावृत्तिस्तत्रार्थभेदात् । **तुल्यार्थकेति** । तेन यमकव्यावृत्तिः । अर्थैक्ये सति अभिन्नतात्पर्यकशब्दप्रयोगे पुनरुक्तत्वं कथितपदत्वं च स्यादतो भिन्नतात्पर्यकेति । **तुशब्द इति** । केचित्तु अनुप्रासाद्भिन्न एवायं नानुप्रासत्वाक्रान्तः । एतद्बोधक एव तुशब्दः । लाटानुप्रासव्यवहारस्तु पिष्टकमय्यो गाव इतिवत् । अत एव वर्णसाम्यमनुप्रास इत्येवोक्तं न वर्णानुप्रास इतीत्याहुः । **तदसदिति** । समुदायस्य पुनरुक्तत्वव्यावृत्त्यर्थत्वमसदित्यर्थः । मम तु भेद इत्यंशस्तव्द्यावर्तकः । मात्रपदं च यमकव्यावृत्तय इति बोध्यम् । **समासं विनेति** । अत्र समास इत्युपलक्षणं पञ्चविधवृत्तेरपि । एतेन—

हंसायते चारुगतेन कान्ता कान्तायते स्पर्शसुखेन वायुः ।

इत्यादेः संग्रहः । **सः** । लाटानुप्रासः ॥

---

१ क. ग. 'त्वाल्लाटा' । २ क. 'कस्यैव वा ।

स इति लाटानुप्रासः। उदाहरणम्—

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥ ३५७ ॥

पदस्यापि।

अपिशब्देन स इति समुच्चीयते। उदाहरणम्—

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥ ३५८ ॥

वृत्तावन्यत्र तत्र वा।

---

पदानामिति बहुवचनमनेकोपलक्षणम्। अन्यथा द्वयोः पदयोरावृत्तौ षष्ठभेदापत्तेः। उदा० यस्य०।

अत्र यद्यपि पूर्वार्धे दवदहनशब्दस्य परार्धे तुहिनदीधितिशब्दस्यार्थान्तरसंक्रमितवाच्यत्वा-न्नार्थाभेदस्तथाऽपि शब्दार्थमात्रेणोदाहरणम्। यद्वाऽविशिष्टपदावृत्तेरेवोदाहरणं द्रष्टव्यम्।

द्वितीयभेदमाह—पद०।

अपिशब्देन स इति समुच्चीयते। यथा—वदनं०।

नाम्नः प्रकारत्रयमाह—वृत्ताव०।

---

**यस्य नेति**। पूर्वार्धे तुहिनदीधितौ दवदहनत्वं विधेयम्। उत्तरार्धे तु विपरीतम्। चस्त्वर्थे। समुच्चेयाभावात्। उद्देश्यविधेयभावविपर्यासेन शाब्दबोधरूपान्वयभेदात्तात्पर्यभेदोऽत्रेति बोध्यम्। **शब्दार्थमात्रेणेति**। शक्यार्थभेदमात्रेणेत्यर्थः। **अविशिष्टपदवृत्तेरेवेति**। शुद्धपदमात्रावृत्तेरित्यर्थः। न तु तुल्यार्थत्वविशिष्टपदावृत्तेरिति भावः। वस्तुतो रूपकमत्रेति न दोषः। तत्र लक्षणायामपि शक्यार्थभेदस्य व्यञ्जनया बोधेनार्थभेदो द्रष्टव्यः।

**अपिशब्देनेति**। एकविशेषान्वयित्वरूपसाहित्यसूचनादिति भावः।

**वदनमिति**। तस्या वरवर्णिन्या वदनं सुधाकरश्चन्द्रः सत्यम्। उक्तरूपकं निषेधति—सुधाकरश्चन्द्रः पुनः कलङ्करहितः क्व भवेत्। न क्वापीत्यर्थः। एवं चास्य मुखरूपणायोग्यत्वमिति भावः। व्यतिरेकालङ्कारो व्यङ्ग्यः। अत्राऽऽद्यसुधाकरपदस्य लाक्षणिकत्वेऽपि प्राग्वदर्थाभेदः। उद्देश्यविधेयभावभेदाच्च तात्पर्यभेद इति बोध्यम्।

---

१ क. पुस्तके चकारस्थाने नकारः पठ्यते। तदा यस्य सविधे दयिता तस्य तुहिनदीधितिर्दवदहनो नेत्यर्थो बोध्यः। २ क. °ङ्करहितो भ°।

नाम्नः स वृत्त्यवृत्त्योश्च

एकस्मिन्समासे भिन्ने वा समासे समासासमासयोर्वा नाम्नः प्रातिपदिकस्य, न तु पदस्य सारूप्यम् । उदाहरणम्—

सितकरकररुचिरविभा विभाकराकार धरणिधर कीर्तिः ।
पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य ॥ ३५९ ॥

तदेवं पञ्चधा मतः ॥ ८२ ॥

अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः ।

यमकम्

समरसमरसोऽयमित्यादावेकेषामर्थवत्त्वेऽन्येषामनर्थकत्वे भिन्नार्थानामिति न युज्यते वक्तुमित्यर्थे सतीत्युक्तम् । सेति सरो रस इत्यादि-

---

वृत्तिनिरूपितप्रकारत्रये नाम्न एव लाटानुप्रास इत्यर्थः । उदाहरणम्–सितकर० । पौरुषकमला पौरुषलक्ष्मीर्लक्ष्मीश्च तवैवेत्यर्थः । यत्तु 'पौरुषं कमलमाश्रयो यस्याः सा पौरुषकमला' इति व्याख्यानं तदयुक्तम् । अर्थभेदेनानुदाहरणत्वापत्तेः । अत्र करकेस्येकसमासो विभा विभेति भिन्नौ समासौ, कमला कमलेति पूर्वस्य समास उत्तरस्यासमास इति त्रयाणामुदाहरणम् ।

तदेवं० ।

व्याख्यातम् ।

अर्थे० ।

अर्थभिन्नानां भिन्नार्थानामित्यर्थः । एतच्च लाटानुप्रासेऽतिव्याप्तिवारणाय । तन्मात्रे च कृते समरसमरसोऽयमित्यादौ द्वितीयाद्यावृत्तेरर्थाभावादव्याप्तिः स्यादत उक्तम् 'अर्थे सति'

---

नाम्नः सवृत्तीति । नाम्न इत्युपलक्षणम् ।

जित्वा विश्वं भवानद्य विहरत्यवरोधनैः ।
विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः ॥

इति केचित् । अर्थभेदेनेति । केचित्तु द्वितीयकमलापदस्यापि अर्शआद्यजन्तत्वेन कमलाश्रयेत्येवार्थः । पौरुषकमलाश्रयाभिन्ना कमलाश्रयेत्यर्थः । अच्प्रत्ययप्रकृतिकमलभागस्य चानुप्रास इत्याहुः । यद्यपि कमला कमलेत्यत्र विभक्त्यन्तस्याप्यावृत्तिरस्ति तथाऽपि प्रकृतिभागस्यापि साऽस्तीत्यदोषः । तदेवमिति । लाटानुप्रास इत्यर्थः । द्वितीयाद्यावृ-

---

१ कः °मासा° । २ ग. °तीत्याद्युक्त° । ३ क. °म् । सा श्रुतिः सरो° ।

वैलक्षण्येन तेनैव क्रमेण स्थिता ।

पादतद्भागवृत्ति तद्यात्यनेकताम् ॥ ८३ ॥

प्रथमो द्वितीयादौ (३) द्वितीयस्तृतीयादौ (२) तृतीयश्चतुर्थे (१) प्रथमस्त्रिष्वपि (१) इति सप्त । प्रथमो द्वितीये तृतीयश्चतुर्थे, प्रथमश्चतुर्थे द्वितीयस्तृतीये, इति द्वे । तदेवं पादजं नवभेदम् । अर्धावृत्तिः श्लोकावृत्तिश्चेति द्वे । द्विधा विभक्ते पादे प्रथमादिपादादिभागः

---

इति । यद्यर्थस्तदा भिन्न इत्यर्थः । वर्णानामिति बहुवचनमविवक्षितम् । द्वयोरपि यमकव्यवहारात् । सेति । पूर्वेणैव क्रमेण स्थितेत्यर्थः । अतः सरो रस इत्यादौ नातिप्रसङ्गः । एवं च समानार्थत्वाभाववत्समानानुपूर्वीकानेकवर्णावृत्ति यमकमिति लक्षणं द्रष्टव्यम् ।

तदेतद्विभजते—पादतद्भाग० ।

प्रथमपादो यदि द्वितीये पादे यम्यते तदा मुखं नाम यमकम् । तृतीये चेत्तदा संदंशः । चतुर्थे चेत्तदाऽऽवृत्तिः । एवं द्वितीयपादश्चेत्तृतीये तदा गर्भः । चतुर्थे चेत्तदा संदष्टकम् । तृतीयश्चेच्चतुर्थे तदा पुच्छम् । प्रथमस्त्रिषु चेत्तदा पङ्क्तिः । महायमकमिति केचित् । पादत्रययमकं तु न चमत्कारकारि । अतो न प्रयुक्तम् । इत्येकैकपादावृत्तौ सप्त भेदाः । प्रथमो द्वितीये तृतीयश्चतुर्थे चेत्तदा युग्मकम् । प्रथमश्चतुर्थे द्वितीयस्तृतीये चेत्तदा परिवृत्तिः । इत्यर्धाभ्यासमृते पादद्वयावृत्तौ द्वयमिति नव भेदाः । अर्धावृत्तिस्तु

---

चेरिति । समरतेऽमरतेजसि पार्थिवे, इत्यादावुभयोरनर्थकत्वादित्यपि बोध्यम् । द्रष्टव्यमिति । क्वचिद्वर्णभेदेऽपि श्रुतिसाम्येन यमकं भवति । तदुक्तम्—

यमकादौ भवदैक्यं डलयो रलयोर्बवोः ।
शषयोर्नणयोश्चान्ते सविसर्गाविसर्गयोः ॥
सबिन्दुकाबिन्दुकयोः स्यादभेदप्रकल्पनम् । इति ।
यमकं तु विधातव्यं न कथंचिदपि त्रिपात् । इति च ।

यथा भुजलतां जडतामबलाजन इति ।

पादः । पद्यचतुर्थांशः । तत् । यमकम् । सप्त भेदा इति । शुद्धा एते । संकीर्णभेदानाह—प्रथमो द्वितीय इति । युग्मकमिति । मुखपुच्छयोः संयोगादिति भावः । परिवृत्तिरिति । आवृत्तिगर्भयोर्योगादिति भावः । नव भेदा इति । पादावृत्ताविति शेषः । अर्धावृत्तिरिति । संदंशसंदष्टकयोः संकरोऽत्रेति भावः ।

---

१ क. प्रथमश्चतुर्थे द्वितीयस्तृतीयमिति प्रथमो द्वितीये तृतीयश्चतुर्थे इति द्वे । २ ग. थमपा° । ३ क. °तीयपा° ।

पूर्ववद्द्वितीयादिपादादिभागेष्वन्तभागोऽन्तभागेष्विति विंशतिर्भेदाः । श्लोकान्तरे हि नासौ भागावृत्तिः । त्रिखण्डे त्रिंशच्चतुःखण्डे चत्वारिंशत् । प्रथमपादादिगतान्त्यार्धादिभागो द्वितीयपादादिगत आद्यार्धादिभागे यम्यत इत्याद्यन्वर्थतानुसारेणानेकभेदम्, अन्तादिकम् । आद्यन्तिकम्, तत्समुच्चयः, मध्यादिकम्, आदिमध्यम्, अन्तमध्यम्, मध्यान्तिकम्, तेषां समुच्चयः । तथा तस्मिन्नेव पाद आद्यादिभागानां

---

संमुद्गः । श्लोकावृत्तिर्महायमकम् । तदुभयमपि पादावृत्तिविशेष एवेत्येकादश पादयमकभेदाः ।

पादभागवृत्ति बहुभेदम् । तथा हि—द्विधा विभक्तेषु पादेषु प्रथमादिपादानामाद्यभागाः पूर्ववद्द्वितीयादिपादेष्वाद्यभागेष्वेव यदि यम्यन्ते तदा पूर्ववन्मुखादयो दश भेदाः । श्लोकान्तरे भागावृत्तिर्न स्वदत इति श्लोकावृत्तिस्थानीय एकादशो भेदो भागावृत्तौ नास्ति । एवं प्रथमादिपादानामन्त्यभागस्य द्वितीयादिपादान्त्यभागेष्वेव यमने पूर्ववद्दश भेदाः । एवं द्विखण्डीकृतेषु पादेषु विंशतिः । त्रिखण्डीकृतेषु त्रिंशत् । चतुःखण्डीकृतेषु चत्वारिंशद्भेदाः स्थानापरिवर्तिनो भवन्ति ।

अथ स्थानपरिवर्तनभेदाः । प्रथमादिपादानामन्त्यादिभागा द्वितीयादिपादानामाद्यादिभागेषु यम्यन्त इत्याद्यन्वर्थतानुसारेणान्ताद्यादि यमकादयः प्रभेदा भवन्ति । तथा हि—द्विखण्डे यथा प्रथमपादस्यान्त्यमर्धं द्वितीयपादस्याद्यार्धे चेद्यम्यते तदाऽन्तादियमकम् । प्रथमभाग एव चेदन्त्यभागे तदाऽऽद्यन्तयमकम् । एवं प्रथमपादस्याद्यन्तभागौ द्वितीयस्यान्तादिभागयोर्यदि यम्येते तदाऽऽद्यन्तान्तादियमकयोः समुच्चयः । अत्र त्रिखण्डचतुःखण्डयोः पूर्वपादमध्यभाग उत्तरपादस्याऽऽदिभागे यदि यम्यते तदा मध्यादियमकम् । पूर्वस्याऽऽदिभागश्चेत्तदुत्तरपादस्य

---

पादावृत्तिविशेष इति । पादद्वयस्यार्धत्वात्पादचतुष्टयस्य च श्लोकत्वादिति भावः । दश भेदा इति । प्रथमपादाद्यभागो द्वितीयतृतीयचतुर्थपादाद्यभागेषु यम्यत इति त्रिधा । द्वितीयपादाद्यभागस्तृतीयचतुर्थभागयोर्यम्यत इति द्विधा । तृतीयपादाद्यभागश्चतुर्थपादाद्यभाग इति एकः । प्रथमपादाद्यभागस्त्रिष्वप्यन्याद्यभागेषु इत्यपर इति सप्त शुद्धभेदाः । प्रथमपादाद्यभागतुल्यो द्वितीयपादाद्यभागस्तृतीयपादाद्यभागतुल्यश्चतुर्थपादाद्यभाग इत्येकः संकरः । तथा प्रथमचतुर्थपादाद्यभागयोर्द्वितीयतृतीयपादाद्यभागयोश्च तुल्यत्वेऽपरः संकर इति नव । अर्धावृत्त्या समं पूर्ववद्दशेत्यर्थः । श्लोकान्तर इति । एवं च भागावृत्तौ भागिनः श्लोकस्याऽऽवृत्तिर्भवत्येव । अतिव्यवधाने हि त्रिचतुराद्यक्षरावृत्तौ न चमत्कार इति भावः । अन्तादीति । आदिनाऽऽद्यसंग्रहः । आद्यादीत्यादिनाऽन्त्यसंग्रहः । प्रथमभाग

---

१ ग. °तीयतृतीया° । २ क. °तिभेदाः । ३ क. हि न भा° । ४ क. ग. °नुसरणेनाने° । ५ ग. अन्त्यादि° । ६ क. °मुद्गकम् । ७ रू. °मन्तादि° । ८ क. °ण्डयोः ।

मध्यादिभागेषु, अनियते च स्थान आवृत्तिरिति प्रभूततमभेदम् । तदेतत्काव्यान्तर्गडुभूतमिति नास्य भेदलक्षणं कृतम् । दिङ्मात्रमुदाह्रियते—

सन्नारीभरणोमायमाराध्य विधुशेखरम् ।
सन्नारीभरणोऽमाय ततस्त्वं पृथिवीं जय ॥ ३६० ॥
विनाऽयमेनो नयताऽसुखादिना विना यमेनोऽनयता सुखादिना ।
महाजनोऽदीयत मानसादरं महाजनोदी यतमानसादरम् ॥ ३६१ ॥

---

मध्यभागे तदादिमध्ययमकम् । पूर्वस्य मध्यादिभागौ चेदुत्तरस्याद्यमध्ययोस्तदा मध्याद्यादिमध्ययोः समुच्चयः । एवं प्रथमस्यान्त्यभागो द्वितीयस्य मध्यभागे चेत्तदाऽन्त्यमध्यम् । पूर्वस्य मध्यभागश्चेद्द्वितीयस्यान्त्यभागे तदा मध्यान्तिकम् । पूर्वस्यान्त्यमध्यभागौ चेद्द्वितीयस्य मध्यान्त्यभागयोस्तदाऽन्त्यमध्यमध्यान्त्ययोः समुच्चयः । यद्यपि पूर्वस्याऽऽदिभाग उत्तरस्यान्त्यभागे चेत्तदाऽऽद्यन्त्यैकं मध्यभागस्त्वाद्यभागे चेत्तदाऽन्तादिकमित्यादि प्रकारद्वयं संभवति तथाऽपि द्विखण्डान्तर्गतमेव तदिति पृथङ्न गण्यते । सर्वेषां चैषामपरः समुच्चय इति भिन्नपादे यमने प्रभेदाः । एवं तस्मिन्नेव पाद आद्यादिभागानां मध्यादिभागेष्वावृत्तौ भेदा द्रष्टव्याः । सर्वे चैते नियतस्थानविवक्षया स्थानयमकभेदाः[४] । अनियतेषु स्थानेष्वावृत्तेरिति अस्थानयमकभेदा अपि बहवो भवन्तीति प्रभूततमभेदं यमकम् । तदेतत्काव्ये गडुभूतमिति नास्य लक्षणं कृतम् । दिङ्मात्रं तूदाहियते ।

तत्रैकपादाभ्यासेषु संदंशो यथा—**सन्नारी०** ।

द्विपादाभ्यासे यमकं यथा—**विनाऽयमे०** ।

---

**एव चेदिति** । प्रथमपादाद्यमर्धं द्वितीयपादान्त्यभाग इत्यर्थः । **अस्थानयमकेति** । पादादिव्यवस्थाशून्यगद्यादावेते द्रष्टव्या इत्याहुः । **गडुभूतमिति** । गूढार्थप्रतिसंधानविलम्बेनाऽऽस्वादविच्छेदादिति भावः । क्वचित्तु ग्रन्थिभूतमिति पाठः । यथेक्षुदण्डे ग्रन्थिश्चर्वणेन रसनिःसरणे व्यवधायकस्तथा काव्ये यमकमिति भावः । गडुशब्देनापीदमेवोच्यते । **लक्षणम्** । विशेषलक्षणम् ।

**सन्नारीति** । सतीं नारीं बिभर्ति एवंभूता योमा गौरी तां याति यस्तं चन्द्रशेखरमाराध्य त्वं पृथिवीं जय । कीदृशस्त्वम् । सन्ना मृता अरीणां इभा यत्र तादृशो रणो यस्य सः । अमाया मायाशून्य इति संबोधनम् । ततो रणात् ।

**विनेति** । अयं महाजनो, विश्वासौ ना च विना पक्षिपुरुषः कर्म यमेन कर्त्रा मानसं चित्तं तदेव मानससरस्तस्मात् । अरं शीघ्रमदीयताखण्ड्यत । कीदृशेन यमेन विना पक्षिरूपेण विर्भारुण्डसंज्ञकः पक्षी तत्तुल्येनेत्यर्थ इति कश्चित् । अनेन दुर्लक्ष्यत्वम् ।

---

१ क. °स्यान्तभा° । २ क. °न्त्यकमन्तभाग° । ३ क. °दाः नि° । ४ क. °रिति

स त्वारम्भरतोऽवश्यमबलं विततारवम् ।
सर्वदा रणमानैषीदवानलसमस्थितः ॥ ३६२ ॥
सत्वारम्भरतोऽवश्यमवलम्बिततारवम् ।
सर्वदारणमानैषी दवानलसमस्थितः ॥ ३६३ ॥
अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम् ।
या च मातेव भजते प्रणते मानवे दयाम् ॥ ३६४ ॥

---

श्लोकाभ्यासे महायमकं यथा—स त्वारम्भ० ।

द्विखण्डेषु भिन्नपदे पादभागाभ्यासेषु द्वितीयपादान्त्यभागस्य चतुर्थपादान्त्यभागे यमने संदष्टं यथा—अनन्त० ।

---

पुनः कीदृशेनैनस्तद्भोगस्थानं नयता यद्वाऽयं शुभावहविधिं विनैनः पापं तत्फलं नरकादि नयता यमेनेत्यर्थः । पुनः कीदृशेन । असुखादिना प्राणभक्षकेण । पुनः कीदृशेन । सुखादिनोनयता न्यूनं कुर्वता । कीदृशः पुरुषः । महमुत्सवमजन्ति क्षिपन्ति ये दुर्जनास्तन्नोदी तदपसारकः । पुनः कीदृशो महाजन उत्कृष्टगुणवान् । यतमानानां रक्षितुमिच्छतां सादं दुःखं राति ददातीति खण्डनाक्रियाविशेषणम् ।

स त्वेति । स तु प्रक्रान्तो राजा, आरं अरिसमूहं सर्वदाऽवश्यं निश्चयेन भरतोऽतिशयेन रणं युद्धमानैषीत्प्रापितवान् । कीदृगारमबलं बलरहितम् । विततारवमतिशयकृतहाहाशब्दम् । केचित्तु इदं द्वयं क्रियाविशेषणम् । तेन सैन्यं विनैव सिंहनादं विस्तीर्य रणसंचरणं चकारेत्यर्थ इत्याहुः । किंभूतो राजा । अलसं मन्दमवान् । अगच्छन् । शीघ्रं गच्छन्नित्यर्थः । पुनः किंभूतः । ए विष्णौ स्थितः । यद्वाऽस्थीनि तस्यति, इति अस्थितः । तसु उपक्षये । सान्तत्वेऽपि धातुत्वाद्दीर्घाभावः । सात्विककर्मरतः स राजा । किंभूतमारम् । अवश्यं वश्यतामनापन्नम् । पुनः किंभूतम् । अवलम्बितं तारवं तरोर्भावोऽनम्रत्वं येन । अवलम्बितानि वक्रतया स्वीकृतानि तारवाणि वल्कलानि येनेत्यपि कश्चित् । पुनः किंभूतो राजा । सर्वदा रणे यो मानस्तदिच्छाशीलः । दवानलेन समं स्थितं यस्य सः । अहितानां संतापकारित्वेन दवानलसाम्यम् ।

अनन्तेति । अनन्तेन महिम्ना व्याप्तं विश्वं यया तादृशीम् । यां वेधा ब्रह्माऽपि न वेद तत्त्वतो न जानाति । या च प्रणते मानवे मातेव दयां भजते ।

---

१ क. °तः । पुनरयं श्लोकः । अनन्त° । २ क. °षु चतुर्थपादान्तभागे द्वितीयपादान्तभागस्य यमने संदष्टकं यथा° ।

यदानतोऽयदानतो नयात्ययं न यात्ययम् ।
शिवे हितां शिवेहितां स्मरामितां स्मरामि ताम्[1] ॥ ३६५ ॥
सरस्वति प्रसादं मे स्थितिं चित्तसरस्वति[2] ।
सर स्वति कुरु क्षेत्र-कुरुक्षेत्र-सरस्वति[3] ॥ ३६६ ॥
ससार साकं दर्पेण कंदर्पेण ससारसा ।
शरन्नवाना बिभ्राणा नाविभ्राणा शरन्नवा ॥ ३६७ ॥
मधुपराजि-पराजित-मानिनी[4]जनमनःसुमनःसुरभि श्रियम् ।
अभृत वारितवारिजविप्लवं स्फुटिततांम्रततांम्रवणं जगत् ॥ ३६८ ॥

---

अस्मिन्नेवाऽऽद्यन्तकं[5] पादे यथा—यदानतो० ।

प्रथमपादाद्यभागस्य द्वितीयादिपादानामन्त्याद्यभागेषु यमने पूर्वार्धे आद्यन्तकमुत्तरार्धे आद्यन्तान्ताद्ययोः[6] समुच्चयो यथा—सरस्वति० ।

द्वयोराद्यन्तान्तादिकयोः समुच्चयो यथा—ससार० ।

चतुःखण्डे पादे द्वितीयभागस्य तृतीयभागे यमनं यथा—मधुपराजि० ।

---

पाद इति । एकपाद आद्यन्तयमकमित्यर्थः ।

यदानत इति । यस्यां पार्वत्यामानतोऽयं जनो नयात्ययं नीतिनाशं न याति । कुतः । तयैवायस्य शुभावहविधेर्दानतः शिवेन शंकरेणेहितां शिवे कल्याणे हितां कल्याणदात्रीं स्मरेण कामेनामितां स्मरनिमित्तमपरिच्छिन्नस्मरभावामहं स्मरामीत्यन्वयः ।

सरस्वतीति । हे सरस्वति वाग्देवि प्रसादं सर गच्छ प्रसन्ना भवेत्यर्थः । मे मम चित्तरूपसरस्वति समुद्रे स्थितिं स्वति । सुष्ठु अतिशयेन कुरु क्षेत्रं शरीरमेव कुरुक्षेत्रं क्षेत्रविशेषस्तत्र सरस्वति सरस्वत्याख्यनदि संबोधनविशेषणम् । नद्याः समुद्रेऽवस्थानमुचितमिति भावः । द्वयोरिति । द्वयोरप्यर्धयोरित्यर्थः ।

ससारेति । शरत्कंदर्पेण कं ब्रह्माणं दर्पयतीति कंदर्पस्तेन मदनेन दर्पेण दर्पवता साकं सह ससार गतवती । कीदृशी शरत् । ससारसा । सारसाः पक्षिविशेषाः पद्मानि च तैः सहिता । नवं कर्दमाभावात्, अनः शकटं तन्मार्गो यस्यां सा नवानां शरं शराख्यं बिभ्राणा पुष्णन्ती । पोषश्च परिपाकलक्षणः । नाविभ्राणा वीनां पक्षिणां भ्राणो यत्र सा विभ्राणा । न विभ्राणा अविभ्राणा । न अविभ्राणा नाविभ्राणा पक्षिशब्दसहितेत्यर्थः । नवा प्रशस्ता ।

मधुपेति । जगच्छ्रियमभृत । कीदृशम् । मधुपराज्या भ्रमरपङ्क्त्या पराजितानि मानिनीजनमनांसि याभिः, एवंभूता याः सुमनसस्ताभिः सुरभि । वारितो वारिजानां विप्लवो विभावो यत्र तत् । स्फुटितानि विकसितानि ताम्राण्यालोहितानि ततानि विस्तीर्णानि

---

१ ग. °म् । समुच्चयमकम् । सर° । २ क. चित्ते स° । ३ क. °ति । वर्णभेदयमकम् । ससार° । ४ ग. °मालिनी° । ५ क. °द्यन्त्यकं । ६ क. °मन्ताद्य° ।

एवं वैचित्र्यसहस्रैः स्थितमन्यदुन्नेयम् ।

वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः ।
शिलष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा ॥ ८४ ॥

अर्थभेदेन शब्दभेद इति दर्शने काव्यमार्गे स्वरो न गण्यत इति च नये वाच्यभेदेन भिन्ना अपि शब्दा यद्युगपदुच्चारणेन शिलष्यन्ति भिन्नं स्वरूपमपह्नुवते स श्लेषः । स च वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययवि-

---

एवं वैचित्र्यसहस्रैः स्थितमन्यदप्यूह्यम् ।

वाच्यप्रभेद० ।

अर्थभेदेन शब्दभेद इति नयेन भिन्नाः शब्दाः 'काव्यमार्गे स्वरो न गण्यते' इति-नयेन युगपदुच्चारणविषयतया यच्छिलष्यन्ति भिन्नं स्वरूपमपह्नुवत एकवृन्तगतफलद्वयन्यायेन यत्रार्थद्वयप्रतीतिः स श्लेष इत्यर्थः । अक्षरादिभिरिति । वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययविभ-

---

आम्राणां वनानि यत्र तत् । केचित्तु तादृशाः सुमनसः पुष्पाणि यत्र सुरभौ वसन्ते तस्य वसन्तस्य लक्ष्मीमित्यर्थ इत्याहुः । एकाभिति ।

तन्व्यां तन्व्यां न संमाति तस्या लावण्यसंचयः ।

इत्यादि । तन्व्यां कृशायाम् ।

**वाच्यप्रभेदेति** । यच्छब्दाः शिलष्यन्ति स श्लेषः । श्लेषणं चागृहीतभिन्नस्वरूपत्वम् । भेदाग्रहे दोषमाह—युगपदिति । एकोच्चारणेत्यर्थः । एको यः कण्ठताल्वाद्यभिघातानुकूलयत्नस्तद्विषयत्वं समानानुपूर्वीकत्वं च दोष इति भावः । श्वेतो धावतीत्यादौ हि समुदायद्वयमेकोच्चारणानुकूलकविकौशलेनैकमिव गृह्यते । इतः श्वेत्युच्चारणे तदयोगात् । वाच्यः । प्रकृते बोध्यः । सकृदुच्चरितः शब्दः सकृदर्थप्रत्यायक इति नय इदम् । नानार्थेषु श्लिष्टेषु च यत्रानेकत्र प्रकरणादिकं युगपदवतरति तत्र श्लेषः । यत्र क्रमेण तत्राऽऽवृत्तिः । यत्रैकत्रैव तत्र व्यञ्जनेति स्थितिः । एकानुपूर्वीकत्वेऽपि तत्तदर्थनिरूपितवृत्तिभेदाच्छब्दभेदो द्रष्टव्यः । तदाह—**अर्थभेदेनेति** । वर्णश्लेषेऽपि स्वघटितसमुदायद्वाराऽर्थभेदो बोध्यः । स्वरूपभेदेनैव तत्र भेदादस्यानावश्यकता वा । ननु भिन्नसमासानां श्लेष उदात्तानुदात्तादिस्वरभेदे भेदग्रहो दुरपह्नव इत्यत आह—**काव्येति** । एवं चैकोच्चारणापह्नुतभेदकभिन्नार्थकसदृशनानाशब्दवत्त्वं श्लेष इति फलितम् । अर्थभेदग्रहोत्तरं शब्दभेदग्रहस्त्वकिंचित्करः । सकृदुच्चरित इति नियमानङ्गीकर्तॄणां मत एकदा गृहीतनानार्थतात्पर्यकः शब्द एव श्लेष इत्यपि सुवचम् । **एकवृन्तगतफलद्वयन्यायेनेति** । अभङ्गश्लेषाभिप्रायेणेदम् । सभङ्गेऽपि

---

१ क. 'च्यप्रभेदभि'।

भक्तिवचनानां भेदादष्टधा । क्रमेणोदाहरणानि—

अलंकारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ ३६९ ॥

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥ ३७० ॥

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये ।
लावण्यैकमहानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥ ३७१ ॥

---

क्तिवचनभेदादष्टधा श्लेष इत्यर्थः ।

अत्र वर्णश्लेषो यथा—**अलंकारः०** ।

अत्र विधावित्यत्र विधिविधुशब्दयोरिकारोकारयोर्भेदाद्वर्णश्लेषः ।

पदश्लेषो यथा—**पृथुकार्त०** ।

अत्र पृथुकानां बालानामार्तस्वरस्य पात्रम् । पक्षे पृथु बहुलं कार्तस्वरस्य पात्रं यत्रेत्यादिक्रमेण पदभेदात्पदश्लेषोऽयम् ।

लिङ्गवचनयोः श्लेषो यथा—**भक्तिप्रह्व०** ।

---

शब्दद्वारेति बोध्यम् । **अष्टधेति** । सभङ्गश्लेष इत्यर्थः । विधावित्यादावादेशिनि भेदेऽपि आदेशमादाय सादृश्यं बोध्यम् ।

**अलंकार इति** । शङ्का भयम् । नरो मनुष्यः । विशीर्णं गलितम् । वसु धनम् । स्थाणोरीश्वरस्य । अमरा देवाः । वक्रे कुटिलाकारे । विधौ बालचन्द्रे । श्रेयः प्रतिकूलादृष्टं च । **पदश्लेषोऽयमिति** । समासघटकत्वेन पदानां श्लेषोऽत्र बोध्यः । समासस्य पदत्वाद्वा तत्त्वम् ।

**भक्तीति** । भक्तिप्रह्वो विलोकनस्य कर्ता कर्म वा । प्रणयिनीति स्त्रिया प्रथमैकवचनं नपुंसके द्विवचनं च । एवमग्रेऽपि । नीलोत्पलस्पर्धित्वं नेत्रपक्षे संनिवेशवैशिष्ट्येन । तनुपक्षे श्यामत्वमात्रेण । नेत्रपक्षे हितप्राप्तये तनुपक्षे नीता, ईहितप्राप्तये । नेत्रस्य नपुंसकत्वेऽपि निधिशब्दस्याजहल्लिङ्गत्वात् महानिधीति द्विवचनम् । निधिर्ना शेवधिः पुमानित्यमरः । तनुपक्षे महानिधिः, ढ्लोपेति दीर्घः । कुरुतामिति परस्मैपदद्विवचनम्, आत्मने-

---

१ क. °नालोकनतां । २ क. ग. °बन्दस्य म° ।

**एवं वचनश्लेषोऽपि ।**

**महदेसुरसंधं मे तमव समासङ्गमागमाहरणे ।**
**हर बहुसरणं तं चित्तमोहमवसर उमे सहसा ॥ ३७२ ॥**
**अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।**
**सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥ ३७३ ॥**

---

अत्र प्रणयिनी इति स्त्रियां प्रथमैकवचनं नपुंसके तद्द्विवचनं चेति लिङ्गवचनयोः श्लेषः । एवमग्रेऽप्यूह्यम् ।

भाषाश्लेषो यथा—**महदे०** ।

अत्र प्राकृते—

मम देहि रसं धर्मे तमोवशामाशांगमागमाद्धर नः ।
हरवधूः शरणं त्वं चित्तमोहोऽपसरतु मे सहसा ॥

इत्यर्थकानि पदानि । संस्कृतपक्षे तु—महद उत्सवद सुरेण संधा संधानं यस्मात्त-मागमाहरणे समासङ्गमव । बहु सरणं संसाररूपं यस्मात्तं चित्तमोहमवसरे उमे हर सहसा इत्यर्थकानि पदानि ।

प्रकृतिश्लेषो यथा—**अयं सर्वाणि०** ।

अत्र वक्ष्यतीति वहिवच्योर्लृटि कृदिति कृन्ततिकरोत्योः क्विपि तुल्यं रूपमिति प्रकृतिश्लेषौ ।

---

पदैकवचनं च । **लिङ्गवचनेति** । लिङ्गपदेन लिङ्गबोधकः शब्दः । रूपसाम्येन स्त्रीलिङ्गपुंलिङ्गयोर्द्विवचनैकवचनयोश्च श्लेषः । वा पुंसि पद्ममित्याद्यनुशासनाल्लिङ्गं प्रातिपदिकार्थ इत्यर्थः । विशेषणानां विशेष्यलिङ्गग्राहित्वनियमादिति भावः । कुरुतामिति द्विवचनैकवचन-योरपि श्लेषो बोध्यः । **भाषेति** । संस्कृतप्राकृतरूपेत्यर्थः ।

**महदे इति** । संस्कृतपक्षे हे उमे गौरि मे ममाऽऽगमाहरणे वेदविद्योपार्जने तं समासङ्गं संसक्तिमव रक्ष । अवसरे मोहापचयोचितकाले चित्तमोहं सहसा झटिति हर । कीदृश आगमाहरणे । महद उत्सवद । संबोधनविशेषणं वैतत् । किंभूतं समासङ्गम् । सुरैर्देवैः संधा संधिर्मिलनं यस्मात्तथा । किंभूतं चित्तमोहम् । बहुसरणमनेकप्रसरणं बहु सरणं संसाररूपं यस्मात्तथा । प्राकृतपक्षे तु ।

मह्यं देहि रसं धर्मे तमोवशामाशां गमागमाद्धर नः ।
हर वधूः शरणं चित्तमोहमपसरतु मे सहसा ॥

नोऽस्मत्संबोधिनीं तमोवशां तमोगुणयुक्तामाशां गमो गमनं मरणमागमः पुनर्जन्म यस्मिंस्तादृशात्संसाराद्धर । चित्तमोहं मोहशब्दस्य गुणवाचकत्वात्क्लीबे गुणगा इति सूत्रेण नपुंसकत्वम् ।

**अयमिति** । कृदिति कृन्ततिकरोत्योः क्विपि तुल्यं रूपम् । वक्ष्यतीति वहिवच्यो-र्लृटि तुल्यम् । हृदि स्वहृदये ज्ञेषु विद्वत्सु च ।

---

१ क. ग. °एष व° । २ क. वचिवह्योर्लृ° ।

रजनिरमणमौलेः पादपद्मावलोक-
क्षणसमयपराप्ताऽपूर्वसंपत्सहस्रम् ।
प्रमथनिवहमध्ये जातुचित्त्वत्प्रसादा-
दहमुचितरुचिः स्यान्नन्दिता सा तथा मे ॥ ३७४ ॥
सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः ।
नयोपकारसांमुख्यमायासि तनुवर्तनम् ॥ ३७५ ॥

**भेदाभावात्प्रकृत्यादेर्भेदोऽपि नवमो भवेत् ।**

---

विभक्तेर्वैचित्र्यविशेषहेतुतया पृथगुपादानात्प्रत्ययपदं तद्व्यतिरिक्तपरम् । तच्छ्लेषो यथा—**रजनिरमण०** ।

अत्र नन्दितेति तृचि तलि च रूपम् । तेनाहं नन्दिता नन्दकः स्याम् । तथा सा नन्दिता नन्दिनो भावो मे स्यादित्यर्थः । विभक्तिश्लेषो यथा—**सर्वस्वं०** ।

अत्र हर भवस्यनयोः संबोधनत्वाक्रियापदत्वाभ्यां सुप्तिङ्विभक्त्यन्तत्वम् । एवमायासीत्यादिक्रियापदत्वे च विभक्तिश्लेषः । एवमन्यत्राप्यूह्यम् ।

**भेदाभावा०** ।

---

**रजनीति** । चन्द्रमौलेश्चरणकमलावलोकनमेव क्षण उत्सवस्तत्समय एव परासं सम्यगाप्तमपूर्वा या संपत्तत्सहस्रं यद्वाऽपूर्वमदृष्टं संपत्सहस्रं च यस्मिन्कर्मणि तद्यथा भवति तथा प्रमथा गणस्तत्समूहमध्ये जातुचित्कदाचिदुचिता रुचिर्यत्रेदृशी सा नन्दिनो भावो नन्दिता महादेवसेवकविशेषता मे मम स्यात् । अथ चाहं त्वत्प्रसादात्त्वद्गणमध्य उचितरुचिः नन्दिता नन्दकः स्यामित्याशंसा । स्यान्नन्दितेति स्यां स्यादित्युत्तमप्रथमयोः, नन्दितेति तृच्तलोस्तुल्यं रूपम् । **विभक्तिः** । सुतिङौ ।

**सर्वस्वमिति** । हे हर शंभो त्वं सर्वस्य सर्वस्वं यतो यतश्च भवस्य संसारस्य च्छेदे तत्परोऽतो नयो नीतिरुपकारश्च तयोः सांमुख्यं यत्र तादृशं तनुवर्तनं शरीरवृत्तिमायासि गच्छसीत्येकोऽर्थः । अपरस्तु त्वं सर्वस्वं ग्रामहिरण्यादि हर त्वं छेदतत्परो बन्धच्छेदपरो भवोपकारसांमुख्यं नय प्रापय । आयासोऽस्यास्तीति आयासि वर्तनं तपश्चर्यादियोगिजीवितं तनु विस्तारय । सर्वस्वादिकं हृत्वा तपः कारय येन मोक्षः स्यादिति तात्पर्यार्थः । **क्रियापदत्वे चेति** । णिन्यन्तायासपदत्वे चेति चस्यार्थः ।

**भेदाभावादिति** । पूर्वोक्तप्रकृत्यादिरूपभेदकाभावे यत्रार्थद्वये युगपत्तात्पर्यमवगम्यते स नवमः प्रकार इत्यर्थः ।

---

१ ग. °मो मतः । उदा° ।

नवमोऽपीत्यपिर्भिन्नक्रमः। उदाहरणम्—

योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः।
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते ॥ ३७६ ॥

अत्र प्रकरणादिनियमाभावाद्द्वावप्यर्थौ वाच्यौ।

ननु स्वरितादिगुणभेदाद्भिन्नप्रयत्नोच्चार्याणां तदभावादभिन्नप्रयत्नो-

---

नवमोऽपीत्यपिर्भिन्नक्रमः। उदाहरणम्—योऽसकृत्०।

अत्रैकार्थमात्रानियतप्रकरणाद्यभावाद्द्वावप्यर्थौ वाच्यावेवेति 'भद्रात्मनो दुरधिरोहतनोः'—इत्यादिवन्न ध्वनित्वम्। ननु श्लेषस्तावद्द्विधा—सभङ्गपदोऽभङ्गपदश्च। तत्राऽऽद्यः शब्दश्लेषः। स्वरितादिगुणभेदाद्भिन्नप्रयत्नोच्चार्यतया भिन्नानां शब्दानां बन्धे जतुकाष्ठन्यायाच्छब्दयोरेव श्लिष्टत्वात्। द्वितीयस्त्वर्थश्लेषः। स्वरितादिगुणाभेदादेकप्रयत्नोच्चार्यतया शब्दभेदाभावादेकवृन्तगतफलद्वयन्यायेनार्थयोरेव श्लिष्टत्वात्। यद्यपि 'अर्थभेदेन शब्दभेदः' इति नयेन द्वितीयेऽपि शब्दस्य भेदस्तथाऽप्युपपत्त्या शब्दभेदप्रतीतावप्येकत्वाध्यवसायान्नास्ति शब्द-

---

**योऽसकृदिति**। राजपक्षे योऽसकृदनेकवारं परगोत्राणां शत्रुवर्गाणां पक्षस्य च्छेदे क्षणेनैव क्षमः। यद्वा छेदरूपे क्षण उत्सवे योग्यः। शतकोटीर्ददातीति शतकोटिदः। तत्तां बिभ्रत्। विबुधेन्द्रः पण्डितश्रेष्ठः स प्रकृतो राजा। इन्द्रपक्षे यः परगोत्राणां श्रेष्ठगिरीणां पक्षः पतत्रं तच्छेदोत्सवे क्षमः। शतकोटिना वज्रेण द्यति असुरान्खण्डयति तादृशो विबुधेन्द्रो देवराजः **नियतप्रकरणेति**। एवं च युगपदनेकत्र प्रकरणाद्यवतारे श्लेषः। क्रमेण तदवतार आवृत्तिः। यत्रैकत्रैव तत्र व्यञ्जनेति बोध्यम्। **न ध्वनित्वमिति**। द्वितीयार्थमादायेति भावः। उपमामादाय ध्वनित्वं तत्रापीष्टमिति द्वितीयोल्लासशेषे प्रदीपे स्पष्टम्। **स्वरितादिगुणभेदादिति**। आदिपदादुदात्तानुदात्तौ। गुणत्वं चैषां सजातीयेभ्यो भेदकत्वात्, तद्भेदेन भिन्नप्रयत्नोच्चारणयोग्यानां श्लेषभङ्गभयेन स्वरभेदानादरणात्, एकप्रयत्नेनोच्चारणे शब्दश्लेष इत्यर्थः। यथा पृथुकार्तस्वरपात्रमित्यत्र समासभेदाद्विजातीयोच्चारणयोग्यत्वेन भिन्नयोः शब्दयोर्जतुकाष्ठन्यायेन श्लिष्टत्वमिति भावः। **द्वितीयस्त्विति**। योऽसकृदित्यादिः। **उपपत्त्येति**। एवं चार्थभेदप्रतीत्युत्तरकालभवज्ज्ञानविषयः सः। **एकत्वेति**। ततः पूर्वमित्यादिः। यतः शक्ततावच्छेदकानुपूर्व्यभेदाध्यवसायस्तयोरिति भावः। पूर्वोदाहृतेषु प्रकृत्यादिभेदग्रहं विनाऽर्थान्तरबुद्धिरेव नोदेतीति विशेषः। एवं च शक्ततावच्छेदकभेदे सभङ्गश्लेषस्तदभेदेऽभङ्ग इति फलितम्। **स एष इति**। द्विविधोऽपि श्लेष इत्यर्थः। श्लेषस्थलेऽवश्यमलंकारान्तरप्रतिभासत्वात्

---

१ क. ग. 'दभेदाद°'।

च्चार्याणां च शब्दानां बन्धेऽलंकारान्तरप्रतिभोत्पत्तिहेतुः शब्दश्लेषोऽर्थश्लेषश्चेति द्विविधोऽप्ययमर्थालंकारमध्ये परिगणितोऽन्यैरिति कथमयं शब्दालंकारः । उच्यते । इह दोषगुणालंकाराणां शब्दार्थगतत्वेन यो

---

भेदः । स एव निरवकाशतया सर्वालंकारबाधक इत्यलंकारान्तराणां प्रतिभामात्रमुत्पादयति न तु तत्पर्याप्तिम् । यथा—स्वयं च० ।

अत्र पूर्वार्धेऽभङ्गपदो द्वितीयार्धे सभङ्गपदः श्लेषः । द्वयमप्युपमाप्रतिभोत्पत्तिहेतुः । साधर्म्याभावेन तस्याः प्ररोहाभावात् । यदुक्तम्—

एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम् ।
स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्ट इहोच्यते ॥
अलंकारान्तरगतां प्रतिभां जनयत्पदैः ।
द्विविधैरर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम् ॥

इति द्विविधोऽप्यलंकारसर्वस्वकारादिभिरर्थाश्रितत्वेनार्थालंकारमध्ये पठितस्तत्कथं शब्दालंकारमध्ये पठ्यत इति । उच्यते । दोषगुणालंकाराणां शब्दार्थगतत्वेन यो विभागः सोऽन्व-

---

श्लेषो निरवकाशतया सर्वालंकारबाधक इत्यर्थः । **इतीति** । अतो हेतोरित्यर्थः । **अलंकारान्तराणां प्रतिभामात्रमिति** । इवशब्दश्रवणादापाततः शब्दरूपसाम्यमादाय सत्प्रतिभामुत्पादयति स्वयं चेत्यादौ । पर्यन्ते च शब्दस्यार्थधर्मत्वाभावपर्यालोचनायां तदप्ररोह एव । इवशब्दस्तूत्प्रेक्षयाऽपि कृतार्थः । तस्याश्च साधर्म्यसंभावनयाऽप्युपपत्तेरित्याहुः । **न तु तत्पर्याप्तिमिति** । न तु तत्कृतश्चमत्कार इत्यर्थः ।

**स्वयं चेति** । अस्मिन्पाठे न केवलं महत्संबन्धित्वेनैव श्लाघनीया किं तु स्वयमप्येवंभूता इत्यर्थः । इयं चेति पाठेऽप्येष एवार्थः । गौरीपक्षे पल्लववदाताम्रौ भास्वन्तौ च यौ करौ ताभ्यां विराजिनी । सुखेनाऽऽप्यत इति स्वापम् । खल् प्रत्ययः । न स्वापमस्वापम् । दुःखप्रापम् । तादृशं यत्फलं मोक्षादि तत्र ये लुब्धास्तेषामीहितप्रदेष्टदात्री । प्रभातसंध्यापक्षे तु पल्लवताम्रैर्भास्वत्करैः सूर्यकिरणैर्विराजिनी । अस्वापो निद्राभावः तद्रूपफललुब्धे जने हितप्रदेष्टदात्री । **पूर्वार्धे** । भास्वत्करेत्यत्र । **द्वितीयार्धे** । अस्वापेत्यत्र । **उपमाप्रतिभोत्पत्तिरिति** । प्रतिभाया उत्पत्तिहेतुरिति षष्ठीतत्पुरुषः । **गुणैर्भिन्नैरिति** । भिन्नैः स्वरितादिगुणैर्युक्तानामित्यर्थः । द्विविधैः पदैरित्यन्वयः । **अर्थाश्रितत्वेनेति** । अर्थद्वयप्रतीतावेवालंकारत्वोपगमादर्थाश्रितत्वेन द्वयोरप्यर्थालंकारतेति

---

१ ग. °न्धे नियमेनालं° । २ क. ग. °प्ययमर्था° । ३ क. ग. °ध्येग° ।

विभागः सोऽन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते । तथा हि । कष्टत्वादिगाढत्वाद्यनुप्रासादयो व्यर्थत्वादिप्रौढ्याद्युपमादयस्तद्भावतदभावानुविधायित्वादेव शब्दार्थगतत्वेन व्यवस्थाप्यन्ते ।

स्वयं च पल्लवाताम्रभास्वत्करविराजिता ।
इत्यभङ्गः शब्दश्लेषः । प्रभातसंध्येवास्वापफललुब्धेहितप्रदा ॥३७७॥

इति सभङ्गः शब्दश्लेषश्च । इति द्वावपि शब्दैकसमाश्रयाविति द्वयोरपि शब्दश्लेषत्वमुपपन्नम् । नत्वाद्यस्यार्थश्लेषत्वम् । अर्थश्लेषस्य तु स विषयो यत्र शब्दपरिवर्तनेऽपि न श्लेषत्वखण्डना । यथा—

स्तोकेनोन्नतिमायाति स्तोकेनाऽऽयात्यधोगतिम् ।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥ ३७८ ॥

---

व्यतिरेकाभ्यामेव व्यवतिष्ठते । यत्र हि पर्यायान्तरपरिवृत्तिसहत्वं नास्ति तस्य शब्दगतत्वं यत्र तु तत्सहत्वं तत्रार्थगतत्वम् । यथा कष्टत्वादयो दोषा गाढत्वादयो गुणा अनुप्रासादयोऽलंकाराः शब्दगताः । पर्यायान्तरेणातदर्थोपस्थापने तेषामसंभवात् । व्यर्थत्वादयो दोषाः प्रौढत्वादयो गुणा उपमाद्योऽलंकाराश्चार्थगताः । पर्यायान्तरेणापि तदर्थोपस्थापने तेषां संभवात् । उदाहृते च स्वयं च पल्लवेत्यादौ द्वयोरप्यर्थयोः शब्दपरिवृत्त्यसहतया द्वयोरपि शब्दालंकारत्वमेवो चितम् । न त्वाद्यस्याप्यर्थालंकारत्वम् । नन्वेवमर्थश्लेषः किं नास्त्येव । क एवमाह । कस्तर्हि तस्य विषयः । यत्र पदपरिवर्तनेऽपि न श्लेषभङ्गः । यथा—स्तोकेनो० ।

अत्र स्तोकेनेत्यादिपदस्थानेऽल्पादिपदप्रक्षेपेऽपि न श्लेषभङ्गः । यच्चोक्तम् । स्वयं चे

---

भावः । **कष्टत्वम्** । श्रुतिकटु । **गाढत्वादयो गुणा इति** । वामनोक्ताः । **शब्दपरिवृत्त्यसहतयेति** । भास्वत्पदास्वापपदयोरित्यर्थः । न चार्थप्रतीत्युत्तरं शब्दयोर्भेदग्रहे श्लिष्टत्वग्रहादर्थश्लेषता । अर्थप्रतीतेः प्राक् शब्दयोर्भेदाग्रहस्यैवालंकारत्वादित्याहुः ।

**स्तोकेनेति** । स्तोकमल्पमुन्नतिमुद्गमनमहंकारं च । अधोगतिमधःपतनं दर्पभ्रंशं च । सुवर्णादिगुरुत्वनिरूपको द्रव्यविशेषस्तुला इति प्रसिद्धम् । तस्याः कोटिः शिखरशलाका । **प्रक्षेपेऽपीति** । एवमिवपदादेरिव यथापिपदादपि साम्याबगतेरुपमादेरप्यर्थालंकारता बोध्या । न च प्रसरति पुरतः सरित्प्रवाह इत्यत्र गिरित इत्युक्तेऽप्यनुप्रासत्वात्तस्याप्यर्थालंकारता स्यात् । वर्णसाम्यरूपस्यार्थास्पर्शेन शब्दमात्रालंकारत्वमित्याशयात् ।

---

१ क. °प्रौढ्याप° । २ क. जिनी । 'जिनीत्यभङ्गश' । ३ क. ग. °भङ्गश° । ४ क. °ना । स्तो° । ५ क. ग. °स्थ चेति° ।

न चायमुपमाप्रतिभोत्पत्तिहेतुः श्लेषः । अपि तु श्लेषप्रतिभोत्पत्तिहेतुरुपमा । तथा हि । यथा कमलमिव मुखं मनोज्ञमेतत्कचतितरामित्यादौ गुणसाम्ये क्रियासाम्य उभयसाम्ये[1] वोपमा, तथा ।

सकलकलं पुरमेतज्जातं संप्रति[2] सुधांशुबिम्बमिव ।

इत्यादौ[3] शब्दमात्रसाम्येऽपि सा युक्तैव । तथा[4] ह्युक्तं रुद्रटेन—

स्फुटमर्थालंकारावेतावुपमासमुच्चयौ किं तु ।
आश्रित्य शब्दमात्रं सामान्यमिहापि संभवतः ॥ इति ।

---

त्यादावुदाहृत उपमाप्रतिभोत्पत्तिहेतुः श्लेषः, इति तदप्ययुक्तम् । प्रत्युतोपमैवात्र श्लेषप्रतिभोत्पत्तिहेतुः । तद्बाधकत्वात् । तथा हि । साधर्म्याभावेनोपमायाः प्ररोहाभावादेव तावन्नोपमा बाध्या । यतः 'कमलमिव मुखं मनोज्ञमेतत्कचतितराम्' इत्यादौ मनोज्ञत्वस्य गुणस्य दीप्तिरूपायाः क्रियाया वोउभयोर्वा साम्ये यथोपमा निर्वहति तथा ।

सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव' ।

इत्यादावपि शब्दमात्रसाम्येनापि सा युक्तैव । साधर्म्यमात्रस्योपमाप्रयोजकत्वात् । तस्य चार्थरूपस्येव शब्दरूपस्याप्यविशेषेण संभवात् । तथा[6] ह्युक्तं रुद्रटेन—स्फुटमर्था० ॥ इति ।

---

**उपमैवात्रेति** । उपमैवालंकारः सा तु श्लेषप्रतिमां जनयति । इवपदेन हि साम्यबोधने किमनयोः साम्यमित्यपेक्षायां श्लेषस्य बुद्ध्यारोहात् । अन्यथोपमास्थले सर्वत्र समानधर्मवाचकपदे शब्दश्लेषस्यार्थश्लेषस्य वा सत्त्वादुपमाया निर्विषयत्वापत्तिः । तदाह—**तद्बाधकत्वादिति** । **तावन्नोपमा बाध्येति** । श्लेषं विनोपमायाः प्ररोहाभावादेवोपमा बाध्येति यत्तदुक्तं तत्तावन्नेत्यर्थः । **कचतीति** । शोभत इत्यर्थः । **सकलकलमिति** । कलकलशब्दवत्सकलकलावच्चेत्यर्थः । **शब्दमात्रसाम्येनापीति** । वाचकतासंबन्धेन तस्याप्यर्थधर्मत्वादिति भावः । न चार्थभेदाच्छब्दभेद इति मते नैकः शब्द उभयसाधारणः । एकजातीयानुपूर्वीकत्वेनैकत्वाध्यवसायात् ।

यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।

इत्यादौ शब्दसाम्यमात्रेणाप्युपमा । अन्वर्थसंज्ञावत्त्वस्यैव साधारणधर्मत्वादित्याहुः । एकजातीयानुपूर्वीकशब्दबोध्यत्वेनैकीकृतस्तदर्थ एव साधारणधर्म इत्यपि वक्तुं शक्यम् । **इहापीति** । सकलकलमित्यादावित्यर्थः । यद्वा शब्दालंकारमध्येऽपीत्यर्थः । एवं च रुद्रटमत उपमासमुच्चययोरुभयालंकारत्वम् । प्रकृते तु शब्दस्यापि सामान्यत्वमित्येताव-

---

१ ग. 'म्ये चोप°' । २ ग. 'ति सितांशु°' । ३ ग. '°त्यादिश°' । ४ ग. '°था चोक्तं' । ५ क. साधर्म्यमि° । ६ क. तथोक्तं ।

**न च कमलमिव मुखमित्यादिः साधारणधर्मप्रयोगशून्य उपमाविषय इति वक्तुं युक्तम् । पूर्णोपमाया निर्विषयत्वापत्तेः ।**

**त्वमेव देव पातालमाशानां त्वं निबन्धनम् ।**
**त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥ ६७३ ॥**

---

अथात्र साधर्म्यसंभवेऽपि नोपमा । साधारणधर्मप्रयोगशून्यो हि कमलमिव मुखमित्येतावन्मात्रादिरुपमाविषयः । अत्र तु शब्दरूप साधारणधर्मप्रयोग एवेति वैयात्याद्वक्तव्यं तदपि न युक्तम् । पूर्णोपमाया निर्विषयत्वापत्तेः । साधारणधर्मप्रयोग उपमात्वाभावात् । तदप्रयोगे त्वपूर्णत्वात् । तदेतदुक्तम् । न च कमलमिव मुखमित्यादिः साधारणधर्मप्रयोगशून्य उपमाविषय इतिवक्तुं युक्तम् । पूर्णोपमाया निर्विषयत्वापत्तेरिति । केचित्पुनस्तदन्यथा व्याचक्षते— तथा हि । यत्र साधारणधर्मोद्धारेऽप्युपमा संभवति प्रसिद्धत्वात्स उपमाविषयो न चात्र तथेत्याक्षेपार्थः । अयं पूर्णोपमाविषयो न स्यादिति । यद्वा श्लेषस्योपमाबाधकत्वायैतदङ्गी क्रियते तथा श्लेषस्योपमाबाधकत्वे पूर्णोपमा निर्विषयैव स्यात् । कमलमिव मुखं मनोज्ञमेतत्, इत्यत्र मनोज्ञत्वस्य संबन्धिभेदान्नानात्वे नार्थश्लेषस्वीकारादिति समाधानार्थः ।

नन्वेवं श्लेषस्य निर्विषयत्वमसंकीर्णस्थलाभावादिति चेन्न ।

**त्वमेव देव० ।**

इत्यादावलंकारान्तरासंकरात् । तथा हि । न तावदत्रोपमा । इवाद्यप्रयोगात् । नापि तुल्ययोगितादीपके । नापि पातालादिना रूपकं वाच्यम् । व्यङ्ग्यस्य तस्य संभवेऽपि वाच्या-

---

न्मात्रे संवाद इति बोध्यम् । **तदप्रयोगे त्विति** । पूर्णोपमात्वं हि चमत्कारातिशयाय । उपात्तधर्मेण झटिति सादृश्यावगमात् । अनुपात्तेन विलम्बेन तदवगत्या चमत्कारापकर्ष इति भावः । **उद्धारे** । त्यागे । **अयम्** । सकलकलमित्यादिः । एतन्मते प्रकाशाक्षरस्वारस्याभावोऽरुचिबीजम् । **मनोज्ञत्वस्य संबन्धिभेदान्नानात्वेनेति** । न च स्वत एवानुगतत्वं धर्मस्योच्छिद्येत मनोज्ञत्वत्वेनैकरूप्यादिति वाच्यम् । इष्टापत्तेः । मनोज्ञत्वत्वस्यापि तत्रैव पर्यवसानाच्चेत्याहुः । यद्वा बाहुल्याभिप्रायमेतत् ।

**नन्वेवमिति** । स्वयं चेत्यादावुपमाया एवालंकारत्वे श्लेषस्य प्रतिभामात्रे चेत्यर्थः ।

**त्वमेवेति** । हे देव राजन् , हे विष्णो च भवान्पातालमत्यमतिशयेन पाता नागलोकश्च त्वं त्वमाशानां याचकवाञ्छानां निबन्धनं विषयो निर्वाहको वा । दिशामाश्रयो भूलोकश्च त्वं चामराणां ये मरुतस्तद्भूमिस्तत्पात्रम् । पक्षेऽमराणां देवानां मरुतां च देवविशेषाणां भूमिः । स्वर्गलोकः । लोको भुवनं जनश्च । **व्यङ्ग्यस्येति** । समस्तवाक्यव्यङ्ग्यस्य

---

१ क. °र्मशून्य उपमाया वि° । २ ग. °माया वि° । ३ क. तथा° । ४ क. °वेनो° । ५ क. °पि पाताला° । ६ (चू०) भूलोक एव दिशां परिच्छेदात् ।

इत्यादिः श्लेषस्य चोपमाद्यलंकाराविविक्तोऽस्ति विषय इति द्वयोर्योगे संकर एव । उपपत्तिपर्यालोचने तूपमाया एवायं युक्तो विषयः । अन्यथा विषयापहार एव पूर्णोपमायाः स्यात् । न च

अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका ।

इत्यादौ विरोधप्रतिभोत्पत्तिहेतुः श्लेषः । अपि तु श्लेषप्रतिभोत्पत्ति-

---

पेक्षयैवासंकरगवेषणमिति । किं च येन ध्वस्तमनोभवेन, इत्यादौ नास्त्येव किंचिदलंकारान्तरमित्युपमाश्लेषयोर्विभक्तोदाहरणसंभवाद्बाध्यबाधकभावानुपगमे द्वयोर्योगे संकर एवेति वरमभ्युपगन्तव्यम् । उपपत्तिपर्यालोचने तूपमाया एवायं विषयो न श्लेषस्येत्युक्तमेव । उपपत्तिश्चेयम्—व्यपदेशाः प्राधान्येन संभवन्तीति वस्तुस्थितिः । प्रधानं चात्रोपमा । श्लेषस्य तन्निर्वाहकस्य तदङ्गत्वात् । न हि श्लेषं विना समानशब्दवाच्यत्वलक्षणं साधर्म्यमुपमानिर्वाहकं निर्वहति । उपमा तु न श्लेषाङ्गम् । श्लेषप्रतीतिं विना तत्प्रतीत्यभावेन तदनुपकारकत्वादिति । यदि चोपमाव्यवहारवारणाय साधारणधर्मप्रयोगशून्य उपमाविषय इति स्वीकर्तव्यं तदा पूर्णोपमाया निर्विषयत्वमेव स्यादिति । तदेतदुक्तम्—अन्यथा पूर्णोपमाया निर्विषयत्वापत्तेरिति । न केवलमुपमाया एव श्लेषबाधकत्वं किं त्वलंकारान्तरस्यापि ।

अबिन्दु० ।

---

राज्ञि लोकत्रयात्मकविष्णुरूपणस्योपपादकानि प्रत्येकावान्तरव्यङ्ग्यानि पातालादिरूपकाणीति भावः । विष्णोर्लोकत्रयात्मकत्वं च श्रुतिसिद्धम् । राजा च कश्चिद्रक्षिता कश्चिद्दाता कश्चित्सुखीत्येष तु त्रिरूपतया त्रितयात्मकस्तयोश्चाभेदाध्यवसाय इति बोध्यम् । किं च विद्वन्मानसेत्यादौ मनसि मानसत्वारोपे स्वच्छत्वस्य राज्ञि हंसत्वारोपे मोदावहत्वस्य प्रतीतेः परम्परितस्वसत्त्वेऽपीह राज्ञि पातालत्वादिरूपणे प्रयोजनाभावादुक्तश्लेष एव कवेस्तात्पर्यमित्यपि बोध्यम् । द्वयोर्योगे संकर एवेति । स्वयं चेत्यादावनुपात्तधर्मेणापि सादृश्यप्रतीतेर्न श्लेषस्तदङ्गमिति अङ्गाङ्गिभावामापन्नयोर्द्वयोरपि चमत्कारित्वात्संकरः । परस्परापेक्षया शून्ययोर्द्वयोर्योगे संसृष्टिः । सापेक्षयोर्योगे संकर इति भावः । ननु साधारणधर्मानुपादान एव तथा । तदुपादाने तूपात्तधर्मेणैव सादृश्यमिवादिना बोध्यते । अन्यथा हंसीव धवल इत्यादौ दुष्टोपमात्वं न स्यादिति न श्लेषनिरपेक्षात्रोपमेत्याशयेनाऽऽह—उपपत्तीति । तदनिर्वाहकत्वादिति । यागादौ व्रीह्यादिवदुपपादकस्यैवाङ्गत्वादिति भावः । समानधर्मोपादानं विनाऽप्युपमास्वीकार उक्तदोषं स्मारयति—यदि चेति । उपात्तश्लेषं विहाय प्रतीयमानधर्मान्तरकल्पने श्रुतहान्यश्रुतकल्पनापत्तिरपि बोध्या । अबिन्दुसुन्दरीति । बिन्दुशून्या लावण्यबिन्दुमतीति विरोधः । अप्सु प्रतिबिम्बिते-

---

१ क. °यं वि° । २ ग. °त्यं लसल्ल° ।

हेतुर्विरोधः। न ह्यत्रार्थद्वयप्रतिपादकः शब्दश्लेषः। द्वितीयार्थस्य प्रतिभातमात्रस्य प्ररोहाभावात्। न च विरोधाभास[1] इव विरोधः, श्लेषाभासः श्लेषः। त[2]देवमादिषु वाक्येषु श्लेषप्रतिभोत्पत्तिहेतुरलंकारान्तरमेव। तथा च

सद्वंशमुक्तामणिः॥ ३८०॥

नाल्पः कविरिव स्वल्पश्लोको देव महान्भवान्॥ ३८१॥

अनुरागवती संध्या दिवसस्तत्पुरःसरः।
अहो दैवगतिश्चित्रा तथाऽपि न समागमः॥ ३८२॥

---

इत्यत्र विरोधालंकारस्य। न स्वतन्त्रार्थद्वयप्रतिपादकशब्दस्य श्लेषः। बिन्दुसाहित्यरूपस्य द्वितीयार्थस्य प्रतिभामात्रविषयस्य प्ररोहाभावात्। नन्वप्ररूढोऽपि श्लेषोऽलंकार आस्तां विरोधाभासवदिति चेत्। भवेदेवं यदि विरोधाभासस्य विरोधत्वमिव श्लेषाभासस्य श्लेषत्वमनुमतं कस्यापि भवेत्। न त्वेवम्। तस्मादेवंविधे विषये श्लेषप्रतिभोत्पत्तिहेतुरलंकारान्तरं प्राधान्यात्। तथा च 'सद्वंशमुक्तामणिः' इत्यत्र परम्परितश्लिष्टरूपके रूपकं प्रधानम्। वंश शब्दे श्लेषस्तु वेणुकुलयो रूपकोपयोगितया तदङ्गमिति श्लेषप्रतिभोत्पत्तिहेतुरूपकमेव व्यपदेश्यम्।

नाल्पः०।

इत्यत्र श्लेषव्यतिरेके व्यतिरेक एव प्रधानं श्लेषस्तु तन्निर्वाहक इति तत्प्रतिभोत्पत्तिहेतुर्व्यतिरेकः।

अनुरागवती०।

---

न्दुसुन्दरीति तद्भङ्गः। अत्र श्लेषस्य प्रतिभामात्रं विरोध एव चालंकारः। न तु विपरीतम्। अन्यथा श्लेषं विना विरोधाभासस्यासंभवात्तद्विलयापत्तेरिति भावः। **प्ररोहाभावादिति**। शाब्दबोधाविषयत्वादित्यर्थः। **यद्वीति**। विरोधस्य वास्तवस्य दुष्टत्वादाभासस्यैवालंकारत्वं नत्वेवं श्लेषे। पुनरुक्तवदाभासादावतिप्रसङ्गादिति भावः। **अलंकारान्तरमिति**। अलंकारान्तरमेव साधीयः। प्राधान्याच्चमत्कारित्वादित्यर्थः। **सद्वंशेति**। वंशः कुलं वेणुश्च। **श्लेषप्रतिभोत्पत्तिहेतुरिति**। षष्ठीतत्पुरुष एव। न बहुव्रीहिः। रूपकविशेषणत्वे नपुंसकत्वापत्तेः। हेतुर्ना कारणमिति कोशः। अत्र वंशः कुलमेव वेणुरिति वंशपदश्लेषप्रयुक्तस्य कुले वेण्वभेदारोपस्य मुक्तामणित्वारोपे हेतुत्वादिति भावः। **नाल्प इति**। श्लोको यशः पद्यं च। महान्भवानल्पः कविरिव न स्वल्पश्लोक इत्यर्थः। **श्लेषव्यतिरेक इति**। अत्रान्यकवितो व्यतिरेकः प्रधानमिति श्लेषप्रयुक्तस्य यशसि पद्याभेदाध्यवसायस्योपमानाधिक्यरूपव्यतिरेकनिर्वाहकत्वादिति भावः। **अनुरागेति**। अनुरागः प्रेम-

---

१ ग. 'स एव वि°। २ क. ग. तस्मादे°। ३ क. °काराङ्गं विरो°।

आदाय चापमचलं कृत्वाऽहीनं गुणं विषमदृष्टिः ।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै ॥ ३८३ ॥

इत्यादावेकदेशविवर्तिरूपकश्लेषव्यतिरेकसमासोक्तिविरोधत्वमुचितं न तु श्लेषत्वम् ।

शब्दश्लेष इति चोच्यतेऽर्थालंकारमध्ये च लक्ष्यत इति कोऽयं नयः । किंच वैचित्र्यमलंकार इति य एव कविप्रतिभासंरम्भगोचरस्तत्रैव विचित्रतेति सैवालंकारभूमिः । अर्थमुखप्रेक्षित्वमेतेषां शब्दा-

---

इत्यत्र समासोक्तिरलंकारः । अभिधाया नियमने श्लेषस्यासंभवात् ।

आदाय० ।

इत्यत्र विरोध एवालंकारः । श्लेषस्तु तदङ्गमात्रम् । अप्ररोहात् ।

कवीनां संतापो भ्रमणमभितो दुर्गतिरिति
त्रयाणां पञ्चत्वं रचयसि न तच्चित्रमधिकम् ।
चतुर्णां वेदानां व्यरचि नवता वीर भवता
द्विषत्सेनालीनामयुतमपि लक्षं त्वमकृथाः ॥

अत्र मदीये पद्ये काव्यलिङ्गस्य श्लेषोऽङ्गमिति श्लेषप्रतिभोत्पत्तिहेतुः काव्यलिङ्गम् । तस्मादलंकारान्तरप्रतिभोत्पत्तिहेतुः श्लेष इति रिक्तं वचः । किं च प्रभातसंध्येवेत्यादौ शब्दश्लेषस्यार्थालंकारत्वमिति वचनं भवतां विरुद्धम् । शब्दानाश्रितत्वे तेन व्यपदेशस्यान्याय्यत्वात् । अपि च यस्य वैचित्र्यं कविप्रतिभासंरम्भगोचरः स एवालंकारस्थानम् ।

---

विशेषो रक्तिमा च । पुरःसरोऽग्रगामी संमुखश्च । **समासोक्तिरिति** । अभिधाया नियमादर्थद्वयाबोधेन श्लेषासंभवः । किं तु श्लिष्टविशेषणमहिम्ना नायकवृत्तान्तप्रतीतिमात्रमिति भावः ।

**आदायेति** । अचलं पर्वतं निष्क्रियं च । चापो धनुः । अहीनं सर्पराजं धनुर्दण्डाद्धीनभिन्नं च । विषमदृष्टिस्त्रिलोचनः, विषमे लक्ष्यादन्यत्र दृष्टिश्च । अच्युतो विष्णुः, गुणाच्च्युतभिन्नश्च । लक्ष्यं शरव्यम्, शतसहस्रीरूपं च । **वचनं भवतामिति** । शब्दश्लेषोऽर्थश्लेषश्चेति द्विविधोऽप्ययमर्थश्लेष इत्यत्र शब्दश्लेषत्वमभिधायार्थश्लेषत्वाभिधानं व्याहतमित्यर्थः । तथा च शब्दमप्यदुष्टं वक्तुमसमर्थः कथमर्थमदुष्टं ब्रूयादिति भावः । ननु शब्दवैचित्र्येण शब्दश्लेष उच्यते । अलंकारत्वं पुनरर्थस्यैवेत्यत आह—**अपि चेति** । **कविप्रतिभासंरम्भेति** । प्रतिभा शक्तिर्नैपुणतैव वा । संरम्भो यत्नः । एकं विना परस्याकिंचित्करत्वादुभयमुपात्तम् । तथा च कविप्रतिभायत्नगोचरत्वं यत्र तत्रैव विचित्रता ।

---

१ क. °ध्ये ल° । २ लक्ष्यं त्व° ।

नामिति चेदनुप्रासादीनामपि तथैवेति तेऽप्यर्थालंकाराः किं नोच्यते। रसादिव्यञ्जकस्वरूपवाच्यविशेषसव्यपेक्षत्वेऽपि ह्यनुप्रासादीनामलंकारता। शब्दगुणदोषाणामप्यर्थापेक्षयैव गुणदोषता। अर्थगुणदोषालंकाराणां शब्दापेक्षयैव व्यवस्थितिरिति तेऽपि शब्दगतत्वेनोच्यन्ताम्।

विधौ वक्रे मूर्ध्नीत्यादौ च वर्णादिश्लेष एकप्रयत्नोच्चार्यत्वेऽर्थश्लेषत्वं शब्दभेदेऽपि प्रसज्यतामित्येवमादि स्वयं विचार्यम्।

---

'स्वयं च पल्लवाताम्र' इत्यादौ शब्दवैचित्र्यमेव तादृक्। तस्यैव कविप्रतिभया मुख्यतयोट्टङ्कनादिति शब्दालंकारत्वमेवोचितम्। ननु श्लेषोऽर्थमुखप्रेक्षकः। न ह्यर्थप्रतीतिं विना श्लेषस्य चमत्कारित्वं संभवो वेत्यर्थालंकारत्वं श्लेषस्येति चेन्न। एवं ह्यनुप्रासस्याप्यर्थालंकारत्वं स्यात्। रसादिव्यञ्जकस्वरूपवाच्यसव्यपेक्षत्वेन ह्यनुप्रासस्यालंकारता। अन्यथा वृत्तिविरोधादिदोषस्य वक्ष्यमाणत्वात्। किं चैवं शाब्दयोर्गुणदोषयोरप्यार्थत्वं स्यात्। तयोरप्यर्थापेक्षयैव तथाभावात्। शृङ्गारादौ हि माधुर्यादिर्गुणः कष्टत्वादिर्दोषो वा। यच्चोक्तं 'एकप्रयत्नोच्चार्यशब्दत्वेऽर्थश्लेषत्वम्' इति तदप्ययुक्तम्। विधौ वक्रे—इत्यादौ वर्णादिशब्दभेदेऽप्यर्थश्लेषत्वापत्तेरित्यादि स्वयमपि विचार्यम्।

---

तत्त्वं च प्रकृते शब्द एवेति तत्र विचित्रता श्लेषणरूपा तदाश्रयः शब्द एवेति प्रघट्टार्थः। **अर्थप्रतीतिं विना**। अर्थद्वयप्रतीतिं विना। **अनुप्रासस्य**। वर्णानुप्रासस्य लाटानुप्रासस्य च। अन्त्ये हि सुतरामर्थायत्तता। **रसादिव्यञ्जकस्वरूपवाच्यसव्यपेक्षत्वेनेति**। रसादि च व्यञ्जकस्वरूपं च वाच्यं चैतत्सापेक्षत्वेनेत्यर्थः। माधुर्यादिव्यञ्जकत्वरूपवैचित्र्येण ह्यनुप्रासस्यालंकारता। सा च नार्थप्रतीतिं विनेति भावः। एतेनोभयमप्यर्थालंकार इति स्वाभिप्राय इति कुवलयानन्दोक्तिः परास्ता। ननु श्रुतिवैचित्र्यादेव तेषामलंकारत्वेन शाब्दत्वं स्यादत आह—**किं चैवं शाब्दयोर्गुणदोषयोरिति**। गुणस्य शाब्दत्वं परमतापेक्षया। शाब्दानामोजःप्रभृतीनामर्थस्यौजस्वित्व एव गुणत्वम्। श्रुतिकटुत्वादेश्चार्थस्य सुकुमारत्व एव दोषत्वमिति तेषामप्यर्थमुखप्रेक्षित्वात्। एवमर्थमाधुर्यादीनामपुष्टार्थत्वादिदोषाणां च शब्दादुपस्थितेष्वेव व्यवस्थितिः। न हि प्रत्यक्षादिनोपस्थिते तत्समावेश इति त्वदीयः शाब्दार्थविभागोऽसंगतः किं त्वस्मदीय एवोचित इति भावः। **वर्णादिशब्दभेदेऽपीति**। विधिविधुरूपे। **स्वयमपीति**। न तु परोक्तत्वेनैव द्वेषः कार्य इति भावः।

---

१ ग. 'दीनां त'। २ क. 'कत्वरू'। ३ ग. 'त्वे ह्य'। ४ क. 'क्षयाव्य'। ग. 'क्षयैवावस्थि'। ५ ग. 'त्वेनैवोच्य'। ६ क. ग. 'ज्यतीत्ये'। ७ क. ग. 'दि वि'। ८ क. 'गुणो दुष्ट'।

**तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ॥ ८५ ॥**

**संनिवेशविशेषेण यत्र न्यस्ता वर्णाः खड्गमुरजपद्माद्याकारमुल्लासयन्ति तच्चित्रं काव्यम्। कष्टं[२] काव्यमेतदिति दिङ्मात्रं प्रदर्श्यते। उदाहरणम्—**

**मारारिशक्ररामेभमुखैरासाररंहसा ।**
**साराब्धस्तवा नित्यं तदार्ति[३]हरणक्षमा ॥ ३८४ ॥**

---

चित्रंलक्षयति —**तच्चित्रं०** ।

यद्यपि वर्णानामाकाशगुणानां खड्गाद्याकृतिहेतुत्वमसंभवि तथाऽपि विन्यस्तवर्णानुमापिका लिपयः संनिवेशविशेषवत्त्वेन यत्र खड्गाद्याकारमुल्लासयन्ति तच्चित्रमिति विवक्षितम् । तर्हि लिपिनिष्ठत्वाच्छब्दालंकारत्वं न स्यादिति चेन्न । तादृशवर्णविन्यासं विना तादृशलिपिविन्यासाभावात् । शब्दान्वयव्यतिरेकयोरभग्नत्वात् । लिपेर्वर्णाभेदस्य लोकप्रसिद्धिमाश्रित्य शब्दालंकारत्वमिति कश्चित् । तथाऽपि शृङ्गारादिरसानुपकारकस्य कथमलंकारत्वमिति चेत्क-विनैपुण्य[४]वशेन विस्मयोपकारकत्वादिति गृहाण । श्लेषनिर्वाह्यं चैतत् । न च तादृशं रसोपकारकमिति दिङ्मात्रमुदाह्रियते ।

तत्र खड्गबन्धो यथा—**मारारि०** ।

---

न्यासो यथा—ताडिकायां प्रथमं माशब्दं विन्यस्य तदूर्ध्वमारोहक्रमेणैकस्यां धारायां चतुर्दशवर्णान् । अग्रे श्लिष्टं सेति वर्णं ततोऽपरधारायामवरोहक्रमेण चतुर्दश । मेति प्रथमेन माशब्देन श्लिष्टं तद्दक्षिणपार्श्वे निष्क्रमणक्रमेण सप्त, वामपार्श्वे प्रवेशक्रमेण सप्त, ततो माशब्दौ श्लिष्टौ । एषाऽद्रिका । माशब्दादधःक्रमेण वर्णत्रयम् । एषा गण्डिका । तदधा मेति । तद्दक्षिणपार्श्वे निष्क्रमणक्रमेण चतुष्टयं, वामपार्श्वे प्रवेशक्रमेण चतुष्टयं ततो माशब्दः शिष्टः । एतद्भञ्जनकम् । ततो माकारादधः शेषवर्णद्वयं न्यसेत् । एतन्मस्तकमिति ।

**तच्चित्रं यत्र वर्णानामिति ।**
संनिवेशविशेषेण शक्तिमात्रप्रकाशकाः ।

इत्युत्तरार्धं क्वचित्पठ्यते । **विस्मयोपकारकत्वादिति** । कविशक्तिप्रकाशनेन चमत्काराभासजनकत्वादिति भावः ।

**मारेति** । उमा मे शं दिश्यादित्यन्वयः । किंभूता । मारस्य मदनस्यारिः शंभुः, शक्र इन्द्रः, रामः परशुरामादिः, इभमुखो गणेश एतैरासारो वर्णधारासंपातस्तस्य रंह उद्रेकोऽविच्छेदस्तेन करणेन सारं यथा स्यात्तथाऽऽरब्धः स्तवो यस्याः । तथा तेषां

---

१ क. चित्रम् । कष्टका° । २ ग. कष्टका° । ३ क. तदार्ति° । ४ क. नैर्मल्यव° ।

माता नतानां संघट्टः श्रियां, बाधितसंभ्रमा ।
मान्याऽथ, सीमा रामाणां, शं मे दिश्यादुमादिमा ॥३८५॥
( खड्गबन्धः )

सरला बहुलारम्भतरलालिबलारवा ।
वारलाबहुलामन्दकरलाबहुलामला ॥ ३८६ ॥
( मुरजबन्धः )

भासते प्रतिभासार रसाभाताहता विभा ।
भावितात्मा, शुभा वादे, देवाभा बत ते सभा ॥ ३८७ ॥
( पद्मबन्धः )

---

मुरजबन्धो यथा—**सरला०।**

अथ न्यासः-प्रथमपादस्य वर्णाष्टकं पङ्क्तिक्रमेणाभिलिख्य तेषामधोऽधोऽपरपादत्रयवर्णान्पङ्क्तिक्रमेण विलिखेत् । तत्र चैतच्छ्लोकोत्थापनमार्गेण रेखायां दत्तायां मुरजाकारता भवति ।

पद्मबन्धो यथा—**भासते०।**

अस्य न्यासः—कर्णिकायां भा इति पूर्वपत्रे निर्गमक्रमेण सते[2] इति । आग्नेयपत्रे प्रवेशनक्रमेण प्रति[3] इति । ततो भेति कर्णिकास्थलं श्लिष्टम् । ततो दक्षिणपत्रे निष्क्रमणक्रमेण सारेति वर्णत्रयम् । ततस्ताभ्यां कर्णिकास्थेन वर्णेन प्रवेशक्रमेण श्लिष्टं रसाभेति वर्णत्रयम् । एवमग्रेऽपि दिक्पत्रस्य कर्णिकायाश्च वर्णाः सर्वत्र श्लिष्टा इति ।

---

हरादीनामार्तिः पीडा तन्नाशक्षमा । नतानां माता वत्सला । श्रियां संघट्टः । सर्वासां सहवासात्संकीर्णस्थानम् । बाधितसंभ्रमा दूरीकृतनतजनभया । मान्या माननीया रामाणां रमणीयानां सीमा । अतः परं रमणीयता नान्यत्रेति भावः । युग्मम् ।

**सरलेति** । शरद्वर्णने पद्यमिदम् । सरला मेघादिकौटिल्यरहिता । शरं शरकाण्डं लातीति वा । शरदि शरकाण्डसंपत्तेः । बहुलारम्भतरलानां प्रचुरसंरम्भचञ्चलानां अलिबलानां भ्रमरसमूहानामारवो यस्यां सा । वारलाभिर्हंसीभिर्बहुला । बहुलहंसीकेत्यर्थः । अमन्द उद्युक्ताः करं लान्ति ते राजानो यस्याम् । अबहुलं शुक्लपक्षस्तद्वदमला निर्मला । कृष्णपक्षेऽप्यमला ताराबाहुल्यादित्यर्थ इति कश्चित् । मुरजं वाद्यभाण्डविशेषः ।

**भासत इति** । हे प्रतिभासार प्रज्ञाश्रेष्ठ ते सभा भासते । कीदृशी सभा । रसैः प्रीतिरूपैः शृङ्गारादिभिर्वा भाता शोभिता । अहताऽऽविभा दीप्तिर्यस्याः सा । यद्वाऽविना मेषेण भातीत्यविभो वह्निर्हतो निरस्तः, अविभो यया भावितो निश्चितः परमात्मा यस्याम् । तत्त्वज्ञविशिष्टेत्यर्थः । भावितो वशीकृतो ध्यातो वाऽऽत्मा ययेति

---

१ क. °मादिजा । २ क. °ते आग्ने° । ३ क. °ति त° ।

रसासार रसा सारसायताक्ष क्षतायसा ।
सातावात तवातासा रक्षतस्त्वस्त्वतक्षर ॥ ३८८ ॥
( सर्वतोभद्रम् )

संभविनो[1]ऽप्यन्ये प्रभेदाः शक्तिमात्रप्रकाशका न तु काव्य[2]रूपतां दधतीति न प्रदर्श्यन्ते ।

**पुनरुक्तवदाभासो विभिन्नाकारशब्दगा ।**

**एकार्थतेव[3]**

भिन्नरूपसार्थकानर्थकशब्दनिष्ठमेकार्थत्वेन[4] मुखे भासनं पुनरुक्तवदाभासः । स च

---

सर्वतोभद्रं यथा—**रसासार०** ।

अस्य पादचतुष्टये पूर्ववत्पङ्क्तिचतुष्टयेन लिखिते प्रतिलोमादिपाठेन स एव श्लोकः । संभविनोऽप्यन्ये भेदा न दर्शिताः । एते हि शक्तिमात्रप्रकाशका न तु काव्यरूपतां दधति । अतिनीरसत्वादिति ।

**पुनरुक्त०** ।

एकार्थतेति एकार्थत्वावभासयोग्यशब्दतेत्यर्थः । एतच्च यमकलाटानुप्रासयोरतिव्यापकमतो विशिनष्टि—विभिन्नाकारशब्दगेति ।

---

वाऽर्थः । वादे कथायां शुभा निपुणा देवाभा देवतुल्या । बतेत्याश्चर्ये ।

**रसेति** । हे रसायां पृथ्व्यां श्रेष्ठ रक्षतस्तव रसा पृथिवी तु एवंभूता तु । पूर्वापेक्षस्तुशब्दः । कीदृशी रसा । क्षतः खण्डितोऽयः शुभावहविधिर्येषां ते दुर्जनास्तान्स्यति नाशयति सा क्षतायसा । षोऽन्तकर्मणि । यद्वा क्षतमायसं शस्त्रं यस्याम् । युद्धाभावात् । अत्र संबुद्धिचतुष्टयम् । पुनः कीदृशी । अतासा । अनुपक्षया । तसु उपक्षये । अथ संबोधनविशेषणानि । सारसायताक्ष पद्मायतलोचन । सारसं जलजं पक्षिभेदो वा तद्वद्विशालनेत्र । सातं नाशितमवातमज्ञानं येन तादृश । वाधातोर्गत्यर्थतया ज्ञानार्थत्वम् । अतक्षमनल्पं राति ददाति तादृश । तक्षू त्वक्षू तनूकरणे ।

**एकार्थत्वावभासेति** । वस्तुतो नैकार्थत्वं किंतु तत्त्वेन प्रतिभानमात्रमिति भावः । तेन न पौनरुक्त्यम् । **विभिन्नाकारत्वम्** । विभिन्नानुपूर्वीकत्वम् ।

---

१ क. °नोऽन्ये । ग. °नोऽप्यनेकप्र° । २ ग. °व्यस्वरू° । ३ क. °व शब्दस्य । भि° । ४ क. °त्वेनेव मु° । ग. °त्वेनेवाऽऽमु° ।

शब्दस्य

सभङ्गाभङ्गरूपकेवलशब्दनिष्ठः। उदाहरणम्—

अरिवधदेहशरीरः सहसा रथिसूततुरगपादातः।
भाति सदानत्यागः स्थिरतायामवनितलतिलकः॥ ३८९॥
चकासत्यङ्गनारामाः कौतुकानन्दहेतवः।
तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्तिनः॥ ३९०॥

---

स चायं द्विविधः। शब्दमात्रस्य शब्दार्थयोश्च। तयोराद्यमाह—**शब्दस्य०**।

शब्दमात्रस्येत्यर्थः। अयमपि द्विधा—सभङ्गशब्दनिष्ठोऽभङ्गशब्दनिष्ठश्च। तयोराद्यो यथा—**अरिवध०**।

अत्र देहशरीरशब्दयोः पुनरुक्तत्वधीः। सभङ्गौ च तौ। अरिवधदा, ईहा यत्र तादृशाञ्शरिण ईरयतीत्यर्थकत्वात्। एवं सारथिसूतशब्दयोः। सहसा हठेन रथिना सुष्ठु उतं तुरगपादातं यस्येत्यर्थकत्वात्, दानत्यागयोश्च सदा नत्या भाति स्थिरतायामगः पर्वत इवेत्यर्थकत्वात्, सभङ्गः पुनरुक्तवदाभासः। शब्दमात्रालंकारत्वं चोभयोरपि शब्दयोः पर्यायपरिवृत्त्यसहत्वात्।

अभङ्गशब्दनिष्ठो यथा—**चकास०**।

अत्राङ्गनारामाशब्दयोः रूयर्थकतया पुनरुक्तत्वधीः। वस्तुतस्तु अङ्गने आरमन्तीत्यङ्गनानामारामा इति[2] वार्थ इति न पुनरुक्तिः। न चात्र सभङ्गः। शब्दमात्रालंकारत्वं चैकस्यापि परिवृत्त्यसहत्वात्। एवं कौतुकानन्दशब्दयोः सुमनसोर्विबुधाः शब्दयोश्च द्रष्टव्यम्।

---

**अरिवधेति**। अवनितलतिलको भाति। कया सदानत्या सतामानत्या। यद्वा सदाऽनत्या क्षुद्रेषु अनम्रतया। कीदृशः। अरिवधदा, ईहा येषां ताञ्शरिणः शरयुक्तान्योधान्नीरयति प्रेरयति यस्तादृश इत्यर्थः। यत्तु अरिवधदेहं शरीरं यस्येति व्याख्यानं तन्न। द्वितीयपदस्य परिवृत्तिसहत्वेनोभयालंकारतापत्तौ शब्दमात्रालंकारोदाहरणत्वानुपपत्तेः। सहसा हठेन रथिभिः सुष्ठु उताः संबद्धास्तुरगा पादाताश्च यस्य सः। स्थिरतायामगः पर्वतः।

**चकासतीति**। अङ्गनासु रमन्त इत्यङ्गनारामाः विरहशून्याः। अङ्गन आरमन्तीति वा। अङ्गनेषु आरामाः क्रीडावनानि येषामिति वा। कौतुकेन नृत्यगीतादिना य आनन्दस्तद्धेतवः। (कौतुकं विवाहसूत्रमानन्दश्च) सुष्ठु विषये मनांसि येषां शोभनानि वा मनांसि येषां ते सुमनसः। विबुधाः पण्डितश्रेष्ठाः।

---

१ ग. 'रूपः के'। २ क. 'तित'। ३ क. 'ति चार्थे'। ४ क. 'त्र भ'। ५ क. 'बुधश'।

## तथा शब्दार्थयोरयम् ॥ ८६ ॥

**उदाहरणम्—**

**तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः ।**
**तेजोधाम महःपृथुमनसामिन्द्रो हरिर्जिष्णुः ॥ ३९१ ॥**

**अत्रैकस्मिन्पदे परिवर्तिते नालंकार इति शब्दाश्रयः, अपरस्मिंस्तु परिवर्तितेऽपि स न हीयेत[1] इत्यर्थनिष्ठ इत्युभयालंकारोऽयम् ॥**

**इति काव्यप्रकाशे शब्दालंकारनिर्णयो नाम नवमोल्लासः समाप्तः ॥**

---

उभयालंकारं द्वितीयमाह—**तथा०** ।

यथा—**तनुवपु०** ।

अत्र तनुवपुःशब्दयोः पुनरुक्तत्वधीः । तद्विरहस्तु तनुशब्दस्याल्पार्थकत्वात् । अयं चोभयालंकारः । तनुशब्दस्य पर्यायपरिवृत्त्यसहत्वात् । एवं करिकुञ्जरयोस्तेजोधाममहःशब्दानामिन्द्रहरिजिष्णुशब्दानां तदाभासत्वमुभयालंकारत्वं च द्रष्टव्यम् । यद्यप्युभयालंकारोऽत्र न प्रकृतस्तथाऽपि शब्दमात्रालंकारस्यैव तद्भेदस्यात्र प्रकरणेऽवश्यवक्तव्यतया तत्प्रसङ्गादुभयालंकारत्वानपायाच्चोभयालंकारभूतोऽप्ययमत्रोक्तः । उभयालंकारान्तराणां तु न कोऽपि भेदः शब्दमात्रालंकार इति न तान्यत्र पठितानीति सर्वं रमणीयम् ॥

**इति काव्यप्रदीपे शब्दालंकारनिर्णयो नाम नवमोल्लासः ॥ ९ ॥**

---

**तनु इति** । असौ जिष्णुर्जयशाली हरिः सिंहः । प्रसिद्धसिंहेभ्यो विलक्षण इत्यर्थः । तनुवपुः कृशशरीरोऽपि करिकुञ्जराणां प्रशस्तशुण्डादण्डशालिनां गजश्रेष्ठानां रुधिरेणाऽऽरक्ता लोहिताः खरास्तीक्ष्णा नखरा यस्य सः । तेजसः परोत्कर्षाक्षमतायाः धाम स्थानानि यानि महांसि तैः पृथु प्रशस्तं मनो येषां तेषामिन्द्र ईश्वरः । इदि परमैश्वर्ये । अस्माद्रक् । **परिवृत्त्यसहत्वादिति** । वपुःशब्दस्य परिवृत्तिसहत्वाच्चेत्यपि बोध्यम् । एवं करिकुञ्जरयोरित्यत्र कुञ्जरपदस्य परिवृत्त्यसहत्वं करिपदस्य च तत्त्वं बोध्यम् । **रमणीयमिति** । शशिशुभ्रांशुरित्यादौ केवलार्थाश्रयताऽप्यस्य बोध्येति सर्वेष्टसिद्धिः ॥

**इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतनागेशभट्टविरचिते काव्यप्रदीपोद्द्योते नवम उल्लासः ।**

---

[1] क. 'हीयेतेल' ।

दशमोल्लासः ।

अर्थालंकारानाह—

अथार्थालंकारा[1] लक्षणीयाः । ते च

उपमानन्वयस्तद्वदुपमेयोपमा ततः ।
उत्प्रेक्षा च ससंदेहो रूपकापह्नुती तथा ॥
श्लेषस्तथा समासोक्तिः प्रोक्ता चैव निदर्शना ।
अप्रस्तुतप्रशंसातिशयोक्ती परिकीर्तिते ॥
प्रतिवस्तूपमा तद्वद्दृष्टान्तो दीपकं तथा ।
तुल्ययोगितया चैव व्यतिरेकः प्रकीर्तितः ॥
आक्षेपो विभावना च विशेषोक्तिस्तथैव च ।
यथासंख्यमर्थान्तरन्यासः स्यातां विरोधवत् ॥
स्वभावोक्तिस्तथा व्याजस्तुतिः प्रोक्ता सहोक्तिवत् ।
विनोक्तिपरिवृत्ती च भाविकं काव्यलिङ्गवत् ॥
पर्यायोक्तमुदात्तं च समुच्चय उदीरितः ।
पर्यायश्चानुमानं च प्रोक्तः परिकरस्तथा ॥
व्याजोक्तिपरिसंख्ये च विज्ञेये हेतुमालया ।
अन्योन्यमुत्तरं सूक्ष्मसारौ[2] तद्वदसंगतिः ॥
समाधिश्च समेन स्याद्विषमस्त्वधिकेन च ।
प्रत्यनीकं मीलितं च स्यातामेकावलीस्मृती ॥
भ्रान्तिमांस्तु प्रतीपेन सामान्यं च विशेषवत् ।
तद्गुणातद्गुणौ चैव व्याघातः परिकीर्तितः ॥
संसृष्टिसंकरौ चैवमेकषष्टिरुदीरिताः[3] ॥

तेष्वनेकालंकारमूलभूतत्वेन सौकुमार्यातिशयाच्च प्रधानमुपमां प्रथमं लक्षयति—

**अथार्थेति**—प्रसङ्गादिति भावः । न्यूनाधिक्यव्यवच्छित्तये तानादौ गणयति—**ते चेति**।

**तेष्वनेकेति** । उपमेयोपमानन्वयप्रतीपस्मरणरूपकससंदेहभ्रान्तिमदपह्नवोत्प्रेक्षातिशयोक्तितुल्ययोगितादीपकप्रतिवस्तूपमादृष्टान्तनिदर्शनाव्यतिरेकसहोक्तिसमासोक्त्याद्यनेकेत्यर्थः । **सौकुमार्येति** । इतरालंकारापेक्षयाऽस्याः स्फुटतया विभावाद्युत्कर्षकत्वादिति भावः ।

१ ग. अथार्था° । २ क. सूक्ष्मं सारस्तद्व° । ३ ख. 'रुदाहृताः ।

## साधर्म्यमुपमा भेदे[1],

**उपमानोपमेययोरेव, न[2] तु कार्यकारणादिकयोः[3] साधर्म्यं भवतीति तयोरेव समानेन[4] धर्मेण संबन्ध उपमा । भेदग्रहणमनन्वयव्यवच्छेदाय ।**

---

**साधर्म्य० ।**

ननु साधर्म्यस्य प्रतियोग्यनुयोगिनिरूप्यतया तदनभिधाने न्यूनत्वं लक्षणवाक्यस्येति चेत्, न । आक्षेपादुपमानोपमेयरूपयोस्तयोर्लाभात् । न च प्रतियोग्यनुयोगिमात्राक्षेपेऽतिप्रसङ्गः । उपमानोपमेये विनाऽन्यस्य कार्यकारणादिमात्रस्य साधर्म्याभावात् । एवं चोपमानोपमेययोः समानेन धर्मेण संबन्ध उपमेति लक्षणम् । अत्र चोपमानोपमेययोराक्षेपः साधर्म्यप्रतिपत्तिमात्रफलकः, न तु व्यावर्तकः । नन्वेवं 'भेदे' इत्यनुपादेयम् । तस्याप्याक्षेपादेव लाभसंभवात् । न ह्यभेदे सादृश्यात्मकं साधर्म्यमिति चेत्, न । साधर्म्यपदस्याऽऽरोपितानारो-

---

**साधर्म्यमिति ।** उपमानोपमेययोर्भेदे सति वाक्यार्थोपस्कारकं चमत्कारि साधारणधर्मवत्त्वमित्यर्थः । चमत्कारीत्यनेन 'गौरिव गवयः' इत्यादेर्व्यावृत्तिः । वाक्यार्थोपस्कारकमिति अलंकारसामान्यलक्षणप्राप्तम् ।

**अतिप्रसङ्ग इति ।** कार्यकारणयोरतिप्रसङ्ग इति भावः । **समानेनेति ।** एकत्वबुद्धिविषयेणेत्यर्थः । **संबन्ध इति ।** समानो धर्मो ययोस्तौ सधर्माणौ । तयोर्भावः साधर्म्यम् । समासोत्तरवर्तिभावप्रत्ययस्य संबन्धबोधकत्वादिति भावः । प्रकृष्टत्वेन संभाव्यमानत्वमुपमानत्वं, निकृष्टत्वेन तत्त्वमुपमेयत्वमिति केचित् । सादृश्यप्रतियोगित्वानुयोगित्वे चोपमानोपमेयत्वे इति बहवः । **न तु व्यावर्तक इति ।** कार्यकारणादिकयोः साधर्म्यस्यैवाभावादिति भावः । न च कारणगुणानुसारी कार्ये गुण इति व्यवहारात्तयोरपि साधर्म्यमस्त्येवेति वाच्यम् । कविप्रतिभाकल्पितांशाभावेन तस्याऽनलंकारत्वमित्यभिमानात् । **आक्षेपादिति ।** एकधर्मवत्त्वमिति व्यवहारस्य भेद एव संभवादिति भावः । **न ह्यभेद इति ।** तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्यैव सादृश्यपदार्थत्वादिति भावः । **आरोपितेति ।** अत एव

' त्वयि कोपोऽयमाभाति सुधांशाविव पावकः । '

इत्यादावुपमानिर्वाहः । तत्र हि उपमानस्यात्यन्ताऽसंभावितत्वेन सादृश्यस्य लोकासिद्ध-

---

१(चू०) भेद इति । उपमेयतावच्छेदकोपमानतावच्छेदकयोर्भेद इत्यर्थः । न तूपमेयोपमानयोर्भेद इति । तथा सति देशकालभेदेन स्वेनैव स्वस्य साधर्म्येऽव्याप्तेः । यथा—लोहितपीतैः कुसुमैरावृतमाभाति भूभृतः शिखरम् । दावज्वलनज्वालैः कदाचिदाकीर्णमिव समये । अतएवाग्रे तथा सत्युपमाया एवापत्तेरित्युद्द्योत उक्तम् । २ ग. न क०ा० । ३ क. °रणयोः । ४ क. °मानधा° । ५ क. °क्षेपेणोप° । ६ क. °रणमा° ।

पूर्णा लुप्ता च,

उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णा । एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता ।

साऽग्रिमा ।

श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा ॥ ८७ ॥

अग्रिमा पूर्णा । यथेववादिशब्दा यत्परास्तस्यैवोपमानताप्रतीतिरिति

---

पितसाधारणसमानधर्मसंबन्धमात्रपरत्वेनाऽऽरोपितसाधर्म्यनिबन्धनस्यानन्वयालंकारस्य व्यवच्छेद्यत्वात् । 'अलंकारत्वे सति ' इत्यपि पूरणीयम् । साधर्म्यमात्रस्योपमात्वाभावात् ।

एनां विभजते—**पूर्णा०** ।

यत्रोपमानोपमेयसाधारणधर्माणामुपमाप्रतिपादकशब्दस्य चोपादानं सा पूर्णा । एतचतुष्कमध्य एकस्य द्वयोस्त्रयाणां वाऽनुपादानं यत्र सा लुप्ता ।

तयोः पूर्णां विभजते—**साऽग्रिमा०** ।

अग्रिमा प्रथमोद्दिष्टा । पूर्णेत्यर्थः । वाक्यं विग्रहः । तेनोपमानादिपदानि चत्वार्यपि यत्रासमस्तानि भिन्नविभक्तिकानि सा वाक्यगा । यत्र तु तेषु कयोरपि समासः सा समा-

---

त्वाभावेऽपि कविना खण्डशः पदार्थोपस्थितिमता स्वेच्छया संभावितत्वेनाऽऽकारेण चन्द्राधिकरणकमनलं प्रकल्प्य तेन सह साम्यस्यापि कल्पनात् । कल्पितस्यापि भावनोपनीतकान्तेव चमत्कारित्वमविरुद्धमिति भावः । **आरोपितसाधर्म्येति** । तत्र ह्याहार्यारोपितभेदेनाऽऽपाततः सादृश्यप्रतीतिः, पर्यन्ते तु तस्य बाधप्रतिसंधानेन द्वितीयसदृशव्यवच्छेदः फलतीति भावः । ननु तत्तदुत्कर्षविशेषाणां वैचित्र्यं क्वोपयुज्यत इति चेत्, मुखादिनिष्ठानां तेषां वैचित्र्यमुद्दीपनविभावतया विचित्रविचित्रास्वाद इति गृहाण ।

उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥

इत्यादौ नोपमा । यदि तथाभूतौ स्यातां तदोपमीयेत न चैवमित्युपमानिष्पत्त्यभावात् । किं तु यद्यर्थोक्तौ च कल्पनमित्यतिशयोक्तिरेवेति न दोषः । ' भद्रात्मनः ' इत्यादौ व्यङ्ग्योपमाया वाच्यापेक्षया प्राधान्येऽपि व्यङ्ग्यभावाद्युपस्कारकत्वेनालंकारत्वस्येष्टत्वेन दोषाभावान्नाव्यङ्ग्यत्वमप्रधानत्वं वा विशेषणं देयमित्याहुः । **साधर्म्यमात्रस्येति** । घट इव पटो द्रव्यं, घट इव पटो जातिमानित्यादेरित्यर्थः ।

**यत्रोपमानोपमेयेति** । सादृश्यप्रतियोगित्वानुयोगित्वे चोपमानत्वोपमेयत्वे इति

---

१ क. ग. °वाश° ।

यद्यप्युपमानविशेषणान्येते तथाऽपि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत्संबन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा। तथैव, 'तत्र तस्येव' (पा० सू० ५। १। ११६) इत्यनेनेवार्थे विहितस्य वतेरुपादाने श्रौती। 'तेन तुल्यं मुखम्'—इत्यादावुपमेये एव, 'तत्तुल्यमस्य'—इत्यादौ चोपमाने एव, 'इदं च तच्च तुल्यम्' इत्युभयत्रापि तुल्यादिशब्दानां विश्रान्तिरिति साम्यपर्यालोचनया तुल्यताप्रतीतिरिति साधर्म्यस्याऽऽर्थत्वात्तुल्यादिपदोपादान आर्थी। तद्वत्, 'तेन तुल्यं क्रिया चेद्वतिः' [पा० सू० ५। १। ११५] इत्यनेन विहितस्य वतेः स्थितौ।

सगा। तद्धितेनोपमाप्रतिपादकेन तु सममुपमानवाचिन्याः प्रकृतेर्न समासो नापि विग्रह इति तृतीय उपमाभेदः। त्रिविधाऽप्येषा श्रौत्यार्थीभेदात्प्रत्येकं द्विधेति षड्विधा पूर्णेत्यर्थः। श्रौतत्वं चोपमानोपमेययोः साधारणधर्मसंबन्धरूपायास्तस्याः शाब्दबोधविषयत्वम्। अर्थापत्तिगम्यत्वं चाऽऽर्थत्वम्। तत्र यथेववादिशब्दानां 'तत्र तस्येव' इत्यनेनेवार्थे विहितस्य वतेश्चोपादाने श्रौती। तुल्यादीनां शब्दानां 'तेन तुल्यम्' इत्यादिना तुल्यार्थे विहितस्य वतेश्च प्रयोग आर्थी।

नन्वयं विभागोऽनुपपन्नः। उभयत्र सादृश्यप्रत्ययाविशेषात्। न च वाच्यं यथादिशब्दैः साधारणधर्मसंबन्ध उभयत्र शक्त्यैव बोध्यते न पुनस्तुल्यादिशब्दैः, अयमेव विशेष इति। यतो यथादिशब्दा यदनन्तरमुपात्तास्तस्यैवोपमानताप्रतीतिरित्युपमानविशेषणानि ते। अत उपमाने तत्संबन्धं बोधयन्तु न पुनरुपमेये। अन्यविशेषणस्यान्यत्र संबन्धबोधकत्वादर्शना-

बोध्यम्। **श्रौतत्वं चोपमानेति**। एवं च सादृश्यप्रयोजकसाधारणधर्मसंबन्धस्येवादिशब्दस्योभयवृत्तितया शाब्दबोधविषयत्वे श्रौतत्वमित्यर्थः। **अर्थापत्तीति**। तुल्यादीनां सादृश्यवति शक्तेः सादृश्यस्य साधारणधर्मसंबन्धं विनाऽनुपपत्त्या तत्प्रतीतिरिति भावः।

**उभयत्र सादृश्येति**। सादृश्यप्रयोजकसाधारणधर्मेत्यर्थः। **उभयत्र शक्त्यैवेति**। इवार्थे सादृश्ये नियमेनोपमानोपमेययोः प्रतियोगित्वानुयोगित्वाभ्यामन्वयादिति भावः। **यदनन्तरम्**। यद्बोधकशब्दानन्तरम्। **उपमानता**। सादृश्यप्रतियोगित्वम्। **उपमानविशेषणानीति**। उपमानविशेषणोपमानत्वद्योतकानीत्यर्थः। उपमानं विशिंषन्ति उपमानत्ववैशिष्ट्येन बोधयन्तीत्यर्थात्। न च तस्य सादृश्यप्रतियोगित्वरूपोपमानत्वविशिष्टस्य स्ववृत्तिधर्मवत्त्वसंबन्धेनोपमेयेऽन्वयेनोपमेयेऽपि तल्लाभः। नामार्थयोर्भेदेनान्वयाव्युत्पत्तेः। एवं च शक्त्योभयत्र साधारणधर्मसंबन्धाप्रतीत्या नायं श्रौत्यार्थीविभाग उचित इति भावः।

१ क. °नानि ते। २ क. तुल्यमित्या°। ३ क. °दं त°। ४ क. ग. ति तत्र सा°। ५ क. °वाश्च°। ६ ख. श्रौतीत्व°। ७ उपमानतासादृश्यप्रतियोगित्वमिति (ख.) पुस्तके नोपलभ्यते।

दिति चेत्, न। शब्दशक्तिस्वाभाव्यादन्यविशेषणत्वेऽप्यन्यत्र संबन्धबोधकत्वात्। न चादृष्टचरत्वम्। षष्ठ्यां तथा दर्शनात्। षष्ठी हि यदनन्तरमुपात्ता तस्यैवोपसर्जनत्वप्रतीतिरित्युपसर्जनविशेषणत्वेऽपि प्रधानेऽपि संबन्धं बोधयति।

तस्मात्प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या च संबन्धबोधे विशेषाच्छ्रौतार्थविभाग इति मन्तव्यम्। तथा हि 'पद्ममिव मुखम्' इत्यादावुपात्तस्याऽऽक्षिप्तस्य वा रमणीयत्वादेः

---

**शब्दशक्तीति**। स्वसदृश उपमानवाचकपदलक्षणायामिवस्य तात्पर्यग्राहकत्वेन तस्याभेदेन नामार्थान्वयस्वीकारादित्याशयः। यथा-तथा-शब्दयोगे तु पश्चाज्जायमानसादृश्यविषयकबोधमादायेदं बोध्यम्। यद्धर्मवांश्चन्द्रस्तद्धर्मवन्मुखमित्येव तत्र बोधात्। अन्यविशेषणत्वेऽपीत्यस्यान्यसंबन्धद्योतकत्वेऽपीत्यर्थः। तत्र दृष्टान्तमाह—**षष्ठ्यामिति**। तदेवोपपादयति-**षष्ठी हीति**। यदनन्तरमित्यनेनोपसर्जनसंबन्धित्वं बोधयति। उपसर्जनत्वं स्वार्थसंबन्धे प्रतियोगित्वेनान्वयित्वम्। **उपसर्जनविशेषणत्वेऽपि**। उपसर्जननिष्ठविशेषणतानिरूपितविशेष्यताश्रयत्वेऽपि। यद्वा यथा प्राचीनमते प्रकारीभूतविभक्त्यर्थसंबन्धेन नामार्थयोर्भेदेनान्वयः। चैत्रस्य धनमित्यादौ स्वामिचैत्रीयं धनमिति बोधात्। तथा प्रकारीभूतनिपातार्थसंबन्धेन नामार्थयोर्भेदेनान्वय इति चन्द्र इव मुखमित्यादौ सदृशचन्द्रीयं मुखमिति धीरिति प्राचीनमतेनायं ग्रन्थः। श्रौतीत्वं सादृश्यप्रतियोगित्वरूपस्योपमानत्वस्यैवेन बोधनादिति बोध्यम्। परं त्वत्र पक्षे षष्ठ्या एव विशिष्य दृष्टान्तत्वेनोपादाने बीजं चिन्त्यम्।

नन्वेवं तुल्यादिपदैरपि चन्द्रेण तुल्यमित्यादौ तृतीयार्थान्वयद्वारा श्रुत्यैवोपमानत्वोपमेयत्वयोर्बोधाच्छ्रौती स्यादित्यत आह-**तस्मादिति**। **प्रतीत्यनुपपत्त्येति**। अयं भावः। सादृश्यप्रयोजकसाधारणधर्मसंबन्धो ह्युपमा। सादृश्यं चातिरिक्तः पदार्थः। धर्मविशेषश्च क्वचिदुपात्तः क्वचिदाक्षिप्त इत्यन्यत्। यथादयश्च तत्प्रयोजकधर्मविशेषसंबन्ध एव शक्ता न तुल्यादयः। ते हि सदृशमात्रवाचका इति। एवं च सादृश्यादिपदयोगेऽप्यार्थ्येव।

अपरे तु 'तत्तत्साधारणधर्मसंबन्ध उपमा। उपमानत्वं च साधारणधर्मवत्त्वेनेषदितरपरिच्छेदकत्वम्। तद्धर्मवत्तया परिच्छेद्यत्वं चोपमेयत्वमित्युपमानानि (पा० सू० २।१।५५) इति सूत्रे भाष्ये स्पष्टम्। उपमानविशेषणानि ते इति। उपमाननिष्ठसाधारणधर्मबोधकानीत्यर्थः। एवमुपमानत्वमपीवाद्यर्थः। यदोपमानविशेषणोपमानत्वद्योतकास्ते इत्यर्थः। उपमाने तत्संबन्धमिति। उपमानत्वस्वरूपस्य साधारणधर्मघटितत्वात्तत्र तत्संबन्धबोधोऽस्त्विरर्थः। षष्ठी हीति। सा हि राज्ञः पुरुष इत्यादौ स्वस्वामिभावसंबन्धबोधिका, प्रकृत्यर्थस्य विशेषणत्वबोधिका च। सा च विशेषणस्येतरविशेषणत्वार्थं संबन्धस्याऽऽकाङ्क्षणात्तन्निष्ठविशेषणत्वस्य तन्निष्ठस्वामित्वस्य बोधकत्वेऽपि पश्चात्प्रधाने पुरुषे संबन्धस्य द्विष्ठतास्वभावत्वात्संबन्धघटकं स्वत्वं बोधयति। तदाह—यदनन्तरमुपात्तेति। राज्ञ इत्यतश्च राजस्वामिकमिति बोधः। पुरुषपदेन च तद्विशेषसमर्पणमिति 'षष्ठी शेषे' (पा० सू० २।३।५०) इति

संबन्धमविषयीकृत्यापर्यवसानम् । यथादिशब्दानां धर्मविशेषसंबन्ध एव शक्तत्वात् । तुल्यादिशब्दास्तु नैवम् । 'पद्मेन तुल्यं मुखम्' इत्यादावुपमेये, 'पद्मं तुल्यं मुखस्य' इत्यादावुपमाने' 'मुखं पद्मं च तुल्यम्' इत्यादावुभयत्रापि सामान्यतस्तुल्यत्वं बोधयित्वा विश्रान्तेषु तेषु धर्मविशेषं विना कथं तुल्यतेति प्रतीतानुपपत्त्या धर्मविशेषसंबन्धप्रतीतेरिति ।

केचित्तु —'उपमानोपमेयभावरूपसंबन्धस्य श्रौतार्थत्वाभ्यां विशेषः' इति व्याचक्रुस्तदयुक्तम् । 'साधर्म्यस्याऽऽर्थत्वात्तुल्यादिपदोपादान आर्थी' इति प्रकाशविरोधात् । यस्यैव ह्यार्थतया उपमाया आर्थत्वं तस्यैव श्रौततया श्रौतत्वौचित्यात् । किं च साधर्म्यमेवोपमेति तस्यैव

---

सूत्रे भाष्ये स्पष्टम् । एवमिवादिभिः स्वसमभिव्याहृतचन्द्रादावुपमानत्वं तन्निर्वाहक आह्लादकत्वादिसाधारणधर्मसंबन्धश्च बोध्यते । तत्र साधारणधर्मवत्त्वेनेतरपरिच्छेदकत्वरूपोपमानत्वप्रतीतिस्तद्धर्मवत्परिच्छेद्यप्रतीतिं विनाऽनुपपन्नेति तमपि बोधयतीति भावः । एवं च चन्द्र इवेत्यत आह्लादकोपमानभूतचन्द्राभिन्नमाह्लादकमुपमेयं मुखमिति बोधः । अत एवेवादिसमभिव्याहार उपमानोपमेययोः समानविभक्तिकत्वनियमः । साधारणधर्मसंबन्धश्च क्वचिद्विशेषणतया यथा चन्द्र इव मुखमाह्लादकमित्यादौ । क्वचिद्विशेष्यतया यथा चन्द्र इव मुखमाह्लादयतीत्यादौ । अत्र ह्युपमानचन्द्रकर्तृकाह्लादाभिन्न उपमेयमुखकर्तृकाह्लाद इति बोधः । अतोऽत्रापि तयोः समानविभक्तिकतैव । ये त्वत्र चन्द्रसादृश्यप्रयोजको मुखकर्तृक आल्हाद इति बोधं वदन्ति तेषां तयोः समानविभक्तिकत्वनियमे मानं चिन्त्यम् । यत्तु वाचनिकी समानविभक्तिकतेति । तन्न । व्याकरणे तादृशवचनानुपलम्भात् । एवं गज इव गच्छति देवदत्त इत्यादौ बोध्यम् । वनगज इव शूरः समरभूमिं गच्छतीत्यादावुपमानगजकर्तृकवनगमनाभिन्नमुपमेयशूरकर्तृकं समरकर्मकं गमनमिति बोधः । साधारणधर्मरूपगमनस्य विधेयतयोपमाविधेयिकाऽत्र धीः । व्याघ्र इव यः पुरुषः स गच्छतीत्यादावुपमानशूरव्याघ्राभिन्नपुरुषकर्तृकगमनमिति धीः । शूरत्वादिसाधारणधर्मस्योद्देश्यतयोपमोद्देश्यिकाऽत्र धीः । अत एव भेदाभेदप्रधानोपमेति प्राञ्चः । यद्यपि चन्द्रमुखयोस्तत्त्वेन भेदस्तथाऽपि साधारणधर्मवत्त्वेनाभेदान्वययोग्यता बोध्येति । अधिकं मञ्जूषायां द्रष्टव्यम् ।

**धर्मविशेषसंबन्ध एवेति** । अस्य शक्त्या स्वसामर्थ्येन बोधनं तदन्वयतात्पर्यग्राहकतया बोध्यम् । तत्कृतोपमानत्वस्य तु द्योतका इति बोध्यम् । **तुल्यादिशब्दास्त्विवति** । ते च सदृशवाचकाः । सादृश्यं च साधारणधर्मप्रयोज्यो धर्मविशेष इत्याहुः । न चेदृशश्रौत्यार्थीविवेको विफलः । आर्थ्यामुपमानोपमेयनिर्णयविलम्बेनाऽऽस्वादविलम्बः, तदभावः श्रौत्यामिति तत्साफल्यादिति बोध्यम् । **उपमेय इति** । समानविभक्त्यन्तपदोपस्थाप्यत्वादिति भावः । **उपमान इति** । तत्त्वादेवेति भावः ।

**संबन्धस्येति** । स संबन्ध एवेवार्थः ।

---

१ क. 'कृत्यप्रतीत्यप°' । २ क. 'न्धबोध ए°' ।

'इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति नित्यसमास इवशब्दयोगे समासगा ।

**क्रमेणोदाहरणम्—**

स्वप्नेऽपि समरेषु[1] त्वां विजयश्रीर्न मुञ्चति ।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥ ३९२ ॥
चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारिकान्ति ।
सरसिजमिदमाननं च तस्याः सममिति चेतसि संमदं विधत्ते ॥ ३९३ ॥

---

श्रौतत्वार्थत्वाभ्यामुपमाभेदो युक्तः । अत एव 'यथादिना सादृश्यरूपः संबन्ध एव साक्षादभिधीयते षष्ठीवत्, तुल्यादिभिस्तु धर्म्यपि' इति व्याख्यानमनुपादेयम् । ननु तथाऽप्यनुपपन्नो विभागः । पूर्णायां द्योतकोपमानयोरेव हि समासः संभावितः । न च यथादिभिः सममसौ दृश्यते येन समासे श्रौती स्यादिति चेत्, न । 'इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इत्यनेनेवशब्देन समं समासविभक्त्यलोपयोः[2] संभवात् । विभक्त्यलोपदर्शनाच्च[3] तत्रासमासव्यवहारो मूढानाम् ।

तत्र वाक्ये श्रौती यथा—स्वप्नेऽपि० ।

अत्र विजयश्रीरुपमेया । स्वाधीनपतिकोपमानम् । न मुञ्चतीति साधरणो धर्मः । यथेत्युपमाप्रतिपादकम्[4] । एवमग्रेऽप्यूह्यम् । न चैतेषां कयोरपि समास इति वाक्यगा श्रौती ।

वाक्यगाऽऽर्थी यथा—**चकित०** ।

---

**अनुपादेयमिति** । धर्मबोधेऽपि यावदप्राप्तं तावद्विधीयत इति सादृश्यस्यैव विधेयत्वादित्यपि बोध्यम् । **न च यथादिभिरिति** । असादृश्य एव यथाशब्देन समासविधानादिति भावः । **इवेन नित्यसमास इति** । व्याकरणे वैकल्पिकत्वाङ्गीकाराद्वार्तिके तथाऽपाठाच्च नित्यपदप्रक्षेपोऽप्रामाणिकः ।

**स्वप्नेऽपीति** । वैरिभिः स्वप्नेऽपि तव विजयानुभवादित्यर्थः । प्रभावात्तपोविशेषात्प्रभव उत्पत्तिर्यस्य तमित्यर्थः । ('प्रभावस्य प्रभवं उत्पत्तिहेतुं त्वामित्यन्वयः' इति चन्द्रिका ।) समरेषु न तु समरे । अत्र यत्तत्पदप्रकृतिकप्रकारवाचिथाल्प्रत्ययान्तयथाशब्दादियोगे यद्धर्मवती स्वाधीनपतिका तद्धर्मवती विजयश्रीरित्युभयविशेष्यको बोधः । पश्चाद्यत्तद्भ्यां धर्मस्यैक्यबोधात्सादृश्यं फलति । राज्ञः कान्तस्य च बिम्बप्रतिबिम्बभावः । तदालिङ्गितस्वप्नाधिकरणकत्यागाभावोऽनुगामी साधारणो धर्म इति बोध्यम् ।

**चकितेति** । ( सखीं प्रति नायिकासौभाग्यं कयाचिन्निवेद्यते ।) भीतहरिणवच्चञ्चलनेत्राया इत्यर्थः । क्रुधि कोपे । तत्रापि कान्तमित्याह—तरुणेति । तरुणारुणवत्तारा पुष्टा हारिणी मनोहरा कान्तिर्यस्य तदित्याननविशेषणम् । संमदं हर्षम् । ( पुष्पि-

---

१ क. °रेऽपि त्वां । २ क. °योः प्रसङ्गात् । ३ क. °र्शनवतस्तत्रा° । ४ ख. °दकं विवक्षितम् ।

अत्यायतै[1]र्नियमकारिभिरुद्धतानां
दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो
लक्ष्मीविलासभवनैर्भुवनं बभार ॥ ३९४ ॥

अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर न कस्य ॥३९५॥
गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् ।
दुरालो[2]कः स समरे निदाघाम्बररत्नवत् ॥ ३९६ ॥

---

इयं समशब्दप्रयोगादार्थी ।

समासे श्रौती यथा—**अत्यायतै०** ।

अत्रेवेन समासः ।

समा[3]से आर्थी यथा—**अवितथ०** ।

अत्र सुरतरुसदृश इत्युपमानद्योतकयोः समासः ।

तद्धिते श्रौत्यार्थी च यथा—**गाम्भीर्य०** ।

---

ताम्रा छन्दः । ) सरसिजमाननं च सममित्यत्र प्रथमं सादृश्यवदभिन्नमिदं द्वयमिति बोधे पश्चान्मनसा व्यञ्जनया वा परस्परनिरूपितसाधारणधर्मप्रतीतिरिति ध्येयम् । अरुणसदृशकान्तिमत्त्वं साधारणो धर्मः ।

**अत्यायतैरिति** । आयतिः ( आयतम् ) उदर्कशुद्धिर्दीर्घता च । उद्धतानां गर्ववतां दानवानां च । दिव्यैरुत्कृष्टैः स्वर्गीयैश्च । प्रभाभिः प्रकृष्टशोभावद्भिः । भातेः कर्तरि क्विप् । अनपायमयैरपायाभावप्रचुरैः । उपायैः सामभेददानविग्रहैः । अदः एतद्भुवनम् । लक्ष्मीः कमला संपच्च । ( वसन्ततिलका छन्दः ) । [4]भुजैरिवोपायैरित्यत्र भुजसादृश्यप्रयोजकात्यायतत्वादिधर्मवद्भिरित्यादिरेव बोधः । गजो वनं गच्छतीव शूरः समरभूमिं गच्छतीत्यादौ क्रियासमभिव्याहृतेवादेरुत्प्रेक्षाद्योतकत्वमेवेति न तत्रोपमालंकारः । स्पष्टं चेदं सन्विधायके भाष्ये ।

**अवितथेति** । अव्यर्थवाञ्छितविषयसंबन्धिमार्गसंपादनेषु प्रकृष्टगुणानां गरिम्णा गीता श्रीर्यस्य । ( गीतिश्छन्दः । ) **द्योतकयोरिति** । द्योतकपदं बोधकपरम् ।

**गाम्भीर्येति** । गाम्भीर्यं दुर्ज्ञेयान्तःकरणत्वमतलस्पर्शित्वं च । भुजङ्ग उपपतिः

---

१ क. 'तैर्विषम°। ग. 'तैर्विनयका°। २ क. °लोकश्च सम°। ३ क. °मासगार्थी। ४ भुजैरित्यारभ्य बोध इत्यन्तः पाठः ( ख. ) पुस्तके नोपलभ्यते ।

स्वाधीनपतिका कान्तं भजमाना यथा लोकोत्तरचमत्कारभूः, तथा, जयश्रीस्त्वदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तेर्वैचित्र्यम्, वैचित्र्यं चालंकारः, तथाऽपि न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः, । न खलु व्यङ्ग्यसंस्पर्शपरामर्शादत्र चारुताप्रतीतिः । अपि तु

---

अत्र गङ्गाभुजङ्गवदिति श्रौती । 'तत्र तस्येव' ( पा०सू०५।१।११६ ) इत्यनेनेवार्थे वतेर्विधानात् । निदाघाम्बररत्नवदित्यार्थी । 'तेन तुल्यम्—' इत्यर्थे वतेः प्रयोगात् ।

ननु चित्रभेदा अलंकारनिर्णये निर्णेष्यन्त इति पूर्वमवादीः, इदानीं 'स्वप्नेऽपि' इत्युदाहरसि । न तच्चित्रं भवितुमर्हति । अत्र हि स्वाधीनभर्तृका कान्तं भजमाना यथा चमत्कारभूस्तथा जयश्रीस्त्वदासेवनेनेत्यादि वस्तुरूपं व्यङ्ग्यं विना नोक्तेर्वैचित्र्यम् । वैचित्र्यं चालंकारत्वनिष्पत्तय इति व्यङ्ग्यमवश्यापेक्षणीयम् । अतस्तस्य प्राधान्ये ध्वनित्वम् । अप्राधान्ये गुणीभूतव्यङ्ग्यत्वम् । तस्मात्पूर्वापरविरुद्धाभिधानमिति चेत्, मैवं वादीः । न खलु व्यङ्ग्यपरामर्शादेवात्र चारुताप्रतीतिः । अपि तु वाच्योपमामात्रपरामर्शा-

---

समुद्रः । शंतनोरेव पतित्वात् । दुरालोको दुःखेनाऽऽलोकयितुं शक्यः । अम्बररत्नं सूर्यः । अत्र बोध उक्तदिशोह्यः । उत्तरत्र निदाघाम्बररत्नतुल्याभिन्नो दुरालोक इति बोधः । तुल्यत्वप्रयोजकं च दुरालोकत्वमिति पश्चान्मनसा व्यञ्जनया वा बुध्यते । स चेत्थम् । उपमानदुरालोकानिदाघाम्बररत्नाभिन्नो दुरालोको राजेत्येवमिति बहवः । अत एवाऽऽर्थीत्वम् । नामार्थयोरभेदान्वयस्यैतद्विग्रहवाक्ये क्लृप्तनिर्वाहायास्य वतेरपि धर्मिवाचकतैवोचिता । अनुशासनस्य तथैव शक्तिग्राहकत्वाच्च क्रिययोस्तुल्यत्व एव तेन तुल्यमिति वतिः साधुः । अत एव ब्राह्मणवदधीत इत्यत्र ब्राह्मणपदस्य तत्कर्तृकाध्ययने लक्षणेति भाष्यकृतः । एवं च चन्द्रवन्मुखमित्यादौ भवतिक्रियामध्याहृत्य चन्द्रभवनसदृशं मुखभवनमित्येव वाच्योऽर्थः । चन्द्रमुखयोः सादृश्यं तु व्यञ्जनयैवेति[2] बोध्यम् । गङ्गाभुजङ्गवदित्यत्र गङ्गाभुजङ्गपदस्य तत्संबन्धिगाम्भीर्यगरिमलक्षकत्वेन गङ्गाभुजङ्गसंबन्धिगाम्भीर्यसदृशमेतत्संबन्धिगाम्भीर्यमिति बोधः । तदनन्तरं गाम्भीर्ययोः सादृश्यमूलाभेदाध्यवसायेनाभिन्नधर्ममूला पश्चाद्गङ्गाभुजङ्गराज्ञोरुपमाप्रतीतिः । गङ्गाभुजङ्गस्येवास्य गाम्भीर्यगरिमेत्यादिवाक्ये षष्ठ्युपपत्तये गाम्भीर्यगरिमेत्यस्याऽऽवृत्त्या गङ्गाभुजङ्गेऽप्यन्वयेन तादृशबोधस्यैवानुभवेन वृत्तावपि तथैवौचित्यात् । एवमरविन्दतुल्यो भातीत्यस्यारविन्दतुल्यकर्तृकं भानमिति वाच्योऽर्थः । भानमेव च साधारणो धर्मः । एवं चोपमाविधेयिका धीः । यदा तु धर्मान्तरेण तुल्यत्वं तदोपमाया उद्देश्यतावच्छेदकत्वमिति दिक् । **न खलु व्यङ्ग्येति** । सत्यपि व्यङ्ग्ये समुत्कटयाऽलंकारकृतचारुतया प्रथमतश्चित्ताकर्ष-

---

१ क. 'वश्यमपे°' । २ ख. 'यैव बुध्यत इति ।

वाच्यवैचित्र्यप्रतिभासादेव । रसादिस्तु व्यङ्ग्योऽर्थोऽलंकारान्तरं च सर्वत्राव्यभिचारीत्यगणयित्वैव तदलंकारा उदाहृताः । तद्रहितत्वेन तूदाह्रियमाणा विरसतामावहन्तीति पूर्वापरविरुद्धाभिधानमिति न चोदनीयम् ।

**तद्वद्धर्मस्य लोपे स्यान्न श्रौती तद्धिते पुनः ।**

---

देव । चारुत्वहेतुश्चालंकारः । अवर्जनीयसंनिधिश्च व्यङ्ग्यस्यास्फुटतरतया न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारप्रवर्तकतेति न कश्चिद्दोषः ।

नन्वेवमप्युदाहृते रसादिरूपव्यङ्ग्यसद्भावाच्चित्रतानुपपत्तिः । किं चानुप्रासाद्यलंकारान्तरसद्भावात्संकरालंकारोदाहरणान्येतानि युक्तानि, न तु शुद्धाया उपमाया इति चेत्, न । रसादिरूपव्यङ्ग्योऽलंकारान्तरं चैतेष्वव्यभिचारीति तत्रौदासीन्यमालम्ब्योपमालंकारोऽयमीदृश इत्यभिप्रायेणालंकारमात्रमुदाहृतं न तु चित्रकाव्यम् । अत्र 'चन्द्रधवलः पटः' इत्यादिको रसालंकाराभ्यामसंभिन्न एव विषयः किमिति नोदाहियत इति चेत्, तद्रहितत्वेनोदाहरणे वैरस्यप्रसङ्गात् । तादृशवाक्यस्याकाव्यत्वेन तस्या अप्यनुपमात्वात् ।

अथ लुप्ता विभजनीया । सा च सप्तधा । तत्रैकस्य लोपे त्रिधा । उपमानस्य साधारणधर्मस्य द्योतकस्य च लोपात् । उपमेयमात्रस्य लोपादर्शनात् । द्विलोपेऽपि त्रिधा । धर्मवाद्योर्धर्मोपमानयोर्वाद्युपमेययोश्च लोपात् । अन्यस्य द्विकस्य लोपासंभवात् । त्रिलोपे त्वियमेका । उपमेयं विनाऽन्येषामेकैकमात्रसत्त्व उपमाया असंभवादिति दर्शयन्नेव यथासंभवं तासां सप्तविधानामपि विभागमाह— **तद्वद्धर्म०** ।

---

णादिति भावः । विद्यमानव्यङ्ग्यस्य ध्वन्यादिप्रयोजकता नेत्याह—**अवर्जनीयेति** । **अस्फुटतरतयेति** । अत्रालंकारवैचित्र्यप्रतीतिव्यवहितप्रतीतिकतयाऽस्फुटतरत्वम् । यत्र वाच्यप्रतीत्यव्यवधानेन व्यङ्ग्यप्रतीतिस्तत्र तदुभयमिति भावः । अस्फुटतरातिरिक्तव्यङ्ग्यराहित्येनाव्यङ्ग्यत्वमत्रेति रहस्यम् ।

**नन्वेवमिति** । राजविषयकरतिभावस्य भकारानुप्रासस्य च स्वप्नेऽपीति पद्ये सत्त्वादित्याशयः । **तस्या अप्यनुपमात्वादिति** । उपमालंकारत्वाभावादित्यर्थः । वाचकवाच्योपस्कारद्वारा रसाद्युपकारकस्यैवालंकारत्वादिति भावः । नीरसेऽपि स्ववैचित्र्येणाऽऽपाततश्चमत्कारमात्रं नत्वलंकारत्वमिति तात्पर्यम् ।

**एकस्य लोप इति** । लोपोऽत्रानुपादानम् । ननु चन्द्रत्वमुखत्वादिधर्मप्रतीतेर्न धर्म-

---

१ क. ग. °दिरूपस्तु । २ ग. °त्राप्यव्य° । ३ क. °मालक्ष्योप° ।

**धर्मः साधारणः। तद्धिते कल्पबादौ त्वार्थ्येव। तेन पञ्च। उदाहरणम्—**

**धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः।**
**करणीयं वचश्चेतः सत्यं तस्यामृतं यथा॥ ३९७॥**
**आकृष्टकरवालोऽसौ संपराये परिभ्रमन्।**
**प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः॥ ३९८॥**
**करवालइवाऽऽचारस्तस्य वागमृतोपमा।**
**विषकल्पं मनो वेत्सि यदि जीवसि तत्सखे॥ ३९९॥**

---

धर्मस्य साधारणस्य। तद्धलसमासे वाक्ये तद्धिते च श्रौती, आर्थी चेत्यर्थः। तत्र विशेषमाह—'न श्रौती तद्धित'—इति। इवार्थ एव हि तद्धिते सा श्रौती भवेत्। इवार्थश्च वतिरेव। स च 'तत्र तस्येव' इत्यर्थकतया नित्यं धर्मसाकाङ्क्ष इति धर्मानुपादाने श्रौती तद्धिते न भवत्येव। आर्थी तु यद्यपि वतिरूपे तद्धिते न संभवति 'तेन तुल्यम्—' इत्यर्थ उक्तन्यायेन नित्यं तुल्यक्रियाकाङ्क्षत्वेन धर्मलोपे तदसंभवात्। तथाऽपि कल्पप्—देश्य—देशीयर—बहुच्—रूपे संभवत्येवेति पञ्चधा धर्मलोपोपमेत्यर्थः।

तत्र वाक्ये श्रौती यथा—**धन्यस्या०**।

अत्रामृतवचसोः परिणामसुरसत्वादिसाधर्म्यं, तच्च नोपात्तम्। आक्षेपात्तु लब्धस्य संबन्धो यथाशब्देन तद्बोधं विनाऽपर्याप्तेन श्रुत्यैव बोध्यत इति धर्मलोपे श्रौतीयम्। एवमग्रेऽप्यूह्यम्।

वाक्य आर्थी यथा—**आकृष्ट०**।

आकृष्टकरवालत्वं च न साधारणो धर्मः। यमस्य दण्डायुधत्वेन प्रसिद्धेः।

अन्यत्त्रयं यथा—**करवाल०**।

---

लोप इत्यत आह—**साधारणस्येति**। **नित्यं धर्मेति**। इवस्य साधारणधर्मसंबन्धे शक्तेस्तदुपादानं विना तदर्थबोधाभावात्। किं च षष्ठीसप्तम्यन्तात्तद्विधानेन षष्ठ्याद्यर्थस्य धर्मोपादानं विनाऽन्वयासंभवादिति भावः। **धर्मलोपे तदसंभवादिति**। इदमपि व्यङ्ग्योपमामादायैव।

**धन्यस्येति**। अनन्यसामान्यस्येति (न विद्यतेऽन्यत्सामान्यं सादृश्यं यस्येति) बहुव्रीहिः। चेत इति संबोधनम्।

**आकृष्टेति**। (करवालः खड्गः) संपराये युद्धे। प्रत्यर्थिसेनया शत्रुसेनया। कृतान्तो यमः। क्रूरत्वमत्र साधारणो धर्मः।

**करवाल इवेति**। तत्तदा। यदि वेत्सि तर्हि जीवसीत्यन्वयः। अथ वा यदि

---

१ क. समो विभुः। २ क. °पिपु सं°।

उपमानानुपादाने वाक्यगाऽथ समासगा ॥ ८८॥

सअलकरणपरवीसामसिरिविअरणं ण सरसकव्वस्स ।
दीसइ अहवणिसम्मइ सरिसं अंसंसमेत्तेण ॥ ४०० ॥

कव्वस्सेत्यत्र कव्वसममिति, सरिसमित्यत्र च णूणमिति पाठ एषैव समासगा ।

---

अत्र करताल इवेति समासे श्रौती । अमृतोपमेति समास आर्थी । विषकल्पमिति तद्धितगाऽऽर्थी ।

उपमाना० ।

अत्र तद्धितगा न संभवति । उपमाप्रतिपादकस्य तद्धितस्य वतिकल्पबादेरुपमानादेव विधानेनोपमानानुपादानेऽसंभवात् । न वा श्रौती । इवादीनामुपमानमात्रान्विततया तदनुपादाने तेषामप्यनुपादानात् । अतो वाक्यसमासयोरेव । तयोरप्यार्थ्येवेति द्विप्रकारा लुप्तोपमानोपमा ।

तत्र वाक्यगा यथा—सअल० ।

अत्र विशेषत उपमानं नोपात्तम् । चिन्त्यमेतत् । इदमेव 'कव्वस्स' इत्यत्र 'कव्वसमम्' 'सरिसं' इत्यत्र 'णूणं' इतिपाठें समासगोदाहरणम् ।

---

जीवसि तर्हि वेत्सीत्यन्वयः। तत्समीपावस्थाने तव जीवनमेव दुर्लभमिति भावः । अत्र घातकत्वामाधुर्यनाशकत्वानि क्रमेण साधारणा धर्माः । उपमाशब्दस्य सदृशमात्रवाचकत्वेऽपि साधारणधर्मसंबन्धे नित्यसाकाङ्क्षत्वाभावाच्छक्तत्वाभावाद्वाऽऽर्थीत्वम् । **विषकल्पमिति ।** ईषदसमाप्तौ विधीयमानस्य कल्पपः सादृश्ये पर्यवसानादिति भावः ।

**उपमानमात्रान्विततयेति ।** उपमानानन्तर्यनियमेनेत्यर्थः ।

**स अलेति ।**

सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य ।
दृश्यतेऽथ वा निशम्यते सदृशमंशांशमात्रेण ॥

अपिरत्र गम्यः । करणं चक्षुरादि । परविश्रामो विषयान्तरवैमुख्यम् । तज्जन्यशोभादात्रित्यर्थः । ( आर्या मुखविपुला । ) **अत्र विशेषत इति ।** अत्रास्मद्दर्शनश्रवणाविषयत्वेन दुर्लभतयोत्कृष्टगुणमस्मदगोचरं किंचिदुपमानं भविष्यतीति सादृश्यपर्यवसानादुपमानलुप्तोपमेयम् । एतेनासमालंकारोऽयमुपमातिरिक्त इति रत्नाकराद्युक्तमपास्तम् । अत एवोपमानानुपादान इत्युक्तं न त्वसत्त्व इति । वस्त्वन्तरस्य विशिष्यानुपादानमात्रेणोपमानलोपव्यवहारः । एतेनानन्वयोऽत्रेत्यप्यपास्तम् । अनन्वय उपमानासत्त्वस्यैव विवक्षितत्वात् । **चिन्त्यमेतदिति ।** तद्बीजं तु काव्यमेवात्रोपमानम् । चन्द्रस्य सदृशं मुखमित्यादौ

**वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि।**
**कर्मकर्त्रोर्णमुलि;**

वाशब्द उपमाद्योतक इति वादेरुपमाप्रतिपादकस्य लोपे षट्,—समासेन कर्मणोऽधिकरणाच्चोत्पन्नेन क्यचा, कर्तुः क्यङा, कर्मकर्त्रोरुपपदयोर्णमुला च भवेत्।

उदाहरणम्,—

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता॥ ४०१॥

तथा

असितभुजगभीषणासिपत्रो रुहरुहिकाहितचित्ततूर्णचारः।
पुलकिततनुरुत्कपोलकान्तिः प्रतिभटविक्रमदर्शनेऽयमासीत्॥४०२॥

---

द्योतकलोपे वाक्यगा तावन्न संभवति। 'मुखं चन्द्रो रमणीयम्' एतावन्मात्रेणोपमाप्रत्ययाभावात्। नापि तद्धितगा। वतेः कल्पबादीनां च द्योतकतया तत्प्रयोगे द्योतकलोपस्यैवासंभवात्। न वा श्रौतीत्यन्यथा विभजते—**वादे०**।

वाशब्द उपमाद्योतक इति वादेरुपमाद्योतकस्येत्यर्थः। तस्य लोपे समासे क्यचि क्यङि णमुलि चोपमा। तत्र क्यचि द्विधा। कर्मणोऽधिकरणाच्च विधानेन तस्य द्वैविध्यात्। क्यङि त्वेकैव। कर्तुरेव तद्विधानात्। णमुल्यपि द्विधा। कर्मकर्त्रोस्तद्विधानात्। तत्र समासे[3] द्विधा। द्वयोस्त्रयाणामपि वोपमानादिपदानां समासात्।

तयोराद्या यथा—**ततः०**।

अत्र गण्डपाण्डुनेति द्वयोः समासः।

द्वितीया यथा—**असित०**।

---

चन्द्रस्यैवोपमानतावगमात्। एवं चोपमेयलोप इति वक्तुमुचितमिति। उद्धारस्तु काव्यस्य सममित्यस्य काव्यनिष्ठसादृश्यप्रतियोगीत्यर्थः। काव्यस्य वर्णनीयतयोत्कर्षायोपमेयस्य विवक्षितत्वादित्याहुः।

**तद्विधानादिति**। एवं च सादृश्यबोधकवादिलोपे षड्विधेत्यर्थः। **तत इति**। (महाभारते द्रोणपर्वणि रात्रियुद्धे १८४ अध्याये चन्द्रोदयवर्णनम्।) कुमुदनाथत्वं तद्विकासित्वात्। गण्ड इव पाण्डुरिति उपमानानीति समासः। नेत्रानन्देन तज्जनकेन। माहेन्द्री प्राची।

**असितेति**। असितभुजगस्तीक्ष्णविषः सर्पजातिभेदः। तद्वद्भीषणस्तीक्ष्णधारत्वादसि-

---

१ क. 'मण्यधिकरणे चोत्प'। २ ग. कर्तरि क्य'। ३ क. 'मासगा द्वि'।

पौरं सुतीयति जनं समरान्तरेऽसा-
वन्तःपुरीयति विचित्रचरित्रचुञ्चुः।
नारीयते समरसीम्नि कृपाणपाणे-
रालोक्य तस्य चरितानि सपत्नसेना ॥ ४०३ ॥
मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे।
स पुनः पार्थसंचारं संचरत्यवनीपतिः ॥ ४०४ ॥

---

अत्रासितभुजगेत्यादावुपमानधर्मोपमेयशब्दानां त्रयाणामपि समासः।

क्यच्क्यङोर्भेदत्रयं यथा—**पौरं०**।

अत्र पौरं सुतीयतीत्यत्र 'उपमानादाचारे' (पा० सू० ३।१।१०) इति कर्मणः क्यच्। समरान्तरेऽन्तःपुरीयतीत्यत्र तु 'अधिकरणाच्च' इत्यनेनाधिकरणात्। नारीयत इति 'कर्तुः क्यङ् सलोपश्च' (पा० सू० ३।१।११) इत्यनेन कर्तुः क्यङ्।

णमुलि भेदद्वयं यथा—**मृधे०**।

अत्र निदाघघर्मांशुदर्शमिति कर्मणि णमुल्। निदाघघर्मांशुमिव पश्यन्तीत्यर्थात्। पार्थसंचारमित्यत्र कर्तरि। 'उपमाने कर्मणि च' (पा० सू० ३।४।४५) इति सूत्रे चकारात्।

---

रेव पत्रं यस्य सः। रुहरुहिका रभसोत्कण्ठा तदाहिताश्चित्र आश्चर्यभूतस्तूर्णस्त्वरितश्चारो गमनं यस्य सः। उद्धतकपोलशोभः। (पुष्पिताग्रा छन्दः।) यत्तु पूर्वोदाहरण उपमानानीति समासाच्छ्रौती, अत्र त्वसितभुजगवद्भीषण, इति मध्यमपदलोपिसमासादार्थीति भेदमाहुः। तन्न। विनिगमनाविरहात्।

**पौरं सुतीयतीति**। पौरं नागरजनं सुतमिवाऽऽचरतीत्यर्थ उपमानादाचार इति क्यच्। उपमानवाचकात्कर्मण आचारेऽर्थे क्यजिति सूत्रार्थः। उपमानादित्यनेनेवार्थस्य वृत्तौ प्रवेशः सूचितः। अत्राऽऽचारः स्नेहपालनादिरूपः। एवं चोपमानभूतसुतकर्मकाचाराभिन्नः पौरकर्मकाचार इति बोधः। एवमन्तःपुर इवाऽऽचरतीत्यर्थकान्तःपुरीयतीत्यत्रापि बोध ऊह्यः। अत्राऽऽचारः स्वच्छन्दगमनादिः। विचित्रेति। विचित्रचरित्रैर्वित्त इत्यर्थः। तेन वित्तश्चुञ्चुप्चणपौ (पा०सू०५।२।२६) इतिचुञ्चुप्रत्ययः। नारीवाऽऽचरति नारीयते। कर्तुः क्यङ्। आचारोऽत्र विनयादिः। (वसन्ततिलका छन्दः।) अत्र सादृश्यसदृशैतन्मात्रबोधकाभावाद्वाचकलुप्ता बोध्या। यत्तु सुतपदस्य सुतसादृश्यलक्षकत्वेऽपि सादृश्यवाचकाभावाद्वाचकलुप्तेति। तन्न। चन्द्रप्रतिपक्षमाननमित्यादावपि वाचकलुप्तापत्तेः।

**मृध इति**। रण इत्यर्थः। (परे। शत्रवः। निदाघघर्मांशुदर्शं पश्यन्ति ग्रीष्मसंब-

---

१ ग. °त्रचञ्चुः। २ क. ग. ललितानि।

एतद्विलोपे क्विप्समासगा ॥ ८९ ॥

एतयोर्धर्मवाद्योः । उदाहरणम्,—

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥ ४०५ ॥

परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।
संपरायप्रवृत्तोऽसौ राजते राजकुञ्जरः ॥ ४०६ ॥

धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते ।

---

अथ द्विलोपे विभजनीया । तत्र धर्मवाद्योर्लोपे वाक्यगा न संभवति । शिष्टयोर्मुखं चन्द्र इत्येतावन्मात्रयोरुपादान उपमानवगमात् । नापि ताद्धितगा । तद्धितस्यापि कल्पबादित्वेन तत्सत्त्वे द्विलोपाभावात् । नापि श्रौती । इवाद्यभावादित्यन्यथा विभजते— एतद्वि० ।

एतद्विलोप एतयोर्द्वयोर्धर्मवाद्योर्लोपे ।

क्विब्गा यथा—सविता० ।

यद्यप्याचारे क्विब्विधानात्तस्यैव च समानधर्मरूपत्वेन क्विपि धर्मलोपो नास्ति तथाऽपि क्विप एव लोपाद्धर्मलोपव्यवहारः । अत एव समानार्थत्वेऽपि क्यङत्र नोपात्तः । तस्यालुप्तत्वेन धर्मलोपाभावात् ।

समासगा यथा—परिपन्थि० ।

अत्र राजाऽयं कुञ्जर इवेत्युपमा ।

धर्मो० ।

---

न्धिसूर्यमिव पश्यन्तीत्यर्थः । पार्थसंचारं संचरति । पार्थ इव संचरतीत्यर्थः । ) णमुल्प्रकृतिः साधुत्वमात्रार्था । णमुलर्थो भावः । अव्ययकृतां भाव एव विधानात् । तस्मात्कर्मणोरेव कर्त्रोरेव चोपमानोपमेयभाव इति लुप्तोपमैवेयमिति ।

**सवितेति** । सुखिते मनसि सूर्यश्चन्द्रसदृशः । आल्हादकत्वात् । दुःखिते चन्द्रः सूर्यसदृशः । दुःखदत्वात् । एवमुत्तरत्र । ( विधवति । विधुरिवाऽऽचरति । सवितरति । सवितेवाऽऽचरति । दिनन्ति । दिनानीवाऽऽचरन्ति । यामिनयन्ति । यामिन्य इवाऽऽचरन्ति । आर्या छन्दः । ) **क्विप एवेति** । यद्यपि क्विप्प्रकृतेः कर्तृभूतस्य सादृश्यप्रयोजकाचारलक्षणेति कथं धर्मलोपः । तथाऽपि तन्मात्रबोधकाभावाल्लोपव्यवहारः ।

**परिपन्थीति** । शत्रुमनोराज्यैरपीत्यर्थः । साक्षाद्दुराक्रम एवेति किं वक्तव्यमिति भावः । संपरायो युद्धम् । **राजाऽयं कुञ्जर इवेति** । उपमितं व्याघ्रादिभिः (पा०सू०२।१।५६) इति समासः । दुराधर्षत्वस्य समानधर्मस्य प्रसिद्धत्वान्न न्यूनपदत्वम् । औपम्यं समासगम्यम् । अत्र

---

१ क ग. 'योर्द्वयोर्ध' । २ क. 'नान्यपि सु' । ३ क. ग. 'रायप्र' । ४ क. द्विलोप । ५ क. क्विपि ।

उदाहरणम्—

ढुण्ढुण्णन्त मरीहसि कण्टअकलिआइँ केअइवणाइं ।
मालइकुसुमसरिच्छं भमर भमन्तो ण पावहिसि ॥ ४०७ ॥

कुसुमेण सममिति पाठे वाक्यगा ।

क्यचि वाद्युपमेयासे ।

आसे निरासे ।

अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥ ४०८ ॥

अत्राऽऽत्मा उपमेयः ।

---

—तद्धिते तु नेयम् । उपमानलोपे तद्धितस्यैवाभावात् । नापि श्रौती । उपमानाप्रयोग इवादेरप्रयोगात् ।

तत्र समासगा यथा—ढुण्ढुण्णन्त० ।

कुसुमसरिच्छमित्यत्र ' कुसुमेण समं ' इति पाठ इयमेव वाक्यगा ।

क्यचि० ।

आसे निरासे । उदाहरणम्—अराति० ।

अत्र यद्यपि विशेषणद्वारोपात्तः कर्तैवोपमेयस्तथाऽपि न तथात्वेन, किं तु कर्मत्वेन ।

---

रूपकं तु न । मनोराज्यशतैरित्यादेरनन्वयादित्याहुः ।

ढुण्ढुण्णन्त इति ।

ढुण्ढुलायमानो मरिष्यसि कण्टककलितानि केतकीवनानि ।
मालतीकुसुमसदृशं भ्रमर भ्रमन्नपि न प्राप्स्यसि ॥

ढुण्ढुलायमानोऽन्वेषमाण इत्यर्थः । एकाकारशब्देन प्रार्थयन्नित्यर्थ इत्यन्ये । काचित् सौभाग्यमात्मनः सूचयन्ती प्रियसंनिधौ भ्रमरं प्रत्येवमाह । ( गाथा छन्दः । ) अत्र प्रकृतत्वान्मालत्युपमेया । कुसुमान्तरस्याप्राप्त्युपदेशेन त्वदप्राप्यमुत्कृष्टगुणमस्योपमानमिति प्रतीतेरस्त्युपमितिक्रियानिष्पत्तिरिति बोध्यम् ।

क्यचीति । विषयसप्तमी । निरास इति । वाद्युपमेययोर्लोप इत्यर्थः ।

अरातीति । मदग्रेऽपि वैरिविक्रम इति नयनविकासः । कृपाणेनोदग्रो भीषणो बाहुर्यस्य सः । सहस्रमायुधानि यस्य तामिवाऽऽत्मानमाचरतीति कर्माणि क्यच् । आयुधसहस्रनिर्वाह्यस्य प्रतिपक्षोत्सारणस्यैकेन कृपाणेन निर्वाहाद्वीरप्रकर्षः । सहस्रारायुधीयतीति पाठे सहस्रारं चक्रमायुधमस्य विष्णोस्तमिवाऽऽचरतीत्यर्थः । विशेषणद्वारेति । सहस्रारायुधी-

---

१ क. °ण्डः सहस्रारायुधीयति । २ क. °णत्वारोपादन्ततः क°।

त्रिलोपे च समासगा ॥ ९० ॥

त्रयाणां वादिधर्मोपमानानाम् । उदाहरणम्,—

तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा ।
स्मरशरविसराचितान्तरा मृगनयना हरते मुनेर्मनः॥४०९॥

अत्र सप्तम्युपमानेत्यादिना यदा समासलोपौ भवतः, तदेदमुदाहरणम् । क्रूरस्याऽऽचारस्यायःशूलतयाऽध्यवसायात्, अयःशूलेनान्वि-

अन्यथा क्यचोऽसंगतत्वापत्तेः । तथा चाऽऽत्मानं सहस्रारायुधीयतीत्यर्थ इत्युपमेय आत्मा लुप्त इति यथोक्तोदाहरणमेतत् । हंसायत इत्यादौ कर्तैवोपमेयः । तस्य चानुपादाने वाक्यमेव न पर्याप्यत इति विशेषात्क्यङि नेयं संभवति । यद्यपि द्विलोपेऽन्यदपि भेदत्रयं संभवति । यथोपमानोपमेययोः, उपमानवाद्योः, उपमेयधर्मयोरिति । तथाऽपि तेषूपमायाः प्रसङ्ग एव नास्तीति न न्यूनत्वमाशङ्कनीयम् ।

त्रिलोपे तूपमेयातिरिक्तत्रितयलोप एव संभवतीत्युक्तम् । साऽपि समासमात्रे । अन्यत्र बोधकाभावात् । तत्राऽऽर्थ्यैवेवादेर्लोपात्, इत्येकविधैवेत्याह—त्रिलोपे० ।

यथा—तरुणिम० ।

अत्र यदि मृगशब्देन लक्षणया तल्लोचने विवक्ष्येते तदा नेदमुदाहरणम् । यदा तु मृगलोचने इव नयने यस्या इत्यर्थो विवक्ष्यते तदा 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च' इत्यनेन मृगलोचनेत्युपमानपूर्वपदस्य नयनशब्देन बहुव्रीहावुपमानवाचिनि मृगलोचन इति पूर्वपद उत्तरपदभूतस्य लोचनशब्दस्य लोप उपमेयभूतस्य नयनमात्रस्योपादानादिदमुदाहरणम् ।

केचित्तु "उपमानमात्रोपादानेऽपि त्रिलोपा संभवति । यथा 'अयमायः-

यतीति पाठ इदम् । स सहस्रायुधीयतीति पाठे साक्षादुपात्त इति बोध्यम् । **अन्यथा क्यच इति** । इच्छाक्यच् तु नायम् । अरातीत्यादिविशेषणासामञ्जस्यात् । तथाऽपीत्यतः प्रागुपमेयधर्मयोरिति पाठः । उपमानधर्मयोरिति पाठस्त्वयुक्तः । तल्लोपेऽनुपदमेव ढुण्ढुल्लन्त इत्यस्योदाहरणात् ।

**तरुणिमनीति** । तरुणिमानि सति मृगनयना मुनेर्मनो नयते हरतीत्यन्वयः । ललिताय विलासाय च वितीर्णो दत्तो विग्रहः शरीरं यया । स्मरशरैर्विशीर्णीकृतमान्तरं यस्याः सा ( अपरवक्त्रं छन्दः । )

**नेदमुदाहरणमिति** । अत्र स्वमात्रबोधकपदाभावात्त्रयाणां लोपसंभवेन चिन्त्यमेतदित्याहुः ।

१ग. पुस्तके एतद्वाक्यं न दृश्यते । २ क. ग. 'विलब्धवि' । ३ क. ग. नयते । ४ क. ग. 'सानादयः' । ५ क. 'न्विच्छेदित्य'यः' । ६ ख. 'पमानध' । ७ क. त्रिलोपा । ८ क. केचित्तु ।

**च्छति 'आयःशूलिकः'—इत्यतिशयोक्तिर्न तु क्रूराचारोपमेय—तैक्ष्ण्यधर्म-वादीनां लोपे त्रिलोपेयमुपमा। एवमेकोनविंशतिर्लुप्ताः पूर्णाभिः सह पञ्चविंशतिः।**

---

शूलिकः' इति। अत्रायःशूलपदेन क्रूर आचार उपमेयः। तीक्ष्णत्वादिकं च साधारणो धर्मः। न च तयोरेकमप्युपात्तम्। नापीवादिः" इति मन्यन्ते। तन्न युक्तम्। यतः क्रूरस्याऽऽचारस्यायःशूलतयाऽध्यवसानादतिशयोक्तिरियं न तूपमा। अन्यथाऽध्यवसानमूलातिशयोक्तेर्निर्विषयत्वापत्तेः।

तदेवं धर्मलोपे पञ्च। उपमानलोपे द्वौ। द्योतकलोपे षट्। धर्मवाद्योर्लोपे द्वौ। धर्मोपमानयोर्लोपे द्वौ। द्योतकोपमेयलोपे चैकः। त्रिलोपे त्वेकः। इत्यूनविंशतिर्लुप्ताभेदाः। पूर्णाभेदाश्च षट्। इत्येवं पञ्चविंशतिः।

नन्वन्येऽप्युपमाभेदाः संभवन्ति। तथा हि—एकस्यैवोपमेयस्य बहूपमानसंबन्धो मालोपमा। सा च द्विधा—साधर्म्यस्याभेदात्तद्भेदाच्च।

---

**अत्रायःशूलेति**। अयःशूलपदेन स्वार्थसदृशो लक्ष्यत इति भावः। **अतिशयोक्तिरिति**। अयःशूलशब्दादयःशूलत्वेन स्वार्थसदृशक्रूराचारलक्षकात्तेनान्विच्छतीति ठक्प्रत्यय उक्तरूपसिद्धेरिति भावः। **निर्विषयत्वापत्तेरिति**। कमलमनम्भसीत्यादावपि कमलादिपदैः स्वार्थसदृशमुखादेर्लक्षणादेतद्भेदापत्तेरिति भावः। वस्तुतोऽयं पूर्णालुप्ताविभागो वाक्यसमासप्रत्ययविशेषगोचरतया शब्दशास्त्रव्युत्पत्तिकौशलप्रदर्शनपरत्वादत्र शास्त्रे न व्युत्पाद्यतामर्हति। सा चेयमुपमा वस्त्वलंकारस्वरूपाणां व्यङ्ग्यानां वस्त्वलंकारयोर्वाच्ययोश्चोपस्कारकतयाऽलंकारतां भजते। नचैवमन्यानुपस्कारकसादृश्यनिबन्धने

'सच्छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात्पवनावधूतः।
अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवाऽऽबभासे॥'

इत्यादावलंकारव्यवहारानापत्तिः। आपणे विक्रीयमाणतादशायां ताटङ्कादेर्नायिकाकर्णाद्यनुपस्कारकत्वेऽप्यलंकारव्यवहारवदुपपत्तेः। कदाऽप्यलंकारभावमप्राप्य मञ्जूषादिगतकटकादिवदलंकुर्वाणगतधर्ममात्रसंस्पर्शनिबन्धनत्वाच्च। एतेन यत्र सकलवाक्येन प्राधान्येन व्यङ्ग्योपमा तत्राप्यलंकारध्वनिव्यवहारो व्याख्यातः। इयं चोपमा यथेवसदृशतुल्यादिशब्दोपादाने वाच्यालंकारः। सुहृत्प्रतिपक्षादिशब्दोपादाने लक्ष्या।

**साधर्म्यस्याभेदादिति**। एकशब्दबोध्यत्वेन सर्वोपमानगतत्वादित्यर्थः। **तद्भेदादिति**। प्रत्युपमानं विश्रान्तेरित्यर्थः। यथा माला काचिदेकजातीयैः कुसुमैः काचिद्विजातीयैस्तथेयमपि सजातीयैर्विजातीयैर्वा बहुभिरुपमानैर्घटितेति द्विविधा मालोपमेत्यर्थः।

---

१ क. ग. 'धर्मे वा°। २ ट. °लशब्देन। ३ क. मन्यते। ४ क. °कस्योप°।

" अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता ।
म्म्लौ सा च विषादेन पद्मिनीव हिमाम्भसा ॥ ४१० ॥

इहाभिन्ने साधारणे धर्मे,

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥ ४११ ॥

इति भिन्ने च तस्मिन्, एकस्यैव बहूपमानोपादाने मालोपमा, यथोत्तरमुपमेयस्योपमानत्वे पूर्ववदभिन्नभिन्नधर्मत्वे

अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थिततेः ।
भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला॥४१२॥
मतिरिव मूर्तिर्मधुरा मूर्तिरिव सभा प्रभावचिता ।
तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् ॥ ४१३ ॥

इत्यादिका रशनोपमा च " न लक्षिता । एवंविधवैचित्र्यसहस्रसंभवात् । उक्तभेदानतिक्रमाच्च ।

---

तत्राऽऽद्या यथा—अनयेनेव० ।

अत्र म्लानिरेव सर्वोपमानसाधर्म्यम् ।

अन्त्या यथा—ज्योत्स्नेव० ।

अत्र ज्योत्स्नादीनां नयनानन्दहेतुत्वादयः साधारणधर्मा भिन्नाः ।

पूर्वपूर्वोपमेयस्योत्तरोत्तरमुपमानत्वे रशनोपमा । साऽपि द्विधा—साधर्म्याभेदात्तद्भेदाच्च । तत्राऽऽद्या यथा—अनवरत० ।

अत्र विमलत्वमेव सर्वासूपमासु साधारणो धर्मः ।

अन्त्या यथा—मतिरिव० ।

अत्र मूर्त्यादीनां मधुरत्वादयो धर्मा भेदवन्तः । त एते भेदाः किमिति नोक्ता इति चेत्, उक्ता एव । उक्तभेदान्तर्भावात् । तथाऽपि तेन तेन रूपेण किं नोक्ता इति चेत्, एवंविधवैचित्र्यसहस्रसंभवात्सर्वेषामाख्यातुमशक्यत्वात् ।

---

अनयेनेति । मनस्विता पाण्डित्यम् । इतरत्स्पष्टम् ।

ज्योत्स्नेवेति । पद्यं स्पष्टार्थम् ।

अनवरतेति । निरन्तरस्वर्णदानाय जललवभृते तत्संबद्धे करे तरङ्गिता पूर्वपश्चाद्भावेन श्रेणीभूय मिलिताऽर्थिततिर्यस्य । भणितिर्वचनम् । [ गीतिश्छन्दः । ]

मतिरिवेति । चिता व्याप्ता । तस्य नृपस्य सभेव तस्य जयश्रीः परेषां जेतुं शक्या नेति संबन्धः । ( उद्गीतिश्छन्दः । ) वैचित्र्यसहस्रेति । बिम्बप्रतिबिम्बभावादिभेदेन

---

१ ख. साऽथ वि° । २ क. °भे वा त° ।

**उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।**
**अनन्वयः**

**उपमानान्तरसंबन्धाभावोऽनन्वयः ।**

---

**उपमानो०** ।

उपमानान्तरव्यवच्छेदाय यदेकस्यैवोपमानोपमेयत्वे भेदोपचारेणैव[1] निबध्येते सोऽनन्वयः । तदेतदुक्तम्—'उपमानान्तरसंबन्धाभावोऽनन्वयः' इति बहुव्रीहिसमासात् । यद्वा संज्ञायोगनिर्वचनं तत् । अनन्वयः संबन्धाभावः । स चार्थादुपमानान्तरेण उपमेयभिन्नेनेति । एवकारो वैचित्र्यविशेषस्फोरणार्थः । एकवाक्यग इति विपर्यासोपमाव्यावर्तनाय । तत्र हि वाक्यद्वये तथाभावः ।

---

लोकसिद्धकविकल्पितादिभेदेनोपस्कार्यभेदेन निरवयवादिभेदेनान्योन्योपायत्वरूपपरम्परितत्व उपायत्वस्याऽऽनुकूल्यप्रातिकूल्यादिभेदेन तेषां परस्परं गुणन इयत्ताया वक्तुमशक्यत्वादिति भावः । **इत्युपमालंकारः** ।

**उपमानेति** । न विद्यतेऽन्वयः संबन्धोऽर्थादुपमानान्तरेण यत्र सोऽनन्वय इत्यन्वर्थमलंकारनामेदम् । तत्रान्वर्थसंज्ञाबललब्धमर्थमाह—**उपमानान्तरेति** । **भेदोपचारेणेति** । भेदेऽसत्यपि तद्घटितसादृश्योपचारेणेत्यर्थः । आपाततः शाब्दबोधोपपत्तय उपमानान्तरव्यवच्छेदबोधाय चाऽऽहार्यस्तदुपचारः । एतेन देशकालादिभेदाद्भेदोऽत्रेति परास्तम् । तथा सत्युपमाया एवाऽऽपत्तेः । गगनं गगनाकारमित्यादौ तद्युगे तद्देशे वा यथा गगनं तथैतद्युग एतद्देशेऽपीति बोधात् । अनन्वये तु निरुपमानत्वनिमित्तोत्कर्षाय स्वयमेव स्वसमानधर्मेत्युक्त्या परो नैतत्समानधर्मेति प्रतीयते । **बहुव्रीहीति** । उपमानान्तरसंबन्धाभावपदं बहुव्रीहिणाऽनन्वयमाहेत्यर्थः । **यद्वा संज्ञेति** । संज्ञाभूतस्यापि योगकथनमित्यर्थः । तथा च योगरूढोऽयमिति भावः । **उपमानान्तरेणेति** । नन्विदमयुक्तम् । कस्याप्युपमानस्याभावेऽनान्तरशब्दप्रयोगासंगतेरत आह—**उपमेयभिन्नेनेतीति** । एकस्येत्युपमाव्यवच्छेदाय । **एवकार इति** । एकस्यैवेति भिन्नशब्दबोध्यत्वव्यवच्छेदकैवकार इत्यर्थः । **वैचित्र्येति** । यद्यप्यस्या वदनमिव वक्त्रमित्यत्रानन्वय एव तथाऽपि स दुष्ट इति वैचित्र्यस्फोरणायेत्यर्थः । एकवाक्यगे इत्यस्यैकौपम्यबोधकशब्दप्रतिपाद्येत्यर्थः । तत्फलमाह—**विपर्यासेति** । उपमेयोपमेत्यर्थः । वस्तुतस्तु तत्र द्वितीयसदृशव्यवच्छेदफलकत्वाभावेन योगलब्धार्थेनैव वारणसंभवान्नेदमस्य व्यावर्त्यम् । किं तु तादृशस्थल एव तस्य फलस्य संभवात्स्वरूपकथनमिति ध्येयम् ।

---

[1] क. °रेणोपनि° ।

उदाहरणम्—

न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव ।
यावद्विलासायुधला[1]सवासास्ते तद्विलासा इव तद्विलासाः ॥ ४१४ ॥

**विपर्यास उपमेयोपमा तयोः ॥ ९१ ॥**

तयोरुपमानोपमेययोः, परिवृत्तिरर्थात् वाक्यद्वये, इतरोपमानव्य-

---

उदाहरणम्—न केवलं० ।

अत्र दशाविशेषादिभेदाद्भेदोपचारः ।

**विपर्यास०** ।

तयोरुपमानोपमेययोर्विपर्यास उपमेयोपमानभावः । अर्थाद्वाक्यद्वये । एकवाक्ये तथाऽ-

---

**न केवलमिति** । नितान्तकान्तिः । अतिशयितकान्तिः । यावन्तो विलासा आयुधानि यस्य स कामस्तस्य लास्यवासा नृत्यस्थानानि । (एवकारो भिन्नक्रमो नितम्बिनीशब्देन संबध्यते । यावत् 'अपि तु' इत्यर्थ इत्युदाहरणचन्द्रिका । उपजातिश्छन्दः । ) अत्र साधर्म्यमात्रमिवार्थः । न तु भेदांशो बाधात् । रूपके चन्द्राद्यभेदबुद्धिः फलम् । तत्कृत एव चमत्कारः । अत्र तु परस्मिन्स्वसाधर्म्याभावकृतः । न तु स्वाभेदबुद्धिकृतः । तस्याः सिद्धत्वादिति ततो भेदः । एतदग्रेऽत्र दशाविशेषादिभेदाद्भेदोपचार इति क्वचित्पठ्यते सोऽपपाठः । तथा सत्युपमाया एवाऽऽपत्तेः । देशकालभेदेनाप्ययमेव तत्तुल्य इति प्रतीतिस्तत्राप्यनन्वय एवेत्याशय इत्यन्ये । ननु—

' भुवनत्रितयेऽपि मानवैः परिपूर्णे विबुधैश्च दानवैः ।
न भविष्यति नास्ति नाभवन्नृप यस्ते भजते तुलापदम् ॥ '

इत्यादौ सर्वथैवोपमाननिषेधात्मकोऽसमालंकारः प्राचीनैरुक्तः । उपमानलुप्तोपमाऽतिव्याप्तिवारणाय सर्वथैवेति । एवं च तद्ध्वनिनैव चमत्कारोपपत्तावनन्वयस्य पृथगलंकारत्वं किमर्थम् । यदि तु रत्यनुकूलतया कुतश्चिदङ्गाद्भूषणापसारणं यथा चमत्काराय, तथा प्रकृत उपमालंकाराभाववर्णनमेव चमत्काराय न तु तत्रासमनामा पृथगलंकार इत्युच्यते तर्हि तद्ध्वनिनैवोपपत्तिरिति चेन्न । पर्यायोक्तसादृश्यमूलाप्रस्तुतप्रशंसादौ ध्वन्यमानार्थसत्त्वेऽपि वाच्यार्थकृतचमत्कारमादायालंकारत्ववदुपपत्तेः । अन्यथा दीपकादावप्युपमाभिव्यक्त्यैव चमत्कारोपपत्तौ तेषामपि पृथगलंकारत्वं न स्यादित्याहुः । केचित्तु सर्वेभ्य उत्कृष्टगुणस्त्वमिति प्रतीतेर्व्यतिरेकालंकारध्वनिरेवात्रेति वदन्ति । तच्चिन्त्यम् । **इत्यनन्वयः** ।

**विपर्यास इति** । **तयोः** । काव्यनिबद्धोपमानोपमेययोरित्यर्थः । **विपर्यास इति** ।

---

[1] क. °लास्यवा° ।

वच्छेदपरा उपमेयेनोपमा इति उपमेयोपमा ।

उदाहरणम्—

कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः ।
धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत यस्य ॥ ४१५ ॥

संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ।

समेनोपमानेन ।

---

संभवात् । मुखमिव चन्द्र इत्यस्य निन्दाभिव्यक्तौ प्रतीपरूपत्वात् । उपमेयोपमेति यौगिकी संज्ञा । विपर्यासश्चायमुपमानान्तरव्यवच्छेदार्थः ।

उदाहरणम्—कमलेव० ।

संभावन० ।

समेनेत्यत्र सहैकरूपतयेति शेषः । तेन प्रकृतस्य संभविनोऽर्थस्य समेनासंभविना

---

स च वाक्यद्वय एव संभवति । तत्र वाक्यद्वयं शाब्दमार्थं वा । तेन ' रामरावणौ मिथस्तुल्यौ ' इत्यादौ नाव्याप्तिः । तत्रापि रामो रावणतुल्यो रावणो रामतुल्य इति वाक्यार्थभेदप्रतीतेः । **यौगिकीति** । उपमयेनोपमा यत्रेति यौगिकीत्यर्थः । एकस्य साधारणधर्मत्व इयमिति बोध्यम् । तदाह-**विपर्यासश्चायमुपमानान्तरव्यवच्छेदार्थ इति** । एकेन हि धर्मेण तत्साम्य एकत्र वर्णिते तेन धर्मेणापरस्य साम्यमर्थप्राप्तं पुनः शब्देनोच्यमानं तृतीयसदृशव्यवच्छेदफलकमिति भावः । अत एवात्रोपमा न । साधारणधर्मसंबन्धकृतचमत्काराभावात् ।

**कमलेवेति** । ( कमला लक्ष्मीः । विभा कान्तिः । धृतिर्धैर्यम् । बत हर्षे । गीतिश्छन्दः । ) अत्रातिस्पृहणीयत्वप्रचितत्वविस्तृतत्वानि त्रिषु साधारणधर्माः । **इत्युपमेयोपमा** ।

वाच्यसाधर्म्यालंकारं निरूप्य व्यङ्ग्यसाधर्म्येषु निरूपणीयेषु प्रथमं प्राधान्यादुत्प्रेक्षामाह—**संभावनमिति** । उत्कटकोटिकः संदेहः । अथ । वाच्यसाधर्म्यालंकारनिरूपणोत्तरम् । उत्प्रेक्षा निरूप्यत इति शेषः । **समेन** । प्रकृतमात्मनः समं करोतीति सममुपमानम् । उत्कटा प्रकृष्टस्योपमानस्येक्षा ज्ञानमुत्प्रेक्षा । एवं चोत्कटोपमानकोटिकप्रकृतविषयकसंभावनमुत्प्रेक्षेत्यर्थः । **समेनासंभविनेति** । अलोकसिद्धेन कविकल्पितेनेत्यर्थः । तदुक्तं चक्रवर्तिना—

---

१ क. °इय तव ।

सहैकरूपतया यत्संभावनं तदुत्प्रेक्षालंकार इत्यर्थः । सा चेयं हेत्वादिसंभावनाभेदाद्बहुप्रकारा ।

---

'यदाऽयमुपमानांशो लोकतः सिद्धिमृच्छति ।
तदोपमैव येनेवशब्दः साधर्म्यवाचकः ॥
यदा पुनरयं लोकादसिद्धः कविकल्पितः ।
तदोत्प्रेक्षैव येनेवशब्दः संभावनापरः ॥' इति ।

इदं चेवशब्दसमभिव्याहार एव । अन्यत्र संभविनाऽपि । तेन मुखं चन्द्रं मन्य इत्यादेः संग्रहः । चन्द्र इव मुखमित्यादौ तूपमैव । **एकरूपतयेति** । तादात्म्येनेत्यर्थः । एवं चासदृशयोः संभावनं नोत्प्रेक्षालंकारः । सादृश्यातिरिक्तमूलकस्मरणादिवत् । किं तु वस्तुमात्रम् । तेन

'वदनकमलेम बाले स्मितसुषमालेशमावहसि यदा ।
जगदिह तदैव जाने दशार्धबाणेन विजितमिति ॥'

इत्यादौ नोत्प्रेक्षा । अत्र स्मितस्य संभावनोत्थापकत्वेऽपि जगद्विजितरूपविषयविषयिसाधारणत्वाभावात् । संभावना च रमणीयधर्मनिमित्तिका ग्राह्या । तेन 'नूनं स्थाणुनाऽनेन भाव्यम्' इत्यादौ निश्चलत्वादिसाधारणधर्मनिमित्तकसंभावनायां नातिव्याप्तिः । रूपकवित्तावतिव्याप्तिवारणाय संभावनमिति । प्रकृतस्येत्यस्य च प्रकृततावच्छेदकरूपेण ज्ञातस्येत्यर्थः । तेन यत्राऽऽहार्यसभावनं तत्रैवोत्प्रेक्षा । तेन

'रामं स्निग्धतरश्यामं विलोक्य वनमण्डले ।
प्रायो धाराधरोऽयं स्यादिति नृत्यन्ति केकिनः ॥'

इत्यत्रानाहार्यसंभावनायां नातिव्याप्तिः । अत्र तेषां नृत्यप्रवृत्त्या संभावनाया अनाहार्यत्वम् । आहार्यत्वेऽपि तत्कोटिसहचरितभूयोधर्मवद्विशेष्यकत्वस्योत्कटकोटिकत्वस्य संभवात् । इव नूनं मन्ये जानेऽवैमि ऊहे तर्कयामि शङ्के उत्प्रेक्षे इत्यादिभिः प्रतिपादकैः सहिता यत्रोत्पेक्षासामग्री तत्र वाच्या सा । यत्र प्रतिपादकशब्दरहितं तत्सामग्रीमात्रं तत्र व्यङ्ग्या । यथा वक्ष्यमाणेष्वेवादिपदादाने । यत्र तत्सामग्रीरहितं प्रतिपादकमात्रं तत्र संभावनामात्रमेव नोत्प्रेक्षेति बोध्यम् । **हेत्वादीति** । आदिना फलस्वरूपे । **बहुप्रकारेति** । जातिगुणक्रियाद्रव्याणामभावस्य च संभावितत्वेन स्वरूपोत्प्रेक्षा पञ्चधा । एवं हेतुफलयोरपि जात्यादिरूपत्वेन तयोरपि प्रत्येकं पञ्चविधत्वम् । एवमुत्प्रेक्षानिमित्तस्य धर्मस्योपादानानुपादानाभ्यां बहुभेदेत्यर्थः । परं त्वीदृग्वैचित्र्यसहस्रं न चमत्कारातिशयायेति न ग्रन्थकृतोक्तम् ।

---

१ क. स्मरणवत् ।

**उदाहरणम्—**

**उन्मेषं यो मम न सहते जातिवैरी निशाया-**
**मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः ।**
**नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-**
**लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः ॥ ४१६ ॥**
**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।**
**असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ ४१७ ॥**

**इत्यादौ व्यापनादि लेपनादिरूपतया संभावितम् ।**

---

तत्र हेतूत्प्रेक्षा यथा—**उन्मेषं०** ।

अत्र पद्मलक्ष्म्याः कामिनीचरणयोः स्वभावलग्नत्वं यथोक्तहर्षहेतुकलग्नत्वतादात्म्येन संभावितम् ।

स्वरूपसंभावना यथा—**लिम्पतीव०** ।

अत्र गम्यमानं तमसो व्यापनादि लेपनादिरूपतया संभावितमिति स्वरूपोत्प्रेक्षेयम् । अत एव 'तमसो लेपनकर्तृत्वमत्रोत्प्रेक्ष्यम्' इत्यलंकारसर्वस्वकारमतमपास्तम् ।

---

**उन्मेषमिति** । ( नायकस्य नायिकां प्रति चाटूक्तिरियम् । ) विकासमित्यर्थः । ( य इन्दुः । मम पद्मस्य । ) जातिवैरी सहजशत्रुः । ( तस्य । इन्दोः । मन्दाक्रान्ता छन्दः । ) **स्वभावलग्नत्वम्** । तत्त्वेनाध्यवसितः स्वाभाविकः शोभासंबन्ध इत्यर्थः । **संभावितमिति** । अतिमनोहरत्वेन निमित्तेनेति भावः । अत्र लग्नापदेन लक्षणया पृथगुपस्थिते स्वाभाविकशोभासंबन्धे यथोक्तहर्षहेतुकपद्मलक्ष्मीलग्नत्वतादात्म्यसंभावना । तात्पर्यानुपपत्त्यैव च लक्षणा । लक्ष्यगतातिशयप्रतीतिश्च प्रयोजनम् । एतावतैवोत्प्रेक्षायां साध्यवसानत्वव्यवहारः प्राचामिति बोध्यम् । न च हेतुफलयोरपि स्वरूपतया स्वरूपोत्प्रेक्षैव सर्वत्र वक्तुमुचितेति वाच्यम् । हेतुत्वफलत्वाभ्यां निर्दिष्टेतरस्य स्वरूपशब्दार्थत्वात् । किंचिद्वैचिव्यस्यानुभवसिद्धत्वात् ।

**लिम्पतीवेति** । ( मृच्छकटिके प्रथमाङ्के गाढान्धकारवर्णनमेतत् । ) भ्रमातिशयकारकत्वसकलवस्तुमलिनीकरणत्वादि निमित्तम् । अत्रापि व्यापनाद्युपस्थितिः प्राग्वदेव । **व्यापनादीति** । आदिपदेन कविकल्पितं नभःकर्तृकाञ्जनकर्मकाधःप्रसरणं गृह्यते । तमःकर्तृकाङ्गकर्मकव्यापनं तु स्वतः संभव्येवेति बोध्यम् । अत्रोत्प्रेक्षैव । तिङन्तसमभिव्याहृतेवशब्दस्य संभावनाबोधकत्वात् । स्पष्टं चेदं सन्सूत्रे भाष्ये । **अपास्तमिति** । क्रियोपसर्जनस्य कर्तुरन्यत्रान्वयायोगात् । तदुक्तं दण्डिना—

---

१ क. जातु वै° । २ क. °नि त्रिरती° । ३ क. °ष्टिर्निष्ठुरतां । ग. °ष्टिर्निष्फलतां । ४ ख. °वनं य° । ५ क. °मप्युत्प्रे° ।

**ससंदेहस्तु भेदोक्तौ तदनुक्तौ च संशयः ॥ ९२ ॥**

---

विवक्षितविवेकेन लेपनमात्रस्यैवोत्प्रेक्षणात्। एवं फलाद्युत्प्रेक्षाऽप्यूहनीया।

**ससंदेह०।**

भेदो वैधर्म्यम्। संशयस्तु कविप्रतिभानिर्मित एवालंकारो न तु स्वारसिकः स्थाणुपुरुषादिविषयोऽपि। वैचित्र्याभावात्। अत्र संशयः ससंदेह इति लक्षणम्। भेदोक्तौ तदनुक्तौ चेति विभागः।

---

'कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे।
स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुम्'॥ इति।

देवदत्त इव यज्ञदत्तः पचतीत्यादौ पदान्तरोपस्थाप्यकर्तृविशेषणस्य तूपमेयत्वं भवत्येवेति बोध्यम्। प्रथमान्तविशेष्यकबोधवादिमतेऽप्याह—**विवक्षितेति**। तन्मतेऽपि प्राप्ताप्राप्तविवेकेन क्रियास्वरूपोत्प्रेक्षेति व्यवहार इति भावः। उत्तरार्धे तूपमैव। उत्प्रेक्षासाधकाभावात्। एवं च नामसमभिव्याहृतेवशब्देन तत्रैवोत्प्रेक्षा यत्र संभावनोपयुक्तविशेषणदानम्। यथा

'बालेन्दुवक्राण्यविकाशभावाद्बभुः पलाशान्यतिलोहितानि।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम्॥'

इत्यादौ। यत्र क्वचित्स्थितैरपि नखक्षतैर्वक्रत्वलौहित्यादिनोपमाया वक्तुं शक्यतया वसन्तनायकसंगतवनस्थलीसंबन्धित्वरूपविशेषणकल्पनमुत्प्रेक्षागमकम्। उपमायां तस्यानुपयोगात्। **इत्युत्प्रेक्षा।**

**ससंदेह इति।** 'अत्र प्रकृतस्य समेन यत्' इत्यनुवर्तते। प्रकृतस्य समेन सादृश्यज्ञानप्रयोज्यो यः संशयः संशयज्ञानं स ससंदेहनामाऽलंकार इत्यर्थः। संदेहेन सह विषयतया तद्विशिष्ट इति ससंदेहः। अत एव

'इतो गता सा क्व गता न जाने गेहं गता मे हृदयं गता वा'

इत्यत्र न ससंदेहालंकारः। सादृश्यमूलकत्वाभावात्। अस्य प्रेममात्रोत्कर्षकत्वेऽपि वर्णनीयोत्कर्षकत्वाभावाच्च। असद्विषयेऽपि कस्यचित्प्रेमसंभवात्। संशयश्च समकोटिको ग्राह्य इत्युत्प्रेक्षाव्युदासः। स्थाणुर्वा पुरुषो वेति संशयवारणायाऽऽह—**संशयस्त्विति**। सादृश्यमूलकत्वाद्यभावे तु संशयमात्रमेव नालंकार इति बोध्यम्।

---

१ क. संदेह।

भेदोक्तौ यथा—

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याऽऽजौ त्वां विदधति विकल्पान्प्रतिभटाः॥४१८॥

भेदोक्तावित्यनेन न केवलमयं निश्चयगर्भो, यावन्निश्चयान्तोऽपि संदेहः स्वीकृतः । यथा—

इन्दुः किं क कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम् ।
ललितसविलासवचनैर्मुखमिति हरिणाक्षि निश्चितं परतः ॥४१९॥

---

तत्र भेदोक्तौ यथा—अयं० ।

अत्र मार्तण्डत्वादीनां संदेहे सप्ततुरगत्वादीनि वैधर्म्याणि तदाश्रयपूक्तानि । न चायं व्यतिरेकालंकारः । तस्य संदेहानुप्रायितया तेनैव व्यपदेशौचित्यात् । ननु भट्टोद्भटेन भेदोक्तौ निश्चयगर्भ एवाय स्वीकृतो न तु निश्चयान्तोऽपि । तत्किमस्यापि स एव पन्थाः । नेत्युच्यते । कुत एतत् । भेदोक्ताविति विभजनात् । निश्चयान्तस्यापि तत्संभवात् । वैचित्र्यानुभवाच्च ।

यथा—इन्दुः० ।

---

अयमिति । (राजानं प्रति कस्यचिदुक्तिः ।) इतः । युक्तः । विकल्पान् । संशयान् । आजौ । युद्धे । ( ' चिरम् ' इत्यस्य समालोक्येत्यत्र विदधतीत्यत्र वाऽन्वयः । शिखरिणी छन्दः । ) अयं किं मार्तण्डस्तदन्यो वेत संशयाकारः । अत्र प्रतापेन दुर्निरीक्ष्यत्वसाम्यान्मार्तण्डत्वसंदेहः । दुराधर्षत्वसाम्यात्कृशानुत्वसंदेहः । क्षणेन सकलसंहर्तृत्वसाम्यात्कृतान्तत्वसंदेहः । उक्तानीति । मार्तण्डादिवैधर्म्येण मार्तण्डत्वाद्यभावनिश्चयेऽपि कृशानुत्वादिसंशयादस्य निश्चयगर्भता । वैधर्म्योक्तिस्तु सति मार्तण्डत्वसंशये कृशानुत्वसंशयायोगात्तत्संशयनिवृत्तये कृता । निश्चयगर्भश्चोपमाननिष्ठवैधर्म्योक्त्या । आदावन्ते च संशयो मध्ये निश्चयः स निश्चयगर्भ इति तल्लक्षणात् । निश्चयान्तोऽपीति । उपमेयनिष्ठवैधर्म्योक्त्येति भावः । यथेन्दुः किमित्यादौ ललितवचनैर्मुखत्वनिश्चयेऽग्रे केनापि रूपेण संशयाभावात् । अस्यालंकारत्वबीजमाह—वैचित्र्येति ।

इन्दुरिति । नायिकां प्रति कस्यचिदुक्तिः । हे हरिणाक्षि एतत् ( मुखम् ) इन्दुः किम् । तर्हि कलङ्कः क । सरसिजं किम् । तर्हि अम्बु कुत्र गतम् । इति प्रथमं संदिग्धम् ।

---

१ क. 'नियर्कान्प्र°' । २ क. तत्र सं° ।

किंतु निश्चयगर्भ इव नात्र निश्चयः प्रतीयमान इत्युपेक्षितो भट्टोद्भटेन । तदनुक्तौ यथा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ ४२० ॥

---

तत्किं भट्टोद्भटेनायमुपेक्षितः । प्रतीयमानवद्वाच्ये तादृग्वैचित्र्याभावादिति गृहाण । भेदानुक्तौ यथा—अस्याः० ।

---

परतः पश्चाल्ललितसविलासवचनैर्मुखमिति निश्चितम् । ( गीतिश्छन्दः । ) प्रतीयमानवदिति । आपाततः संशये व्यङ्ग्यनिश्चयकृतो ह्यत्र चमत्कारः । निश्चयस्य वाच्यत्वे तु न स इति भावः । अत्र निश्चयगर्भतया संकीर्णो निश्चयान्तः । शुद्धस्तु

'बाला जलदाच्च्युता लता वा तरुमुख्यादिति संशये निमग्नः ।
गुरुनिश्वसितः कपिर्मनीषी निरणैषीदथ तां वियोगिनीति ॥'

इत्यादौ । अत्र मञ्जूषादिगतकटकादाविवालंकारव्यपदेशः । किंशब्दनुशब्दादेश्च समकोटिकसंशयविषयत्वं शक्तिः । अयं किं मार्तण्ड इत्यादेरयं मार्तण्डत्वादिसंशयविषय इत्यादिरर्थः । स्वसंशयज्ञापनाय च परं प्रति तथोक्तिः ।

अस्या इति । ( विक्रमोर्वशीये प्रथमेऽङ्के उर्वशीमुद्दिश्य पुरूरवस उक्तिः । ) अस्याः स्रष्टौ यः प्रजापतिर्निर्माताऽभूत्स किं चन्द्रः किं वा मदनः किं वा पुष्पाकरो मासो वसन्त इति प्रजापतिधर्मिकश्चन्द्रत्वादिरूपविरुद्धनानाभावकोटिकः संशयः । [ विषयेभ्यो वनितादिभ्यो व्यावृत्तं निवृत्तं कौतूहलमौत्सुक्यं यस्य तादृशः । पुराणो मुनिर्ब्रह्मा । शार्दूलविक्रीडितं छन्दः । ] एतन्निर्मातरि कान्तिप्रदत्वसत्त्वेन चन्द्रस्य च तत्त्वेन कान्तिप्रदत्वं तयोः सादृश्यम् । अस्याः शृङ्गारोद्दीपकरूपलावण्यादिमत्त्वेनाधरदशनादिरूपपुष्पवत्त्वेन तन्निर्मातरि तादृशलावण्यादिसंपद्वत्तायाः पुष्पवत्तायाश्च सत्त्वेन मदनवसन्तयोरपि तत्सत्त्वात्तद्रूपसादृश्यमूलकोऽयं संशयः । तत्सामग्रीसंपन्नेनैव तद्धर्मवतो निर्माणसंभवात् । केचित्तु 'अस्याः सर्गविधौ' इत्यत्र वितर्कालंकारः । वितर्कश्च संशयोत्तरमनिर्णय ऊहः । तद्व्यञ्जकश्च नुशब्दादिः । स चेत्थं चन्द्रान्यो यदि निर्माता स्यात्कान्तिप्रदो न स्यादित्याद्याकारः । अत एव ब्रह्मा यदि निर्माता स्यान्निर्माणसामग्रीमान्स्यादिति संशयोत्तरवर्तितर्कस्याऽऽपाद्यं वेदाभ्यासजड इत्यादिना निषिध्यत इति । तन्न । वितर्ककारणत्वेन त्वयाऽप्यत्र संशयाङ्गीकारेण तस्यै-

---

१ क °स्याः सृष्टिवि° ।

**तद्रूपकमभेदो य उपमानोपमेययोः ।**
**अतिसाम्यादनपह्नुतभेदयोरभेदः ।**

---

अत्र शङ्क्यमानस्य प्रजापत्यादेः कस्यापि न वैधर्म्यमुक्तम् ।

**तद्रूपक०।**

अभेदोऽभेदारोपः । बीजं तु तत्रातिसाम्यम् । अभेदश्चात्रानपह्नुतभेदयोर्विवक्षित इति

---

वालंकारत्वात् । सतोऽपि वितर्कस्य वर्णनीयोत्कर्षानाधायकत्वेनालंकारत्वाभावाच्च । संदेहेनैव तस्या उत्कर्षसिद्धेः । वेदाभ्यासजड इत्याद्युक्तिस्तु जगन्निर्मातरि ब्रह्मणि सति कथमेतेषु तस्या निर्मातृत्वसंदेह इत्याशङ्कापनयनार्थमेवेति बोध्यम् । यत्तु

'इह नमय शिरः कलिङ्गवद्धा समरमुखे करहाटवद्धनुर्वा'

इत्यत्र विकल्पालंकारः पृथगेव । वाशब्दश्चात्र कल्पान्तरपरः । असामर्थ्ये कलिङ्गनृपतिवच्छिरो नमय, सति सामर्थ्ये करहाटनृपातिवद्धनुर्नमयेत्यर्थात् । व्यवस्थितश्चायं विकल्प इति । तन्न । वर्णनीयोत्कर्षानाधायकत्वेनैतस्यालंकारत्वे मानाभावात् । उपकुर्वन्ति तं सन्तमित्यादिसामान्यलक्षणाभावात् । एतेन नमनरूपैकक्रियाकर्मत्वेनौपम्यं गम्यमानमलंकारताबीजमित्यपास्तम् । तादृशौपम्यस्याचारुत्वाच्च । अन्ये त्वत्रापि संदेह एव, व्यङ्ग्यस्तु निश्चयो मात्सर्यमुत्सार्येतिवदित्याहुः । **इति ससंदेहः ।**

**तद्रूपकमिति** । योऽभेदस्तद्रूपकमित्यन्वयः । तदिति विधेयलिङ्गग्राहि । **अभेदारोप इति** । आरोपविषयाभेद इत्यर्थः । यथाश्रुते ह्युपमात्वमपि सादृश्यप्रतीतेः स्यात् । ज्ञानानामेव तेषां लौकिकालंकारवच्चमत्कारजनकत्वमित्यन्यत् । उपमानोपमेययोरित्यस्योपमानतावच्छेदकोपमेयतावच्छेदकपुरस्कारेण शब्दान्निश्चीयमानयोरित्यर्थः । तेनाभेदप्रतीतेराहार्यत्वलाभः । तेन भ्रान्तिमति नातिव्याप्तिः । अपह्नुतावतिशयोक्तौ च नातिव्याप्तिः । अपह्नुतौ स्वेच्छया निषिध्यमानत्वेन भ्रान्तिमति तज्जनकदोषेणैव प्रतिबन्धात् । अतिशयोक्तेः साध्यवसानलक्षणामूलकत्वात्तस्य पुरस्काराभावात् । अतिशयोक्तिवन्निदर्शनायामपि नातिव्याप्तिः । शब्दादिति विशेषणात्, 'मुखमिदं चन्द्रः' इति प्रात्यक्षिकाहार्यनिश्चयगोचरतादात्म्यव्यवच्छेदः । निश्चीयमानयोरित्युक्त्या 'नूनं मुखं चन्द्रः' इत्युत्प्रेक्षायां नातिव्याप्तिः । तत्र ज्ञानमलंकारः, अत्राभेद इति भेदाच्च । उपमानोपमेययोरित्येतद्विशेषणलभ्यमर्थमाह—**बीजं तु तत्रातिसाम्यमिति** । तेन 'सुखं मनोरमा रामा' इत्यादिशुद्धारोपविषयकभेदनिरासः । यत्तु सादृश्यप्रयुक्ताभेदस्येव संबन्धान्तरप्रयुक्ताभेदस्यापि रूपकत्वमिति । तन्न । सादृश्यामूलकस्मरणस्याप्यलंकारतापत्तेः । चन्द्रादिपदानां तद्वृत्तिगुणवति सारोपलक्षणायामभेदप्रतीतिर्व्यङ्ग्येत्येतावतैव रूपकं वाच्यम् । चशब्दादिव्यङ्ग्यत्वे समुच्चय इव । 'मुखमपरचन्द्रः' इत्यादौ तु कविकल्पितापरचन्द्रेण रूपकं बोध्यम् । 'मुखचन्द्रेण विरहतापः शाम्यति' इत्यादावपि रूपकमेव । न चैवं चन्द्राभेदप्रतीतौ विरह-

समस्तवस्तुविषयं श्रौता आरोपिता यदा ॥ ९३ ॥

आरोपविषया इवाऽऽरोप्यमाणा यदा शब्दोपात्ताः, तदा समस्तानि वस्तूनि विषयोऽस्येति समस्तवस्तुविषयम् । आरोपिता इति बहुवचनमविवक्षितम् ।

यथा—

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥ ४२१ ॥

---

नापह्नुतावतिव्याप्तिः । तदेतद्द्विविधम्—सावयवं निरवयवं च । तत्राऽऽद्यं समस्तवस्तुविषयमेकदेशविवर्ति च । द्वितीयं तु शुद्धमात्रमिति । आद्ये विभागे लक्षणमाह—**समस्त०** ।

आरोपिता आरोप्यमाणाः । ते सर्वेऽपि यथारोपविषयवच्छाब्दा एव भवन्ति तदा समस्तवस्तुविषयं नाम रूपकम् । समस्तं वस्तु आरोप्यमाणं विषयः शब्दप्रतिपाद्योऽत्रेति व्युत्पत्तेः । आरोपिता इति बहुवचनमविवक्षितमित्यारोप्यद्वयस्थले नाव्याप्तिः ।

उदाहरणम्—**ज्योत्स्ना०** ।

---

तापशामकत्वासंभवः । अभेदप्रतीतेराहार्यत्वेन मुखत्वस्यातिरस्कारेण विशेष्यतया भानेन च तत्त्वसंभवात् ।

'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।'

इत्यादावाहार्यनारायणत्वबुद्ध्याऽऽहार्यस्यैव लक्ष्मीकर्तृकालिङ्गनस्य बोधान्न दोषः । यत्तु आरोप्यमाणो यत्र विषयात्मतयैव प्रकृतकार्योपयोगी न स्वातन्त्र्येण स परिणामः । अत्र च विषयाभेद आरोप्यमाण उपयुज्यते । रूपके तु नैवमिति विशेषः ।

'वदनेनेन्दुना तन्वी स्मरतापं विलुम्पति ।'

इत्याद्युदाहरणम् । अत्र हि स्मरतापनाशनसामर्थ्यं मुखात्मनैवेन्दोः । ग्रीष्मसंतापहारकत्वाद्रमणीयशोभाधारत्वाच्चेन्दुर्विषयतयोपात्त इति दाक्षिणात्याः । तन्न । इन्दौ वदनतादात्म्यप्रतीतेर्वर्णनीयमुखाद्यनुत्कर्षकत्वेनालंकारत्वाभावादिति दिक् ।

**आरोपविषयवदिति** । तेषां श्रौतत्वेऽविवादादृष्टान्ततेति बोध्यम् । श्रौता इत्यस्य व्याख्या शाब्दा इति । सावयवत्वं च परस्परसापेक्षरूपकसमुदायत्वम् ।

**ज्योत्स्नेति** । ( रूपकमुखेन ज्यौत्स्नीं योगिनीत्वेन वर्णयति । ज्योत्स्नैव भस्म । ) छुरणमङ्गलेपनम् । ( तारका एवास्थीनि । ) व्यसनं कौतुकम् । ( रात्रिरेव कापा-

---

१ क. आर्ये ।

अत्र पादत्रये । अन्तर्धानव्यसनरसिकत्वमारोपितधर्म एवेति रूपकपरिग्रहे साधकमस्तीति तत्संकराशङ्का न कार्या ।

**श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत् ।**

---

अत्र पादत्रये ज्योत्स्नादिषु भस्मत्वादिकमारोप्यमाणं सर्वं शाब्दम् । नन्विदं रूपकोदाहरणं न युज्यते । साधकबाधकाभावेन रूपकोपमयोः संदेहात्संदेहलक्षणसंकरोचितत्वादिति चेत् । भवेदेवं यद्यन्तर्धानव्यसनरसिकत्वं विशेषणं न स्यात् । तद्धि रूपकपरिग्रहे साधकम् । कापालिक्यां तत्संभवाद्रात्रावसंभवाच्च । उपमापरिग्रहे तु रात्रेरेव प्राधान्यात्तस्यानन्वय एव स्यात् ।

श्रौता० ।

---

लिकी योगिनी । चन्द्र एव ) मुद्राकपालं कापालिकानामञ्जनादिधारणकपालम् । ( मन्दाक्रान्ता छन्दः । ) अत्र समुदायात्मकस्य सावयवरूपकस्यावयवानां सर्वेषामपि समर्थ्यसमर्थकत्वं परस्परं तुल्यम् । तथाऽपि कवे रात्रौ कापालिकीरूपकस्यैव सामर्थ्यत्वेनाभिप्रेतत्वादितरेषां समर्थकत्वं गम्यते । रात्रिकापालिकीत्यस्य कापालिक्यभिन्ना रात्रिरस्त्यर्थः । उपमानपदस्य लक्षणायामपि व्यङ्ग्याभेदघटितवाक्यार्थस्यापि बोधात् । उपमायां तु सादृश्यघटित एव वाक्यार्थबोध इति विशेषः ।

**रूपकोपमयोरिति** । 'उपमितं व्याघ्रादिभिः' ( पा० सू० २ । १ । ५६ ) इति सूत्रेण समास उपमेयविशेष्यक एव बाधः । उपमानोपमेयसमभिव्याहार उपमेयस्य विशेष्यताया लोकव्युत्पत्तिसिद्धत्वात् । अत एवेदं सूत्रं विशेषणं विशेष्येणेति सिद्धे विशेष्यस्य पूर्वनिपातार्थमिति काशिकायामुक्तम् । मुखचन्द्र इति विशेषणसमासे चन्द्ररूपकव्यवहारः । यत्तु रूपके विशेषणं विशेष्येण ( पा०सू० २।१।५७ ) इति समास उपमेयस्य पूर्वनिपातश्चिन्त्य इति । तन्न । मयूरव्यंसकादिसमासस्य विशेषणसमासरूपदेन विवक्षणात् । एवं च संदेहः स्पष्ट एवेति भावः । एतदेव ध्वनयन्नुदाहरिष्यति—जस्सरणेति । तत्रान्तःपुरस्य विशेष्यत्वे हि मण्डलाग्रलतादीनां वाच्यानामनन्वयः स्पष्ट एव । एवं च कापालिकीव रात्रिः कापालिक्यभिन्नेति वा, ज्योत्स्ना भस्मेव ज्योत्स्नैव भस्मेति वा, अस्थ्यभिन्नास्तारका अस्थिसदृशास्तारका वेत्यादिक्रमेण रूपकोपमयोः संदेह इत्याशयः । **रात्राविति** । कापालिक्यभेदानापन्नरात्रावित्यर्थः । **रात्रेरेवेति** । कापालिक्यभेदानापन्नरात्रेरेवेत्यर्थः । **अनन्वय इति** । बाधादिति भावः । कापालिक्यभेदग्रहे तु तद्धर्मान्तरेऽन्तर्धानव्यसनरसिकत्वान्वये नानुपपत्तिरिति भावः । नन्वन्तर्धानं स्वस्य चोराणां वेत्युपमायामपि न तदन्वयानुपपत्तिरिति चेन्न । साधारणधर्मप्रयोगस्य तदा सत्त्वेनोपमितसमासानापत्त्या मयूर-

---

१ क. °त्रयम् । अ° । २ एतदुत्तरं ग. पुस्तके एवं रूपकेणैव निर्वाह इत्यधिकं दृश्यते ।

केचिदारोप्यमाणाः शब्दोपात्ताः, केचिदर्थसामर्थ्यादवसेयाः–इत्येकदेशे विवर्तनादेकदेशविवर्ति[1]। यथा—

जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअम्।
रससंमुही वि सहसा परम्मुही होइ रिउसेणा ॥ ४२२ ॥

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तम्। मण्डलाग्रलताया नायिकात्वं रिपुसेनायाश्च प्रतिनायिकात्वमर्थसामर्थ्यादवसीयत इत्येकदेशे विशेषेण वर्तनादेकदेशविवर्ति[2]।

---

ते इत्यारोपिताः। तथा च यत्र केचिदारोप्यमाणाः शब्दोपात्ताः केचिदर्थसामर्थ्यादवसेयास्तदेकदेशविवर्ति। एकदेशे विशेषेण वर्तत इति व्युत्पत्तेः।

उदाहरणम्—जस्स०।

अत्र रणेऽन्तःपुरत्वमारोप्यं शाब्दम्। मण्डलाग्रलताया नायिकात्वं रिपुसेनायाः प्रतिनायिकात्वं चाऽऽरोप्यं न शाब्दम्। किं त्वन्तःपुरत्वारोपसामर्थ्यादेवावसीयते। अन्यथा तस्यापर्यवसानात्। अत एकदेशे विशेषेण वर्तनादेकदेशविवर्ति।

---

व्यंसकादिसमासस्यैवेष्टव्यत्वेन रूपकस्यैव सिद्धिरित्याशयात्। व्यसनरसिकत्वस्य स्वरसतस्तस्यामनन्वयाच्च।

**विशेषेणेति**। रूपकसंघातस्यावयविनोऽवयवे कस्मिंश्चिद्रूपके विशेषेण शब्दमुखेन स्फुटतयेत्यर्थः।

**जस्सेति**।

'यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्।
रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥'

मण्डलाग्रः खड्ग एव लता। तदाकारत्वात्। रसो वीरः शृङ्गारश्च। सांमुख्यं युयुत्सा रतेच्छा च। पराङ्मुखता युद्धात्स्वाभिसंगमाच्च। ( आर्या छन्दः। ) **अन्तःपुरत्वारोपेति**। अन्तःपुरं तासामवौचित्यादिति भावः। तदाह—**अन्यथेति**। यद्यपि लिङ्गविशेषात्करग्रहणरससंमुखत्वादेर्नायिकाधर्मत्वेन प्रसिद्धत्वाच्छ्लिष्टत्वाच्च समासोक्तिविधयैव नायिकात्वावगतिर्वक्तुं शक्या। तथाऽप्यन्तःपुरत्वारोपोऽपि तत्र तन्त्रमित्याशयः। न च रूपकसंघातात्मकस्यास्य रूपकभेदगणनायां गणनमनुचितमिति वाच्यम्। चमत्कारविशेषजनकतया तत्समुदायात्मकस्याप्यस्य मालारूपकादिवत्तद्भेदेषु गणनात्। यथा मौक्तिकालंकृतिगणनायामेकं नासामौक्तिकमिव तत्संघातात्मिका मौक्तिकमञ्जर्यादयो गण्यन्ते तद्वत्। ननु वक्ष्यमाणे विद्वन्मानसहंस इत्यादौ राज्ञि हंसत्वारोपो यथा मनसः सरस्त्वारोपमपेक्षते तथाऽत्रापि नायिकाप्रतिनायिकात्वारोपाभ्यां रणेऽन्तःपुरत्वारोपोऽपेक्ष्यत इति परस्परितत्वमस्य

---

१ क. ग. °देशे वि°। २ ग. °देशविवर्त°।

साङ्गमेतत्

उक्तद्विभेदं सावयवम् ।

निरङ्गं तु शुद्धम्

यथा—

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥ ४२३ ॥

माला तु पूर्ववत् ॥ ९४ ॥

---

साङ्ग० ।

साङ्गं सावयवम् । एतत् । उक्तप्रकारद्वयवदित्यर्थः । साङ्गत्वमनेकरूपकसमुदायः । एकस्मिन्रूपके द्वितीयस्याङ्गत्वेनावस्थानात् । अङ्गशब्दस्य हेत्वर्थत्वात् ।

निरङ्गं० ।

निरङ्गमद्वितीयम् । तच्छुद्धमेवेत्यर्थः ।

यथा—कुरङ्गीवा० ।

अत्र प्रेममात्रे लतिकात्वारोपः ।

अथासाङ्गस्यैव वैचित्र्यान्तरमाह—माला० ।

---

स्यादिति चेन्न । रणेऽन्तःपुरत्वस्य सुखसंचारास्पदत्वादिनेव मण्डलाग्रलतादेर्नायिकात्वाद्यारोपस्य लिङ्गविशेषकरग्रहादिनाऽपि संभवेनास्य परम्परितत्वाभावात् । राज्ञि हंसत्वारोपस्तु मनसि सरस्त्वारोपं विना न भवत्येव । सरोवराधेयत्वं विना राज्ञि हंससाधर्म्यान्तराभावात् । एवं 'ज्योत्स्नाभस्म' इत्यादावपि बोध्यम् । अत एव 'नियतारोपणोपायः' इति वक्ष्यति ।

एतदित्यस्यान्यवहितपूर्वमात्रपरामर्शकत्वं वारयति—**प्रकारद्वयवदितीति । अद्वितीयमिति** । अङ्गाङ्गिभावहीनमित्यर्थः । केवलस्यैव रूपणादित्याशयः । सावयवत्वं त्वनेकविषयं परस्परसापेक्षं चेति बोध्यम् ।

**कुरङ्गीति** । ( किशोर्या वृत्तान्तं धात्री निवेदयति । ) स्तिमितयति, निष्क्रियाणि करोति । प्रश्नयति, प्रश्नवन्तं प्रश्नविषयं करोतीत्यर्थः । अन्तः स्वपिति, नयनामुद्रणेऽपि विषयं न गृह्णाति । अभिनवाम् । तस्या एव सेकौचित्यात् । ( शिखरिणी छन्दः ) **अत्र प्रेममात्र इति** । न तु तदुपपादकत्वेन क्वचिदप्यन्यारोप इत्यर्थः ।

**वैचित्र्यान्तरम्** । एकविषयत्वं परस्परमङ्गाङ्गिभावानापन्नत्वरूपम् । एवं च साङ्गस्येत्यस्यानेकरूपकसमुदायस्येत्येवार्थः । क्वचित्तु निरङ्गस्यैवेति पाठः । एकविषयनानापदार्थारोपरू-

---

१ अथ साङ्ग० । अथ निरङ्ग० ।

मालोपमायामिवैकस्मिन्बहव आरोपिताः ।

यथा—

सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः ।
विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया
बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥ ४२४ ॥

नियतारोपणोपायः स्यादारोपः परस्य यः ।
तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥ ९५ ॥

---

यथैकत्र बहूपमानयोगे मालोपमा तथैकत्रानेकधर्मारोपे मालारूपकमित्यर्थः ।

यथा—सौन्दर्यस्य० ।

नियता० ।

नियतस्य मुख्यस्याऽऽरोपो वस्त्वन्तरतादात्म्यप्रतीतिस्तस्योपायः कारणं यः परस्यामुख्यस्याऽऽरोपस्तत्परम्परितम् । रूपणानां कार्यकारणभावरूपा परम्परा संजाताऽत्रेति योगादिति केचित् । वस्तुतस्तु नियतमारोपणमुपायो यत्र । आरोपणं विना यदारोपणं न संभवत्येवेति

---

पत्वान्मालात्वं परस्परसापेक्षत्वविरहाच्च निरङ्गत्वमिति तदर्थः । अयमेव युक्तः पाठः । पूर्ववदिति व्याचष्टे—यथेति । एकत्रेति । उपमेय इत्यर्थः । एकस्योपमानस्य नानोपमेयकृतस्तु न कश्चिच्चमत्कार इति न तत्पृथग्गण्यते ।

सौन्दर्यस्येति । कश्चिद्विरही प्रेयसीं परामृशति । तरङ्गिणीति । तरङ्गत्वेनोत्तरोत्तराविच्छेदः । योग्यस्थानप्राप्त्या हर्षः । कार्मणकर्म वशीकरणक्रिया । तत्क्रियाविशिष्टो हि जगद्वशी करोति । कान्तिरप्येतद्विशिष्टा तथेति जगद्वशीकारकत्वं साधारणधर्म इति भावः । नर्मरहसां रहस्यपरिहासानाम् । आवासभूर्वसतिस्थानम् । या यद्वासभूरसति बाधके सा तद्वतीति सामान्यतो व्याप्त्या गृहीततद्वत्त्वं साधारणो धर्मः । एवमग्रेऽप्यूह्यम् । वक्रगिरां साकूतवचसाम् । विद्योपदेशिका । अनवधि निःसीमं यत्प्रावीण्यं निर्माणकौशलं तस्य साक्षात्क्रिया करणव्युत्पत्त्या प्रत्यक्षहेतुः । ( शार्दूलविक्रीडितं छन्दः । ) प्रियायामेकस्यां बहूनामारोपान्मालात्वम् । यथैकत्र सूत्रे बहूनां पुष्पाणामिति दिक् ।

नियतस्य मुख्यस्येति । वर्णनीयत्वेन प्रकृतस्येत्यर्थः । वृत्तित्वं षष्ठ्यर्थः । अमुख्यस्य । अप्रकृतस्य । योऽन्यारोप इत्यर्थः । केचिदिति । अत्रारुचिबीजं तु 'आलानं जयकुञ्जरस्य' इत्यादावव्याप्तिः । प्रकृत एव जये कुञ्जरत्वारोपस्य प्रकृत एव

---

१ ग. 'स्मिन्निह बह'। २ क. 'र्भवचसां'। ३ क. ग. प्राणाः। ४ 'दात्म्येन प्र'।

यथा—

विद्वन्मानसहंस वैरिकमलासंकोचदीप्तद्युते
दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर ।
सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो
साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥ ४२५ ॥

अत्र, मानसमेव मानसम्, कमलाया: संकोच एव कमलानामसंकोचः, दुर्गाणाममार्गणमेव दुर्गाया मार्गणम्, समितां स्वीकार एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्यामप्रीतिः, विजयः परपराभव एव विजयोऽर्जुनः,—एवमारोपणनिमित्तो हंसादेरारोपः ।

---

यावत् । एवंभूतः परस्यान्यस्य य आरोपः स तथा । एव चैकरूपणहेतुकं रूपणान्तरं परम्परितम् । 'कार्यकारणभावरूपा परम्परा संजाताऽत्रेति व्युत्पत्तेः ।

श्लिष्ट इत्यादि । तदेतद्द्विविधम्—उपायभूते रूपक आरोप्यारोपविषययोर्वाचकस्य श्लिष्टत्वाद्भिन्नरूपत्वाच्चेत्यर्थः ।

तत्राऽऽद्यं यथा—विद्व० ।

अत्र विदुषां मानसं सरोविशेष इत्यारोपहेतुकं राज्ञो हंसत्वारोपणम् । तत्र चाऽऽरोपविषयारोपणीययोर्हृदयसरोविशेषयोः श्लेषवता मानसशब्देनैवाभिधानम् । एवमग्रेऽपि । तत्र वैरिकमलायाः संकोच एव कमलानामसंकोचः । दुर्गाणाममार्गणमेव दुर्गाया मार्गणम् । समितां स्वीकार एव समिधां स्वीकारः । सत्ये प्रीतिरेव सत्यामप्रीतिः । विजयः परपराभव एव विजयोऽर्जुनः । एवमारोपहेतुकं सूर्याद्यारोपणमिति ।

---

राज्ञि आलानत्वारोपहेतुत्वात् । परस्यान्यस्येति । अप्रकृतस्य प्रकृते य आरोप इत्यर्थः । एकरूपणहेतुकमिति । यद्यपि दुर्गाणाममार्गणादौ दुर्गामार्गणादीनामारोपो न रूपकम् । किं तु श्लेषमहिम्नाऽऽरोपमात्रम् । तथाऽपि रूपणपदमारोपमात्रपरमेवेति न दोषः । इदमेव चास्योपायत्वमारोपे, यत्तन्मूलीभूतसाधारणधर्मसंपत्तिः । साधारणधर्मसंपत्ती रूपकेणैवेत्यत्र न किंचिन्मानम् । यद्वा श्लेषस्थलेऽपि शब्दरूपसाधर्म्यकृत एवाभेदाध्यवसाय इति तस्यापि रूपकत्वमेवेति न दोषः ।

विद्वदिति । ( राजानं प्रति कवेरुक्तिः । ) हंसः पक्षिभेदः । नीललोहितः शिवः । समित्सङ्ग्रामः समिधश्च । स्वीकारोऽनुपक्षणम् । वैश्वानरो वह्निः । सती पार्वती । दक्षः प्रजापतिः । प्राग्भावः प्रथमोत्पत्तिः । भीमो भीषणः पाण्डवश्च । साम्राज्यमाज्ञया राजशासकत्वम् । वैरिञ्चं ब्राह्मम् । ( शार्दूलविक्रीडितं छन्दः । ) दुर्गाणाम् । विषमभूप्रदेशानाम् । अत्र मानसादिपदं श्लिष्टम् । अत्र श्लिष्टशब्देनार्थद्वयोपस्थितौ श्लेष-

---

१ क. °चैकरूपणान्तरम् । २ क. मानसं मानसं सरो° ।

यद्यपि शब्दार्थालंकारोऽयमित्युक्तम्, वक्ष्यते च, तथाऽपि प्रसिद्ध्यनुरोधादत्रोक्तः। एकदेशविवर्ति हीदमन्यैरभिधीयते।

भेदभाजि यथा—

आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः।
सङ्ग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
राजन्राजति वीरवैरिवनितावैधव्यदस्ते भुजः॥ ४२६॥

अत्र जयादेर्भिन्नशब्दवाच्यस्य कुञ्जरत्वाद्यारोपे भुजस्याऽऽलानत्वाद्यारोपो युज्यते।

---

ननु श्लेषस्य शब्दपरिवृत्त्यसहतया शब्दालंकारत्वमित्युक्तं वक्ष्यते च। तथा च श्लेषपरम्परितमुभयालंकारो युज्यत इति तदवसर एव वक्तुमौचित्यात्किमित्यर्थालंकारमध्ये पठित इति चेत्। सत्यमेतत्। तथाऽपि श्लेषापवादकं रूपकमित्यलंकारसर्वस्वकारादिप्रसिद्ध्यनुरोधेनोक्तः। तथाप्रसिद्धौ किं बीजमिति चेत्। मानसत्वादीनामार्थत्वम्। इदं हि तैरेकदेशविवर्तीत्युच्यते।

द्वितीयं यथा— **आलानं०**।

अत्र जयादेर्भिन्नशब्दवाच्यकुञ्जरत्वाद्यारोपे सति भुज आलानत्वाद्यारोपो युज्यते।

---

महिम्ना प्रकृतसंबन्धाद प्रकृताभेदप्रत्ययः। प्रकरणेन प्रकृतसंबन्धिनो विशेष्यत्वात्। स चाभिधामूलव्यञ्जनयेति बोध्यम्। 'वाचकं' इति च बोधक इत्यर्थकम्। ततस्तमेव साधारणधर्ममाश्रित्य प्रकृते राज्ञि हंसत्वाद्यारोपरूपरूपकसिद्धिः।

**उक्तम्**। प्राचीनैः। वक्ष्यते। अस्माभिः। **उभयालंकार इति**। मानसादिपदस्य परिवृत्त्यसहत्वात्, हंसादिपदस्य च परिवृत्तिसहत्वादिति भावः। **श्लेषापवादकं रूपकमिति**। बहुव्रीहिः। उभयमप्यर्थालंकार इत्युक्तेश्चेत्यपि बोध्यम्। **तैरेकदेशेति**। यथा रणेऽन्तःपुरत्वारोपे तद्विशिष्टसंबन्धस्य मण्डलाग्रलतायां द्योग्यतया तद्बलादेव नायिकात्वारोपस्तथा राजनि हंसत्वारोपे तद्विशिष्टस्यान्तःकरणसंबन्धायोग्यत्वेन तद्बलान्मानसे सरस्त्वारोपणेकदेशविवर्तीति तैरुक्तमित्यर्थः। नव्यमते तूक्तलक्षणरीत्या नैकदेशविवर्तित्वमिति बोध्यम्।

**आलानमिति**। आलानं गजबन्धनस्तम्भः। दृषदामिति दार्ढ्यार्थम्। करवालः खड्गः। चण्डमहा रविः। लीला सुखस्वापः। उपधानं शिरोनिधानतूलपटः। सङ्ग्राम एवामृतसागरः, लोभ्यत्वात्। प्रकृष्टं मथनमेव क्रीडा, सुखनिर्वाह्यत्वात्। वीरा ये वैरिणः, तदन्येषामुपेक्षणीयत्वात्। (शार्दूलविक्रीडितं छन्दः।) **युज्यत इति**। कुञ्जराभिन्नजया-

---

१ क. °शविवर्तीदमन्यैरप्यभि°। ग. 'शवृत्ति ही°। २ क. °च्यकु°। ३ क. °नसादी°।

अलौकिकमहालोकप्रकाशितजगत्त्रयः ।
स्तूयते देव सद्वंशमुक्तारत्नं न कैर्भवान् ॥ ४२७ ॥
निरवधि च निराश्रयं च यस्य स्थितमनिवर्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान्स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥ ४२८ ॥
इति च अमालारूपकमपि परम्परितं द्रष्टव्यम् ।

---

इदमुदाहृतभेदद्वयं परम्परितमालारूपम् । अमालारूपमपि तद्द्रष्टव्यम् ।

तत्र श्लिष्टावाचके यथा—अलौकिक० ।

अत्र वंशोऽन्ववाय एव वंशो वेणुरिति ।

भेदभाजि यथा—निरवधि० ।

अत्र लोकशब्दाद्भिन्नेन वल्लिपदेनाऽऽरोप्यमाणमुक्तम् । परम्परिते चाऽऽरोप्यारोपविषयानेकत्वेऽपि नालंकारानेकत्वम् । संभूयैव वैचित्र्यप्रकर्षाधायकत्वात् । एवं मालारशनयोरपि द्रष्टव्यम् ।

---

धारत्वसाधर्म्येणेति भावः । एवमग्रेऽपि बोध्यम् । एवं जये कुञ्जरत्वारोपे भुजरूपालानसंबन्धित्वं साधारणधर्मः । न चैवमन्योन्याश्रयः । कल्पनामयतया सकलसिद्धेः । कल्पनायाश्च स्वप्रतिभाधीनत्वात् । शिल्पिभिः परस्परावष्टम्भमात्राधीनास्थितिकाभिः शिलेष्टकादिभिर्गेहविशेषनिर्माणाच्चेति केचित् । वस्तुतो जयकुञ्जरयोरभेदप्रत्यय इच्छाधीन आहार्य एव । समर्थकारोपः सादृश्यमूलक एवेत्यत्र नाऽऽग्रह इत्यन्योन्याश्रयसंभावनैव नेति दिक् ।

अलौकिकेति । अलौकिकस्य लोकेऽन्यत्रादृष्टस्य महस्योत्सवस्याऽऽलोकः प्रदर्शनमेव द्योतस्तेन प्रकाशितं जगत्त्रयं येन, अलौकिकमहालोको यश इति वा । सद्वंशो महत्कुलं तदेव सद्वेणुमुक्तोत्पत्तिस्थानं तत्रत्यं मुक्तारत्नम् । अत्र राज्ञि मुक्तात्वारोपे कुलगतो वेणुत्वारोपो निमित्तम् ।

निरवधीति । ( विष्णुं प्रति भक्तस्योक्तिः । निरवधि बहुकालं, निराश्रयमपराधीनम् । स्थितं स्थितिः । अनिवर्तितनृत्यादिप्रपञ्चम् । प्रथमः स्वत एव भूतः स्वत एव लब्धराज्यादिश्च । ( भूः भुवः स्वः महः जनः तपः सत्यम् अतलम् वितलम् सुतलम् तलातलम् महातलम् रसातलम् पातालम् एते चतुर्दश लोकाः । तद्रूपा या वल्लिः, तस्याः कन्दो मूलम् । ( पुष्पिताग्रा छन्दः । ) लोके वल्लित्वारोपो राज्ञि कन्दत्वारोपे निमित्तम् । स च राज्ञि कूर्मत्वारोपे हेतुः । ननु पूर्वश्लोके मुक्तात्वारोपे प्रकाशितजगत्त्रयत्वारोपोऽपि निमित्तम्, अत्र कूर्मत्वारोपे निरवधिस्थितत्वारोपोऽपि निमित्तमितीदं द्वयमनेकारोपनिमित्तत्वान्मालापरम्परितमेव युक्तमिति चेन्न । जोत्स्नाभस्मच्छुरणधवले-

---

१ ग. °प्रसादितजगत्त्रयम् ।

किसलयकरैर्लतानां करकमलैः कामिनां मनो जयति ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥ ४२९ ॥

इत्यादि रशनारूपकं न वैचित्र्यवदिति न लक्षितम् ।

**प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः ।**

---

यद्यपि रशनारूपकमपि रूपकं संभवति । यथा—**किसलय०** ।
तथाऽपि न तादृशवैचित्र्यवदिति न पृथग्लक्षितम् ।
**प्रकृतं०** । प्रकृतमुपमेयं

---

त्यादेरपि तथात्वापत्तेः । नानापरम्परासत्त्व एव मालापरम्परितत्वस्य युक्तत्वाच्च ।

**किसलयेति** । लतानां नलिनीनां च स्त्रीत्वमार्थम् । करकमलैरिति मुखेन्दुभिरिति च योषितामित्यनेनान्वेति । ( आर्या छन्दः । ) पूर्वपूर्वारोप्यमाणानां परत्र परत्राऽऽरोपविषयत्वाद्रसनारूपता । **न तादृशेति** । उपमेयोत्कर्षप्रतिपादनायोपमानीकृतानामुपमेयीकरणे तदुत्कर्षप्रतिपादनस्थगनात् । न चाऽऽरोप्यभेदादविरोधः । एकत्र काव्य उपात्तत्वादिति दिक् ।

**इति रूपकम् ।**

**प्रकृतमिति** । निषिध्येत्यन्तेन रूपकव्युदासः । तत्र प्रकृतनिषेधाभावात् । **उपमेयमिति** । इदमुपलक्षणम् । किंचिदपह्नुत्य कस्यचित्प्रदर्शनमपह्नुतिरित्येव लक्षणम् । अत एव 'केसेसु बलामोडिअ' इत्यादौ स्वयं न प्रपलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं संभाव्य तान्कन्दरा न त्यजन्तीत्यपह्नुतिर्व्यज्यते' इति प्रकाशकारैश्चतुर्थ ( पृ० १४९ ) उक्तम् । एवं च

'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम् ।'

इत्यादावपह्नुतिरेव । अत एव दण्डिनोक्तम्—

'अपह्नुतिरपह्नुत्य किंचिदन्यार्थसूचनम् ।
न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणां यतः ॥'

इति । एतेन 'नायं सुधांशुः' इत्यादौ

'न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥ ( वसि० सं० )

इत्यादौ च नापह्नुतिः किं तु दृढारोपरूपकमित्यपास्तम् । 'नेदं मुखं चन्द्रः' इति प्रसिद्धापह्नुत्युदाहरणेऽपि मुखत्वनिषेधे चन्द्रारोपदार्ढ्यसंपादकताया वक्तुं शक्यत्वेनानुभवसिद्धत्वेन चापह्नुतिमात्रस्योच्छेदापत्तेः । यदि तु निषेधपूर्वकारोपे चमत्कारविशेषस्यानुभवसिद्धत्वादलंकारान्तरत्वं तर्हि प्रकृतेऽपि तुल्यम् । ननु निषिध्येत्यस्य निषेधार्थकत्वे

उपमेयमसत्यं कृत्वोपमानं सत्यतया यत्स्थाप्यते, सा त्वपह्नुतिः।
उदाहरणम्—

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ ४३० ॥

इत्थं वा—

बत सखि कियदेतत्पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन्रागिलोके तथा[2] हि।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥ ४३१ ॥

---

निषिध्यासत्यतया व्यवस्थाप्यान्यदप्रकृतमुपमानं यत्स्थाप्यते सत्यतया व्यवस्थाप्यते साऽपह्नुतिः। सा च शाब्दी, आर्थी चेति द्विधा।

तत्राऽऽद्या यथा —अवाप्तः।

अत्र कलङ्को नैवायमिति शाब्दोऽपह्नवः। आर्थस्तु बह्वीभिर्भङ्गीभिरालोच्यते। तत्कश्चित्कपटार्थशब्दोपादानात्। यथा—बत०।

---

'शिखा धूमस्येयं परिणमति रोमावलिवपुः' इत्यादावपह्नुतिर्न स्यादत आह—**असत्यतयेति। साध्यते।** आहार्यनिश्चयविषयी क्रियते। तेन 'न पद्मं मुखमेवेदम्' इत्यादौ नातिव्याप्तिः। तथा विरहिजनवाक्ये 'नायं चन्द्रोऽपि तु मार्तण्डः' इत्यादौ नैषा। तज्ज्ञानस्य दोषविशेषजन्यत्वेनानाहार्यत्वात्।

'नायं चन्द्रोऽरविन्दं वा मुखं वेदं मृगीदृशः।'

इत्यत्र च नैषा। निश्चयविषयत्वाभावात्। **शाब्दीति।** शब्देन यत्रासत्यत्वमाहेत्यर्थः।

**अवाप्त इति।** (पूर्णचन्द्रे कलङ्कं दृष्ट्वा पार्वतीं प्रति महेश्वरस्योक्तिः।) परिणतरुचः पूर्णस्य शशाङ्कस्य वपुषि प्रागल्भ्यं प्रकटत्वं प्राप्त इत्यन्वयः। विगलतोऽमृतस्य स्यन्दः प्रस्रवणं तेन शीतेऽमुष्योरसीत्यन्वयः। (शिखरिणी छन्दः।)

**बतेति।** [ सखीं प्रति विरहिण्या उक्तिः। ] कामिलोके स्मरस्य कियद्वैरमित्यन्वयः। सहकारेषु तत्पुष्पेषु। छलम्। व्याजम्। [ प्रतिविशिखम्। प्रतिबाणम्। ] उट्टङ्कनम्। प्रकाशनम्। [ कालकूटम्। तीक्ष्णविषम्। मालिनी

---

१ ग. यत्स्थाप्यते साऽपह्नुतिः। २ क. °थाऽपि।

अत्र हि न सभृङ्गाणि सहकाराणि, अपि तु सकालकूटाः शरा इति प्रतीतिः।

एवं वा—

अमुष्मिंल्लॉवण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥ ४३२ ॥

अत्र न रोमावलिः, धूमशिखेयमिति प्रतिपत्तिः। एवमियं भङ्ग्यन्तरैरप्यूह्या।

---

अत्रच्छलशब्दबलान्न सभृङ्गाणि सहकाराणि, अपि तु सकालकूटाः शरा इति प्रतीयते। क्वचित्परिणामादिशब्दवशात्। यथा—अमुष्मि०।

अत्र धूमशिखा रोमावलिवपुः परिणमतीति परिणामशब्दार्थवशान्नेयं रोमावलिः किं तु धूमशिखेति प्रतीयते। एवं भङ्ग्यन्तरैरप्यूह्यम्। यथा 'इदं ते केनोक्तम्' इत्यादौ।

---

छन्दः।)· अत्रच्छलेति। सत्यत्वे व्याजताविरहात्तेन भृङ्गाणामसत्यत्वप्रतिपादनमिति भावः।

अमुष्मिन्निति। वेश्यामुद्दिश्य समृद्धं कामिनं प्रति दास्या उक्तिः। अमुष्मिन्मृगदृशः पृथुजघनभागे लावण्यामृतसरसि शर्वप्लुष्टः शिवदग्धः स्मरो नूनं निपतित इत्यन्वयः। प्रशमपिशुना शान्तिसूचिका। परिणमति प्रादुर्भवति। तप्ताङ्गारस्य जलप्रवेशे धूमशिखा भवतीति स्वभावः। (शिखरिणी छन्दः।) अत्र निषिध्येति क्त्वाप्रत्ययार्थोऽपि लक्षणेऽविवक्षितः। तेन

'मन्थानभूमिधरमूलशिलासहस्रसंघट्टजव्रणकिणः स्फुरतीन्दुमध्ये।

छाया मृगः शशक इत्यतिपामरोक्तिस्तेषां कथंचिदपि तत्र हि न प्रसक्तिः ॥

इत्यादावारोपपूर्वकापह्नवे नाव्याप्तिः। अपह्नवस्तत्र पामरवचनोपन्यासादर्थसिद्धः। वाक्यभेदाश्चात्र। बत सखि, अमुष्मिन्नित्यनयोस्त्वेकवाक्यतेति बोध्यम्।

'प्रजल्पन्मत्पदे लग्नः कान्तः किं न हि नूपुरः'।

इत्यादवपार्थमेव। व्याजोक्तिरित्यन्ये। क्वचिद्भङ्ग्या व्यञ्जनया निषेधबोधनम्। यथा 'अङ्के केऽपि शशाङ्किरे' इत्यादौ। इत्यपह्नुतिः।

---

१ क. 'न्न रो°'।

श्लेषः स वाक्य एकस्मिन्यत्रानेकार्थता भवेत् ॥ ९६ ॥

एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थः, स श्लेषः ।

उदाहरणम्—

उदयमयते दिङ्मालिन्यं निराकुरुतेतरां
नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः ।
रचयतितरां स्वैराचारप्रवर्तनकर्तनं
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥ ४३३ ॥

अत्राभिधाया अनियन्त्रणाद्द्वावप्यर्कभूपौ वाच्यौ ।

परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः

---

श्लेषः० ।

परिवृत्तिसहानामेवं शब्दानामेकवृन्तगतफलद्वयन्यायेन यत्रानेकार्थप्रतिपादकता सोऽर्थश्लेषः ।

यथा—उदय० ।

अत्र विभाकरनामा राजविशेषो मार्तण्डश्चेत्युभयार्थानि 'उदयमयते' इत्यादीनि वाक्यानि । न चायं द्वितीयार्थस्य ध्वनिरेवेति शङ्कनीयम् । संयोगादीनामभावेनाभिधाया अनियन्त्रणाद्द्वयोरपि वाच्यत्वात् ।

परोक्ति० ।

---

तत्र शब्दश्लेषाद्भेदं दर्शयति—परिवृत्तिसहानामेवेति ।

**उदयमिति** । उदयमुदयाचलं समृद्धिं च । दिङ्मालिन्यं तमसाऽपायेन च । निद्राजन्या मुद्रा चक्षुषो निद्रेव मुद्रा निरुत्साहता च । क्रिया ग्रामगमनादिविहिताः क्रियाश्च । स्वैराचारोऽभिसारादिः स्वेच्छया वेदनिषिद्धाचरणं च । ( हरिणी छन्दः । ) **विभाकरनामेति** । एवं च तदंशे परिवृत्त्यसहत्वेन शब्दश्लेषेऽप्युदयमित्यादिषु बहुष्वर्थश्लेषादुदाहरणत्वमित्याह—**उदयमयत इत्यादीनीति** । **द्वयोरपि वाच्यत्वादिति** । प्रकृतत्वेनेत्यादिः । उभयोः प्रकृतत्वेऽप्रकृतत्वे वा ध्वनित्वाभावादिति भावः । एतेनार्थश्लेषे विशेषणानामेव श्लिष्टत्वं न तु विशेष्याणामपीत्यपास्तम् । केचित्तु 'विभाकरपदं शक्त्या सूर्यं, नृपं योगेन बोधयतीत्येतदंशेऽप्यर्थश्लेषः, परिवृत्तिसहत्वात्' इत्याहुः । यदि त्वत्र राजा प्रकृतो रविरप्रकृतस्तदा द्वितीयार्थस्य शब्दशक्तिमूलध्वनिरेवेति बहवः ।

इति श्लेषः ।

---

१ क. रचयति तथा । २ क. °नलदण्डनं नवनवलसत्° । ३ क. °व पदाना° ।

**प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यात्, न तु विशेष्यस्य सामर्थ्यादपि यदप्रकृतस्यार्थस्याभिधानम्, सा समासेन संक्षेपेणार्थद्वयकथनात् समासोक्तिः। उदाहरणम्—**

**लहिऊण तुज्झ बाहुप्फंसं तीए स को वि उल्लासो।**
**जअलच्छी तुह विरहे ण हुंज्जला दुव्वला णं सा ॥ ४३४ ॥**

**अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्ति।**

---

परमप्रकृतम् । भेदकानि विशेषणानि । श्लिष्टान्यनेकार्थानि । तेन प्रकृतार्थविशेषणवाचिमात्रशब्दस्य श्लेषमहिम्ना यत्र प्रकृतार्थकेन वाक्येनाप्रकृतार्थवचनं सा समासोक्तिः संक्षेपेणार्थद्वयोक्तिः । मात्रग्रहणाद्यत्र विशेष्यपदस्यापि श्लिष्टत्वं तद्व्युदासः । तस्य श्लेषत्वात् ।

उदाहरणम्—**लहिऊण०** ।

अत्र विशेष्यवाचिनो जयलक्ष्मीशब्दस्य परमप्रकृतार्थकत्वं नास्ति । श्लिष्टत्वं चोपलक्ष-

---

**परमप्रकृतमिति** । अप्रकृतव्यवहार इत्यर्थः । यत्र त्वप्रकृतेन प्रकृताभिधानं तत्राप्रस्तुतप्रशंसेति भावः । **अनेकार्थानीति** । प्रकृताप्रकृतोभयानुगतानेकार्थानीत्यर्थः । उभयान्वितेति तु न युक्तम् । अप्रकृतस्यानुपादानात् । **अप्रकृतार्थवचनम्** । अप्रकृतगतव्यवहाररूपार्थस्य वचनं प्रकृतवृत्तान्त आरोपो व्यञ्जनया प्रतिपादनमित्यर्थः । एवं च समासोक्तौ प्रकृतव्यवहारेऽप्रकृतव्यवहारारोपः । रूपके तु विशेष्ये प्रकृतेऽप्रकृतरूपारोपः । अत एवैकदेशविवर्तिरूपकविषये न समासोक्तिः । **संक्षेपेण** । एकेनैव शब्देन । **तस्य श्लेषत्वादिति** । उपमाध्वनित्वाद्वेत्यपि बोध्यम् ।

**लहिऊणेति** ।

'लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः ।
जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा ॥'

( गाथा छन्दः । ) **परमप्रकृतार्थकत्वमिति** । केवलं तस्य कान्तावाचकत्वं नास्ति, विशेषणानां तूभयगतबाहुस्पर्शप्राप्त्यादिबोधकत्वमित्यर्थः । एवं च लहिउणेत्यादिपदबोध्यानामभेदारोपाद्व्यञ्जनया कान्ताव्यवहाराभेदेन प्रतीयमानस्य जयलक्ष्मीव्यवहारस्य जयलक्ष्मीवृत्तान्ततया प्रतीयमानस्य चमत्कारकतेति भावः । अत एवोक्तं कुवलयानन्दकृताऽपि 'समासोक्तावप्रस्तुतव्यवहारसमारोपश्चारुताहेतुः' इति । अयं भावः—

---

१ क. ग. °स्याप्यर्थ° ।

'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः।'
इत्यादौ श्लिष्टविशेषणप्रतीतप्रस्तुताप्रस्तुतवृत्तान्तयोः श्लेषभित्तिकाभेदाध्यवसायेनाभेदप्रतीतिविषययोः प्रस्तुतचन्द्रादिवृत्तिता। तत्र तयोर्वृत्तान्तयोः परस्परं विशेषणविशेष्यभावे कामचारेऽपि प्रस्तुतवृत्तान्तो विशेष्यः। तद्बोधकबोध्याप्रस्तुतस्तु अभेदेन तद्विशेषणम्। तत्र यद्यपि प्रस्तुतस्य स्वासाधारणधर्मेण चन्द्रेऽन्वययोग्यताऽस्ति, तथाऽप्यप्रस्तुताभेदमापन्नस्य न साऽस्तीति तद्रूपावच्छिन्नस्याप्रकृते धर्मिण्यारोपः। आरोपोऽत्र व्यञ्जनया बोधः। न चाप्रस्तुताभिन्नत्वेऽपि विशेष्यतायाः प्रस्तुत एव सत्त्वेनास्त्येवान्वययोग्यतेति वाच्यम्। विशिष्टस्यान्वयायोग्यत्वात्। न च रूपकवत्समासोक्तावपि प्रस्तुतचन्द्रेऽप्रस्तुतजाररूपसमारोपश्चारुताहेतुरस्त्विति वाच्यम्। तद्वाचकपदसमभिव्याहाराभावेन तस्यासंभवात्। न चाऽऽक्षिप्तजारादिनाऽऽक्षिप्तरूपकमस्तु। 'निरीक्ष्य विद्युन्नयनैः पयोदः' इत्यादौ पयोदे द्रष्टृपुरुषविशेषाक्षेपकनिरीक्षणवदाक्षेपकाभावात्। न च विशेषणसाम्यप्रतीताप्रकृतजारवृत्तान्त एव चन्द्रवृत्तितया प्रतीयमान आक्षेपकोऽस्तु। अप्रस्तुतस्य प्रस्तुते विशेषणतयाऽप्राधान्येनानाक्षेपकत्वात्। स्फटिके जपाकुसुमनिष्ठलौहित्यस्याऽऽरोपेऽपि जपाकुसुमत्वानारोपश्च। एतेनाऽऽक्षेपासंभवेऽपि परनायिकामुखचुम्बनस्य श्लेषमर्यादया व्यञ्जनया वा प्रतीतस्य प्रकृते धर्मिण्यारोप्यमाणस्य जारासाधारणधर्मत्वेन प्रकृतधर्मिणि जारत्वव्यञ्जकता सुवचेत्यपास्तम्। किं चैवं सति वाच्यार्थबोधोत्तरं तद्व्यङ्ग्यप्रतीतिः। साऽपि न केवलव्यवहारमात्रज्ञानात्। अपि तु तादृशनायकनायिकासंबन्धविशिष्टव्यवहारज्ञानात्। एवं च वाच्यार्थबोधकालिकचमत्कारस्यापह्नोतुमशक्यत्वेनालंकारत्वस्य दुरपह्नवत्वात्। विपरीतनायकत्वव्यञ्जनस्य समासोक्त्यन्तर्भावं वदतो ध्वनित्वस्य दुर्वारत्वाच्च। तद्व्यङ्ग्यस्याधिकचमत्कारकारित्वेन प्रधानत्वात्। न च श्लिष्टशब्दोपस्थापितयोर्वृत्तान्तयोः परस्परमभेदेनान्वये मानाभावः। सहृदयहृदयस्यैव प्रमाणत्वात्। अत एव 'आगत्य संप्रति वियोगविसंष्ठुलाङ्गीम्' इत्यत्रार्थशक्तिमूलो नायकनायिकावृत्तान्तो वाच्यरविकमलिनीवृत्तान्ताध्यारोपेणैव स्थित इति प्रदीपकृतः। प्राचीनानुभवमपलप्यापि यदि एकत्र द्वयमिति रीत्या प्रस्तुताप्रस्तुतवृत्तान्तयोर्विशेष्यत्वेनैवान्वयः स्वी क्रियते, एवमपि वाच्यार्थबोधकाले प्रस्तुते धर्मिणि नाप्रस्तुतजारत्वारोपं प्रत्याशा। तथा हि—यद्यप्यनयोर्भिन्नपदोपात्तविशेषणयोरिव विशेष्यत्वेनैव साक्षादन्वयात्समप्राधान्यमस्तीति स्वी क्रियते, तथाऽप्यप्रस्तुतवृत्तान्तान्वयानुरोधान्न प्रस्तुतेऽप्रस्तुतरूपसमारोपः। प्रस्तुतेऽप्रस्तुतवृत्तान्तारोपेणैव सिद्धेः। अप्रस्तुतरूपसमारोपेऽपि प्रस्तुतवृत्तान्तान्वयायोग्यतायास्तदवस्थत्वाच्च। नन्वेवं सति विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिति प्राचीनलक्षणासंगतिः। अप्रस्तुतधर्मिव्यञ्जनस्य त्वयाऽनपेक्षणादिति चेन्न। स्वरूपतोऽप्रस्तुतवृत्तान्तारोपस्य न चमत्कारित्वम्। किं तु अप्रस्तुतकामुकादिसंबन्धित्वेनावगम्यमानस्यैव तस्याऽऽरोपः। अतः श्लेषादिमाहिम्ना विशेषणपदैः स्वरूपतः समर्पितेन चुम्बनादिनैन्द्री चन्द्र इत्येतद्गतस्त्रीलिङ्गपुंलिङ्गसहकृतेन तत्संनिधिनि कामुकादावभिव्यक्ते पुनस्तदीयत्वानुसंधानात्। विशेषणसाम्येन वाच्योपस्कारकस्या-

प्रस्तुतव्यञ्जनस्याक्षेऽऽपणात् । अप्रस्तुतस्येत्यस्याप्रस्तुतव्यवहारस्येत्यर्थो वा । एतेन वदनचुम्बनस्य पुत्रादिसाधारण्यात्कथं कामुकाभिव्यञ्जकत्वम् । किं च ' अहर्मुखं चुम्बति भानुबिम्बम् ' इत्यत्रापि नायकाद्यभिव्यक्त्यापत्तिरित्यपास्तम् । यत्तु चन्द्र—ऐन्द्रीपदगतलिङ्गाभ्यामभिव्यक्तनायकयोः स्वव्यञ्जकपदोपस्थापिताभ्यां भेदेनैवान्वय उचितः । समानपदोपात्तत्वप्रत्यासत्तेरिति । तन्न । एवं हि वदता व्यवहारावच्छेदकत्वं तयोः स्वी क्रियते न वा । आद्य एकस्यार्थस्योभयत्रान्वयोऽव्युत्पत्तिग्रस्तः । अन्त्ये रसाननुगुणत्वम् । यदपि ऐन्द्र्यादौ नायिकात्वाभाने केवलं व्यवहारावच्छेदकत्वमात्रस्वीकारे बाधः । नायिकात्वानालीढकेवलैन्द्रीमुखचुम्बनरूपस्य व्यवहारस्य नायकासंबन्धित्वात् । न हि दिक्तादात्म्यं विना नायिकाया पृथङ्मुखं विशेषयितुं सामर्थ्यमस्तीति । तदपि न । मुखशब्दश्लेषसामर्थ्येनैन्द्रीमुखमित्यस्यैन्द्यंशमोषेण केवलमुखचुम्बनस्योपस्थितेः । तदेतदुक्तं कुवलयानन्दे—' श्लेषादिमहिम्ना स्वरूपतः समर्पितेन वदनचुम्बनादिना ' इति । न ह्यन्द्रीशब्दार्थेन दिग्रूपेण वदनरूपमुखपदार्थस्यान्वयो वक्तुं शक्यः सहृदयैः । नन्वेतादृशकुसृष्टिकल्पनापेक्षया विशेषणसाम्यमहिम्ना प्रतीतोऽप्रकृतवाक्यार्थः स्त्रीलिङ्गपुंलिङ्गाभ्यामाभिव्यक्तनायकाद्यभिन्नचन्द्रादिघटितप्रकृतवाक्यार्थे स्वावयवतादात्म्यापन्नतदवयवोऽवतिष्ठत इत्येव कल्पयितुं युक्तम् । एवं च नायिकाभिन्नेन्द्रदिशासंबन्धिवदनाभिन्नप्रारम्भकर्मकचुम्बनरूपसंबन्धाश्रयो नायकाभिन्नश्चन्द्र इति बोध इति चेन्न । एवं हि ऐन्द्र्यां नायिकाभेदप्रतीतौ मुखचुम्बनादौ वदनचुम्बनाद्यभेदप्रतीतावपि वदनचुम्बने साक्षान्नायिकासंबन्धाप्रतीत्या रसोद्बोधानापत्तेः । न च व्यञ्जनया तत्प्रतीतिरस्त्येव, यस्मिन्यदभेदस्तत्संबन्धिनि तत्संबन्ध्यभेद इति न्यायेन वा मानसी तत्प्रतीतिस्तत एव चमत्कार इति वाच्यम् । तदपेक्षया साक्षाच्चमत्कारोपपादकवाच्यार्थबोधव्युत्पादनस्यैवौचित्यात् । ननु व्यञ्जनयाऽप्रकृतार्थबोधः । शक्तेः प्रकरणादिना नियन्त्रणात् । ततो व्यञ्जनमाहात्म्यादेव प्रकृतवाक्यार्थतादात्म्येनावतिष्ठत इति चेत् । व्याञ्जनिकोऽप्रकृतार्थबोधो नायिकाद्यविशेषितो विशेषितो वा । नाऽऽद्यः । रसाननुगुणत्वात् । अन्त्ये स्वपदोपस्थाप्यलिङ्गाभ्यां नायिकाद्यभेदबोधो व्यर्थोऽसंभवी च । नायिकाविशेषणकव्यवहारबोधनेन कृतार्थत्वात् । अपि च तथा सति जारकर्तृकसानुरागपरनायिकामुखचुम्बनाभिन्नप्राचीप्रारम्भसंयोगाश्रयो जाराभिन्नश्चन्द्र इति बोधकदर्थनमेव स्यात् । तस्माद्व्यञ्जनया शक्त्या वोपस्थिताप्रस्तुतवृत्तान्तेन व्यञ्जनयोपस्थितनायिकादिसंबन्धित्वेन गृहीतेनाभेदमापन्नप्रस्तुतवृत्तान्तारोपः प्रकृतविशेष्ये नव्यमते श्लेषस्थलेऽप्रकृतोपस्थितेः शक्त्यैव सत्त्वेन तन्मते शक्त्यैवाप्रकृतार्थोपस्थितिः, प्राचां तु व्यञ्जनयेत्येतावान्विशेषः । एवं च वाच्यार्थबोधोत्तरं यदि चन्द्रादौ नायकत्वादिप्रतीतिरपि सहृदयानुभवसाक्षिकी तदाऽस्त्वित्युपपादितमेव प्राक् । अत एव समासोक्तौ साधारणविशेषणबलादेवोपमानप्रतीतौ तदुपादानवैयर्थ्यमिति शेषे वक्ष्यति प्रकाशकृत् । अनेन तत्सादृश्यप्रतीतिर्व्यञ्जनया न तु तदभेदप्रतीतिरिति लभ्यते । प्रस्तुतप्राचीवृत्तान्त आरोप्यमाणाप्रस्तुतखण्डितनायिकाविशेषवृत्तान्तसमर्थनाय तस्याऽऽ-

निदर्शना।

अभवन्वस्तुसंबन्ध उपमापरिकल्पकः ॥ ९७ ॥

निदर्शनं दृष्टान्तकरणम्।

उदाहरणम्—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ ४३५ ॥

---

णम्। औपम्यगर्भादीनामपि संभवात्। यथा 'विलिखति कुचौ' इत्यादाविति प्राचीनः पन्थाः। अत्र नव्याः—परोक्तिरिति परशब्देन सामान्यतः प्रकृतमप्रकृतं वा विवक्षितम्। तेन यत्राप्राकरणिकविशेषणसामर्थ्यात्प्राकरणिकमुच्यते तदपि संगृह्यते। तत्रापि वैचित्र्याविशेषादन्यत्रानन्तर्भावाच्च। यथा 'संप्राप्ते सकलाङ्क'—इत्यादि। अत्र ह्यप्रकृतस्य भृङ्गस्य विशेषणसामर्थ्यात्प्रकृतस्यासत्पुरुषस्य प्रतीतिरित्याहुस्तन्न युक्तम्। अप्रस्तुतप्रशंसयैव तत्संग्रहात्। 'येनास्यभ्युदितेन' इतिवत्। वृत्तौ चाप्रस्तुतप्रशंसाप्रकरणे तत्र समासोक्तिपदं श्लिष्टविशेषणत्वमात्रपरम्।

**निदर्शना०।**

यथाश्रुतमात्रेणासंभवी वस्तुसंबन्धो यत्रोपमां कल्पयित्वा पर्यवस्यति सैका निदर्शना। दृष्टान्तकरणात्मकनिदर्शनरूपत्वात्। सा च द्विधा—अवान्तरवाक्यभेदे तदभेदे च।

तयोराद्या यथा—**क्व सूर्य०।**

---

वश्यकत्वाच्च। एवं च सानुरागपरनायिकामुखचुम्बनाभिन्नप्राचीप्रारम्भसंयोगाश्रयश्चन्द्र इत्येव बोधः। समासोक्तिर्गुणीभूतव्यङ्ग्येति व्यवहारस्तु प्रकृतव्यवहारेऽप्रकृतव्यवहाराभेदस्य व्यञ्जनया प्रतीतेर्निर्बाध एवेति दिक्।

**औपम्यगर्भादीनामिति।** आदिना साधारणविशेषणसंग्रहः।

'अन्धेन पातभीत्या संचरता मया विषमविषयेषु।
दृढमिह मया गृहीता हिमगिरिशृङ्गादुपागता गङ्गा ॥'

अत्र गिरिशृङ्गप्रभववेणुयष्टिव्यवहाराभिन्नव्यवहारवती गङ्गेति प्रतीयते। **इति समासोक्तिः।**

**निदर्शनेति।** अभवन्प्रतीतिविषयतामलभमानो वस्तुनोर्वाक्यार्थयोः पदार्थयोर्वा संबन्धोऽन्वयः। अत एव प्रतीतिपर्यवसानाभावादस्य दृष्टान्ततो भेदः। परस्परनिरपेक्षयोर्वाक्यार्थयोर्दृष्टान्तालंकारः, इयं पुनः सापेक्षयोरिति भेद इत्यन्ये। तर्हि वाक्यमसंगतं स्यादत आह—**उपमापरिकल्पक इति।** औपम्यमाक्षिप्य पर्यवस्यतीत्यर्थः।

**क्वेति।** (रघुकाव्ये प्रथमसर्गे स्वाहंकारं परिहर्तुं कालिदासस्योक्तिः। उडुपं चर्मावन-

**अत्र, उडुपेन सागरतरणमिव मन्मत्या सूर्यवंशवर्णनमित्युपमायां पर्यवस्यति ।**

---

अत्राहं सागरं तितीर्षुरस्मीत्यस्यासंबद्धार्थकतयोडुपेन सागरतरणवन्मदीयमत्या सूर्यवंशवर्णनमसंभावितमित्युपमायाः कल्पनम् ।

---

द्भवंशपात्रम् । मोहाद्दुस्तरं सागरमुडुपेन तितीर्षुरस्मीत्यर्थः । अत्र स्वमतिसूर्यप्रभववंशयोरत्यन्ताननुरूपत्वं बोध्यते । तदनन्तरमुडुपकरणकसागरतरणेच्छाया अप्रकृतायाः कथनेन तादृशमतिकरणकवर्णनेच्छायाः पूर्वार्धगत आक्षेपः । तयोश्च परस्परासंबन्धस्य स्पष्टत्वादौपम्यमादाय पर्यवसानम् । तत्फलितमाह—**उडुपेन सागरतरणवदिति । कल्पनम्** । व्यञ्जनम् । प्रतीयमानाभेदरक्षणायेति भावः । एवं चात्राऽऽर्थी निदर्शना ।

> स्वत्पादनखरत्नानि यो रञ्जयति यावकैः ।
> इन्दुं चन्दनलेपेन पाण्डरी कुरुते हि सः ॥

इत्यादौ तु शाब्दी बोध्या । वाक्यार्थगा चोभयत्रापि । एवम्—

> त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।
> इदं श्रीखण्डलेपेन पाण्डरीकरणं विधोः ॥

इत्यत्राप्येषैव । न चेदं वाक्यार्थरूपकम् । लोकप्रसिद्धोपमानत्वोपमेयत्ववतोरभेदस्यैव रूपकत्वात् । किं च तत्र सादृश्यलक्षणामूलाऽभेदप्रतीतिः । इह तु प्रतीयमानाभेदानुपपत्त्या तत्त्वकल्पनेति भेदात् ।

'नितरां निर्गते नीरे सेतुमेषा चिकीर्षति ।'

इत्यादौ किंचिद्दाक्षिण्यसमागततत्कालोपेक्षितप्रतिनिवृत्तनायिकान्तरासक्तनायकानयनार्थं सखीं प्रेषयितुकामां नायिकामुद्दिश्य सख्या वचनेऽप्यार्थी निदर्शनैव । एतेनात्र ललितालंकारः । वर्णनीयवाक्यार्थमनुक्त्वैव वर्ण्ये धर्मिणि तत्स्वरूपस्य कस्यचिदप्रस्तुतवाक्यार्थस्य वर्णनरूप इत्यपास्तम् । न हि प्रस्तुताप्रस्तुतवृत्तान्तयोः शब्दोपात्तयोरेव निदर्शनेत्यत्र मानमस्ति । न चैवमतिशयोक्तिविषयस्याप्यार्थरूपकेणापहारः स्यादिति वाच्यम् । विषयतावच्छेदकरूपेण भाते विषये विषयितावच्छेदकावच्छिन्नविषय्यभेदस्य रूपकशरीरस्य विषयितावच्छेदकरूपेण भासमानविषयात्मकादतिशयोक्तिस्वरूपाद्विलक्षणत्वेन तयोरैक्यासंभवात् । न च निदर्शनाविषये व्यङ्ग्योपमयैवास्तु चमत्कार इति वाच्यम् । अत्राभेदप्रतीतिकृतचमत्कारस्यैव सत्त्वात् । कल्पितौपम्यमूलिकया पर्यवसन्नया तयैव चमत्कार इत्याशयात् । तदुक्तम् 'उपजीव्यत्वेन भेदात्' इति ।

यथा वा—

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥४३६॥

अत्र कथमन्यस्य लीलामन्यो वहतीति तत्सदृशीमित्युपमायां पर्यवसानम् ।

दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्ग-
मादातुमिच्छति करे हरिणाङ्कबिम्बम् ।
मेरुं लिलङ्घयिषति ध्रुवमेष[1] देव
यस्ते[2] गुणान्गदितुमुद्यममादधाति ॥ ४३७ ॥

इत्यादौ मालारूपाऽप्येषा द्रष्टव्या ।

---

अन्त्या यथा—उदयति० ।

अत्रान्यलीलोद्वहनस्यान्येनासंभवाद्वारणेन्द्रलीलासदृशीं लीलामित्युपमायां पर्यवसानम् । एवं च 'पूर्वोदाहरणे वाक्यार्थ उपमाक्षेपक इह तु पदार्थमात्रम्' इति व्याख्यानमनादेयम् । अत्रापि लीलापदार्थमात्रस्यानाक्षेपकत्वात् । एषा मालारूपाऽपि दृश्यते ।

यथा—दोर्भ्यां० ।

---

उदयतीति । माघे चतुर्थसर्गे रैवतकनाम्नः पर्वतस्य वर्णनम् । वितता विस्तीर्णा ऊर्ध्वा रश्मय एव रज्जवो यस्य । इदमहिमरुचावित्यस्य हिमधाम्नि, इत्यस्य च विशेषणम् । अहिमरुचिः सूर्यः । हिमधामा चन्द्रः । विलम्बिघण्टाद्वयेन परिवारितो यो वारणेन्द्रस्तस्य लीलाभिन्नां लीलामित्यन्वयः । श्लेषेण लीलापदेन लीलाद्वयोपस्थितेः । (पुष्पिताग्रा छन्दः । )

श्लेषाश्रयणे बीजं दर्शयति—अत्रान्येति । अन्यलीलातादात्म्यस्यान्यलीलायामसंभवाच्चेत्यपि बोध्यम् । न चेदृशस्थलेऽन्वयानुपपत्त्या लीलापदस्य तत्सदृशलीलायां लक्षणैव स्यादिति वाच्यम् । आरोपणाप्यन्वयोपपत्तेः । वस्तुमाहात्म्यादेव त्वस्याः सादृश्यव्यञ्जकत्वम् । तदाह—उपमायां पर्यवसानमिति । अत्रोपमानोपमेयधर्मयोरभेदप्रतिपत्तिः। अत इयमेव पदार्थनिदर्शनेत्युच्यतेऽन्यैः । तत्र पदार्थनिदर्शनात्वे कस्यचिदुक्तिं खण्डयति—एवं चेति । समस्तत्वेनाऽऽक्षेपकस्यापि पदत्वादिदं चिन्त्यम् ।

दोर्भ्यामिति । ( राजानं प्रति कस्यचिदुक्तिः । दोर्भ्याम्, बाहुभ्याम् । ) तरङ्गवतीभुजंगः समुद्रः । हरिणाङ्कश्चन्द्रः । ( गदितुम् । वक्तुम् । उद्यमम् । उद्योगम् । आदधाति । करोति । वसन्ततिलका छन्दः । ) अत्रैकस्य गुणगणनोद्यमस्य बहून्युपमानानीति माला ।

---

१ क. ध्रुवमत्र । २ ख. ग. यस्ते ।

**स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा ।**

क्रिययैव[1] स्वस्वरूप—स्वकारणयोः संबन्धो यदवगम्यते साऽपरा निदर्शना ।

यथा—

उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन्[2] ।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥ ४३८ ॥

अत्र पातक्रियया[3] पतनस्य, लाघवे सत्युन्नतपदप्राप्तिरूपस्य च संबन्धः ख्याप्यते ।

**अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥ ९८ ॥**

अप्राकरणिकस्याभिधानेन[4] प्राकरणिकस्याऽऽक्षेपोऽप्रस्तुतप्रशंसा ।

---

**स्वस्व० ।**

यत्र क्रियैव स्वस्य स्वहेतोश्चान्वयो हेतुहेतुमद्भावरूपः ख्याप्यते साऽपरा निदर्शना ।

**यथा—उन्नतं० ।**

अत्र पतेत्पदप्रतिपाद्यस्य पातस्य कार्यस्य लाघवे सत्युन्नतपदप्राप्तिरूपस्य कारणस्य च तथासंबन्धः पततिपदप्रतिपाद्यया पातक्रियया प्रतिपाद्यते । तथा च लाघवे सत्युन्नतपदप्राप्तिः पाते हेतुर्यथा दृषत्कणस्येति दृष्टान्तपर्यवसानान्निदर्शनात्वमिति ।

**अप्रस्तुत० ।**

अप्रस्तुतस्य प्रशंसा वर्णनम् । सैवाप्रस्तुतप्रशंसैवेत्यर्थः । प्रस्तुताश्रया प्रकृतप्रतिपत्तिहेतुः । एतच्चालंकारत्वबीजमतिप्रसक्तमिति निवारयति । अप्राकरणिकेन प्राकरणिकाक्षेपोऽप्रस्तुतप्र-

---

**स्वस्य** । कार्यस्य । **ख्याप्यते** । परान्प्रति बोध्यते ।

**उन्नतमिति** । उन्नतमुत्कृष्टमूर्ध्वस्थानं च । लघुरल्पमतिरपकृष्टगुरुत्ववांश्च । **पतनं** पदभ्रंशः, अधःसंयोगहेतुक्रिया च । ( दृषत्कणः । पाषाणकणः । ) चारुमारुतो मन्दवातः । न तु झञ्झावातः । हेलया पातोपपादकमिदम् । ( रथोद्धता छन्दः ) **तथासंबन्धः** । कार्यकारणभावरूपः । इयं संभवद्वस्तुसंबन्धनिबन्धनेत्युच्यते । एतच्च क्रियैवेत्येवकारेण दर्शितम् । अन्ये तु ' स्वहेत्वन्वयस्य ' इत्युपलक्षणं स्वक्रियया किंचिदर्थबोधनस्य । एवं च

' चूडामणिपदे धत्ते यो देवं रविमागतम् ।
सतां कार्याऽऽतिथेयीति बोधयन्गृहमेधिनः । '

इत्यादावप्येषैवेत्याहुः । **इति निदर्शना ।**

**अप्रस्तुतस्य** । अप्रकृतस्य । **अप्रस्तुतप्रशंसवेति** । तत्पदवाच्यैवेत्यर्थः । **एतच्चेति** । अप्रस्तुतप्रशंसनमात्रं समासोक्तावतिप्रसक्तमिति तद्वारणाय प्रस्तुताश्रयेत्युक्तमित्यर्थः । तदेवोपपादयति—**अप्राकरणिकेनेति** । प्रस्तुतव्यञ्जनं प्रस्तुताप्रस्तुतयोरसंबन्धे

१ क. ग. °वस्वरू° । २ क. ध्रुवम् । ३ ग. 'या निर्दिष्टस्य पत° । ४ क. 'स्यार्थस्याभि° । ५ क. बक्रिय° ।

कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।
तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥ ९९ ॥

तदन्यस्य कारणादेः । क्रमेणोदाहरणानि—

याताः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशाऽसि कथयत्येवं सबाष्पे मयि ।
लज्जामन्थरतारकेण निपतद्धाराश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः॥४३९॥

अत्र—प्रस्थानात्किमिति निवृत्तोऽसीति कार्ये पृष्टे कारणमभिहितम् ।

राजन्राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते ।

---

शंसा प्राकरणिकेनाप्राकरणिकाक्षेपः समासोक्तिरिति विवेकः ।

तां विभजते—**कार्ये०** ।

सेत्यनुवर्तते । कार्यादिपञ्चके प्रस्तुते तदन्यस्य कारणादिपञ्चकस्याप्रस्तुतस्य वर्णनमिति सा पञ्चधेत्यर्थः ।

तत्र कार्ये प्रस्तुते कारणस्य वर्णनं यथा—**याताः०** ।

अत्र प्रस्थानात्किं निवृत्तोऽसीति कार्ये पृष्टे कारणस्य प्रियाया भाविमरणोत्साहस्य वचनम् । किंशब्दः प्रश्नार्थ इति न कारणप्रस्तावः ।

कारणप्रस्तावे कार्यवचनं यथा—**राजन्०** ।

---

साति नेति तत्संबन्धदर्शनमुखेन तां विभजते—**कार्य इत्यादि । याता इति** ।( अमरुशतके 'प्रस्थानान्निवृत्तोऽसि किम्' इति मित्रेण पृष्टस्य गमननिवृत्तिहेतुं स्वप्रियावृत्तान्तं कथयतः कस्यचिदुक्तिः । याताः । गताः । ) न मिलन्ति नाऽऽयान्ति । या कृता सा कृतैव पुनर्न कार्येत्याह—पुनरिति । (मत्कृते । मदर्थम् ।) नैव चिन्ता कृतेत्यपलापे तत्कार्यमाह—नितरामिति । गमनानिच्छाज्ञानेन या लज्जा तया मन्थरा निष्क्रिया तारका यत्र । लज्जया कस्याप्यनवलोकनात् । धारारूपमश्रु । [1]पीताश्रुणेति पाठे निपतदेव पीतं संवृतमश्रु यत्रेत्यर्थः । चक्षुष्येकवचनं लज्जया संमुखदर्शनविच्छेदाय् । हसितेन । मद्गमनेऽप्येतत्प्राणाः स्थास्यन्तीति एवं प्रतारयतीति विस्मयप्रयुक्तेन । ( शार्दूलविक्रीडितं छन्दः । ) **कार्ये** । निवृत्तिरूपे । अत्रेदमेव प्रस्तुतम् । वर्णनीयत्वात् । अत्राप्रस्तुतेन मरणेनाऽऽक्षिप्तया गमननिवृत्तेरनुरागोत्कर्षकत्वेनैतस्या अलंकारत्वम् । अत एवोत्तरेण प्रश्नोन्नयनेऽपि नोत्तरालंकारः । तस्य चमत्कारजनकत्वाभावात् । अन्ये द्वयोः समावेशमिच्छन्ति ।

**राजन्निति** । ( राजानं प्रति कवेरुक्तिः । कुब्जे इति भोजिकायाः संबोधनम् । )

---

१ क. 'तत्पीताश्रु' ।

इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥ ४४० ॥

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गताः— इति कारणे प्रस्तुते कार्यमुक्तम् ।

एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तःशुचा ॥४४१॥

अत्रास्थाने जडानां ममत्वसंभावना भवतीति सामान्ये प्रस्तुते विशेषः कथितः ।

---

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः प्रपलाय्य गता इति शत्रुपलायने कारणे प्रस्तुते तस्य भाषणविशेषरूपं कार्यमुक्तम् ।

सामान्ये प्रस्तुते विशेषवचनं यथा—**एत०** ।

अत्र जडानामस्थल एव ममत्वसंभावना भवतीति सामान्ये प्रस्तुते पुरुषविशेषस्य स ममत्वविशेषोऽभिहितः ।

---

कुमाराश्च तत्सचिवाश्च तैः । एषां भोजनसमये शुकस्यापि भोजनलाभात् । ( शून्यायाम् । निर्जनायाम् । वलभौ । उपरिगृहे सौधे । भित्ताविति वाऽर्थः । शार्दूलविक्रीडितं छन्दः । ) **कार्यमुक्तमिति** । तेन च कारणं व्यज्यत इत्यर्थः । अत्र व्यङ्ग्याद्वाच्यस्याधिकचमत्कारकारित्वेन न ध्वनित्वव्यपदेशः । किं त्वलंकारव्यवहार एवेति बोध्यम् । एवमग्रेऽपि ।

**एतत्तस्येति** । ( भल्लटकविकृते भल्लटशतके कस्यचिन्मूर्खस्य वृत्तान्तं कुतश्चिदाकर्ण्य विस्मयेन भाषमाणं कंचित्प्रति कस्यचिदुक्तिः । ) मुखात्प्रतारकस्य कस्यचिन्मुखादपगतं शृण्वन्स जडो यन्मुक्तामणिरित्यमंस्त एतत्तस्य कियत् । यतोऽस्मादप्यधिकं किंचिज्जडत्वबोधकमस्ति । तदाह—अङ्गुल्यग्रेति । शनैरादीयमानेऽप्यङ्गुल्यग्रस्य लघुक्रिययाऽल्पचालनेन प्रविलयिन्यङ्गुलावेव लग्न इत्यर्थः । ( शृणु अन्यत् इति वा पदच्छेदः । अस्मादपि अन्यदधिकं शृणु इत्यर्थः । शार्दूलविक्रीडितं छन्दः । ) **ममत्वविशेष इति** । भ्रमविशेष इत्यपि बोध्यम् ।

---

१ क. °न्यभवनेऽप्येकै° । ख. °न्यवलभीष्वेकै° । २ क. °तं ज्ञा° । ३ क. ग. °हसैव° । ४ क. तस्याभाषण° । ५ क. °मस्थान ए° ।

सुहृद्वधूबाष्पजलप्रमार्जनं
करोति वैरप्रतियातनेन यः ।
स एव पूज्यः स पुमान्स नीतिमान्
सुजीवितं तस्य स भाजनं श्रियः ॥ ४४२ ॥

अत्र कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं प्रशमयसि, तत्त्वमेव श्लाघ्यः—इति विशेषे प्रकृते सामान्यमुदितम् ।

तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः—श्लेषः, समासोक्तिः, सादृश्यमात्रं वा तुल्यात्तुल्यस्य ह्याक्षेपे हेतुः । क्रमेणोदाहरणम्—

पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि
यायाद्यदि प्रणयने नमहानपि स्यात् ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक्प्रकटिता पुरुषोत्तमेन ॥ ४४३ ॥

---

विशेषे प्रस्तुते सामान्यवचनं यथा—सुहृ० ।

अत्र श्रीकृष्णं निहत्य नरकासुरवधूनां दुःखं यदि शमयसि तदा त्वमेव श्लाघ्य इति विशेषे प्रस्तुते सामान्यमुक्तम् ।

तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः । विशेषणविशेष्यवाचिनां सर्वेषामपि श्लिष्टत्वस्य, विशेषणमात्रवाचिनो वा श्लिष्टत्वस्य, श्लेषाभावेऽपि सादृश्यमात्रस्यैव वा प्रकृताक्षेपहेतुत्वात् । आद्यो यथा—पुंस्त्वा० ।

---

सुहृदिति । जलेति बाहुल्यसूचकम् । वैरप्रतियातनं कृतपीडेषु पीडादानम् । विष्णुना नरकासुरे हते कश्चन तन्मन्त्री नरकासुरसुहृदं [ शाल्वं ] प्रतीदमाह (वंशस्थं वृत्तम् ।)

श्लिष्टत्वस्येति । प्रकाशे श्लेषसमासोक्तिपदे श्लिष्टशब्दश्लिष्टविशेषणपरे । अप्रकृताप्रकृताक्षेपे तयोर्भावात् । द्वयोः प्रकृतत्वेऽप्रकृतत्वे वा श्लेषस्य प्रकृतेऽप्रकृतव्यवहारारोपे च समासोक्तेः स्वीकारादिति भावः ।

पुंस्त्वादिति । ( भल्लटकविकृते भल्लटशतके ७९ पद्यमेत् ) पुंस्त्वं पौरुषं पुंव्यञ्जनं च । नारीभूयामृतहरणात् । अधःसंपद्भ्रंशः पातालं च । वराहावतारे पातालं गत्वा पृथिव्युद्धरणात् । प्रणयने याचने । नमहान्महत्वरहितोऽल्प इत्यर्थः । बलिप्रार्थने वामनत्वप्राप्त्या जगद्रक्षणात् । विश्वस्योद्धरणं विपाद्विनाशनेन रक्षणम् । दिक् प्रकारः । पुरुषोत्तमः पुरुषश्रेष्ठः श्रीकृष्णश्च । ( पुरुषश्रेष्ठपक्षे पुंस्त्वात्प्रचलनं पुरुषार्थहानिः, अधोयानं स्वपदभ्रंशः, अमहत्वं गौरवहानिः, विश्वं सर्वजनमित्यर्थ इत्युदाहरणचन्द्रिका । वसन्ततिलका

---

१ ग. °खं प्र° । २ क. तदा त्वमे° । ३ क °स्यान्तरस्य ।

येनास्यभ्युदितेन चन्द्र गमितः क्लान्तिं रवौ तत्र ते
युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः ।
क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मना-
गेस्त्वेवं जडधामता तु भवतो यद्व्योम्नि विस्फूर्जसे ॥ ४४४ ॥

आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतं च वडवादहने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च ॥ ४४५ ॥

---

अत्र पुंस्त्वादित्यादिविशेषणानां पुरुषोत्तमेनेति विशेष्यस्य च श्लेषात्सत्पुरुषप्रतिपत्तिः । न च श्लेष एवायम् । 'अवयवशक्तेः समुदायशक्तिर्बलीयसी' इति न्यायात्प्राग्विष्णूपस्थितौ सत्पुरुषस्याऽऽक्षेपेणैवोपस्थितेः । श्लेषसत्त्वेऽप्यप्रस्तुतस्य प्रथमोपस्थित्यैवाप्रस्तुतप्रशंसात्वात् ।

द्वितीयो यथा—येना० ।

अत्र विशेष्यवाचिचन्द्रपदं न श्लिष्टम् ।

तृतीयो यथा—आदाय० ।

---

छन्दः । **सत्पुरुषेति** । अप्रकृतस्य श्रीकृष्णस्य प्रतीतौ जातायां पश्चात्प्रकृतेत्यादिः । **न च श्लेष एवेति** । विशेषणविशेष्ययोरुभयोरपि श्लिष्टत्वादिति भावः । **अवयवशक्तेरिति** । न च प्रकरणसत्त्वे योग एव बलवान् । विश्वोद्धरणरूपपदार्थसामर्थ्यरूपलिङ्गस्य विष्णावपि सत्त्वात् । एतेन श्लेषमूलो ध्वनिरित्यपास्तम् । ये तु श्लेषस्थल उभयोरप्यर्थयोः क्रमेण शक्त्यैव प्रतिपादनमिच्छन्ति, तन्मते कथमत्राप्रस्तुतप्रशंसा । अप्रस्तुतेन प्रस्तुतस्याव्यञ्ज्यत्वादत आह—**श्लेषसत्त्वेऽपीति** । अप्रस्तुतप्रतीत्युत्तरं तन्मूलिका तन्मूलमूलिका वा यत्र प्रस्तुतावगतिस्तत्राप्रस्तुतप्रशंसेति । एकशब्दवत्त्वसाधर्म्यात्परं 'तुल्ये तुल्यस्य' इत्युदाहरणतेति बोध्यम् ।

**येनासीति** । क्षीणधनः कश्चिदुपजीवनार्थमपकारिणं सधनमनुसरन्केनचिदुपालभ्यते । येनाभ्युदितेन क्लान्तिं गमितोऽसीत संबन्धः । उदितेनैव, न त्वपकृतेनापि । क्लान्तिस्तेजोहीनता ग्लानिश्च । प्रतिकर्तुं प्रत्यपकर्तुम् । पादः पदं रश्मिश्च । क्षीणेन धनहीनेन कलाहीनेन च । मनागीषदपि किं न लज्जस इत्यर्थः । अस्त्वेवं लज्जाशून्यत्वमप्यस्तु । जडधामता हिमाधारता मूढता च । विस्फूर्जसे सगर्वमुदेषि । अमायां सूर्येण सह संगत्य ततस्तेजोग्रहण चन्द्रस्येत्यागमसिद्धं पादग्रहणम् । ( शार्दूलविक्रीडितं छन्दः ) । अत्र श्लिष्टविशेषणमात्रमाहात्म्येन प्रस्तुतसधननिर्धनवृत्तान्ताक्षेपः ।

**आदायेति** । ( शुकस्य कवेः पद्यमिदमिति शार्ङ्गधरपद्धतौ स्पष्टम् । ) मुखं वदनं

---

१ क. 'गस्त्वेवं । २ क. 'नावदने । ३ क. 'विशेष्ये ।

**इयं च काचिद्वाच्ये प्रतीयमानार्थानध्यारोपेणैव भवति । यथा—**

**अब्धेरम्भःस्थगितभुवनाभोगपातालकुक्षेः**[1]
**पोतोपाया इह हि बहवो लङ्घनेऽपि क्रमन्ते**[2] **।**
**आहो रिक्तः कथमपि भवेदेष दैवात्तदानीं**
**को**[3] **नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः ॥ ४४६ ॥**

---

अत्र श्लेषाभावेऽपि सादृश्यमात्रेणासत्पुरुषाक्षेपः । यथा वा मम—

कौटिल्यं नयने निवारयतरां शीघ्रां गतिं शीलय
व्यक्तार्थां कुरु भारतीं विहसितेऽप्यौद्धत्यमायोजय ।
कुग्रामप्रमदाविलासरसिकः कान्तस्त्वयाऽऽसादितो
नायं नन्दिनि नागरीजनसमाचारैः समाकृष्यते ॥

इयं च त्रिधा—काचिद्वाच्यार्थे[4] प्रतीयमानार्थानध्यारोपमात्रेण । क्वचित्प्रतीयमानार्थाध्यारोपेण । क्वचित्त्वंशभेदेन तदध्यारोपानारोपाभ्याम् ।

तत्राऽऽद्या[5] यथा—अब्धे० ।

अत्रापुरुषेऽप्येतेऽर्था[6] अबाधिता एवेति नेह प्रतीयमानार्थाध्यारोपः ।

---

नदीसंगमस्थानं च । ( अर्जितम् । संपादितम् । दुर्णवेन । दुष्टेन समुद्रेण । वडवादहने । वडवानले । पातालमेव कुक्षिकुहरं तस्मिन् । वसन्ततिलका छन्दः । ) अत्र ग्रासकल्पं परधनमपहृत्य विफलव्ययकर्तारि दुरीश्वरे प्रकृते तत्सदृशस्याप्रकृतस्यार्णवस्य कथनम् ।

**कौटिल्यमिति** । ( नायिकां प्रति सख्या उक्तिः । 'नन्दिनि' इति नायिकायाः संबोधनम् । कौटिल्यम् । वक्रताम् । निवारयतराम् । अतिशयेन निवारय । शीलय । अभ्यस । अभ्यासं विना स्वाभाविकमन्दगमनस्यानिवर्तनात् । भारतीम् । वाचम् । विहसिते मधुरस्वरसहितहासे । नागरीजनानां समाचारा व्यवहारा नेत्रकौटिल्य–मन्दगमन–अस्पष्टार्थभाषण—अनौद्धत्यरूपास्तैः । न समाकृष्यते न वशी क्रियते । शार्दूलविक्रीडितं छन्दः ) अत्र दुष्प्रभुसत्कविवृत्तान्ताक्षेपः ।

**अब्धेरिति** । अर्णोऽम्भः । अम्भ इत्येव क्वचित्पाठः । तेन स्थगितस्तिरस्कृतो भुवनस्य भूमेराभोगो विस्तारः पातालकुक्षिस्तन्मध्यं च येन । सर्वपृथिव्या अब्धिप्रतिबन्धेनाग्रहणात् तिरस्कारः । जलैर्व्यापनात्पातालकुक्षेरपि सः । पोतोपायाः समुद्रवणिजः । पोतोऽब्धियानम् । क्रमन्ते उत्सहन्ते । आहो इत्यव्ययं यद्यर्थे । ( रिक्तो जलशून्यः । ) अवटः खातः कुहरं

---

१ क. अब्धेरर्णः स्थ° । २ क. °ने प्रक्रमन्ते । हं हो । ग. °नेपि क्षमन्ते । ३ क. ग. कोवा नु स्या° । ४ क. °द्वाक्यार्थे । ५ क. °त्राद्यो य° । ६ क. अत्र समुद्रेऽप्ये° ।

क्वचिदध्यारोपेणैव । यथा—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायाऽपि परोपकारकरणे मार्गस्थितस्यापि मे ॥४४७॥

क्वचिदंशेष्वध्यारोपेण । यथा—

सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरादिक्किं भूयसोक्तेन वा ।
सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः ॥ ४४८॥

---

द्वितीया यथा—कस्त्वं० ।

अत्र वाच्यशाखोटके संबोध्यत्वोच्चारयितृत्वादिकमनुपपन्नमिति प्रतीयमानाध्यारोपः ।

तृतीया यथा—सोऽपूर्वो० ।

---

तस्यैव गम्भीरभागः । कल्पः समर्थः । ( मन्दाक्रान्ता छन्दः । ) अत्रोपमर्दनशीलस्य दुष्प्रभोः पूर्णतैव वरम्, न रिक्तता, अत्यन्तोपमर्दनापत्तेरिति व्यङ्ग्यं गुणीभूतमेव । अत्र समुद्रेऽपीति पाठः । ध्वनित्वं तु नात्र । इहात्यन्ताप्रस्तुतस्य तत्त्वादेव वर्णनमनुचितमिति तत्रापर्यवसानात्तेन स्वस्योचितत्वसिद्धये व्यङ्ग्यार्थस्य बलादाकृष्टत्वेन वाच्यसिद्ध्यङ्गत्वात् ।

**कस्त्वमिति** । शाखोटको भूतावासवृक्षः । कस्त्वं भोरिति वृक्षं प्रति प्रश्नः । कथयामीत्यादि तदुत्तरम् । वैराग्यादिवेति पुनः प्रश्नः । साधु विदितमित्युत्तरम् । पुनः प्रश्नः कस्मादिति । इदं वैराग्यम् । वामेन वामभागेन वामाचारेण युक्तश्च । सर्वात्मना छायारोहणशयनादिना । न च्छायेति भूतावासत्वेन शाखोटकच्छायानाश्रयणम् । ( शार्दूलविक्रीडितं छन्दः । ) प्रतीयमानोऽत्र प्रकृतासाधुपुरुषः । न चात्र रूपकम् । प्रकृतेऽप्रकृतारोप एव तत्स्वीकारात् । एतेन शाखोटकवटपदाभ्यां साध्वसाधुपुरुषौ निगीर्याध्यवसिताविल्यातिशयोक्तिरित्यपास्तम् । तत्राऽऽरोप्यस्यैव प्राधान्येन संबोध्यत्वाद्यनन्वयतादवस्थ्याच्च । विद्यमानाया अप्यतिशयोक्तेरेतदङ्गत्वाच्च । अत्र सधनः पूज्योऽधनो निन्द्य इति प्रस्तुतव्यञ्जनम् । नन्वत्राप्रस्तुतव्यवहारेण प्रस्तुतव्यवहारस्य निगरणमेवास्तु । किमनया । तात्पर्यानुपपत्तेरपि लक्षणाबीजत्वात् । बोध्यसंबन्धश्च लक्षणा । वाच्यव्यवहाराभेदेन च प्रस्तुतव्यवहारप्रत्यय इति चेन्न । वाच्यार्थताटस्थ्येनैव व्यङ्ग्यप्रतीतेरत्र सहृदयसंमतत्वात् । शक्यसंबन्धस्यैव लक्षणात्वाच्च ।

**सोऽपूर्व इति** । ( भल्लटकविकृते भल्लटशतके १८ पद्यमिदम् । ) रसनाविपर्ययो

---

१ क. बोध्यते । २ क. °त्कर्मणश्चा° । ३ क. °तीयो य° ।

अत्र रसनाविपर्यासः शून्यकरत्वं च भ्रमरस्यासेवने न हेतुः । कर्ण-चापलं तु हेतुः । मदः प्रत्युत सेवने निमित्तम् ।

**निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् ।**

---

अत्र हस्तिनो रसनाविपर्यासः शून्यकरत्वं मदश्च वाच्यस्य भ्रमरस्य सेवनाभावहेतुत्वेन वाच्यानि, न तद्धेतवः । मदस्तु प्रत्युत सेवने हेतुरिति तदंशे प्रतीयमानपुरुषाध्यारोपापेक्षा । कर्णचापलं तु भ्रमरस्यासेवने हेतुरेवेति तदंशे नाध्यारोप इति ।

**निगीर्या०।**

प्रकृतस्योपमेयस्य समेनोपमानेन निगीर्याध्यवसानं द्रढीयसी बुद्धिः सैकाऽतिशयोक्तिः ।

---

वचनास्थैर्यं विपरीताग्रत्वं च । उपकण्ठं तद्रसनाग्रमिति प्रसिद्धेः । कर्णचापलं परवचनप्रतार्यत्वमनवरतकर्णचापलं च । मदो गर्वो दानजलं च । स्वपरदिक्, आप्तानाप्तविभागः । एतत्सर्वं किं विस्मृतवान् । यद्यत इत्यर्थः । निश्चितवानसीति युक्तः पाठः । यत्सेव्यत एष इत्यन्वयः । वारणोऽनुगतवारको हस्ती च । अन्तःशून्यकरो निर्धनो मांसादिशून्यमध्यशुण्डादण्डश्च । ( शार्दूलविक्रीडितं छन्दः । ) **मदश्चेति** । चेन विस्मृतस्वपरदिक्त्वम् । एवं च रसनाविपर्ययादौ वचनास्थैर्यादिकमारोप्य भ्रमरे प्रपन्नसेवकत्वमारोप्य वारणे निवारकप्रभुत्वमारोप्य वाक्यार्थोपपत्तिरिति भावः । **कर्णेति** । एवं चैतदंशे भ्रमरपदं द्विरेफपरमेवेति भावः । ऐकरूप्यायैकवाक्यत्वाय वा तदंशेऽप्यारोप इत्यन्ये । अत्र श्लिष्टशब्दरूपसाधारणधर्मनिबन्धनं सादृश्यम् ।

अत्रेदं बोध्यम्—अप्रस्तुतपदेन मुख्यतात्पर्यविषयीभूतार्थातिरिक्तोऽर्थो ग्राह्यः । एतेन

'किं भृङ्ग सत्यां मालत्यां केतक्या कण्टकेद्धया ।'

इत्यत्र प्रियतमेन साकमुद्याने विहरन्ती काचिद्भृङ्गं प्रत्येवमाहेति प्रस्तुतेन प्रस्तुतान्तरद्योतने प्रस्तुताङ्कुरनामा भिन्नोऽलंकार इत्यपास्तम् । मदुक्तरीत्याऽस्या एव संभवात् । यदा मुख्यतात्पर्यविषयः प्रस्तुतश्च नायिकानायकवृत्तान्ततदुत्कर्षकतया गुणीभूतव्यङ्ग्यस्तदाऽत्र सादृश्यमूला समासोक्तिरेवेति केचित् । अन्ये त्वप्रस्तुतेन प्रशंसेत्यप्यप्रस्तुतप्रशंसाशब्दार्थः । एवं च वाच्येन व्यक्तेन वाऽप्रस्तुतेन वाच्यं व्यक्तं वा प्रस्तुतं यत्र सादृश्याद्यन्यतमप्रकारेण प्रशस्यत उत्कृष्यत इत्यर्थादत्रापीयमेवेत्याहुरिति दिक् । इत्यप्रस्तुतप्रशंसा ।

**द्रढीयसीति** । स्वासाधारणधर्मेणानुपादानादनाहार्याऽभेदधीरित्यर्थः । गौणसाध्यव-

---

१ क. समेन । २ क. °रुषत्वाध्या° ।

**प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥ १०० ॥**
**कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः ।**
**विज्ञेयाऽतिशयोक्तिः सा**

**उपमानेनान्तर्निगीर्णस्योपमेयस्य यदध्यवसानं सैका । यथा—**

**कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।**
**सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्[2] ॥ ४४९ ॥**

---

यच्च तदेव वस्त्वन्यत्वेन विविक्ताकारवस्त्वन्तरत्वेनाध्यवसीयते सा द्वितीया । यच्च चेच्छब्देन यदिशब्देन वा यद्यर्थोक्तौ कल्पनमर्थादसंभविनोऽर्थस्य सा तृतीया । यश्च कारणकार्ययोः प्रसिद्धस्य पौर्वापर्यस्य विपर्ययो वैपरीत्यं कारणस्य शीघ्रकारिताप्रतीतये[3] सा चतुर्थीति चतस्रोऽतिशयोक्तयः ।

तत्राऽऽद्या यथा—**कमल०** ।

---

सानामूलेयम् । **तदेवेति** । एवकारेण धर्मिभेदाभावः सूचितः । **अन्यत्वेनेति** । तच्चान्यादिशब्दैः । **विविक्ताकारम्** । अतिशयिताकारम् ।

**कमलमिति** । ( प्रियां दृष्ट्वा तत्सखीं प्रति नायकस्योक्तिः । ) कमलं कान्तावक्त्रम् । अनम्भसि निर्जलदेशे । कुवलये नीलोत्पले नेत्ररूपे । तानि कुवलये द्वे कमलं च । कनकलतिका कान्तातनुः । ( सुकुमारा मृद्वी चासौ सुभगा सुन्दरी । आर्या छन्दः । ) अत्र प्रकरणलभ्यनायिकावक्त्रादीनां कमलादितादात्म्येनाध्यवसानान्मुखादेरतिशयः । अत्रोपमानतादात्म्यमुपमेये । अत्र केचित् । ' प्रकृतस्य परेण ' इत्येव प्रकाशे पाठदर्शनात्तत्र च सामान्यतो निर्देशाच्छुद्धसाध्यवसानलक्षणया धर्मधर्मिणोरेकत्वाध्यवसायेऽप्येषा । ' समेन ' इति पाठेऽपि तदुपलक्षणम् । यथा

' कर्णलम्बितकदम्बमञ्जरीकेशरारुणकपोलमण्डलम् ।
निर्मलं निगमवागगोचरं नीलिमानमवलोकयामहे ॥ '

इत्यत्र नीलिमपदस्य तदाश्रये शुद्धसाध्यवसानलक्षणया नीलिमाऽभेदप्रतीतिः । एवं हेतुफलयोरभेदाध्यवसायेऽप्येषा । यथा

'वित्रासनं समरसीमनि शात्रवाणामाजीवनं विबुधपर्षदि कोविदानाम् ।
संमोहनं सुरतसंसदि कामिनीनां रूपं तदीयमवलोकयतोऽद्भुतं मे ॥ '

इत्यादौ वित्रासनादिपदस्य तद्धेतौ शुद्धसाध्यवसाना । एतेन

' हेतोर्हेतुमता सार्धमभेदो हेतुरुच्यते '

इति हेत्वलंकारोऽयं पृथगित्यपास्तमित्याहुः । अत्र भेदेऽभेदः । अत्र कमलादिपदानां मुखत्वं लक्ष्यतावच्छेदकम् । तेन रूपेण प्रथमतो बोधे तद्धर्मावच्छिन्ने कमलाभेदप्रत्ययो

---

१ ख. 'योश्चैव पौ' । २ क. चेयम् । ३ क. प्रतीयते ।

**अत्र मुखादि कमलादिरूपतयाऽध्यवसितम् ।**

**यच्च तदेवान्यत्वेनाध्यवसीयते, साऽपरा । यथा—**

**अण्णं लडहत्तणअं अण्णा विअ का वि वत्तणच्छाआ ।**
**सामा सामण्णपआवइणो रेह च्चिअ ण होई ॥ ४५० ॥**

---

अत्र मुखादि कमलादित्वेनाध्यवसितम् । यथा वा मम—

कलशे परममहत्त्वं तिमिरस्तोमस्य सोमसहवासः ।
वियति च शैवलवल्ली शिव शिव कुसुमेषु सर्गसौभाग्यम् ॥

द्वितीया यथा—**अण्णं०** ।

---

व्यञ्जनया । बाधबुद्धेश्च न व्याञ्जनिके प्रतिबन्धकत्वमित्यनाहार्या धीरत्रेति केचित् । आल्हादकत्वेनैव मुखं लक्ष्यं, शेषं प्राग्वत्, इत्यपरे । अत्र पक्षे तद्धर्मावच्छिन्ने कमलभेदबाधस्यैवाभावादनाहार्यत्वं स्पष्टमेव । अन्ये तु शक्यतावच्छेदकरूपेणैव मुखादिभानं वदन्ति । तन्मतेऽभेदप्रधानातिशयोक्तिरित्यस्योपमानतावच्छेदकस्यैव भेदाभावरूपतया निर्वाहः । एतदेव चात्र मते निगरणं यत्स्ववाचकपदेन शक्यतावच्छेदकरूपेणैवास्य बोधनम् । सादृश्यातिशयमहिम्ना च बाधबुद्धेः स्थगनादतन्मतेऽप्यनाहार्यैव धीरिति दिक् ।

**कलश इति** । कलशे । स्तने । तिमिरस्तोमस्य । केशसंघातस्य । सोमसहवासः । मुखसहवासः । वियति । मध्यदेशे । शैवलवल्ली । रोमावली । कुसुमेषुः । मदनः । (गीतिच्छन्दः ।)

**अण्णमिति** ।

अन्यत्सौकुमार्यमन्यैव च काऽपि वर्तनच्छाया ।
श्यामा सामान्यप्रजापते रेखैव च न भवति ॥

सुकुमारशब्दस्य लडहादेशः । वर्तते जीवतीति वर्तनं शरीरम् । छाया कान्तिः । श्यामा शीतोष्णकाले उष्णशीता ।

शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला ।
सर्वावयवशोभाढ्या सा श्यामा परिकीर्तिता ॥

सामान्यप्रजापतेः सर्वसाधारणप्रजापतेः । रेखा निर्मितिः । [ आर्या जघनविपुला । ] अत्रान्यदेव सौकुमार्यमित्युक्त्याऽस्याः सौन्दर्ये सौन्दर्यान्तरादतिशयः प्रतीयते । अत्राभेदे भेदः । अत्रेदं बोध्यम् । 'प्रस्तुतस्य यदन्यत्वम्' इत्यस्य प्रस्तुतस्यान्यवस्तुत्वेनाध्यवसाय इत्यप्यर्थः । यथा,

'तस्याः सर्गे नियतमिन्दुसुधामृणालज्योत्स्नादि कारणमभून्मदनश्च वेधाः ।'

इत्यत्र प्रकृतनायिकासंबन्धिकारणस्य निर्मातुश्च विविक्ताकारवस्त्वन्तररूपमृणालादित्वेनाध्यवसानम् । 'अस्याः सर्गविधौ' इत्यादौ तु नैवम् । निश्चयाभावात् । यथा वा

---

१ क. ०नानुमीयते ।

यद्यर्थस्य यदिशब्देन चेच्छब्देन वोक्तौ यत्कल्पनम् ( अर्थादसंभविनोऽर्थस्य ) सा तृतीया । यथा—

राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः ।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥ ४५१ ॥

---

स्पष्टम् ।

---

तृतीया यथा—**राकाया०** ।

' प्रत्यम्भो नवपुण्डरीकमुकुलश्रेणी प्रतिक्ष्माधरं
पूर्णेन्दोरुदयः प्रतिक्षितिरुहं मल्लीप्रसूनोत्करः ।
किंचान्यत्कथयामि वीर जगतीरालिम्पति त्वद्यशो-
विस्तारे प्रतिदेशमेव दिविषत्स्रोतस्वतीनिर्झरः ॥

अत्रैकैव कीर्तिस्तत्तत्स्थाने योग्यतावशात्तेन तेन रूपेणाध्यवसिता । यथा वा

' स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः । '

इति । अत्र निमित्तभेदात्तत्तद्रूपेणाध्यवसायः । स च कविनिबद्धकर्तृक इत्यन्यत् ।

' गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने । '

इत्यत्रापीयमेव । अत्र श्लेषसंकीर्णेयमित्यन्यत् । एतेनेदृशेषु विषयेषूल्लेखालंकारोऽयमतिरिक्त इति केषांचिदुक्तिः परास्ता ।

' गजत्रातेति वृद्धाभिः श्रीकान्त इति यौवतैः ।
यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकम् ॥ '

इत्यत्र तु नायमलंकारः । अध्यवसानाभावात् । न चैवं कोऽत्रालंकारः । न कोऽपि । किंतु तेषां तथाज्ञानानि भगवद्विषयकभाव उद्दीपनानीति बोध्यम् । नह्युद्दीपनसंसारः सर्वोऽप्यलंकारेष्वेवेति नियमोऽस्ति । एवम् ' अकृशं कुचयोः कृशं वलग्ने ' इति पद्येऽपि बोध्यम् ।

**राकायामिति** । [ अमृतांशोः, चन्द्रस्य । साम्यं सादृश्यमेव पराभवः । निरुपमस्योपमानसंभव एव पराभवः । ] पूर्वार्धे पूर्णेन्दौ कलङ्काभावस्यासंबन्धे संबन्धः कल्पितः । उत्तरार्धे साम्यसंबन्धसंभवेऽपि तदसंबन्धः पराभवपदेन सूचितः । एवं चासंबन्धे संबन्ध इति द्विविधेयम् । यद्यर्थोक्तावित्युपलक्षणमुक्तप्रकारद्वयस्य । एवं च

सौधाट्टानि पुरस्यास्य स्पृशन्ति विधुमण्डलम् । '

इत्यत्राप्यसंबन्धे संबन्धरूपेयमेव । यत्त्वत्र ' स्पृशन्तीवेदुमण्डलम् ' इति कृत उत्प्रेक्षाप्रतीतेरिवाभावे गम्योत्प्रेक्षैवोचिता । अन्यथा

' त्वत्कीर्तिर्भ्रमणश्रान्ता विवेश स्वर्गनिम्नगाम् ।

**कारणस्य शीघ्रकारितां वक्तुं कार्यस्य पूर्वमुक्तौ चतुर्थी । यथा—**

**हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।**
**चरमं रमणीवल्लभ लोचनविषयं त्वया भजता ॥ ४५२ ॥**

**प्रतिवस्तूपमा तु सा ॥ १०१ ॥**

---

चतुर्थी यथा—हृदय० ।

**प्रतिवस्तूपमा०** ।

इति त्वदुक्तेऽपि गम्योत्प्रेक्षा न स्यादिति । तन्न । नूनं मुखं चन्द्र इत्यादौ नूनंपदाभावे गम्योत्प्रेक्षाया आपत्तेः । रूपकस्यानापत्तेश्च । त्वत्कीर्तिरित्यत्र बहुदूरगमने स्वर्गगमने वा स्वर्गङ्गाप्रवेशतादात्म्योत्प्रेक्षायाः कीर्तौ स्वर्गङ्गाप्रवेशकर्तृत्वोत्प्रेक्षाया अनङ्गीकारे भ्रमणश्रान्तत्वरूपविशेषणवैयर्थ्यवत्प्रकृत उत्प्रेक्षासाधकाभावाच्च । स्वर्गसंबन्धित्वरूपानुपात्तधर्मनिमित्तेयम् । अन्त्ये स्वर्गगमनरूपानुपात्तधर्मनिमित्तेति दिक् । राकायामित्युदाहरणे व्यतिरेकालं-

---

कारगर्भेयम् । एवं

'लावण्यद्रविणव्ययो न गणितः क्लेशो महानर्जितः
स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः ।
एषाऽपि स्वगुणानुरूपरमणाभावाद्वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता ॥'

इत्यत्रापि 'एषाऽपि स्वगुणानुरूपरमणाभावात्' इत्यत्रासंबन्धे संबन्धस्तन्वीलावण्यप्रकर्षप्रतिपादनार्थ उक्तः ।

**चतुर्थी** । कार्यकारणयोः पौर्वापर्यविपर्ययरूपा । विपर्ययः कार्यस्य प्राथम्येन सहभावेन च । तत्राऽऽद्यमाह—**हृदयमिति** । (दामोदरगुप्तकृते कुट्टनीमते ९६ पद्यमिदम् ।) कुसुमान्येव चापो बाणाश्च यस्य तेन मदनेन मालत्या मालतीनाम्न्या नायिकाया हृदयमादौ पूर्वमधिष्ठितम् । चरमं पश्चात् । लोचनविषयं नेत्रगोचरताम् । भजता प्राप्नुवता । दृष्टेनेति यावत् । त्वय ऽऽक्रान्तम् । ( आर्या छन्दः ) । अत्र कारणस्य कान्ताधिष्ठानस्य शीघ्रकारित्वं वक्तुं कार्यस्य कन्दर्पाधिष्ठानस्य प्रथममुक्तिः । अन्त्यं यथा—

'सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यं मण्डलं च महीभृताम् ॥'

इत्यत्र सममेव न तु पूर्वापरभावेनेति प्रतीतेः । सिंहासनाक्रमणं कारणम् । महीभृन्मण्डलाक्रमणं कार्यम् । **इत्यतिशयोक्तिः** ।

---

१ ग. व्रजता ।

सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।

साधारणो धर्म उपमेयवाक्ये चोपमानवाक्ये च कथितपदत्वस्य दुष्टतयाऽभिहितत्वाच्छब्दभेदेन यदुपादीयते, सा वस्तुनो वाक्यार्थस्योपमानत्वात्प्रतिवस्तूपमा । यथा—

देवीभावं गमिता परिवारपदं कथं भजत्येषा ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥ ४५३ ॥

---

एकस्य सामान्यस्य साधारणधर्मस्य वाक्यद्वय उपमानोपमेयवाक्ययोर्यत्र द्विरवस्थितिः । अर्थाच्छब्दभेदेन । अभिन्नस्य पदस्य दुष्टत्वात् । सा प्रतिवस्तूपमा । वस्तुनो वाक्यार्थस्योपमानत्वात् । अत्र 'द्विः' 'द्वये' इत्यनेकोपलक्षके । मालानुरोधात् । सा च द्विधा— अमालारूपा मालारूपा च ।

तत्राऽऽद्या यथा—देवी० ।

अत्र परिवारपदत्वपरिभोगयोग्यत्वयोरनर्थान्तरत्वादुदाहरणत्वमित्येके । 'कथं भजति'

---

**एकस्येति** । तेन निदर्शनादृष्टान्तयोर्व्युदासः । तत्र बिम्बप्रतिबिम्बभावेन निर्देशेनैकत्वविरहात् । **अवस्थितिः** । उपादानम् । प्रतिवस्तु प्रतिवाक्यार्थमुपमा समानधर्मोऽस्यामिति व्युत्पत्तेः । तदाह—**वस्तुन इति** । एवं चोपमेयत्वमपि वाक्यार्थस्येति ध्वनितम् । न च

'दिवि स्थितो भानुरिव भूस्थस्त्वं भ्राजसे नृप ।'

इति वाक्यार्थोपमायामतिव्याप्तिरिति वाच्यम् । वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मकं वाक्यार्थयोर्गम्यमौपम्यमित्यस्य विवक्षितत्वात् । तत्र तु इवशब्देन वाच्यमेवेत्यदोषात् ।

'निर्मलं वदनं कान्ते विमलं कमलं मम ।'

इत्यादावतिप्रसङ्गवारणाय वाक्यार्थयोरिति । अत एव

'आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृतम् ।
भ्रमद्भ्रमरसंभारं स्मरामि सरसीरुहम् ॥'

इति स्मरणालंकारेऽपि नातिव्याप्तिः । पद्मसदृशमाननमित्येव तत्र प्रतीतेः ।

'आपद्गतः खलु महाशयचक्रवर्ती विस्तारयत्यकृतपूर्वमुदारभावम् ।
कालागुरुर्दहनमध्यगतः समन्ताल्लोकोत्तरं परिमलं प्रकटी करोति ॥'

इत्यत्राऽऽपद्गतत्वदहनमध्यगतत्वयोर्बिम्बप्रतिबिम्बभावेऽप्युपमानोपमेयवृत्तिधर्मो वस्तुप्रतिवस्तुभावापन्न एव । दृष्टान्ते तु साक्षात्तद्वृत्तिधर्मांशेऽपि बिम्बप्रतिबिम्बभाव इति ततो विशेषः । एकस्यैव धर्मस्य पृथक्शब्दाभ्यामुपादानं वस्तुप्रतिवस्तुभावः ।

**देवीति** । राजानं प्रति देवीसख्या उक्तिः । देवीभावम् । देवीत्वम् । देवी कृताभिषेका । ( गमिता प्रापिता ) परिवारपदं साधारणकलत्रपदम् । परिभोगो भूषाद्यर्थमुपादानम् । दैवतेति । स्वर्णादिघटितप्रतिमेत्यर्थः । [ आर्या छन्दः । ] **इत्येक इति** । अत्रारुचिस्तु

---

१ ख. 'जत्वेषा । २ ख. 'नयोग्यत्व' ।

यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥४५४॥

इत्यादिर्मालाप्रतिवस्तूपमा द्रष्टव्या । एवमन्यत्राप्यनुसर्तव्यम् ।

**दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥ १०२ ॥**

एतेषां साधारणधर्मादीनाम् । दृष्टोऽन्तः ( निश्चयो ) यत्र स दृष्टान्तः ।

---

' न खलु ' इत्यनयोरेकार्थतया तथात्वमित्यपरे ।

अन्त्या यथा—यदि० ।

तयोर्वाक्यार्थगतसादृश्यरूपत्वाभावः । **एकार्थतयेति** । अनौचित्यरूपैकार्थतयेत्यर्थः । एवं च दैवतरूपाङ्कितरत्नस्य भोगयोग्यत्वं यथाऽनुचितं तथा देव्याः परिवारपदयोग्यत्वमनुचितमित्यौपम्ये पर्यवसानम् । ननु यथा ' पर्वत एतद्वह्निमान् एतद्धूमात् ' इत्यत्र महानसस्य दृष्टान्तताऽनुचिता । एवम् ' एषा परिवारपदत्वायोग्या देवीत्वात् ' इत्यत्र दैवतरूपाङ्कितरत्नस्य दृष्टान्तताऽनुचितेति चेन्न । तेन तद्वृत्तिसामान्यधर्मावच्छिन्नयोर्व्याप्तिसिद्धौ 'यत्सामान्ययोर्व्याप्तिस्तद्विशेषयोः ' इति न्यायेनोक्तविशेषनियमसिद्धेरदोषात् । नियमविशेषरहितकेवलार्थमात्रस्य प्रकृतत्वे तु अप्रकृतवाक्यार्थनिरूपितमौपम्यमात्रं गम्यम् । यथा

---

' भैरभ्रे भासते चन्द्रो भुवि भाति भवान्बुधैः । '

इति दिक् । वैधर्म्येणाप्येषा दृश्यते ।

' वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः ।
न हि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥ '

इत्यादौ । यद्यप्यत्र पुरुषः पूज्यत्ववान्सङ्गविशेषवत्त्वादित्यर्थे तुम्बीफलवैकल्यप्रयुक्तमहिमाभावविशिष्टो वीणादण्डो न दृष्टान्तस्तथाऽप्यनेन दृष्टान्तेन सङ्गविशेषाभावप्रयोज्यपूज्यत्वाभाववानिति तद्व्यतिरेक आक्षिप्यते । तत्र पूर्वोक्तरीत्यैकविशेषेऽपरविशेषस्य दृष्टान्तत्वाभावात्तद्वृत्तिसामान्यावच्छिन्नव्यतिरेक आक्षिप्यते । सिद्धे च तस्मिन्नुपात्तविपरीतदृष्टान्तेन तादृशसामान्यान्वयनियमसिद्धौ यत्सामान्ययोरिति न्यायात्तादृशविशेषावच्छिन्नकाव्योक्तान्वयनियमसिद्धिः । एवं च तुम्बीफलराहित्यवद्वीणादण्डसदृशः सङ्गविशेषाभाववान्पुरुष इति बोधः । तुम्बीफलवद्वीणादण्डसदृशः सङ्गविशेषवान्पुरुष इति च बोधः ।

**यदीति** । किमद्भुतं स्वाभाविकत्वान्नाद्भुतमित्यर्थः । किं ततः सदैवेत्यनयोरप्येवम् । सतामविषादिता ( विषादराहित्यं ) प्रकृतिरेव । स्वभाव एव नाऽऽश्चर्यमित्यर्थः । ( द्रुतविलम्बितं वृत्तम् । ) **इति प्रतिवस्तूपमा** ।

---

१ क. °दिका माला° ।

**त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् ।**
**आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः ॥ ४५५ ॥**

**एष साधर्म्येण । वैधर्म्येण तु—**

---

अत्र किमद्भुतमित्यादिभिरद्भुताभावस्य वाक्यचतुष्टयेऽप्युपादानान्मालात्वम् । चतुर्थवाक्यं चोपमेयवाचि ।

**दृष्टान्तः०** ।

एतेषामुपमानोपमेयसाधर्म्याणां सर्वेषां प्रतिबिम्बनं दृष्टान्तः । दृष्टोऽन्तो निश्चय उपमानिर्वाहकोऽत्रालंकार इति व्युत्पत्तेः । स च द्विधा—साधर्म्यवैधर्म्यरूपाभ्याम् ।

तत्र साधर्म्येण यथा—**त्वयि०** ।

अत्र साधर्म्यस्यापि प्रतिबिम्ब एवेति प्रतिवस्तूपमाभेदः ।

---

**प्रतिबिम्बनम्** । विम्बप्रतिबिम्बभावः । न त्वेकत्वमित्यर्थः । अत एव प्रतिवस्तूपमातो भेदः । न चात्रोपमा । यथेवादिशब्दाभावात् । नाप्यर्थान्तरन्यासः । सामान्यविशेषभावाभावात् । दृष्टान्तपदयोगमाह—**दृष्ट इति** । गृहीतप्रामाण्यक इत्यर्थः । **निश्चयः** । दार्ष्टान्तिकवाक्यार्थनिश्चयः । दृष्टान्तवाक्यार्थे गृहीतसहचारेण दार्ष्टान्तिकार्थप्रामाण्यनिश्चयात् ।

**त्वयीति** । ( नायिकासख्या नायकं प्रत्युक्तिः । ) दृष्ट एव दृष्टमात्रे । तस्याः । मालविकायाः । ( निर्वाति । उच्छ्वसिति । प्रसन्नं भवति । आर्या छन्दः । ) अत्र पद्ये त्वयीत्यत्र सप्तमीनिर्देशाद्धिमांशोरित्यत्र षष्ठीनिर्देशाच्च मनोभवज्वलितप्रतिनिर्देशस्य रविकिरणज्वलितत्वस्यानुक्त्या न्यूनवाचासंष्ठुलमिदं पद्यम् । अत्र नृपचन्द्रयोर्नायिकाकुमुद्वत्यार्मनःकुसुमयोर्मनोभवज्वलितसूर्यकरज्वलितयोर्निर्वाणप्रकाशयोश्च बिम्बप्रतिबिम्बभावः । कुमुद्वत्याः कुसुमस्य हिमांशुदर्शने विकास इव तस्या मनमस्त्वद्दर्शन उच्छ्वास इति प्रतीयमानोपमायां मन कुसुमयोर्बिम्बप्रतिबिम्बभावापन्नयोः साधारणधर्मत्वम् । अत्र नृपदर्शनमनोभवज्वलितप्रकाशयोः कार्यकारणभावनिश्चयो ' यद्यदन्वयानुविधायि तत्तज्जन्यम् ' इति व्याप्त्या दृष्टान्तगृहीतसहचारनिश्चयप्रयुक्तया भवतीत्यर्थसङ्गतिः । न च हिमांशोरालोके यथा कुमुद्वतीकुसुमं विकसति तथा त्वयि दृष्टे तस्या मनो हृष्यतीत्युपमां विना पूर्वोत्तरार्धयोरसंबन्धान्निदर्शनासंकरः । तत्र साधारणधर्मानुपन्यासात् । अत्र वाक्यार्थयोः स्वस्वार्थे निरपेक्षत्वात् । निदर्शनायां तत्रापि सापेक्षत्वाच्च ।

---

१ क. ग. कुमदं ।

तवाऽऽहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः ।
भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः॥४५६॥

**सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।**
**सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥ १०३ ॥**

प्राकरणिकाप्राकरणिकानाम्, अर्थादुपमानोपमेयानाम्, धर्मः क्रियादिः एकवारमेव यदुपादीयते, तदेकस्यैव समस्तवाक्यदीपनाद्दीपकम् ।

यथा—

किवणाणँ धणं णाआणँ फणमणी केसराइँ सीहाणं ।
कुलवालिआणँ थणआ कुत्तो छिप्पन्ति अमुआणम् ॥४५७॥

---

वैधर्म्येण यथा—तवा० ।

वैधर्म्यविपर्यये[2] साधर्म्यपर्यवसानमिति दृष्टान्तालंकारत्वम् ।

सकृ० ।

प्रकृताप्रकृतात्मनामर्थादुपमानोपमेयभूतानां धर्मिणां धर्मस्य क्रियादेः सकृद्वृत्तिरेकवारमेवोपादानं यत्तदेकम् । एकस्थस्यैव सर्ववाक्यदीपकत्वेन प्रदीपसाम्यात् । कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिरेव द्वितीयं दीपकम् । इतिशब्दः प्रकारे । तेनोक्तप्रकारद्वयवद्दीपकमित्यर्थः ।

आद्यं यथा—किवणाणँ० ।

---

**वैधर्म्येण** । विपर्यये साधर्म्यपर्यवसायिना । **तवेति** । आहवे युद्धे । साहसकर्मणः सकाशाच्छर्म यस्य । ( कृपाणः खड्गः । भटा योद्धारः । ) विशरारुताम् । झटिति नश्वरताम् । [ अगुः । प्राप्तुः । अवाते । निर्वातदेशे । पांसवः । रजांसि । वंशस्थं वृत्तम् । ] **वैधर्म्यविपर्यये** । वाते तु न तथेत्येवंरूपे । अत्राऽऽहववातसंबन्धिभङ्गुरत्वास्थिरत्वयोरुपमानोपमेयभाव इति दिक् । **इति दृष्टान्तः** ।

**अर्थादिति** । प्रकृताप्रकृतयोः सजातीयधर्मसंबन्धस्योपमायां पर्यवसानात् । सा च व्यङ्ग्यैव वाचकविरहात् । व्यङ्ग्याया अप्यस्या वाच्योपकारकत्वाद्गुणीभूतव्यङ्ग्यत्वमेव । न तु ध्वनित्वम् । अतोऽत्र नोपमाशङ्का । **क्रियादेरिति** । आदिना गुणादिसंग्रहः । **एकस्थस्येति** । एकत्र, तिष्ठति तस्येत्यर्थः । **साम्यादिति** । दीप इव दीपकम् । संज्ञायां कन् । प्रकृताप्रकृतप्रकाशकत्वेन च सादृश्यम् ।

**किवणाणमिति** ।

'कृपणानां धनं नागानां फणमणिः केशराश्च सिंहानाम् ।
कुलपालिकानां च स्तनाः कुतः स्पृश्यन्तेऽमृतानाम् ॥'

---

१ क. पाणिं । २ क. विपर्ययेण । ३ क. 'कत्रस्थ' ।

**कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिर्दीपकम् । यथा—**

**स्विद्यति कूणति वेल्लति विवलति निमिषति विलोकयति तिर्यक् ।**
**अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥ ४५८ ॥**

---

अत्र छिप्पन्तीति सकृदुपात्तम् । कुलपालिकानां स्तना उपमेयाः ।

अन्त्यं यथा—**स्विद्यति०** ।

---

( कुलपालिकानाम् । कुलवधूनाम् । अमृतानाम् । सचेतनानाम् । एतत्क्षपणानामित्यादिभिरन्वेति । गाथा मुखविपुला । ] **उपमेया इति** । प्रकृतत्वात् । अन्येषां तूपमानत्वम् । अत्र तत्तदुपमानैः प्रत्येकमौपम्यप्रतीतिः । अत्र क्रिया साधारणधर्मः । गुणो यथा—

' श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभिः ।
भुवश्च सुकुमाराभिर्नवशाद्वलपङ्क्तिभिः ॥ ' इति ।

यत्तु

' वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी ।
उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ॥
माद्यन्ति चातकास्तृप्ता माद्यन्ति च शिखावलाः ।'

इत्यादावावृत्तिदीपकम् । क्वचिच्छब्दस्यार्थस्योभयोर्वाऽऽवृत्तेरिति । तन्न । धर्मस्य सकृदुपादानाभावात् । प्रकृताप्रकृतोभयावृत्तित्वाच्च । एषु च वाचकलुप्तोपमैवेत्याहुः प्रकाशानुसारिणः ।

**अन्त्यम्** । बह्वीषु क्रियासु कारकस्य सकृद्वृत्तिरित्येतत् । ' कारकस्य क्रियासु ' इत्युक्त्या क्रिया तिङन्तादिवाच्याऽसत्त्वभूता गृह्यते । असत्त्वभूतायाश्चोपमानत्वाभावः सन्सूत्रे भाष्ये ' न वै तिङन्तेनोपमानमस्ति ' इति ग्रन्थेन प्रतिपादित इति । अत्रोपमानोपमेयभावाप्रतीतिः, पूर्वस्मिंस्तु तत्प्रतीतिरिति भेदः । एककर्तृकत्वादिधर्मकृतसादृश्यस्याचमत्कारित्वाच्च । इदं च प्रकृतानामेवाप्रकृतानामेव प्रकृताप्रकृतानां च । अनेकचमत्कारिक्रियावैशिष्ट्येन वर्ण्यकारकोत्कर्षकतया चमत्कारित्वेनास्यालंकारत्वम् । एतेन दीपके सर्वत्रौपम्यस्य गम्यत्वादस्य दीपकत्वं चिन्त्यम् । स्विद्यतीत्युदाहरणे क्रियाणां सादृश्यावगतावपि सर्वासां प्रकृतत्वात्कारकतुल्ययोगितात्वमेवोचितमिति च परास्तम् । तुल्ययोगिता त्वौपम्यगर्भैवेति वक्ष्यते ।

**स्विद्यतीति** । स्वेदः सात्त्विको भावः । दयिते परिरम्भोद्यते कूणति मृदुशब्दं करोति । ततोऽप्यनिवर्तिनि वेल्लति संकोचमालम्बते । विचलति परिवृत्त्य शेते । निमिषति

---

१ ख. विचलति ।

मालादीपकमाद्यं चेद्यथोत्तरगुणावहम् ।

पूर्वेण पूर्वेण वस्तुनोत्तरमुत्तरं चेदुपक्रियते, तन्मालादीपकम् ।

यथा—

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाऽऽकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥ ४५९ ॥

नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ॥ १०४ ॥

नियतानां प्राकरणिकानामेवाप्राकरणिकानामेव वा । क्रमेणोदाहरणम् ।

---

अत्र वधूरिति कारकस्य सकृद्वृत्तिः ।

माला० ।

गुणावहमपकारकम् । यथा—सङ्ग्रामा० ।

स्पष्टम् । मालोपमादीनां बहूपमानसंबन्धान्नापरो विशेष इति न ते लक्षिताः । इदं तु पृथग्लक्षितम् । उत्तरोत्तरमुपकार्योपकारकतया परस्परससगेण मालाभावमापन्नानां सकृद्धर्मनिर्देशरूपत्वेनाधिकविशेषानुप्रवेशादिति ।

नियतानां० ।

नियतानां प्राकरणिकानामेवाप्राकरणिकानामेव वा । धर्म इत्यनन्तरं 'यदुपादीयते'

---

मृषा नेत्रे मुद्रयति । अन्तः, नवोढात्वेन बहिरप्रकाशात् । चुम्बितुमिच्छति न तु चुम्बति । ( गीतिश्छन्दः । ) अत्र वधूरिति । शयन इत्यपि बोध्यम् ।

यथोत्तरेति । अस्य वीप्सितत्वादाद्यमित्यत्रापि वीप्सा बोध्या ।

सङ्ग्रामेति । खण्डप्रशस्तौ पद्यमिदम् । सङ्ग्रामरूपाङ्गणगतेन । निर्भयसंचरणीयत्वेनाङ्गणता । चापे समारोपिते ज्याविशिष्टे कृत इत्यर्थः । ( शार्दूलविक्रीडितं छन्दः ) । अभवन्मतयोगदोषपरिहाराय संप्राप्त इत्यादि पाठान्तरकल्पनम् । आसादितमिति नपुंसकानपुंसकयोरेकशेष एकवत्त्वं च । अत्र कोदण्डेनारिशिरः प्रापयता शरा उपक्रियन्ते, शरैरपि भूमण्डलं प्रापयद्भिररिशिरः, शिरसाऽपि सन्नायकं त्वां लम्भयता भूमण्डलम्, भूमण्डलेन च कीर्तिमासादयता नृपतिः, नृपेणापि त्रैलोक्यं व्यापयता कीर्तिः, इति पूर्वपूर्वेभ्यः परस्य परस्योपकारः । एकस्या आसादनक्रियायाः संबन्धाद्दीपकता । अत्र शरादीनामरिशिरःप्रभृतीनां च सादृश्यमपि व्यङ्ग्यम् । इति दीपकम् ।

प्राकरणिकानामेवेति । एवं च प्राकरणिकाप्राकरणिकोभयावृत्तित्वे सत्यौप-

---

१ क. संप्राप्ते परिपन्थियोधनिवहे सांमुख्यमासादितम् । २ क. ग. त्वं नृपते त्वया सितयशः स्तेनापि लो० । ३ क. ग. °नामप्रा° । ४ क. °मानादिसं° ।

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥ ४६० ॥
कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाऽऽननस्य ॥ ४६१ ॥

---

इति शेषः। सकृत्पदोपादानाद्यत्र प्रतिस्वं भिन्ना धर्मा एकस्यैव वा सर्वत्रोपादानं तत्र नातिप्रसङ्गः।

तत्र प्राकरणिकानामेव यथा—**पाण्डु०**।

अत्र प्रकृतानां विरहिणीवदनादीनामेव धर्मत्वेनाऽऽवेदनाख्यो धर्म उपात्तः। न तूपमानरोगधर्मतया।

अप्राकरणिकानामेव यथा—**कुमुद०**।

अत्र कामिन्या वर्णनीयत्वादप्राकरणिकानां कुमुदादीनामेव धर्मतया पूर्वार्धे कापदव्यङ्ग्योऽधिक्षेप उत्तरार्धे प्रतिहतत्वं चोपात्तम्।

---

म्याक्षेपकत्वं लक्षणम्। सत्यन्तेन दीपकव्युदासः। न चाऽऽक्षेपलभ्यसाम्ये व्यतिरेकभेदेऽतिव्याप्तिः। तत्रोपमेयाधिक्यकृत एव चमत्कारो न तु साम्यप्रतीतिकृत इति विशेषात्। उपमेयानाधिक्येन विशेषणान्न दोष इत्यन्ये। औपम्यं चात्र गम्यम्। तत्प्रयोजकसमानधर्मोपादानात्। वाचकाभावाच्च। धर्मवाचकपदैस्तत्तद्रूपेण धर्मभानेऽपि सादृश्यत्वरूपेणाभानात्।

**पाण्ड्विति**। क्षामं कृशं सरसं सानुरागमन्नरससहितं च,। अत एवालसं बाह्यक्रियायामक्षमम्। नितान्तमित्यतिशयार्थकं सर्वान्वयि। क्षेत्रियो देहान्तरे चिकित्स्यो देहपर्यन्तस्थायीति फलति। ( आर्या छन्दः। ) **प्रकृतानामिति**। विरहानुभावत्वेनेत्यर्थः। **वदनादीनाम्**। पाण्डुत्वादिविशिष्टानाम्। **न तूपमानरोगेति**। उपमानरोगजपाण्डुतादीत्यर्थः। 'अत्राऽऽवेदनाक्रियया विरहरागयोरौपम्यप्रतीतिः। वर्ण्यनायिकासंबन्धित्वेन विरहरोगयोः प्राकरणिकत्वम्। अचिकित्स्यत्वरूपं क्षेत्रियत्वं साधारणो धर्मः' इत्यन्ये। अत्र क्रियारूपधर्मैक्यम्।

**कुमुदेति**। ( कान्तां प्रति कस्यचिदुक्तिः। ) प्रसादे कुमुदसाम्यम्। माने ( रक्त-) कमलसाम्यम्। प्रकृतदशायां नीलनीरजसाम्यम्। ललितो मनोहरः। विलासः कटाक्षः। प्रतिहतं निर्जितम्। एकपदे युगपत्। आननस्येत्यस्य 'अग्रे' इति शेषः। ( पुष्पिताग्रा

---

१ क. ग. तदान°। २ क. °क्वादित्युपा°।

**उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ।**

**अन्यस्योपमेयस्य । व्यतिरेक आधिक्यम् ।**

**क्षीणः क्षीणोऽपि शशी भूयो भूयो[1] विवर्धते नित्यम्[2] ।**
**विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥ ४६२ ॥**

**इत्यादावुपमानस्योपमेयादाधिक्यमिति यत्केनचिदुक्तम्, तदयुक्तम् । अत्र यौवनगतास्थैर्यस्याऽऽधिक्यं हि विवक्षितम् ।**

---

**उपमाना०** ।

अन्यस्योपमेयस्य । व्यतिरेको विशेषणातिरेक आधिक्यम् । स एव । व्यतिरेक एव । कश्चित्तु—" यत्रोपमेयादुपमानस्योपमानादुपमेयस्य वाऽऽधिक्यं स व्यतिरेक इति लक्षणम् । कथमन्यथा—**क्षीणः०** ।

इत्यादिसंग्रहः । अत्र ह्युपमानभूतस्य शशिन उत्कर्षः । क्षैण्येऽपि पुनर्वृद्धेः " इत्याह । तन्न युक्तम् । अस्थैर्ये हि तस्योपमानता । तदाधिक्यं चोपमेये यौवन एवात्र विव-

---

छन्दः । ) अधिक्षिप्तत्वेन प्रतिहतत्वेन च तेषां परस्परं साम्यप्रतीतिः । अत्र साम्यप्रतीतावपि तावन्मात्रकृतो न चमत्कारः । किं त्वेकधर्मान्वयकृतोऽपि । अतो गम्योपमया न निर्वाहः ।

जगाल मानो हृदयादमुष्या विलोचनाभ्यामिव वारिधाराः ।

इत्यत्र न तुल्ययोगिता । सादृश्यप्रतीत्यैव चमत्कारात् । 'चन्द्र इव सुन्दरं मुखम्' इत्यत्र च न दीपकम् । एवं

'प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया ।'

इत्यत्रापीयमेव । प्रदीयते पराभूतिरिति शब्दस्य श्लेषमूलकाभेदाध्यवसायेनाभिन्नीकृततदर्थस्य वा धर्मस्यैक्यात् । तादृशधर्मेण तयोः साम्यप्रतीतौ हिताहितविषयतुल्यकर्तृत्वरूपं व्यङ्ग्यं वाच्यराजोत्कर्षकतया गुणीभूतं प्रतीयत इत्यन्यत् । नैतावताऽस्य तुल्ययोगितान्तरत्वं वक्तुं युक्तम् ।

'लोकपालो यमः पाशी श्रीदः शक्रो भवानपि ।

इत्यत्र तूक्तं दीपकमेवेति दिक् । **इति तुल्ययोगिता ।**

**आधिक्यम्** । गुणविशेषकृत उत्कर्षः । **स एवेति** । योगेनैव लक्षणलाभात् स व्यतिरेकनामालंकार इत्यर्थः । उपमानादित्युक्तेः 'कुमुदादतिरिच्यते मुखम्' इत्यादौ नायमलंकारः । ( **क्षीण इति** । विरम । 'अभिमानात्' इति शेषः । अभिमानं त्यजेत्यर्थः । प्रसीद । प्रसन्ना भव । अनिवर्ति । न प्रत्यावर्तते । यातम् । गतम् । आर्या छन्दः । ) **पुनर्वृद्धेरिति** । यौवनं तु न तथेत्युपमेयस्य न्यूनतेत्यर्थः । **अस्थैर्ये**

---

१ ग. °योऽपि य° । २ क. मितराम् । ख. सत्यम् ।

हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते ॥ १०५ ॥

---

क्षितम् । तस्मादुपमानस्योत्कर्षे व्यतिरेक इति रिक्तं वचः ।

एवं विभजते—हेत्वो० ।

---

**हीति**। अयं भावः—न ह्यत्र चन्द्रयौवनयोः सादृश्यम् । किं तु तत्क्षययोः । तत्र चन्द्रक्षयस्य वृद्धिबाध्यतया न्यूनत्वम् । यौवनक्षयस्य त्वबाध्यतयाऽऽधिक्यम् । मानप्रसादनानुगुणतया प्रकृतवाक्यार्थानुगुणत्वादिति । अस्थैर्यं क्षयः । एवं ह्यत्र वाक्यार्थः—चन्द्रो हि पुनःपुनरागमनेन लोके सुलभोऽतो न तादृशमाहात्म्यशाली । इदं पुनर्यौवनमपुनरागमेनातिदुर्लभमिति मानादिभिरन्तरायैर्विदग्धया भवत्या मुधा गमयितुं न सांप्रतमिति । अन्यथा 'किमित्यस्य कदर्यस्य यौवनस्य कृते मया मानाद्विरंस्यते यातु नाम यौवनम्' इति प्रतिकूलेनार्थेन प्रकृतार्थस्यापुष्टतापत्तेः । प्रियहितकारिण्या दूत्या हीदं वचनम् । एतेन

'रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥'

इत्यत्रोपमेयन्यूनतापर्यवसायी व्यतिरेक इत्यपास्तम् । सशोकत्वेन तद्गम्यचेतनत्वसहृदयत्वादिभिर्गुणाधिक्यस्यैव सत्त्वात् । न च न्यूनत्वपदेनापकर्षो विवक्षितः । स च शोकस्य स्वरूपेणापकृष्टत्वादस्त्येव । वाच्यार्थबोधकालिकोत्कर्षापकर्षयोरेव तदलंकाररूपत्वादिति वाच्यम् । प्रकृतवाक्यार्थानुगुणधर्मवत्त्वस्यैवात्राऽऽधिक्यपदार्थत्वात् । 'परमचेतनत्वमेव सम्यक्, न पुनः प्रियावियोगादिजन्यशोकास्पदं चैतन्यादि' इति पर्यवसानेन तस्य प्रकृतवाक्यार्थभूतविरहानुगुणत्वात् । अत एव प्रियावियोगाद्यपि तुल्यमित्यर्थकमावयोः सर्वं तुल्यमिति वाक्यं चरितार्थम् । एतेनोपमालंकारदूरीकरणमेवात्र चमत्कारि । रसाद्यनुकूलतया कुतश्चिदङ्गाद्भूषणापसरणमिव रसानुसारेण क्वचिदलंकारवियोगोऽपि शोभावह इति ध्वनिकृदुक्तमपास्तम् । एवं

' हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूत्यपथः सितीकृतः ।'

( नैषधकाव्ये नवमसर्गे १२३ पद्यम् ) इत्यत्र नलमहीपतेः स्वनिन्दया लब्धनिर्वेदातिशयरूपप्रकृतवाक्यार्थे दूत्यगतन्यूनताया एवानुगुणत्वेनाऽऽधिक्यरूपत्वात् । एवं

' न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः ।
तथाऽपि जितमेवाऽऽसीदमुना भुवनत्रयम् ॥ '

इत्यादावपि कठोरतीक्ष्णास्त्ररहितस्य भुवनत्रयजय उत्कर्षातिशयप्राप्त्याऽभावरूपविशेषणस्याप्याधिक्यमात्रसंपादकत्वान्न दोष इत्यलम् ।

**शब्दार्थाभ्यामथाऽऽक्षिप्ते श्लिष्टे तद्वत्त्रिरष्ट तत् ।**

**व्यतिरेकस्य हेतुरुपमेयगतमुत्कर्षनिमित्तम्, उपमानगतमपकर्षकारणम्, तयोर्द्वयोरुक्तिः, एकतरस्य द्वयोर्वाऽनुक्तिरित्यनुक्तित्रयम्, एतद्भेदचतुष्टयमुपमानोपमेयभावे शब्देन प्रतिपादिते, आर्थेन च क्रमेणोक्तौ चत्वार एव भेदाः, आक्षिप्ते चौपम्ये तावन्त एव, एवं द्वादश । एते च श्लेषेऽपि भवन्तीति चतुर्विंशतिभेदाः ।**

**क्रमेणोदाहरणम्—**

**असिमात्रसहायस्य प्रभूतारिपराभवे ।**
**अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः ॥ ४६३ ॥**

---

व्यतिरेकस्य द्वौ हेतू । उपमेयगतमुत्कर्षनिमित्तमुपमानगतमपकर्षनिमित्तं च । तयोर्द्वयोरप्युपादानमित्येकः प्रकारः । अनुपादाने तु त्रयो भेदाः । प्रथमस्यैव द्वितीयस्यैवोभयोरपि वा हेत्वोरनुपादानात् । तदेवं चत्वारो भेदाः । ते च प्रत्येकं त्रिधा—साधर्म्यस्य क्वचिदिवादिना शब्दशक्तेः प्रतिपादनात् । क्वचित्तुल्यादिशब्देनाऽऽर्थशक्त्या । क्वचिदुभयाभावेऽप्याक्षेपेणेति द्वादश भेदाः । ते च प्रत्येकमाश्लिष्टे श्लिष्टे च शब्द इति चतुर्विंशतिभेदः स इत्यर्थः ।

तत्राश्लिष्टभेदेषु हेत्वोरुक्तौ शाब्दे साम्ये यथा—असि० ।

---

असीति (असिरेव सहायो यस्य । प्रभूता येऽरयः, तेषां पराभवे सति । स्मयो गर्वः) मात्रेण सहायान्तरव्यवच्छेदः । स्मयाभावोऽत्रोत्कर्षपर्यवसायितयाऽऽधिक्यरूपः । अत्र प्रतीयमानमपि सादृश्यं गुणान्तरकृतस्वनिषेधोत्थापितेनोत्कर्षेण तिरस्कृतमिति तत्तिरस्कारकतयाऽस्य चमत्कारातिशयजनकत्वम् । तिरस्कार्यतयौपम्यगर्भत्वव्यवहारोऽत्रेति बोध्यम् । आधिक्यवर्णनाभावे सादृश्यं पर्यवस्यतीत्येतावता तद्गर्भत्वव्यवहारात् । एतेनैकगुणपुरस्कारेण सादृश्यनिषेधे गुणान्तरेण सादृश्यप्रत्ययस्य दुर्वारत्वादुपमागर्भत्वमस्येत्यपास्तम् । किं चान्यधर्मेण प्रसिद्धसादृश्यस्यैवेदृशाधिक्यप्रतिपादनद्वाराऽभावस्यापकर्षस्य वा प्रतिपादनम् । स चाविशेषात्सर्वधर्मप्रयुक्त एवेति तदप्ररोहात् । 'कथं तुलयामः कलयाऽपि पङ्कजम्' इत्यादौ सर्वथैव सादृश्यनिषेधाच्च । 'देवदत्तेन सदृशो यज्ञदत्तः किं तु धनमस्याधिकम्' इत्यादावुत्कटविद्यादित्वेन प्रसिद्धदेवदत्तेन विद्यादिकृतसादृश्यं प्रतीयमानमप्यपकृष्टमिति दिक् ।

---

१ ग. श्लेषे । २ क. सः । ३ ख. °गतं निकृ° । ४ ख. °णोक्ताश्च° । ५ क. °त्येकं श्लिष्टे° श्लिष्टे च ।

अत्रैव तुच्छेति महाधृतेरित्यनयोः पर्यायेण युगपद्वाऽनुपादानेऽन्यत् भेदत्रयम् । एवमन्येष्वपि द्रष्टव्यम् । अत्रेवशब्दस्य सद्भावाच्छाब्द-मौपम्यम् ।

असिमात्रसहायोऽपि प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत्सगर्वोऽयं महाधृतिः ॥ ४६४ ॥

अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम् ।

इयं सुनयना दासीकृततामरसश्रिया ।
आननेनाकलङ्केन जयतीन्दुं कलङ्किनम् ॥ ४६५ ॥

अत्रेवादि—तुल्यादि—पदविरहेणाऽऽक्षिप्तैवोपमा ।

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः ।
अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः ॥ ४६६ ॥

---

अत्रोपमाने तुच्छत्वमुपमेये महाधृतित्वं च हेतू । इवशब्दसत्त्वाच्च शाब्दमौपम्यम् । अत्रैव तुच्छत्वमात्रस्य महाधृतित्वमात्रस्य वा द्वयोरपि वा क्रमेणानुपादाने हेत्वनुपादानभेदत्रयेऽपि शाब्दौपम्यभेदत्रयं द्रष्टव्यम् ।

हेतुद्वयोपादान एवाऽऽर्थसाम्ये यथा—असिमात्र० ।

अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम् । अत्र पूर्ववदनुपादानभेदत्रयं द्रष्टव्यम् ।

हेत्वोरुक्तावेवाऽऽक्षिप्ते साम्ये यथा—इयं० ।

अत्राकलङ्कित्वकलङ्कित्वे हेतू समुपात्तौ । इवादीनां तुल्यादीनां वाऽभावादाक्षिप्तमौपम्यम् । अत्रैव हेत्वनुपादाने भेदत्रयं पूर्ववद्द्रष्टव्यम् । न चाऽऽक्षिप्तभेद उपमायां शङ्कनीयः । जयत्यादिशब्दस्याऽऽवश्यकतया व्यतिरेकेण विषयापहारात् ।

अथ श्लिष्टभेदेषु हेत्वोरुक्तौ शाब्दमौपम्यं यथा—जितेन्द्रिय० ।

---

क्रमेणेति । 'नूनमन्यजनस्येव' इति 'न समयोऽस्य महीपतेः' इति च पाठ इत्यर्थः ।

आक्षिप्त इति । व्यङ्ग्य इत्यर्थः । इयमिति । दासीकृता पद्मश्रीर्येन तेनाकलङ्केनाऽऽननेनेत्यन्वयः । अत्रैवेति । 'आननेन मनोज्ञेन' इति 'जयत्यमृतदीधितिम्' इति च पाठ इत्यर्थः ।

जितेति । विद्यावृद्धाः पण्डिताः । विद्या च वृद्धाश्चेति वा । अतिगाढो विरोधिसहस्रै-

---

१ क. °योऽयं । २ क. धृतेर्निधिः । ३ क. निन्दति° । ४ क. ग. °रह आक्षि° ।

अत्रेवार्थे वतिः। गुणशब्दः श्लिष्टः। शाब्दमौपम्यम्।

अखण्डमण्डलः श्रीमान्पश्यैष पृथिवीपतिः।
न निशाकरवज्जातु कलावैकल्यमागतः॥ ४६७॥

अत्र तुल्यार्थे वतिः। कलाशब्दः श्लिष्टः।

मालाप्रतिवस्तूपमावत् मालाव्यतिरेकोऽपि संभवति, तस्यापि भेदा एवमूह्याः। दिङ्मात्रं चोदाह्रियते। यथा—

हरवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृषः।
रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि॥ ४६८॥

अत्र तुल्यार्थे वतिः। विषमादयश्च शब्दाः श्लिष्टाः।

---

अत्र श्लिष्टो गुणशब्दः। तदर्थस्यातिगाढत्वभङ्गुरत्वे च हेतू समुपात्ते। इवार्थे वतिरिति शाब्दमौपम्यम्। अत्रैव पूर्ववदनुपादाने भेदत्रयं द्रष्टव्यम्।

तत्रवाऽऽर्थे साम्ये यथा—**अखण्ड०**।

अत्र कलाशब्दः श्लिष्टः। कलावैकल्यतदभावौ हेतू शब्दोपात्तौ। तुल्यार्थे वतिरित्यार्थमौपम्यम्। अत्रानुपादानत्रयं चिन्त्यम्।

अयमेव मालारूपो यथा—**हरव०**।

पूर्ववत्।

---

रप्यनुच्छेद्यो गुणो धैर्यादिर्यस्य। ( भङ्गुरा नश्वराः। ) गुणाः पाण्डित्वादयस्तन्तवश्च। **पूर्ववदिति**। 'सत्कर्मनिरतस्यास्य' इति 'न तामरसवद्गुणाः' इति च पाठ इत्यर्थः।

**अखण्डेति**। मण्डलं राजचक्रं बिम्बं च। श्रीः संपत्तिः शोभा च। कला कौशलं चन्द्रषोडशांशश्च। जातु कदाऽपि। **कलावैकल्येति**। अखण्डमण्डलत्वकलावैकल्ये हेतू इत्यन्ये। **चिन्त्यमिति**। कलावैकल्यतदभावयोर्हेतुत्वेन तदनुपादाने श्लेषः किमाश्रयः स्यात्। हेतुभूतधर्मवाचकस्य तदाश्रयवाचकस्य वा श्लिष्टत्वे श्लिष्टभेद इति भावः।

'बहुलारिगतोऽप्येष श्रीमानुद्धतविक्रमः।
न निशाकरवज्जातु दृश्यतां वसुधाधिपः॥'

इति पाठेन बहुलशब्दश्लेषसत्त्वादखण्डमण्डलत्वकलावैकल्ययोर्हेत्वोरनुपादानेऽपि संभवत्येवानुपादानत्रयम्। बहुलः कृष्णपक्षः विपुलश्चेत्यन्ये।

**हरवदिति**। वैषम्यं त्रित्वं पारुष्यं च। विधुतः कम्पितः। वृषो वृषासुरः बलीवर्दश्च धर्मश्च। सत्यभामापरिग्रहेण कृष्णेन सप्तवृषास्कन्देनात्। करः किरणः राजभागश्च।

---

१ क. चापि दुः०।

नित्योदितप्रतापेन त्रियामामीलितप्रभः ।
भास्वताऽनेन भूपेन भास्वानेष विनिर्जितः ॥ ४६९ ॥

अत्र ह्याक्षिप्तैवोपमा । भास्वतेति श्लिष्टः । यथा वा—

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं
बिम्बप्रभाधरमकृत्रिमहृद्यगन्धम् ।
यूनामतीव पिबतां रजनीषु यत्र
तृष्णां जहार मधु नाऽऽननमङ्गनानाम् ॥ ४७० ॥

---

तत्रैवाऽऽक्षिप्ते साम्ये यथा—नित्योदित० ।

अत्र भास्वतेति प्रतापेति च श्लिष्टं पूर्वार्धोपात्तं हेतुद्वयम् । इवादेस्तुल्यादिशब्दानां चाभावादाक्षिप्तैवोपमा । अत्रैव पूर्ववदनुपादाने भेदत्रयं द्रष्टव्यम् । निर्जितजयत्यादिशब्दाभावेऽपि श्लिष्टविशेषणेनौपम्याक्षेपादप्ययं भेदः संभवति । यथा—स्वच्छात्मता० ।

---

तापिता उद्वेजिता दाहं प्रापिता च । भूर्धराणिस्तत्स्थलोकश्च । ( आर्या छन्दः । ) अत्र विषमदृष्टित्वमपकर्षहेतुरुपात्तः । समदृष्टित्वमुत्कर्षहेतुर्नोक्तः । बहूपमानापेक्षयाऽऽधिक्यवर्णनान्मालाऽत्रेति बोध्यम् ।

**नित्येति** । प्रतापः पराक्रमः प्रकृष्टतापश्च । भास्वता कान्तिमता रविणा च । त्रियामा रात्रिः । **आक्षिप्तैवेति** । विनिर्जितपदाक्षिप्तैवेत्यर्थः । **द्रष्टव्यमिति** । 'समरासक्तमनसा ' इति 'पङ्कजावलिनन्दनः' इति च पाठ इत्यर्थः । अत्रेदं चिन्त्यम् । उपात्तवैधर्म्यांशे श्लेषेणैव व्यतिरेकस्य श्लेषमूलकत्वमुचितम् । न तु यत्र कुत्रापि श्लेषेणेति कृतभेदत्रयं चिन्त्यमेव । न च यत्र द्विजसुरालयमातरिश्वादिशब्दवेद्येषूपमानोपमेयेषु स्वशब्दोपात्त एव श्लेषो व्यतिरेकोत्थापकस्तत्रैतदुदाहरणं सूपपादम् । तत्र स्वशब्दवेद्यस्यैव वैधर्म्यस्य संभवादिति ।

**स्वच्छेति** । स्वच्छात्मत्वं निर्मलत्वमेव गुणस्तेन समुल्लसितं प्रतिबिम्बितमिन्दुबिम्बं यत्र । मुखेऽपि कपोले चन्द्रप्रतिबिम्बात् । मधुपक्षेऽप्येवमेव । यद्वा समुल्लसितेन्दुबिम्बमिति रूपकम् । मुखपक्षे समुल्लसितत्वं पूर्णत्वम् । यद्वा स्वच्छात्मता चिक्कणता सैवोत्कर्षकत्वेन गुणः । बिम्बप्रभोऽधरो यत्रेति मुखपक्षे । मधुपक्षे बिम्बप्रभां धरति तत् । ( बिम्बप्रभाया धरं धारकम् । ) जीर्णमधुनो रक्तत्वात् । अकृत्रिमो मुखवासनादिकं विना गन्धान्तरयोगं विना च हृद्यो गन्धो यस्य । अतीवातिशयेन । यूनां मधु तृष्णां पानेच्छां जहार नाऽऽननम् । ऊधरपानेच्छाया अनिवृत्तेरित्यन्वयः । ( वसन्ततिलका छन्दः । ) अङ्गनानामाननं मधुसदृशं

---

१ ग. °नेत्र वि° ।

अत्रेवादीनां तुल्यादीनां च पदानामभावेऽपि श्लिष्टविशेषणैराक्षिप्तैवोपमा प्रतीयते । एवंजातीयकाः श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादानेऽन्येऽपि भेदाः संभवन्ति । तेऽपि अनयैव दिशा द्रष्टव्याः ।

**निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥ १०६ ॥**

---

स्पष्टम् । श्लिष्टोक्तियोग्यपदस्य पृथगुपादानेऽप्येवंजातीयका भेदाः संभवन्ति, तेऽनयैव दिशा द्रष्टव्याः ।

**निषेधो०** ।

वक्तुमिष्टस्य प्राकरणिकत्वाद्वचनार्हस्य यो निषेधः स आक्षेपः । निषेधो निषेध इवे-

---

हृद्यगन्धादिमत्त्वादित्येवं श्लिष्टविशेषणैरौपम्याक्षेपेऽपि तृष्णां जहार नाऽऽननमित्यतो वैलक्षण्याद्व्यतिरेक इति बोध्यम् । अत्र सर्वलोकलभ्यत्वपुण्यैकलभ्यत्वरूपौ तृष्णाहरणाहरणरूपोत्कर्षापकर्षहेतू नोक्तौ । उक्तेपूदाहरणेष्वयमस्मादधिक इति व्यतिरेकाकारो गम्य एव ।

'इन्दोः पद्माच्चाधिकं मे प्रियाया वदनं मतम् । विलासैर्हृद्यगन्धैश्च'

इत्यादौ तु वाच्य एव । अयमेवानुभवपर्यवसायीत्युच्यते ।

'प्रियाया वदनेनेदं पङ्कजं सदृशं न हि ।
विलासैः शोभमानत्वाद्विकासित्वाद्विधूदये ॥'

इति पद्ये प्रतीपालंकारतिरस्कारको व्यतिरेकः ।

'निष्कलङ्क निरातङ्क चतुःषष्टिकलाधर ।
सदापूर्ण महीप त्वं चन्द्रोऽसीति मृषा वचः ॥'

इत्यत्र रूपकतिरस्कारकोऽयम् ।

'दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य'
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥'

इति पद्ये केवलपदस्वारस्येनानयोः केवलमाकारवत्पदवाच्यत्वतदभाववत्पदवाच्यत्वाभ्यामाकृतेश्च भेदः, गुणैस्तु साम्यमेव दृढतरेत्यादिविशेषणसाम्यादितरगुणैश्चेति प्रतीतेर्गम्योपमैवालंकारो न त्वयम् । आधिक्यस्याचमत्कारित्वात् । कृपणस्योपमेयत्वे तद्गतत्वाभावाच्च । औपम्यतिरस्काराभावाच्चेति दिक् । **इति व्यतिरेकः** ।

**वक्तुमिष्टस्येति** । अस्य व्याख्या वचनार्हस्येति । अवचनानर्हस्येति वा पाठः । **निषेधः** । अभिधाननिषेधः । अनपेक्षिताभिधाननिषेधस्य 'न पद्मं मुखमेवैतत्' इत्यादेश्च वारणाय षष्ठ्यन्ततृतीयान्ते । **निषेध इवेति** । अभिधाननिषेधेऽप्यभिधेयानिषेधात्

वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ।

विवक्षितस्य प्राकरणिकत्वादनुपसर्जनीकार्थस्याशक्यवक्तव्यत्वमतिप्रसिद्धत्वं वा विशेषं वक्तुं निषेधो निषेध इव[1] यः स वक्ष्यमाणविषय उक्तविषयश्चेति द्विधाऽऽक्षेपः । क्रमेणोदाहरणम्—

ए एहि किंपि कीएवि कएण णिक्किव भणामि अलमहवा ।
अविआरिअकज्जारम्भआरिणी मरउ ण भणिस्सम् ॥ ४७१ ॥

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः ।

---

त्यर्थः । शब्दगत्या निषेधेऽप्यर्थगत्या विधेरेव प्रतिपत्तेः । तत्प्रयोजनमाह—विशेषाभिधित्सयेति । वक्ष्यमाणविषयेऽशक्यवक्तव्यत्वमुक्तविषयेऽतिप्रसिद्धत्वं चेति विशेषः ।

विभजते—**वक्ष्यमाणो०** ।

तत्र वक्ष्यमाणविषयो यथा—**ए एहि०** ।

अत्र विरहजनितदुर्दशातिशयो वक्ष्यमाणो निषिद्धः ।

उक्तविषयो यथा—**ज्योत्स्ना०** ।

---

विशेषप्राप्त्यर्थमेवाभिधानस्यापि निषेधादिति भावः । **अर्थगत्येति** । तस्य प्रकृतत्वादेवाभिधातुं पतितस्य क्रियमाणो निषेधो बाधितः सन्नाभासत्वे पर्यवस्यन्विधेराक्षेपक इति भावः । केचित्तु वक्तुमित्युपलक्षणम् । करिष्यमाणस्यापि निषेध आक्षेपः ।

'तां सुन्दरीं वर्णयितुं न मे वाणी प्रवर्तते ।'

इत्यत्र करिष्यमाणवाणीप्रवृत्तेर्निषेधो वर्णनीयस्यानिर्वाच्यतां व्यनक्तीत्याहुः ।

**ए एहीति** ।

'ए एहि किमपि कस्या अपि कृते निष्कृप भणामि अलमथ वा ।
अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥'

किमपि तत्पीडातिशयरूपम् । ए इति सामर्षं संबोधनम् । अलमथवेति पूर्वाक्षेपे । अविचारितेत्यादि तु त्वत्प्रेम्णः स्थैर्यास्थैर्ये अविचार्यैव प्रवृत्तेत्यर्थकम् । अलमित्यनेनैव निषेधलाभे 'न भणिष्यामि' इति पुनः कथनं खेदातिशयद्योतकम् । ( आर्या जघनविपुला । ) अत्र नायिकासंतापातिशयोऽवश्यं वक्तुमिष्टः, न चासौ विशिष्य वक्तुं शक्य इति व्यञ्जयितुं निषिद्धः । नायकं प्रति दूत्युक्तिः । एवमग्रेऽपि ।

**ज्योत्स्नेति** । ( ज्योत्स्ना चन्द्रिका । मौक्तिकदाम मुक्ताहारः । ) शीतांशुकान्तद्रवः

---

१ ग. °षेध इव निषेधो यः ।

अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥ ४७२ ॥

क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ॥ १०७ ॥

हेतुरूपक्रियाया निषेधेऽपि तत्फलप्रकाशनं विभावना । यथा—

कुसुमितलताभिरहताऽप्यधत्त रुजमलिकुलैरदष्टाऽपि ।
परिवर्तते स्म नलिनीलहरीभिरलोलिताऽप्यघूर्णत सा ॥ ४७३ ॥

---

क्रियायाः० ।

वैयाकरणमते क्रियैव हेतुरिति क्रियेत्युक्तम् । वस्तुतस्तु कारणप्रतिषेधे[1] कार्यवचनं विभावना । न च विरोधः । स्वाभाविकत्वस्य कारणान्तरस्य वा विभावनात् । उदाहरणम्—कुसुमित० ।

---

चन्द्रकान्तमणिजलम् । आः इति खेदे । अन्तर्मानसं मानसमध्ये । प्रभवता दाहकरणसमर्थेन । प्रवसतेति वा पाठः । त्वया करणभूतेन । अतो दुःसमाधानत्वम् । प्रभवतेति पाठे प्रभोरनभियोज्यत्वम् । ( स्फुलिङ्गोत्करोऽग्निकणसमूहस्तस्य व्यापारो दाहोत्पादनम् । तदर्थम् । शार्दूलविक्रीडितं छन्दः । ) अत्र वियोगिनीनां ज्योत्स्नादि स्फुलिङ्गायत इत्यत्यन्तप्रसिद्धत्वं विशेषं व्यञ्जयितुं ज्योत्स्नादीन्युक्त्वा तत्कथनं प्रतिषिद्धम् । अत्र व्यङ्ग्येनाशक्यवक्तव्यत्वादिना व्यञ्जकं वाच्यमेव चारुत्वमावहतीति गुणीभूतव्यङ्ग्यता । यत्तु वामनेन 'उपमेये सति किमुपमानेनेत्येवमुपमानाक्षेप आक्षेपः' इत्युक्तम् । तत्तु वक्ष्यमाणप्रतीपरूपतया गतार्थम् । इत्याक्षेपः ।

कारणेति । प्रसिद्धकारणेत्यर्थः । सूत्रे क्रियतेऽनेनेति व्युत्पत्त्या क्रियाशब्दः कारणपर इति भावः । एवं च कारणव्यतिरेकसामानाधिकरण्येन प्रतीयमाना कार्योत्पत्तिर्विभावनेत्यर्थः । 'न कठोरं न वा तीक्ष्णम्' इत्यादावपि कठोरत्वादिविशिष्टायुधस्य जयहेतोरभावेऽपि कार्यकथनाद्विभावनैव । अतिशयोक्तिस्तु तदङ्गम् । कारणतावच्छेदकावच्छिन्नकारणव्यतिरेकस्य विवक्षितत्वात् । ननु कारणाभावे कार्योत्पत्तौ स्फुरितस्य विरोधस्य प्रसिद्धातिरिक्तेन कारणेन परिहाराद्विरोधाभास एवायमिति चेन्न । समबलयोः परस्परविरोधे तत्स्वीकारात् । इह तु कारणविरहेण कार्यमेव बाध्यत्वेन गम्यते । न तु तेन कारणविरह इति विशेषात् ।

कुसुमितेति । ( नायिकाया विरहावस्थावर्णनम् । ) लताहननं विरहिण्या रोगहेतुः । सा नलिनीति रूपकम् । भ्रमरदंशः परिवर्तनहेतुः । तरङ्गसंबन्धो घूर्णनहेतुः । नलिनीयुक्ततरङ्गैरिति वाऽर्थः । ( 'नलिनी' इति नायिकानाम वा । अहताऽताडिता । परिवर्तते

---

[1] क. 'धेऽपि का०' ।

परावृत्य वर्तते । अलोलिताऽचालिता । गीतिश्छन्दः । ) अत्र विरहरूपहेत्वन्तरजनितानां रुजादीनामन्यत्वेऽप्येकत्वाध्यवसायो विभावनामूलम् । स च प्रकृतेऽनाहार्यः ।

' निरुपादानसंभारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥ '

इत्यत्राऽऽहार्यो रूपककृतः । सर्वथा कार्यांशेऽभेदबुद्धिर्विभावनाजीवितम् । सा च क्वचिदतिशयोक्त्या क्वचिद्रूपकेणेत्यन्यत् ।

' अप्यलाक्षारसासिक्तं रक्तं तच्चरणद्वयम् । '

इत्यत्र स्वाभाविकत्वेन परिहारः । अत्र कारणव्यतिरेकः प्रतिबन्धकसत्ताया अप्युपलक्षणम् । तेन

' सातपत्रं दहत्याशु प्रतापतपनस्तव । '

इत्यत्राप्येषा । अत्रापि स्वभावमादाय विरोधपरिहारः । प्रतिबन्धकाभावस्यापि कारणत्ववादिनां तु यथाश्रुतमेव सम्यक् । परं तु कारणव्यतिरेकप्रतीतिरार्थीति बोध्यम् ।

' शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतम् । '

इत्यत्र वीणां विनेति प्रतीतेरार्थी कारणाभावप्रतीतिरस्त्येव । अत्र शङ्खत्वेन कान्ताकण्ठस्तन्त्रीनिनादत्वेन तद्गीतं चाध्यवसितम् ।

' शीतांशुकिरणास्तन्वीं हन्त संतापयन्ति ताम् । '

इत्यत्रापि दाहकारणतावच्छेदकधर्मावच्छिन्नाभावप्रतीतिरार्थ्यस्त्येव । विरहकालिकदाहकारणतावच्छेदकत्वं शीतांशुत्वेऽपीति विभावनाद्विरोधपरिहारः । वस्तुतः ' शङ्खाद्वीणानिनादोऽयम् ' इत्याद्युदाहरणानि विरोधस्यैव । परस्परबाध्यत्वावगमात् ।

' यशः पयोधिरभवत्करकल्पतरोस्तव । '

इत्यत्रापि विरोधाभास एव । परस्परं विरोधावगतेः । एतेन ' कार्यात्कारणजन्माऽपि विभावना ' इत्यपास्तम् । कारणान्तरं विभावयतीत्यन्वर्थाभावेन तस्य विभावनात्वाभावात् । एवं

' निर्मीलितादक्षियुगाच्च निद्रया हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् ।
अदर्शि संगोप्य कदाऽप्यवीक्षितो रहस्यमस्याः स महन्महीपतिः ॥ '

इत्यत्राप्येषा । अक्षियुगाद्धृदोऽपि सङ्गोप्यात एव महद्रहस्यं यथा स्यात्तथा स नृपतिर्निद्रयाऽदर्शि । निर्मीलितत्वेनाक्षिसंनिकर्षराहित्येन गोपनम् । बाह्येन्द्रियसहकृतान्मनसश्च तद्बाह्येन्द्रियव्यापाररहितात्ततोऽगोपने पर्यवस्यति । ' सविशेषणे हि ' इति न्यायात् । कालान्तरीणदर्शनजनितस्मरणसहकृतमनसोपनीतभानं स्यादत आह—कदाऽप्यवीक्षित इति । एवं च योगजधर्मवददृष्टविशेषाद्विनैवोपनयं नलत्वेन भानमभिमतम् ।

**विशेषोक्तिरखण्डेषु कारणेषु फलावचः ।**

**मिलितेष्वपि कारणेषु कार्यस्याकथनं विशेषोक्तिः । अनुक्तनिमित्ता, उक्तनिमित्ता, अचिन्त्यनिमित्ता च । क्रमेणोदाहरणम्—**

**निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते ।**
**श्लथीकृताश्लेषरसे भुजङ्गे चचाल नाऽऽलिङ्गनतोऽङ्गना सा ॥ ४७४ ॥**

**कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने ।**
**नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥ ४७५ ॥**

---

**विशेषोक्ति०** ।

अखण्डेषु मिलितेषु प्रसिद्धकारणेषूक्तेषु कार्याभाववचनं विशेषोक्तिः । अत्राप्यप्रसिद्धे कार्याभावहेतौ पर्यवसानाद्विरोधाभावः । सा च त्रिधा—अनुक्तनिमित्तोक्तनिमित्ताऽचिन्त्यनिमित्ता च ।

तत्राऽऽद्या यथा—**निद्रा०** ।

अत्रानुरागातिशयो निमित्तं चलनाभावे । स च विशिष्य वक्तुं शक्यत्वेऽपि नोक्त इत्यनुक्तनिमित्तेयम् ।

उक्तनिमित्ता यथा—**कर्पूर०** ।

अत्र कर्पूरो दाहमात्र उपमानं न तु शक्तिमत्त्वेऽपि ' इति भास्करः । शक्तिमत्त्व इति परमार्थः । ईषद्दग्धस्य तस्य सौरभाद्यतिशयात् ।

---

' अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम् । '

इत्युक्तेः । अत्र दृशिधातोर्ज्ञानसामान्ये लक्षणया तत्र दर्शनाभेदलाभात्कारणाभावे कार्यलाभेन विभावना । कुसुमितेत्युदाहरणेऽनुक्तनिमित्तैषा । उक्तनिमित्ताऽप्येषा । यथा

' यदवधि विलासभवनं यौवनमुदियाय चन्द्रवदनायाः ।
दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते ॥ '

अत्रोपात्ते यौवने दाहहेतुत्वं पर्यवस्यतीति दिक् । **इति विभावना** ।

**विशेषोक्तिरिति** । विशेषं कंचित्प्रतिपादयितुमुक्तिरित्यर्थः ।

**निद्रेति** । द्युरत्नं सूर्यः । ( पराप्ते प्राप्ते सति । भुजङ्ग उपपतौ । श्लथीकृतः शिथिलीकृत आश्लेषरस आलिङ्गनरसो येन तादृशे सति । उपजातिश्छन्दः । ) कारणसत्त्वे कुतः कार्यानुत्पत्तिरित्येवमत्र विरोधः । कार्यानुत्पत्तेः कारणसमवधानबाध्यत्वात् । अत्र निमित्तं व्यङ्ग्यमपि न चार्विति गुणीभूतव्यङ्ग्यता ।

**कर्पूर इवेति** । ( बालरामायणे तृतीयाङ्के पद्यमेतत् । अवार्यमकुण्ठितं वीर्यं यस्य तस्मै । मकरकेतवे मदनाय । ) अत्र शरीरदाहः शक्तिध्वंसे कारणम् । सत्यपि तदनुत्पत्तिकथनम् ।

**स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।**
**हरताऽपि तनुं यस्य शंभुना न हृतं बलम् ॥ ४७६ ॥**

---

'भ्रूभ्यां प्रियाया भवता मनोभूचापेन चापे घनसारभावः।
निजां यदप्लोषदशामपेक्ष्य संप्रत्यनेनाधिकवीर्यताऽऽर्जि ॥'

इत्यादि नैषधदर्शनात्।

अत्रावार्यवीर्यत्वं शक्तिमत्त्वे कार्याभावरूपे हेतुरुक्तः।

अचिन्त्यनिमित्ता यथा—**स एक०**।

अत्र तनुहरणेऽपि बलाहरणस्य हेतुर्विशिष्य वक्तुं न शक्यत इत्यचिन्त्यनिमित्तेयम्।

---

(**भ्रूभ्यामिति**। नैषधीयकाव्ये सप्तमे सर्गे २९ पद्यमिदम्। 'मनोभूचापेन मदनबाणेन प्रियाया दमयन्त्या भ्रूभ्यां भ्रूयुगुलेन भवता भ्रूत्वं गच्छता सता घनो दृढो सारो मज्जा यस्य तद्भावोऽतिदृढत्वं चाऽऽपे प्रापे। यदेव च भ्रूत्वं तदेव दृढत्वमिति चकारार्थः। पुष्पत्वदशायां निःसारस्यापि धनुषो भैमीभ्रूत्वदशायां ससारत्वं जातमित्यर्थः। कथं ससारत्वमित्यत आह—यद्यस्मान्निजां स्वीयामप्लोषदशामदाहावस्थामपेक्ष्य संप्रति दग्धस्य भैमीभ्रूभवनसमयेऽनेन धनुषाऽधिकवीर्यताऽतिशयितपराक्रमत्वमार्जि अर्जितम्। अदग्धपुष्परूपचापापेक्षया दग्धस्य श्यामीभवत्केसरशेषस्य भैमीभ्रूभवतस्तस्यैव चापस्य जगद्वशीकरणेऽधिकसामर्थ्यदर्शनादेवमनुमीयत इति भावः। घनत्वं सारत्वं दृढत्वं श्रेष्ठत्वं च प्राप इति वा। अथ च घनसारभावः कर्पूरत्वं च। यतः कर्पूरोऽपि निजाङ्गदाहात्स्वीयपक्वावस्थामपेक्ष्यादाहावस्थायामधिकवीर्यतामतिशयितं सौगन्ध्यं शीतलत्वं चार्जयति' इति नैषधीयप्रकाशे स्पष्टम्।)

**स इति**। एकोऽसहायः। कुसुमेत्यनेनाऽऽयुधस्य निःसारता। **न शक्यत इति**। शास्त्रैकगम्यत्वादिति भावः। यद्यप्यनुक्तत्वाविशेषादेषाऽप्यनुक्तनिमित्तैव तथाऽपि प्रकरणादिना ज्ञातस्य निमित्तस्यावचनेऽनुक्तनिमित्ता। अज्ञातस्यावचन एषेति भेदः। यत्तु "एकगुणहानिकल्पनया साम्यदार्ढ्यं विशेषोक्तिः। यथा द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम्" इति। तन्न। अत्र द्यूते राज्यस्य तादात्म्येनाऽऽरोपेण रूपकसत्त्वात्। तत्र सिंहासनरहिते द्यूते सिंहासनसहितराज्यतादात्म्यं कथं सिध्येदित्यारोपोन्मूलकयुक्तिनिरासायाऽऽरोप्यमाणराज्येऽपि सिंहासनराहित्यं कल्प्यत इति दृढारोपरूपकमिदम्। एवं गुणाधिक्यकल्पनायामप्येतदेव। यथा 'धर्मो वपुष्मान्भुवि कार्तवीर्यः' इत्यादाविति दिक्।

**इति विशेषोक्तिः।**

---

१ ग. न बलं हृतम्।

यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥ १०८ ॥

यथा—

एकस्त्रिधा वससि चेतसि चित्रमत्र
देव द्विषां च विदुषां च मृगीदृशां च ।
तापं च संमदरसं च रतिं च पुष्णन्
शौर्योष्मणा च विनयेन च लीलया च ॥ ४७७ ॥

सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।
यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥ १०९ ॥

साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत्समर्थ्यते, विशेषो वा सामान्येन, सोऽर्थान्तरन्यासः । क्रमेणोदाहरणम्—

---

**यथासंख्यं०** ।

यथा—**एक०** ।

स्पष्टम् ।

**सामान्यं०** ।

सामान्यं यद्विशेषेण समर्थ्यते विशेषो वा सामान्येन सोऽर्थान्तरन्यासः । द्वयोरपि प्रत्येकं समर्थनहेतुः साधर्म्यं वैधर्म्यं चेति चतुष्प्रकारोऽयमित्यर्थः ।

---

**क्रमेण** । उपदेशक्रमेण । पूर्वस्य पूर्वेण मध्यस्य मध्येनान्त्यस्यान्त्येनेत्येवमित्यर्थः अन्वयिसमसंख्यपदार्थज्ञानस्य यथासंख्यान्वयबोध्यत्वं कार्यतावच्छेदकम् । यद्यपि कविप्रतिभानिर्मितत्वस्यालंकारताजीवातोर्लेशतोऽप्यभावादस्य नालंकारत्वम्, तथाऽप्येकत्र पद्ये बहूनां क्रमान्वये वैचित्र्यादलंकारत्वेनोक्तः ।

**एक इति** । राजानं प्रत्युक्तिः । हे देव राजन्नेकस्त्वं द्विषां शत्रूणां विदुषां पण्डितानां मृगीदृशां स्त्रीणां च चेतसि त्रिधा प्रकारत्रयेण वससि । अत्र एतद्विषये चित्रमाश्चर्यम् । शौर्योष्मणा प्रतापाग्निना, विनयेन नम्रतया, लीलया विलासेन च क्रमेण तापं संतापं, संमदरसमानन्दरसं, रतिं प्रीतिं च पुष्णन्सन्नित्यर्थः । (वसन्ततिलका छन्दः ।) इति **यथासंख्यम्** ।

**सामान्यमिति** । अनुपपद्यमानतया संभाव्यमानस्यार्थस्योपपादनार्थं यदर्थान्तरं न्यस्यते सोऽर्थान्तरन्यासः । दृष्टान्ते तु सामान्यं सामान्येन विशेषो विशेषेण समर्थ्यत इति ततो भेदः । साक्षाद्व्याप्त्यादेरनभिधानादनुमानतो भेदः । कविनिबद्धप्रमात्रन्तरानिष्ठानुमितेरेवानुमानालंकारविषयत्वाच्च ।

---

१ ख. यत्तु ।

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥ ४७८ ॥
सुसितवसनालंकारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत, येन सा
प्रियगृहमगान्मुक्ताशङ्का, क्व नासि शुभप्रदः ॥ ४७९ ॥
गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते ।
असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः[1] ॥ ४८० ॥
अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेदृशम् ।
त एव धन्याः सुहृदः[2] पराभवं जगत्यदृष्ट्वैव हि ये क्षयं गताः॥४८१॥

---

तत्र विशेषेण सामान्यसमर्थनं साधर्म्येण यथा—निज० ।

सामान्येन विशेषसमर्थनं साधर्म्येण यथा—सुसितवसना० ।

विशेषेण सामान्यसमर्थनं वैधर्म्येण यथा—गुणाना० ।

अत्र धुर्य इत्यादि साधारण्यात्सामान्यम् । गौर्गलिरिति विशेषः । वैधर्म्यं च स्फुटम् ।

वैधर्म्येण विशेषस्य सामान्येन समर्थनं यथा—अहो० ।

---

**निजदोषेति** । सुन्दरमेव सुन्दरमपि । ( पित्तेनोपहतो व्याप्तः । शशिवत् शुभ्रम् । आर्या छन्दः । ) अत्र निजदोषेत्यादि सामान्यं शङ्खपीतिम्ना विशेषेण समर्थितम् । यद्यपि दोषेण भ्रमो भवतीत्यर्थे पामरस्यापि नानुपपत्तिसंभावना तथाऽप्याहार्या सा बोध्या ।

**सुसितेति** । राजानं प्रति कस्युक्तिः । कदाचनैकदा शुभ्रवस्त्रालंकारायां कौमुदीमहसि स्वैरं यान्त्यामस्तं विधुर्गतः । ततो भवत्कीर्तेर्गाने कौमुदीवदेव प्रकाशे जाते सा मुक्ताशङ्का पतिगृहमगादित्यन्वयः । अतस्त्वं क्व शुभप्रदो नासि । सर्वत्रैव तथेत्यर्थः । मूर्तत्वं धवलतागुणाश्रयत्वम् । ( हरिणी छन्दः । ) सुसितेत्यादिनाऽभिहितो विशेषः क्व नासीत्यादिना सामान्येन समर्थितः ।

**गुणानामिति** । गुणरूपदोषादेव धुर्यः श्रेष्ठो धुरि कार्यभारे नियुज्यते । असंजातव्रणः स्कन्धो यस्य । य आसञ्जितं युगं बलात्पातयति स गौर्गलिः ।

**अहो इति** । ( आपन्नं ) सुहृदं प्रति ( तदवस्थोचितम् ) अप्रियं वदतः [ खेदातिशयात्स्वजीवितं निन्दतः कस्यचित् ] उक्तिः । त इत्यनेन सामान्यतो मत्पदार्थ-[3]

---

१ क. °गली । अ° । २ क. सुहृदां । ३ क. °साधर्म्या सा° ।

**विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।**

**वस्तुवृत्तेनाविरोधेऽपि विरुद्धयोरिव यदभिधानं स विरोधः ।**

**जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद्गुणस्त्रिभिः ॥ ११० ॥**

---

सामान्यविशेषभाव उपपादनीयः ।

**विरोधः०** ।

वस्तुगत्या विरोधाभावेऽपि यद्द्वयोर्विरुद्धयोरिवाभिधानं स विरोधः ।

एनं विभजते—**जाति०**

जात्याद्यैरिति जातिगुणक्रियाद्रव्यैः । त्रिभिरिति गुणक्रियाद्रव्यैः । द्वाभ्यामिति क्रियाद्रव्याभ्याम् । यद्यपि गुणानामपि जात्या विरोधः संभवत्येव तथाऽपि जातेर्गुणविरोध एव

---

स्यापि ग्रहणात्सामान्यत्वम् । ( सुहृदो मित्रस्य । वंशस्थं वृत्तम् । ) ते धन्या इति सामान्येनाहमधन्य इति वैधर्म्यद्वारा स्वायुरपराधरूपो विशेषः समर्थ्यते । अत्र हि यत्, यत इत्यादेः प्रतिपादकस्याभावे समर्थ्यसमर्थकभाव आर्थः । तत्सत्त्वे शाब्दः । ननु

'उपकारमेव तनुते विपद्गतः सद्गुणो नितराम् ।
मूर्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥'

इत्यत्र कोऽलंकार इति चेदयमेव । निदर्शनशब्दस्य समर्थकपरत्वात् । उपमाऽत्रालंकार इति कश्चित् । एतेनोदाहरणालंकारोऽयमतिरिक्त इत्यपास्तम् । कारणेन कार्यस्य कार्येण कारणस्य वा समर्थनं तु काव्यलिङ्गस्य विषय इति बोध्यम् । समर्थ्यसमर्थकयोः सामान्यविशेषभावसंबन्धेऽयं, तदितरसंबन्धे काव्यलिङ्गमित्युपगमात् ।

'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥'

इत्यत्र द्वयोरप्यर्थान्तरन्यासयोः संसृष्टयादि बोध्यम् । एतेन—

'यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः । यथाऽनन्तेति ॥'

इति विकस्वरालंकारोऽयं पृथगित्यपास्तम् । **इत्यर्थान्तरन्यासः ।**

**विरुद्धयोरिति** । विरोधप्रतिभाप्रयोजकरूपेण यदभिधानमित्यर्थः । यथाश्रुतशाब्दोपस्थितिमहिम्ना विरोधज्ञानेऽपि शब्दस्यान्यत्र तात्पर्यान्न विरोध इत्ययं विरोधाभास इत्युच्यते । विरोधश्चैकाधिकरणसंबद्धत्वेन प्रसिद्धयोरर्थयोर्भासमानैकाधिकरणासंबद्धत्वम् । एकाधिकरणासंबद्धत्वेन प्रसिद्धयोरेकाधिकरणसंबद्धत्वेन प्रतिपादनं वा । स च बाधबुद्ध्यनभि-

---

१ क. यथो ।

क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश ।

**क्रमेणोदाहरणम्—**

**अभिनवनलिनीकिसलयमृणालवलयादि दवदहनराशिः ।**
**सुभग कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते ॥ ४८२ ॥**
**गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः ।**
**विश्वंभराऽप्यतिलघुर्नरनाथ तवान्तिके नियतम् ॥ ४८३ ॥**

---

प्रविष्टत्वाद्गुणस्त्रिभिरित्युक्तम्। एवं क्रिया द्वाभ्यामित्यपि द्रष्टव्यम्। तदयमर्थः—जातिनिरूपितो भेदश्चतुर्धा। गुणनिरूपितस्तु पूर्वभेदभिन्नस्त्रिधा। एवमग्रेऽपि।

तत्र जात्या जातेर्विरोधो यथा—**अभिनव०**।

अत्र नलिनीत्वकिसलयत्वादिजातीनां दहनत्वजात्या विरोधः। वियोगातिशयेन गौणत्वात्तदाभासता। एवमग्रेऽप्यूह्यम्।

जातेर्गुणेन यथा—**गिरयो०**।

---

भूतो दोषस्य विषयः। तदभिभूतोऽलंकारस्येति बोध्यम्। **क्रियेति**। क्रियाशब्देनात्र धातुवाच्योऽर्थः।

**अभिनवेति**। दवदहनो दवाग्निः। विधिवशतो दैववशात्। त्वद्वियोग एव पविर्वज्रम्। (गीतिश्छन्दः।) **गौणत्वादिति**। वियोगजन्यसंतापातिशायके लाक्षणिकत्वादित्यर्थः। नन्वेवमत्राऽऽरोपमूलं रूपकमेव। न विरोधः। अन्यथा मुखं चन्द्र इत्यत्रापि विरोध एव स्यादिति चेन्न। अत्र विरोधोत्थापनार्थमभेदस्य विवक्षितत्वेऽपि तस्यान्यार्थमुपादानेनाचमत्कारित्वात्। विरहिण्यवस्थायामत्यद्भुतत्वस्यात्र प्रतिपिपादयिषितत्वेन तदनुगुणतयाऽन्तर्गर्भितोऽप्यर्थो विरोध एव चमत्कारितया समुल्लसतीति तस्यैवालंकारत्वात्। मुखं चन्द्र इत्यादौ तु चन्द्रनिष्ठाल्हादकत्वादिसकलगुणानां मुखे प्रतिपत्त्यर्थं चन्द्राभेद एव चमत्कारी न तु सन्नपि विरोधः। विवक्षितार्थाननुगुणत्वात्। इति रूपकमेव न तु विरोधोऽलंकारः। यदि तु विरहिण्यवस्थाया अत्यद्भुतत्वं न विवक्षितमप्यर्थश्च न गर्भीकृतः किं तु पीडाजनकत्वाद्यतिशयमात्रं तदाऽत्र रूपकमेव। यदि वा नगरविशेषस्थितेरत्यद्भुतत्वविवक्षयाऽप्यर्थगर्भीकरणेन च 'यत्र नारीणां मुखं चन्द्रः' इत्युच्यते तदा तत्र विरोध एवेति दिक्।

**गिरय इति**। नञल्पार्थे। तेनाल्पोन्नतियुजोऽल्पवेगोऽल्पगम्भीरा इत्यर्थः। वायौ मन्दवेगत्वाद्युक्त्या वर्णनीये तदतिशयप्रतीतेः। अतिलघुत्वमपकृष्टगुरुत्वम्।

---

१ क. ग. 'प्यबलो०'। २ क. 'भासः। ए०'।

येषां कण्ठपरिग्रहप्रणयितां संप्राप्य धाराधर-
स्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च ।
तेषां संगरसङ्गसक्तमनसां राज्ञां त्वया भूपते
पांसूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ ४८४ ॥
सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम् ।
अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥ ४८५ ॥
सततं मुसलासक्ता बहुतरगृहकर्मघटनया नृपते ।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥ ४८६ ॥

---

अत्र गिरित्वादिजातीनामनुन्नतत्वादिगुणैर्विरोधः । वर्णनीयातिशयविवक्षया तु परिहारः । विश्वंभरेति तु न जात्युदाहरणम् ।

जातेः क्रियया यथा—येषां० ।

अत्र धाराधरत्वजातेरनुरागस्नेहपराप्तिक्रियाभ्यां विरोधः । लौहित्यचैक्कण्यार्थकत्वाद्वविरोधः । एवमग्रेऽप्यविरोध ऊह्यः । तीक्ष्णत्वस्यानुरागेण विरोध इत्यन्यव्याख्यानम् । अनुदाहरणत्वप्रसङ्गात् ।

जातेर्द्रव्येण यथा—सृजति० ।

अत्र शफरत्वजातेर्जनार्दनेन द्रव्येण विरोधः ।

गुणस्य गुणेन यथा—सततं० ।

---

( आर्या छन्दः । ) **वर्णनीयातिशयेति** । वर्णनीयौन्नत्याद्यतिशयेत्यर्थः । अत्राऽऽद्ये शुद्धो द्वितीये श्लेषमूलः । एवमग्रेऽप्यूह्यम् ।

**येषामिति** । कण्ठपरिग्रहप्रणयितामालिङ्गनप्रेमवत्ताम् । धाराधरः खड्गः । तीक्ष्णो दारुणः । अनुरज्यते रक्तवर्णः प्रीतिमांश्च । स्नेहश्चिक्कणता सौहार्दं च । संगरसङ्गो युद्धप्राप्तिः (तत्र सक्तं मनो येषां तेषाम्) प्रसाधनमलंकरणम् । [ निर्वर्त्यते क्रियत इति कौतुकम् । शार्दूलविक्रीडितं छन्दः । ] **लौहित्येति** । रुधिरसंपर्कक्तेत्यर्थः । **अनुदाहरणत्वेति** । तीक्ष्णत्वस्य जातित्वाभावादिति भावः । तीक्ष्णस्यापि क्वचिदनुरागदर्शनाच्चेत्यपि बोध्यम् ।

**सृजतीति** । हेलयैव लीलयैव । अवसरवशतः कालगतेः । शफरो मत्स्यो जात इदं चित्रम् ( आर्या छन्दः ) **अत्र शफरत्वेति** । लीलया सर्वसंभवान्मत्स्यशरीरपरिग्रहस्याऽऽगमसिद्धत्वादविरोधः । **द्रव्येणेति** । आत्मपरत्वाज्जनार्दनपदस्य द्रव्यपरत्वम् ।

( **सततमिति** । मुसलेषु आसक्ताः । बहुतरं यद्गृहकर्म गृहव्यापारस्तस्य करणेन संपादनेन कठिना द्विजपत्नीनां करा भवति दातरि सति सरोजवत्सुकुमारा जाताः । गीति-

---

१ क. च किम° । २ ग. °लासङ्ग°द्दहु° ।

पेशलमपि[1] खलवचनं दहतितरां मानसं सुतत्त्वविदाम्।
परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥ ४८७ ॥
क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽसौ यन्मार्गणानर्गलशातपाते।
अभून्नवाम्भोजदलाभिजातः स भार्गवः सत्यमपूर्वसर्गः॥ ४८८ ॥

---

कठिनत्वसुकुमारत्वयोर्विरोधः।

गुणस्य क्रियया यथा—पेलव०।

अत्र पेलवत्वपरुषत्वयोर्गुणयोर्दाहप्रमोदक्रियाभ्यां विरोधः। यथा वा मद्भ्रातुः श्रीहर्षस्य—

सर्वतः पुरत एव दृश्यते पात्रतां न पुनरेति चक्षुषोः।
हृद्गतोऽपि भुजयोर्न भाजनं कोऽयमालि वनमालिनः क्रमः॥

अत्र दर्शनगमनक्रिययोर्गमनाभावभुजभाजनत्वाभावाभ्याम्। उक्तत्रयातिरिक्तस्यैव गुणशब्देन विवक्षणात्। 'गिरयः—' इत्यादि तथैवोदाहृतम्।

गुणस्य द्रव्येण यथा—क्रौञ्चा०।

अत्राम्भोजदलाभिजातत्वस्य गुणस्य क्रौञ्चाद्रिणा द्रव्येण विरोधः।

---

श्छन्दः।) **विरोध इति**। भवद्दानवशाद्गृहव्यापारनिवृत्त्या तत्परिहारः।

**पेशलमिति**। पेशलं कोमलम्। सतत्त्वं तत्त्वमिति च पर्यायः। मलयजरसश्चन्दनद्रवः। (आर्या छन्दः)। **विरोध इति**। पेशलपरुषपदयोः सुश्रवत्वदुःश्रवत्वार्थकतया दहतिपदस्य संतापार्थकतया च तत्परिहारः।

**सर्वत इति**। दृश्यते। शास्त्रतो ज्ञायत इत्यर्थः।

**क्रौञ्चेति**। अतिमहद्भिः पाषाणैर्दृढोऽपि यस्य भार्गवस्य बाणानामनर्गलमप्रतिबन्धं शातवद्वज्रवत्पाते सति नवपद्मपत्रकोमल इत्यर्थः। (भार्गवः परशुरामः। अपूर्वः सर्गो रचना यस्य। यत्कर्तृको यत्कर्मको वा। उपजातिश्छन्दः।) **विरोध इति**। भार्गवमहिम्नाऽभिजातपदस्य सुखवेध्यत्वपरतया परिहारः। यद्यपि कुमारः क्रौञ्चदारण इति कोशात्स्कन्दे तत्त्वं प्रसिद्धं तथाऽपि स्कन्दसाहाय्यार्थं भार्गवोऽपि तत्कृतवानिति पुराणे प्रसिद्धम्।

---

१ क. पेलव°। २ क. ग. °सं सत°।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च[2] कुरुते ॥ ४८९ ॥
अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णा[3]तरलितमनोभिर्जलनिधिः ।
क[4] एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ ४९० ॥
समदमतङ्गजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् ।
क्षितितिलक त्वयि तटजुषि शंकर[5]चूडापगाऽपि कालिन्दी ॥४९१॥

---

क्रियायाः क्रियया यथा—परिच्छेदा० ।

अत्र जडयति च तापं च कुरुत इति क्रिययोर्विरोधः ।

क्रियाया द्रव्येण यथा—अयं० ।

अत्र पानक्रियायाः कर्मीभूतेन जलनिधिना विरोधः । यद्यपि जलनिधीनां बहुत्वेन न द्रव्यविरोधोदाहरणत्वमुचितं तथाऽप्येकल[6]वणाम्बुधिपरतया समर्थनीयम् ।

द्रव्यस्य द्रव्येण यथा—समद० ।

अत्र गङ्गायमुनयोर्विरोधः ।

---

परिच्छेदेति । ( शिखरिणी छन्दः । ) विरोध इति । विरहवैचित्र्येण कालभेदात्तत्परिहारः ।

अयमिति । ( भल्लटकविकृते भल्लटशतके पद्यम् । अयं जलनिधिः समुद्रः वारां जलानां निलयः स्थानम् । तृष्णया तरलितमाक्रान्तं मनो येषां तैरस्माभिः । ) स्वीयकरचुलुकगतर्गतम् । कोटरो गर्तः । ( ताम्यन्तो ग्लायन्तस्तिमयो मत्स्या मकराश्च यत्र तादृशम् । शिखरिणी छन्दः । ) विरोध इति । अगस्त्यतपःप्रभावातिशयेन परिहारः । न द्रव्येति । किं तु जातीत्यर्थः । एतेन

'असंभवोऽर्थनिष्पत्तेरसंभाव्यत्ववर्णनम् ।'

इत्यसंभवालंकारोऽत्रेति परास्तम् । तदुक्तेर्विरोधपरिपोषकत्वात् ।

समदेति । मत्तगजमदजलप्रवाहनदीसंबन्धात् । शिवस्य जूटं जटासमूहस्तत्संबन्धिनी आपगा गङ्गा । कालिन्दी यमुना । ( गीतिश्छन्दः । ) विरोध इति । कालिन्दीपदस्य श्यामाभामात्रपरत्वात्परिहारः । इति विरोधः ।

---

१ अस्य श्लोकस्य व्याख्यानं प्राक् ( पृ० १७८ ) द्रष्टव्यम् । २ क. च तनुते । ३ क. °ष्णाकवलित° । ४ क. इदं को जा° । ५ क. ग. °रजूटाप° । ६ क. °धिमात्रप° ।

स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥ १११ ॥

स्वयोस्तदेकाश्रययोः । रूपं वर्णः संस्थानं च । उदाहरणम्—

पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाऽङ्गमुच्चै-
रासज्याऽऽभुग्नकण्ठो मुखमुरसि[1] सटां धूलिधूम्रां विधूय ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥४९२॥

व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ।

---

**स्वभावोक्ति०** ।

स्वत्वं च स्वमात्राश्रितत्वम् । न तु स्वाश्रितत्वमात्रम् । अतो न साधारणधर्मवर्णनेऽतिव्याप्तिः । रूपशब्देन वर्णः संस्थानं चोच्यते । उदाहरणम्—

**पश्चा०** ।

अत्राश्वमात्रगतयोः क्रियासंस्थानयोर्वर्णनम् ।

**व्याजस्तुति०** ।

मुखे निन्दावगतौ यत्स्तुतौ पर्यवसानं स्तुतेर्वा मुखेऽवगमो निन्दायां पर्यवसानं तद्व्याज-

---

**स्वमात्रेति** । डिम्भादेरित्यनेनैव संबन्धावगतेः स्वशब्दोऽन्ययोगव्यवच्छेदक इति भावः । **रूपशब्देनेति** । अजहत्स्वार्थलक्षणयेति भावः । अत्र चमत्कृतिहेतुत्वमलंकारसामान्यलक्षणप्राप्तम् । तेन

'पश्य धायं बलीवर्दो घासमत्ति मुखेन तु ।'

इत्यादेर्निरासः । साधारणस्वभाववर्णनस्य स्फुटत्वान्नालंकारत्वम् । असाधारणस्तु लोकसिद्धोऽपि प्रतिभामात्रवेद्यत्वादलौकिकवद्भातीत्यलंकारः । डिम्भः शिशुः । आदिना युवतिमुग्धकातरतिर्यग्भ्रान्तहीनपात्रादिसंग्रहः । एनामेव 'जातिः' इति केचिद्व्यवहरन्ति ।

**पश्चादिति** । पश्चादङ्घ्री पश्चिमपादौ प्रसार्य त्रिकं पृष्ठवंशस्तस्य नम्रतया विस्तृतमङ्गमुच्चैरतिशयेन द्राघयित्वा दीर्घं कृत्वाऽऽभुग्नकण्ठो वक्रग्रीव उरसि मुखं संयोज्य सटा ग्रीवाकेशास्तान्विधूय कम्पयित्वा तृणग्रासवाञ्छयाऽनवरतं निरन्तरं चलन्तौ प्रोथतुण्डावोष्ठाधरावोष्ठाग्रे वा यस्य ( क्ष्मां भूमिम् । विलिखति उत्किराति । स्रग्धरा छन्दः । ) **अत्रेति** । पश्चादित्यादिना संस्थानस्य, घासग्रासेत्यादिना क्रियाया इत्यर्थः । इति **स्वभावोक्तिः** ।

**रूढिः** । पर्यवसानम् । **अन्यथा** । स्तुतौ निन्दायां वा । मुख इत्यनेन पर्यवसाना-

---

१ ग. 'नं बा । २ क. 'सि जटा धूलिधूम्रो वि' ।

व्याजरूपा व्याजेन वा स्तुतिः। क्रमेणोदाहरणम्—

हित्वा त्वामुपरोधवन्ध्यमनसां मन्ये न मौलिः परो
लज्जावर्जनमन्तरेण न रमामन्यत्र संदृश्यते।
यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः॥ ४९३॥
हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः परहिताऽऽधाने गृहीतव्रतः।

---

स्तुतिपदवाच्यमित्यर्थः। कथमुभयोरनेनाभिधानमिति चेत्, आद्यस्य व्याजेन स्तुतिरिति ग्रहणात्, अन्त्यस्य तु व्याजरूपा स्तुतिरिति।

तत्राऽऽद्या यथा—हित्वा०।

स्पष्टम्।

अन्त्या यथा—हे हेला०।

अत्रोपकारवैमुख्ये पर्यवसानम्।

---

भावं वदन्बाधितत्वमभिप्रैति। अत एव नास्या ध्वनित्वम्। तत्र हि निर्बाधेन वाच्येन व्यञ्जनयाऽर्थान्तराऽवगतिः। न चैवं प्रकृते। बाधेन लक्षणाप्रसरात्। उपकृतं बहु नामेत्यादिवदिति बोध्यम्।

हित्वेति। अनुरोधहीनमनसां मूर्धन्यस्त्वदपरो न लज्जाशून्यत्वं च लक्ष्मीं विना नान्यत्र। उभयत्र हेतुमाह—य इति। मुखशतैर्युद्धादिप्रकारशतैः। ( शार्दूलविक्रीडितं छन्दः। ) राज्ञ आश्रितत्यागरूपनिन्दाव्याजेन महादातृत्वेऽपि लक्ष्मीवत्त्वाभिधानात्स्तुतिः।

हे इति। हेलया लीलया जिता बोधिसत्त्वा बौद्धा येन। अतिकारुणिकानामपि जेतारित्यर्थः। परहिताऽऽधाने परहितकरणे। ( शार्दूलविक्रीडितं छन्दः। ) मरुदेशेनैकाकिना निर्जलत्वात्तृषितपान्थोपकाराभावजन्याऽयशोभारो गृहीतः। त्वयाऽपि क्षारजलत्वात्तं भारं गृह्णता तस्य साहायकेनोपकारः कृत इति स्तुत्या तृषितपान्थाऽनुपकारेण निन्दायां पर्यवसानम्। न चात्राऽप्रस्तुतप्रशंसैवास्तु। स्तुतिनिन्दात्मकतया विच्छित्तिविशेषात्। कार्यकारणभावादिसंबन्धाभावाच्च। शुद्धव्यञ्जनाविषयत्वाभावाच्च। ननु स्तुत्या निन्दायाः कथमलंकारत्वम्, वाच्यानुत्कर्षकत्वादिति चेन्न। बीभत्सहास्यान्यतररसालम्बनत्वान्निन्द्यस्य तद्रसानुकूलोत्कर्षकत्वस्य सत्त्वादित्याहुः। अन्यस्तुत्याऽन्यस्तुतेरन्यनिन्दयाऽन्यनिन्दाया अन्यनिन्दयाऽन्यस्तुतेर्गम्यत्वेऽप्येषा। स्तुतिपदेन बोधनस्य बोधनात्। निन्दादीनां व्यङ्ग्यत्वेऽप्यलंकारत्वमप्रस्तुतप्रशंसावद्बोध्यम्। इति व्याजस्तुतिः।

---

१ क. संलक्ष्यते। २ क. °त्राऽऽद्यं य°।

तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धाऽयशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥ ४९४ ॥

**सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥ ११२ ॥**

एकार्थाऽभिधायकमपि सहार्थबलाद्यदुभयस्यावगमकं सा सहोक्तिः ।

यथा—

सह दिअहणिसाइं दीहरा सासदण्डा
सह मणिवलएहिं बाहधारा गलन्ति ।
तुह सुहअ विओए तीअ उव्विग्गिरीए
सह अ तणुलदाए दुब्बला जीविदासा ॥ ४९५ ॥

---

**सासहो० ।**

शब्दशक्त्यैकार्थाभिधायकं पदं यत्सहार्थान्वयबलादनेकार्थाभिधायकं सा सहोक्तिः । ' चैत्रमैत्रौ गच्छतः ' इत्यादौ तु शब्दशक्त्यैवोभयाभिधानम् ।

यथा—सह० ।

---

**एकार्थाभिधायकम्** । एकान्वय्यर्थाभिधायकम् । **अनेकेति** । अनेकान्वय्यर्थाभिधायकमित्यर्थः । अत्र सहशब्दार्थः साहित्यमेकजातीयैककालिकक्रियाद्यन्वयित्वसमनियतम् । ' पुत्रेण सहाऽऽगतः ' इत्यत्र पुत्रप्रतियोगिकसाहित्यवानागत इति शाब्दबोधः । तेन पुत्रवृत्त्यागमनसमानकालिकसमानदेशागमनवान्पितेति मानसो बोधः । तत्र तृतीयान्तस्य विशेषणतया गुणत्वम् । प्रथमान्तस्य विशेष्यतया प्रधानत्वम् । एवं च प्रथमान्त आगमनस्य शाब्दोऽन्वयः । तृतीयान्ते तु सहार्थसामर्थ्यादार्थः । एवं च यत्र गुणप्रधानभावावच्छिन्नयोः शाब्दार्थमर्यादयैकधर्मसंबन्धस्तत्रायमलंकारः । समुच्चये तूभयत्र प्राधान्यं, शाब्द एव चैकान्वय इति ततो भेदः । ' चैत्रमैत्रौ सह गच्छतः ' इत्यादावपि तथैवेति नायमलंकारः । हृद्यत्वं चालंकारसामान्यलक्षणप्राप्तम् । तेन ' अनेन सार्धं विहराम्बुराशेः ' इत्यादौ नेयम् । हृद्यत्वं चास्याः श्लेषभित्तिकाऽभेदाध्यवसानात्मकेन केवलाभेदाध्यवसानात्मकेन वाऽतिशयेनानुप्राणने भवतीति बोध्यम् ।

**सहेति ।**

' सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः सह मणिवलयैर्बाष्पधारा गलन्ति ।
तव सुभग वियोगे तस्या उद्विग्नायाः सह च तनुलतया दुर्बला जीविताशा ॥ '

[ कर्पूरमञ्जर्यां द्वितीयजवनिकान्तरे नायिकाया विरहावस्थावर्णनम् । ] दण्डाकाराः श्वासाः श्वासदण्डाः । बाष्पो नेत्राम्बु । अत्र दिवसनिशादौ दीर्घत्वं दुःखदायित्वादौपचारिकम् । इयं धर्मयोरभेदाध्यवसायमूला । **इति सहोक्तिः ।**

---

१ ख. 'स्याप्यव' ।

श्वासदण्डादिगतं दीर्घत्वादि शाब्दम् । दिवस-निशादिगतं तु सहार्थसामर्थ्यात्प्रतिपद्यते ।

विनोक्तिः सा विनाऽन्येन यत्रान्यः सन्न नेतरः ।

क्वचिदशोभनः, क्वचिच्छोभनः । क्रमेणोदाहरणम्—

अरुचिर्निशया विना शशी शशिना साऽपि विना महत्तमः ।
उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः ॥ ४९६ ॥
मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः ।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः ॥ ४९७ ॥

परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः ॥ ११३ ॥

---

अत्र दीर्घत्वादीनां श्वासादिभिरन्वयः साक्षादेव शाब्दः, दिवसादिभिस्तु सहान्वयबलात् ।

विनोक्तिः० ।

सन्न शोभनो न, नेतरो नाशोभन इत्यर्थः । तेन केनचिद्विना कस्यचिदशोभनत्वं शोभनत्वं वा प्रतिपाद्यते सा विनोक्तिः ।

तत्राशोभनत्वं यथा—अरुचि० ।

शोभनत्वं यथा—मृग० ।

अत्र मृगलोचनया दुष्टसुहृद्विशेषेण च विना नरेन्द्रसूनोर्विचित्रव्यवहारप्रगल्भत्वचन्द्रसुन्दराशयत्वरूपं शोभनत्वमुक्तम् ।

परिवृत्ति० ।

---

विनोक्तिरिति । अत्रापि विनाशब्दार्थ एव विवक्षितः । तेन नञ्–निर्–वि–अन्तरेण–ऋते–रहित–विकलेत्यादिप्रयोगेऽपीयमेव ।

अरुचिरिति । (अपरवक्त्रं छन्दः ।) न चात्र शशिसहितैव निशा रमणीयेति सहोक्तिध्वनिरेव युक्तः । तत्कृतस्यैव चमत्कारस्य सत्त्वादिति वाच्यम् । वाच्यार्थकृतस्य चमत्कारस्यानपलपनीयत्वात् ।

मृगेति । ( विचित्रेषु व्यवहारेषु प्रतिभा झटिति स्फूर्तिस्तस्याः प्रभया प्रकाशेन प्रगल्भः चतुरः । अमृतद्युतिश्चन्द्रस्तद्वत्सुन्दरः स्वच्छ आशयोऽन्तःकरणं यस्य । ) य एव राजपुत्रः स्त्रीमोहितः कृत्यविकलः स एव तया विनाऽतिव्यवहाराभिज्ञः । य एव दुष्टसुहृदालिङ्गितो विषमहृदयः स एव तेन विनाऽतिसदयहृदय इत्यर्थः । ( मालभारिणी छन्दः । ) इति विनोक्तिः ।

---

१ क. द्विशेषं च. ।

परिवृत्तिरलंकारः । उदाहरणम्—

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम् ।
लतास्त्वध्वन्यानामहह दृशमादाय सहसा
ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥ ४९८ ॥

अत्र प्रथमेऽर्धे समेन समस्य, द्वितीय उत्तमेन न्यूनस्य।

---

परिवृत्तिरिति लक्ष्यालंकारनिर्देशः । पूर्वाचार्याणां तथैवोद्देशदर्शनात् । अतो न लक्ष्यलक्षणसंदेहः । समासमैरिति विभागः । विनिमयो हि केनचिद्वस्तुना दत्तेन कस्यचिदादानम् । तच्च क्वचित्समेन समस्य । क्वचिदसमेनासमस्य । अन्त्यमपि द्विधा—क्वचिन्न्यूनेनोत्तमस्य, क्वचिदुत्तमेन न्यूनस्येति त्रिविधेयमित्यर्थः । समासमत्वं चोपादेयत्वानुपादेयत्वाभ्याम् ।

तत्राऽऽद्यद्वयं यथा—लताना० ।

अत्र प्रथमार्धे लास्येनोपादेयतया समस्यामोदस्य, द्वितीयार्ध उपादेयतयोत्तमया दृशाऽऽधिव्याधीनामतादृशतया न्यूनानां विनिमयः ।

---

कस्यचिदादानमिति । परकीयस्य कस्यचिदादानमित्यर्थः । विनियमपदस्य तत्रैव शक्तेः । एवमादाय दानमपि सा । दानादानव्यवहारः कविकल्पित एव न वास्तवस्तत्रालंकारत्वाभावात् । तेन

क्रीणन्ति यत्र मुक्ताभिर्बदराण्यपि बालिकाः ।

इत्यत्र नेयम् । परकीयस्येत्युक्तेः

किमित्यपास्याऽऽभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।

इत्यत्र नेयम् । विनिमयाभावात् ।

लतानामिति । ( अयं मरुद्वायुर्लतानामसममनुपममामोदं परिमलं श्रयतीत्यन्वयः । मतं मनोरमं लास्यं नृत्यं दत्त्वा । अर्थात् । लताभ्यः । अध्वन्यानां पान्थानाम् । अहह इति खेदे । आधिर्मनःपीडा, व्याधिः कायपीडा, भ्रमिर्दिग्भ्रमणदर्शको विकारः, रुदितं रोदनम्, मोहो निश्चेष्टता, एषां व्यतिकरं समूहम् ) । मरुत्संबन्धेन लतानां लास्यदर्शनात्, लतादर्शनेन च पथिकानामाध्यादिदर्शनाद्दातृत्वं कविकल्पितम् । ( शिखरिणी छन्दः । )

---

१ ग. तत्र ।

नानाविधप्रहरणैर्नृप संप्रहारे
स्वीकृत्य दारुणनिनादवतः प्रहारान् ।
दृप्तारिवीरविसरेण वसुंधरेयं
निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥ ४९९ ॥

अत्र न्यूनेनोत्तमस्य ।

प्रत्यक्षा इव यद्भावाः[1] क्रियन्ते भूतभाविनः ।
तद्भाविकम् ।

भूताश्च भाविनश्चेति द्वंद्वः । भावः कवेरभिप्रायोऽत्रास्तीति भाविकम् । उदाहरणम्—

आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसंभारां साक्षात्कुर्वे तवाऽऽकृतिम् ॥ ५०० ॥

---

अन्त्या यथा—नाना० ।

अत्रोत्तमया वसुंधरया न्यूनानां प्रहाराणां विनिमयः ।

प्रत्यक्षा० ।

भूतभाविन इति द्वंद्वः, न कर्मधारय इत्यविरोधः । भूता भाविनो भावा यत्प्रत्यक्षा इव क्रियन्ते प्रत्यक्षतयाऽभिधीयन्ते तद्भाविकम् । भावः कवेरभिप्रायो निश्चयादिप्रतीतिविषयकोऽत्रास्तीति व्युत्पत्तेरित्यर्थः ।

उदाहरणम्—आसी० ।

---

नानेति । दृप्तारिवीरसमूहेन हे नृप युद्धे स्वच्छत्रप्रहारान्स्वीकृत्य तुभ्यं विरहशून्याऽऽलिङ्गनवती वसुमती वितीर्णेत्यर्थः । (वसन्ततिलका छन्दः । ) इति परिवृत्तिः ।

प्रत्यक्षतयेति । अलौकिकप्रत्यक्षविषया अपि लौकिकप्रत्यक्षाविषयतयेत्यर्थः । अभिप्रायो लौकिकप्रत्यक्षविषयत्वेन प्रतिपादनेच्छा । न चेयं भ्रान्तिः । भूतभावित्वेनैव निर्देशात् । अञ्जनाद्यसत्त्वेऽपि तत्कृतशोभाद्यभिप्रायेण तथाप्रयोगाच्च । न चैवं स्वभावोक्तिः । तत्र वस्तुधर्मो वैचित्र्याधायकः । इह तु कवेस्तन्निबद्धस्य वाऽभिप्राय इति विशेषात् ।

आसीदिति । अत्र यदञ्जनं दत्तमासीदिति तद्युक्ते लोचने पश्यामीत्यर्थः । भाविभूषणैः संभ्रियते सा । तद्युक्तामित्यर्थः । ( भाविभूषणानां संभारः समूहो यत्र तादृशीमिति वा । ) यथाश्रुत आसीदिति पश्यामीत्याद्यन्वये भूतादेर्लौकिकसाक्षात्कारविषयत्वं नोपपादितं स्यात् । अत्राञ्जनभूषणादिकं विनाऽपि स्वरूपवैलक्षण्येनैव शोभातिशयात्तेषां वैयर्थ्यं ध्वन्यते । क्वचिद्भूतत्वादिनिर्देशं विनाऽप्येष दृश्यते

---

[1] यत्रार्थाः क्रि० ।

अत्राऽऽद्ये भूतस्य, द्वितीये भाविनो दर्शनम् ।

**काव्यलिङ्गं हेतोर्वाक्यपदार्थता ॥ ११४ ॥**

वाक्यार्थता यथा—

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान् ।
नमन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिभाङ्
महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥ ५०१ ॥

---

अत्र पूर्वार्धे भूतस्याञ्जनस्योत्तरार्धे भाविनो भूषणसंभारस्य प्रत्यक्षतयाऽभिधानम् ।

**काव्यलिङ्गं०** ।

अत्र विवक्षितविवेकेन हेतोर्वचनं काव्यलिङ्गमिति लक्षणम् । वाक्यपदार्थतेति विभागः । वाक्यार्थता पदार्थता चेत्यर्थः ।

तत्र वाक्यार्थता यथा—**वपुः०** ।

अत्र पुरा क्वचिदपि नाहं भवन्तं प्रणतवानग्रेऽप्यहमनतिभागित्यवान्तरवाक्ययोरर्थोऽनमनमपराधे हेतुः ।

---

'अहं विलोकयेऽद्यापि युध्यन्तेऽत्र सुरासुराः ।'

इत्यादौ । अत्रेदं चिन्त्यम्—असंबन्धे संबन्धरूपातिशयोक्त्यैव गतार्थोऽयम् । प्रत्यक्षासंबन्धेऽपि तत्संबन्धवर्णनात् । भूतादिवस्त्वसंबन्धेऽपि तत्संबन्धवर्णनाच्चेति । साऽनुप्राणिकात्रेति कश्चित् । **इति भाविकम्** ।

**हेतोरिति** । स्वतोऽनुपपद्यमानार्थोपपादकहेतोर्वचनमित्यर्थः । **पदार्थतेति** । पदमप्येकमनेकं चेति बोध्यम् । व्याप्त्याद्यनिर्देशान्नानुमानसंकरः । श्रोतुर्यल्लिङ्गकानुमितिबुबोधयिषया कवेर्व्याप्त्यादिविशिष्टहेतुबोधककाव्यनिर्माणं तल्लिङ्गमनुमानविषयः । काव्यलिङ्गजानुमितिस्तु न कविना श्रोतुर्बुबोधयिषिता किं तु श्रोतर्युत्पिपादयिषितेति भेद इत्यन्ये ।

**वपुरिति** । क्वचित्कस्मिन्नपि जन्मनि ( पुरा प्रायो भवन्तमहं न प्रणतवान् । इदं वपुषः प्रादुर्भावादनुमितम् । ) त्वन्नतौ शरीरोत्पत्तेरभावात् । ( संप्रति नमन्मुक्तोऽतनुः शरीरशून्योऽहमग्रेऽपि अनतिभाक् नतिरहितः । इदमपराधद्वयं क्षन्तव्यम् । शिखरिणी छन्दः । ) अग्रेऽप्यनतावतनुत्वमेकपदार्थो हेतुः । अतनुत्वे च नमन्मुक्त इत्यनेकपदार्थो हेतुः । **अनमनमपराध इति** । यद्यप्यनमनमेवापराधस्तयोश्च न हेतुहेतुमद्भाव-

---

१ क. °रे नैवास्मि क्षणमपि । २ क. °त्यतनुरहमग्रेऽप्यनतिमान्महे° । ३ क. हेतुवच° ।

अनेकपदार्थता यथा—

प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ ५०२ ॥

एकपदार्थता यथा—

भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं
हा सोपानपरम्परां गिरिसुताकान्तालयालंकृतिम् ।
अद्याऽऽराधनतोषितेन विभुना युष्मत्सपर्यासुखाऽऽ-
लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥५०३॥

एषु अपराधद्वये पूर्वापरजन्मनोरनमनम्, भुजपाते शस्त्रोपक्षेपः, महामोहे सुखालोकोच्छेदित्वं च यथाक्रममुक्तरूपो हेतुः ।

---

अनेकपदार्थता यथा—प्रणयि० ।

अत्र शस्त्रोपक्षेपो भुजपाते हेतुः । न चायं वाक्यार्थः । 'शस्त्रमुपक्षिपतः' इत्येतावन्मात्रस्यावाक्यार्थत्वात् । तत्र वपुषि वधाय शस्त्रमुपक्षिपत इत्यस्यापि न वाक्यत्वम् । विशेषणत्वादिति तदर्थस्यापि हेतुत्वे न वाक्यार्थस्य हेतुत्वमिति ।

एकपदार्थता यथा—भस्मो० ।

अत्र महामोहत्वे सुखालोकोच्छेदिता हेतुः । तच्च समासादेकपदार्थ एव । अर्थान्तरन्यासे

---

स्तथाऽपि तदिदमित्यस्य, सर्वनाम्नां बुद्धिस्थपरामर्शकत्वाद्दुरितविशेषरूपमित्यर्थः । क्षन्तव्यमित्यस्य च लक्षणया नाशनीयमित्यर्थ इत्यदोषः ।

प्रणयीति । ( मालतीमाधवे पञ्चमाङ्के ) मालतीवधोद्यतमघोरघण्टं प्रति माधवस्येयमुक्तिः । प्रियसख्याः सलीलो यो हास्यरसस्तेन प्राप्तैः । ललितं मनोहरम् । ( तत्र वपुषि वधाय शस्त्रमुपक्षिपतस्तव शिरस्येष भुजोऽकाण्डेऽकाले यमदण्ड इव पततु इत्यन्वयः । नर्कुटकं छन्दः । ) अवाक्यार्थत्वादिति । विशेषणीभूतार्थोपस्थापकत्वेन विशेष्यसाकाङ्क्षत्वादिति भावः ।

भस्मेति । शिवप्रसादेन जाततत्त्वज्ञानस्येयमुक्तिः । हा सोपानपरम्पराम् । तस्याः शोच्यतेत्यर्थः । तत्संस्कारकर्त्रभावात् । ( गिरिसुताकान्तस्य शिवस्याऽऽलयः प्रासादस्तस्यालंकृतिमलंकारभूताम् । युष्माकं भस्मोद्धूलनादीनां या सपर्या पूजा तत्सुखस्याऽऽलोकः प्रकाशस्तदुच्छेदके तन्नाशके मोक्षसंज्ञके महामोहे निधीयामहे । 'वयम्' इति,

---

१ ग. पताति । २ क. करः । ३ ग. मोहत्वे सु° । ४ क. °पत इत्य° । ५ क. सुखोच्छे° ।

**पर्यायोक्तं विना वाच्यवाचकत्वेन[1] यद्वचः ।**

**वाच्यवाचकभाव[2]व्यतिरिक्तेनावगमनव्यापारेण यत्प्रतिपादनम्, तत्पर्यायेण भङ्ग्यन्तरेण कथनात्पर्यायोक्तम् । उदाहरणम्—**

**यं प्रेक्ष्य चिर[3]रूढाऽपि निवासप्रीतिरुज्झिता ।**
**मदेनैरावणमुखे मानेन हृदये हरेः ॥ ५०४ ॥**

**अत्रैरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्यमपि[4] शब्देनोच्यते, तेन यदेवोच्यते तदेव व्यङ्ग्यम्, यथा तु व्यङ्ग्यं न तथोच्यते ।**

---

तटस्थतयोपनिबद्धस्य हेतुत्वे पर्यवसानम्, इह तु साक्षादेव हेतुविभक्त्यादिना हेतुतयोपनिबद्ध इति ततो भेदः ।

पर्यायोक्तं० ।

वाच्यवाचकभावभिन्नेनावगमनव्यापारेणार्थाद्वाच्यस्यैव यदभिधानं तत्पर्यायोक्तम् । पर्यायेण भङ्ग्यन्तरेणाभिधानात् । ध्वनेस्तु न वाच्य एवार्थो विषय इति ततो भेदः ।

उदाहरणम्—यं प्रेक्ष्य० ।

अत्रैक एवार्थ ऐरावतशक्रौ मदमानविमुक्तौ जाताविति व्यञ्जनया मदमानाभ्यां तयोरधिकरणयोर्निवासप्रीतिरुज्झितेत्यभिधया च प्रतिपाद्यते । तेन च यदेवोच्यते तदेव व्यङ्ग्यम् ।

---

शेषः । शार्दूलविक्रीडितं छन्दः । **तटस्थतयेति** । परस्परमनन्वितत्वेनेत्यर्थः । **पर्यवसानमिति** । सामान्याद्यर्थस्योक्तस्य प्रामाण्यग्रहहेतुत्वमित्यर्थः । **इह तु साक्षादेवेति** । तत्तत्पदार्थनिरूपितहेतुतयोपनिबद्ध इत्यर्थः । हेतुविभक्त्यादिनेति क्वाचित्कोऽपपाठः । गम्यमानहेतुत्वकस्यैव हेतोः सुन्दरत्वेन प्राचीनैः काव्यलिङ्गाभ्युपगमात् । अत एव वपुःप्रादुर्भावादनुमितमित्यंशे नायमलंकार इत्याहुः । सामान्यविशेषभावसंबन्धानालिङ्गितत्वेन ततो भेद इत्यन्ये । केचित्तु निर्हेतुरूपदोषाभावः काव्यलिङ्गम् । हेतुहेतुमद्भावस्य वस्तुसिद्धत्वेन कविप्रतिभानिर्वर्त्यत्वाभावात् । तत्प्रयुक्तचमत्काराभावेनास्यालंकारताया दुरुपपादत्वाच्च । श्लेषादिसंमिश्रणेऽपि तत्कृत एव चमत्कारो नेतरकृत इत्याहुः । इति **काव्यलिङ्गम्** ।

**पर्यायोक्तमिति** । **वचः** । प्रतिपादनम् । अवगमनव्यापारो व्यञ्जना । भङ्ग्यन्तरं प्रकारभेदः । तेन न पौनरुक्त्यम् । **ध्वनेस्त्विति** । व्यङ्ग्यस्यागूढत्वादिति भावः ।

**यमिति** । यं रावणम् । हरेरिन्द्रस्य । **एक एवार्थ इति** । विमोचननिवासप्रीतिस्यागयोरेकत्र पर्यवसानादिति भावः । **तेन चेति** । तथा च लक्षणसंगतिः । पौनरुक्त्यं

---

१ क. ग. °न वस्तु यत् । २ क. ग. °वविविक्ते° । ३ क. °रमूढा° । ४ ग. °पि भङ्ग्यन्तरेण श° । ५ ग. °ते । तथा हि गति । ६ क. °बन्धः३° ।

यथा गवि शुक्ले चलति दृष्टे, 'गौः शुक्लश्चलति'—इति विकल्पः। यदेव दृष्टं तदेव विकल्पयति, न तु यथा दृष्टं तथा। यतोऽभिन्नाऽसंसृष्टत्वेन दृष्टम्, भेदसंसर्गाभ्यां विकल्पयति।

---

नचैवं प्रतिपन्नस्यैव प्रतिपत्तिरफलेति किं व्यापारद्वयेनेति वाच्यम्। यतो यथा व्यङ्ग्यं तथा नोच्यते। प्रकारयोर्भेदात्। एकरूप एव वस्तुनि प्रकारभेद एव कथं स्यादिति चेत्, यथा शुक्ले गवि चलति निर्विकल्पकसविकल्पकयोरेक एव ह्यर्थस्ताभ्यां विषयी क्रियते। न पुनर्यथा निर्विकल्पकविषयस्तथैव सविकल्पकेनाऽपि विषयी क्रियते। भिन्नत्वसंसृष्टत्वाविषयकं निर्विकल्पकं, भिन्नत्वसंसृष्टत्वप्रकारकं तु सविकल्पकमिति।

---

शङ्के—न चेति। यथेति। येन प्रकारेण व्यङ्ग्यं तेन रूपेण शब्देन नोच्यत इत्यर्थः। एकस्यैव प्रकारभेदेन वाच्यत्वव्यङ्ग्यत्वयोरविरोधः। यथा यावककुसुम्भजपाकुसुमादिरूपाणां रक्तत्वादिना वाच्यत्वेऽपि तत्तद्वैजात्यरूपेण प्रत्यक्षत्वमेव न वाच्यत्वं तथेहापीति भाव। न पुनर्यथेति। निर्विकल्पके शुक्लतदाश्रयगोत्वतदाश्रयचलनतदाश्रया विशकलिता भासन्ते, सविकल्पके तु संसृष्टतयेत्यर्थः। निर्विकल्पकस्य विशिष्टधीहेतुत्वादिति भावः। भिन्नत्वेति। भेदोऽतद्व्यावृत्तिस्तच्छून्यत्वेन संसर्गराहित्येन च निर्विकल्पकविषयता। भेदोऽतद्व्यावृत्तिः परनये। तस्याः सविकल्पके विशेषणत्वं बौद्धा मन्यन्ते। अन्यमते संसृष्टत्वेति। प्रकारशब्दो विषयमात्रपरः। एवं च यथा निर्विकल्पकस्य विशिष्टविज्ञानहेतुत्वात्ततो वैलक्षण्यं तथा निवासप्रीतित्यागरूपवाच्यज्ञानस्य मदमुक्तरूपव्यङ्ग्यज्ञानहेतुत्वाद्वैलक्षण्यमिति भावः। यद्वा निर्विकल्पके किंचित्त्वेन वस्तु भासते, सविकल्पके तु तत्तन्नामरूपजात्यादिप्रकारेणेति 'न पुनर्यथा' इत्यादेरर्थः। इदमेव भिन्नत्वाविषयकत्वादीति बोध्यम्। अत्र व्यङ्ग्यमगूढं वाच्यादचारु चेति न ध्वनित्वम्।

'नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ।'

इत्यत्रापि भगवान्वासुदेवो राहुशिरश्छेदकारित्वरूपेण स्वासाधारणधर्मेण व्यङ्ग्यस्ततोऽपि चारुतरेण राहुवधूकुचवैयर्थ्यकारित्वेन रूपान्तरेणाभिहितः। केनचिद्रूपेण व्यञ्जनया लभ्यस्यार्थस्य ततोऽपि चारुतरेण रूपेण यत्र वाच्यतेति लक्षणतात्पर्यात्। यद्यपि भगवतः पूर्वप्रक्रान्तत्वाद्यच्छब्देनाभिधानाच्च न व्यङ्ग्यत्वम्, तथाऽपि व्यङ्ग्यतावच्छेदकरूपेण वाच्यत्वाभावाद्व्यङ्ग्यत्वमेव। एवं च प्रकारभेदाद्व्यङ्ग्यस्यैवाभिधाविषयत्वं युक्तम्। न च प्राप्ताप्राप्तविवेकन्यायेन धर्मांश एव व्यङ्ग्यत्वं न धर्म्यंश इति वाच्यम्। धर्मिणः स्वरूपतोऽवाच्यत्वात्। यदि धर्मी स्वरूपतः कस्यचिद्वाच्यः स्यात्स्यादपि तथा। औपाधिकभेदेन घटाकाशादिषु भेदप्रतीतिवत्तत्तद्धर्मरूपोपाधिभेदेन धर्मिणोऽपि भेदेन धर्मिणोऽपि

---

१ ग. °हृ °। २ क. °भेदः क°। ३ क. °कं द्वि नि°।

उदात्तं वस्तुनः संपत्।

संपत्समृद्धियोगः। यथा—

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम्॥ ५०५॥

---

उदात्तं०।

संपत्समृद्धियोगः। न तु तस्यैवातिशयः।

उदाहरणम्—मुक्ताः०।

अत्र विद्वद्भवनस्य मुक्तादिधनसमृद्धियोगः।

---

व्यङ्ग्यस्वाच्च। एतेन 'व्यङ्ग्यस्य प्रकारान्तरेणाभिधानासंभवात्कार्यमुखेन कारणाभिधानं पर्यायोक्तम्। उदाहरणे राहुवधूकुचनैष्फल्यरूपेण कार्येण राहुशिरश्छेदः कारणरूपो गम्यते' इत्यलंकारसर्वस्वोक्तमपास्तम्। प्रकाशोदाहरणविरोधाच्च। यत्तु

'पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम्।
शुकं भोजयितुं यामि युवाभ्यामास्यतामिह॥

अत्र नायिकां नायकेन संगमय्य शुकभोजनव्याजेन निर्गच्छन्त्या सख्या तत्संभोगरूपेष्टसाधनं पर्यायोक्तम्' इति। तत्तु ध्वनिमर्यादां नातिशेत इति दिक्। एवं च

अनायि देशः कतमस्त्वयाऽद्य वसन्तमुक्तस्य दशां वनस्य।'

(नैषधेऽष्टमसर्गे २९ पद्यम्) इत्यत्राप्ययमेव। 'अयं देशोऽलंकर्तव्यः' इत्यादौ चेत्यलम्। इति पर्यायोक्तम्।

**उदात्तमिति**। महतां चोपलक्षणमिति वक्ष्यमाणतया नपुंसकानपुंसकयोरेकशेषः। **वस्तुनः**। धनशौर्यौदार्यादेः। एतेन 'शौर्यादेस्तदुक्तावत्युक्तिनामा पृथगलंकारः' इत्यपास्तम्। अत्रासंबन्धे संबन्धातिशयोक्तिरनुप्राणिका।

**मुक्ता इति**। (केलौ क्रीडायां विसूत्राः छिन्नसूत्रा ये हारास्तेभ्यो गलिताः।) बाला षोडशवर्षा। (त्यागलीला दानलीला सेव आचरितमित्यर्थः। शार्दूलविक्रीडितं छन्दः।) **समृद्धियोग इति**। तेन वर्णनीयनृपतेः समृद्ध्यतिशयः।

'सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम्।'

इत्यादौ पौरसमृद्धिर्व्यज्यत इति व्यङ्ग्योऽयम्।

---

१ क. °ते :कस्था° । °तेस्तत्सानकी° ।

महतां चोपलक्षणम् ॥ ११५ ॥

उपलक्षणमङ्गभावः, अर्थादुपलक्षणीयेऽर्थे । उदाहरणम्—

तदिदमरण्यं यस्मिन्दशरथवचनाऽनुपालनव्यसनी ।
निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः ॥ ५०६ ॥

न चात्र वीरो रसः । तस्येहाङ्गत्वात् ।

तत्सिद्धिहेतावेकस्मिन्यत्राऽन्यत्तत्करं भवेत् ।
समुच्चयोऽसौ

तस्य प्रस्तुतस्य कार्यस्यैकस्मिन्साधके स्थिते साधकान्तराणि यत्र संभवन्ति, स समुच्चयः । उदाहरणम्—

---

महतां० ।

महतां यदुपलक्षणमङ्गभावोऽर्थाद्वर्णनीये, तदप्युदात्तमित्यर्थः । उदाहरणम्—तदिद० ।

अत्रैतादृशो महान्रामो दण्डकाया वर्णनीयाया अङ्गम् । नन्वत्र रामगत उत्साहातिशय एव चमत्कारनिदानं तस्य प्रधानत्वाद्विच्छित्त्यन्तराभावाच्च किंविषयोऽयमलंकारव्यपदेश इति वाच्यम् । नह्यत्र वीरो रसः प्रधानम् । तस्येहाङ्गत्वात् ।

तत्सिद्धि० ।

तत्सिद्धिहेतौ तस्य प्रस्तुतस्य कार्यस्य साधके । समाधावतुल्यकक्षयोः कारणयोरुपादानमत्र तु तुल्यकक्षयोरिति विशेषः ।

---

वर्णनीय इति । अङ्गिनीत्यर्थः ।

तदिदमिति । पुष्पकविमानस्थस्य लक्ष्मणस्याङ्गदं प्रतीयमुक्तिः । ( आर्या छन्दः । ) महत्त्वं च रामस्य दशरथाज्ञावशात्साम्राज्यत्यागपूर्वकवनवासाद्बाहुमात्रसाहाय्येन सकलरक्षःक्षयकरणाच्च । अत्र दण्डकारण्यस्याऽङ्गित्वम्, रामस्याङ्गत्वम् । ईदृशो रामो यत्र स्थित इत्यरण्यस्याधिक्यम् । उत्साहातिशय एवेति । वीरप्रधानस्य रामस्य बाहुसहायत्वेन तदतिशयप्रतीते रक्षःक्षयस्यानुभावस्य प्रतीतेश्च ध्वनित्वं स्यादिति भावः । अङ्गत्वादिति । अङ्गोत्कर्षकत्वादित्यर्थः । अङ्गाङ्गस्य चाप्राधान्यान्न ध्वनित्वमिति भावः । रामविषयकरतिभावस्याप्यपरिपुष्टत्वान्न भावध्वनित्वम् । इत्युदात्तम् ।

इति विशेष इति । समाधौ हि एकेन कार्ये निष्पाद्यमानेऽन्येनाकस्मादापतता

---

१ क. ग. सन्ति ।

दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमो
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं शठः॥५०७॥

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति, तदुपरि प्रियतमदूरस्थित्यादि उपात्तम् । एष एव समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्यवस्यतीति न पृथग्लक्ष्यते । तथा हि—

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥ ५०८ ॥

---

उदाहरणम्—दुर्वाराः० ।

अत्र स्मरमार्गणा एव विरहासहत्वं कुर्वन्ति ततोऽधिकं प्रियतमदूरस्थित्याद्युपात्तम् । एष एवोक्तलक्षणः समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्यवस्यतीति यत्केनचित्ते पृथग्लक्षितास्तदयुक्तम् । तथा हि—कुल० ।

---

सौकर्यादिरूपातिशयसंपादनम् । अत्र तु एककार्यसंपत्तौ सर्वेषां खले-कपोतन्यायेन पातः, कार्यस्य च न कोऽप्यतिशय इति भावः । काव्यलिङ्गे हेतुत्वमात्रं विवक्षितं न तु हेतूना गुणप्रधानभावस्यैकत्वानेकत्वस्य वा चिन्ता । अत्र तु एकस्यैव तत्कार्यकारित्वेऽन्येषां साहाय्यमात्रमिति ततो विशेषः ।

दुर्वारा इति । ( मयूरसूनोः शङ्कुकर्णस्य पद्यमिति शार्ङ्गधरपद्धतौ स्पष्टम् । ) स्वं प्रति विधिं प्रति वा काचिद्वदति । ( स्मरस्य मदनस्य मार्गणा बाणाः । ) दूरे प्रवासात् । गाढमतिशयितम् । कुलनैर्मल्यात्स्वाच्छन्द्याभावः । न चैवं धैर्यमेव कार्यमत आह—स्त्रीत्वमिति । मन्मथसुहृत् । विरहिणीपीडकत्वात् । कालो वसन्तः । अक्षमो मारणे । झटिति नाशाकर्तृत्वात् । अचतुरा नायकादिघटनासमर्थाः । शठः पीडादायीति विरहविशेषणम् । शठेति विधिसंबोधनं वा । ( शार्दूलविक्रीडितं छन्दः । ) पृथगिति । सद्योगसमुच्चयत्वादिनेत्यर्थः ।

कुलमिति । निर्मलं कुलम् । सुन्दरता । वेदादिज्ञानम् । अतिशयितं बलम् । लक्ष्मीवृद्धिः । अकुण्ठं प्रभुत्वम् । ( प्रकृत्या सुभगाः सुन्दरा भावाः पदार्थाः । ) दर्पोऽहंकारोऽ-

---

१ ख. श्रुतिशा० ।

अत्र सतां योगः। उक्तोदाहरणे त्वसतां योगः।

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ५०९ ॥

अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाऽशोभनयोगः।

**स त्वन्यो युगपद्या गुणक्रियाः ॥ ११६ ॥**

गुणौ च क्रिये च गुणक्रिये च गुणक्रियाः। क्रमेणोदाहरणम्—

---

अत्र कुलादीनां समीचीनानामेव योगः। दुर्वारा इत्याद्युक्तोदाहरणे स्मरमार्गणादीनामसमीचीनानाम्।

समीचीनानामसमीचीनानां यथा—शशी०।

अत्र सदसतोर्योगः। दुर्जनस्यासत्त्वाच्छश्यादीनां सत्त्वात्। एतच्चिन्त्यम्। पूर्वं दूरस्थित्यादिविशेषणेन, धूसरत्वादिनाऽत्राप्यसम्यक्त्वमिति।

समुच्चयान्तरमाह—स त्वन्यो०।

अत्र गुणाः क्रियाश्चेति विग्रहे संख्याविशेषस्याविवक्षणात्, विशेषविवक्षाविरहेण च

---

पथप्रवर्तकः। अङ्कुशास्तत्प्रतिबन्धकाः। (हरिणी छन्दः।) कुलादीनां प्रकृतिसुभगत्वेन समीचीनत्वम्। अत्र निर्मलकुले दर्पतदभावहेतौ सत्येव भद्रमूर्त्यादिकमपि तत्त्वेनोपात्तम्। एवं स्मरमार्गणादीनां विरहिणीदुःखदत्वादसमीचीनत्वम्।

**शशीति।** (भर्तृहरिकृते नीतिशतके पद्यम्। स्वाकृतेः शोभनाकृतेः। दुर्गतो दरिद्रः। शल्यानि बाणाग्राणि। पृथ्वी वृत्तम्।) शशी स्वरूपेण सन्नपि दिवसधूसरत्वेनासन्। एवमग्रेऽपि। एवमत्र सदसतां शश्यादीनां योगः। **अत्र सदसतोर्योगो दुर्जनस्यासत्त्वाच्छश्यादीनां सत्त्वादिति।** इदं चिन्त्यम्। एवं हि सहचरभिन्नता स्यात्। सर्वत्रविशेष्यस्य शोभनत्वं विशेषणस्याशोभनत्वं च प्रक्रान्तमिति भग्नप्रक्रमता वा स्यात्। तस्मान्नृपाङ्गणमसद्धृतमिति पाठो युक्तः। सदसादिति च कर्मधारयो युक्तः। अत्रैकैकमपि मानसशल्यभूतज्ञानजनने हेतुस्तत्रान्यदपि षट्कमुपात्तमिति लक्षणसमन्वयः। **पूर्वमिति।** प्रियतमः शोभनोऽपि दूरस्थत्वदोषेणाशुभ इत्यर्थः। चिन्तावीजं तु एकस्य तथात्वेऽपि मार्गणवयोवसन्तानां केवलानामपि विरहिणीदुःखदानां सत्त्वमिति असद्योगोदाहरणमेव तदिति। उक्तोदाहरणेषु सतां योगस्यासतां योगस्य सदसद्योगस्य वा युक्तत्वस्यायुक्तत्वस्य वाऽप्रतीतेर्न समस्य विषमस्य वाऽलंकारस्यात्र प्रसक्तिरिति दिक्।

**विशेषविवक्षाविरहेणेति।** गुणत्वक्रियात्वरूपविशेषेत्यर्थः। केचित्तु 'गुणौ च

विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च ।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥ ५१० ॥
अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥ ५११ ॥
कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥५१२॥
'धुनोति चासिं तनुते च कीर्तिम्'—इत्यादेः,

---

सजातीयवद्विजातीयस्यापि यौगपद्यस्य लाभाद्गुणौ च क्रिये च गुणक्रिये च युगपद्भवतः, स त्रिरूपः समुच्चयः ।

तत्र गुणयोर्यौगपद्यं यथा—**विदलित०** ।

अत्र विमलत्वमलिनत्वयोः ।

क्रिययोर्यथा—**अय०** ।

अत्रोपगतो भवितव्यं चेति क्रिययोः ।

गुणक्रिययोर्यथा—**कलुषं०** ।

अत्र कलुषत्वपतनयोर्गुणक्रिययोः । अत्र कश्चिद्वैयधिकरण्य एव समुच्चय इत्याह । तन्न युक्तम् । 'धुनोति चासिं तनुते च कीर्तिम्' इत्यादौ सामानाधिकरण्येऽपि दर्शनात् । कश्चित्तु सामानाधिकरण्य एवायमित्याहुस्तदपि न सम्यक् ।

---

क्रिये च गुणक्रियाः, गुणश्च क्रिया च गुणक्रिये 'तयोरेकशेषेण वक्ष्यमाणार्थलाभ' इत्याहुः । **युगपदिति** । क्रमव्यावृत्त्यर्थम् ।

**विदलितेति** । विदलितं नाशितं सकलानामरीणां कुलं येन तत् । बलम् । सैन्यम् । प्रकृष्टाः खला दुष्टाः । ( आर्या छन्दः । ) **अत्रेति** । तयोराश्रयभेदेन चाभ्यां समुच्चय इत्यर्थः ।

**अयमिति** । विक्रमोर्वशीये चतुर्थाङ्के पुरूरवस उक्तिः । एकपदेऽकस्मात् । ( प्रिययोर्वश्या । उपनतः प्राप्तः । निरातपत्वेनाऽऽतपराहित्येन रम्यैः । भवितव्यं भूतम् । मालभारिणी छन्दः । ) **अत्रेति** । अत्राप्याश्रयभेदः ।

**कलुषमिति** । स्वभावतः सितपङ्केरुहसोदरा श्वेतकमलतुल्या श्रीर्यस्य तादृशं चक्षुरहितेषु शत्रुषु विषयेऽकस्मात्कलुषं क्रोधाद्रक्तं च । ( मालभारिणी छन्दः । ) **वैयधिकरण्य एवेति** । आश्रयभेद एवेत्यर्थः । **इति समुच्चयः** ।

---

१ एतच्छ्लोकात्पूर्वं क्रिये यथा, इति ग. पुस्तके दृश्यते । २ क. °पगतः । ३ ग. °पश्च° । ४ क. ग. °हृदुन्दरा° ।

'कृपाणपाणिश्च भवान्रणक्षितौ ससाधुवादाश्च सुराः सुरालये ।'
इत्यादेश्च दर्शनात्, 'व्यधिकरणे'-इति 'एकस्मिन्देशे'-इति च न वाच्यम् ।

एकं क्रमेणानेकस्मिन्पर्यायः ।

एकं वस्तु क्रमेणानेकस्मिन्भवति क्रियते वा, स पर्यायः ।
क्रमेणोदाहरणम्—

नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥ ५१३ ॥

श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवतामद्वितीयं च वक्त्रं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ ५१४ ॥

---

कृपाण० ।
इत्यादौ वैयधिकरण्येऽपि तद्दर्शनात् ।
एकं० ।
एकत्वेन विवक्षितं वस्तु यत्र क्रमेणानेकस्मिन्भवति क्रियते वा स एकः पर्यायः । अत्र क्रमेणेति समुच्चयव्यावर्तनाय । प्रयोजकानिर्देशतन्निर्देशौ भवतिकरोत्यर्थौ । न तु स्वाभाविकत्वास्वाभाविकत्वे । वृषलक्ष्मणः कण्ठे कालकूटवासस्यास्वाभाविकत्वेन भवतीत्यत्रानुदाहरणत्वापत्तेः ।
तत्राऽऽद्यो यथा—नन्वाश्रय० ।
अत्र कालकूटस्य वस्तुत एकस्यानेकत्र वासे प्रयोजकं किंचिदपि नोक्तम् ।

---

समुच्चयेति । वक्ष्यमाणविशेषालंकाराद्वितीयभेदवारणाय चेत्यपि बोध्यम् । तत्र यौगपद्यसत्त्वादिति भावः ।

नन्विति । ( भल्लटकविकृते भल्लटशतके पद्यम् । ) आश्रयस्थितिराश्रयणरीतिः । विशिष्टपदा विशिष्टाधिकरणा । ( वसन्ततिलका छन्दः । ) अत्राऽऽधारभेदाद्भिन्न आधेय एकत्वेनाध्यवसितः ।

श्रोणीति । श्रोणीभागादीनां प्राथमिकाधारत्वमार्थम् । सेवत इत्यनेन मध्ये पूर्वमतनुतासत्ता बोधिता । एवमग्रेऽपि । अत एव विनिमयः संगच्छते । तनुता कार्श्यम् । तर-

१ अयं श्लोकः क. ग. पुस्तकयोर्नन्वाश्रयेति श्लोकात्प्राग्दृश्यते ।

यथा वा—

**बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत ।**
**अधुना हृदयेऽप्येष मृगशावाक्षि लक्ष्यते ॥ ५१५ ॥**

**रागस्य वस्तुतो भेदेऽप्येकतयाऽध्यवसितत्वादेकत्वमविरुद्धम् ।**

**तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम् ।**
**बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेन ॥ ५१६ ॥**

---

न केवलमयं वास्तविक एकत्वे, किं त्वारोपितेऽपि । यथा—**बिम्बोष्ठ०** ।

अत्र प्रयोजकानिर्देशः स्फुट एव । रागपदार्थस्य त्वौष्ठे लौहित्यात्मकतया हृदये तु स्नेहात्मकत्वेन[2] भेदेऽप्येकत्वस्याध्यवसानान्नैकत्वविवक्षाविरोधः ।

द्वितीयो यथा—**तं ताण०** ।

अत्र 'कुसुमबाणेन' इति प्रयोजकनिर्देशः ।

---

लगतयश्चञ्चलगतयश्चञ्चलदर्शनं च । कुचसाचिवताम् । सद्वितीयताम् । धत्त इत्यनेन तस्मिन्प्रागद्वितीयता या स्थिता सा वक्त्रेण गृहीतेति बोधितम् । मुखेऽद्वितीयत्वं निरुपमत्वम् । वक्षसि द्वितीयराहित्यम् । तयोश्चाभेदाध्यवसायः । कुचसाचिववक्षस्त्वेनैव मुखस्य निरुपमत्वम् । अत्र तनुत्वत्यागादिना तत्तदुत्कर्षो व्यञ्जनया बोध्यते ।

**बिम्बोष्ठ एवेति** । न चैकसंबन्धनाशोत्तरमपरसंबन्धे सत्येव लोके पर्यायप्रसिद्धेः कथमिदमुदाहरणमिति वाच्यम् । एकमनेकस्मिन्क्रमेणेत्येव लक्षणात् । शब्दसाम्यमात्रेण लौकिकार्थाविवक्षणात् । एतेनात्र वर्धमानालंकारः पृथगित्यपास्तम् ।

**तं ताणेति०** ।

'तत्तेषां श्रीसहोदररत्नाभरणे हृदयमेकरसम् ।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥'

श्रीसहोदरं रत्नं कौस्तुभस्तदाभरणे हरौ । एकरसं तत्परम् । कामेन प्रियाबिम्बाधरचुम्बनाद्यासक्तं कृतमित्यर्थः । केचित्तु यदसुराणां हृदयं विजिगीषाज्वलनजाज्वल्यमानं श्रीसहोदररत्नानामासमन्ताद्धरणे तत्परमासीत्, तत्सुकुमारतरोपकरणेनाऽपि कामेन प्रियाबिम्बाधरे निवेशितं सकलरत्नसारतुल्यो बिम्बाधर इति तेषामभिमानोत्पत्तेः । एवं च व्यङ्ग्योपमात्रेत्याहुः । तन्मतेऽपि हरणस्य वैषयिकाधारत्वात्पर्यायाक्षतिरेव । ( गाथा छन्दः । ) अत्राऽपि क्रमेणेति समुच्चयवारणाय ।

---

१ ख. दृश्यते । २ ख. स्नेहाद्यात्मक० ।

अन्यस्ततोऽन्यथा ।

अनेकमेकस्मिन्क्रमेण भवति क्रियते वा, सोऽन्यः । क्रमेणोदाहरणम्—

मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति ।
अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥५१७॥
तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुसलध्वनिः कलमिदं संगीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥ ५१८ ॥

अत्रैकस्यैव हानोपादानयोरविवक्षितत्वात् न परिवृत्तिः ।

अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः ॥ ११७ ॥

---

अन्य० ।

अनेकमेकस्मिन्क्रमेण यद्भवति क्रियते वा, सोऽन्यः पर्याय इत्यर्थः । पूर्ववद्व्याख्येयम् । तत्र भवत्यर्थे यथा—मधुरिम० ।

अत्रैकस्मिन्खलवचसि क्रमेणामृतव्यञ्जने विषकथने च न प्रयोजकनिर्देशः ।

करोत्यर्थे यथा—तद्गेहं० ।

अत्रैकस्मिन्द्विजे तद्गेहतन्मन्दिरयोरनेकैर्दिवसैरिति प्रयोजकनिर्देशः । नचेयं परिवृत्तिः । हानोपादानयोरविवक्षितत्वात् ।

अनुमानं० ।

---

मधुरिमेति । मधुरिम्णा रुचिरम् । अथ ( विचारानन्तरम् ) मोहहेतुं तदेवान्तर्गतं विषं कथयतीवेत्यन्वयः । ( पुष्पिताग्रा छन्दः । )

तद्गेहमिति । नतभित्ति खर्वम् । दिवः स्वर्गाल्लब्धावकाशम् । मन्दिरं राजयोग्यं गृहम् । ( जरती जीर्णा । घनाभा घनतुल्याः । घटाः श्रेणयः । कलम् । मधुरस्वरम् । ) दिवसैर्न तु मासैर्वर्षैर्वा । ( भूमिम् । अवस्थाम् । समारोपितः प्रापित इत्याश्चर्यम् । शार्दूलविक्रीडितं छन्दः । ) हानम् । स्वीयवस्तुसमर्पणम् । उपादानम् । परकीयवस्तुग्रहणम् । इति पर्यायः ।

---

१ क. भिं परां प्रापितः ।

**पक्षधर्मान्वयव्यतिरेकित्वेन त्रिरूपो हेतुः साधनम्, धर्मिणि अयोगव्यवच्छेदो व्यापकस्य साध्यम् । यथा—**

**यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं**
**यत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः ।**
**तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो**
**धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ॥ ५१९ ॥**

**साध्यसाधनयोः पौर्वापर्यविकल्पे न किंचिद्वैचित्र्यमिति न तथा दर्शितम् ।**

---

पक्षे संबन्धः, सपक्षवृत्तित्वं, विपक्षावृत्तित्वं चेति रूपत्रयवान्हेतुः साधनम् । व्यापकत्वाभिमतस्य पक्षेऽयोगव्यवच्छेदो व्यापकसंबन्धपर्यवसन्नः साध्यम् । तदुभयवचनमनुमानालंकारः ।

यथा—यत्रैता० ।

अत्र पूर्वार्धे साधनस्योत्तरार्धे साध्यस्य वचनम् । प्रयोगश्चैवम्—एताश्चक्रीकृतचापं सदापुरोधावदञ्चितशरत्वादिविशिष्टमनोभवाः संततनिपतन्मर्मभेदिबाणकलसद्भ्रूव्यापारकस्था-

---

**साधनमिति** । एतद्रूपत्रयविशिष्टो हेतुः साधनपदेनोच्यत इत्यर्थः । **व्यापकत्वाभिमतस्येति** । अस्य 'यस्य' इत्यादिः । **साध्यमिति** । अस्य 'तत्' इत्यादिः । **व्यापकसंबन्धः** । व्यापकास्तित्वम् । **तदुभयेति** । 'कविप्रतिभोल्लिखित' इत्यादिः ।

**यत्रेति** । चलाचला अतिचञ्चलाः । चलाञ्चलेति पाठे चञ्चलप्रान्तचक्षुष इत्यर्थः । व्यापारयन्ति वक्रां कुर्वन्ति । यत्र पुंसि । (मर्मस्पृशो मर्मभेदिनः । चक्रीकृतः कर्षणेन वर्तुलीकृतश्चापो यस्मिन्कर्मणि तथा । अञ्चिते धनुषि योजिते शरे बाणे प्रेङ्खन् चलन्करो यस्य । शासनमाज्ञा तस्य धरः । ) अग्रतः । पुरः । ( शार्दूलविक्रीडितं छन्दः । ) अत्र पूर्वार्धे संततनिपतन्मर्मभेदिबाणकलसद्भ्रूव्यापारकस्थानकत्वं साधनं पक्षवृत्तित्वेनोक्तम् । परार्धे साध्यम् । यत्तद्भ्यां व्याप्तिः सूचिता । तत्र वस्तुतो व्याप्त्यसत्त्वेऽपि कविप्रौढोक्त्या तथाभिधानम् । अत्रानुमानमित्यत्र भावे ल्युट् । तेन जायमानाऽनुमितिरत्रालंकारः । सा च मन्ये शङ्केऽवैमि जान इत्यादिवाचकोपादाने वाच्या । यत्र लिङ्गलिङ्गिनोः सत्त्वं तत्र तेषामनुमितिबोधकत्वात् । यत्र सादृश्यादिनिमित्तसद्भावस्तत्रोत्प्रेक्षाबोधकत्वम् । वक्ति कथयति इत्यादिलक्षणपदोपादाने लक्ष्या । उभयाऽनुपादाने साध्यसाधनाभ्यां तदाक्षेपे प्रतीयमानेति

---

१ ख. साध्यत्वम् । २ क. 'र्थविपर्ययविकल्पने वैचित्र्यं न किंचिदिति । ३ क. 'पक्षव्यावृ'।

**विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ।**

**अर्थाद्विशेष्यस्य । उदाहरणम्—**

---

नत्वादिति । नन्वत्र पूर्वं साधनवत्साध्यस्यापि वचनं संभवति । यथा—' मधु तिष्ठति वाचि योषिताम् ' इत्यादि । तत्कथं सामान्यत एतदुक्तं न तु विशेषत इति चेत् , साध्यस्य पूर्वभागे तादृशवैचित्र्याभावादिति ।

**विशेषणै०** ।

साकूतैः साभिप्रायैः । उक्तिरर्थाद्विशेष्यस्य । उदाहरणम्—

---

बोध्यम् । **नन्विति** । एवं चानया रीत्यानुमानस्य द्वैविध्यं वक्तुमुचितमिति भावः । **मध्विति** ।

' हृदि हालाहलमेव केवलम् । अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥ '

इति पादत्रयम् । **तादृशेति** । कार्यकारणयोर्वैपरीत्ये झटिति कार्यकारित्वप्रतीतिरूपवैचित्र्यवदिह तथाभावाभावात् न विशिष्योक्तमिति भावः । यत्तु केनचिदर्थेनोक्तेन तुल्यकारणत्वादर्थान्तरस्याऽऽपादनमर्थापत्त्यलंकारः । यथा

'स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम् ।'

' तवाग्रे यदि दारिद्र्यं स्थितं भूप द्विजन्मनाम् ।
शनैः सवितुरग्रेऽपि तमः स्थास्यत्यसंशयम् ॥ '

नेयं वाक्यवित्संमताऽर्थापत्तिः । आपादकस्यार्थस्यापादितमर्थं विनाऽनुपपत्तेरभावात् । अस्यां चार्थान्तरं लोकेऽविद्यमानमपि कविना स्वप्रतिभया कल्पयित्वा यद्यापाद्यते तदाऽलंकारत्वम् । तेन

'उदुम्बरफलानीव ब्रह्माण्डान्यत्ति यः सदा ।
सर्वगर्वापहः कालस्तस्य के मशका वयम् ॥ '

इत्यादौ नायमलंकार इति । तन्न । आद्योदाहरणेऽनुमानस्य संभवात् । द्वितीये यद्यर्थातिशयोक्तेः सत्त्वात् । सा च द्विविधा । आपाद्यापादकयोरुभयोरपि असंभवित्वेन कविकल्प्यतयाऽऽपाद्यमानस्यैवेत्यस्यापि सुवचत्वात् ।

' निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ।
अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥

इत्यर्थापत्तिस्त्वनुमानमेवेति दिक् । **इत्यनुमानम्** ।

**उक्तिः** । परिपुष्टिः । **अर्थाद्विशेष्यस्येति** । विशेषणानां परस्परनिराकाङ्क्षत्वादिति भावः । साभिप्रायत्वं प्रकृतार्थोपपादकचमत्कारिव्यञ्जकत्वम् ।

महौजसो मानधना धनार्चिता
धनुर्भृतः संयति लब्धकीर्तयः ।
नसंहतास्तस्य नभेदवृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥ ५२० ॥

यद्यप्यपुष्टार्थस्य दोषताऽभिधानात्तन्निराकरणेन पुष्टार्थस्वीकारः कृतः, तथाऽप्येकनिष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलंकारमध्ये गणितः ।

---

**महौजसो०** ।

अत्र महौजस्त्वादिविशेषणानि परानभिभवनीयत्वाद्यभिप्रायकाणि । न च वाच्यम्—अपुष्टार्थत्वस्य दोषत्वाभिधानादर्थसिद्धं पुष्टार्थत्वमिति दोषाभावत्वमात्रतया कुतोऽलंकारमध्ये पाठितोऽयमिति । एकनिष्ठत्वेन बहूनां विशेषणानामुक्तोदाहरणवदुपादाने वैचित्र्यमपि ह्यनुभवसिद्धं, न तु दोषाभावत्वमात्रमिति संप्रदायः । वयं त्वालोचयामः—तादृशैकविशेषणोपन्यासेऽप्यलंकारत्वमुचितम् । अपुष्टार्थत्वविरहस्य निर्विशेषणतयाऽप्युपपत्तेरर्थसिद्धत्वाभावाद्वैचित्र्यस्य चानुभवसिद्धत्वात् । यथा—

'शुद्धे सद्मनि पल्लविन्युपवने वाप्यां नवाम्भोरुहि
क्रीडाद्रौ च सशाद्वले विवलितग्रीवैर्विमुक्तादृशः ॥' इत्यादौ ।

---

**महौजस इति** । ( किरातार्जुनीये प्रथमसर्गे युधिष्ठिरं प्रति चारस्योक्तिः । ) तेजस्विनो मानिनो धनैः पूजिता रणे प्राप्तकीर्तयः न संहताः न परैरुपजप्ताः परस्परमैकमत्यमाप्ता इत्यर्थः । तस्याः प्रियाणि प्राणैरपि कर्तुं वाञ्छन्तीत्यन्वयः । ( वंशस्थं वृत्तम् । ) **आदीति** । मानभङ्गभीरुत्वोपकृतत्वयुद्धोत्सुकत्वकार्यकारणतदेकप्रयोजनापेक्षित्वान्यादिपदार्थाः । तेनायं दुर्जय इति व्यङ्ग्यम् । **बहूनामिति** । विशेषणैरिति बहुत्वं विवक्षितमित्यर्थः । **तादृशैकेति** ।

अयि लावण्यजलाशय तस्या हा हन्त मीननयनायाः ।
दूरस्थे त्वयि किं वा कथयामो विस्तरेणालम् ॥

इत्यादौ । **अनुभवसिद्धत्वादिति** । यथा नित्ये संध्यावन्दनादौ दोषाभावस्याङ्गवैकल्येऽपि सिद्धौ साङ्गतत्करणं फलातिशयायैव । तथा दोषाभावस्य विशेषणानुपादानेऽपि संभवेन साभिप्रायैकविशेषणनिबन्धनश्चमत्कारो दुरपह्नव इति भावः । किं च

सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः ।

---

१ ख. नभिन्न॰ । २ क. तेर्वैचि॰ ।

व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥ ११८ ॥

निगूढमपि वस्तुनो रूपं कथमपि प्रभिन्नं केनापि व्यपदेशेन यदपह्नूयते, सा व्याजोक्तिः । न चैषाऽपह्नुतिः । प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्येहासंभवात् । उदाहरणम्—

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥ ५२१ ॥

---

व्याजोक्ति० ।

उद्भिन्नत्वमस्फुटस्य प्रकाशः । तथा चास्फुटमपि वस्तुस्वरूपं कथंचिद्व्यक्तमथ केनापि यदपह्नूयते सा व्याजोक्तिः । न चेयमपह्नुतिः । प्रकृताप्रकृतयोः साम्ये तत्स्वीकारात् । अत्र तु तदभावात् । न च प्रथमं गूढस्यानन्तरं प्रकाशस्यापह्नव इति सामग्रीभेदादेवापह्नुतिभेद इति वाच्यम् । एवंविधेऽपि विषये साम्यसंभवेऽपह्नुतेरेवोपगमात् । ननु यत्रापह्नवार्थं सादृश्योपक्षेपः सा व्याजोक्तिः, सादृश्यार्थमेव तु यत्रापह्नवोपक्षेपः साऽपह्नुतिरिति चेत्, न । तत्रोभयत्राऽप्यपह्नुतेरेवोपगमात् । यदाहुः—

साम्यायापह्नवो यत्र सा विज्ञेया त्वपह्नुतिः ।
अपह्नवाय सादृश्यं यस्मिन्नेषाऽप्यपह्नुतिः ॥ इति ।

उदाहरणम्—शैलेन्द्र० ।

---

इत्यादौ यत्र सुधांशुकलितोत्तंस इति विशेषणाभावेऽपि तापहरणसामर्थ्यस्य सामर्थ्यातिशयेनाप्युपपत्तेस्तद्विशेषणानुपादानेऽपि न क्षतिस्तत्र तद्विशेषणोपादानमधिकचमत्कारायैवेति बोध्यम् । अत्र व्यङ्ग्यं च क्वचिद्वाच्यासिद्ध्यङ्गं क्वचिदपराङ्गमिति गूणीभूतव्यङ्ग्यमेव । अत्र विशेषणैरित्युपलक्षणं विशेष्यस्यापि । तेन साभिप्राये विशेष्येऽप्ययम् । यथा

चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः'।

इत्यत्र । अत्र चतुर्भुज इति विशेष्यं पुरुषार्थचतुष्टयदानसामर्थ्याभिप्रायगर्भम् । बाहुलकलभ्यकर्मल्युडन्तकरणल्युडन्ताविशेषणशब्दयोरेकशेषो वा । उक्तिरित्यस्यार्थकथनमित्येवार्थः । एतेन 'साभिप्राये विशेष्ये परिकराङ्कुरनामा भिन्नोऽलंकारः' इत्यपास्तम् । इति परिकरः ।

**कथंचित्** । लिङ्गादिना । **केनापि** । कपटेन । **प्रकृताप्रकृतयोरिति** । इदमुपलक्षणम् । तत्रोपमेयनिषेधपूर्वकमुपमानव्यवस्थापनम् । अत्र तु किंचिदनिषिध्यैव निमित्तान्तरप्रयुक्तत्वज्ञापनमित्यपि बोध्यम् ।

**शैलेन्द्रेति** । प्रतिपाद्यमाना दीयमाना । उपगूढं संबन्धः । रोमाञ्चादि । आदिना कम्पः

---

१ क. °त्र विज्ञेया सात्व° ।

**अत्र पुलकवेपथू सात्त्विकरूपतया प्रसृतौ शैत्यकारणतया प्रकाशित-त्वादपलपितस्वरूपौ व्याजोक्तिं प्रयोजयतः ।**

---

अत्र पुलकवेपथू सात्त्विकैकरूपतया प्रसृतौ शैत्यकारणतया प्रकाशनादपलपितस्वरूपा-विति व्याजोक्तिं प्रकाशयतः । वयं तु—पुलकवेपथुभ्यां सात्त्विकाभ्यां प्रकाशिता गूढा च गतिस्तयोः शैत्यकारणताप्रकाशनेनापह्नुतेति व्याजोक्तिरियम् ।

---

विसंष्ठुलो व्यग्रहस्तः । स चासावखिलवैवाहिकक्रियाभङ्गाकुलः । हा इत्याश्चर्ये । शैलान्तः—पुरैस्तत्स्त्रीजनैः । मातृमण्डलं शच्यादिगणस्तेन, गणा नन्द्यादयस्तैश्चेत्यर्थः । ( शार्दूलविक्रीडितं छन्दः । ) **अत्रेति** । पार्वतीकरस्पर्शजन्यरोमाञ्चादेः शैलेन्द्रस्पर्शजन्यत्वप्रतिपादनादिति भावः । **सात्त्विकाभ्याम्** । रतिभावानुभावाभ्याम् । **गूढा च रतिः** । पार्वतीविषया । **शैत्येति** । शैलेन्द्रशैत्येत्यर्थः । गोपनपदेन गोपकव्यापारमात्रं, न तूक्तिरेव । तेन

‘ आयान्तमालोक्य हरिं प्रतोल्यामाल्याः पुरस्तादनुरागमेका ।
रोमाञ्चकम्पादिभिरुच्यमानं भामा जुगूह प्रणमन्त्यथैनम् ॥ ’

इत्यादावप्ययमेव । अत्र व्यङ्ग्यस्य गुणीभूतत्व एवायमलंकारः । तेन

‘ सखि पश्य गृहारामपरागैरस्मि धूसरा ’

इत्यादौ ध्वनित्वमेव । एतेन

‘ गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रति कथ्यते ।
वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः ॥ ’

इति गूढोक्त्यलंकारः परास्तः । तस्य ध्वनित्वाक्रान्तत्वात् । क्वचिद्गुणीभूतव्यङ्ग्यत्वात् । अलंकारत्वं तु नोचितम् । उपस्कारकत्वाभावात् । प्रकृते शिवविषयकभावोपस्कारकत्वं स्पष्टमेव । एतेन ‘ गच्छाम्यच्युत ’ इत्यादौ विवृतोक्तिर्गुप्ताविष्करणरूपेत्यपास्तम् । गुणीभूतव्यङ्ग्यमात्रत्वात् । वाच्यरसाद्युत्कर्षकत्वाभावाच्च । एतेन

‘ लोकप्रवादानुकृतिर्लोकोक्तिरिति गण्यते ।
सहस्व कतिचिन्मासान्मीलयित्वा विलोचने ॥ ’

इत्यपास्तम् । उपस्कारकत्वाभावात् । नन्वत्र कोऽलंकार इति चेन्न कोऽपि । एतेन

‘ छेकोक्तिर्यत्र लोकोक्तेः स्यादर्थान्तरगर्भता ।
भुजंग एव जानीते भुजंगचरणं सखे ॥ ’

इति छेकोक्त्यलंकारोऽपि परास्तः । उपस्कारकत्वाभावात् । क्वचिद्ध्वनित्वं गुणीभूत-

---

१ क गूढाबगतिः । गूढा रतिः इति पाठ इति प्रभा ।

किंचित्पृष्टमपृष्टं वा कथितं यत्प्रकल्पते ।
तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता ॥ ११९ ॥

प्रमाणान्तरावगतमपि वस्तु शब्देन[3] प्रतिपादितं प्रयोजनान्तराभावात्सदृशवस्त्वन्तरव्यवच्छेदाय यत्पर्यवस्यति, सा भवेत्परिसंख्या । अत्र च कथनं प्रश्नपूर्वकं तदन्यथा च परिदृष्टम्, तथोभयत्र व्यपोह्यमानस्य प्रतीयमानता वाच्यत्वं चेति चत्वारो भेदाः ।

---

किंचि० ।

तादृक्तुल्यम् । व्यपोहाय व्यवच्छेदाय । यत्किंचित्कथितं सत्स्वतुल्यस्यान्यस्य व्यवच्छेदाय यत्कल्पते सा परिसंख्या मतेति लक्षणम् । अन्यस्य कथनमन्यव्यपोहाय कथं कल्पत इतिचेत् । प्रमाणान्तरेणावगतस्यैव वस्तुनः पुनः शब्देन प्रतिपादनस्य प्रयोजनान्तराभावात् । पृष्टमपृष्टं चेति तु विभागः । कथनं हि किंचित्प्रश्नपूर्वकं किंचिच्चातत्पूर्वकमिति द्वैविध्यमित्यर्थः । ते च द्वे अपि विधे व्यवच्छेद्यस्य प्रतीयमानत्ववाच्यत्वाभ्यां प्रत्येकं द्विविधे ।

---

व्यङ्ग्यत्वं वा न निवारयामः ।

' त्वामालिखन्ती दृष्ट्वाऽन्यं धनुःपौष्पं करेऽलिखत् । '

अत्रापि व्याजोक्तिरेव । उक्तिपदस्य व्यापारमात्रपरत्वात् । एतेन

युक्तिः परातिसंधानं क्रियया मर्मगुप्तये । '

इति युक्तिनामाऽत्रालंकार इत्यपास्तम् । एवमुत्कर्षहेतौ तद्धेतुत्वकल्पनारूपा प्रौढोक्तिरसंबन्धे संबन्धरूपाऽतिशयोक्त्या गतार्था ।

' संभावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये ।
यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव ॥ '

इति संभावनालंकारो यद्यर्थोक्तौ च कल्पनमित्यतिशयोक्त्या गतार्थः ।

' किंचिन्मिथ्यात्वसिद्ध्यर्थं मिथ्याऽर्थान्तरकल्पनम् ।
मिथ्याध्यवसितिर्वेश्यां वशयेत्खस्रजं वहन् ॥ '

इति मिथ्याध्यवसितिरसंबन्धे संबन्धातिशयोक्त्या गतार्थेति दिक् । **इति व्याजोक्तिः ।**

**प्रयोजनान्तराभावादिति ।** अनुवादस्य प्रयोजनसाकाङ्क्षतयाऽन्यव्यावृत्तिरेव प्रयोजनमित्यर्थः । नियमोऽप्यत्र दर्शन उक्तलक्षणाक्रान्तत्वात्परिसंख्यैव ।

---

१ क. च । २ क. मता । ३ ग. °न पुनः प्र° । ४ क. °दृक्स्वतुल्य° ।

क्रमेणोदाहरणम्—

किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः ।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति ॥ ५२२ ॥

किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्यमार्यचरितं सुकृतं न दोषः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम् ॥ ५२३ ॥

कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥ ५२४ ॥

---

तत्र प्रश्नपूर्वके कथने व्यवच्छेद्यस्य प्रतीयमानता यथा—**किमासे०** ।

अत्रान्यनदीसविधादि व्यवच्छेद्यं प्रतीयमानम् ।

तत्रैव वाच्यं व्यवच्छेद्यं यथा—**किं भूषणं०** ।

स्पष्टम् ।

अप्रश्नपूर्वके कथने व्यवच्छेद्यं प्रतीयमानं यथा—**कौटिल्यं०** ।

---

**किमिति** । अत्र किमासेव्यमिति प्रश्नः । अनिन्द्यं गङ्गासमीपं नान्यनदीसविधं, नापि कान्तानितम्बादि । विष्णोः पादयुगं नान्यदेवस्य, नाप्यङ्गनादि । पुण्यं, न पापम् । दया, न हिंसादि । ( येषु गङ्गासमीपादिषु आसक्त्या । निरवधिर्या विमुक्तिः सायुज्यरूपा तदर्थं चेतः प्रभवति समर्थं भवति । शिखरिणी छन्दः । )

**किं भूषणमिति** । आर्यचरितं शिष्टसेवितम् । ( सुकृतं पुण्यकर्म । दोषो व्यभिचारादिः । धिषणा बुद्धिः । अभिमतोत्तरदानादाह—जानातीति । सदसद्विवेकमुत्कृष्टानिकृष्टविभागं त्वदपरस्त्वदन्यः को जानाति न कोऽपीत्यर्थः । वसन्ततिलका छन्दः । )

**कौटिल्यमिति** । ( कौटिल्यं वक्रता कपटं च । कचनिचये केशसमूहे, न तु हृदये । रागो रक्तिमा प्रीतिश्च । करादिषु, न परपुरुषादिषु । काठिन्यं दार्ढ्यं निर्दयत्वं च । कुचयुगले, न तु हृदये । तरलत्वं चञ्चलताऽविचार्यकारित्वं च । नयनयोः, न मनसि । आर्या छन्दः । ) अत्र कौटिल्यादेरितराधिकरणकत्वं व्यवच्छेद्यं व्यङ्ग्यम् । प्रश्नश्च नास्ति ।

---

१ क. 'स्त्वदितरः ।

भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥ ५९५ ॥

यथोत्तरं चेत्पूर्वस्य पूर्वस्यार्थस्य हेतुता ।
तदा कारणमाला स्यात्

उत्तरमुत्तरं प्रति यथोत्तरम् । उदाहरणम्—

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते गुणानुरागप्रभवा हि संपदः ॥ ५९६ ॥

---

अप्रश्नपूर्वक एव कथने व्यवच्छेद्यं वाच्यं यथा—भक्ति० ।

श्लेषणाऽप्येषा संभवति । यथा—'चित्रेषु वर्णसंकराः' 'खलसंयोगः शालिषु' इत्यादि ।

यथोत्तरं० ।

यथोत्तरमिति वीप्सायां यथाशब्दः । तेनोत्तरोत्तरं प्रतीत्यर्थः ।

उदाहरणम्—जितेन्द्रियत्वं० ।

नन्वत्र कार्यकारणभावालंकृतिप्रपञ्चनप्रसङ्गेन हेत्वलंकारोऽपि लक्षणार्हः । उक्तश्चायं भट्टोद्भटेन—

---

भक्तिरिति । युवतिरूपे कामास्त्रे । ( आर्या छन्दः । ) अत्र यत्र कविप्रतिभानिर्मितेतरव्यावृत्तिस्तत्रालंकारता । यथा 'कौटिल्यं कचनिचये' इत्यत्र कौटिल्यादिकं कविप्रतिभया एकीकृतमिति तद्द्वारा तत्प्रातियोगिकवृत्तिस्तन्निर्मितेति बोध्यम् । इति परिसंख्या ।

यथोत्तरमिति । इदमुपलक्षणम् । यथापूर्वं परस्य परस्य कारणत्व इत्यपि बोध्यम् । यथा—

'भवन्ति नरकाः पापात्पापं दारिद्र्यसंभवम् ।
दारिद्र्यमप्रदानेन तस्माद्दानपरो भव ॥'

इति । अत्र कथितपदत्वं न दोषः । प्रत्युत पदान्तरेण तस्यार्थस्योक्तौ तत्त्वप्रतिभानाभावाद्विवक्षितार्थासिद्धेः । उपस्थितशब्दस्यापि विशेषणतया भानाङ्गीकारात् ।

जितेन्द्रियत्वमिति । ( वंशस्थं वृत्तम् । ) अत्र पद्ये भग्नप्रक्रमत्वं दोषः । जितेन्द्रियत्वं विनयस्य कारणमित्युक्ते तत्कस्य कारणमित्युदिताकाङ्क्षा यद्यपि उत्तरवाक्येन निवर्त्यते तथाऽपि न साक्षात् । एवमग्रेऽपि । अस्याः किमुपस्कारकतयाऽलंकारत्वं कया रीत्या चोपस्कारकत्वमिति चिन्त्यम् । उत्तरोत्तरोत्तमवस्तुकारणत्वात्सर्व एत उपादेया इति ज्ञानं

---

१ क. गुणाधिके पुंसि ज° ।

" हेतुमता सह हेतोरभिधानमभेदतो हेतुः "

इति हेत्वलंकारोऽत्र न लक्षितः। आयुर्घृतमित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति। वैचित्र्याभावात्।

अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः।
रम्योऽयमेति संप्रति लोकोत्कण्ठाकरः कालः॥ ५२७॥

इत्यत्र तु काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुर्न पुनर्हेत्वलंकारकल्पनयेति पूर्वोक्तं काव्यलिङ्गमेव हेतुः।

क्रियया तु परस्परम्॥ १२०॥

वस्तुनोर्जननेऽन्योन्यम्।

अर्थयोरेकक्रियामुखेन परस्परं कारणत्वे सति अन्योन्यं नामालंकारः। उदाहरणम्—

---

' हेतुमता सह हेतोरभिधानमभेदतो हेतुः '

इति। तर्किं न लक्षित इति चेत्, आयुर्घृतमित्यादिरूपस्यास्य वैचित्र्याभावेनालंकारत्वस्यैवाभावात्। नन्वेवम्—अविरल०।

इत्यादौ प्राचां काव्यरूपताभिधानं विरुध्येतालंकाराभावादिति चेत्, न। कोमलानुप्रासेनैव तत्संभवात्। तर्किं हेत्वलंकारो नास्त्येव। क एवमाह। कीदृशस्तर्ह्यसाविति चेत्, पूर्वोक्तं काव्यलिङ्गमेवेति।

क्रियया०।

वस्तुनोः परस्परं जन्यजनकभावोऽसंभवी। तस्य तं प्रत्येव पौर्वापर्ययोर्द्वयोरसंभवादित्यत उक्तं क्रिययेति। एकक्रियाजननद्वारेणेत्यर्थः। अविशिष्टं वस्तु तावदजातकल्पम्। तेन वैशिष्ट्यप्रयोजकक्रियाजनके जनकत्वोपचारः। तथा च मिथस्तादृशैकक्रियाजनकत्वमन्योन्यालंकार इति सारम्।

---

चमत्कारकारणमिति वदन्ति। हेतुमतेति। कार्यकारणभावसंबन्धनिबन्धनशुद्धसारोपासाध्यवसानामूलोऽयमिति बोध्यम्। वैचित्र्याभावेनेति। कार्यवाचकपदेन कारणाभिधाने वैचित्र्याभावेनेत्यर्थः।

अविरलेति। ( वसन्तवर्णनम्। आर्या छन्दः। ) अत्र विकासमदानन्दपदेषु तद्धेतौ लक्षणा। कोमलानुप्रासेति। कामोद्दीपकोऽयं काल इति भङ्ग्यन्तरेण प्रतिपादनेन पर्यायोक्तसत्त्वाच्च, प्रागुक्तरीत्याऽतिशयोक्तेः सत्त्वाच्चेत्यपि बोध्यम्। इति कारणमाला।

क्रिययेति। इदं गुणस्याप्युपलक्षणम्।

---

१ क. °लनलिनवि°। २ ख. °श्च का°।

हंसाण सरेहिँ सिरी सारिज्जइ अह सराण हंसेहिं ।
अण्णोण्णं चिअ एए अप्पाणं णवार गरुअन्ति ॥ ५२८ ॥

अत्रोभयेषामपि परस्परं जनकता, मिथः श्रीसारतासंपादनद्वारेण ।

उत्तरश्रुतिमात्रतः ।
प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति ॥ १२१ ॥
असकृद्यदसंभाव्यमुत्तरं स्यात्तदुत्तरम् ।

प्रतिवचनोपलम्भादेव पूर्ववाक्यं यत्र कल्प्यते, तदेकं तावदुत्तरम् ।

उदाहरणम्—

---

उदाहरणम्—हंसाण० ।

अत्र श्रीसारणेन सरोहंसयोर्मिथो जनकता ।

उत्तर० ।

यत्रोत्तरश्रवणमात्रेणानुपात्तमपि प्रश्नवाक्यं परिकल्प्यते तदेकमुत्तरम् । प्रश्ने सति लोकातिक्रान्तगोचरतयाऽसंभाव्यं यदसकृत्प्रतिवचनं तत्पुनरपरम् । अत्र प्रश्नोत्तरयोः सकृदुपादानं न चमत्करोतीत्यसकृदित्युक्तम् । असंभाव्यं तु चमत्कारित्वमिति मान्याः । अप्रसिद्धत्वमिति तु वयम् । तच्च प्रमाणान्तरागोचरविषयत्वात् । अत एव प्रश्नपरिसंख्यातो भेदः । तत्र हि लोकप्रसिद्धविषयस्योत्तरस्य प्रयोजनान्तराभावेनान्यव्यपोहे तात्पर्यम् । अत्र तु निगूढविषयतया वाच्य एव तात्पर्यविश्रामः ।

---

हंसाणेति ।

हंसानां सरोभिः श्रीः सार्यतेऽथ सरसां हंसैः ।
अन्योन्यमेवैत आत्मानं केवलं गुरू कुर्वन्ति ’ ॥

सार्यते सारी क्रियते । ( आर्या छन्दः ) । प्रकृते शोभाविशेषविशिष्टान्हंसान्प्रति सरसां कारणत्वम् , शोभाविशेषविशिष्टसरांसि प्रति हंसानां कारणत्वम् , परस्परशोभाजननद्वारेणैवेतिभावः । परस्परक्रियया परस्परमुपकारजननज्ञानकृतोऽत्र चमत्कारः । इत्यन्योन्यालंकारः ।

उत्तरं नाम प्रश्नगम्यजिज्ञासानिवर्तकज्ञानविषयीभूतोऽर्थः । अत्र प्रश्नेति । उन्नीतप्रश्ने तु सकृदुत्तरस्यापि चारुत्वमिति भावः । प्रश्नोत्तरयोरन्यतरस्याकूतगर्भत्वे बद्धप्रश्नेऽपि सकृदुपादानेन चमत्कारोऽस्त्येव ।

‘ किमिति कृशाऽसि कृशोदरि किं तव परकीयवृत्तान्तैः । ’

अत्र प्रश्नेन प्रतीकारसामर्थ्यं व्यङ्ग्यम् । उत्तरेण स्वस्य पातिव्रत्यं व्यङ्ग्यम् । आकूतागर्भत्वे तु उत्तरमलंकार एव नेत्याहुर्न्याः । तात्पर्यमिति । वाच्यस्य प्रमाणान्तरप्राप्तत्वादिति भावः । वाच्य एवेति । लोकोत्तरत्वेन चमत्कारिणि वाच्य एव विषमत्वाद्य-

वाणिअअ हत्थिदन्ता कुत्तो अह्माण वग्घकित्ती अ ।
जाव लुलिआलअमुही घरम्मि परिसक्कए सोह्ळा ॥ ५२९ ॥

हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी, ता मूल्येन प्रयच्छेति क्रेतुर्वचनममुना वाक्येन समुन्नीयते । न चैतत्काव्यलिङ्गम् । उत्तरस्य ताद्रूप्यानुपपत्तेः । न हि प्रश्नस्य प्रतिवचनं जनको हेतुः । नापीदमनुमानम् । एकधर्मिनिष्ठतया साध्यसाधनयोरनिर्देशादित्यलंकारान्तरमेवोत्तरं साधीयः । प्रश्नादनन्तरं लोकातिक्रान्तगोचरतया यदसंभाव्यरूपं प्रतिवचनं स्यात्, तदपरमुत्तरम् । अनयोश्च सकृदुपादाने न चारुताप्रतीतिरित्यसकृदित्युक्तम् । उदाहरणम्—

का विसमा देवगई किंदुल्लहं जं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं दुक्खं जं खलो लोओ ॥ ५३० ॥

---

तत्राऽऽद्यं यथा—वाणिअअ० ।

हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी, मूल्येन ताः प्रयच्छेति क्रेतृवचनमनेनोत्तरवाक्येनानुमीयते । सूत्रे च प्रश्नपदं पूर्ववाक्यमात्रपरमिति प्रश्नाभावेऽप्यदोषः । यद्वा हस्तिदन्तव्याघ्रकृत्तयस्तव सन्तीति प्रश्नवाक्यमिहोन्नेयम् । न च वाच्यमिदं काव्यलिङ्गविशेष एव । उत्तरस्य प्रश्नं प्रति हेतुत्वाभावात्[3] । उत्तरस्य तदनुत्पादकत्वात् । काव्यलिङ्गस्य तदात्मकत्वात् । तर्हि ज्ञापकतयाऽनुमानमेवेति चेत्, न । एकधर्मिगतत्वेन साध्यसाधननिर्देशो हि तत् । न चात्र तथा । तस्मादलंकारान्तरमेवोत्तरम् ।

द्वितीयं यथा—का विसमा० ।

---

तिशयप्रतिपादने तात्पर्यादिति भावः ।

**वाणिअएति ।**

'वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च ।
यावल्लुलितालकमुखी गृहे परिसंक्रामति स्नुषा' ।

( लुलिताश्चञ्चला अलकाः केशा यत्र तादृशं मुखं यस्या एतादृशी स्नुषा परिसंक्रामति परिभ्रमति । गाथा छन्दः । ) अस्यामासक्तो मत्सुतो मृगयां न करोतीत्युत्तरं व्यङ्ग्यम् । ( क्रेतारं वणिजं प्रति ) वृद्धव्याधोक्तिरियम् । **एकधर्मी** । पक्षः । न च स्नुषागृहनिवासस्य हस्तिदन्ताद्यभावे निमित्तत्वेन काव्यलिङ्गमेवास्तु । तत्संभवेऽपि प्रश्नोन्नयनद्वारेणैव चमत्कारादित्याशयः ।

**केति ।**

'का विषमा दैवगतिः किं दुर्लभं यज्जनो गुणग्राही ।
किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं ( दुःखं यत् ) खलो लोकः ॥'

---

१ क. लद्धं जं । २ क. °क्येनान्नीय° । ३ ख. हेतुत्वादिति ।

प्रश्नपरिसंख्यायामन्यव्यपोह एव तात्पर्यम्, इह तु वाच्य एव विश्रान्तिरित्यनयोर्विवेकः ।

कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ॥१२२॥
धर्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षते ।

कुतोऽपि आकारादिङ्गिताद्वा । सूक्ष्मस्तीक्ष्णमतिसंवेद्यः । उदाहरणम्—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं काऽपि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥ ५३१ ॥

अत्राऽऽकृतिमालोक्य कयाऽपि वितर्कितं पुरुषायितमसिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतम् । पुंसामेव कृपाणपाणिता, योग्यत्वात् । यथा वा—

---

अत्र दैवगत्यादेर्वैषम्यादि लोकाप्रसिद्धमेव प्रकाश्यते । 'किमासेव्यं पुंसाम्' इत्यादिप्रश्नपरिसंख्यायामन्यव्यवच्छेदे तात्पर्यम् । अत्र तु वाच्य एवेति ततो भेदः ।

कुतो० ।

कुतोऽपीति आकारादिङ्गिताद्वा । सूक्ष्मस्तीक्ष्णमतिसंवेद्यः । तत्र रूपादेरन्यथात्वमाकारः । ततो यथा—वक्त्र० ।

अत्र कण्ठकुङ्कुमभेदलक्षणेनाऽऽकारेण लक्षितं पुरुषायितं सख्या सखीहस्ते खड्गलेखालिखनेन वैदग्ध्यादभिव्यञ्जितम् । पुंसामेव पाणौ कृपाणस्य योग्यत्वात् ।

---

( गाथा छन्दः । ) प्रश्नस्य सकृदुपादान उत्तरस्यानेकत्वेऽप्ययम् ।

'किं स्वर्गादधिकसुखं बन्धुसुहृत्पण्डितैः समं गोष्ठी ।
सौराज्यशुद्धवृत्ति सत्काव्यरसामृतं स्वादु ॥'

इति । एवं प्रश्नोत्तरयोरभिन्नत्वेऽप्ययम् । 'केदारपोषणरता'[4] इत्यादौ । एवं प्रश्नद्वयस्यैकोत्तरत्वादावपि । यथा 'के खेऽटाः किं चलं वयः' इत्यादौ । इत्युत्तरम् ।

अन्यथात्वमिति । यत्नजन्यस्वेदादिनेत्यर्थः ।

वक्त्रेति । स्यन्दिभिः प्रस्राविभिः । पुरुषायिते श्रमाधिक्यात्स्वेदाधिक्यम् । पुंस्त्वं पुरुषायितत्वम् । ( शालिनी छन्दः । ) लक्षितम् । सख्या स्वयमुन्नीतम् । अभिव्यञ्जितम् । नायिकायां वयस्यान्तरेषु च । अत्र स्वेदालिङ्गकस्वानुमितिविषयस्य पुरुषायितत्वस्य

---

१ क. पाणौ स्मित्वा । २ क. °णस्य पाणियो° । ३ क. °ह्लालेख° । ४ केदारपोषणरताः काशीतलवाहिनी गङ्गा । कंसं जघान कृष्णः कंबलवन्तं न बाधते शीतम् ।

संकेतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ ५३२ ॥

अत्र जिज्ञासितः संकेतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः।

उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः ॥ १२३ ॥

परः पर्यन्तभागोऽवधिर्यस्य। धाराधिरोहितया तत्रैवोत्कर्षस्य विश्रान्तेः। उदाहरणम्—

---

चेष्टाविशेष इङ्गितम्। तेन यथा—संकेत०।

अत्र नेत्रोत्साहरूपेणेङ्गितेन लक्षितः कामिनः संकेतकालाभिलाषः कामिन्या निशासूचकेन पद्मसंमीलनेन लीलया प्रकाशितः।

**उत्तरोत्तर०।**

परावधिरिति परः पर्यन्तभागो गद्यस्य पद्यस्य वाऽवधिरुत्कर्षसीमा यस्य। तेन पर्यन्तभागो यत्र सर्वोत्कृष्ट इत्यर्थः। धाराधिरोहितया तत्रैवोत्कर्षविश्रान्तेः।

---

खड्गलेखादिलिखनेन व्यञ्जनम्। अत्र विद्यमानमप्यनुमानं सूक्ष्माङ्गम्। स्ववैदग्ध्यप्रकाशनद्वारा सूक्ष्मस्यैव चमत्कारित्वात्।

**संकेतेति।** (संकेतकाले मनो यस्य। तज्जिज्ञासुमित्यर्थः। ईषन्नेत्राभ्यामर्पितं सूचितमाकूतं येन। ईषन्नेत्रार्पिताकूतमिति विटविशेषणम्। अमुं भावालंकारमाह रुद्रटः। नव्योक्तपिहितालंकारोऽप्यत्रैवान्तर्भूतः। **इति सूक्ष्मम्।**

**धाराधिरोहितयेति।**

जम्बीरश्रियमतिलङ्घ्य लीलयैव व्यानम्रीकृतकमनीयहेमकुम्भौ।
नीलाम्भोरुहनयनेऽधुना कुचौ ते स्पर्धेते खलु कनकाचलेन सार्धम् ॥

इत्यत्रापि सार एव। एतेनेदृशे विषये वर्धमानालंकारोऽतिरिक्त इत्यपास्तम्।

मधुरविकसितोत्पलावतंसं शशिकरपल्लवितं च हर्म्यपृष्ठम्।
मदनजननविभ्रमा च रामा सुखमिदमर्थवतां विभाति रम्यम् ॥

इत्यादौ तु नायम्। काव्यपर्यन्तभागस्य सर्वोत्कृष्टत्वाभावात्। अत्र कथितपदत्वं न दोषः। प्रत्युत तेनैव सर्वनाम्ना वाऽनिर्देशे प्रतीतिस्थगनात्। उत्कर्षः श्लाघ्यगुणानामश्लाघ्यगुणानां च। तत्राऽऽद्य उदाहृतः। अन्त्यो यथा—

तृणाल्लघुतरस्तूलस्तूलादपि च याचकः।
वायुना किं न नीतोऽसौ मामयं याचयिष्यति ॥

---

१ ख ईषन्ने०।

राज्ये सारं वसुधा वसुंधरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम् ॥ ५३३ ॥

भिन्नदेशतयाऽत्यन्तं कार्यकारणभूतयोः ।
युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसंगतिः ॥ १२४ ॥

इह यद्देशं कारणम्, तद्देशमेव कार्यमुत्पद्यमानं दृष्टम्, यथा धूमादि। यत्र तु हेतुफलरूपयोरपि धर्मयोः केनाप्यतिशयेन नानादेशतया युगपदवभासनम्, सा तयोः स्वभावोत्पन्नपरस्परसंगतित्यागादसंगतिः ।

उदाहरणम्—

जस्सेअ वणो तस्सेअ वेअणा भणइ तं जणो अलिअम् ।
दन्तक्खअं कवोले वहूएँ वेंअणा सवत्तीणम् ॥ ५३४ ॥

---

उदाहरणम्—राज्ये० ।

भिन्न० ।

अत्रात्यन्तमिति देशभेदस्यैवोपकारकं, न तु पृथगपि विवक्षितार्थम् । युगपदिति स्वरूपानिर्वचनम्, न तु व्यावर्तकम् । तेन कार्यकारणभूतयोर्धर्मयोर्यत्र भिन्नदेशतया संप्रतिपादनं साऽसंगतिः । हेतुफलयोरग्निधूमाद्योरिव प्रसिद्धायाः समानदेशस्वरूपायाः संगतेः परित्यागात् । तथाप्रतिपादनं च कारणान्तरेभ्यो वैलक्षण्यात् ।

उदाहरणम्—जस्से० ।

---

राज्य इति । अनङ्गस्य मदनस्य सर्वस्वं सर्वस्वरूपा वराङ्गना । आर्या छन्दः । इति सारः ।

स्वरूपनिर्वचनमिति ।

'उद्भिन्नमात्रे वयसि दृष्ट्वा प्रियतमाधरम् ।
भावी लाक्षारसोऽत्रेति कामिनो रज्यते मनः ॥

इत्यत्र कालभेदेऽप्यसङ्गतेरिष्टत्वात् । कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्तेश्च पृथग्वैचित्र्यकारित्वेन समावेश एव युक्त इति भावः । प्रसिद्धायाः । कार्यकारणस्वभावासिद्धायाः । वैलक्षण्यादिति । कारणगतं कमप्यतिशयमभिसंधायेत्यर्थः ।

जस्से इति ।

'यस्यैव व्रणस्तस्यैव वेदना भणति जनस्तदलीकम् ।
दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम् ॥'

---

१ ग. 'लभूतयो' । २ ग. 'शमेव भास°' । ३ क. 'धूमयोरिव प्रसिद्धयोः समानदेशस्वरूपयोः संग°' ।

**एषा च विरोधबाधिनी न विरोधः । भिन्नाधारतयैव द्वयोरिह विरोधितायाः प्रतिभासात् । विरोधे तु विरोधित्वमेकाश्रयनिष्ठमनुक्तमपि पर्यवसितम् । अपवादविषयपरिहारेणोत्सर्गस्य व्यवस्थितेः । तथा चैवं निदर्शितम् ।**

**समाधिः सुकरं कार्यं कारणान्तरयोगतः ।**

---

स्पष्टम् । नन्वयं विरोधालंकार एव । हेतुफलयोर्वैयधिकरण्यस्य विरोधरूपत्वादिति चेत्, न । वैयधिकरण्यं ह्यसंगतिः । न च सैव विरोधः । किं तु तद्बोधिका । वैयधिकरण्येन तयोर्विरोधप्रतिभासनात् । नन्वेवमपि प्रतीयमानो विरोध एवालंकारोऽस्तु, न तु तद्बोधिकाऽसंगतिरपि साक्षात् । न च वाच्यं समानाधिकरण एव विरोधो विरोधालंकारनिर्वाहको न तु व्यधिकरणोऽपीति । लक्षणे सामान्यत एव विरोधस्योक्तत्वादिति । मैवम् । सामान्येनोक्तस्यापि विशेष एव पर्यवसानात् । अपवादविनिर्मुक्त एव हि देश उत्सर्गः प्रवर्तते । विरोधालंकारस्य चासंगत्यलंकारोऽपवाद इति व्यधिकरणविरोधस्यापवादाक्रान्ततया तद्भिन्नविरोधे विरोधालंकार इति । अत एव तथैवोदाहृतम् ।

**समाधिः०।**

---

( गाथा छन्दः । ) व्रणक्षतपदयोः प्रक्रमभेदश्चिन्त्यः । **विरोधरूपत्वादिति** । विरोधोऽनुपपत्तिः । सा च सहानवस्थितयोः सहावस्थान इव सहस्थितयोः सहानवस्थानेऽपि तुल्या । तस्याश्च प्ररोहे दोष एवेत्याभासता वाच्या । तथा च विरोधाभास एवेत्यर्थः । **व्यधिकरणविरोधस्येति** । कार्यकारणवैयधिकरण्यप्रयुक्तविरोधस्येत्यर्थः । अत्र येन केनापि प्रकारेण कार्यांशेऽभेदाध्यवसानमनुप्राणकम् । केचित्तु लक्षणे कार्यकारणभूतयोरित्युपलक्षणम् । समानाधिकरणत्वेन प्रसिद्धयोर्वैयधिकरण्यनिबन्धोऽसंगतिः ।

' नेत्रे निरञ्जने तस्याः शून्यास्तु वयमद्भुतम् । '

इत्यादौ निरञ्जनत्वशून्यत्वयोरकार्यहेत्वोरपि शुद्धसमानाधिकरणत्वेन प्रसिद्धयोरसंगतिरित्याहुः । एवमन्यत्र चिकीर्षितस्यान्यत्र करणेऽन्यचिकीर्षावता तद्विरुद्धान्यकरणे चेयमेवासंगतिः । विषयताघटितसामानाधिकरण्येन चिकीर्षायाः कार्यमात्रं प्रति हेतुत्वात् । अधिकरणान्तर्भावेनापि चिकीर्षाया हेतुत्वाच्चेत्याहुः । **इत्यसंगतिः ।**

---

१ ख. धबोधिनी ।

साधनान्तरोपकृतेन कर्त्रा यदक्लेशेन कार्यमारब्धं समाधीयते, स समाधिर्नाम । उदाहरणम्—

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥ ५३५ ॥

**समं योग्यतया योगो यदि संभावितः क्वचित् ॥ १२५ ॥**

इदमनयोः श्लाघ्यमिति योग्यतया संबन्धस्य नियतविषयमध्यवसानं चेत्तदा समम् । तत्सद्योगेऽसद्योगे च । उदाहरणम्—

---

इष्टात्कारणादन्येन कारणेनोपकृतः कर्ता यदक्लेशेन कार्यं करोति स समाधिः । सम्यगाधिः समाधिरिति व्युत्पत्तेः ।

उदाहरणम्—मान० ।

तयोस्तुल्यकक्षताविरहान्न समुच्चयालंकारान्तर्भावः ।

**समं० ।**

योग्यताऽऽनुरूप्यम् । संभावितः सर्वसंमतः । तेनेदमनयोः समुचितमिति योग्य-

---

**इष्टादिति** । एककारणजन्यकार्यस्याकस्मिककारणान्तरसमवधानाहितं सौकर्यं समाधिरित्यर्थः । सौकर्यं च कार्यस्यानायासेन सिद्ध्या साङ्गसिध्या च बोध्यम् ।

**मानमिति** । दिष्ट्या भाग्येन । उदीर्णमुद्गतम् । **तुल्यकक्षताविरहादिति** । घनगर्जितस्याऽऽकस्मिकत्वादिति भावः । अत्र कारणान्तरयोग इत्युपलक्षणम् । तेनाकस्मादीप्सितार्थलाभस्य वाञ्छितसिद्ध्यर्थयत्नात्तदधिकलाभस्योपायसिद्ध्यर्थयत्नात्साक्षात्फललाभवर्णनस्य च समाधित्वमेव । सौकर्यस्यानायासेन सिद्ध्यादिरूपस्येवाकस्मिकत्वादिरूपस्यापि ग्रहात् । एतेनेदृशे विषये प्रहर्षणं भिन्नोऽलंकार इत्यपास्तम् । अन्यदीयगुणेनान्यत्र गुणवत्ताबुद्धिरूपोऽन्यदोषेणान्यत्र दोषवत्ताबुद्धिरूपो वोल्लासः काव्यलिङ्गेन गतार्थ इत्याहुः । वक्ष्यमाणसममेवेत्यन्ये । एवं कार्यसहवर्तितया निर्णीतकारणाभावेऽपि कार्यस्य स्थितिरपि सौकर्यम् ।

'दीपे निर्वापितेऽप्यासीत्काञ्चीरत्नैर्महन्महः ।'

इति । एतेनात्र पूर्वरूपं नाम पृथगलंकारः । विकृतेऽपि वस्तुनि पूर्वावस्थाऽनुवृत्तिः पूर्वरूपमितीत्यपास्तम् । **इति समाधिः ।**

**योगः** । संयोगादिरूपः कार्यकारणभावश्च । **आनुरूप्यमिति** । तेन सता सतो योगोऽसता चासतो योग इति लब्धम् । तेन सदसतोर्योगे नायम् । अनौचित्यात् ।

---

१ ख. 'रब्धमा' ।

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
रूपे देवोऽप्ययमनुपमो दत्तपत्रः स्मरस्य ।
जातं दैवात्सदृशमनयोः संगतं यत्तदेत-
च्छृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥ ५३६ ॥

यथा वा—

चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥ ५३७ ॥

---

तथा संबन्धस्य नियतविषयमध्यवसान चेत्तदा समं नामाऽलंकारः । योग्यता च प्रकर्षनि-कर्षाभ्याम् ।

तत्र प्रकर्षेण यथा—धातुः० ।

निकर्षेण यथा—चित्रं० ।

---

समुच्चये सतोरसतोर्वा कारणयोः समुच्चयः, अत्र त्वकारणयोरपि तयोर्योगस्यौचित्याभिधान-मिति विशेषः । **नियतविषयमध्यवसानम्** । निश्चयः ।

**धातुरिति** । निकषस्थानं परीक्ष्योपलरूपा । अयं देवो राजा । स्मरस्य रूपे दत्तपत्रः कृतपत्रावलम्बन इत्यर्थः । संगतं समागमः । ( मन्दाक्रान्ता छन्दः । )

**चित्रमिति** । फलस्फीतिः फलसंपत् । एतस्याः फलसंपदः । कवलनकला भक्षण-चातुरी तत्र कोविदः पण्डितः । ( मन्दाक्रान्ता छन्दः । )

कार्यकारणभावसंसर्गस्यानुरूपत्वं कारणात्स्वसमानगुणकार्योत्पत्त्या यथा—

मन्त्रार्पितहविर्दीप्तहुताशनतनूभुवः ।
शिखास्पर्शेन पाञ्चाल्याः स्थाने दग्धः सुयोधनः ॥

इति । यादृशगुणकवस्तुसंसर्गस्तादृशगुणोत्पत्त्याऽपि समम् ।

वडवानलकालकूटलक्ष्मीगरुडव्यालगणैः सहैधितः ।
रजनीरमणो भवेन्नृणां न कथं प्राणवियोगकारणम् ॥

क्वचिदिष्टप्राप्त्यर्थं प्रयुक्तात्कारणात्तत्प्राप्त्या च । यथा—

उच्चैर्गजैरटनमर्थयमान एव त्वामाश्रयन्निह चिरादुषितोऽस्मि राजन् ।
उच्चाटनं त्वमपि लम्भयसे तदेव मामद्य नैव विफला महतां हि सेवा ॥

इत्यत्र । यद्यपि स्तुत्या निन्दाभिव्यक्तौ तदुपस्कारको विषमोऽप्यत्रास्ति तथाऽपि वाच्यस्तुतिकक्षायां समालंकारो न वार्यते । लम्भयतेर्ण्यन्तस्य द्विकर्मत्वम् । न च लोकसि-द्धायाः कारणानुरूपकार्योत्पत्तेर्निबन्धनं न चारुत्वावहम् । वस्तुतोऽननुरूपयोरपि कार्यकार-

क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात् ।
कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत् ॥ १२६ ॥
गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये ।
क्रमेण च विरुद्धे यत्स एष विषमो मतः ॥ १२७ ॥

द्वयोरत्यन्तविलक्षणतया यदनुपपद्यमानतयैव योगः प्रतीयते[१] यच्च किंचिदारभमाणः कर्ता क्रियायाः प्रणाशान्न केवलमभीष्टं तत्फलं न लभेत, यावदप्रार्थितमप्यनर्थं विषयमासादयेत् [२] तथा, सत्यपि कार्यस्य कारणरूपानुकारे यत्तयोर्गुणौ क्रिये च परस्परविरुद्धतां व्रजतः [३ । ४], स समविपर्ययात्मा चतूरूपो विषमः । क्रमेणोदाहरणम्—

शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना ।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः ॥ ५३८ ॥
सिंहिकासुतसंत्रस्तः शशः शीतांशुमाश्रितः ।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥ ५३९ ॥

---

क्वचि० ।

द्वयोरत्यन्तविलक्षणतया यत्क्वचिद्योगो घटनां नोपैति, किं त्वनुपपद्यमानतयैव प्रतीयते स एको विषमः । यच्च क्वचित्कार्यमारभमाणः कर्ता बलवत्कारणान्तरेण विष्टम्भात्तत्क्रियाफलं नाऽऽप्नोति, प्रत्युतानिष्टं विषयमासादयेत्स द्वितीयः । यच्च क्रियाफललाभेऽपि कार्यकारणयोर्गुणौ क्रिये वा विरुद्धे भवतस्तौ तृतीयचतुर्थौ विषमौ । सर्वत्र समताया विपर्ययात् । तत्र प्रथमो यथा—शिरीषा० ।

द्वितीयो यथा—सिंहिका० ।

अत्र त्राणरूपफलाभावेऽन्येन ग्रासरूपोऽनर्थः ।

---

णयोः श्लेषादिना धर्मैक्यसंपादनद्वाराऽनुरूपतावर्णने वस्तुतोऽनिष्टस्यापि तेनैवोपायेनेष्टाभेदसंपादनेनेष्टप्राप्तिवर्णने चारुताया अनुभवसिद्धत्वात् । इति समम् ।

शिरीषादिति । कुकूलाग्निः करीषाग्निः । कुम्भकारपचनाग्निरित्यन्ये । अत्रान्यतरगुणस्वरूपतिरस्कार्यन्यतरगुणस्वरूपत्वाद्वैषम्यम् ।

सिंहिकेति । राहुमाता सिंही च । सिंहिकासुतात् सिंहात्संत्रस्तो भीतः । शीतांशुं चन्द्रम् । अन्यः सिंहिकासुतो राहुः । अत्रानयोर्योगाऽनुचित इति व्यङ्ग्यम् ।

---

१ क. योगो न प्र° । २ ग. 'लं लभते या° । ३ क. 'मृदुःसहो मलयानिलः । ४ क. 'भावाऽन्ये° ।

सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोक्याभरणं प्रसूते ॥ ५४० ॥
आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥ ५४१ ॥
अत्राऽऽनन्ददानं शरीरतापेन विरुध्यते । एवम्—
विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥ ५४२ ॥

---

तृतीयो यथा—**सद्यः०** ।

चतुर्थो यथा—**आनन्द०** ।

अत्राऽऽनन्ददानशरीरतापक्रिये विरुद्धे । सूत्रे विभाग उपलक्षणपरः । तेन संबन्धिनोरानुरूप्याभावात्मकस्य विषमस्यान्येऽपि भेदा[2] भवन्ति । तत्रावयवावयविनोर्वैषम्ये यथा—**विपुलेन०** ।

---

**सद्यः करोति** । करस्पर्शमात्रेणैव यशो न तु युद्धापेक्षेत्यर्थः । (उपजातिश्छन्दः ।) अत्र जन्यजनकनिष्ठयोः पाण्डुरनीलाख्यगुणयोर्वैषम्यम् । अत्र श्यामत्वगुणविशिष्टात्कारणात्तद्विरुद्धगुणयुक्तयशस उत्पत्तिः । अभेदाध्यवसानलक्षणेनातिशयेन समवायिकारणरूपतया स्थिते निमित्तकारणे विषयांशमालम्ब्य भातो विरोधो विषय्यंशविमर्शनान्निवर्तत इति । अत्राभेदाध्यवसायोऽनुप्राणकः । तदुत्थापितविरोधश्च परिपोषकः । इदमेवात्रालंकारत्वबीजम् । द्वितीयभेदे । इष्टानवाप्त्यनिष्टाप्ती मिलिते प्रत्येकं च विषमपदार्थश्चकारात् । इष्टं च स्वस्य सुखसाधनप्राप्तिर्दुःखसाधननिवृत्तिश्च, परस्य दुःखसाधनप्राप्तिः सुखसाधननिवृत्तिश्चेति चतुर्विधम् । अनिष्टं च स्वस्य दुःखसाधनप्राप्तिः परस्य सुखसाधनप्राप्तिर्दुःखसाधननाशश्चेति त्रिविधम् । तत्राऽऽद्योदाहरणं सिंहिकेत्युक्तम् । अन्येषां कुवलयानन्दादौ द्रष्टव्यम् ।

**आनन्दमिति** । ( अमन्दमनल्पम् । आर्या छन्दः । ) अत्र नायिकाविरहयोर्जन्यजनकयोरानन्दजननतापक्रिययोर्विरोधः । न चात्रासंगतिर्विरोधो वा । विरोधे विरोधिनोः सामानाधिकरण्यस्यासंगतौ । कार्यकारणयोर्वैयधिकरण्यस्य चमत्कारप्रयोजकता, अत्र तु कार्यकारणवृत्तिविजातीयक्रियागुणयोगस्य चमत्कारितेति विशेषात् । **उपलक्षणपर इति** । एवमन्यालंकारसूत्रेष्वपि विभागोपलक्षणमिति ध्वनितम् । **भवन्तीति** । संबन्धिनोर्योगवैषम्यमात्रस्यैव विवक्षितत्वमिति भावः ।

**विपुलेनेति** । ( माघकाव्ये त्रयोदशसर्गे पद्यम् । सागरे शेत इति सागरशयः तादृशस्य । यस्य श्रीकृष्णस्य । कुक्षिणोदरेण । युगक्षये प्रलये । ) पपिरे जग्रसिरे ।

---

१ ग. 'लोकाभ' । २ क. भेदाः संभ' ।

इत्यादावपि विषमत्वं यथायोगमवगन्तव्यम् ।

महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् ।

आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत् ॥ १२८ ॥

आश्रितमाधेयम्, आश्रयस्तदाधारः, तयोर्महतोरपि विषये तदपेक्षया तनू अप्याश्रयाश्रयिणौ प्रस्तुतवस्तुप्रकर्षविवक्षया यथाक्रमं यद्धिकतरतां व्रजतः, तदिदं द्विविधमधिकं नाम । क्रमेणोदाहरणम्—

अहो विशालं भूपाल भुवनत्रितयोदरम् ।

माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ ५४३ ॥

---

एवमन्यत्राप्यूह्यम् ।

महतो० ।

वर्णनीयोत्कर्षापेक्षया यन्महत्याश्रिते विषये तदपेक्षया तनुरप्याश्रयो महीयान्स्यात् महीयस्तया वर्ण्यते, महत्याश्रये वा विषय आधेय एव तथा वर्ण्यते तदुभयमधिकालंकारः ।

तत्राऽऽद्यं यथा—अहो० ।

---

मदविभ्रमापूर्णया चक्षुःकोणमात्रेणैव । पपे । सादरमवलोकनमत्र पानम् । ( मञ्जुभाषिणी छन्दः । ) पानपदार्थयोर्भेदेऽप्यभेदवर्णनादुदाहरणमिदम् । अत्र सागरशयत्वं ससागरसकलभुवनग्रासश्चेत्येकं विषमम् । एवं यस्य कुक्षिरेव सकलभुवनपानसमर्था तस्य संपूर्णस्यावयविनः स्त्रियैकदृशा पानं चापरं विषमम् । योगवैषम्यादेव चमत्कारान्न विरोधाशङ्का । एवं कस्यचिद्गुणेन कस्य चिद्दोषवर्णनं, कस्यचिद्दोषेण कस्यचिद्गुणवर्णनमपि विषममेव । एतेनात्रोल्लासोऽतिरिक्त इत्यपास्तम् । एवमिष्यमाणविरुद्धार्थप्राप्तिरपि विषममेव । तादृशेच्छया तादृशलाभयोगस्य विषमत्वात् । एतेनेदृशस्थले विषादनामाऽलंकार इत्यपास्तम् । एवमन्यदीयगुणेनान्यत्र गुणाभावस्य अन्यदोषेणान्यत्र दोषाभावस्य वर्णनेऽपि विषमम् । क्वचिद्वक्ष्यमाणोऽतद्गुणो वा । एतेनैवंविधे विषयेऽवज्ञालंकारान्तरमित्यपास्तम् । कारणे सति कार्यानुत्पत्तिरूपविशेषोक्त्यैव गतार्थोऽयमिति तत्त्वम् । उदाहरणम्—

'चिरं जलनिधौ मग्नो मैनाको नैति मार्दवम्' ।

इत्यादि । एवमिष्टसिद्ध्यर्थमिष्टैषिणा क्रियमाणमिष्टविपरीतयत्नाचरणमपि विषममेव । यथा

'नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिम्' ।

वाच्यप्रतीतिवेलायां योगवैषम्यप्रतीतेः । एतेनात्र विचित्रालंकारः पृथगित्यपास्तम् ।

इति विषमम् ।

वर्णनीयोत्कर्षापेक्षयेति । वर्णनीयोत्कर्षं बोधयितुमित्यर्थः । विषये । संबन्धे ।

---

१ क. °मनुमन्त° ।

**युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत ।**
**तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥५४४॥**

**प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया ।**
**या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥ १२९ ॥**

**न्यक्कृतिपरमपि विपक्षं साक्षान्निरसितुमशक्तेन केनापि यत्तमेव**

---

अत्राऽऽश्रयस्य भुवनत्रितयस्य महत्तया वर्णनम् ।

द्वितीयं यथा—**युगान्त०** ।

अत्राऽऽधेयभूताया मुदो महीयस्त्वं विवक्षितम् ।

**प्रतिपक्ष०** ।

अपकारिणमपि विपक्षं साक्षादपकर्तुमक्षमेण केनापि तदीयस्य तिरस्करणं तमेवोत्कर्षयितुं

---

**महत्तया वर्णनमिति** । अत्र मातुमशक्यतया महत्त्वेन विवक्षितस्य यशोराशेराश्रितस्य मानकर्तृत्वेन ततस्तनोरपि भुवनत्रयस्याधिक्यमभिधीयमानं वर्णनीययशोराशिप्रकर्षे विश्राम्यति । **युगान्तेति** । माघकाव्ये प्रथमसर्गे नारदागमने श्रीकृष्णवर्णनम् । युगान्तकाले प्रतिसंहृत आत्मा स्वात्मभूतः प्रपञ्चो येन तस्य कैटभद्विषः श्रीविष्णोर्यस्यां तनौ जगन्ति भुवनानि सविकाशं सावकाशमासत उपविशन्ति स्म, तत्र तस्यां तनौ तपोधनस्य नारदस्याभ्यागम आगमनं तत्संभवास्तज्जन्या मुदः प्रीतयो न ममुर्नावकाशं प्रापुः । ( वंशस्थं वृत्तम् । ) अत्र जगदाश्रयतया महत्त्वेन विवक्षितस्य भगवच्छरीररूपाश्रयस्य मानाभावरूपसंबन्धात्ततोऽल्पस्यापि तपोधनागमजन्यहर्षस्य वर्णनीयस्याधिक्यं चारुताहेतुः । अत्र महत्त्वशब्देन महत्परिमाणमतिशयश्च । तेन यत्र सूक्ष्मत्वातिशयवत आधारादाधेयाद्वा तदन्यतरस्यातिसूक्ष्मत्वं वर्ण्यते तत्राप्ययम् । यथा—

'मणिमालोर्मिका तेऽद्य करे जपवटायते ।'

अत्र मणिमालामयी ऊर्मिका अङ्गुलीमितत्वादतिसूक्ष्मा, साऽपि विरहिण्याः करे कङ्कणवत्प्रवेशिता तस्मिञ्जपमालावल्लम्बत इत्युक्त्या ततोऽपि करस्य विरहकार्श्यादतिसूक्ष्मता दर्शिता । एतेनेदृशे विषयेऽल्पं नाम पृथगलंकार इत्यपास्तम् । यत्राऽऽधाराधेययोरन्यतरस्य न्यूनत्वाधिक्ये कविकल्पिते तत्रैवायमलंकारः । **इत्यधिकम्** ।

**तमेवेति** । प्रतिपक्षमित्यर्थः । तदुत्कर्षकत्वं साक्षात्तन्निरसनासामर्थ्यसूचकत्वेन बोध्यम् ।

---

१ क. °मसहनेन । २ क. °तरतया ।

प्रतिपक्षमुत्कर्षयितुं तदाश्रितस्य तिरस्करणम्, तत् ( अनीकप्रतिनिधितुल्यत्वात् ) प्रत्यनीकमभिधीयते । यथाऽनीकेऽभियोज्ये तत्प्रतिनिधीभूतमपरं मूढतया केनाचिदभियुज्यते, तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयत इत्यर्थः । उदाहरणम्—

त्वं विनिर्जितमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता ।
पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः ॥ ५४५ ॥

यथा वा—

यस्य किंचिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनाऽपि बाधते ॥५४६॥

इन्दोरत्र तदीयता संबन्धिमुखसंबन्धात् ।

---

यदुच्यते तत्प्रत्यनीकम् । प्रतिनिधितुल्यत्वात् । यथाऽनीकेऽभियोज्येऽशक्तेन तत्प्रतिनिधिभूतः कश्चिन्निगूढमभियुज्यते तथेहापि प्रतियोगिनि विजेयेऽशक्तेन तदीयोऽन्यो विजीयत इत्यर्थः । तदीयत्वं च साक्षात्संबन्धेन परम्परासंबन्धेन चेति द्विविधमेतत् ।

तत्राऽऽद्यं यथा—त्वं विनि० ।

अत्र कामिन्याः कामिनश्च साक्षादेव स्वस्वामिभावः संबन्धः ।

द्वितीयं यथा यस्य० ।

अत्र यत्पदार्थेन मुखस्यावयवावयविभावः संबन्धस्तेन चन्द्रस्य सादृश्यलक्षण इति परम्परासंबन्धः ।

---

अनीके । सैन्ये । अभियोज्ये । पीडनीये ।

त्वमिति । ( नायकं प्रति नायिकासख्या उक्तिः । ) जितकामसौन्दर्यः । अनुशय आक्रोशः । ( स्वागता छन्दः । )

यस्येति । ( माघकाव्ये चतुर्दशसर्गे पद्यम् । ) कायस्य शरीरस्य यो निग्रहः शिरश्छेदस्तेन गृहीतोऽङ्गीकृतो विरोधो येन । यस्य कृष्णस्य । रमणीयकृष्णवक्त्रसदृशाकृतिम् । ( रथोद्धता छन्दः । ) न च भगवद्वैरानुबन्धादिव भगवद्वक्त्रसदृशामिन्दुं राहुर्बाधत इति प्रतीतेर्गम्योत्प्रेक्षैवात्रास्तु, आद्ये तु शाब्द्यपि सति किमनेनालंकारेणेति वाच्यम् । तदपकारासमर्थस्तदीयं पीडयतीति प्रतीत्यैवात्र चमत्कारादित्याहुः । इति प्रत्यनीकम् ।

---

१ क. °दाश्रयस्य । २ ग. गूढतया । ३ क. ताडय° । ४ ग. °यादथ का° । ५ क. °थेह प्र° । ६ क. तदन्यो ।

समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते ।

निजेनाऽऽगन्तुना[1] वाऽपि[2] तन्मीलितमिति स्मृतम् ॥१३०॥

सहजमागन्तुकं वा किमपि साधारणं यल्लक्षणम्, तद्द्वारेण यत्किंचित्केनचिद्वस्तुस्थित्यैव बलीयस्तया तिरोधीयते, तन्मीलितमिति द्विधा स्मरन्ति । क्रमेणोदाहरणम्—

अपाङ्गतरले दृशौ मधुरवक्रवर्णा[3] गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशां[4] स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ ५४७ ॥

अत्र दृक्तरलतादिकमङ्गस्य लिङ्गं स्वाभाविकम्, साधारणं च मदोदयेन । तत्राप्येतस्य दर्शनात् ।

---

समेन० ।

निजं स्वाभाविकं लक्ष्म निगूहनीयसाधारणं चिह्नं तद्द्वारेण केनचिद्वस्तुना बलवत्तया यस्किंचिद्वस्तु वस्तुगत्यैव तिरोधीयते तन्मीलितालंकारः । तच्च द्विधा—लक्ष्मणः क्वचित्स्वाभाविकत्वात्क्वचिदागन्तुकत्वाच्चेत्यर्थः ।

तत्र स्वाभाविकेन लक्ष्मणा मीलितं यथा—अपाङ्ग० ।

अत्र दृक्तरलताद्यङ्गस्य स्वाभाविकं लिङ्गं, समानं च तिरोधेयेन मदेन । तत्राप्येतदुपलम्भात् ।

---

समेनेति । अस्य व्याख्या निगूहनीयसाधारणेति । स्फुटमुपलभ्यमानस्य कस्यचिद्वस्तुनो लिङ्गैरतिसाम्याद्भिन्नत्वेनागृह्यमाणानां वस्त्वन्तरलिङ्गानां स्वकारणाननुमापकत्वं मीलितम् ।

'हिमाद्रिं त्वद्यशोमग्नं सुराः शीतेन जानते ।'

इत्यादावपीदमेव । शीतेन तज्ज्ञानेऽपि यशःसाधारणलिङ्गैः श्वैत्यादिभिस्तदनुमानाभावात् । शीतेन जानत इत्यनेन मीलनस्यैव दार्ढ्यं न त्वन्येनेति प्रतीतेः । एतेनात्रोन्मीलितं पृथगलंकार इत्यपास्तम् ।

अपाङ्गेति । अपाङ्गस्तरलो ययोस्ते, अपाङ्गयोस्तरले चञ्चले इति वा । मधुरा वक्रा वक्रोक्तिसमर्पका वर्णा यासु । मृगदृशोऽङ्गके कोमलशरीरे लीलया स्वतः स्वभावतः स्फुरितम् । मदोदयो मधुपापानजन्यमदस्योदयः । कृतपदोऽपि कृतस्थानोऽपि । ( पृथ्वी छन्दः । ) अत्र स्वाभाविकेन दृक्तारल्यादिना निगूहनीयमदसमानधर्मेण बलवता मदोऽभिभूयते ।

---

१ क. °गन्तुकेनापि । २ क. वाऽपि । ३ क. °वर्णवक्त्रा गि° । ४ ख. °दृशः स्व° ।

ये कंदरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते ।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो बत भियां न बुधाऽप्यभिज्ञः ॥ ५४८ ॥

अत्र तु सामर्थ्यादवसितस्य शैत्यस्याऽऽगन्तुकत्वात्तत्प्रभवयोरपि कम्प-पुलकयोस्ताद्रूप्यं समानता च । भयेष्वपि तयोरुपलक्षितत्वात् ।

**स्थाप्यतेऽपोह्यते वाऽपि यथापूर्वं परं परम् ।**
**विशेषणतया यत्र वस्तु सैकावली द्विधा ॥ १३१ ॥**

पूर्वं पूर्वं प्रति यत्रोत्तरोत्तरस्य वस्तुनो वीप्सया विशेषणभावेन यत् स्थापनं निषेधो वा संभवति, सा द्विधा बुधैरेकावली मण्यते । क्रमेणोदाहरणम्—

---

आगन्तुकेन लक्ष्मणा यथा—ये० ।

अत्र कम्पपुलके अङ्गस्य लिङ्गे, हिमाद्रिकंदरानिवाससामर्थ्याधिगतशीतरूपकारणस्याऽऽगन्तुकत्वेन तत्कार्यभूतयोस्तयोरप्यागन्तुकत्वं भयैः समानता च । तेष्वपि तयोरुपलम्भात् ।

**स्थाप्यते०** ।

स्थापनं विधिः । अपोहो निषेधः । यथापूर्वमिति वीप्सायामव्ययीभावः । तेन पूर्वं पूर्वं वस्तु प्रत्युत्तरस्य वस्तुनो यत्र विशेषणतया बाहुल्येन विधिः, यत्र वा तथा निषेधः, सा द्विधैकावली । विशेषणतया विधिरित्यस्य विधेर्विशेषणत्वमित्यर्थः । एवं विशेषणतया निषेधोऽपि । कश्चित्तु ‘ पूर्वकालविशेषणतया स्थितं वस्तु परं विशेष्यं कृत्वा यत्र स्थाप्यतेऽपोह्यते वा सैकावलीति सूत्रार्थः ’ इत्याह । तत्तु पूर्वं प्रति यथोत्तरस्य वस्तुन इत्यादिप्रकाशविरुद्धम् ।

---

**य इति** । त्वत्पाते त्वदागमने शङ्किता धीर्येषाम् । विवशा विह्वलाः । (वसन्ततिलका छन्दः ।)

**इति मीलितम्** ।

**विशेषणतयेति** । विशेष्यतयेत्यपि बोध्यम् । यथा—

‘ धर्मेण बुद्धिस्तव देव शुद्धा बुद्ध्या निबद्धा सहसैव लक्ष्मीः ।
लक्ष्म्या च तुष्टा भुवि सर्वलोका लोकैश्च नीता भुवनेषु कीर्तिः ॥ ’

इति । अत्रोत्तरोत्तरविशेषणं पूर्वपूर्वं प्रति विशेष्यम् । अत्रैव पूर्वपूर्वैः परस्य परस्योपकारः क्रियमाणो यद्येकरूपस्तदा मालादीपकमुक्तं प्राक् । **स्थापनमिति** । स्थापकत्वं च स्वसंबन्धेन विशेष्यतावच्छेदकनियामकत्वम् । अपोहकत्वं च स्वव्यतिरेकेण विशेष्यतावच्छेदकव्यतिरेकबुद्धिजनकत्वम् । **बाहुल्येनेति** । तत्रैव चमत्कारादिति भावः ।

---

१ क. °त्र सा° । २ ख. यथोत्तरस्य । ३ स. °दरानि° ।

पुराणि यस्यां सवराङ्गनानि
　　वराङ्गना रूपपुरस्कृताङ्गयः ।
रूपं समुन्मीलितसद्विलास-
　　मस्त्रं विलासाः कुसुमायुधस्य ॥ ५४९ ॥

न तज्जलं यन्न सुचारुपङ्कजं
　　न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न यो
　　न गुञ्जितं तन्न जहार यन्मनः ॥ ५५० ॥

पूर्वत्र पुराणां वराङ्गनास्तासामङ्गविशेषणमुखेन रूपम्, तस्य विलासाः, तेषामप्यस्त्रमित्यमुना क्रमेण विशेषणं विधीयते । उत्तरत्र प्रतिषेधेऽप्येवं योज्यम् ।

**यथाऽनुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।**

**स्मरणम् ।**

---

तत्र विधौ यथा—पुराणि० ।

अत्र पुराणामङ्गनास्तासामङ्गविशेषणक्रियामुखेण रूपं तस्य विलासास्तेषामस्त्रत्वमिति क्रमेण विशेषणतया विधिः ।

निषेधे यथा—न तज्जलं० ।

अत्र जले पङ्कजस्य, तत्र षट्पदानां, तत्र गुञ्जितस्य, तत्रापि मनोहारिताया विशेषणतया निषेधः ।

यथा० ।

अत्रार्थस्य स्मृतिः स्मरणालंकार इति लक्षणम् । यथानुभवमिति स्मृत्याऽऽकारदर्शनम् । दृष्टे तत्सदृश इति तद्धेतुसंस्कारोद्बोधहेतुनिर्देशः । अदृष्टादेरप्युपलक्षणात् । यद्वाऽन्यादृशस्मृतेश्चारुत्वाभावेनालंकारत्वाभावाव्द्यवच्छेदकतया लक्षणान्तर्गतमेवैतत् । तदयं

---

**पुराणीति** । पुराणि गृहाणि । यस्यां नगर्याम् । रूपेण परिष्कृतं भूषितमङ्गं यासां ताः । विलासाः कुसुमायुधस्यास्त्रमिति रूपकम् । ( उपजातिश्छन्दः । )

**न तदिति** । भट्टिकाव्ये द्वितीयसर्गे शरत्कालवर्णनम् । न लीनः षट्पदो भ्रमरो यत्र । कलं कलस्वरयुतम् । ( वंशस्थं वृत्तम् । ) इत्येकावली ।

**अन्यादृशस्मृतेरिति** । अदृष्टोद्बुद्धजन्मान्तरीणसंस्कारजन्यस्मृतेः, चिन्ताद्युद्बुद्धसंस्कारजन्यस्मृतेः, तावद्भिर्भ्रदिमां स्मृतस्तव भुज इत्यादिभूधारणसंबन्धज्ञानजन्यस्मृतेश्चेत्यर्थः ।

---

१ ग. यत्र न चा° । २ ग. °ध्येवमेव यो° ।

यः पदार्थः केनचिदाकारेण नियतो यदा कदाचिदनुभूतोऽभूत, स कालान्तरे स्मृतिप्रतिबोधाधायिनि तत्समाने वस्तुनि दृष्टे सति, यत्तथैव स्मर्यते, तद्भवेत्स्मरणम् । उदाहरणम्—

निम्ननाभि[1]कुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः ।
तद्भवैः[2] कुहरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम् ॥ ५५१॥

यथा वा—

करजुअगहिअजसोआथणमुहविणिवेसिआहरउडस्स ।
संभरिअपञ्चअण्णस्स णमह कण्हस्स रोमञ्चम् ॥ ५५२ ॥

भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने ॥ १३२ ॥

---

वाक्यार्थः—केनचिदाकारेण नियतो यदा कदाचित्केनचित्प्रमाणेनानुभूतः स कालान्तरे संस्कारोद्बोधहेतौ तत्समानधर्मदर्शने सति यदनुभूतेन प्रकारेण स्मर्यते तत्स्मरणालंकारः । स द्विधा—एतज्जन्मनि जन्मान्तरे वाऽनुभूतस्य स्मृतेः । क्रमेणोदाहरणे ।

निम्न० ।

कर० ।

स्पष्टम् ।

भ्रान्तिमा० ।

अत्राप्यन्यसंविदिति लक्षणम् । तत्तुल्यदर्शन इति हेतुनिर्देशः । अन्येति पदार्थं परामृशता तदित्यनेनाप्राकरणिकं निर्दिश्यते । तथा च तेन तुल्यमर्थादिह प्राकरणिकं लभ्यते ।

---

अन्त्याया अपि स्मृतेः संचारितया भूभृद्विषयकरतिभावाङ्गतया प्रेयोऽलंकारत्वेनैव चमत्कारित्वेनैतदलंकारत्वाभावात्, सादृश्यमूलस्मृतेरेव चमत्कारितयाऽलंकारत्वमिति भावः ।

**निम्नेति** । ( अप्सरसां जलक्रीडावर्णनम् । ) लहरीभिस्तरङ्गैश्चलदृशां नायिकानां निम्ननाभिकुहरेषु यदम्भः प्लावितं तद्भवैः सुरतकालिककण्ठध्वनिसदृशैः कुहकुहेति ध्वनिविशेषैरित्यन्वयः । कण्ठो योनिरूपो गर्तः । 'कण्ठावटश्वभ्रगर्ताः' इति कोशात् । रुतानामिति कर्मणि षष्ठी । ( स्वागता छन्दः ) ।

**करेति** ।

करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य ।
संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥

( आर्या जघनविपुला । ) इति **स्मरणम्** ।

---

१ क. °भिविवरे° । २ क. °वैः कलरु° ।

तदिति अन्यदप्राकरणिकं निर्दिश्यते । तेन समानमर्थादिह प्राकरणिकमाश्रीयते । तस्य तथाविधस्य दृष्टौ सत्यां, यदप्राकरणिकतया संवेदनम्, स भ्रान्तिमान् । न चैष रूपकं प्रथमातिशयोक्तिर्वा । तत्र वस्तुतो भ्रमस्याभावात् । इह चार्थानुगमनेन संज्ञायाः प्रवृत्ते-[१]स्तस्य स्पष्टमेव प्रतिपन्नत्वात् ।

उदाहरणम्—

कपाले मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति ।
रतान्ते तल्पस्थान्हरति वनिताऽप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥ ५५३ ॥

---

तेन प्राकरणिकस्याप्राकरणिकतुल्यस्य दर्शने सति यदप्राकरणिकत्वेन ज्ञानं स भ्रान्तिमानित्यर्थः । न च रूपके निगीर्याध्यवसानरूपायामतिशयोक्तौ चातिव्याप्तिः । तत्र वस्तुतो भ्रमाभावेऽप्यध्यवसानमात्रस्वीकारात् । इह त्वर्थानुगमेन संज्ञाप्रवृत्तेर्भ्रमोपगमस्य स्पष्टमेवोपगमात् ।

उदाहरणम्—कपाले० ।

---

**दर्शने सतीति** । प्राकरणिकार्थदर्शनोद्बुद्धसंस्कारजन्याप्राकरणिकस्मृतिजन्यमित्यर्थः । **अप्राकरणिकत्वेनेति** । अप्राकरणिकतादात्म्येनेत्यर्थः । **ज्ञानम्** । निश्चयात्मकम् । **तेन** ।

‘ कान्ते तव मुखं पद्मं चन्द्रो वेति न निर्णयः । ’

इति संदेहे नातिव्याप्तिः । तत्र सत्यन्तेनानुभूयमानारोपस्य चिन्तादिजन्यस्मृतिजन्यारोपस्य च व्युदासः । अप्राकरणिकतादात्म्येनेत्युक्तेर्मीलितसामान्यतद्गुणवारणम् । भ्रान्तिमात्रमत्रालंकारः । सा च कविप्रतिभानिर्मितैव । तेन रङ्गे रजतमिति बुद्धेर्नालंकारत्वम् । रूपकवित्तौ च नातिव्याप्तिः । मर्मप्रहारकृतचित्तविक्षेपविरहादिकृतोन्मादादिजन्यभ्रान्तेश्च नालंकारत्वम् । सादृश्यप्रयोज्यत्वाभावात् । **वस्तुतो भ्रमाभावेऽपीति** । स्वारसिकभ्रमाभावेऽपीत्यर्थः । अत्र च प्रवृत्तिनिवृत्तिकारिस्वारसिकभ्रमो विवक्षित इति भावः । तयोस्तु शब्दाधीनो व्याञ्जनिको भ्रम इति तात्पर्यम् । वस्तुतो यत्र ‘ इति ’ इत्यादिपदेन भ्रमत्वेन निबद्धो व्यङ्ग्यो वा तत्रायमलंकार इति नातिप्रसङ्गशङ्केति बोध्यम् ।

**कपाल इति** । ( भासकवेः पद्यमिति शार्ङ्गधरपद्धतौ स्पष्टम् । ) पय इति । पयोभ्रान्त्येत्यर्थः । [ लेढि आस्वादयति । तरूणां छिद्रेषु प्रोतान्प्रविष्टान् । संकलयति गृह्णाति । प्रभया मत्तस्तदतिशयशाली । विप्लवयति[२] भ्रममुत्पादयति । मत्तो हि स्वत

---

१ क. °स्तस्याः स्प° । २ क. विभ्रमयति ।

आक्षेप उपमानस्य प्रतीपमुपमेयता ।
तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धना[1] ॥ १३३ ॥

अस्य धुरं सुतरामुपमेयमेव वोढुं प्रौढमिति कैमर्थ्येन[2] यदुपमानमाक्षिप्यते; यदपि तस्यैवोपमानतया प्रसिद्धस्योपमानान्तरविवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते, तत् ( उपमेयस्योपमानप्रतिकूल[3]वर्तित्वात् ) उभयरूपं प्रतीपम् । क्रमेणोदाहरणम्—

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो[4] मुधैव किममी सृष्टाः कुलक्ष्माभृतः॥५५४॥

---

आक्षेप० ।

अस्य प्रयोजनं निर्वाहयितुमुपमेयमेवालमित्यप्रयोजकतयोपमानं यदाक्षिप्यते, यच्चोपमानतया प्रसिद्धस्योपमेये तस्माद्विशेषविवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते, तदुभयरूपं प्रतीपम् । उपमेयस्योपमाने प्रतिकूलवर्तित्वात् ।

तत्राऽऽद्यं यथा—लावण्यौ० ।

अत्र यथासंख्यसत्त्वेऽप्याक्षेप एव चमत्कारकारीत्याक्षेपोदाहरणता । द्वितीये तु क्वचिदुपमित्यनिष्पत्त्या तिरस्कारः, क्वचित्तु निष्पन्ना सैव तद्धेतुः ।

---

एव भ्रमति न तु परस्य भ्रममुत्पादयतीत्याश्चर्यमहोशब्देन बोध्यते । ( शिखरिणी छन्दः । ) इति भ्रान्तिमान् ।

अप्रयोजकतया । कैमर्थ्येन । तिरस्कारफलकोपमानव्यर्थतोक्तिरेकं प्रतीपमित्यर्थः । प्रतीपयोगार्थमाह—उपमेयस्येति ।

लावण्येति । लावण्याश्रये, प्रतापातिशयसहिते, दातृमुख्ये, भूभरणसमर्थभुजे । पूषा सूर्यः । चिन्तारत्नं चिन्तामणिः । कुलक्ष्माभृतः—

'महेन्द्रो मलयः सह्यः शक्तिमानृक्षपर्वतः ।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥

( शार्दूलविक्रीडितं छन्दः । ) अत्र निषिध्यमानवस्तुगतसकलगुणप्रतीतिर्व्यङ्ग्या प्रयोजनम् । द्वितीये त्विति । तिरस्कारार्थमुपमानस्योपमेयत्वकल्पनरूप इत्यर्थः ।

---

१ ख. निबन्धनम् । २ क. °मित्यानर्थक्येन । ३ क. °मानं प्रति प्र । ४ ग. °महो मु° ।

ए एहि दाव सुन्दरि कण्णं दाऊण सुणसु वअणिज्जम्।
तुज्झ मुहेण किसोअरि चन्दो उअमिज्जइ जणेण॥ ५५५॥

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतरगुणत्वादुपमित्यनिष्पत्त्या 'वअणिज्जम्'—इति वचनीयपदाभिव्यङ्ग्यैस्तिरस्कारः।

क्वचित्तु निष्पन्नैवोपमितिक्रियानादरनिबन्धनम्। यथा—

गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि मुग्धे।
सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि॥ ५५६॥

इहोपमेयीकरणमेवोत्पलानामनादरः।

अनयैव रीत्या यदसामान्यगुणयोगान्नोपमानभावमप्यनुभूतपूर्वं, तस्य तत्कल्पनायामपि भवति प्रतीपमिति प्रत्येतव्यम्। यथा—

---

क्रमेणोदाहरणम्—ए एहि०।

अत्र मुखोपमानस्य शशिनः स्वल्पगुणत्वादुपमित्यानिष्पत्तिर्वअणिज्जमिति पदेन द्योत्यते। सैव तिरस्कारहेतुः।

गर्व०।

अत्र नलिनानां लोचनोपमेयीकरणमेवानादरहेतुः। उपमेयस्य न्यूनगुणत्वस्थितेः। अनयैव रीत्या तदपि प्रतीपं द्रष्टव्यं यत्सामान्यगुणयोगाभावेनोपमानत्वाननुभवेऽप्यर्थस्योपमानत्वकल्पना। कथमिति चेत्। उपमानतिरस्कारस्यालंकारताबीजत्वात्। तच्च द्विधा

---

ए एहीति।

'अयि एहि तावत्सुन्दरि कर्णं दत्त्वा शृणुष्व वचनीयम्।
तव मुखेन कृशोदरि चन्द्र उपमीयते जनेन॥'

वचनीयं निन्दाम्। (आर्या छन्दः) उपमित्यनिष्पत्तिरिति। अत एव व्यतिरेकाद्भेदः। तत्रोपमितिनिष्पत्तावप्युपमेयाधिक्यप्रतीतेः। अत्र वर्ण्यमुखस्याऽऽधिक्यं व्यङ्ग्यम्।

गर्वमिति। (असंवाह्यं संवहनायोग्यम्। अपरिमितमिति यावत्। आर्या छन्दः।) अत्र नलिनानामिति। उपमानत्वेन प्रसिद्धानामित्यर्थः। अत्र नेत्रयोरुपमानत्वेनाधिक्यं फलति। अत्रोपमितिनिष्पत्तावप्युपमेयाधिक्याप्रतीतेर्व्यतिरेकतो भेदः।

'त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः।'

---

१ ग. ॰ङ्ग्यतया तिर॰। २ क. भेदे।

अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥५५७॥

अत्र हालाहलस्योपमानत्वमसंभाव्यमेवोपनिबद्धम् ।

प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया ।
ऐकात्म्यं बध्यते योगात्तत्सामान्यमिति स्मृतम् ॥ १३४ ॥

अतादृशमपि तादृशतया विवक्षितुं यदप्रस्तुतार्थेन संपृक्तमपरित्यक्तनिजगुणमेव तदेकात्मतया निबध्यते, तत्समानगुणनिबन्धनात्सामान्यम् । उदाहरणम्—

---

संभवति । उपमानत्वेनैव प्रसिद्धस्योपमेयत्वकल्पनया, असदृशत्वेन प्रसिद्धस्योपमानत्वकल्पनया वा । सूत्रं चोपलक्षणतया योज्यम् ।

उदाहरणम्—**अहमेव०** ।

अत्र हालाहलस्य खलवचनोपमानत्वमसंभाव्यमानमेवोपनिबद्धं तिरस्कारहेतुः ।

**प्रस्तुतस्य०** ।

अतादृशत्वेऽपि विवक्षितगुणसाम्यस्य प्रस्तुतस्यान्येनाप्रस्तुतेनै गुणसाम्यविवक्षयैकात्म्यं बध्यते तत्सामान्यम् । समानगुणयोगात् । अत्रापरित्यक्तनिजगुणस्येत्यपि विशेषणं विवक्षितम् । अन्यथा तद्गुणालंकारेऽतिव्याप्तेः । 'बध्यते' इत्यस्य प्रत्यायनमात्रमर्थो न तु शाब्दं प्रतिपादनम् । उदाहरणे 'अविभाव्यतां गताः' इत्यादावैकात्म्यस्याशाब्दत्वात् ।

---

इत्यप्यत्रोदाहरणम् । **असदृशत्वेनेति** । उपमेयासंभावितस्वनिष्ठासाधारणधर्मयोगादसंभावितोपमानभावस्योपमानत्वकल्पनयेत्यर्थः ।

**अहमिति** । तातेति सानुकम्पसंबोधनम् । मा स्म दृप्यः । गर्वं मा कृथाः । ( माल्भारिणी छन्दः । ) **हालाहलस्येति** । अत्युत्कटदुःखहेतोरित्यर्थः । अस्योपमातो भेद उपमाप्रकरण एवोक्तः । **इति प्रदीपः** ।

**अतादृशत्वेऽपि** । असमानगुणत्वेऽपि । **प्रस्तुतस्य** । प्राधान्येन वर्णनीयस्य । **गुणसाम्यविवक्षया** । गुणसाम्यं प्रतिपादयितुम् । **ऐकात्म्यम्** । पृथक्त्वेनाप्रतीयमानत्वम् । तेन मीलिताद्भेदः । तत्र बलवत्सजातीयग्रहणकृताग्रहणम्, अत्र तु पृथक्त्वेनाग्रहणमिति विशेषात् । न च भ्रान्तिमता संकरः । तत्र स्मर्यमाणस्याऽऽरोपोऽत्रानुभूयमानस्येति विशेषात् । नापि रूपकप्रथमातिशयोक्तिभ्याम् । उपमेय उपमानतादात्म्यस्य शाब्दादप्रतीते रूपकाभावात् । उपमानतावच्छेदकरूपेणाप्रतीयमानत्वान्नातिशयोक्तिः ।

---

१ ग. संयुक्त° । २ क. ग. 'णप्रबन्धनात्सा° । ३ क. 'न योगाद्गुण° । ४ क. 'क्षया यतेनैका° ।

मलयजरसविलिप्ततनवो नवहारलताविभूषिताः[1]
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः ॥ ५५८ ॥

अत्र प्रस्तुततदन्ययोरन्यूनानतिरिक्ततया[2] निबद्धं धवलत्वमेकात्मताहेतुः । अत एव पृथग्भावेन न तयोरुपलक्षणम् ।

यथा वा—

वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो[3] गण्डतलागतानि ।
भृङ्गाः सहेलं[4] यदि नापतिष्यन्कोऽवेदयिष्यन्नवचम्पकानि ॥५५९॥

अत्र निमित्तान्तरजनिताऽपि नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते । प्रतीतत्वात्तस्य । प्रतीतेश्च बाधायोगात् ।

---

उदाहरणम्—मलयज० ।

अत्राभिसारिकाचन्द्रिकयोरेकात्मत्वप्रतीतिः । क्वचित्प्रस्तुताप्रस्तुतयोरुत्तरकालीनविवेकादिना तदुन्नयनम् ।

यथा—वेत्र० ।

अत्र भृङ्गपातानन्तरं भेदप्रत्ययो न तु पूर्वमेव प्रतीतिः । ननु भृङ्गपातेन भेदप्रत्ययात्कथमेकात्मत्वप्रतीतिरिति चेत् । अत्र तथात्वेऽपि प्राथमिकाभेदप्रत्ययस्यानिरासात् । तस्य वृत्तत्वात् ।

---

**मलयजेति** । दन्तपत्रं दन्तनिर्मिततटङ्कः । ( विततं विस्तृतं धाम तेजो यस्य तस्मिन्शशभृति चन्द्रे धरां पृथ्वीं धवलयति सति । अविभाव्यतामलक्ष्यताम् । अभिसारिकाः

' कान्तार्थिनी तु या याति संकेतं साऽभिसारिका । '

इत्यमरः । पादाकुलकं छन्दः । ) **तदुन्नयनम्** । पूर्वकालजातैकात्म्यप्रत्ययनिवेदनम् ।

**वेत्रेति** । ( वेत्रस्य त्वचा तुल्या रुग्यासाम् । गौरवर्णानामिति यावत् । कर्णाग्रतः कर्णाग्राद्गण्डतल आगतानि ।) यदि भृङ्गाः सहेलं नापतिष्यंस्तदा नवचम्पकानि कोऽवेदयिष्यदित्यन्वयः । (इन्द्रवज्रा छन्दः । ) अत्र गण्डचम्पकयोर्गौरत्वाद्भेदाप्रतीतिः । **अत्र इति** । एवं चाग्रेतनविशेषदर्शनजन्यभेदज्ञानमुत्तरकालिकं न पूर्वोत्पन्नतद्ग्रहं निरसितुमुत्सहते । उत्पन्नत्वात्तस्येत्यर्थः । तत्फलीभूतगण्डचम्पकगौरत्यन्तसमानगुणत्वप्रत्ययस्यातिरस्कार इति तात्पर्यम् । एतेनेदृशे विषये विशेषालंकारः पृथगित्यपास्तम् । **इति सामान्यम्** ।

---

१ क. विभूषणाः । २ क. ग. 'नाति° । ३ क °र्णान्ततो । ४ क. सखेलं । ५ ग. 'षप-ङ्कजानि ।

**विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।**
**एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥ १३५ ॥**
**अन्यत्प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।**
**तथैव करणं चेति विशेष[1]स्त्रिविधः स्मृतः ॥ १३६ ॥**

**प्रसिद्धाधारपरिहारेण यदाधेयस्य विशिष्टा स्थितिरभिधीयते, स प्रथमो विशेषः । उदाहरणम्—**

**दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।**
**रमयन्ति जगन्ति गिरः कथमिव कवयो[2] न ते वन्द्याः ॥ ५६० ॥**

**एकम[3]पि वस्तु यदेकेनैवं[4] स्वभावेन युगपदनेकत्र वर्तते, स द्वितीयः । उदाहरणम्—**

---

**विना०** ।

स एष त्रिधा । तत्र प्रसिद्धमाधारं विनाऽऽधेयस्य विशिष्टावस्थितिर्यदभिधीयते स एको विशेषः । तत्र प्रसिद्धमित्यनेनेदमुक्तं यदत्र वास्तवमाधारत्वं न विवक्षितं किं तु कविप्रसिद्धिमात्रसिद्धमिति ।

अत एव तथैवोदाहरणम्—**दिवमपि०** ।

अत्र कविरूपं प्रसिद्धमाधारं विना गिरां विशिष्टावस्थितिरुक्ता ।

एकस्य वस्तुनो युगपद्या एकात्मा अनेकवृत्तिः स द्वितीयो विशेषः । एकात्मेत्येकेन स्वभावेनेत्यर्थः । एतच्च विशेषणं 'एकस्त्रिधा वससि—' इत्यादियथासंख्यव्यावर्तनाय । युगपदिति पर्यायनिवारणाय ।

उदाहरणम्—

---

ननु गिरामाकाश आधारः प्रसिद्धो न कविरत आह—**किं त्विति । सिद्धमिति** । सिद्धमपीत्यर्थः ।

**दिवमिति** । ( आकल्पमाप्रलयम् । ) गुणगणा गिरः । जगन्ति । कर्म । ( आर्या छन्दः । ) **विशिष्टावस्थितिः** । निराधारैव । एवमाधारान्तरगतत्वेनाऽऽधेयवर्णनेऽव्ययम् । यथा—

'गतेऽपि सूर्ये दीपस्थास्तमांश्छन्दन्ति तत्कराः ।' इति ।

---

१ क. °विशेषस्त° । २ ख. °सिद्ध क° । ३ ग. °कमेव व° । ४ ग. °न वस्तुस्व° ।

सा वसइ तुज्झ हिअए स च्चिअ अच्छीसु सा अ वअणेसु ।
अह्मारिसाण सुन्दर ओआसो णत्थि पावाणम् ॥ ५६१ ॥

यद्यपि किंचिद्रभसेनाऽऽरभमाणस्तेनैव यत्नेनाशक्यमपि कार्यान्तरमारभते, सोऽपरो विशेषः । उदाहरणम्—

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजताऽनवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥५६२॥

यथा वा—

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥ ५६३ ॥

---

**सा वसइ० ।**

स्पष्टम् ।

रभसेनान्यत्कार्यं कुर्वतः कर्तुर्यदशक्यस्यान्यस्यापि कार्यस्य तथैव करणं स तृतीयो विशेषः । अत्र तथैवेति तेनैव प्रकारेणेत्यर्थः । एतच्च 'धुनोति चासिं तनुते च कीर्तिम्' इत्यादिसमुच्चयव्यावर्तनाय ।

उदाहरणम्—**स्फुर०** ।

अत्रान्यस्य करणं शाब्दम् ।

क्वचित्तु व्यङ्ग्यम् । यथा—**गृहिणी०** ।

अत्र किं न मे हृतमिति सचिवादिसर्वहरणरूपकार्यकरणं व्यज्यते । नन्वाधारं विना

---

**सेति ।**

'सा वसति तव हृदये सैवाक्ष्णोः सैव वचनेषु ।
अस्माकं सुन्दर अवकाशः कुत्र पापानाम् ॥'

(आर्या छन्दः ।)

**स्फुरदिति ।**

स्फुरत्प्रकाशमानमद्भुतं रूपं यस्य । उद्गतः प्रतापाग्निर्यस्य । अनवद्या शुद्धा विद्या यस्य । एतादृशं त्वां सृजता ब्रह्मणा नवो मनोभूर्मदनः, सविता, बृहस्पतिश्च ससृजे उत्पादित इति सत्यम् । (मालभारिणी) छन्दः ।

**गृहिणीति** रघुकाव्येऽष्टमसर्गे इन्दुमतीं शोचतोऽजराजस्योक्तिः । ( अपर-

---

१ क. ग. सोऽप्यप० । २ क. वत ।

सर्वत्रैवंविधविषयेऽतिशयोक्तिरेवं प्राणत्वेनावतिष्ठते । तां विना प्रायेणालंकारत्वायोगात् । अत एवोक्तम्—

सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते ।
यत्नोऽस्यां कविभिः कार्यः कोऽलंकारोऽनया विना ॥ इति ।

---

वास्तवस्याऽऽधेयस्य व्यवस्थितिरनुपपन्नैव, एवमन्ययोरप्यनुपपत्तिरिति चेत्, न। अतिशयोक्तिमालम्ब्य तथाऽभिधानात् । सर्वत्रैवंविधे विषयेऽतिशयोक्तिरेव प्राणायिता । तां विना प्रायशोऽलंकारत्वाभावात् । अत एवाऽऽहुः—सैषा० ।

विभाव्यत इति । विशिष्टो भाव्यते । चमत्कारविशेषविषयः क्रियत इत्यर्थः ।

---

वक्त्रं छन्दः । ) अतिशयोक्तिमिति । अतिशयेनोक्तिमित्यर्थः । आधुनिकोक्तेरपि कण्ठयुक्तिरूपोपचारेण हृदयादौ भावनादेव सत्त्वोपचारेण राज्ञस्ताद्रूप्येण मनोभूत्वाद्युपचारेण च तथोक्तिरिति भावः । न त्वतिशयोक्त्यलंकारोऽत्र विवक्षितः । तस्यात्रासंभवात् । वक्रोक्तिः । वक्रतया गौणतयोक्तिः । त्रिविध इत्युपलक्षणम् । दोषेऽपि गुणं दृष्ट्वा तदभ्यर्थनायामप्ययम् ।

विपदः सन्तु नः शश्वद्यासु संकीर्त्यते हरिः ।

एतेनानुज्ञा नामाऽत्र पृथगलंकार इत्यपास्तम् । एवं गुणे दोषं दृष्ट्वा तदभ्यर्थनायामप्ययम् । एवं किंचित्सौकर्यं दृष्ट्वा दोषस्य गुणत्वकल्पनं गुणस्य वा दोषत्वकल्पनमपि सः । यथा—

नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम् ।
शाखिनोऽन्ये विराजन्ते खण्ड्यन्ते चन्दनद्रुमाः ॥

एतेनैतादृशविषये लेशनामा पृथगलंकार इत्यपास्तम् । एवं

सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः

यथा—नाटकादौ, इत्युक्तमुद्रायास्त्वलंकारत्वमेव न । प्रकृतोपस्कारकत्वाभावात् । यत्तु

क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः ।
चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते ॥

इति । तन्न । रूपकेणैवात्र वर्ण्यस्योपस्कारो न तु क्रमकृतोऽपीति तस्यालंकारत्वाभावात् । इति विशेषः ।

---

१ क. ग. °व प्रमाण° । २ क. ग. सैव । ३ ख. °विना का° । ४ क. °स्तवाधेयस्य स्थि° ।
५ क. °रन° ।

स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत्।
वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः॥ १३७॥

वस्तु तिरस्कृतनिजरूपं केनापि समीपगतेन प्रगुणतया स्वगुणसंपदो- परक्तं तत्प्रतिभासमेव यत्समासादयति, स तद्गुणः। तस्याप्रकृतस्य गुणोऽत्रास्तीति।

उदाहरणम्—

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः॥ ५६४॥

अत्र रवितुरगापेक्षया गरुडाऽग्रजस्य, तदपेक्षया च हरिन्मणीनां प्रगुणवर्णता।

---

स्वमु०।

अत्युत्कृष्टगुणस्याप्रस्तुतस्य योगात्तद्गुणसंपदुपरागात्स्वकीयं रूपं तिरस्कृत्य प्रस्तुतं वस्तु यत्तदनुकारमेवाऽऽसादयति स तद्गुणो भण्यते। तस्याप्रस्तुतस्य गुणोऽत्रेति व्युत्पत्तेः। मीलिते वस्त्वन्तरेणाऽऽच्छादितस्य तस्यैव वस्तुनः प्रतीतिः, अत्र स्वनाच्छादितस्वरूपस्यैव वस्त्वन्तरगुणापत्तिरिति ततो भेदः।

उदाहरणम्—**विभिन्न०**

अत्र तद्गुणद्वयम्। रवितुरगापेक्षया गरुडाग्रजस्य तदपेक्षया च हरिन्मणीनां प्रकृष्ट- गुणत्वात्तद्रूपतया प्रतीतेः। एतेन यत्केनचिद्व्याख्यातम् 'स्वगुणत्यागानन्तरं पुनस्तत्प्राप्ति- स्तद्गुणः' इति, तदनादेयम्। तस्याप्रस्तुतस्य गुणोऽत्राऽस्तीति व्युत्पत्तिकथनप्रकाशविरो- धात्। तत्र गुणद्वयकथनेन च तद्गुणद्वयव्युत्पादनात्। 'आत्ते सीमन्तरत्ने'—इत्यादौ वक्ष्य- माणे संकरोदाहरणे तद्गुणत्वाभावप्रसङ्गाच्च। न हि तत्र त्यक्तस्य स्वकीयरूपस्यावाप्तिः।

---

**उत्सृज्येति**। व्याचष्टे—**तिरस्कृत्येति**। अभिभवे वस्तुतः स्वगुणत्यागाभावादिति भावः। **ततो भेद इति**। मीलिते धर्मिण एवाग्रहः सामान्येऽपरित्यक्तगुणस्यैवापृथ- क्प्रतिभासः, इह तु गुणमात्रस्यैवाभिभवः धार्मिणः पृथग्भासश्चेति भेद इत्यर्थः। भ्रान्ति- मति स्मर्यमाणस्याऽऽरोपोऽत्र गृह्यमाणस्येति भेदः। भ्रान्तेर्निबद्धत्वाभावाच्च।

**विभिन्नेति**। (माघकाव्ये चतुर्थसर्गे रैवतकपर्वतवर्णनम्। गरुडाग्रजेनारुणेन विभि- न्नवर्णा रथ्या अश्वाः।) स्फुरन्त्या रुचा इति सर्वान्वयि। वंशकरीरं कोमलवंशाग्रभागः। (उपजातिश्छन्दः।) अत्र द्वितीयं तद्गुणं पूर्वरूपमिति व्यवहरन्ति केचित्।

---

१ ग. मन्यते। २ ग. °णसंप°। ३ क. °नेनैव त°।

तद्रूपाननुहारश्चेदस्य[1] तत्स्यादतद्गुणः ।

यदि तु तदीयं वर्णं संभवन्त्यामपि योग्यतायामिदं न्यूनगुणं न गृह्णीयात्, तदा भवेदतद्गुणो नाम । उदाहरणम्—

धवलोऽसि जहवि सुन्दर तहवि तुए मज्झ रञ्जिअं हिअअम् ।
राअभरिए वि हिअए सुअह णिहित्तो ण रत्तोऽसि ॥ ५६५ ॥

अत्राऽतिरिक्तेनाऽपि मनसा संयुक्तो न रक्ततामुपगत[2] इत्यतद्गुणः । किं च तदित्यप्रकृतमस्येति च प्रकृतमत्र निर्दिश्यते । तेन यदप्रकृतस्य रूपं प्रकृतेन कुतोऽपि निमित्तान्नानुविधीयते, सोऽतद्गुण[3] इत्यपि प्रतिपत्तव्यम् । यथा—

---

तद्रूपा० ।

तदिति प्रकृतेत्यर्थः । अस्याप्रस्तुतस्य । अत्युज्ज्वलगुणयोगेऽपि यदि न्यूनगुणोऽप्रकृतः प्रकृतस्य गुणं नानुहरति तदाऽतद्गुणः ।

उदाहरणम्—धवलो० ।

अत्राऽतिरिक्ते मनसि धृतस्याप्यरक्तत्ववचनादुत्तरार्धमेवोदाहरणम् । तत्र प्रकृतं हृदयम्, संबोध्यस्त्वप्रकृतः । स्वहृदयवृत्तान्तनिवेदनस्यैव विवक्षितत्वात् । किं चाऽत्र सूत्रे तत्पदेन प्रकृतमिवाप्रकृतमप्युच्यते । तथाऽस्येत्यनेनाप्रकृतमिव प्रकृतमप्युपस्थाप्यते । सामान्यमुखप्रवृत्तत्वात् । तथा चाप्रस्तुतेन प्रस्तुतरूपाननुहरणवत्प्रस्तुतेनाप्रस्तुतरूपाननुहारोऽन्यः प्रकारः ।

---

पद्मरागायते नासामौक्तिकं तेऽधरत्विषा ।

इत्यप्युदाहरणम् । एवं परसंनिधानेन प्राक्सिद्धस्वगुणोत्कर्षोऽपि तद्गुणविशेष एवेत्यपि बोध्यम् । यथा—

नीलोत्पलानि दधते कटाक्षैरतिनीलताम् ।

इति । एतेनात्रानुगुणनामा पृथगलंकार इत्यपास्तम् । **इति तद्गुणः ।**

**अत्युज्ज्वलगुणयोगेऽपीति ।** पूर्ववाक्यस्थयोगादित्यस्यानुषङ्गादिदं लब्धम् । **धवलोऽसीति ।**

‘ धवलोऽसि यद्यपि सुन्दर तथाऽपि त्वया मम रञ्जितं हृदयम् ।
रागभरितेऽपि हृदये सुभग निहितो न रक्तोऽसि ॥ ’

निहित इत्यनेन रञ्जनयोग्यता । ( गाथा छन्दः । )

---

१ क. °स्य स स्याद° । २ क. °मुपाग° । ३ क. सोऽप्यत° । ४ क. एवं चात्र ।

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥ ५६६ ॥

यद्यथा साधितं केनाप्यपरेण तदन्यथा ॥ १३८ ॥
तथैव[1] यद्विधीयेत स व्याघात इति स्मृतः ।

येनोपायेन यदेकेनोपकल्पितम्, तस्याऽन्येन विजिगीषुतया तदुपायकमेव यदन्यथाकरणम्, स [ साधितवस्तुव्याहतिहेतुत्वात् ] व्याघातः ।
उदाहरणम्—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे[2] वामलोचनाः ॥५६७ ॥

---

यथा—गाङ्ग० ।

अत्रान्यापदेशपक्षे राजहंसस्य[3] प्राकरणिकत्वं प्राकरणिकसत्पुरुषोपमानतयोपपादनीयम् । वाच्यमात्रविश्रान्तौ तु न काचिदनुपपत्तिः ।

यद्यथा० ।

यथा येनोपायेन तथा तेनोपायेनेत्यर्थः । तथा च केनापि कर्त्रा यद्वस्तु येनोपायेन यथा साधितं तदन्येन कर्त्रा जिगीषुतया तद्वस्तु तेनैवोपायेन ततोऽन्यथा चेत्साध्यते स व्याघात इत्यर्थः । प्रथमसाधितस्य वस्तुनो व्याहतिहेतुत्वात् ।

उदाहरणम्—दृशा० ।

अत्र दृशैव दाहो जीवनं च । एवं शुद्धालंकारा दर्शिताः ।

---

गाङ्गमिति । यामुनं यमुनासंबन्धि । अम्बु जलम् । चीयते वर्धते । अपचीयतेऽपक्षीयते । ( रथोद्धता छन्दः । ) न काचिदनुपपत्तिरिति । गङ्गायमुनयोरप्रकृतयोर्मुणस्य वर्ण्यतया प्रकृतेन राजहंसेनाग्रहणादिति भावः । अमुं विशेषोक्तावन्तर्भावयन्ति परे । इत्यतद्गुणः ।

तेनैवोपायेनेति । तज्जातीयेनैवेत्यर्थः ।

दृशेति । ( विद्धशालभञ्जिकायां प्रथमाङ्के मङ्गलाचरणम् । विरूपाक्षः शिवः । )

अत्र दृशेति । तथा च कार्यवैजात्ये कारणवैजात्यं प्रयोजकमित्यस्य व्याघात इति भावः । इदमुपलक्षणम् । अन्यकारणत्वेन प्रसिद्धात्तदन्यकार्यनिष्पादनेऽप्ययम् ।

'यैर्जगत्प्रीयते हन्ति तैरेव कुसुमायुधः ।'

इत्यत्र योगार्थसत्त्वात् । अत्र सर्वत्र कारणयोरेकत्वाध्यवसानात्पुरःस्फुरन्विरोधः प्रातिस्विकरूपेण तत्तत्कार्यहेतुताविमर्शनान्निवर्तत इति बोध्यम् । यदा त्वाश्रयभेदेनैकस्यैव

---

१ क. ग. °व तद्वि° । २ ग. स्तमो वा । ३ क. °सस्याप्रा° ।

अस्ति पुनः कश्चिद्विषयो यत्राङ्गदादिसंबद्धपद्मरागप्रमुखमणिमेलकवत्प्रोक्तानामलंकाराणां संवलन एव चमत्कारः। तस्मात्सोऽप्यलंकारः। तत्र द्वयी गतिः। परस्परमनपेक्ष्य

---

कारणस्य विरुद्धकार्यद्वयजनकत्वं निबध्यते तत्र नायम्। व्याहतेर्विरोधगर्भाया अभावात्। यथैकस्यैव पाण्डित्यस्य खलवृत्तिमदजनकत्वं सुजनवृत्तिशान्तिजनकत्वं च। एवमेकेन कर्त्रा येन कारणेन यत्कार्यं निष्पिपादयिषितं तदन्येन कर्त्रा तेनैव कारणेन तद्विरुद्धकार्यं निष्पिपादयिषितं चेत्तदाऽप्ययम्। यथा—

'विमुञ्चसि यदि प्रियां प्रियतमेति मां मन्दिरे-
तदा सह नयस्व मां प्रणययन्त्रणायन्त्रितः।
अथ प्रकृतिभीरुरित्यखिलभीतिरक्षाक्षमा-
न्न जातु भुजमण्डलादवहितो बहिर्भावय॥'

इति। वनं प्रति प्रस्थितं रामं प्रति जानक्या वाक्यमिदम्। यत्तु-

'निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम्।
ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान्॥'

इति निरुक्त्यलंकारः। स श्लेषविशेष एव। यदपि सिद्धस्यैव विधानं विध्यलंकारः।

'पञ्चमोदञ्चने काले कोकिलः कोकिलोऽभवत्।'

अत्र द्वितीयकोकिलपदं मधुरध्वनिशालित्वं लक्षयत्सकलजनहृद्यत्वं व्यनक्ति। तदपि ध्वनिना गतार्थम्। क्वचिद्गुणीभूतव्यङ्ग्येन वा। न हि सर्वोऽपि गुणीभूतव्यङ्ग्यप्रपञ्चोऽलंकारगोष्पदेऽन्तर्भावयितुं शक्यते वेधसाऽपि। एवं सिद्धनिषेधानुकीर्तनमपि। एवमष्टौ प्रमाणालंकारा अन्यैर्दर्शिताः। तत्र प्रत्यक्षं भाविकतया निबद्धम्। अन्यादृशं तु न चमत्कारि। अनुमानं तु साक्षादेवोक्तम्। अन्येषां तु नालंकारत्वम्। तत्तत्प्रमाणजन्यप्रमितिविषयत्वकृतचमत्काराभावात्। तत्तद्रूपेणोपस्कारकत्वाभावात्। उपमानं तूपमयैव गतार्थमित्याद्यूह्यम्।

**चमत्कारः**। अधिकश्चमत्कारः। ननु संसृष्टिर्न पृथक्, यथा कामिनीशरीरे कुण्डलहारकेयूरकङ्कणादीनां खलेकपोतिकया शोभाजनने न विशेषार्थः। समुदायिभ्यः समुदायस्य। भेदाभावात्। अन्यथा लोकेऽपि भेदापत्तिः। तद्दृष्ट्यैव काव्ये गुणालंकारकल्पनादिति चेन्न। तत्र स्वाश्रयभिन्नभिन्नाङ्गोत्कर्षाधानपूर्वकं शरीरेऽवयविन्यार्थः शोभातिशयः। इह त्वेकाङ्गोत्कर्षतया संसृष्टिरेव। यथा लिम्पतीत्यादावुत्प्रेक्षया तमसः प्रसृतत्वं प्रतिपाद्योपमयाऽतिगाढत्वोपपादनेन संसृष्टिव्यवहारात्। लोकेऽपि बहूनां कण्ठाभरणानामेकोत्कर्षकत्वं तत्र संसृष्टित्वस्यैवाङ्गीकारात्। परस्परमपेक्ष्येति। परस्परनैरपेक्ष्येण लब्धात्मविश्रान्तीनामित्यर्थः।

सेष्टा[1] संसृष्टिरेतेषां भेदेन यदिह[2] स्थितिः ॥ १३९ ॥

एतेषां समनन्तरमेवोक्तस्वरूपाणामलंकाराणां यथासंभवमन्योन्यनिरपेक्षतया यदेकत्र शब्दभाग एव, अर्थविषय एव, उभयत्रापि वाऽवस्थानम्, सैकार्थसमवायस्वभावा[3] संसृष्टिः ।

तत्र शब्दालंकारसंसृष्टिर्यथा—

वदनसौरभ[4]लोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया ॥५६८॥

अर्थालंकारसंसृष्टिस्तु—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां[5] गता ॥ ५६९ ॥

---

व्यवस्थितेस्तदभावाच्च[6] । तत्र प्रथमा संसृष्टिरुच्यते, द्वितीया तु संकरः । स च त्रिधेति प्रकारचतुष्टयं लक्षयति—**सेष्टा०** ।

भेदः स्वरूपतो विषयतो वा परस्परमनपेक्षत्वम् । यद्वा विषयभेदे सति परस्परानपेक्षत्वम् । स्थितिर्व्यवस्थितिः । एतेषां समनन्तरमेवोक्तानामलंकाराणां भेदेन यत्स्थितिः सा संसृष्टिरिष्टा । संकरभेदास्तु नैवम् । अङ्गाङ्गिभावे स्वरूपतः सापेक्षत्वात् । अनिश्चये व्यवस्थितेरेवाभावात् । व्यवस्थिते विषयतः परापेक्षत्वाद्विषयाभेदाच्च । सेयं शब्दालंकारमात्रस्यार्थालंकारमात्रस्य शब्दार्थालंकारयोर्वेति त्रिप्रकारा ।

तत्राऽऽद्या यथा—**वदन०** ।

अत्रानुप्रासयमकयोः परस्परमनपेक्ष्य व्यवस्थितिः ।

द्वितीया यथा—**लिम्पती०** ।

---

**एतेषामिति** । बहुत्वमविवक्षितम् । तेन द्वयोरपि संग्रहः । **भेदेनेति** । अनेन संकरव्युदासः । व्यवस्थित्यभावमुपपादयति—**व्यवस्थितेरिति** । यथा लिम्पतीत्यत्रोत्प्रेक्षा लेपनविषया । उपमाऽसत्पुरुषसेवाविषया । **विषयाभेदादिति** । अनिश्चयेतिशेषः ।

**वदनेति** । ( माघकाव्ये षष्ठसर्गे कस्याश्चिन्नायिकाया वर्णनम् । ) मुखसौगन्ध्यलोभेन भ्रमतां भृङ्गाणां यः संभ्रमो भ्रमणं तेन पूर्णशोभया चूर्णकुन्तलैश्चञ्चलदृशा मधुरो मेखलाशब्दो विदध इत्यर्थः । ( द्रुतविलम्बितं वृत्तम् । )

**लिम्पतीवेति** । पूर्वार्धे उत्प्रेक्षा । उत्तरार्धे उपमा ।

---

१ क. सैषा । २ क. ग. यदिह । ३ ग. 'यसंबन्धस्व' । ४ ग. कुसुमसौ° । ५ ग. °ष्टिर्निष्फल° । ६ क. °स्तद्भावा° ।

पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः। उत्तरत्र तु तथाविधे उपमोत्प्रेक्षे। शब्दार्थालंकारयोस्तु संसृष्टिः—

सो णत्थि एत्थ गामे जो एअं महमहन्तलाअण्णम्।
तरुणाणहि अअलूडिं परिसप्पन्तिं णिवारेइ॥ ५७०॥

अत्रानुप्रासो रूपकं चान्योन्यानपेक्षे। संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात्।

अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु संकरः।

एते एवं यदात्मन्यनासादितस्वतन्त्रभावाः परस्परमनुग्राह्यानुग्राहकतां दधति, स एषां संकीर्यमाणस्वरूपत्वात् संकरः। उदाहरणम्—

---

अत्रोत्प्रेक्षोपमे परस्परमनपेक्ष्य व्यवस्थिते संसृष्टिं प्रयोजयतः।

अन्त्या यथा—सो णत्थि०।

अत्रानुप्रासरूपके शब्दार्थालंकारौ। नन्वनयोः शब्दार्थरूपाश्रयभेदेन कथमेकार्थसमवायलक्षणा संसृष्टिरिति चेत्, एकवाक्ये छन्दसि वा समवेतत्वात्।

अविश्रा०।

तेषामेवालंकाराणां चारुत्वार्थं स्वरूपनिष्पत्तये वाऽन्यापेक्षणादात्मन्यनासादितस्वन्तत्रभावानां परस्परमनुग्राह्यानुग्राहकत्वं स तु संकरः। संकीर्यमाणस्वरूपत्वात्।

---

(सो णत्थीति।)

'स नास्त्यत्र ग्रामे य एनां महमहल्लावण्याम्।
तरुणानां हृदयलुण्टाकीं परिष्वक्कमाणां निवारयति॥'

महमहल्लावण्याम्। नवनवीभवल्लावण्याम्। परिष्वक्कमाणां। स्वानुरूपरमणाभावादितस्ततो गच्छन्तीम्। (गाथा छन्दः।) अत्र पूर्वार्धे छेकानुप्रासः। उत्तरार्धे हृदयलण्ठाकीमिति रूपकम्। **एकवाक्येति**। 'क्रिया वा कारकान्विता' इत्युक्तेरर्थावच्छिन्नशब्दस्यैव वाक्यत्वम्। तथा चैकं वाक्यमिति प्रतीतिसिद्धमेकत्वमादाय तयोरेकार्थसमवाय इत्यर्थः। वाक्यभेदेऽप्याह—**छन्दसि वेति**। चतुष्पादात्मक इत्यर्थः। अर्थालंकाराणामप्यग्र परम्परया स्थितिः। **समवेतत्वम्**। संबद्धत्वम्।

**आत्मनि**। आत्ममात्रे। **परस्परमिति**। कस्यचिदनुग्राह्यत्वं कस्यचिदनुग्राहकत्वमित्यर्थः। योगार्थमाह—**संकीर्यमाणेति**।

---

१ क. ग. 'वतुय'।

आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते ।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन्गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥ ५७१ ॥

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतम्, तदाश्रयेण च तद्गुणः सचेतसां प्रभूतचमत्कृतिनिमित्तमित्यनयोरङ्गाङ्गिभावः । यथा वा—

जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः ।
परिप्रेङ्खत्तारापरिकरकपालाङ्कितलतले
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति ॥ ५७२ ॥

उपमा, रूपकम्, उत्प्रेक्षा, श्लेषश्चेति चत्वारोऽत्र पूर्ववदङ्गाङ्गितया

---

उदाहरणम्—आत्ते० ।

अत्र बिम्बोष्ठकान्त्या शोणमिति तद्गुणमपेक्ष्य गुञ्जाफलानां स्रज इति भ्रान्तिमानात्मानं लभते । तद्गुणोऽप्यत्र न स्वातन्त्र्येण चमत्कारविशेषं करोति किं तु भ्रान्तिमदपेक्षयैवेति परस्परमनुग्राह्यानुग्राहकभावः । अत्र द्वयोरलंकारयोः संकरः ।

बहूनामपि यथा—जटा० ।

अत्र जटाभाभिर्भाभिरिति पितृवन इव व्योम्नीति चोपमा । कलङ्काक्षवलयेति तारापरि-

---

**आत्त इति** । आत्ते गृहीते सीमन्तरत्ने, प्रथमं तत्र दृष्टिपातात् । मरकतिनीत्यनेन झटिति विवेचनम् । शुद्धहेम्नां देहकान्त्याऽभिभवसंभवात् । ताटङ्कपत्रं कर्णालंकारः । लुप्तायां छिन्नायाम् । मणितुलाकोटियुग्मे नूपुरे । इत्वरीणां गतिशीलानाम् । बिम्बोष्ठकान्त्येति । मुखस्य नम्रत्वात् । हारं मुक्तानिर्मितम् । ( स्रग्धरा छन्दः । ) **आत्मानं लभत इति** । अधरसांनिध्यासादितारुण्यविशिष्टमुक्ताफलानां दर्शनेन गुञ्जास्मरणाद्भ्रान्तिर्भवतीति भावः । **भ्रान्तिमदपेक्षयेति** । तन्निर्वाहकत्वेनेति भावः । एतच्च प्रकृताभिप्रायेण । अन्यत्र तस्य स्वातन्त्र्येणापि चमत्कारित्वात् ।

**जटेति** । जटातुल्याभिः पिङ्गाभिः कान्तिभिरुपलक्षितः । करो हस्तः किरणश्च तेन धृतः कलङ्क एव वलयाकाररुद्राक्षमाला येन । विरहिपीडयेवाङ्गीकृतं यद्वैराग्यं विगतरक्तता विषयव्यावृत्तिश्च । वियोक्तुं शीलं येषां ते वियोगिनो विषयास्तेषां व्यापत्तिर्नाशश्च । विशदः पाण्डुरः शुद्धचित्तश्च । उदयकालिकलौहित्यत्यागात्तथात्वम् । प्रेङ्खत्तारासमूहरूपकपालविहितस्वरूपे । भस्मना पाण्डुर्भस्मेव पाण्डुश्च । पितृवनं

---

१ क. °न्ताचिह्ने म° । २ क. °ङ्कयुग्मे लु° ।

प्रतीयन्ते। कलङ्क एवाक्षवलयमिति[1] रूपकपरिग्रहे करधृतत्वमेव साधकप्रमाणतां प्रतिपद्यते। अस्य हि रूपकत्वे तिरोहितकलङ्करूपमक्षवलयमेव मुख्यतयाऽवगम्यते[2]। तस्यैव च करग्रहणयोग्यतायां सार्वत्रिकी प्रसिद्धिः। श्लेषच्छायया तु कलङ्कस्य करधारणमसदेव प्रत्यासत्त्योपचर्य योज्यते। शशाङ्केन[3] केवलं कलङ्कस्य मूर्त्यैवोद्वहनात्। कलङ्कोऽक्षवलयमिवेति तूपमायां कलङ्कस्योत्कटतया प्रतिपत्तिः।

---

करकपालेति च रूपकम्। वियोगिव्यापत्तेरित्युत्प्रेक्षा। वैराग्यविशद इति श्लेषः। चत्वारोऽप्येते परस्परमङ्गाङ्गिभावेन प्रतीयन्ते। तत्रोत्प्रेक्षा श्लेषाङ्गम्। तद्वशादेव वैराग्यविशद इत्यत्र द्वितीयार्थानुसंधानात्। श्लेषश्च रूपकोपमयोरङ्गम्। तद्वशादवगतनिर्वेदमहिम्नैव जटाया अक्षवलयधारणस्य च संगतेः। तारापरिकरकपालेति रूपकं पितृवन इवेत्युपमाया अङ्गम्। तद्बीजं हि सादृश्यम्। न च श्मशाने व्योम्ना सह तत्साहजिकं किं तु रूपितकपालाश्रयत्वेनैवेति। सर्वत्र चाङ्गानां चारुत्वार्थमङ्ग्यपेक्षा पूर्ववदूहनीया। सर्वेषां चैषां पार्यन्तिकचारुत्वहेतुरङ्गिभूता च समासोक्तिः। चन्द्रगतत्वेन महाव्रतिवृत्तान्तप्रतीतेः। सा च व्यक्त्यैवेति प्रकाशकृता नोक्तेत्यवधेयम्। ननु कलङ्काक्षवलयेति कथमेकान्ततो रूपकमुच्यते। उपमाया अपि संभवेन संदेहसंकरौचित्यादिति चेत्, न। रूपकपरिग्रहे करधृतत्वमेव साधकं प्रमाणमतः संदेहस्याभावात्। कथमस्य साधकत्वमिति चेत्, इत्थम्—करधृतत्वरूपविशेषणस्याक्षवलय एव सार्वत्रिकी प्रसिद्धिः, न तु कलङ्के। अतः प्राधान्येनाक्षवलयप्रतीतिरेवोद्देश्या। सा च रूपकपरिग्रहेणैव संभवति। तत्र तिरोहितकलङ्करूपमक्षवलयत्वमेव मुख्यतयाऽवगम्यते। नन्वेवमपि विशेषणमिदमसम्यगेव। चन्द्रपक्षे किरणेन कलङ्कधारणस्याभावात्। मूर्त्यैव तेन तद्धारणादिति चेत्, न। श्लेषच्छायया हि कलङ्कस्याप्रधानस्य करधारणमसदेव प्रत्यासन्नतयोपचर्य योज्यते। तथा सत्युपमापरिग्रहे को दोष इति चेत्, कलङ्कोऽक्षवलयमिवेत्युपमायां कलङ्कस्य प्रधानत्वेन

---

श्मशानम्। (शिखरिणी छन्दः।) **वृत्तान्तप्रतीतेरिति**। तद्वृत्तान्ताध्यारोप एव धृतकलङ्काक्षवलयत्वान्वयादिति भावः। शशिवर्णनस्यैव प्रकृतत्वादत्रैव विश्रान्तिः। **प्राधान्येनेति**। कलङ्कत्वाच्छादनेनेत्यर्थः। **मुख्यतयेति**। रूपके वलयताद्रूप्यस्योद्भूततया प्रतीतिरिति भावः। **श्लेषच्छाययेति**। करपदश्लेषेण किरणे पाण्यभेदाध्यवसायादित्यर्थः। उपचर्य प्रत्यासन्नतयेत्यन्वयः। सादृश्यसंबन्धमूलकलक्षणापूर्वकमक्षवलयतादात्म्यप्राप्त्या। **तथा सति**। उपमायामप्यसदेव करधृतत्वमुपचर्यतामिति भावः। **प्रधानत्वे-**

---

१ क. °ति च रू°। २ ग. °ग्यतया सा°। ३ ग. °न क°।

न चास्य करधृतत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात् ।
एवंरूपश्च संकरः शब्दालंकारयोरपि परिदृश्यते । यथा—

राजति तटीयमभिहत—
दानव—रासातिपाति—साराव—नदा ।
गजता च यूथमविरत—
दान—वरा साऽतिपाति सारा वनदा ॥ ५७३ ॥

अत्र यमकमनुलोमप्रतिलोमश्च चित्रभेदः पादद्वयगते परस्परापेक्षे[1] ।

---

प्रतीतिः । न चास्य करधृतत्वं[2] मुख्यतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात् । मुख्यविषयोपचारापेक्षया चामुख्योपचार एव श्रेयानिति रूपकमेवाऽऽश्रीयते ।

शब्दालंकारयोरप्येष संकरो दृश्यत इति प्राञ्चः । उदाहरन्ति च—**राजति०** ।

तत्र यद्यपि यमकानुलोमविलोमचित्रभेदयोर्न स्फुटं परस्परापेक्षित्वं, तथाऽपि यमकनिर्वाहप्रवृत्तस्य कवेरपृथक्प्रयत्ननिर्वृत्ततयाऽनुलोमविलोमस्योत्पत्तौ यमकापेक्षा, यमकस्य तु चारुतातिशये तदपेक्षता । तदाश्रयेणातिसुन्दरतयातिशयेन[3] विदग्धमनोनुरञ्जकत्वादिति तेषामाशयः । वस्तुतस्तु यमकनिर्वाह एव कविप्रवृत्तिरिति निश्चायकं नास्ति । अस्तु वा

---

**नेति** । इतरस्वरूपानाच्छादित्वे सति विशेष्यतयेत्यर्थः । **मुख्येति** । विशेष्यभूतेत्यर्थः । **अमुख्यम्** । विशेषणम् । उपमा पूर्वपदार्थप्रधाना रूपकमुत्तरपदार्थप्रधानामिति भावः । वस्तुतस्तु रूपकेऽक्षवलयतादात्म्यापन्ने कलङ्के पाण्यभिन्नत्वेनाध्यवसितकिरणधृतत्वान्वययोग्यताऽस्ति । उपमायां तु तत्सदृशत्वेन प्रतीतिविषये कलङ्कत्वविशिष्टे पाण्यभिन्नत्वेनाध्यवसितेनापि किरणेन धृतत्वान्वययोग्यता नास्तीति रूपकमेवात्र । एवं च रूपके पूर्वपदार्थप्राधान्येऽपि न दोष इत्यवधेयम् ।

**राजतीति** । ( हरविजयकाव्ये पञ्चमसर्गे पर्वतवर्णनम् । ) इयं तटी राजति । कीदृशी । अभिहतो दानवानां रासः क्रीडा शब्दो वा यस्यां सा । अतिपाती शीघ्रगामी साराव: सशब्दो नदो यस्यां सा । गजता गजयूथमतिशयेन पाति रक्षति । किंभूता । अविरतेन दानेन मदेन वरा श्रेष्ठा । सारा स्थिरा । वनदा वनखण्डिका । ( आर्यागीतिश्छन्दः । ) **चित्रभेदः** । चित्रनामालंकारः । स चात्रानुलोमप्रतिलोमरूपः । **तेषामाशय इति** । एवं चानुग्राह्यानुग्राहकसंकर इति भावः । एतेन शब्दालंकारयोरयं नास्ति शब्दस्वरूपतयोपकार्योपकारकत्वाभावात्, किं तु संसृष्टिरेवेत्यलंकारसर्वस्वोक्तमपास्तम् ।

---

१ क. तेन परस्परापेक्षः । ए° । २ क. °त्वं तत्त्वतो° । ३ क. °तिदुष्कर° ।

एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥ १४० ॥

द्वयोर्बहूनां वाऽलंकाराणामेकत्र समावेशेऽपि विरोधात् न यत्र युगपदवस्थानम्, न चैकतरस्य परिग्रहे साधकम्, तदितरस्य वा परिहारे बाधकमस्ति, येनैकतर एव परिगृह्येत, स निश्चयाभावरूपो द्वितीयः संकरः। समुच्चयेन संकरस्यैवाऽऽक्षेपात्। उदाहरणम्—

जह गहिरो जह रअणणिब्भरो जह अ णिम्मलच्छाओ।
ता किं विहिणा एसो सुरसवाणीओ जलणिही ण किओ ॥५७४॥

अत्र समुद्रे प्रस्तुते विशेषणसाम्यादप्रस्तुतार्थप्रतीतेः किमसौ समासोक्तिः, किमब्धेरप्रस्तुतस्य मुखेन कस्यापि तत्समगुणतया प्रस्तुतस्य प्रतीतेरियमप्रस्तुतप्रशंसेति संदेहः। यथा वा—

---

तथा। तथाऽपि यमकं न चित्रहेतुः। किं तु तत्प्रयत्नः। तस्मादेकाश्रयानुप्रवेशेनैवायं संकरो न त्वनुग्राह्यानुग्राहकतयेत्येव युक्तम्।

एकस्य०।

न्यायः साधकप्रमाणसत्ता। दोषः प्रतिकूलसत्ता। ग्रहो व्यवस्थितिः। यत्र द्वयोर्बहूनां वाऽलंकाराणामेकत्र योग्यत्वेऽपि विरोधान्नैकदा व्यवस्थितिः, न चैकतरपरिग्रहे साधकं तदितरपरिग्रहे बाधकं येन तदेव व्यवतिष्ठेत, सोऽप्यनिश्चयरूपो द्वितीयः संकरः। सूत्रस्थचकारेण संकरस्यैवाऽऽक्षेपात्।

उदाहरणम्—जह०।

अत्र किं समुद्रे प्रस्तुते श्लिष्टविशेषणमहिम्नाऽप्रस्तुतपुरुषविशेषप्रतीतेरियं समासोक्तिः, किं वाऽब्धेरप्रस्तुतात्प्रस्तुतस्य पुरुषविशेषस्य तत्समानगुणतया प्रतिपत्तेरप्रस्तुतप्रशंसेति संदेहः। एकस्यैकदा प्रस्तुताप्रस्तुतोभयरूपत्वाभावादनयोर्युगपदसंभवात्, न्यायदोषयोरसंभवाच्च। अयं द्वयोः संकरः।

---

तस्मादेकेति। मिथश्चारुतातिशये परस्परापेक्षत्वादनुग्राह्यानुग्राहकभावोऽपीत्यन्ये।

एकस्य। एकतरस्य। प्रतिकूलसत्ता। बाधकप्रमाणसत्ता। व्यवस्थितिः। निश्चयः। विरोधात्। विरुद्धतात्पर्यकत्वात्।

जहेति०।

'यथा गम्भीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः।
तथा किं विधिना एष सरसपानीयो जलनिधिर्न कृतः॥'

आर्या मुखविपुला। संदेहबीजमाह—न्यायदोषयोरिति।

---

१ क. °धाद्यत्र युगपदवस्थानासंभवः। न चै°। २ क. 'तयैवेत्ये°। ३ क. °धकं प्रमाणम्। दोषः प्रातिकूलता। ग्र°।

नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति ।
अधुनाऽपि निरुद्धाशमविशीर्णमिदं तमः ॥ ५७५ ॥

अत्र च किं कामस्योद्दीपकः कालो वर्तत इति भङ्ग्यन्तरेणाभिधानात्पर्यायोक्तम्, उत वदनस्येन्दुबिम्बतयाऽध्यवसानादतिशयोक्तिः, किं वैतदिति वक्त्रं निर्दिश्य तद्रूपारोपवशाद्रूपकम्, अथवा तयोः समुच्चयविवक्षायां दीपकम्, अथवा तुल्ययोगिता, किमु प्रदोषसमये विशेषणसाम्यादाननस्यावगतौ समासोक्तिः, आहोस्विन्मुखनैर्मल्यप्रस्तावादप्रस्तुतप्रशंसेति बहूनां संदेहादयमेव संकरः।

यत्र तु न्यायदोषयोरन्यतरस्यावतारः, तत्रैकतरस्य निश्चयान्न संशयः । न्यायश्च साधकत्वमनुकूलता । दोषोऽपि बाधकत्वं प्रतिकूलता । तत्र

'सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः ।'

---

बहूनां यथा—नयना० ।

अत्र किं कामोद्दीपकः कालो वर्तत इति भङ्ग्यन्तरेणाभिधानात्पर्यायोक्तम् । किं वा एतदित्यस्य बिम्बपरामर्शकतया वदनस्येन्दुबिम्बेनाध्यवसानादतिशयोक्तिः । किं वैतदिति वक्त्रं निर्दिश्येन्दुबिम्बरूपणवशाद्रूपकम् । अथ प्रसीदतीत्यस्योभयत्रान्वयविवक्षायामेकतरस्य प्रकृतत्वाद्दीपकम् । द्वयोरपि प्रकृतत्वेऽप्रकृतत्वे वा तुल्ययोगिता वा । किंवा प्रदोषवर्णने चन्द्रबिम्बस्य प्रकृतत्वे विशेषणसाम्यादाननप्रतीतौ समासोक्तिः । आहोस्विन्मुखनैर्मल्यवर्णनप्रस्तावाच्चन्द्रस्याप्रस्तुतत्वेनाप्रस्तुतप्रशंसेति संदेहः । न्यायदोषयोरभावात् ।

यत्र तु तयोरन्यतरस्यावतारस्तत्रैकतरनिश्चयान्न संशयः । तत्र—

'सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः ।'

---

**नयनेति** । निरुद्धाशं निरुद्धदिक् निरुद्धप्रत्याशं च । अविशीर्णं न नष्टम् । तमस्तिमिरं मोहश्च । **अतिशयोक्तिः** । निगीर्याध्यवसानरूपा । **रूपकमिति** । निगरणाभावादित्यर्थः । **दीपकमिति** । चन्द्रबिम्बं प्रसीदति एतन्मुखं च प्रसीदतीत्यन्वयादिति भावः । **तुल्ययोगितेति** । द्वयोरौपम्यस्याऽऽक्षेपलभ्यत्वात् ।

---

१ क. ग. 'ना विनिरुद्धा' । २ ग. अथेत' ।

इत्यत्र मुख्यतयाऽवगम्यमाना हासद्युतिर्वक्त्र एवानुकूल्यं भजत इत्युपमायाः साधकम्, शशिनि तु न तथा प्रतिकूलेति रूपकं प्रति तस्या अबाधकता ।

'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः ।'

इत्यत्रापरत्वमिन्दोरनुगुणं न तु वक्त्रस्य प्रतिकूलमिति रूपकस्य साधकतां प्रतिपद्यते, न तूपमाया बाधकताम् ।

'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।'

---

इत्यत्र मुख्यत्वेन प्रतीयमाना हसितद्युतिर्वक्त्र एवाऽऽनुकूल्यं भजते । तत्रैव मुख्यतस्तत्संभवात् । वक्त्रस्य प्राधान्येन स्थितिरुपमायामेवेत्युपमासाधिका । शशिनि तु नानुकूला । मुख्यतस्तत्र हासद्युतेरभावात् । नापि प्रतिकूला । गौणत्वेनाप्युपपत्तेरिति न रूपकं प्रति साधिका बाधिका वा ।

'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः' ।

इत्यत्रापरत्वमिन्दावनुगुणम् । मुखरूपेन्दौ सति किमपरेणेन्दुनेति प्रतीतेः । तथाप्रतीतिश्च रूपकेण विना नेति रूपकं प्रति साधकतां प्रतिपद्यते । न पुनर्वक्त्रस्य प्रतिकूलम् । इन्दुसमानगुणे वक्त्रे सति किमपर इन्दुरुदित इति प्रतीतावत्रासंगत्यभावात् । अतो नोपमाबाधकम् ।

'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्' ।

---

**मुख्यत्वेनेति** । ज्योत्स्नासादृश्याश्रयतयेत्यर्थः । **वक्त्र एवेति** । इतररूपानाच्छादिते वक्त्र इत्यर्थः । **प्राधान्येन** । इतरानाच्छादितत्वेन । **शशिनि त्विति** । शशितादात्म्येन प्रतीते त्वित्यर्थः । **रूपकम्** । वक्त्रमेव शशीत्याकारकम् । तावताऽपि न संदेहसंकरः ।[3] द्युतिपदस्य शोभारूपमुख्यार्थत्यागानौचित्यादिति भावः । ज्योत्स्ना यथा शशिनः सौभाग्यं वितनोति एवं हासद्युतिः शशिसदृशवक्त्रसौभाग्यं वितनोतीति वाक्यार्थः ।

**इन्दाविति** । इन्दुतादात्म्यप्रतीतावित्यर्थः । **साधकतामिति** । अपरत्वस्व पूर्वापोक्षित्वात्प्रथमेन्दोरावश्यकत्वेन रूपकसाधकत्वम् । ननु उपमायां वक्त्रस्यैव मुखप्रत्यये शीतांशावपरत्वं व्याहन्येत । इन्द्वन्तरस्याप्रतीतेरत आह—**इन्दुसमानगुण इति** । कथंचिदेवमर्थघटनासंभवेन वक्त्रप्राधान्ये प्रातिकूल्याभावादुपमायां न बाधकमित्यर्थः । एवं चानयोरुदाहरणयोर्यत्कोटेः साधकमस्ति तत्कोट्यंशे संशयस्योत्कटत्वात्संकरलक्षणे च तुल्यकोटिकसंशयस्य विवक्षणान्नात्र संकर इत्याशयः ।

---

१ क. °न्येनावगति° । २ ख. °शुरुज्जृम्भत इ° । ३ ख. संदेहे निरासः । द्यु° ।

इत्यत्र पुनरालिङ्गनमुपमां निरस्यति । सदृशं प्रति परप्रेयसीप्रयुक्तस्याऽऽलिङ्गनस्यासंभवात् ।

आनन्दमन्थरपुरंदरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु नो विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ ५७६ ॥

इत्यत्र मञ्जीरशिञ्जितमम्बुजे प्रतिकूलमसंभवादिति रूपकस्य बाधकम्, न तु पादेऽनुकूलमित्युपमायाः साधकमभिधीयते । विध्युपमर्दिनो बाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेः । एवमन्यत्रापि सुधीभिः परीक्ष्यम् ।

---

इत्यत्राऽऽलिङ्गनमुपमायां बाधकम् । स्वामिसदृशं प्रति प्रेयसीप्रयुक्तस्याऽऽलिङ्गनस्यानौचित्यात् । न तु रूपके साधकम् ।

'पादाम्बुजं भवतु वो विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः ।'

इत्यत्र मञ्जीरशिञ्जितमम्बुजे प्रतिकूलम् । तत्रासंभवात् । अतो रूपके बाधकम् । नन्वेतदुपमासाधकमपि भवति । पादेऽनुकूलत्वात् । तत्कथं रूपकबाधकतामात्रत्वमस्योच्यते न तूपमासाधकत्वमपीति । एवमन्यत्रापि यदेकत्रानुकूलं तद्बाहुल्येन परत्र प्रतिकूलम् । यच्चैकत्र प्रतिकूलं तत्तत एवान्यत्रानुकूलम् । अन्यथा तथात्वस्यैवासंभवादिति चेत्, सत्यम् । किं तु यस्य यथात्वमुत्कटं प्रतीयते तत्र तस्य तथात्वव्यपदेशः । अत्र तु विध्युपमर्दि बाधकं साधकापेक्षयोत्कटत्वेन प्रतीयत इति तेनैव व्यपदेशो युक्तः । तदेतदुक्तं विध्युपमर्दिबाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेरिति । अन्ये तु तदन्यथा व्याचक्षते— विधीयतेऽनेनेति विधिः साधकम्, तदुपमर्दि तस्माद्बलीयः । एतदुक्तं भवति—मञ्जीरशिञ्जितस्य पादे संभवमात्रेण न तावदुपमासाधकत्वं निर्वहति यावदम्बुजे तद्विरहो न निश्चीयते । तथा च तद्बाधकस्यैव प्राथमिकत्वात्तन्मुखेनैव व्यपदेशः । एवमन्यत्रापि साधकबाधकसत्त्वं सुधीभिः परिभावनीयम् ।

---

**न तु रूपक इति** । एतद्बीजमग्रे स्फुटम् । **अम्बुजे** । तत्त्वेन प्रतीतेः । **विध्युपमर्दीति** । स्वविरोधिकोटिभूतविध्युपमर्दीत्यर्थः । उपमासाधकमित्युक्ते किंचिद्रूपकस्यापि साधकं स्यादिति संदेहो नापैति, बाधके त्वभिहिते तद्व्यवच्छेदप्रतीतेः संदेहोच्छेद इत्याशयः । **एवमिति** ।

---

१ क. °वादिति । पादा° । २ क. °तु वो वि° । ३ क. तस्यैवा° । ख. तावस्यैव । स° ।

**स्फुटमेकत्र[1] विषये शब्दार्थालंकृतिद्वयम् ।**

**व्यवस्थितं च**

**अभिन्ने[2] एव पदे स्फुटतया यदुभावपि शब्दार्थालंकारौ व्यवस्थां समासादयतः, सोऽप्यपरः संकरः । उदाहरणम्—**

**स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-**
**विस्तीर्णकर्णिकमथो दिवसारविन्दम् ।**
**श्लिष्टाष्टदिग्दलकलापमुखावतार-**
**बद्धान्धकारमधुपावलि संचुकोच ॥ ५७७ ॥**

**अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ ।**

**तेनासौ त्रिरूपः परिकीर्तितः ॥ १४१ ॥**

---

**स्फुट०** ।

विषयः पदम् । तेनैकत्र पदे यदुभौ शब्दार्थालंकारौ स्फुटं व्यवस्थितौ भवतः, सोऽप्यपरः संकरः ।

उदाहरणम्—**स्पष्टोल्लस०** ।

अत्र पादत्रये प्रत्येकं रूपकानुप्रासौ प्रविष्टौ । शब्दार्थालंकृतीति प्रायोवादः । शब्दालंकारयोरप्येतद्दर्शनात् । यथा—'कलकलोऽलकलोलदृशाऽन्यया' इत्यादावनुप्रासयमकयोः ।

**तेना०** ।

---

'यस्यानिशं दिविपदश्चरणारविन्दमुत्तंसयन्त्यमितभक्तिभरावनम्राः ।' इत्यादावुत्तंसनमुपमाबाधकमिति बोध्यम् ।

तृतीयसंकरमाह—**स्फुटमिति** । स्फुटमित्यनेनास्फुटालंकारद्वयसंसर्गस्य नालंकारत्वं वैचित्र्यानाधायकत्वादिति सूचितम् ।

**स्पष्टेति** । ( हरविजये १९ सर्गे संध्याकालवर्णनम् । ) स्पष्टमुल्लसन्तः किरणा एव केसरं यस्य तादृशं सूर्यबिम्बमेव विस्तीर्णा कर्णिका यस्य, मिथः संबद्धा अष्टौ दिश एव दलसमूहा यस्य तच्च तन्मुखं रात्रेरारम्भस्तदवतारेण बद्धाऽन्धकारमधुपावलिर्यत्र तत् । ( वसन्ततिलका छन्दः । ) **प्रत्येकम्** । समस्तपदे । किरणकेसरसूर्यबिम्बविस्तीर्णकर्णिकादिग्दलकलापेत्यत्र ।

---

१ ख. °मेकार्थेऽपि° । २ ग. °न्ने च प° । ३ क. मुखावतार° ।

तदयमनुग्राह्यानुग्राहकतया संदेहेन एकपदप्रतिपाद्यतया च व्यवस्थितत्वात्त्रिप्रकार[1] एव संकरो व्याकृतः । प्रकारान्तरेण तु न शक्यो व्याकर्तुम्, आनन्त्यात्तत्प्रभेदानामिति । प्रतिपादिताः शब्दार्थोभयगतत्वेन त्रैविध्यजुषोऽलंकाराः ।

कुतः पुनरेष नियमो यदेतेषां तुल्येऽपि काव्यशोभातिशयहेतुत्वे कश्चिदलंकारः शब्दस्य, कश्चिदर्थस्य, कश्चिच्चोभयस्येति चेत् । उक्तमत्र, यथा काव्ये दोषगुणालंकाराणां शब्दार्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः । निमित्तान्तरस्याभावात् । ततश्च योऽलंकारो यदीयान्वयव्यतिरेकावनुविधत्ते[2], स तदलंकारो व्यवस्थाप्यत इति । एवं च यथा पुनरुक्तवदाभासः परम्परितरूपकं[3] चोभयोर्भावाभावानुविधायितयोभयालंकारौ[4], तथा शब्दहेतुकार्थान्तरन्यासप्रभृ-

---

तस्मादनुग्राह्यानुग्राहकतया संदेहेनैकपदप्रतिपाद्यतया व्यवस्थितत्वाच्च त्रिप्रकारोऽयं संकरः कथितः । प्रकारान्तरेण तु न शक्यो व्याकर्तुम् । भेदानामनन्तत्वात् । इति प्रतिपादिताः । शब्दार्थतदुभयगतत्वेन त्रिविधा अलंकाराः ।

ननु त्रिविधानामप्येषां काव्यशोभातिशयहेतुत्वस्य तुल्यत्वेऽपि कुत एष प्रतिनियमो यत्कश्चिच्छब्दस्य कश्चिदर्थस्य कश्चिच्छब्दार्थयोरिति चेत् । उक्तमत्र प्रागेव दोषगुणालंकाराणां शब्दार्थोभयगतत्वव्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः । निमित्तान्तराभावात् । ततश्च योऽलंकारः शब्दार्थयोर्मध्ये यस्यान्वयव्यतिरेकावनुविधत्ते स तदलंकार इति व्यवस्थाप्यते । शब्दान्वयव्यतिरेकानुविधायित्वं चैतदेव, यच्छब्दपरिवृत्त्यसहत्वम् । नन्वेवं यथा पुनरुक्तवदाभासः परम्परितरूपकं चोभयभावाभावानुविधायित्वेनोभयालंकारस्तथार्थशब्दहेतुकार्थान्तरन्यासप्रभृतयोऽप्युभयालंकारा भवेयुरिति चेत्,

---

**अनन्तत्वादिति** । शब्दगतत्वेनार्थगतत्वेन शब्दार्थोभयगतत्वेन चानुगतीकृत्योक्तम् । उपमारूपकादीन्विशिष्योपादाय त्वनन्तत्वात्तत्संकरो वक्तुं न शक्यत इत्यर्थः । तदाह—**शब्दार्थेत्यादि** । पूर्वं 'व्यवस्थितत्वाच्च' इत्यस्याप्ययमेवार्थः ।

**प्रागेवेति** । नवमोल्लास इत्यर्थः । **परिवृत्त्यसहत्वमिति** । तत्त्वं शब्दगतत्वम्, शब्दस्य तत्सहत्वेऽर्थगतत्वम्, कस्याचिच्च तत्सहत्व उभयगतत्वमिति भावः । **अर्थशब्दहेतुकेति** । क्षणदासावक्षणदेत्यादौ शब्दशक्तिमूलविरोधालंकाराङ्गभूतार्थान्तरन्यास इत्यर्थः ।

---

१ ग. °रतयैवेसं° । २ ग. यदीयौ भावाभावावनु° । ३ क °कं चोभ° । ४ ख. °रौ व्यवस्थापितौ तथा ।

तयोऽपि द्रष्टव्याः । अर्थस्य तु तत्र वैचित्र्यमुत्कटतया प्रतिभासत इति वाच्यालंकारमध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः । योऽलंकारो यदाश्रितः स तदलंकार इत्यपि कल्पनायामन्वयव्यतिरेकावेव समाश्रयितव्यौ । तदाश्रयणमन्तरेण विशिष्टस्याऽऽश्रयाश्रयिभावस्याभावादित्यलंकाराणां यथोक्तनिमित्त एव परस्परव्यतिरेको ज्यायान् ।

**एषां दोषा यथायोगं संभवन्तोऽपि केचन ।**
**उक्तेष्वन्तर्भवन्तीति न पृथक्प्रतिपादिताः ॥ १४२ ॥**

तथा हि—अनुप्रासस्य प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोध इति ये त्रयो दोषाः, ते प्रसिद्धिविरुद्धतामपुष्टार्थत्वं प्रतिकूलवर्णतां च यथाक्रमं न व्यतिक्रामन्ति । तत्स्वभावत्वात् । क्रमेणोदाहरणम्—

---

न । इष्टापत्तेः । एवं तर्हि कथमुभयालंकारप्रस्तावमुल्लङ्घ्यार्थमात्रालंकारप्रस्तावे पठिता इति चेत्, तत्रार्थवैचित्र्यस्य प्रकटतया प्रतिभासात् । अथ योऽलंकारो यदाश्रितः स तदीय इत्येव किं न विभाग इति चेत्, तथा कल्पनायामप्यन्वयव्यतिरेकावेव समाश्रयितव्यौ । तद्व्यतिरेकेण विशिष्टस्याऽऽश्रयाश्रयिभावस्याभावात् । तस्मादलंकाराणामन्वयव्यतिरेकनिबन्धन एव परस्परं भेद इत्येव ज्यायः ।

नन्वलंकाराणां दोषाः प्राचीनैरभिहितास्ते किं न सन्त्येव, आहोस्वित्संभविनोऽप्युपेक्षिताः । आद्येऽनुभवविरोधः । अन्त्ये न्यूनतेत्यत आह—**एषां०** ।

तथा हि—अनुप्रासस्य तावत्त्रयो दोषाः, प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोधश्च । ते च यथाक्रमं प्रसिद्धिविरोधापुष्टार्थत्वप्रतिकूलवर्णत्वेभ्यो नातिरिच्यन्ते । तत्स्वभावत्वात् ।

---

प्रभृतिपदात् ‘ सकलकलं पुरमेतत् ’ इति शब्दसाम्यनिबन्धनोपमादयः । **प्रकटतयेति** । साध्यसाधनभावादीनामर्थधर्मत्वादिति भावः । अत एव शब्दवैचित्र्यस्योत्कटतया पुनरुक्तवदाभासः शब्दालंकारमध्ये गणितः । वास्तवं सिद्धान्तसिद्धं तु सर्वेषामुभयालंकारत्वमिति बोध्यम् । अलंकारसर्वस्वोक्तां युक्तिं शङ्कते—**अथेति** । **विशिष्टस्य** । तत्तदाश्रयविशिष्टस्य । **ज्याय इति** । साक्षाच्छब्दाश्रितत्वस्य यमकखड्गबन्धादौ साक्षादर्थाश्रितत्वस्योत्प्रेक्षासमासोक्त्यादावसंभवात्कथंचित्तदाश्रितत्वस्यातिप्रसक्तत्वात्परिवृत्त्यसहशब्दाश्रितत्वं तत्सहशब्दार्थाश्रितत्वं वाच्यम् । तथा च कथंचिदाश्रितत्वांशप्रवेशो विफल इत्याशयः ।

**वैफल्यम्** । चमत्काराजनकत्वम् । **वृत्तिविरोधः** । उपनागरिकादेवृत्तिविरोधः । **प्रतिकूलेति** । माधुर्यव्यञ्जिकायां वृत्तौ शब्दत एव टवर्गादेरोजोव्यञ्जितायामुद्धतगुम्फविधानमुखेन शिथिलबन्धस्यार्थतः पर्युदासादिति भावः । **तत्स्वभावत्वादिति** । तत्तल्लक्ष-

---

१ ग. तत्रैव वै° । २ ग. °कावश्यमा° । ३ क. °ष्वन्तः पतन्तीति । ४ ग. °योऽनर्थास्ते° प्र° । ५ ग. °मं नाति° । ६ क. °कावश्यमा° ।

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन्धूर्जटिर्धूर्ध्वजान्ता-
नक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः।
रंहः संघः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः॥५७८॥

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिरनुप्रासानुरोधेनैव प्रतिपादिता न पुराणेतिहासादिषु तथा प्रतीतेति प्रसिद्धिविरोधः।

भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि।
यदि सलीलोल्लासिनि गच्छसि तत्किं त्वदीयं मे॥ ५७९॥

अनणुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम्।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते॥ ५८०॥

---

तत्र प्रसिद्ध्यभावो यथा—चक्री०।

अत्र चक्रिप्रभृतीनां कर्तृणां चक्रारपङ्क्त्यादीनां कर्मणां प्रतिनियमेन स्तुतिरनुप्रासानुरोधेनैव निबद्धा न पुनरितिहासादिषु तथा प्रसिद्धेति प्रसिद्ध्यभावः। सोऽयं प्रसिद्धिविरोध एव।

वैफल्यं यथा—भण०।

अनणु०।

---

णाक्रान्तत्वादित्यर्थः।

चक्रीति०। ( मयूरकविकृतेः सूर्यशतके सूर्यरथवर्णनम्। ) अहिमरुचेः सूर्यस्य स स्यन्दनो वोऽवतादिति संबन्धः। जगदुपकारार्थं नित्यप्रवृत्तस्य यस्य चक्रकीलकपङ्क्तिं चक्री विष्णुः, हरीनश्वान् हरिरिन्द्रः, धूर्यानमुखम् तत्रत्यध्वजानामग्रान् धूर्जटिः शिवः, नक्षत्रनाथश्चन्द्रः, अक्षं युगम्, अरुणं सारथिं वरुणः, कूबराग्रं युगबन्धनाग्रं कुबेरः, रंहो वेगं सुराणां समूहः, स्तौतीति सर्वान्वयि। ( स्रग्धरा छन्दः। )

भणेति। हे तरुणि आनन्दस्यन्दी सुन्दरश्च य इन्दुस्तन्मुखि। सलीलमुल्लासयुक्ते। उल्लासो गमनवचनादिप्रकारः। यदि रमणमन्दिरं गच्छसि तदा त्वदीयमेकं प्रयोजनं भणेत्यर्थः। श्वोभाविगमनां प्रति जारस्य वचः।

अननुरणदिति। शब्दरहितमणिमेखलम्। तत्स्थानस्य गुरुत्वेन लघुसंचारात्। अविरतसिञ्जानमञ्जुमञ्जीरामिति च परिसरणविशेषणम्। परिसरणं गमनम्। भूषणानां च शिञ्जितम्। रणरणकमुत्कण्ठाम्। ईदृशं तव परिसरणं दृष्ट्वा मम चेतोऽकारणमुत्कण्ठां कुरुत

---

१ ख. °जाग्रान°। २ क. °क. °रुचः सो°। ३ ख. कृता। ४ ख. °ल्लापिनि। ५ क. चरणरण°। ग. अनणुरण°।

अत्र वाच्यस्य विचिन्त्यमानं[1] न किंचिदपि चारुत्वं प्रतीयत इत्यपुष्टार्थतैवानुप्रासस्य वैफल्यम्।

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम्।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥ ५८१ ॥

अत्र शृङ्गारे परुषवर्णाडम्बरः पूर्वोक्तरीत्या विरुध्यत इति परुषानुप्रासोऽत्र प्रतिकूलवर्णतैव[2] वृत्तिविरोधः।

यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्वं दोषः। यथा—

भुजंगमस्येव मणिः सदम्भा ग्राहावकीर्णेव नदी सदम्भाः।
दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतः प्रसभं[3] सदम्भाः ॥ ५८२॥

उपमायामुपमानस्य जातिप्रमाणगतन्यूनत्वमधिकता वा तादृश्यनुचितार्थत्वं दोषः। धर्माश्रये तु न्यूनाधिकत्वे यथाक्रमं हीनपदत्वमधिकपदत्वं च न व्यभिचरतः। क्रमेणोदाहरणम्—

---

अत्र वाच्यस्यार्थस्य विचिन्त्यमानं[4] न किंचिच्चारुत्वं प्रतीयत इत्यपुष्टार्थत्वमेवानुप्रासस्य वैफल्यमुच्यते।

वृत्तिविरोधो यथा—'अकुण्ठो०। इत्यादि।

अत्र शृङ्गारे परुषवर्णाडम्बरो गुणविवेचनप्रस्तावोक्तरीत्या विरुद्ध इति प्रतिकूलवर्णतैव वृत्तिविरोध इत्युच्यते।

यमकस्य तु पादत्रयगतत्वेन यमनमप्रयुक्तत्वमेव। कविभिस्तथाऽप्रयोगात्।

यथा—भुजंगम०।

उपमायां तु यौ न्यूनाधिकोपमानत्वे दोषौ तत्रोपमान उपमेयापेक्षया जातिगतं प्रमाणगतं वा यन्न्यूनत्वमधिकता वा तदनुचितार्थम्। धर्मगते न्यूनत्वाधिकत्वे यथाक्रमं न्यूनपदत्वाधिकपदत्वे।

---

इत्यर्थः। तवोल्लासात्। इतः परं भर्तृगृहगमनाच्चेति भावः। ( आर्या छन्दः। ) उद्धर इति। शब्दानुरूपार्थविरहेणानुप्राससत्त्वेऽपि नाऽऽस्वादोत्कर्षः। शब्दालंकाराणामप्यर्थातिशयाधानद्वारेणैव चमत्कारित्वात्। शब्दानां परिवृत्त्यसहत्वमात्रेण शब्दालंकारव्यपदेशः।

भुजंगमस्येति। सदम्भा दम्भसहिताः। दुरन्ततां दुःखग्राह्यान्तःकरणताम्। निर्णयतोऽपि निश्चिन्वतोऽपि। प्रसभं बलात्। प्रमुख इति पाठ आपाततः। कर्षन्ति। सत्कान्तिसर्पमणिरिव ग्राहयुक्तसजला नदीव। कान्तेरम्भःपदवाच्यत्वात्। ( उपजातिश्छन्दः। )

धर्मगते। साधारणधर्मगते।

---

१ क. विवेच्यमानं। २ ग. °र्णता वृ°। ३ क. ग. प्रमुखे। ४ क. विविच्यमानं।

चण्डालैरिव युष्माभिः साहसं परमं कृतम् ॥ ५८३ ॥
वह्निस्फुलिङ्ग इव मानुरयं चकास्ति ॥ ५८४ ॥
अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान्वेधा विनिर्मित्सुरिव प्रजाः ॥ ५८५ ॥
पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसंनिभः ॥ ५८६ ॥

अत्र चण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यर्थमेव कदर्थित इत्यनुचितार्थता ।

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥ ५८७ ॥

अत्रोपमानस्य मौञ्जीस्थानीयस्तडिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादित इति हीनपदत्वम् ।

---

तत्र जातिगतं न्यूनत्वं यथा—**चण्डालैरि०** ।

अत्र चण्डालत्वजातेर्न्यूनतया दुष्कर्मकारित्वव्यक्तेरनुचितार्थत्वम् ।

प्रमाणगतं यथा—**वह्निस्फुलिङ्ग०** ।

जातिगतमधिकत्वं यथा—**अयं०** ।

ब्रह्मणः कल्पभेदेन भेदाद्ब्रह्मत्वं जातिः ।

प्रमाणगतमधिकत्वं यथा—**पाताल०** ।

एषु चण्डालादिभिरुपमानैरुपमेयभूता अर्था अत्यन्तमेव कदर्थिताः । निन्दोपहासादिप्रतीतेरित्यनुचितार्थता ।

धर्मगतं न्यूनत्वं यथा—**स मुनि०** ।

अत्रोपमेयमौञ्जीस्थानीयस्तडिल्लक्षणो धर्मो न केनापि पदेन प्रतिपादितः । न चाऽऽक्षेपा-

---

**अनुचितार्थत्वमिति** । तद्व्यक्तिविवक्षायां तु न दोषत्वमिति बोध्यम् ।

**अयमिति** ।( पद्ममेवासनं तत्राऽऽसीनः । विनिर्मित्सुर्विनिर्मातुमिच्छुः । स्रष्टा ब्रह्मा ।

**पातालमिति** । कालिन्दीपातसंनिभो यमुनाप्रवाहतुल्यः) । **उपहासेति** । अत्युत्कृष्टब्रह्माद्युपमानकत्वमपकृष्टोपमेयस्यासत्यतापर्यवसायितयोपहासाय भवतीति भावः ।

**स मुनिरिति** । ( मौञ्ज्या मुञ्जाख्यतृणनिर्मितमेखलया । लाञ्छिताश्चिह्नितः ।

---

१ क. 'वान्स्रष्टा वि' । २ क. 'हासप्र' ।

स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः ॥ ५८८ ॥

अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यत इत्यधिकपदत्वम् ।

लिङ्गवचनभेदोऽप्युपमानोपमेययोः साधारणं चेद्धर्ममन्यरूपं कुर्यात्तदैकतरस्यैव तद्धर्मसमन्वयावगतेः सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं वा प्रतीयमानेन धर्मेण प्रतीयत इति प्रक्रान्तस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमरूपत्वम् । यथा—

चिन्तारत्नमिव च्युतोऽसि करतो धिङ्मन्दभाग्यस्य मे ॥ ५८९ ॥

---

दिनाऽपि स्पष्टं प्रतीयतेऽविनाभावाद्यभावादिति न्यूनपदत्वमेवैतत् ।

धर्मगतमधिकत्वं यथा—स पीत० ।

अत्रोपमेये शङ्खाद्यनिर्देशादुपमाने तत्तुल्यस्य शशिनो ग्रहणमतिरिच्यत इत्यधिकपदत्वमेवैतत् ।

भिन्नलिङ्गत्वभिन्नवचनत्वे अप्युपमादोषौ नोक्तदोषातिरेकिणौ । तथा हि—लिङ्गवचनयोर्भेदे यद्युपमानोपमेययोः साधारणधर्मवाचकं पदमन्यतरघटितलिङ्गं कुर्यात्, तदैकतरस्यैव तद्धर्मसमन्वयावगतेः कथमुपमानिर्वाहः । अथ प्रतीयमानं साधर्म्यमाश्रित्येयं स्यात्, तथाऽप्युपात्तधर्मविशिष्टस्यैवोपमानत्वमुपमेयत्वं वा प्रतीयेत । न च तथा प्रस्तुतम् । अतः प्रक्रान्तस्याभावाद्भग्नप्रक्रमत्वमेव दोषः ।

यथा— 'चिन्तारत्न' ।

अत्र च्युत इत्युपमेयमात्रेणान्वीयते । पुंलिङ्गत्वात् ।

---

कृष्णाजिनरूपं पटं वस्त्रम् । ) जीमूतो मेघः । अंशुमान्सूर्यः । अविनेति । व्याप्त्यभावादित्यर्थः । तं विना सादृश्याप्रतीतेर्दोषत्वम् ।

**स पीतेति** । पीतवर्णं वासो वस्त्रं यस्य, प्रगृहीतं शार्ङ्गं धनुर्येन स श्रीकृष्णो मनोज्ञं सुन्दरं च तद्भीमं वपुराप प्राप । क इव । शतह्रदा विद्युदिन्द्रायुधमिन्द्रधनुश्च तद्वान्निशायां शशिना संसृज्यमानो मेघ इव । ( उपजातिश्छन्दः । ) **अधिकपदत्वमेवैतदिति** । उपमानन्यूनाधिकधर्मत्वमेवोपमेयाधिकन्यूनधर्मत्वमिति पृथङ्नोक्तम् ।

**प्रतीयमानमिति** । उपात्तधर्मातिरिक्तधर्ममित्यर्थः । **न च तथेति** । किं तु उपमाप्रस्तुतेरित्यर्थः । **प्रक्रान्तस्य** । उपमालंकारस्य । **अभावात्** । असंभवात् । इवा-

---

१ क. 'मनन्य' । २ ग. 'नेनापि ध' । ३ क. 'रिक्तमित्य' । ४ क. 'तरोचितालि' ।

सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव ॥ ५९० ॥

यत्र तु नानात्वेऽपि लिङ्गवचनयोः सामान्याभिधायि पदं स्वरूपभेदं नाऽऽपद्यते, न तत्रैतद्दूषणावतारः। उभयथाऽप्यस्यानुगमक्षमस्वभावत्वात्। यथा—

गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः ॥ ५९१ ॥

तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥ ५९२ ॥

---

वचनभेदे यथा—**सक्तवो०**।

अत्र शुद्धा इत्युपमेयमात्रेणाऽन्वीयते। लिङ्गभेदोऽत्र विद्यमानोऽप्यप्रधानम्। उपमानस्य बहुत्वे लिङ्गभेदेऽप्युभयान्वयसंभवात्। यत्र तु लिङ्गवचनयोर्भेदेऽपि सामान्याभिधायि पदमुपात्तरूपभेदं नाऽऽपद्यते, किं तूपात्तेनैव स्वरूपेणोभयत्रान्वेति, तत्र दोषत्वमेव नास्ति। उभयत्राप्यस्यानुगमयोग्यस्वभावत्वात्।

तत्र लिङ्गभेदे यथा—**गुणै०**।

अत्र लिङ्गभेदेऽपि विशेषणान्वयस्याविशेषाद्दोषत्वाभावः।

वचनभेदे यथा—**तद्वेषो०**।

---

दिना धर्मत्वेनाप्युपात्तधर्म एव बोध्यते तस्य निरुक्तोभयनिष्ठत्व उपमानिर्वाहो नान्यथेति भावः। अपरत्र लिङ्गविपरिणामेन यथाकथंचिदन्वयेऽपि स्फुटत्वाभावेन चमत्कारापकर्ष इति तत्त्वम्।

**मात्रेणेति**। पुंस्त्वान्वितच्युतत्वस्य नपुंसकविशिष्टोपमानधर्मत्वाभावादिति भावः। अत एव यत्रानुपात्तसाधारणधर्मस्तत्र न दोषः। कल्प्यमानस्य लिङ्गरहितस्यैव कल्पनेनोभयसाधारणत्वात्। एवं यत्र लिङ्गरहितार्थोपस्थापकतिङन्तेन साधारणधर्मोपस्थितिस्तत्रापि न दोषः। यथा 'स्त्रीव गच्छति षण्ढोऽयम्' इत्यादौ। एवं च 'चन्द्र इव सुन्दरं मुखम्' इत्यादौ दोष एवेति बोध्यम्। अत्र शुद्धा इति बहुत्वविशिष्टशुद्धत्वसाधारणधर्मस्य बहुत्वावरुद्धसक्तुष्वेवान्वयो न त्वेकत्वावरुद्धवधूरूप उपमान इति भावः। **संभवादिति**। उभयत्राप्युपात्तरूपाभेदात्। तदाह—**यत्र त्विति**। **रूपभेदम्**। आनुपूर्वीभेदम्। **उपात्तेनैव रूपेणेति**। उपस्थितोऽर्थ इति शेषः। आनुपूर्वीसाम्येनोभयत्रान्वयसंभवादिति भावः। **अनुगमः**। अन्वयः।

**अत्र लिङ्गेति**। गुणरत्नशब्दयोर्लिङ्गभेदेऽप्यनर्घ्यैरिति धर्मवाचकस्य लिङ्गद्वयेऽपि तुल्यरूपत्वान्न दोष इति भावः।

**तद्वेष इति**। तदीयो वेष उपमेयम्। विभ्रमा उपमानम्। असदृश इति मधुरताभृत

---

१ क. °चसोः सा°। २ ग. °थाऽर्थस्या°। ३ क. °त्वेऽपि लि°।

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपतया वि-श्रान्तिमासादयतीत्यसावपि भग्नप्रक्रमतयैव व्याप्तः। यथा—

अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥ ५९३ ॥

अत्र चेतना प्रसादमाप्नोति न पुनरापेति कालभेदः।

प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ॥ ५९४ ॥

अत्र लता विभ्राजते न तु विभ्राजस इति संबोध्यमाननिष्ठस्य पर-

---

अत्र वचनभेदेऽपि मधुरताभृत इत्यस्योभयान्वयाविशेषाच्च दोषत्वम्। एवं काल-पुरुषविध्यादिभेदेऽपि भग्नप्रक्रम एव दोषः। तथाप्रतीतेरस्खलितरूपतया विश्रान्त्यभावात्।

तत्र कालभेदे यथा—अतिथिं०।

अत्र चेतना प्रसादमाप्नोतीति प्रक्रान्तं न तु तमापेति कालभेदे प्रक्रमभेद एव।

पुरुषभेदे यथा—प्रत्यग्र०।

अत्र लता विभ्राजत इति प्रस्तुतं न तु सा विभ्राजस इति तस्मात्पुरुषभेदः। संबोध्य-

---

इति दधत इति च धर्मवाचकान्युभयत्रान्वयसमर्थानि। असदृश इति कञन्तैकवचनं क्विब-न्तबहुवचनं च। भृत इति क्तान्तैकवचनं क्विबन्तबहुवचनं च। दधत इति दध धारणे इत्यस्यैकवचनं धाञो बहुवचनं च। अत्र श्लेषोऽप्युपमोपपादक एवेति बोध्यम्। अन्याभिः स्त्रीभिरन्यस्त्रीविषैः। **कालः**। वर्तमानादिः। **पुरुषः**। प्रथममध्यमोत्तम-रूपः। **विधिः**। अप्रवृत्तप्रवर्तनम्। **स्खलितत्वम्**। विजातीयविषयत्वम्। **विश्रान्तिः**। चमत्कारः।

**अतिथिमिति**। काकुत्स्थात्। कुशात्। कुमुद्वती। कुमुदनागकन्या। ( पश्चिमात् चरमात्। यामिन्या निशाया यामात्। चेतना चैतन्यं प्रसादमुद्बोधमिव। )

**अत्रेति**। यद्यप्यतीतपश्चिमरात्रयामाच्चेतना प्रसादमापेति न कालभेदस्तथाऽपि पश्चि-मरात्रियामजातीयादद्यापि प्रसादमाप्नोतीति कालभेद इति भावः।

**प्रत्यग्रेति**। ( रत्नावल्यां प्रथमाङ्के वासवदत्तां प्रति वत्सराजस्योक्तिः। ) अभिनव-स्नानविशेषेण शुद्धा मूर्तिः शरीरं यस्याः। कौसुम्भरागेण रुचिरः स्फुरन्नंशुकप्रान्तो यस्याः। नूतनकिसलययुक्तशाखाप्रभवा लतेव। ( वसन्ततिलका छन्दः। ) **अत्रेति**। तस्माद्विभ्रा-जत इति पाठो युक्तः। न च देवीं संबोध्योक्तेस्तत्र प्रथमपुरुषार्थानन्वयः। हे देवि भवती भ्राजत इत्यन्वयसंभवात्। **संबोध्यनिष्ठस्येति**। मध्यमपुरुषवाच्यस्य संबोध्यार्थेने-

---

१ क. 'क्रकान्तिः कौ°। २ ग. °स्य पुरुषभे°।

भागस्यासंबोध्यमानविषयतया व्यत्यासात्पुरुषभेदः ।

गङ्गेव प्रवहतु ते सदैव कीर्तिः ॥ ५९५ ॥

इत्यादौ च गङ्गा प्रवहति न तु प्रवहतु इति अप्रवृत्तप्रवर्तनात्मनो विधेः । एवंजातीयकस्य चाऽन्यस्याऽर्थस्योपमानगतस्यासंभवाद्विध्यादिभेदः ।

ननु समानमुच्चारितं प्रतीयमानं वा धर्मान्तरमुपादाय पर्यवसितायामुपमायामुपमेयस्य प्रकृतधर्माऽभिसंबन्धान्न कश्चित्कालादिभे-

---

निष्ठस्य भ्राजनस्यासंबोध्यविषयतयाऽप्रतीतेः ।

विधिभेदे यथा—गङ्गेव० ।

इत्यादावप्रवृत्तप्रवर्तनात्मनो विधेर्भेदः । यतो गङ्गा प्रवहतीति विवक्षितं न तु सा प्रवहत्विति । एवंविधस्यान्यस्यार्थस्योपमानगतस्यासंभवाद्विध्यादिभेदो द्रष्टव्यः ।

ननूदाहृतेषु कथं दुष्टता । भिन्नकालसंभिन्नाद्धर्मादतिरिक्तमुपात्तं प्रतीयमानं वा कंचित्साधारणं धर्ममुपादायोपमापर्यवसाने पश्चाद्भिन्नकालादिसंभिन्नधर्मान्वयात् । तथा हि—विभ्राजस इत्यत्र विविक्तमूर्तित्वादिना लतानायिकयोरुपमापर्यवसाने पश्चाद्विभ्राजस इत्यस्य नायिकामात्रान्वयेऽपि[5] न दोषः । अथ यत्रोपात्तेनैव धर्मेणोपमानिर्वाहः स च[6] धर्म-

---

बान्वयादिति भावः ।

**भेद इति** । आशीर्विहितलोट्प्रत्ययस्यानागतेष्टविषयार्थकत्वात्कीर्तावेवान्वयो न तु विद्यमाने गङ्गाप्रवाहे । एवं यथा गङ्गा प्रवहति तथा कीर्तिः प्रवहत्वित्यर्थे विधेर्भेद इति भावः । ननु प्रवहणस्य सिद्धत्वेऽपि कस्यचिदनागतार्थस्य गङ्गानिष्ठस्य विधिविषयत्वं स्यादत आह—**एवंविधस्येति** । **असंभवादिति** । उपमेयेऽसंभवादित्यर्थः । वस्तुतस्तादृशधर्मान्तरस्य सत्त्वेऽपि तस्य प्रकृत्यर्थत्वाभावान्न तत्र विध्यर्थान्वयसंभव इति बोध्यम् । **विध्यादिभेद इति** । यद्यपि विधेरेकमात्रान्वयिनो न भेदस्तथाऽपि व्यत्यास एवात्र भेदपदार्थः ।

नन्विवपदेन धर्मान्तरेणैव साम्यं बोध्यतामुपात्तधर्मस्तूपमेय एवान्वेत्विति कथं लिङ्गादिभेदो दोष इति शङ्कते—**नन्विति** । **अतिरिक्तम्** । कालविशेषाद्यनवरुद्धम् । **उपात्तम्** । उच्चारितपदबोध्यम् । **प्रतीयमानम्** । अध्याहारलभ्यम् । **न दोष इति** । एवं काम इवायं राजा भातीत्यादौ सौन्दर्यादिनाऽनुपात्तेन साम्यप्रतीतौ पश्चात्क्रियालभ्यकालभेदो यथा कामोऽभादेवमयं भातीत्याकारो न दोषः । कामसदृशसुन्दरोऽयं

---

१ क. 'मानाङ्गभूत' । २ क. वा साधर्म्यान्त' । ३ क. 'त्कालभेदोऽस्तीति । यं' । ४ ख. 'मूर्तित्वा' । ५ क. 'पि को दो' । ६ ख. च भे' ।

दोऽस्ति । यत्राप्युपात्तेनैव सामान्यधर्मेणोपमाऽवगम्यते, यथा—'युधिष्ठिर इवायं सत्यं वदतीति'—तत्र युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति प्रतिपत्स्यामहे । सत्यवादी सत्यं वदतीति च न पौनरुक्त्यमाशङ्कनीयम् । रैपोषं पुष्णातीतिवद्युधिष्ठिर इव सत्यवदनेन सत्यवाद्ययमित्यर्थावगमात् । सत्यमेवैतत् । किं तु स्थितेषु प्रयोगेषु समर्थनमिदं न तु सर्वथा निरवद्यं प्रस्तुतवस्तुप्रतीतिव्याघातादिति सचेतस एवात्र प्रमाणम् ।

असादृश्यासंभवावप्युपमायामनुचितार्थतायामेव पर्यवस्यतः । यथा—

ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ॥ ५९६ ॥

---

भेदः कालभेदासंभिन्न एव, तत्र का गतिः । यथा—युधिष्ठिर इवायं सत्यवादी ' इति । युधिष्ठिरो हि सत्यमवादीत्, न तु वदतीति चेत् । उच्यते । तत्रापि सत्यवादीति प्रतीतधर्मेणैवोपमित्यव्याघातः । न च तथा सति सत्यवाद्ययं सत्यं वदतीति पर्याप्तौ सत्यं वदतीति पुनरुक्तमिति वाच्यम् । 'रैपोषं पुष्णाति' इत्याद्यनुप्रयोगवददोषत्वात् । रैपोषमित्यत्रार्थव्ययेन पोषणस्येवात्राप्याजानिकसत्यवादित्वस्य प्रतीतेरिति । सत्यमात्थ । किं तु स्थितेष्वनुप्रयोगेषु क्वचित्तथा पुनरुक्तिमात्रसमर्थनं न तु सर्वथैव तन्निरवद्यम् । प्रस्तुतस्य रसादेः प्रतीतिस्खलनात् । न च तदसिद्धम् । सहृदयसंवेद्यत्वात् । किं चोपात्तमनादृत्य प्रतीतेनोपमेति तुच्छम् । उपात्तक्रिययैव तद्विवक्षणात् ।

असादृश्यासंभवावप्युपमादूषणे अनुचितार्थतायामेव पर्यवस्यतः । यथा—ग्रथ्नामि० ।

---

भातीति प्रतीतेः । **यथेति** । यथोपात्तसत्यवादित्वमेव साधर्म्यं, तच्च भिन्नकालमेव, युधिष्ठिरे वर्तमानसत्यवचनाभावात्, धर्मान्तरं तु नास्त्येवेत्यभिमानः । **सत्यवादीति** । सत्यवदनशीलत्वं धर्मान्तरमिवार्थ इति भावः । **अर्थव्ययेनेति** । न तु कार्पण्येन यथा कथंचिदित्यर्थः । धनकृतं पोषणमित्यर्थलाभाय रैपोषमित्युक्तेर्न वैयर्थ्यम् । रैपोषमित्यत्र पुषेः प्रयोगः साधुत्वार्थ एव । **आजानिकेति** । स्वाभाविकेत्यर्थः । यथा युधिष्ठिरो लोभादिना न सत्यं वक्ति किं तु ताच्छील्यात्, तथाऽयमपीत्यर्थलाभान्न वैयर्थ्यमिति भावः । एवं गङ्गेवेत्यादावत्युज्ज्वलेत्यादिपदाध्याहारेण दोषोद्धार इत्याशयः । एतादृशाऽन्वयाध्याहारादिकल्पनमानुभाविकमित्याशयवानाह—**सत्यमिति** । **स्थितेति** । रैपोषमित्यादिषु साधुत्वार्थं नियमितेषु कथंचित्समर्थनमित्यर्थः । **उपात्तमिति** । उपात्तधर्ममित्यर्थः । **तुच्छमिति** । श्रुतहान्यश्रुतकल्पनाभ्यामास्वादप्रकर्षप्रतिबन्धादिति भावः । तदाह—**उपात्तेति** ।

---

१ ग. 'रवतसत्यवचने' । २ क. 'तिविघाता' ।

अत्र काव्यस्य शशिनाऽर्थानां च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम् ।

निपेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधारा दिनार्धभाजः परिवेषिणोऽर्कात् ॥५९७॥

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलान्निष्पतन्त्यो न संभवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति ।

उत्प्रेक्षायामपि, संभावनं ध्रुवेवादय एव शब्दा [1]वक्तुं सहन्ते, न यथाशब्दोऽपि । केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं पर्याप्तत्वात् । तस्य चास्यामविवक्षितत्वादिति तत्राशक्तिरस्यावाचकत्वं दोषः । यथा—

उदयौ दीर्घिकागर्भान्मुकुलं मेचकोत्पलम् ।
नारीलोचनचातुर्यशङ्कासंकुचितं यथा ॥ ५९८ ॥

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वान्निरुपाख्यप्रख्यम्,

---

अत्र काव्यस्य शशिनाऽर्थानां च रश्मिभिः साधर्म्यं न क्वापि प्रसिद्धमिति तत्रोपमानिबन्धनमनुचितार्थमिति ।

निपेतु० ।

अत्रापि ज्वलदम्बुधारायाः सूर्यमण्डलान्निपतनमसंभवीति तन्निबन्धनमनौचित्यं पुष्णाति ।

उत्प्रेक्षायामपि ध्रुवेवादय एव शब्दा व्यक्तमुत्सहन्ते, न तु यथाशब्दोऽपि । केवलस्याऽस्य साधर्म्यमेव प्रतिपादयितुं समर्थत्वात् । अत उत्प्रेक्षायां यथाशब्दोपादानेऽवाचकत्वमेव ।

यथा—उदयौ० ।

निर्विषयत्वमप्युत्प्रेक्षादूषणमनुचितार्थत्वमेव । यत्तात्त्विकरूपाभावान्निरुपाख्यप्रख्यं तत्स-

---

निपेतुरिति । आस्यादिवेत्युत्प्रेक्षा । तूणाद्बाणाकर्षणे विलम्बः स्यादिति भावः । धनुर्मण्डलं परिवेषश्च बिम्बप्रतिबिम्बभावापन्ने । (उपजातिश्छन्दः ।) अनौचित्यमिति । अप्रयुक्तत्वसांकर्यमप्यत्रेति बोध्यम् ।

उदयाविति । दीर्घिका वापी । मुकुलं मुकुलभावापन्नम् । मेचकं नीलम् ।

उत्प्रेक्षादूषणम् । उत्प्रेक्षाविषयसमर्थकार्थान्तरन्यासदूषणम् । निरुपाख्यम् । अलीकशशविषाणादि । तत्प्रख्यं तत्तुल्यम् । तत्र हेतुरुत्प्रेक्षाविषयस्य तात्त्विकरूपा-

---

१ क. 'वेवा' । २ ग. वक्तुमुत्सह' ।

तत्समर्थनाय यदर्थान्तरन्यासोपादानं[1] तदालेख्यमिव गगनतलेऽत्यन्तमसमीचीनमिति निर्विषयत्वमेतस्यानुचितार्थतैव दोषः । यथा—

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसामतीव[2] ॥ ५९९ ॥

अत्राचेतनस्य तमसो दिवाकरात्त्रास[3] एव न संभवतीति कुत एव तत्प्रयोजितमद्रिणा परित्राणम् । संभावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां[4] यत्नः ।

साधारणविशेषणवशादेव समासोक्तिरनुक्तमप्युपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने प्रयोजनाभावादनुपादेयता यत्, तदपुष्टार्थत्वं पुनरुक्तता वा दोषः । यथा—

स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।
अतनुमानपरिग्रहया स्थितं रुचिरया चिरयाऽपि दिनश्रिया[5] ॥ ६०० ॥

---

र्थनाय यदर्थान्तरन्यासोपादानं तद्रूपं हि तत् ।

यथा—दिवाकरा० ।

अत्र तमसस्त्रास एवासंभवी । तमसोऽचेतनत्वात् । तत्कथं तत्प्रयुक्तमद्रिणा तत्परित्राणम् । उत्प्रेक्षितत्राणवत्तया प्रतीतस्यास्य न[7] काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः ।

यत्तु समासोक्तौ साधारणविशेषणबलादेवोपमानप्रतीतौ प्रयोजनाभावेन तदुपादानवैयर्थ्यं तदपुष्टार्थत्वं पुनरुक्तता वा दोषः ।

यथा—स्पृशति० ।

---

भावः । तत् । निर्विषयत्वम् । अभित्तिचित्रवदर्थाभावात्तदुदाहरणम् ।

दिवाकरादिति । ( कुमारसंभवे प्रथमसर्गे हिमालयवर्णनम् । ) भीतं त्रस्तम् । ( उपजातिश्छन्दः । ) तत्परित्राणमिति । अद्रेरप्यचेतनत्वादिदमप्युत्प्रेक्षा । त्रासस्य चित्तवृत्तिविशेषरूपस्य तत्परित्राणस्य च चेतनधर्मत्वात् । तदाह—उत्प्रेक्षितत्राणवत्तयेति ।

स्पृशतीति । तिग्मरुचौ सूर्ये ककुभो दिशः करैः स्पृशति सति दिनश्रिया ग्रीष्म-

---

१ क. 'मेवास्या' । ग. 'मेव तस्या' । २ क. 'रसां सतीव । ३ ग. 'वितक्रमेण प्र' । ४ क. 'नार्थ य' । ग. 'नायां प्रय' । ५ क. 'या दिवसश्रि' । ६ ख. 'त्रासव' । ७ क. न कदाचि' ।

अत्र तिग्मरुचेः ककुभां च यथा सदृशविशेषणवशेन व्यक्तिविशेषपरिग्रहेण च नायकतया नायिकात्वेन च व्यक्तिः, तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति किं दयितयेति स्वशब्दोपादानेन ।

श्लेषोपमायास्तु स विषयः, यत्रोपमानस्योपादानमन्तरेण साधारणेष्वपि विशेषणेषु न तथा प्रतीतिः । यथा—

स्वयं च पल्लवाताम्रभास्वत्करविराजिनी ।
प्रभातसंध्येवास्वापफललुब्धेहितप्रदा ॥६०१॥

---

अत्र सदृशविशेषणबलेन लिङ्गविशेषपरिग्रहाच्च तिग्मरुचेर्नायकतया ककुभां तु नायिकात्वेन व्यक्तिः । तथा ग्रीष्मदिवसश्रियोऽपि तत एव प्रतिनायिकात्वेन भविष्यतीति दयितयेत्यपुष्टार्थम् । अर्थतः प्रतीतस्योपादाने यदि पुनरुक्तिस्तदार्थपुनरुक्तत्वं दोषः ।

नन्वस्यापुष्टत्वे श्लेषोपमा निर्विषया स्यादिति चेत् । न । स हि तस्या विषयो यत्रोपमानोपादानं विना श्लिष्टेष्वपि विशेषणेषु न स्फुटा प्रतिपत्तिः । यथा—स्वयं० ।

अत्र प्रभातसंध्याया अनुपादाने न स्फुटा प्रतीतिः ।

---

दिवसश्रियाऽतनुमानपरिग्रहया स्थितम् । करैर्हस्तैः रश्मिभिश्च । तापो ज्वाला खेदश्च । मानं परिमाणं कोपश्च । चिरया दीर्घया चिरकालीनया च । ( हरविजये तृतीयसर्गे ) ग्रीष्मवर्णनामिदम् । ( द्रुतविलम्बितं वृत्तम् । ) अत्रेति । सूर्यकरेण स्त्रीस्पर्शकारित्वं नायकोचितं विशेषणम् । दिशां च करेण पुरुषस्पृश्यत्वं नायिकायोग्यं विशेषणम् । तेन सूर्ये पुंलिङ्गसंग्रहो दिशां स्त्रीलिङ्गपरिग्रहः । तत एवेति । अतनुमानपरिग्रहयेति विशेषणात्स्त्रीलिङ्गाच्चेत्यर्थः ।

नन्विति । यथा दयिते दयितां करैः स्पृशति सति दयितान्तरस्य तापस्तथा रवौ करैर्दिशः स्पृशति ग्रीष्मदिवसश्रियोऽपि ताप इत्येवमत्रापि श्लेषोऽस्त्विति भावः । न स्फुटेति । अयमाशयः—यत्रोपमानस्य स्वपदोपादानेऽपि न समासोक्तित्यागस्तत्रावश्यकसमासोक्त्यैव निर्वाह उपमानपदोपादानं व्यर्थम् । यथा स्पृशतीत्यादौ । अत्र दयितयेत्युपादानेऽपि रवेर्नायकत्वं ककुभां नायिकात्वं च समासोक्त्यैवेति तस्या आवश्यकत्वम् । यत्र तूपमानपदोपादाने समासोक्तिनिवृत्तिस्तदनुपादाने च यत्रोपमानाप्रतीतिरुपात्तसाधारणधर्माणामुपमेयमात्रान्विततयैव प्रतीतेः, तत्रोपमाया एव चमत्कारित्वाय देयं तत्पदम् । यथा—स्वयं[3] चेत्यादौ । अत्रो-

---

१ ख. °कात्वं भ° । २ ख. °राजिता । ३ अस्य श्लोकस्य व्याख्यानं प्राक् ( पृ.४२३ ) द्रष्टव्यम् ।

अप्रस्तुतप्रशंसायामप्युपमेयमनयैव रीत्या प्रतीतं न पुनः प्रयोगेण कदर्थतां नेयम् । यथा—

आहूतेषु विहंगमेषु मशको नायान्पुरो वार्यते
मध्येवारिधि वा वसंस्तृणमणिर्धत्ते मणीनां रुचम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक्सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥ ६०२ ॥

अत्राचेतनस्य प्रभोरप्रस्तुत—विशिष्ट—सामान्यद्वारेणाऽभिव्यक्तेर-युक्तमेव पुनः कथनम् ।

तदेतेऽलंकारदोषा यथासंभविनोऽन्येऽप्येवं जातीयकाः पूर्वोक्तयैवं

---

अप्रस्तुतप्रशंसायामप्युपमेयस्योपादानवैयर्थ्यं यत्तदपुष्टार्थत्वमेव दोषः । तत्राप्युपमेयमनयैव रीत्याऽवगन्तव्यं न पुनः शब्दप्रयोगेण दुष्टतां नेयम् ।

यथा—आहूतेषु० ।

अत्राचेतसः प्रभोरुपमेयस्याप्रस्तुतनिष्ठसामान्यद्वारेणाभिव्यक्तिसंभवादयुक्तमेव शब्देन कथनमित्यपुष्टार्थत्वं पुनरुक्तता वेति ।

तदेतेऽलंकारदोषा यथासंभवमन्येऽप्येवंजातीयकाः प्रोक्तजात्यन्तर्भाविता इति पृथग्

---

पमानपदोपादाने समासोक्तित्यागादिति । **उपमेयस्य** । प्रस्तुतस्य ।

**आहूतेष्विति** । ( भल्लटशतके ६९ पद्यम् । ) विहंगमेषु पक्षिषु आहूतेषु पुरः, अग्रे, आयान् आगच्छन् मशको न वार्यते । तृणमणिः काचादिमणिः प्रवालं वा । मणीनां मध्ये धुरि अन्ते वा वसन्मणीनां रत्नानां रुचं कान्तिं धत्ते । खद्योतोऽपि तेजस्विनामग्निसूर्यादीनां मध्ये अपिशब्दादग्रे वा प्रचलितुं गन्तुं न कम्पते न बिभेति । एतत्सामान्यमचेतनमविचारितपदार्थगतविशेषं प्रभुमिव धिक् । ( शार्दूलविक्रीडितं छन्दः ) । **अत्र** । आद्यपादत्रयेऽपि । **अप्रस्तुतनिष्ठ-सामान्येति** । अनाकलितविशेषत्वरूपेत्यर्थः । **तत्** । तस्मात् । **एते** । उक्ताः । **एवं-जातीयका इति** । यथा समासोक्तौ । नपुंसके नायकव्यवहारसमारोपः ।

‘ दिलीप इति राजेन्दुरिन्दुःक्षीरनिधाविव । ’

इत्यत्र राजनीन्दुतादात्म्यारोप उपमाविरुद्धस्तदेतदनुचितार्थमेव । यथा वा, भिन्नाश्रययोर्विरोधवर्णनम् । यथोष्णभासस्तनयाया अपि जलं शीतलमित्यादौ । एकाश्रयत्वेनैव विरोधस्योक्तेरिदमनभिहितवाच्यमेव । **प्रोक्तजातीति** । सप्तमोक्तदोषजातीत्यर्थः ।

---

१ क. °र्थनीयम् । २ ज. °वा धुरि वा° । ३ ग. धुरम् । ४ ख. °तसं प्र° । ५ क. °तसः प्र° । ६ क. व्यक्तौ न यु° । ७ ग. °व रीत्या दोषजातमन्त° ।

दोषजात्याऽन्तर्भाविता न पृथक्प्रतिपादनमर्हन्तीति ॥

संपूर्णमिदं काव्यलक्षणम् ।

इत्येष मार्गो विदुषां विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत् ।
न तद्विचित्रं यदमुत्र सम्यग्विनिर्मिता संघटनैव हेतुः ॥ १ ॥

इति श्रीमम्मटभट्टविरचिते काव्यप्रकाशेऽर्थालंकारनिर्णयो नाम दशम उल्लासः ।

समाप्तश्चायं काव्यप्रकाशः ।

---

प्रतिपादनमर्हन्तीति कल्याणमास्ताम् ।

संपूर्णं काव्यलक्षणम् ।

ज्येष्ठे सर्वगुणैः कनीयसि वयोमात्रेण पात्रे धियां
गात्रेण स्मरगर्वखर्वणपरे निष्ठाप्रतिष्ठाश्रये ।
श्रीहर्षे त्रिदिवं गते मयि मनोहीने च कः शोधये-
दत्राशुद्धमहो महत्सु विधिना भारोऽयमारोपितः ॥ १ ॥
परिशीलयन्तु सन्तो मनसा सन्तोषशीलेन ।
इममद्भुतं प्रदीपं प्रकाशमपि यः प्रकाशयति ॥ २ ॥
दीपिकाद्वितयं कन्ये प्रदीपद्वितीयं सुतौ ।
स्वमतौ सम्यगुत्पाद्य गोविन्दः शर्म विन्दति ॥ ३ ॥

इति श्रीमहामहोपाध्यायश्रीगोविन्दविरचिते काव्यप्रदीपेऽर्थालंकारनिर्णयो नाम दशम उल्लासः ।

समाप्तोऽयं ग्रन्थः ।

---

**संपूर्णमिति** । लेशतोऽपि न्यूनताविरहात् । **काव्यलक्षणम्** । काव्यं लक्ष्यते स्वरूपतो विशेषतश्च ज्ञाप्यतेऽनेनेति प्रकृतग्रन्थरूपमिति शिवम् ।

'शृङ्गवेरपुराधीशरामप्रेरणया दृढम् ।
सद्युक्तिमुक्तासंदर्भैर्विद्वच्छ्रुतिमनोहरैः ॥ १ ॥
सेतौ नागेशबद्धेऽस्मिन्नलंकारमहोदधेः ।
सतां मतिः संचरतां यावच्चन्द्रदिवाकरौ ॥ २ ॥
काव्यप्रदीपकोद्द्योतः शिवयोरर्पितो मया ।
यन्निर्मितौ सहायो मे जाता सा प्रतिभा सखी ॥ ३ ॥

इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते लघुकाव्य-प्रदीपोद्द्योते दशम उल्लासः ।

समाप्तः ।




---

१ क. अत्यद्भुतं ।

# काव्यप्रकाशस्थविषयाणां वर्णानुक्रमेण सूचीपत्रम् ।

## काव्यप्रकाशकाव्यप्रदीपोद्द्योतस्थानां श्लोकानां प्रमाणत्वेन धृतानां विशेषवचनानां न्यायानां पाणिन्यादिसूत्राणां च वर्णानुक्रमेणसूचीपत्रम्—

### अ.

स.

ह.